# आनंद की बात

कई वर्षो से अप्राप्य बने हुये शास्त्रग्रन्थों की प्रतीक्षामें बैठे हुए मुमुक्षु विद्वानों को इस ग्रन्थरत्न के प्रकाशन से जो हर्ष की उर्मियाँ प्रस्फुटित होगी उस का निर्वचन नहीं किया जा सकता ।

उत्तराध्ययय सूत्र भगवान महावीरस्वामी के मार्मिक उपदेशों का मूल्यवान् महानिधि है । आत्महित की साधना म पदार्पण करने वाले मुमुक्षुओं के लिये यह सूत्रग्रन्थ तेजस्वी प्रकाशपुंज ह ।

समुचे जनमत मे इस सूत्र को कण्ठस्थ करने की पवित्र प्रणाली चली आ रही है । ग्रन्थ के भीतरी भावों की स्पष्टता करने वाला, महोपाध्याय श्री भावविजयगणिवर का विवरण ग्रन्थ जैनसमाज अतिप्रिय होता चला जा रहा है ।

पू. मुनिराज श्री पद्मसेनविजय महाराज ने इस प्रकाशन के पीछे जो अथक प्रयास किया है वह अमूल्य है । सुश्रावक मोहनभाई जे शहा का सहयोग भी अविस्मरणीय है । एवं नडीयाद नगरी का श्वे मू जन संघ भी धन्यवादार्ह है, जिसने अपने ज्ञाननिधि से इस ग्रन्थ के प्रकाशनमें सद्व्यय किया है ।

इस शास्त्र के सम्यक्-अध्ययन से स्व-पर कल्याण की साधना उजागर की जाय यही शुभ आकांक्षा रखी जाय ।

—प्रकाशक

वि स. २०३९, महासुद ११



# विषयानुक्रम



—.×—

॥ अर्हम् ॥

॥ सिद्धान्तमहोदध्याचार्यदेवश्रीविजयप्रेमसूरीश्वरगुरुभ्यो नमः ॥

महोपाध्यायश्रीमद्भावविजयगणिविरचितविवृत्त्या सहितं

# उत्तराध्ययनसूत्रम् ।

ॐ नमः सिद्धिसाम्राज्य-सौख्यसन्तानदायिने । त्रैलोक्यपूजिताय श्री-पार्श्वनाथाय तायिने ॥ १ ॥

श्रीवर्द्धमानजिनराजमनन्तकीर्तिं, वाग्वादिनीं च सुधियां जननीं प्रणम्य ।

श्रीउत्तराध्ययनसंज्ञकवाङ्मयस्य, व्याख्यां लिखामि सुगमां सकथां च काञ्चित् ॥ २ ॥

निर्युक्त्यर्थः पाठा-न्तराणि चार्थान्तराणि च प्रायः । श्रीशान्तिसूरिविरचित-वृत्तेर्ज्ञेयानि तत्त्वज्ञैः ॥ ३ ॥

पूर्वैर्विहिता यद्यपि, बह्व्यः सन्त्यस्य वृत्तयो रुचिराः । पद्यनिबद्धकथार्थं, तदपि क्रियते प्रयत्नोऽयम् ॥ ४ ॥

इहोत्तराध्ययनानीति कः शब्दार्थः ? उच्यते, उत्तराणि श्रीदशवैकालिकनिष्पत्तेः प्राक् श्रीआचाराङ्गपठनोत्तरकालं पठ्यमानत्वेन दशवैकालिकनिष्पत्तेरनु च तत एवोर्द्ध्वमधीयमानत्वेन, उत्तराणि वा प्रधानान्यध्ययनानि उत्तराध्ययनानि, तानि च षट्त्रिंशत्, तत्र श्रीजिनेन्द्रप्रणीतधर्मकल्पवृक्षस्य विनय एव मूलमित्यादौ शासनाधिकारी श्रीसुधर्मस्वामी विनयाध्ययनमाह । तस्य चेदमादि सूत्रम्—

मूलम्—संजोगा विप्पमुक्कस्स, अणगारस्स भिक्खुणो । विणयं पाउकरिस्सामि, आणुपुव्विं सुणेह मे ॥१॥

व्याख्या— संयोगाद् द्रव्यतो मातापित्रादिसंबंधाद्भावतश्च कषायविषयादिक्लिष्टतरभावसंबंधात् 'विप्पमुक्कस्सत्ति' विविधैर्ज्ञानभावनादिभिः प्रकारैः प्रकर्षेण परीषहसहनादिरूपेण मुक्तो विप्रमुक्तस्तस्य, अय भावः "अन्योऽन्यं भवचक्रे, याताः सर्वेऽप्यनन्तशो जीवाः ॥ मात्रादिबन्धुभावं, शत्रूदासीनभावं च ॥ १ ॥" ततः कोऽत्र निजः परो वा ? तथा "कोहो अ माणो अ अणिग्गहीआ, माया य लोभो अ पवड्ढमाणा ॥ चत्तारि एए कसिणा कसाया, सिंचंति मूलाइं पुणब्भवस्स ॥ १ ॥" ततो न देयः कोपादिविपक्षपक्षस्यावकाशः, इत्यादिभावनाभिः स्वजनादिगोचराभिष्वंगरहितस्य । तथा—'अणगारस्सत्ति' न विद्यते अगारं द्रव्यतो दृषदादिरचितं गृहं, भावतश्च अनंतानुबंध्यादिकृतं कषायमोहनीयं यस्यासौ अनगारस्तस्य भिक्षोः साधोः विनयं साधुजनासेवितं समाचारं, अभ्युत्थानादिकमुपचारं वा प्रादुष्करिष्यामि प्रकटीकरिष्यामि कथयिष्यामीत्यर्थः । 'आणुपुव्विंत्ति' आनुपूर्व्या परिपाट्या प्राकृतत्वात्तृतीयार्थे द्वितीया । 'सुणेह मेत्ति' तं विनयं प्रादुष्करिष्यतः सतो मे मम सकाशात् श्रृणुत श्रवणं प्रति सावधानो भवत, अनेन वाक्येन धर्ममभिधातुकामेन धीधनेन पूर्वं श्रोताऽभिमुखः कर्तव्य इति सूचितं, अन्यथा वक्तृवाक्यस्य वैफल्यप्रसंगात्, उक्तं हि—"अप्रतिबद्धे श्रोतरि, वक्तुर्वाचः प्रयान्ति वैफल्यम् । नयनविहीने भर्त्तरि, लावण्यगुणस्तृणं स्त्रीणाम् ॥ १ ॥" किं चैवं श्रोतारमभिमुखीकृत्यापि धर्मं वदतो वक्तुर्लाभ एव, यदुक्तं—"न भवति धर्मः श्रोतुः, सर्वस्यैकांततो हितश्रवणात् ॥ ब्रुवतोऽनुग्रहबुद्ध्या, वक्तुस्त्वेकांततो भवति ॥ १ ॥" इति सूत्रार्थः ॥ १ ॥ अथ विनयो गुणः, स च जीवादभिन्न इति विनीतगुणैरेव विनयस्वरूपमाह—

मूलम्—आणाणिद्देसयरे, गुरूणमुववायकारए । इंगिआगारसंपन्ने, से विणीयत्ति वुच्चइ ॥ २ ॥

व्याख्या—आज्ञा,—सौम्य ! इदं कुरु, इदं च माकार्षीरिति गुरुवचनं, तस्या निर्देश इदमित्थमेव करोमीति निश्चयाभिधानमाज्ञानिर्देशस्तं करोतीत्याज्ञानिर्देशकरः । तथा गुरूणां आचार्यादीनां उपपातः समीपदेशावस्थानं, तत्कारकस्तद्विधायी गुरुपार्श्वावस्थायी, न तु गुर्वादेशादिभीत्या दूरदेशस्थायीति भावः, इंगितं निपुणमतिज्ञेयं प्रवृत्तिनिवृत्तिसूचकं ईषद्भ्रूशिरःकंपाद्याकारः स्थूलधीसंवेद्यः प्रस्थानादिभावज्ञापको दिगवलोकनादिः, आह च—"अवलोअणं दिसाणं, विअंभणं साडयस्स संवरणं ॥ आसणसिढिलीकरणं, पट्ठिअलिंगाइं एआइं ॥ १ ॥" अनयोर्द्वंद्वे इंगिताकारौ ताभ्यां गुरुगताभ्यां संपन्नो युक्तस्तद्वेदितया इंगिताकारसंपन्नः स इति पूर्वोक्तविशेषणयुक्तो विनेयो विनीतो विनयान्वित इत्युच्यते तीर्थकराद्यैरिति सूत्रार्थः ॥२॥ अविनीतत्वत्यागेन हि विनीतो भवतीति अविनीतस्वरूपमाह—

मूलम्—आणाणिद्देसयरे, गुरूणमणुववायकारए । पडिणीए असंबुद्धे, अविणीएत्ति वुच्चई ॥ ३ ॥

व्याख्या— आज्ञानिर्देशं न करोतीत्याज्ञानिर्देशाकरः, तथा गुरूणामनुपपातकारकः, प्रत्यनीकः प्रतिकूलवर्त्ती। कुतोऽयमेवंविधः? इत्याह— यतो असंबुद्धोऽज्ञाततत्त्वः, सोऽविनीत इत्युच्यते, कूलवालकश्रमणवत्, तथा हि—

सूरेरेकस्य शिष्योऽभू–दविनीतोऽतिरोषणः॥ चुकोप कोपसदनं, शिक्ष्यमाणः स सूरिणा॥ १॥ दक्षया शिक्षया सूरि–स्तथापि तमशिक्षयत्॥ स तु तामपि मेनेऽन्त–र्विपाक्तविशिखोपमाम्॥ २॥ हितशिक्षा हि दुष्टानां, नोपकाराय जायते॥ पयःपानमिवाहीनां, किन्तु स्याद्विषवृद्धये॥ ३॥ नत्याऽन्यदा सिद्धशैले, जिनानुत्तरतो गुरून्॥ पेष्टुं दुष्टः स पृष्ठस्थो, गंडशैलमलोठयत्॥ ४॥ शब्दायमानमायान्तं, तं च प्रेक्ष्य गुरुर्द्रुतम्॥ पादौ प्रासारयत् प्राज्ञ–स्ततः सोऽगात्तदन्तरे॥ ५॥ अक्षतांगस्ततः सूरिः, क्रुद्धस्तेन कुकर्मणा॥ भावीपातोऽङ्गनायास्ते, रे! पापेति शशाप तम्॥ ६॥ गुरोर्गिरं मृषाकर्त्तुं, क्षुल्लः क्षुद्रमतिः स तु॥ गत्वा निर्मानुषारण्ये, तस्थौ गिरिणदीतटे॥ ७॥ स तत्रातापनासेवी, तपस्तेपे सुदुस्तपम्॥ पारणां चाध्वगादिभ्यो, मासपक्षादिना व्यधात्॥ ८॥ अथायातासु वर्षासु, तरुणांबुदकामुकैः॥ अपूर्यंतार्णवानीतै–र्नदीवेश्याः पयोधनैः॥ ९॥ एनं कूलंकषाकूलं, निकषामंस्थितं मुनिम्॥ मानैषीदंबुपुरोऽब्धिं, दुष्टो वाह इवाटवीम्॥ १०॥ इति ध्यात्वा नदीदेव्या, साऽन्यतोऽवाहि वाहिनी॥ कूलवालक इत्यूचु–स्ततस्तं संयतं जनाः॥ ११॥ (युग्मम्)

इतश्च श्रेणिको राजा, पुरे राजगृहेऽभवत्॥ नंदा च चिल्लणा चास्तां, महिष्यौ तस्य मंजुले॥ १२॥ तत्राद्यायाः सुतो जज्ञे–ऽभयोऽन्यस्याः सुनंदनाः॥ कूणिकहल्लविहल्ला–स्त्रयोऽभूवन्मनोहराः॥१३॥ कालाद्या भ्रातरस्तेषां, दशाऽऽसन् भिन्नमातृकाः॥ मात्रा सत्राऽभयस्तत्रा–ऽऽददे दीक्षां जिनान्तिके॥ १४॥ प्रव्रजती तदा नंदा, ददौ हल्लविहल्लयोः॥ कुंडलद्वितयं देव–दत्तं क्षौमयुगं तथा॥ १५॥ राज्यं ज्येष्ठस्य भावीति, ध्यात्वा राजाप्यदात्तयोः॥ गंधद्वीपं सेचनकं, हारं च त्रिदशार्पितम्॥ १६॥ कूणिकस्ते च कालाद्याः, दुष्टा बद्ध्वाऽन्यदा नृपम्॥ विभज्याददिरे राज्यं, राजा त्वजनि कूणिकः॥ १७॥ राज्यादिकं ददौ हारा–दिकं तातोऽनयोः स्वयम्॥ इति राज्यविभागं ते, नादुर्हल्लविहल्लयोः॥ १८॥ कारास्थ एव पितरि, विषं भुक्त्वान्यदा मृते॥ सानुतापो रतिं प्राप, पुरे तत्र न कूणिकः॥ १९॥ वासयित्वा ततोऽन्यत्र, नव्यां चंपाभिधां पुरीम्॥ उवास वासव इव, महर्द्धिः कूणिको नृपः॥२०॥ हारकुंडलवासोभि–र्दिव्यैर्भूषितभूषणौ॥ गंधद्वीपं तमारूढौ, सान्तःपुरपरिच्छदौ॥ २१॥ क्रीडार्थं प्रत्यहं हल्ल–विहल्लौ जग्मतुर्नदीम्॥ तदेति क्रीडयामास, तद्वधूर्गन्धसिन्धुरः॥ २२॥ (युग्मम्) स्कन्धेऽध्यारोपयत्काश्चि–च्छुण्डयाऽऽदाय सुन्दरीः॥ काश्चिच्चयवेशयन्मौलौ, काश्चिद्दन्तान्तरेष्वधात्॥ २३॥ उर्द्धीकृत्य करं काश्चि–द्वालिकावद्वियत्यधात्॥ काश्चिदान्दोलयद्दोला–मिव शुण्डां विलोलयन्॥ २४॥ "किं बहुना"? यथा यथा प्रोचिरे ता–स्तस्मै शस्ताय हस्तिने॥ विभंगज्ञानवान् सोऽपि, प्रावर्त्तत तथा तथा॥ २५॥ तच्च प्रेक्ष्याद्भुतं सर्वो–ऽप्येवं पौरजनो जगौ॥ राज्यश्रीफलभोक्तारा–विमावेव न कूणिकः॥ २६॥ तच्च पद्मावती राज्ञी, श्रुत्वा कूणिकभूभुजः। जातामर्षप्रकर्षेति, चिंतयामास चेतसि॥ २७॥ दिव्यहारादिना गंध–हस्तिना चामुना विना॥ राज्यं न राजते प्राज्य–मप्यनाज्यमिवाशनम्॥ २८॥ तत् पत्या सर्वमप्येत–द्ग्राहयिष्ये बलादपि॥ ध्यात्वेति सा समाकूतं, रहो राज्ञे न्यवेदयत्॥ २९॥ भूपोऽवादीदाददानो, भ्रात्रोरपि रमामहम्॥ काकादपि निकृष्टः स्यां, तदलं वार्त्तयानया॥ ३०॥ निषिद्धापि नृपेणैवं, नाग्रहं तं मुमोच सा॥ बालानामिव बालाना–माग्रहो हि भवेद्बली॥ ३१॥ प्रपेदे तद्दिशामीश–स्तत्प्रेमविवशोऽथ सः॥ अकार्यमपि किं प्रायो, न कुर्वंति? वशावशाः!॥ ३२॥ यदुक्तम्–"सुवंशजोऽप्यकृत्यानि, कुरुते प्रेरितः स्त्रिया॥ स्नेहलं दधि मथ्नाति, पश्य मंथानको न किम्?॥ ३३॥" हारादिकं नृपोऽन्येद्यु–र्भ्रातरौ तावयाचत॥ विहाय दूरतः स्नेह–मुन्मत्त इव चीवरम्॥ ३४॥ तावूचतुस्तातदत्तं, तद्दातुं नार्हमावयोः॥ तथापि दद्वहे राजन्! राज्यांशं चेद्ददासि नौ॥ ३५॥ इत्युक्तः पार्थिवस्ताभ्यां, कषायकलुषोऽवदत्॥ वात्सल्यादविमृश्यैव, तातेनादायि किं ततः?॥ ३५॥ किं चार्हेति ममैवेदं, सारं रत्नचतुष्टयम्॥ रत्नानि राजगामिनी–त्युच्यते हि जडैरपि॥ ३७॥ ततस्तदीयतां नोचे–द्ग्रहीष्यामि बलादपि॥ ओमित्युक्त्वा ततो हल्ल–विहल्लौ जग्मतुर्गृहम्॥ ३८॥ दध्यतुश्चेति राज्ञोऽस्य, शोभनो नायमाशयः। वासः ससर्पधाम्नीव, नेह श्रेयांस्तदावयोः॥ ३९॥ ध्यात्वेत्यादाय हारादि, सर्वं तौ सपरिच्छदौ॥ चंपायां निशि निर्गत्य, वैशालीं जग्मतुः पुरीम्॥ ४०॥ मातामहाय तौ तत्र, चेटकाय महीभुजे॥ सर्वं स्वोदंतमावेद्या–स्थातां तत्कृतगौरवौ॥ ४१॥ कूणि-

कस्तूभयभ्रष्ट—तया चिन्ताचितस्ततः ॥ वैशाल्यां तौ गतौ ज्ञात्वा, प्रैषीद्दूतं वचस्विनम् ॥ ४२ ॥ गत्वा दूतोऽपि वैशालीं, नत्वा चेटकमित्यवक् ॥ राजन् ! कूणिकराजस्त्वां, मया विज्ञपयत्यदः ॥ ४३ ॥ गजादिरत्नान्यादाया—गताविह कुमारकौ ॥ प्रेषणीयौ द्रुतं पूज्यै—स्तुल्यैर्मयि तयोस्तथा ॥ ४४ ॥ तौ चेन्नागच्छतस्तर्हि, प्रेष्यं मद्यो द्विपादिकम् ॥ नो चेद्वो भविता भूया—नायासोऽनुशयावहः ॥ ४५ ॥ अथेति चेटकोऽवोच—द्दूत ! त्वं ब्रूहि कूणिकम् ॥ तातदत्ता भ्रातृलक्ष्मी—र्ग्रहीतुं युज्यते न ते ॥ ४६ ॥ रक्ष्यंते शरणायाताः, किं चान्येऽपि मनस्विभिः ॥ तद्दौहित्रौ कथंकारं, प्रेषणीयाविमौ मया ? ॥ ४७ ॥ दौहित्रत्वात्समाना मे, भवंतो यद्यपि त्रयः ॥ न्यायित्वादाश्रितत्वाच्च, विशिष्येते तथाऽप्यमू ॥ ४८ ॥ सत्यप्येवं दापयामि, द्विपादि तव तुष्टये ॥ ददासि यदि राज्यांशं, न्यायोपेतं त्वमेतयोः ॥ ४९ ॥ तच्चेटकवचो गत्वा, दूतः स्वस्वामिनेऽवदत् ॥ क्रोधाध्मातस्ततः सोऽपि, यात्राभंभामवीवदत् ॥ ५० ॥ कालाद्यैर्दशभिर्युक्तो, भ्रातृभिर्निजसन्निभैः ॥ त्रयस्त्रिंशत्सहस्राश्व—रथसिंधुरसंयुतः ॥ ५१ ॥ त्रयस्त्रिंशत्कोटिपत्ति—कलितश्चलितस्ततः ॥ कूणिकोऽच्छादयत्सैन्यै—र्भुवं द्यां च रजोभरैः ॥ ५२ ॥ ( युग्मम् )

ततो युतोऽष्टादशभि—र्भूपैर्मुकुटधारिभिः ॥ सप्तपंचाशत्सहस्र—रथहस्तिहयान्वितः ॥ ५३ ॥ चेटकोऽप्यभ्यगात्सप्त— पंचाशत्कोटिपत्तियुक् ॥ स्वदेशसीम्नि सैन्ये च, वार्द्धिव्यूहमचीकरत् ॥ ५४ ॥ ( युग्मम् )

कूणिकोऽप्यागतस्तत्र, तार्क्ष्यव्यूहं व्यधाद्बले ॥ न्यधाच्चमूपतित्वे च, कालं कालमिवोत्कटम् ॥ ५५ ॥ व्यक्तवीरगणोन्मुक्त—पृषत्काच्छादितांबरे ॥ आरेभाते रणं भीम—मुभे अपि ततो बले ॥५६॥ निषादिना न्यधाद्युद्धं, निषादी रथिना रथी ॥ सादिना च समं सादी, पदातिस्तु पदातिना ॥ ५७ ॥ काली जयार्थमुत्तालः, समं चेटकसेनया ॥ युध्यमानस्तदा राज्ञ—श्चेटकस्यान्तिके ययौ ॥ ५८ ॥ दिनं प्रत्येकविशिख—मुक्तिसंधाधरस्ततः ॥ चेटको दिव्यबाणेन, तं कृतान्तातिथिं व्यधात् ॥ ५९ ॥ चंपापतेर्बलं शोका—कुलं द्रष्टुमिवाक्षमः ॥ तदा भानुर्जगामास्तं, विशश्राम ततो रणः ॥ ६० ॥ द्वितीयेऽप्यह्नि सैन्याभ्या—मारब्धे संगरे पुनः ॥ महाकालं कूणिकस्य, सेनान्यं चेटकोऽवधीत् ॥६१॥ अन्येष्वपि हतेष्वेवं, तेनाष्टस्वष्टभिर्दिनैः ॥ शोकाक्रान्तोऽशोकचन्द्रः, इति चेतस्यचिन्तयत् ॥ ६२ ॥ राज्ञोऽस्याऽजानता दिव्यां, शक्तिमेतां हहा मया ॥ मुधैव प्रापिताः कालं, कालाद्या भ्रातरो दश ॥ ६३ ॥ तदद्यापि सुरं कंचि—दाराध्यामुं जयाम्यरिम् ॥ नो चेद्भविष्याम्यनुग—स्तेषामहमपि द्रुतम् ॥ ६४ ॥ ध्यात्वेति देवताध्याने, स्थितं तं विहिताष्टमम् ॥ प्राग्जन्मसंगतौ शक्र—चमरेंद्रावुपेयतुः ॥ ६५ ॥ किमिच्छसीति जल्पंतौ, तावित्यूचेऽथ कूणिकः ॥ यदि तुष्टौ युवां सद्य—श्चेटको मार्यतां तदा ॥ ६६ ॥ ऊचे शक्रः सधर्माणं, चेटकं न हि हन्म्यहम् ॥ करिष्याम्यंगरक्षां तु, तव भक्तिवशंवदः ॥ ६७ ॥ महाशिलाकंटकाह्व—रथादिमुशले रणे ॥ चमरेंद्रस्त्वदात्तस्मै, वैरिनिर्जयकारणे ॥ ६८ ॥ तत्राद्ये वैरिषु क्षिप्ता—वपि कर्करकंटकौ ॥ महाशिलामहाशस्त्रे, इव स्यातां मृतिप्रदौ ॥ ६९ ॥ युद्धे द्वितीये तु रथमुशले भ्रमकं विना ॥ भ्राम्यतः परितो वैरि—पक्षपेषणतत्परे ॥ ७० ॥ ततस्तुष्टो ययौ दुष्टः, कूणिकः समराजिरम् ॥ ममंथ वार्द्धिव्यूहं च, मंथाचल इवोदधिम् ॥ ७१ ॥ तमापतंतं संहर्तुं, सामर्षश्चेटको नृपः ॥ मुमोचाकर्णमाकृष्य, सद्यो दिव्यं शिलीमुखम् ॥ ७२ ॥ कूणिकस्य पुरो वज्र—कवच वज्रभृद्दधौ ॥ पृष्ठे तु लौहं सन्नाहं, तदा तस्यासुरेश्वरः ॥ ७३ ॥ तस्मिन् दिव्ये शरे वज्र—वर्मणा स्खलितेऽन्तरा ॥ भटाश्चेटकराजस्य, मेनिरे सुकृतक्षयम् ॥ ७४ ॥ सत्यसंधो द्वितीयं तु, चेटको नामुचच्छरम् ॥ द्वितीयेऽप्यह्नि तद्बाणं, तथैवाऽजनि निष्फलम् ॥ ७५ ॥ आद्ये रणे षण्णवति—र्लक्षा नृणां ययुः क्षयम् ॥ लक्षाश्चतुरशीतिश्च, द्वितीये तु महाहवे ॥ ७६ ॥ तेष्वेको वरुणः श्राद्धो, नागनप्ता ययौ दिवम् ॥ तत्सुहृद्भद्रको नृत्वं, तिर्यक्त्वं नरकं परे ॥ ७७ ॥ इत्यन्वहं जायमाने, समरे सैन्ययोस्तयोः ॥ यात्सु स्वस्वपुरं नंष्ट्वा—ऽष्टादशस्वपि राजसु ॥ ७८ ॥ प्रणश्य चेटकोर्वीशो, वैशालीमविशत्पुरीम् ॥ रुरोध सर्वतस्तां च, कूणिकः प्रबलैर्बलैः ॥ ७९ ॥ ( युग्मम् )

अथ सेचनकारूढौ, कूणिकस्याखिलं बलम् ॥ उपद्रुद्रुवतुर्हल्ल—विहल्लौ तौ प्रतिक्षपम् ॥ ८० ॥ अवस्कंदप्रदानाया—ऽऽगतं तं गंधहस्तिनम् ॥ न हंतुमनुगंतुं वा, तत्सैन्ये कोऽप्यभूत् प्रभुः ॥८१॥ तन्मार्गे मंत्रिणां बुद्ध्या, कूणिकोऽचीकरत्ततः ॥ खातिकां ज्वलदंगार—पूर्णां पर्णाद्यवस्तृताम् ॥ ८२ ॥ रात्रौ तत्रागतः सोऽथ, गजो ज्ञात्वा विभंगतः ॥ ज्वलदंगारगर्त्तां तां, नुन्नोऽपि न पुरोऽचलत् ॥ ८३ ॥ तावूचतुस्ततः खिन्नौ, कुमाराविति तं द्विपम् ॥ परेभ्यः किं बिभेषि ? त्वं, यत्पुरो न चलस्यरे ! ॥ ८४ ॥ वरं श्वा पोषितः शश्व—त्स्वामिनं योऽनुवर्त्तते ॥ कृतघ्नोऽहिरिव स्वामि—

कृत्यनाशी भवान्नतु ॥ ८५ ॥ इत्युक्तः सिंधुरस्ताभ्यां, स्वामिभक्तधुरंधरः ॥ गृहीत्वा शुंडया स्कन्धा–त्तौ बलेनो-दतारयत् ॥ ८६ ॥ स्वयं तु तस्यां गर्त्तायां, दत्वा झंपां विपद्य च ॥ आद्येऽगान्नरकं धैर्य–महो तस्य पशोरपि ! ॥ ८७ ॥ तद्वीक्ष्य सानुतापौ तौ, कुमाराविति दध्यतुः ॥ क्रोधान्धाभ्यां धिगावाभ्यां, किमकार्यमिदं कृतम् ! ॥८८॥ कृते यस्य कृतो देश–त्यागो भ्राता रिपूकृतः ॥ अस्मिंश्च व्यसनांभोधौ, क्षिप्तो मातामहोऽप्यहो ! ॥ ८९ ॥ निहत्य तं गजं युक्तं, नैव जीवितुमावयोः ॥ जीवावश्चेद्वीरदेव–शिष्यीभूयैव नान्यथा ॥ ९० ॥ ( युग्मम् )

तदा शासनदेव्या तौ, नीतौ वीरजिनान्तिके ॥ प्रव्रज्यैकादशांगानि, सुधियौ पेठतुः क्रमात् ॥ ९१ ॥ गुणरत्नं तपस्तप्त्वा, संलिख्य च समाधिना ॥ हल्लः सुरो जयंतेऽभू–द्विहल्लस्त्वपराजिते ॥९२॥ गृहीतेऽपि व्रते ताभ्यां, पुरीमादातुमक्षमः ॥ व्यधात्संधामित्यशोक–चन्द्रो निस्तन्द्रविक्रमः ॥ ९३ ॥ खरयुक्तहलैरेनां, नगरीं न खनामि चेत् ॥ तदा त्यजाम्यहमसून्, भृगुपातादिना ध्रुवम् ॥९४॥ तथापि तां पुरीं भंक्तु–मनीशे श्रेणिकात्मजे ॥ क्रमात् खेदं गते देवी, कापीत्यूचे नभःस्थिता ॥ ९५ ॥ "समणे जदि कूलवालए, मागधिअं गणिअं गमिस्सए ॥ राया य असोगचंदए, वेसालिं नगलिं गहिस्सए ॥ ९६ ॥" तन्निशम्य नृपस्तुष्ट–स्तां वेश्यामेवमादिशेत् ॥ इहानय पतीकृत्य, भद्रे ! त्वं कूलवालकम् ॥ ९७ ॥ तत्प्रपद्याभवन्माया–श्राविका सा पणांगना ॥ मुनेः कुतोऽपि तत्रस्थ–मज्ञासीत्तं च संयतम् ॥ ९८ ॥ तत्रारण्ये ततो गत्वा, तं च नत्वा यथाविधि ॥ इति सा दंभिनी प्रोचे, वचनैरमृतोपमैः ॥ ९९ ॥ नंतुं तीर्थानि चंपातः, प्रभो ! प्रस्थितया मया ॥ सर्वतीर्थाधिकाः पूज्य–पादा दिष्ट्याऽत्र वन्दिताः ॥ १०० ॥ मत्पाथेयात्तदादाय, भिक्षामनुगृहाण माम् ॥ तथेति सादरं प्रोक्त–स्तत्सार्थे साधुरप्यगात् ॥ १ ॥ तस्यादान्मिश्रितद्रव्यान्, सामोदा सापि मोदकान् ॥ तद्भक्षणादतीसार–स्तस्यासीदतिदुस्सहः ॥ २ ॥ ततः सा तत्र तद्दया–वृत्यदंभेन तस्थुषी ॥ मुहुर्मुनिमुपासर्प–त्सर्पवत्कुटिलाशया ॥ ३ ॥ उद्वर्त्तनादिना स्वांग–स्पर्शं चाचीकरन्मुहुः ॥ भेषजान्तरदानाच्च, तमुल्लाघं व्यधाच्छनैः ॥ ४ ॥ तत्कटाक्षसरागोक्ति–शरीरस्पर्शविभ्रमैः ॥ मुनेर्मनोऽचलत्तस्य, स्त्रीसंगे क्व नु ? तत्स्थिरम् ॥ ५ ॥ त्यक्तव्रतस्ततस्तस्या–मासक्तः सोऽभवत्तथा ॥ यथा तया विना स्थातुं, नाभूत्क्षणमपि प्रभुः ॥ ६ ॥ तद्वशः कूणिकोपान्तं, ततोऽगात्कूलवालकः ॥ सत्कृत्य कूणिकोऽप्येव–मब्रवीत्तं मुनिब्रुवम् ॥ ७ ॥ महात्मन् ! गृह्यते नेय–मुपायैर्बहुभिः पुरी ॥ ततस्तद्ग्रहणोपायं, विधेहि धिषणानिधे ! ॥ ८ ॥ ततो दैवज्ञवेषेण, वैशालीं प्रविवेश सः ॥ श्रीसुव्रतार्हतः स्तूपं, भ्रमंस्तत्र ददर्श च ॥ ९ ॥ दध्यौ च नूनमस्यास्ति, प्रतिष्ठालग्नमुत्तमम् ॥ अभंगा तन्महिम्नासौ, नगरी ननु वर्त्तते ॥ १० ॥ कथं मया पातनीय–स्तदसाविति चिंतयन् ॥ अपृच्छ्यत पुरीरोधा–कुलेनेति जनेन सः ॥११॥ वद दैवज्ञ ! वैशाल्या, रोधो यास्यत्यसौ कदा ? ॥ खिन्नाः स्मो यद्वयं कारा–वासेनेवामुना भृशम् ॥ १२ ॥ मुदितः स ततोऽवादीत्, पापपंकैकशूकरः ॥ स्तूपोऽसौ यावदत्र स्या–त्तावद्रुद्वेष्टनं क्व ? चः ॥ १३ ॥ तल्लोकाः ! यद्ययं स्तूपो, युष्माभिः पात्यते द्रुतम् ॥ तदाऽपयाति नियतं, पुरीरोधोऽधुनैव हि ॥ १४ ॥ प्रोक्तो धूर्त्तेन तेनेति, बालवद्बालिशो जनः ॥ तं स्तूपं भंक्तुमारेभे, धूर्तैः को न हि वंच्यते ॥ १५ ॥ स्तूपे च भंक्तुमारब्धे, गत्वा मागधिकाधिपः ॥ सद्योऽपासारयच्चंपा–धीशं क्रोशद्वयं ततः ॥ १६ ॥ ततः स प्रत्ययैर्लोकैः, स्तूपे मूलात्प्रपातिते ॥ व्याघुट्य कूणिकोऽविक्षत्, पुरीं सबलवाहनः ॥१७॥ तदा चानशनं कृत्वा, स्मृत्वा पंचनमस्क्रियाः ॥ चेटको न्यपतत् कूपे, बद्ध्वाऽयःपुत्रिकां गले ॥ १८ ॥ तदा तत्रासनास्थैर्या–दागत्य धरणाधिपः ॥ साधर्मिकं तमादाय, निनाय भवने निजे ॥ १९ ॥ विधायाराधनां सम्यक्, प्रपाल्यानशनं च तत् । तत्रस्थः प्राप्य पंचत्वं, चेटकस्त्रिदिवं ययौ ॥ २० ॥ इतश्च सुज्येष्ठासूनु–दौहित्रश्चेटकप्रभोः ॥ वैशाल्यामाययौ दैवा–त्तदा सत्यकिखेचरः ॥ २१ ॥ मातामहप्रजां सर्वां, लुंट्यमानां स रक्षितुम् ॥ निनाय नीलवत्यद्रौ, द्रुतमुत्पाट्य विद्यया ॥ २२ ॥ कोपाविष्टः कूणिकोऽथ, तां पुरीं युक्ररासभैः ॥ खेटयित्वा हलैस्तीर्ण–प्रतिज्ञः स्वपुरीं ययौ ॥२३॥ कूलवालकनामा तु, मृत्वागान्नरकं कुधीः ॥ उद्धृतस्तु ततोऽनन्ते, संसारे पर्यटिष्यति ॥२४॥ कूलवालकमुनेरिव दुःखा–वाप्तिरेवमविनीतमुनेः स्यात् ॥ धृष्टतां तदपहाय सुशिष्यैः, सद्गुरोर्विनय एव विधेयः ॥२५॥ इतिकूलवालककथा, इति सूत्रार्थः ॥ ३ ॥ अथ दृष्टांतपूर्वकमविनीतस्य दोषमाह—

मूलम्—जहा सुणी पूइकण्णी, निक्कसिज्जइ सव्वसो । एवं दुस्सील पडिणीए, मुहरी निक्कसिज्जइ ॥४॥

व्याख्या—यथा शुनी, पूती परिपाकात् कुथितगन्धौ, उपलक्षणत्वात् कृमिकुलाकुलौ च कर्णौ यस्याः सा पूतिकर्णी, निष्काश्यते बहिः कर्ष्यते, 'सव्वसोत्ति' सर्वेभ्यो गृहांगणादिभ्यो "हत हत" इत्यादिवाक्यैर्लेष्ट्वादिभिश्च, अत्र च शुनीति

स्त्रीनिर्देशोऽतीवकुत्सासूचकः, 'पूतिकर्णीति' विशेषणं तु सर्वांगकुत्सासूचकम्, उपनयमाह—एवमनेन प्रकारेण दुःशीलो दुष्टाचारः, प्रत्यनीकः प्राग्वत्, मुखरो बहुविधासंबद्धभाषी, निष्काश्यते सर्वतः कुलगणसंघादेर्बहिः क्रियते, इति सूत्रार्थः ॥ ४ ॥ ननु कुतोऽयं ज्ञात्वाप्यनर्थहेतौ दौश्शील्ये रमते ? पापोपहतमतित्वात्तत्रैवास्य रतिः स्यादेतदेव दृष्टांतेन दर्शयति—

मूलम्—कणकुंडगं चइत्ताणं, विट्ठं भुंजइ सूअरे । एवं सीलं चइत्ताणं, दुस्सीले रमई मिए ॥ ५ ॥

व्याख्या—कणास्तंदुलास्तेषां तन्मिश्रो वा कुंडकः कुक्कसः कणकुंडकस्तं त्यक्त्वा विष्टां पुरीषं भुंक्ते, शूकरो गर्त्ताशूकरो यथेति गम्यते, एवमविनीतः शीलं प्रस्तावाच्छोभनमाचारं त्यक्त्वा दुष्टं शीलं दुश्शीलमनाचाररूपं तत्र रमते धृतिमाधत्ते, मृग इव मृगोऽपायानभिज्ञत्वात्, यथा हि मृगो गीताक्षिप्तो मरणापायमपश्यन् व्याधमनुसरति, तथाऽयमपि प्रेत्यदुर्गतिपातमपश्यन्निर्विवेको दुःशीले रमते, इति सूत्रार्थः ॥ ५ ॥ उक्तमुपसंहृत्य कृत्यमुपदिशति—

मूलम्—सुणिआभावं साणस्स, सूअरस्स नरस्स य । विणए ठविज्ज अप्पाणं, इच्छंतो हिअमप्पणो ॥ ६ ॥

व्याख्या—श्रुत्वा आकर्ण्य अभावं अशोभनभावं सर्वतो निष्काशनरूपं 'साणस्सत्ति' प्राकृतत्वात् शुन्याः शूकरस्य चोपमानस्य नरस्य चोपमेयस्य विनये स्थापयेदात्मानमात्मनैवेति शेषः, इच्छन् हितमैहिकं पारत्रिकं च आत्मनः, विनयादेव हितावाप्तेर्यदुक्तम्—"विणया नाणं नाणाओ, दंसणं दंसणाओ चरणं च ॥ चरणाहिंतो मोक्खो, मोक्खे सुक्खं निराबाहं ॥ १ ॥ इति सूत्रार्थः ॥ ६ ॥ यतश्चैवं ततः किमित्याह—

मूलम्—तम्हा विणयमेसिज्जा, सीलं पडिलभे जओ । बुद्धपुत्तनिआगट्ठी, न निक्कसिज्जइ कण्हुइ ॥ ७ ॥

व्याख्या—तस्माद्विनयमेषयेत्, धातूनामनेकार्थत्वात्, कुर्यात्, किं पुनर्विनयस्य फलं ? यदेवमुपदिश्यते, इत्याह शीलं प्रतिलभेत प्राप्नुयात्, यतो विनयात्, अनेन विनयस्य शीलावाप्तिः फलमुक्तं, अथ तस्य किं फलमित्याह—बुद्धानामाचार्यादीनां पुत्र इव पुत्रो बुद्धपुत्रः साधुः, निश्चितं यजनं नियागः संपूर्णभावस्तवरूपः सर्वसंवरस्तत्फलभूतो मोक्षश्च, कारणे कार्योपचारात्तदर्थी सन् न निष्काश्यते 'कण्हुइत्ति' कुतश्चिद्गच्छादेः, किंतु विनीतत्त्वेन सर्वत्र मुख्य एव क्रियते इति सूत्रार्थः ॥ ७ ॥ कथं पुनर्विनयो विधेय इत्याशयेनाह—

मूलम्—निसंते सिआ मुहरी, बुद्धाणं अंतिए सया । अट्ठजुत्ताणि सिक्खिज्जा, निरट्ठाणि उ वज्जए ॥ ८ ॥

व्याख्या—निशान्तो नितरामुपशांतः, अन्तःक्रोधत्यागाद्बहिश्च शान्ताकारत्वात्, स्यात् भवेत् अमुखरः, तथा बुद्धानां आचार्यादीनां अन्तिके समीपे सदा सर्वकालं अर्थयुक्तानि हेयोपादेयार्थवाचकान्यागमवाक्यानि शिक्षेत अभ्यसेत्, निरर्थकानि तद्विपरीतानि तु पुनर्वात्स्यायनादीनि वर्जयेत् परिहरेदिति सूत्रार्थः ॥ ८ ॥ कथं पुनरर्थयुक्तानि शिक्षेतेत्याह—

मूलम्—अणुसासिओ न कुप्पिज्जा, खंतिं सेविज्ज पंडिए । खुड्डेहिं सह संसग्गिं, हासं कीडं च वज्जए ॥ ९ ॥

व्याख्या—अनुशिष्टः कदाचित् परुषोक्त्यापि, शिक्षितो न कुप्येत् न कोपं कुर्यात् । तर्हि किं कुर्यादित्याह—क्षान्तिं परुषभाषणादिसहनात्मिकां सेवेत, पंडितो बुद्धिमान्, तथा 'खुड्डेहिंति' क्षुद्रैर्बालैः शीलहीनैः पार्श्वस्थादिभिर्वा सह समं 'संसग्गिंति' संसर्गं परिचयं, हासं हसनं, क्रीडां च अन्त्याक्षरिकाप्रहेलिकादानादिकां वर्जयेत्, लोकागमविरुद्धत्वाद्गुरुकर्मबंधहेतुत्वाच्चैषामिति सूत्रार्थः ॥ ९ ॥ पुनरन्यथा विनयमेवाह—

मूलम्—मा य चंडालिअं कासी, बहुअं मा य आलवे । कालेण य अहिज्जित्ता, तओ झाएज्ज एगगो ॥ १० ॥

व्याख्या—मा निषेधे, चः समुच्चये, चंडः क्रोधस्तद्वशादलीकमनृतभाषणं माकार्षीर्माविधाः । लोभालीकाद्युपलक्षणं चैतत् । तथा बहु एव बहुकं अपरिमितं आलजालरूपं स्त्रीकथादिकं मा च आलपेद्भाषेत, बहुभाषणात्स्वाध्यायादिकार्यहानिवातक्षोभादिसंभवात् । किं तर्हि कुर्यादित्याह—कालेन प्रथमपौरुष्यादिलक्षणेन, चः पुनरर्थे, अधीत्य पठित्वा पृच्छाद्युपलक्षणं चैतत्, ततोऽध्ययनाद्यनन्तरं ध्यायेच्चिन्तयेदेकको भावतो रागादिरहितो द्रव्यतो विविक्तवसत्यादौ स्थित इति सूत्रार्थः ॥ १० ॥ इत्थमकार्यनिषेधः कार्यविधिश्चोक्तः, अथ कदाचिदेतद्व्यत्यये किं कार्यमित्याह—

मूलम्—आहच्च चंडालिअं कट्टु, न निण्हविज्ज कयाइवि । कडं कडित्ति भासिज्जा, अकडं णो कडित्ति अ ॥ ११ ॥

व्याख्या—'आहच्च' कदाचिच्चंडालीकं पूर्वोक्तं कृत्वा न निह्नुवीत मया न कृतमिति नापलपेत्, कदाचिदपि यदा परैर्न ज्ञातस्तदापीत्यर्थः । किं तर्हि कुर्यादित्याह—कृतं विहितं चंडालीकादि कृतमेव भाषेत, न तु भयलज्जादिभिरकृ-

तमिति । तथा अकृतं चंडालीकादि नो कृतमिति अकृतमेव भाषेत, न तु मायोपरोधादिना अकृतमपि कृतमिति वदेत्, मृषावादादिदोषसंभवात् । अयं चात्राऽभिप्रायः—कथंचिदतिचारोत्पत्तौ लज्जाद्यकुर्वन् गुरुपार्श्वमागम्य—"जह बालो जप्पंतो, कज्जमकज्जं च उज्जुअं भणइ ॥ तं तह आलोएज्जा, मायामयविप्पमुक्को उ ॥१॥" इत्याद्यागममनुमरन् यथावत् शल्यमालोचयेदिति सूत्रार्थः ॥११॥ अथ यदैव गुरुर्वक्ति तदैव प्रवृत्तिनिवृत्ती कर्त्तव्ये इत्याशंकां निराकर्त्तुमाह—

मूलम्—मा गलिअस्सुव कसं, वयणमिच्छे पुणो पुणो । कसंव दट्टुमाइण्णे, पावगं परिवज्जए ॥ १२॥

व्याख्या—मा निषेधे गल्यश्व इव अविनीतवाजीव कशां कशाप्रहारं वचनं प्रवृत्तिनिवृत्तिविषयं उपदेशं गुरूणामिच्छेदभिलषेत् पुनः पुनर्वारं वारं । अयं भावः—यथा गलिरश्वः कशाप्रहारं विना न प्रवर्त्तते निवर्त्तते वा, नैवं सुशिष्येणापि प्रवृत्तिनिवृत्त्योः पुनः पुनर्गुरुवचनमपेक्ष्यं, किंतु 'कसं वेत्यादि'—कशां चर्मयष्टिं दृष्ट्वा आकीर्णे इव विनीताश्व इव प्रक्रमात् सुशिष्यो गुरोराकारादिकं दृष्ट्वा पापकं अशुभानुष्ठानं परिवर्जयेत् सर्वप्रकारैस्त्यजेत्, उपलक्षणत्वात् शुभानुष्ठानं च कुर्यात् । अयमाशयः— यथा आकीर्णोऽश्वः कषाग्रहणादिना आरोहकाभिप्रायं ज्ञात्वा कशयाऽस्पृष्ट एव तदाशयानुरूपं चेष्टते तथा सुशिष्योऽप्याकाराद्यैराचार्याशयं ज्ञात्वा वचनेनाप्रेरित एव सर्वकृत्येषु प्रवर्त्तते, माभूद्गुरोर्वचनायास इति सूत्रार्थः ॥ १२ ॥ गल्याकीर्णकल्पशिष्ययोर्दोषगुणावाह—

मूलम्- अणासवा थूलवया कुसीला, मिउंपि चंडं पकरंति सीसा ।
चित्ताणुआ लहु दक्खोववेआ, पसायए ते हु दुरासयंपि ॥ १३ ॥

व्याख्या—अनाश्रवा गुरुवचस्यस्थिताः, स्थूलवचसोऽविचारितभाषिणः, कुशीलाः कुत्सिताचाराः, मृदुमपि अकोपनमपि गुरुं चंडं प्रकुर्वंति, प्रकर्षेण विदधति शिष्याः, ये पुनश्चित्तानुगा गुरुमनोऽनुवर्त्तिनः लघु शीघ्रं दाक्ष्योपपेता अविलंबितकारित्वयुक्ताश्च भवंति, अत्र 'उप, अप, इत' इति शब्दत्रयस्थापने पृषोदरादित्वादपशब्दस्याकारलोपे च उपपेत इति सिद्धम् । ते शिष्याः प्रसादयेयुः प्रसन्नं कुर्युः, हुः पुनरर्थे, दुराशयमपि अतिकोपनमपि प्रस्तावाद्गुरुं, किं पुनरनुत्कटकषायमिति, अत्रोदाहरणं चंडरुद्राचार्यशिष्यः, तत्कथासंप्रदायश्चायम्—

उज्जयिन्यां पुरि स्वात्रो—द्याने नंदनसन्निभे ॥ चंडरुद्राभिधः सूरिः सगच्छः समवासरत् ॥ १ ॥ ऊनाधिकक्रियादोषान्, स्वगच्छीयतपस्विनाम् ॥ दर्शं दर्शं स चाकुप्यत्, प्रकृत्याप्यतिरोषणः ॥ २ ॥ भूयसां वारणं शेषां, मयैकेनातिदुष्करम् ॥ परं रोषातिरेकान्मे, स्वहितं न हि जायते ॥ ३ ॥ ध्यात्वेति सूरिरेकांते, तस्थौ सद्ध्यानहेतवे । तस्मिं विहाय शिष्याणां, स्वाध्यायध्यानतत्परः ॥ ४ ॥ [ युग्मम् ] इतश्चोज्जयिनीवासी, व्यवहारिसुतो युवा ॥ आगात्कुंकुमलिप्तांगो, नवोढस्तत्र मित्रयुक् ॥ ५ ॥ साधून् दृष्ट्वा परीहास- पूर्वकं तान् प्रणम्य च ॥ सोऽवादीद्भगवंतो मे,धर्मं ब्रूत सुखाकरम् ॥ ६ ॥ वैहासिकोऽयमिति ते, ज्ञात्वा नो किंचिदूचिरे ॥ ततो भूयः स निर्ग्रंथान्, सोपहासमभाषत ॥ ७ ॥ दौर्भाग्याद्भार्यया त्यक्तो, विरक्तोऽह गृहाश्रमात् ॥ तत् प्रसद्य भवांभोधि- तारकं दत्त मे व्रतम् ॥८॥ धूर्त्तः प्रतारयत्यस्मा— न्नर्मवाक्यैर्मुहुर्मुहुः ॥ तदूघृष्यतामसौ सम्यक्, चिंतयित्वेति ते जगुः ॥ ९ ॥ गुरोरधीना न वयं, स्वयं दीक्षादि दद्महे ॥ तदाश्रय व्रताय त्व—मस्मद्गुरुमितः स्थितम् ॥ १० ॥ श्रुत्वेति सवयस्योऽथ, सोऽव्रजत्सूरिसन्निधौ ॥ अब्रवीत्तं च वंदित्वा, सोपहासं कृतांजलिः ॥ ११ ॥ गृहव्यापारतो भग्नो, लग्नोऽस्मि त्वत्पदाब्जयोः ॥ तत्प्रव्राजय मां स्वामिं—स्तिष्ठामि ससुखं यथा ॥ १२ ॥ सहास्यमिति तद्वाचं, श्रुत्वा कोपातिरेकतः ॥ सूरिर्जगौ व्रतेच्छुश्चे—त्तदा भस्मानय द्रुतम् ॥ १३ ॥ ततस्तत्सुहृदैकेना—नीते भस्मनि साधुराट् ॥ तं गृहीत्वा स्वबाहुभ्यां, लोचं कृत्वा ददौ व्रतम् ॥ १४ ॥ तद्विलोक्य विषण्णास्त—द्वयस्यास्तमथाभ्यधुः ॥ मित्र ! सद्यः पलायस्व, धाम यामो वयं यथा ॥ १५ ॥ आसन्नसिद्धिकः सोऽथ, लघुकर्मेत्यचिंतयत् ॥ कथं गच्छाम्यहं गेहं, स्ववाचा स्वीकृतव्रतः ॥१६॥ प्रमादसंगतेनापि, या वाक् प्रोक्ता मनस्विना ॥ सा कथं दृषदुत्कीर्णा—क्षरालीवाऽन्यथा भवेत् ॥ १७ ॥ नर्मणापि मया लब्धं, रक्षणीयं ततो व्रतम् ॥ जहाति द्युमणिं को हि, विनायाससमुपस्थितम् ॥ १८ ॥ ध्यात्वेति भावसाधुत्वं, स सुधीः प्रत्यपद्यत ॥ यथास्थानं ततो जग्मु- स्तद्वयस्या विषादिनः ॥ १९ ॥ विनेयोऽथावदत्सूरिं, भगवन् ! बंधवो मम ॥ श्रामण्यं मोचयिष्यंति, तद्यामोऽन्यत्र कुत्रचित् ॥ २० ॥ गच्छो महानसौ गच्छन्, प्रच्छन्नमपि यज्जनैः ॥ ज्ञायते तद् द्वयोरेवा—ऽऽवयोर्गमनमर्हति ॥ २१ ॥ सूरिः प्रोवाच यद्येवं, तदाऽध्वानं विलोकय ॥ यथा रजन्यां

गच्छामः, सोऽप्यालोक्य तमाययौ ॥ २२ ॥ प्रतस्थेऽथ निशीथिन्यां, सूरिर्नूतनशिष्ययुक् ॥ पुरो याहीति गुरुणा, चोक्तः शिष्यो ययौ पुरः ॥ २३ ॥ अपश्यन्निशि वृद्धत्वात्, स्थाणुना स्खलितो गुरुः ॥ वेदनाविह्वलो जज्ञे, ज्वलद्रोषभराकुलः ॥ २४ ॥ हा दुष्टशिष्य ! सन्मार्गो, न व्यलोकीति विब्रुवन्, दंडेन शिष्यं शिरसि, कृतलोचे जघान सः ॥ २५ ॥ तत्प्रहारस्फुटन्मौलि-र्निर्गच्छद्रुधिरोऽपि सः ॥ न व्यब्रवीन्नाप्यकुप्यत्, प्रत्युतैवमचिंतयत् ॥ २६ ॥ स्वगच्छमध्ये ससुखं, तिष्ठंतोऽमी महाशयाः ॥ अधन्येन मया दुःख-भाजनं विहिता हहा ! ॥ २७ ॥ आजन्मसौख्यदाः शिष्या, गुरोः स्युः केऽपि धीधनाः ॥ आद्य एव दिनेऽहं तु, जातोऽसातकरो गुरोः ॥ २८ ॥ स्थाण्वादिना गुरोः पीडा, माभूद्भूयोऽपि भूयसी ॥ ध्यायन्निति प्रयत्नेन, स चचाल शनैः शनैः ॥ २९ ॥ तस्यैवं व्रजतः शुद्धा-शयस्य समतानिधेः ॥ महात्मनः समुत्पेदे, निशायामेव केवलम् ॥ ३० ॥ अथ प्रभाते संजाते-ऽभ्युदिते च दिवाकरे ॥ सूरिणा ददृशे शिष्यो, रुधिरालिप्तमस्तकः ॥ ३१ ॥ ततः शांतरसाचांत-स्वांतः सूरिरचिंतयत् ॥ अहो ! नवीनशिष्यस्या-ऽप्यमुष्य क्षांतिरुत्तमा ॥ ३२ ॥ क्रोधाध्मातेन मयका, दंडेनैवं हतोऽपि यत् ॥ नातनोद्वाङ्मनोदेहै- र्वैगुण्यं किंचिदप्यसौ ॥ ३३ ॥ चिरप्रव्रजितस्यापि, रोषदोषांश्च जानतः ॥ प्राप्ताचार्यपदस्यापि, धिग्मे प्रबलकोपताम्! ॥ ३४ ॥ इयच्चिरं सु दुष्पालं, पालितं मयका व्रतम् ॥ परं तन्निष्फलं जज्ञे, कोपात्तन्मेऽमुना कृतम्॥३५॥ भावनाभिरिति भावितचित्तः, सोऽपि केवलमवाप मुनींद्रः ॥ एवमुत्कटरुषोऽपि गुरोः स्यु-र्मोक्षदाः सविनयाः सुविनेयाः ॥ ३६ ॥ इति श्रीचंडरुद्राचार्यकथा ॥ इति सूत्रार्थः ॥ १३ ॥ अथ गुरुचित्तानुवृत्तेरुपायमाह—

मूलम्— नापुट्ठो वागरे किंचि, पुट्ठो वा नालिअं वदे ॥ कोहं असच्चं कुव्विज्जा, धारिज्जा पिअमप्पिअं ॥१४॥

व्याख्या- नापृष्टः कथमिदमित्यादि गुरुणाऽजल्पितः व्यागृणीयाद्वदेत्तादृशकारणं विना, किंचित् स्तोकमपि, पृष्टो वा नालीकमनृतं वदेत्, कारणांतरेण च गुरुभिर्निर्भर्त्सितोऽपि न तावत्कुप्येत्, कथंचिदुत्पन्नं तु क्रोधमसत्यं तदुत्थविकल्पविफलीकरणेन कुर्वीत विदध्यात् । क्रोधासत्यत्वकरणे चायं दृष्टांतः- तथाहि कुत्रचिद्ग्रामे, कुलपुत्रस्य कस्यचित् ॥ सोदरः प्रत्यनीकेन, निन्ये यमनिकेतनम् ॥ १ ॥ ततस्तज्जननी प्रोचे, तमिति प्रत्यहं मुहुः ॥ प्रभविष्णुरपि भ्रातृ-घातकं हंसि नो कुतः? ॥ २ ॥ बलिनो ह्यलसायंते, वैरशुद्धौ न कर्हिचित् ॥ न विपक्षमुपेक्षन्ते, पन्नगा अपि मानिनः ! ॥ ३ ॥ तदाकर्ण्य सरोषेण, तेन पौरुषशालिना ॥ जीवग्राहं प्रगृह्यारि-रानिन्ये मातुरन्तिकम् ॥४॥ प्रोक्तश्चारे ! भ्रातृघातिन् !, कथं त्वा मारयाम्यहम् ? ॥ ततः स प्रांजलिः प्रोचे, कृपाणं प्रेक्ष्य कंपितः ॥ ५ ॥ हन्यंते शरणायाता, यथा त्वं मां तथा जहि ॥ सदैन्यमिति तेनोक्ते, स मातुर्मुखमैक्ष्यत ॥ ६ ॥ सापि तं दीनतां प्राप्तं, प्रेक्ष्योत्पन्नकृपाऽलपत् ॥ आर्यैः पुत्र ! न मार्यंते, कदापि शरणागताः ॥ ७ ॥ यतः-"शरणागतविस्रब्ध-प्रणतव्यसनार्दितान् ॥ रोगिणः पंगुमुख्यांश्च, नैव घ्नंति महाशयाः! ॥८॥" पुत्रः प्रोवाच मातर्मे, रोषः स्यात्सफलः कथम्?॥ सर्वत्र सफलः कोपो, न कार्य इति साप्यवक् ॥ ९ ॥ इति मातृगिरा जातो- पशान्तिस्तं मुमोच सः ॥ तौ नत्वा क्षमयित्वा च, स्वागः सोऽपि गृहं ययौ ॥ १० ॥ मातृवाक्यमधिगम्य यथासौ, मोघमेव विदधे किल कोपम् ॥ तद्वदेव भजता जिनवाणीं, साधुनापि विफलः स विधेयः ॥ ११ ॥ इति क्रोधासत्यीकरणे कुलपुत्रकथा ॥ तथा 'धारिज्जत्ति' धारयेत् समतयाऽवधारयेत्, प्रियं प्रीत्युत्पादकं स्तुत्यादि, अप्रियं च तद्विपरीतं निन्दादि, न तयो रागं द्वेषं वा कुर्यादित्यर्थः, उदाहरणं चात्र तृतीयभूतस्य, तथाहि—

पुरे कस्मिंश्चिदशिवे, समुत्पन्नेऽतिदारुणे ॥ अमंदमांद्यपीडाभि-र्विद्रुते चाखिले जने ॥ १ ॥ तच्छान्तये च भूपेन, डिंडिमे वादिते सति ॥ भूभुजोऽभ्यर्णमभ्येत्य, जगदुर्मांत्रिकास्त्रयः ॥ २ ॥ [ युग्मम् ] शमयामो वयं स्वामि-न्नशिवं भवदाज्ञया ॥ नृपोऽजल्पदुपायेन, केनेति ब्रूत मांत्रिकाः ! ॥ ३ ॥ तेष्वेकोऽथाब्रवीद्भूपं, पृथ्वीनाथावधार्यताम् ॥ मंत्रसिद्धं ममास्त्येकं, भूतं सद्यः शिवंकरम् ॥ ४ ॥ तच्चातिरुचिरं रूपं, विकृत्य पुरि पर्यटत् ॥ न वीक्षणीयं दृष्टं तु, द्रष्टारं हन्ति कोपतः ॥ ५ ॥ तत्प्रेक्ष्याधोमुखं तिष्ठे-द्योऽसौ रोगैर्विमुच्यते ॥ तदाकर्ण्य जगौ राजा, चंडेनानेन नः कृतम् ! ॥ ६ ॥ अथावादीद्भुतवादी, द्वितीयोऽवनिवल्लभम् ॥ मंत्रसिद्धं ममाप्यस्ति, भूतं नूतनशक्तियुक् ॥ ७ ॥ तच्चातिलंबविस्तीर्ण-कुक्षिकं पंचमस्तकम् ॥ एकक्रमं शिखाहीनं, बीभत्सं श्यामलं महत् ॥ ८ ॥ गायन्नरीनृतन्मुंचदट्टहासान् पदे पदे ॥ रूपं विधाय सकले, पुरे भ्रमति सर्वतः ॥ ९ ॥ [ युग्मम् ] तद्वीक्ष्योपहसेत्सम्यक्, प्रविलोकेत वा न यः ॥ दूषयेद्यश्च तन्मौलि-र्द्रुतं भिद्येत सप्तधा ॥ १० ॥ यस्त्वर्चयति पुष्पाद्यैः, सद्वाक्यैः श्लाघते च तत् ॥

गदास्तस्य विलीयंते, वातोद्भूता इवांबुदाः ॥ ११ ॥ तन्निशम्याभ्यधाद्भूभा–नस्माकममुनाप्यलम् ॥ तृतीयोऽथाब्रव-द्राज–न्नस्ति भूतं ममापि हि ॥ १२ ॥ कुरूपमपि तन्नैव, कदाचिदपि कुप्यति ॥ प्रियाप्रियकृतोर्हन्ति, दृष्टमेवा ऽऽमयांस्तथा ॥ १३ ॥ ततो राज्ञा प्रदत्ताज्ञः, स मांत्रिकशिरोमणिः ॥ अशिवोपशमं चक्रे, तत् पर्योस्याऽखिले पुरे॥१४॥ ततोऽसावशिवध्वंस–मोदिना मेदिनीभृता ॥ अपूजि वस्त्रभूषाद्यै–र्लोकैश्च सकलैरपि ॥ १५ ॥ एवं विमुण्डशिरसं मलदिग्धदेहं, द्विष्टो हि गर्हति मुनिं सुजनस्तु नौति ॥ सत्साधुना समदृशान्तिमभूतवत्तत्, सोढव्यमेव सकलं प्रिय-मप्रियं च ॥ १६ ॥ इति प्रियाप्रियसमत्वे तृतीयभूतकथा, इति सूत्रार्थः ॥ १४ ॥ ननु कोपाद्यमलकरणादिना कि-मात्मन एव दमनमुपदिश्यते ? न परस्येत्यत्रोच्यते—

मूलम्—अप्पा चेव दमेअव्वो, अप्पा हु खलु दुद्दमो ॥ अप्पा दंतो सुही होइ, अस्सिं लोए परत्थ य ॥ १५ ॥

व्याख्या–'अप्पा चेवत्ति' आत्मैव दमितव्यो मनोज्ञामनोज्ञविषयेषु रागद्वेषत्यागेन उपशमं नेतव्यः, कुतश्चैव-मुपदिश्यते ? इत्याह 'अप्पा हुत्ति' आत्मैव खलु यस्माद्दुर्दमो दुर्जयः, अत एवात्मदमनमेवोपदिश्यते इति भावः । किं पुनरात्मदमने फलमित्याह—आत्मा दान्तः सुखी भवति अस्मिन् लोके इह भवे, परत्र च परभवे, यतो दान्तात्मानो महर्षय इहैव देवैरपि पूज्यन्ते, परत्र मोक्षं च साधयन्ति, अदान्तात्मानस्तु चौरपारदारिकादय इहैव विनश्यन्ति, परत्र च दुर्गतिपातादि प्राप्नुवन्ति । तत्र चायमुदाहरणसंप्रदायः, तथाहि—

सन्निवेशे क्वाप्यभूतां, चौरेशौ द्वौ सहोदरौ ॥ आजग्मुर्मुनयस्तत्रा–ऽन्यदा सार्थेन संयुताः ॥ १ ॥ धारासारैः सु-धासारै–र्भुवमुच्छ्वासयन् भृशम् ॥ तदैव विश्वजीवातुः, प्रादुरासीत् घनागमः ॥ २ ॥ युक्तं वर्षासु नास्माकं, विहर्तु-मिति साधवः ॥ वसतिं याचितुं चौर–पत्योः पार्श्वे तयोर्ययुः ॥ ३ ॥ ततस्तद्दर्शनोद्भूत–प्रमोदौ तौ प्रणम्य तान् ॥ भव्यौ पप्रच्छतुः पूज्याः ! कं हेतुं यूयमागताः ? ॥ ४ ॥ अभ्यधुः साधवोऽस्माकं, विहारो जलदागमे ॥ न कल्पते ततो दत्त, वर्षायोग्यमुपाश्रयम् ॥ ५ ॥ दत्वाथ वसतिं तेषां, तौ व्यजिज्ञपतामिति ॥ ग्राह्यमस्मद्गृहेभ्यैव, युष्माभिरश-नादिकम् ॥ ६ ॥ तेऽभ्यधुर्धाम्नि नैकस्मिन्, भिक्षामादद्महे वयम् ॥ किन्तु माधुकरीं वृत्तिं, कुर्मः सर्वेषु वेश्मसु ॥७॥ युवाभ्यां तु महाभागौ, वसतेरेव दानतः ॥ उपार्जितं महत्पुण्यं, सकलक्लेशनाशकम् ॥ ८ ॥ यतः–"उपाश्रयो येन दत्तो, मुनीनां गुणशालिनाम् ॥ तेन ज्ञानाद्युपष्टंभ–दायिना प्रददे न किम् ? ॥ ९ ॥ सुरर्द्धिः सुकुलोत्पत्ति– र्भोग-लब्धिश्च जायते ॥ साधूनां स्थानदानेन, क्रमान्मोक्षश्च लभ्यते ॥ १० ॥ " इत्याकर्ण्य विशेषात्तौ, संतुष्टौ भेजतु-र्यतीन् ॥ तस्थुस्तत्र चतुर्मासीं, मुनयोऽपि यथासुखम् ॥ ११ ॥ चतुर्मास्यां च पूर्णायां, निर्ग्रन्था विजिहीर्षवः, इत्यभा-षन्त तावन्य–व्रतमादातुमक्षमौ ॥ १२ ॥ सन्तौ भवन्तौ कुरुतां, रात्रौ भोजनवर्जनम् ॥ अत्रामुत्र च यद्दोषा, भूयां सः स्युर्निशाशने ॥१३॥ यदाहुः– "मेधां पिपीलिका हंति, यूका कुर्याज्जलोदरम् ॥ कुरुते मक्षिका वांतिं, कुष्टरोगं च कोलिकः ॥ १४ ॥ कंटको दारुखंडं च, वितनोति गलव्यथाम् ॥ व्यंजनांतर्निपतित–स्तालु विध्यति वृश्चिकः ॥१५॥ विलग्नस्तु गले वालः, स्वरभंगाय जायते ॥ इत्यादयो दृष्टदोषाः, सर्वेषां निशि भोजने ॥ १६ ॥ उलूककाकमार्जार-गृध्रशंवरशूकराः ॥ अहिवृश्चिकगोधाश्च, जायंते रात्रिभोजनात् ॥ १७ ॥ वाचंयमानां तौ वाच–मित्याकर्ण्य विते-नतुः ॥ निशाहारपरिहारं, विजह्रुः साधवोऽप्यथ ॥१८॥ ततस्तौ तद्व्रतं सम्यक्, पालयामासतुर्मुदा ॥ जग्मतुश्चान्यदा चौर्य–कृते चौरव्रजैर्वृतौ ॥ १९ ॥ बहु गोमाहिषं लात्वा, वलितास्तेऽथ दस्यवः ॥ अध्वन्येवाशनायंतो, महिषं जघ्नुरेककम् ॥ २० ॥ तन्मांसमेके संस्कर्तु–मारभंताऽपरे पुनः । ग्राममेकं समीपस्थं, मद्यार्थं जग्मुरुन्मदाः ॥ २१ ॥ अथ ते पलपक्तारो, लोभेनेति व्यचिंतयन् ॥ हालाहेतोर्गतान् हन्तु–मुपायं कुर्महे वयम् ॥ २२ ॥ भागेऽस्माकं यथाऽऽयाति, प्रभूतं धेनुमाहिषम् ॥ ते विमृश्येति तद्भोज्ये, पिशिते चिक्षिपुर्विषम् ॥ २३ ॥ दैवात्तथैव सञ्चिन्त्य, ग्राममध्यगता अपि ॥ क्षिप्त्वा हालाहलं हाला–दले तत्पार्श्वमाययुः ॥२४॥ तदा च वसुपूर्णोऽपि, प्राप्तपूर्वोदयोऽपि हि ॥ वारुणीसेवया सद्यो, ययावस्तं गभस्तिमान् ॥ २५ ॥ ततोऽन्यैः साग्रहं प्रोक्ता–वपि तौ सोदरौ तदा ॥ व्रतभंगभयान्नैवा–भुञ्जातां सत्वशालिनौ ॥ २६ ॥ अन्ये त्वन्योन्यदत्तेन, मद्येन पिशितेन च ॥ विषयुक्तेन भुक्तेन, मृत्वा दुर्गतिमीयरुः ॥ २७ ॥ ततस्तान्निधनं प्राप्ता–न्निरिक्ष्य निखिलानपि ॥ इत्यचिंतयतां चित्ते, तावुभौ स्वीकृत-व्रतौ ॥ २८ ॥ नूनं हालाहलालीढे, मद्यमांसे बभूवतुः ॥ एतेषामन्यथा कस्मा–दकस्मान्मरणं भवेत् ॥ २९ ॥ आवयोर्नाभविष्यच्चे–न्निशाभुक्तिव्रतं हितम् ॥ आवामप्येतदाहारा–त्तत्प्राप्स्यावो दशामिमाम् ॥ ३० ॥ महोपका-

रिणो नूनं, ज्ञानिनस्ते महर्षयः ॥ प्रत्याख्यानमिदं दत्त—मावयोर्यैः शुभावहम् ॥ ३१ ॥ ध्यायंताविति धेन्वादि, तावादाय गृहं गतौ ॥ अभूतां सुखिनौ धर्म—कर्मणाऽत्र परत्र च ॥ ३२ ॥ इत्थं रसज्ञादमनादपीमा—वविन्दतां दस्युपती सुखानि ॥ सर्वात्मना स्वं दमयंस्तु सौख्यं, यदश्नुते किं किल तत्र वाच्यम् ॥ ३३ ॥ इत्यात्मदमने भ्रातृद्वयकथा, तदेवमात्मा दांतः सुखी भवतीति सूत्रार्थः ॥ १५ ॥ किं पुनर्विचिंत्यात्मानं दमयेदित्याह—

मूलम्—वरं मे अप्पा दंतो, संजमेण तवेण य । माहं परेहिं दम्मंतो, बंधणेहिं वहेहि अ ॥ १६ ॥

व्याख्या—वरं प्रधानं, मे मया आत्मा जीवस्तदाधारभूतः कायो वा, दांतो दमं आहितोऽसंयमचेष्टातो व्यावर्तितः, केनेत्याह—संयमेन पंचाश्रवविरमणादिना, तपसा चानशनादिना, मा अहं परैरन्यैः 'दम्मंतोत्ति' आर्षत्वाद्दमितः खेदितः, कैरित्याह—बंधनैश्चर्माादिरचितैर्मयूरबंधाद्यैः, वधैश्च लकुटादिताडनैः ॥ उदाहरणं चात्र सेचनकहस्ती—

तथाहाटव्यामेकस्यां, हस्तियूथमभून्महत् ॥ तत्स्वामी च बभूवैकः, सिंधुरो भूधरोपमः ॥ १ ॥ प्रवृद्धः कलभः कोऽपि, माहन्मामिति चिंतयन् ॥ बालद्विपान् जातमात्रा—नवधीत्स तु दुष्टधीः ॥ २ ॥ ततः सगर्भा करिणी, तस्य काचिदचिंतयत् ॥ भविता कलभश्चेन्मे, तं हनिष्यति यूथपः ॥ ३ ॥ तस्मात्तद्रक्षणोपायं, करोमीति विमृश्य सा ॥ खञ्जायमाना दंभेन, शनैर्यूथादपासरत् ॥ ४ ॥ प्रतीक्षमाणं यूथेशं, घटीप्रहर वासरैः ॥ द्वित्रैर्मिलंती सा तस्य, विस्रंभं चोदपादयत् ॥ ५ ॥ प्रसूतिकाले त्वासन्ने—ऽपश्यत्सा कञ्चिदाश्रमम् ॥ सुषुवे च तमाश्रित्य, विश्वस्ता कलभं शुभम् ॥ ६ ॥ यूथे गत्वाऽथ यूथेशं, वंचयित्वा च सा मुहुः । तमाश्रमं समागत्य, स्वनंदनमदीधयत् ॥ ७ ॥ मुग्धत्वमधुराकारं, कलभं मुनयोऽपि तम् ॥ सलीलं लालयामासुः, स्वपुत्रमिव वत्सलाः ॥ ८ ॥ शुण्डामापूर्य सलिलैः, सकलः कलभोऽपि सः ॥ सहर्षिपुत्रकैः सेकं, चकाराश्रमभूरुहान् ॥ ९ ॥ तं सेचनकनामानं, तापसाः प्रोचिरे ततः ॥ क्रमाच्च यौवनं प्राप्तः, सोऽभूत्प्राज्यपराक्रमः ॥ १० ॥ अटन्नटव्यां तद्यूथं, द्विपः सोऽपश्यदन्यदा ॥ अरीरमच्च संजाता—नुरागास्तत्करेणुकाः ॥ ११ ॥ तं दृष्ट्वाऽमर्षणो यूथ—नाथस्तं प्रत्यधावत ॥ वृद्धं निहत्य तं यूथ—स्वामी सेचनकोऽभवत् ॥ १२ ॥ अन्यापि काचित्करिणी, कलभं रक्षितुं निजम् ॥ उपायं मम मातेव, माकार्षीदितिचिंतयन् ॥ १३ ॥ कृतघ्नः स गजोऽभांक्षी—न्मंक्षु तं तापसाश्रमम् ॥ भजन्ति स्वाश्रयं दन्ता—बलाः प्रायः खला इव ॥ १४ ॥ [ युग्मम् ] अस्माभिः पोषितेनाऽपि, द्विपेनाऽनेन हा ! वयम् ॥ उपद्रुतास्तत्किमपि, दर्शयामोऽस्य तत्फलम् ॥ १५ ॥ ध्यात्वेति तापसाः कोपा—द्गत्वा श्रेणिकभूभृते ॥ पुष्पादिप्राभृतभृतो, विज्ञा व्यज्ञपयन्निदम् ॥ १६ ॥ [ युग्गम् ] प्रभो ! सेचनकाह्वानः, सर्वलक्षणलक्षितः ॥ भद्रजातिर्वनेऽस्माकं, विद्यते गन्धसिन्धुरः ॥ १७ ॥ पृथिव्यां रत्नभूतोऽयं, तवैवाऽर्हति भूपते ! ॥ श्रुत्वेति सैन्ययुक्त राजा, तं ग्रहितुमगाद्वनम् ॥ १८ ॥ उपायैर्भूरिभिर्भूप—स्तं गृहीत्वाथ दंतिनम् ॥ आनीय स्वपुरेऽबध्ना—दालाने शृंखलागणैः ॥ १९ ॥ ततः स्वीयवशायूथ—वियोगातुरचेतसम् ॥ अरुन्तुदैर्वचोभिस्तं, निनिंदुरिति तापसाः ॥ २० ॥ रे ! कृतघ्न ! क्व ? तद्वीर्यं, शौण्डीर्यं चाधुना तव ॥ फलमस्मदवज्ञाया, इदमाजन्म भुज्यताम् ! ॥ २१ ॥ निगम्येति क्षतक्षार—क्षेपकल्पां स तद्गिरम् ॥ रोषादालानमुन्मूल्य, दधावे प्रति तापसान् ॥ २२ ॥ हतप्रतिहतान् कुर्व—स्तांश्चारण्यं गतो गजः ॥ तान् बभंजाश्रमान् भूयः, प्रभंजन इव द्रुमान् ॥ २३ ॥ पुनस्तद्ग्रहणायाऽगा—त्तद्वनं श्रेणिको नृपः ॥ तदेत्यऽवधिनाऽज्ञासी—द्गजाधिष्टायिका सुरी ॥ २४ ॥ सिंधुरोऽसावस्य वश्यो—ऽवश्यं भावी महीपतेः ॥ ज्ञात्वेति साऽब्रवीद्व्यालं, वाक्यैः पीयूष पेशलैः ॥ २५ ॥ भूयांसो भाविनो वत्स !, स्वयं दान्तस्य ते गुणाः ॥ कृतबन्धवधैरन्यै—रन्यथा त्वं दमिष्यसे ॥ २६ ॥ तच्छ्रुत्वा स स्वयं गत्वा, रात्रावालानमाश्रयत् ॥ तद् ज्ञात्वा नृपतिस्तुष्ट—स्तस्यार्चां बहुधा व्यधात् ॥ २७ ॥ स्वयं दांत इति प्रेम, तत्राधाद्भूधवो भृशम् ॥ न्यधाच्च पट्टहस्तिनं ॥ व्यधाद्वृत्तिं च भूयसीम् ॥ २८ ॥ दांतः स्वयं प्राप यथा रमामसौ, तथा शिवार्थी मनुजोऽप्यवाप्नुयात् ॥ स्वयंदमी मंक्षु सकामनिर्जरां, परस्तु नो तामिति दम्यतां स्वयम् ॥ २९ ॥ इति सेचनककरिकथा ॥ तदेवं स्वयमेव स्वात्मा दमनीय इति सूत्रार्थः ॥ १६ ॥ अथ विनयांतरमाह—

मूलम्—पडिणीअं च बुद्धाणं, वाया अदुव कम्मुणा । आवी वा जइवा रहस्से, णेव कुज्जा कयाइवि ॥१७॥

व्याख्या—प्रत्यनीकं प्रतिकूलं चेष्टितमिति शेषः, चः पादपूरणे, बुद्धानामाचार्यादीनां वाचा 'किं त्वमपि किंचिज्जानीषे ?' इत्यादिरूपया 'अदुवत्ति' अथवा कर्मणा संस्तारकातिक्रमणपाणिपादस्पर्शनादिना, आविर्वा जनसमक्षं, यदिवा रहसि एकांते 'णेवत्ति' नैव अत्र एवकार "शत्रोरपि गुणा ग्राह्या, दोषा वाच्या गुरोरपि" इति कुमता-

पोहार्थः । कुर्याद्विदध्यात्, कदाचिदपि परुषभाषणादिसमयेऽपीति सूत्रार्थः ॥ १७ ॥ अथ शुश्रूषणा विनयमाह—

मूलम्—ण पक्खओ ण पुरओ, णेव किच्चाण पिट्ठओ । ण जुंजे ऊरुणा ऊरुं, सयणे णो पडिस्सुणे॥१८॥

व्याख्या—न पक्षतो दक्षिणादिपार्श्वमाश्रित्योपविशेदिति सर्वत्र गम्यं, तथोपवेशने हि तत्पंक्तिप्रवेशादात्मनोऽपि तत्साम्यदर्शनरूपोऽविनयः स्यात्, पाठनादि समये च गुरोरपि तन्मुखप्रेक्षणे वक्रायलोकनेन स्कन्धकन्धरादिबाधा भवेदिति । तथा न पुरतोऽग्रतः, तत्र हि वन्दारुलोकस्य गुरुमुखादर्शनादिना अप्रीतिः स्यादिति । तथा नैव कृत्यानां कृतिकर्मार्हाणां गुरूणामित्यर्थः, पृष्ठतः पृष्ठदेशमाश्रित्य, तत्र द्वयोरपि मुखाप्रेक्षणेन न तादृशो रसः स्यादिति, तथा न युंज्यान्न संघट्टयेत् अतिसंवेशदेशोपवेशनादिना ऊरुणा आत्मीयेन ऊरुं गुरुसंबंधिनं, तथाकरणेऽत्यन्ताविनयप्रसंगात्, उपलक्षणं चैतत् शेषांगस्पर्शत्यागस्य । तथा शयने शय्यायां शयित उपविष्टो वा न प्रतिश्रृणुयात् न सीकुर्याद्गुरुवाक्यमिति शेषः, अयं भावः—शय्यास्थितः शिष्यो गुरुणा कृत्यं प्रति प्रोक्तो न तत्र स्थित एव करोम्येवेदमित्यादि वदेत्, किन्तु गुरुवचःश्रवणानन्तरं तत्कालमेव कृतांजलिर्गुरुपार्श्वमागत्य पादपतनपूर्वमनुगृहीतोऽहमिति मन्यमानो भगवन्निच्छाम्यऽनुशिष्टिमिति वदेदिति सूत्रार्थः ॥ १८ ॥ तथा—

मूलम्—णेव पल्हत्थिअं कुज्जा, पक्खपिंडं व संजए । पाए पसारए वावि, ण चिट्ठे गुरुणंतिए ॥ १९ ॥

व्याख्या—नैव पर्यस्तिकां जानुजंघोपरि वस्त्रवेष्टनरूपां कुर्यात्, पक्षपिण्डं वा बाहुद्वयेन कायपिण्डनात्मकं, संयतः साधुः, तथा पादौ प्रसारयेद्वापि नैवेतीहापि योज्यम्, अत्र वा शब्दः समुच्चये, अपि शब्दस्तु इतस्ततोऽपि नैव निक्षिपेदिति दर्शनार्थः । अन्यच—न तिष्ठेन्नासीत गुरूणामंतिके अत्यन्तसन्निधौ किन्तूचितप्रदेश एव, अन्यथा अविनयदोषसंभवात्, अनेन चावष्टंभादिकमपि तत्र नैव कुर्यादिति सूचितमिति सूत्रार्थः ॥ १९ ॥ पुनः प्रतिश्रवणविधिमाह—

मूलम्—आयरिएहिं वाहित्तो, तुसणीओ ण कयाइवि । पसायपेही णिआगट्ठी उवचिट्ठे गुरुं सया ॥२०॥

व्याख्या—आचार्यैर्गुरुभिः 'वाहित्तोत्ति' व्याहृतः शब्दितः तूष्णीकस्तूष्णींशीलो न कदाचिदपि ग्लानाद्यवस्थायामपि भवेत्, किन्तु प्रसादप्रेक्षी प्रसादोऽसौ मे यदन्यसद्भावेऽपि गुरवो मामादिशंतीति प्रेक्षितुं विचारयितुं शीलमस्येति प्रसादप्रेक्षी, नियागार्थी मोक्षार्थी उपतिष्ठेत्, मस्तकेन वन्दे इत्यादि वदन् सविनयमुपसर्प्येत् गुरुं धर्माचार्यादिकं सदेति सूत्रार्थः ॥ २० ॥ तथा—

मूलम्—आलवंते लवंते वा, ण णिसीज्ज कयाइवि । चइउण आसणं धीरो, जओ जत्तं पडिस्सुणे ॥२१॥

व्याख्या—आलपति सकृद्वदति, लपति वारंवारं, गुरौ इति गम्यते, न निषीदेत्, न निषण्णो भवेत्, कदाचिदपि, व्याख्यानादिकार्येण व्याकुलतायामपि, किन्तु त्यक्त्वा अपहाय आसनं पादपुंछनादि, धीरो बुद्धिमान्, यतो यत्नवान्, 'जत्तंति' प्राकृतत्वात् जकारस्य बिन्दुलोपे तकारस्य च द्वित्वे यद्गुरव आदिशंति तत्प्रतिश्रृणुयादवश्यविधेयतयाऽभ्युपगच्छेदिति सूत्रार्थः ॥ २१ ॥ अथ पृच्छाविनयमाह—

मूलम्—आसणगओ ण पुच्छिज्जा, णेव सिज्जागओ कया । आगम्मुक्कुडुओ संतो,पुच्छिज्जा पंजलीउडो॥२२॥

व्याख्या—आसनगत आसनासीनो न पृच्छेत्सूत्रादिकमिति शेषः, नैव शय्यागतः संस्तारकस्थितस्तथाविधावस्थां विनेति गम्यते,कदाचिद्बहुश्रुतत्वेऽपि, अयंभावः—बहुश्रुतेनापि संशये सति प्रष्टव्यं, पृच्छता च गुरोरवज्ञा न कार्या, सदापि गुरुविनयस्यानतिक्रमणीयत्वादिति, किं तर्हि कुर्यादित्याह—'आगम्मेत्यादि' आगम्य गुरुपार्श्वमेत्य उत्कुटुको मुक्तासनः कारणे पादपुंछनादिगतो वा सन् पृच्छेत् सूत्रादिकमिति शेषः, प्रांजलिपुटः कृतांजलिरिति सूत्रार्थः ॥ २२ ॥ ईदृशस्य शिष्यस्य गुरुणा यत्कार्यं तदाह—

मूलम्—एवं विणयजुत्तस्स, सुत्तं अत्थं च तदुभयं । पुच्छमाणस्स सीसस्स, वागरेज्ज जहासुअं ॥ २३ ॥

व्याख्या—एवं उक्तनीत्या विनययुक्तस्य सूत्रं कालिकोत्कालिकादि, अर्थं च तस्यैवाभिधेयं, तदुभयं सूत्रार्थोभयं, पृच्छतो ज्ञातुमिच्छतः शिष्यस्य स्वयं दीक्षितस्योपसंपन्नस्य वा व्यागृणीयात्कथयेत्, यथा येन प्रकारेण श्रुतमाकर्णितं गुरुभ्य इति शेषः, न तु स्वबुद्धिकल्पितमिति सूत्रार्थः॥ २३ ॥ पुनर्विनेयस्य वागूविनयमाह—

मूलम्—मुसं परिहरे भिक्खू, ण य ओहारिणिं वए । भासादोसं परिहरे, मायं च वज्जए सया ॥ २४ ॥

व्याख्या—मृषां असत्यं भूतनिह्नवादिकं परिहरेत्, "धर्महानिरविश्वासो, देहार्थव्यसनं तथा ॥ असत्यभाषिणां

निंदा, दुर्गतिश्चोपजायते ॥ १ ॥" इति विमृश्य सर्वप्रकारमपि त्यजेत् भिक्षुर्मुनिः, न च नैवावधारिणीं प्रस्तावाद्वाणीं गमिष्याम एवेत्यादिनिश्चयात्मिकां वदेत् भाषेत, किं बहुना? भाषादोषं सावद्यानुमोदनाद्यं जकारमकारादिकं च परिहरेत्, मायां, च शब्दात् क्रोधादींश्च असत्यहेतून् वर्जयेत्सदा सर्वकालमिति सूत्रार्थः ॥ २४ ॥ किञ्च—

मूलम्—ण लविज्ज पुट्ठो सावज्जं, ण णिरट्ठं ण मम्मयं। अप्पणट्ठा परट्ठा वा, उभयस्संतरेण वा ॥ २५ ॥

व्याख्या—न लपेन्नवदेत् पृष्टः केनापि सावद्यं सपापं वचनमिति सर्वत्र ज्ञेयम्, न निरर्थं निष्प्रयोजनं अभिधेयशून्यं वा, यथा—"एष वन्ध्यासुतो याति, खपुष्पकृतशेखरः। मृगतृष्णाम्भसि स्नातः, शशशृंगधनुर्द्धरः ॥ १ ॥" इति। तथा न नैव मर्मगं मर्मवाचकं 'त्वं काणः' इत्यादिकं, अस्यातिसंक्लेशोत्पादकत्वादिति, आत्मार्थं स्वार्थं, परार्थं वा अन्यार्थं, उभयस्यात्मनः परस्य च प्रयोजनादितिशेषः, तथा अन्तरेण वा विना वा प्रयोजनमिति सूत्रार्थः ॥ २५ ॥ इत्थं स्वगतदोषापोहमुक्त्वा उपाधिकृतदोषत्यागमाह—

मूलम्—समरेसु अगारेसु, संधीसु अ महापहे। एगो एगित्थिए सद्धिं, णेव चिट्ठे ण संलवे ॥ २६ ॥

व्याख्या—समरेषु लोहकारशालासु, उपलक्षणं चैतदशेषनीचास्पदानां, अगारेषु गृहेषु, संधिषु गृहद्वयान्तरालेषु, महापथे राजपथादौ, एकोऽसहाय एकस्त्रिया सार्द्धं सह नैव तिष्ठेन्नैवोर्द्धस्थानस्थो भवेत्, न संलपेन्न तथैव सह संभाषं कुर्यात्, अत्यंतदुष्टताख्यापकं चात्रैकग्रहणं, अन्यथा ह्येवंविधास्पदेषु ससहायस्यापि स्त्रिया सहावस्थानं संभाषणं च दोषायैव, प्रवचनमालिन्यादिदोषसंभवात्, उक्तं हि "मात्रा स्वस्रा दुहित्रा वा, न विविक्तासनो भवेत्। बलवानिंद्रियग्रामः, पंडितोऽप्यत्र मुह्यति ॥ १ ॥" इति सूत्रार्थः ॥२६॥ कदाचित् स्खलिते च गुरुणा शिक्षितो यत्कुर्यात्तदाह—

मूलम्—जं मे बुद्धाणुसासंति, सीएण फरुसेण वा। मम लाभोत्ति पेहाए, पयओ तं पडिस्सुणे ॥ २७ ॥

व्याख्या—यन्मे मां बुद्धा गुरवः अनुशासति शिक्षयन्ति, शीतेन उपचारात् शीतलेन आह्लादकेनेत्यर्थः, परुषेण वा कर्कशेन वचसेति शेषः, मम लाभोऽप्राप्तार्थप्राप्तिरूपोऽयं, यन्मामनाचारकारिणममी सन्मार्गे स्थापयंति, इति प्रेक्षया एवंविधबुद्ध्या प्रयतः प्रयत्नवान् तदनुशासनं प्रतिशृणुयात्, विधेयतयाऽङ्गीकुर्यादिति सूत्रार्थः ॥ २७ ॥ ननु अत्र परत्र च परमोपकारि गुरुवचनमपि किं कस्याप्यनिष्टं स्यात्? येनैवमुच्यत इत्याह—

मूलम्—अणुसासणमोवायं, दुक्कडस्स च चोअणं। हिअं तं मण्णए पण्णो, वेसं होइ असाहुणो ॥२८॥

व्याख्या—अनुशासनं शिक्षणं 'ओवायंति' उपाये मृदुपरुषभाषणादौ भवमौपायं, तथा दुष्कृतस्य च कुत्सिताचरितस्य च चोदनं प्रेरणं, हा! किमिदमाचरितमित्यादिरूपं, गुरुकृतमिति दृश्यं, हितमिहपरलोकोपकारि तदनुशासनादि मन्यते प्राज्ञः, द्वेष्यं द्वेषोत्पादकं तद्भवत्यसाधोरसाधुभावस्य, तदेवमसाधोर्गुरुवाक्यमप्यनिष्टं स्यादित्युक्तमिति सूत्रार्थः ॥ २८ ॥ अमुमेवार्थं प्रकटयन्नाह—

मूलम्—हिअं विगयभया बुद्धा, फरुसंपि अणुसासणं। वेसं तं होइ मूढाणं, खंतिसोहिकरं पयं ॥ २९ ॥

व्याख्या—हितं पथ्यं विगतभया इहलोकपरलोकादानाकस्मादाजीविकामरणाश्लोकभयरहिता बुद्धा अवगततत्वाः मन्यंते इति शेषः, परुषमप्यनुशासनं गुरुकृतमिति ज्ञेयं। 'वेसंति' द्वेष्यं तदनुशासनं भवति मूढानां हिताहितविवेकविकलानां। क्षांतिः क्षमा, शुद्धिराशयशुद्धता, तत्करं उपलक्षणत्वान्मार्दवार्जवादिकरमपि, क्षांत्यादिहेतुत्वाद्गुर्वनुशासनस्य, पदं ज्ञानादिगुणानां स्थानमिति सूत्रार्थः ॥ २९ ॥ पुनर्विनयमेवाह—

मूलम्—आसणे उवचिठिज्जा, अणुच्चे अकुए थिरे। अप्पुट्ठाई णिरुट्ठाइ, णिसीइज्जप्पकुकुए ॥ ३० ॥

व्याख्या—आसने पीठादौ वर्षासु, ऋतुबद्धे तु पादपुंछने उपतिष्ठेत्, उपविशेत्, अनुच्चे द्रव्यतो नीचे भावतस्तु अल्पमूल्यादौ गुर्वासनादिति गम्यते, अकुचे अस्पंदमाने, नतु तिनिशफलकवत्किंचिच्चलति, तस्य शृङ्गाराङ्गत्वात्। स्थिरे समपादस्थिततया निश्चले, अन्यथा सत्वविराधनासंभवात्। ईदृशेऽप्यासने 'अप्पुठाईत्ति' अल्पोत्थायी न पुनः पुनरुत्थानशीलः, निरुत्थायी निमित्तं विना नोत्थानशीलः, निषीदेत् आसीत 'अप्पकुक्कुएत्ति' अल्पस्पंदनः करादिभिरप्यल्पमेव चलन्, यद्वा अल्पं कौकुच्यं करचरणभ्रूभ्रमणाद्यसच्चेष्टारूपं यस्य सोऽल्पकौकुच्य इति सूत्रार्थः ॥३०॥ संप्रत्येषणासमितिविषयं विनयमाह—

मूलम्—कालेण णिक्खमे भिक्खू, कालेण य पडिक्कमे। अकालं च विवज्जित्ता, काले कालं समायरे॥३१॥

व्याख्या—काले प्रस्तावे सप्तम्यर्थे तृतीया, निष्क्रामेद्गच्छेदाहाराद्यर्थं भिक्षुः, अकालनिर्गमे आत्मक्लामनादिदोषसं-

भवात् । तथा काले च प्रतिक्रामेत् प्रतिनिवर्त्तेत भिक्षाटनादिति शेषः । अयं भावः—अलाभेऽल्पलाभे वा अतिलार्थी न पर्यटन्नेव तिष्ठेत्, किं तर्हि कुर्यादित्याह—अकालं च तत्तत्क्रियाया असमयं विवर्ज्य विहाय काले प्रस्तावे कालं तत्तत्कालोचितं प्रत्युपेक्षणाद्यनुष्ठानं समाचरेत् कुर्यात् । यदुक्तम् "कालंमि कीरमाणं, किसिकम्मं बहुफलं जहा होइ ॥ इअ सव्वच्चिअ किरिआ, णिअणिअकालंमि विण्णेआ ॥ १ ॥" इति सूत्रार्थः ॥ ३१ ॥ भिक्षार्थं निर्गतश्च यत्कुर्यात्तदाह—

मूलम्—परिवाडीए ण चिट्ठेज्जा, भिक्खू दत्तेसणं चरे । पडिरूवेण एसित्ता, मिअं कालेण भक्खए ॥३२॥

व्याख्या—परिपाट्यां पंक्त्यां भुंजानमानवसंबंधिन्यां न तिष्ठेद्भिक्षार्थं, अप्रीत्यरष्टकल्याणतादिदोषसंभवात्, यद्वा परिपाट्यां दायकसौधसंबंधिन्यां पंक्तिस्थगृहभिक्षाग्रहणाय नैकत्रावतिष्ठेत्, तत्र दायकदोषापरिज्ञानप्रसंगात् । तथा भिक्षुर्दत्तं दानं तस्मिन् गृहिणा दीयमाने एषणा तद्गतदोषान्वेषणात्मिका दत्तैषणा तां चरेदासेवेत, अनेन ग्रहणैषणा उक्ता, किं कृत्वा दत्तैषणां चरेदित्याह—'पडिरूवेण' इत्यादि—प्रतिरूपेण चिरंतनमुनीनां प्रतिबिंबेन पतद्ग्रहादिधारणात्मकेन सकलान्यदर्शनिविलक्षणेन, न तु 'भिक्षापि नाडंबरं विना प्राप्यते' इति ध्यात्वा कृताडंबरेण, एषयित्वा गवेषयित्वा अनेन च गवेषणोक्ता, ग्रासैषणामाह—मितं परिमितं, अमितभोजने हि स्वाध्यायविघातादिबहुदोषसंभवात्, कालेन "णमोक्कारेण पारित्ता" इत्याद्यागमोक्तप्रस्तावेन अद्रुताविलंबितरूपेण वा भक्षयेद्भुंजीतेति सूत्रार्थः ॥ ३२ ॥ भिक्षाचर्यां च कुर्वता पूर्वागतान्यभिक्षुकसंभवे यत्कार्यं तदाह—

मूलम्—णाइदूरमणासण्णे, णण्णेसिं चक्खुफासओ । एगो चिट्ठिज्ज भत्तट्ठा, लंघिआ तं णाइक्कमे ॥३३॥

व्याख्या—'णाइदूरंति' विभक्तिव्यत्ययान्नातिदूरे विप्रकर्षवति देशे, तत्र भिक्षुनिर्गमाज्ञानात् एषणाशुद्ध्यसंभवाच्च, तथा नासन्ने प्रस्तावान्नातिनिकटे, तत्र पूर्वागतान्यभिक्षूणामप्रीतिसंभवात्, नान्येषां भिक्षुकापेक्षया अपरेषां गृहस्थानां 'चक्खुफासओत्ति' अत्र सप्तम्यर्थे तसू, ततश्चक्षुःस्पर्शे दृष्टिगोचरे तिष्ठेदिति सर्वत्र योज्यं, किंतु असौभिक्षुर्भिक्षुनिष्क्रमणं प्रतीक्षते इति यथा गृहस्था न विदन्ति तथा विविक्तप्रदेशे तिष्ठेदिति भावः । एकः पूर्वप्रविष्टभिक्षुकोपरि द्वेषरहितः, भक्तार्थं भोजननिमित्तं 'लंघिअत्ति' उलंघ्य तमिति भिक्षुकं नातिक्रामेत् न गृहमध्ये गच्छेत्, तदप्रीत्यपवादादिदोषसंभवात् । इह च मितं कालेन भक्षयेदिति भोजनविधिमभिधाय यत् पुनर्भिक्षाटनकथनं तद्ग्लानादिनिमित्तं स्वयं वा क्षुधामसहिष्णोः पुनर्भ्रमणमपि न दोषायेति ज्ञापनार्थमिति सूत्रार्थः ॥३३॥ पुनरुक्तमेव विधिमाह—

मूलम्—णाइ उच्चे व णीए वा, णासण्णे णाइ दूरओ । फासुअं परकडं पिंडं, पडिगाहिज्ज संजए ॥३४॥

व्याख्या—नात्युच्चे गृहोपरिभूम्यादौ नीचे वा भूमिगृहादौ स्थित इति शेषः, तत्रोत्क्षेपनिक्षेपनिरीक्षणासंभवात्, दायकापायसंभवाच्च । यद्वा नात्युच्चो द्रव्यत उच्चैःकृतकंधरो भावतश्चाहं लब्धिमानिति मदाध्मातः, नीचश्च द्रव्यतोऽत्यन्तावनतग्रीवः भावतस्तु न मयाद्य किमपि लब्धमिति दैन्यवान्, वा शब्द उभयत्रापि समुच्चये । तथा नासन्ने नातिदूरप्रदेशे स्थित इति शेषः, आसन्नातिदूरयोर्हि यथायोगं जुगुप्साशंकानेषणादयो दोषाः स्युः, तत्र स्थितश्च प्रासुकं सहजसंसक्तजजंतुरहितं परेण गृहिणा स्वार्थं कृतं परकृतं पिंडमाहारं प्रतिगृह्णीयात् स्वीकुर्यात्, संयतो यतिरितिसूत्रार्थः ॥ ३४ ॥ पुनर्ग्रासैषणाविधिमाह—

मूलम्—अप्पपाणप्पवीअंमि, पडिच्छण्णंमि संवुडे ॥ समयं संजए भुंजे, जयं अपरिसाडिअं ॥ ३५ ॥

व्याख्या—अत्राल्पशब्दोऽभाववाची, ततश्च अल्पप्राणे अपस्थितागन्तुकत्रसप्राणरहिते, तथाऽल्पबीजे शाल्यादिबीजवर्जिते, उपलक्षणत्वात्सकलस्थावरजंतुविकले च, प्रतिच्छन्ने उपरि आच्छादिते, अन्यथा संपातिमप्राणिसंपातसंभवात्, संवृते पार्श्वतः कटकुड्यादिना संकटद्वारे, अटव्यां तु कुडंगादौ स्थाने इति शेषः, अन्यथा दीनादिना याचने दानादानयोः पुण्यबंधप्रद्वेषादिदोषदर्शनात्, समकमन्यमुनिभिः सह, न तु रसलंपटतया समूहासहिष्णुतया वा एकाक्येव, गच्छस्थितसामाचारी चेयं, संयतः साधुर्भुंजीत, अश्नीयात्, 'जयंति' यतमानः, 'सुरसुर' 'चवचव' 'कसकसका' दिशब्दानकुर्वन्, 'अपरिसाडिअंति' परिशाटीरहितं यथा स्यात्तथेतिसूत्रार्थः ॥ ३५ ॥ यदुक्तं यतमान इति तत्र वाग्यतनामाह—

मूलम्—सुकडित्ति सुपक्कित्ति, सुच्छिण्णे सुहडे मडे ॥ सुणिट्ठिए सुलट्ठित्ति, सावज्जं वज्जए मुणी ॥ ३६ ॥

व्याख्या—सुकृतं सुष्ठु निर्वर्त्तितं अन्नादि, सुपक्वं घृतपूरादि, इतिः उभयत्र प्रदर्शने, सुच्छिन्नं शाकपत्रादि, सुहृतं

शाकपत्रादेस्तिक्तत्वादि, यद्वा सुहृतं सूपयवाग्वादिना पात्रकादेर्घृतादि,सुमृतं घृताद्येव सक्तुसूपादौ, सुनिष्ठितं सुष्ठु निष्ठां रसप्रकर्षात्मिकां गतं, सुलष्टं अतिशोभनमोदनादि, अखंडोज्ज्वलस्वादुसिक्थत्वादिना, इत्येवं प्रकारमन्यदपि सावद्यं वचो वर्जयेन्मुनिः । यद्वा सुष्ठु कृतं यदनेन रिपोः प्रतिकृतं, सुपक्कं मांसादि, सुच्छिन्नोऽयं न्यग्रोधादिः, सुहृतं कदर्यस्य धनं चौराद्यैः, सुमृतोऽयं प्रत्यनीकविप्रादिः, सुनिष्ठितोऽयं प्रासादकूपादिः, सुलष्टोऽयं करितुरगादिरिति सामान्येनैव सावद्यं वर्जयेन्मुनिरिति । अनवद्यं तु सुकृतमनेन धर्मध्यानादि, सुपक्कमस्य वचनविज्ञानादि, सुच्छिन्नं स्नेहनिगडादि, सुहृतोऽयं शिष्यः स्वजनेभ्य उत्प्राव्राजयितुकामेभ्यः, सुमृतमस्य पंडितमरणमत्तुः, सुनिष्ठितोऽयं साध्वाचारे, सुलष्टोऽयं दारको व्रतग्रहणस्येत्यादिरूपं वाक्यं वदेदपीतिसूत्रार्थः ॥ ३६ ॥ संप्रति विनीतेतरयोरुपदेशदाने गुरोर्यत्स्यात्तद्दर्शयन्नाह—

मूलम्—रमए पंडिए सासं, हयं भद्दं व वाहए ॥ बालं सम्मइ सासंतो, गलिअस्सं व वाहए ॥३७॥

व्याख्या—रमते अभिरतिमान् भवति, पंडितान् विनीतशिष्यान् शासदाज्ञापयन् प्रमादस्खलिते शिक्षयन् वा गुरुरिति शेषः, कमिव क इत्याह—हयमिवाश्वमिव भद्रं कल्याणावहं वाहकोऽश्वदमः । बालमज्ञं श्राम्यति खिद्यते शासत् , स हि सकृदुक्त एव कृत्यं न कुरुते, ततश्च पुनः पुनस्तमाज्ञापयन् गुरुः श्राम्यत्येवेति भावः, अत्रापि दृष्टांतमाह—गल्यश्वमिव वाहक इति सूत्रार्थः ॥ ३७ ॥ गुरुशिक्षणे बालस्याशयमाह—

मूलम्—खड्डुआ मे चवेडा मे, अक्कोसा य वहा य मे ॥ कल्लाणमणुसासंतो, पावदिट्टित्ति मण्णइ॥३८॥

व्याख्या—खड्डुकाः टक्करा मे मम, चपेटाः करतलाघाता मे, आक्रोशाश्च निष्ठुरभाषणानि मे, वधाश्च दंडादिघाता मे, अयंभावः— खड्डुकादय एव मे गुरुणा दीयन्ते नत्वन्यत्किमपि समीहितमस्तीत्यनुशास्यमानो बालश्चिंतयति, अन्यच्च—कल्याणमिहपरलोकहितं 'अणुसासंतोत्ति' विभक्तिव्यत्ययादनुशासतं शिक्षयन्तं गुरुं पापदृष्टिः पापबुद्धिरयमाचार्य इति स मन्यते, यथा पापोऽयं गुप्तिपाल इव निर्घृणो मां हन्तीति । अथवा वाग्भिरेव कल्याणं 'अणुसासंतोत्ति' गुरुणा अनुशास्यमानः शिक्ष्यमाणः पापदृष्टिः कुशिष्यः खड्डुकादिरूपा गुरुवाचो मन्यते इति सूत्रार्थः ॥ ३८ ॥ विनीताध्यवसायमाह—

मूलम्—पुत्तो मे भाय णाइत्ति, साहु कल्लाण मण्णइ ॥ पावदिट्ठी उ अप्पाणं, सासं दासित्ति मण्णइ ॥३९॥

व्याख्या—अत्र इवार्थस्य गम्यमानत्वाद्विभक्तिव्यत्ययाच्च पुत्रमिव भ्रातरमिव ज्ञातिं स्वजनमिव 'मे' इति मां अयमाचार्योऽनुशास्तीत्यध्याहारः, इत्येवं साधुः सुशिष्यः कल्याणकारि अनुशासनं मन्यते, यतः स शिष्य एवं विचारयति, यत्सौहार्दादेव मामनुशास्ति, दुर्विनीतत्वे हि मम किमस्य परिहीयते ? किन्तु ममैवार्थभ्रंश इति । बालः पुनः किं मन्यते ? इत्याह—पापदृष्टिस्तु कुशिष्यः पुनरात्मानं 'सासंति' शास्यमानं दासमिव मन्यते, यथैष दासमिव मामाज्ञापयतीति सूत्रार्थः ॥ ३९ ॥ विनयसर्वस्वमाह—

मूलम्—ण कोवए आयरियं, अप्पाणंपि ण कोवए ॥ बुद्धोवघाई ण सिआ, ण सिया तोत्तगवेसए॥४०॥

व्याख्या—न कोपयेन्न कोपवशगं कुर्यात्तादृशवचनादिभिराचार्यं, उपलक्षणत्वादन्यमपि विनयार्हं, आत्मानमपि गुरुभिः परुषभाषणादिनाऽनुशिष्यमाणं न कोपयेत् , कथंचित्सकोपतायामपि बुद्धोपघाती आचार्याद्युपघातकारी न स्यान्न भवेत् उदाहरणं चात्र, तथाहि—

गच्छे क्वापि पुराऽभूवन् , गणिसंपत्समन्विताः । युगप्रधानाः प्रक्षीण—पाप्मानः सूरिपुङ्गवाः ॥ १ ॥ चिकीर्षवोऽपि ते सम्यग् , विहारं मुनिनायकाः ॥ क्षीणजंघाबला नित्यं, पुरे क्वाप्यवतस्थिरे ॥ २ ॥ सत्स्वेतेषु मुनीन्द्रेषु, जिनशासनभानुषु ॥ तीर्थं सनाथमस्तीति, चिन्तयन्तो महाधियः ॥ ३ ॥ तत्रत्याः श्रावका धन्यं—मन्याः सम्यगुपाचरन् ॥ तद्योग्यैः स्निग्धमधुरै—राहारैरौषधैश्च तान् ॥ ४ ॥ [ युग्मम् ] गुरुकर्मभराक्रान्ता, निःस्नेहाः स्वगुरावपि ॥ अन्यदा तत्समीपस्थाः, कुशिष्या व्यमृशन्निति ॥ ५ ॥ अस्माभिः पालनीयोऽयं, कियच्चिरमजङ्गमः ॥ स्थेयं चात्र कियत्कालं, कारायामिव बन्दिभिः ॥ ६ ॥ ततः केनाप्युपायेन, कार्यतेऽनशनं गुरोः ॥ मृतेऽस्मिन् बंधनोन्मुक्ता, विहरामो यथा वयम् ॥ ७ ॥ विमृश्येति पुरः सूरे—रन्तप्रान्ताशनादिकम् ॥ उपनीय स्फुरत्खेदा, इवैवं ते जडा जगुः ॥ ८ ॥ ईदृशामपि युष्माकं, योग्यमन्नौषधादिकम् ॥ सम्पादयन्ति न श्राद्धा, धनिनोऽप्यविवेकिनः ॥ ९ ॥ निर्विण्णास्तदमी नूनं, श्रावका निलदानतः ॥ भवेयुर्नीरसा भूरि—पीडनान्नेक्षवोऽपि किम् ? ॥ १० ॥ अकिंचना वयं तत्किं, कुर्मो

दत्तोपजीविनः ॥ कुतः सम्पादयामश्च, युष्मद्योग्याशनादिकम् ॥ ११ ॥ गुरोः पुरो निगद्येति, ते भिक्षायै गताः पुनः ॥ सूरियोग्यं न जगृहु–र्गृहिदत्ताशनादिकम् ॥ १२ ॥ तद्ग्रहणार्थं चात्यर्थ– माग्रहे श्रावकैः कृते ॥ ते प्रोचुर्गुरवो नेदं, प्रणीतं भुञ्जतेऽधुना ॥ १३ ॥ किन्तु संलेखनाहेतो–रल्पाल्पं रसवर्जितम् ॥ गृह्णंति सूरयो भक्तं, स्वदेहेऽपि गतस्पृहाः ॥ १४ ॥ तच्छ्रुत्वा श्रावकाः खेद–भरभंगुरमानसाः ॥ गुरुपार्श्वमुपेत्यैवं, जगदुर्गद्गदाक्षरम् ॥ १५ ॥ जिनेषु विश्वसूर्येषु, चिरातीतेष्वपि प्रभो ! ॥ युष्माभिः शासनं जैनं, भाति वेश्मेव दीपकैः ॥ १६ ॥ अकालेऽपि तदारेभे, पूज्यैः संलेखना कुतः ? ॥ अप्रस्तावे हि नो कार्य–मारभन्ते भवादृशाः ॥ १७ ॥ निर्वेदहेतुरेतेषा–महं भाव्यपि स्वयम् ॥ न चिन्तनीयं स्वप्नेऽपि, भगवद्भिर्युगोत्तमैः ॥ १८ ॥ शिरःस्था अपि यद्यूयं, जगत्पूज्यपदाम्बुजाः ॥ नास्माकं न विनेयानां, चामीषां भारकारिणः ॥ १९ ॥ इदानीं तन्न कर्तव्यः, पूज्यैः संलेखनाग्रहः ॥ श्रुत्वेतीङ्गितवित्सूरि–रिति चेतस्यचिन्तयत् ॥ २० ॥ नूनमस्मद्विनेयानां, सर्वमेतद्विजृम्भितम् ॥ तदमीभिः कृतं प्राणै–रेषां निर्वेदहेतुभिः ॥ २१ ॥ धर्मार्थिना हि नान्येषां, पीडोत्पाद्या कदाचन ॥ ध्यात्वेति सूरयः प्रोचुः, समतामृतवार्द्धयः ॥ २२ ॥ वैयावृत्यं कारयद्भिः, सदास्माभिरजङ्गमैः ॥ यूयमेते विनेयाश्च, खेदनीयाः कियच्चिरम् ॥ २३ ॥ तदुत्तमार्थमेवाथ, प्रतिपद्यामहे वयम् ॥ इति सम्बोध्य तान् भक्तं, प्रत्याख्यान्तिस्म सूरयः ॥ २४ ॥ गुरुः प्रपाल्यानशनं जगाम, त्रिविष्टपं निष्ठितपापकर्मा ॥ शिष्यास्तु ते प्रापुरिहापवादं, परत्र दुःखं च गुरूपघातात् ॥ २५ ॥ इति गुरूपघातिकुशिष्यकथा ॥ तदेवं बुद्धोपघाती न स्यात् । तथा 'न सिआ तोत्तगवेसएत्ति' तुद्यते व्यथ्यतेऽनेनेति तोत्रं, द्रव्यतः प्राजनको भावतस्तु दोषोद्भावकं वचनमेव, तद्गवेषयति, किमहमेषां जात्यादिदूषणं वच्मीति अन्वेषयतीति तोत्रगवेषको न स्यादिति सूत्रार्थः ॥ ४० ॥ तदेवमाचार्यं न कोपयेदित्युक्तं, कथंचित्कुपिते पुनः किंकार्यमित्याह—

मूलम्—आयरिअं कुविअं णच्चा, पत्तिएण पसायए ॥ विज्झविज्ज पंजलीउडो, वइज्ज ण पुणत्ति अ ॥४१॥

व्याख्या–आचार्यमुपलक्षणत्वादुपाध्यायादिकं वा कुपितं अशिक्षणादृष्टिदानादिना प्रादुष्कृतकोपं ज्ञात्वा 'पत्तिएणत्ति' प्रतीतिजनकेन शपथादिना, यद्वा प्रीत्या साम्नैव प्रियवचोभाषणादिकेन प्रसादयेत् प्रसन्नं कुर्यात्, कथमित्याह–'विज्झविज्जत्ति' विध्यापयेत् कथञ्चिदुदीरितकोपानलमपि शान्तं कुर्यात् प्राञ्जलिपुटः कृताञ्जलिः, इत्थं कायिकं मानसं च विध्यापनोपायमुक्त्वा वाचिकं तं दर्शयति, 'वइज्जत्ति' अग्रेतनचकारस्य भिन्नक्रमस्येह योगात् वदेच्च ब्रूयाच्च किमित्याह–न पुनरिति, अयं भावः–स्वामिन् ! प्रमादाचरितमिदं क्षम्यतां, न पुनरित्थमाचरिष्यामीति गुरुं प्रसादयन् शिष्यो वदेच्चेति सूत्रार्थः ॥ ४१ ॥ अथ यथा गुरोः कोप एव नोत्पद्यते तथाह—

मूलम्—धम्मज्जिअं च ववहारं, बुद्धेहीयरिअं सया ॥ तमायरंतो ववहारं, गरहं णाभिगच्छइ ॥ ४२॥

व्याख्या–धर्मेण क्षान्त्यादिना अर्जित उपार्जितः, चः पूर्त्तौ, यो व्यवहारः प्रत्युपेक्षणादिर्मुमुक्षुक्रियारूपः बुद्धैर्ज्ञाततत्त्वैराचरितः सेवितः सदा सर्वकालं तमाचरन् सेवमानः 'ववहारंति' विशेषेण अवहरति पापकर्मेति व्यवहारस्तं पापकर्मापहारिणमित्यर्थः, गर्हां अविनीतोऽयमितिनिन्दां नाभिगच्छति न प्राप्नोति यतिरिति शेषः, तदा च न स्यादेवगुरोः कोपोत्पत्तिरिति सूत्रार्थः ॥ ४२ ॥ किम्बहुना—

मूलम्—मणोगयं वक्कगयं, जाणित्तायरिअस्स उ ॥ तं परिगिज्झ वायाए, कम्मुणा उववायए ॥ ४३ ॥

व्याख्या–मनोगतं मनसि स्थितं तथा वाक्यगतं कृत्यमितिशेषः, ज्ञात्वा आचार्यस्य गुरोः, तु शब्दः कायगतकार्यपरिग्रहार्थः, तत् मनोगतादि गुरुकृत्यं परिगृह्याङ्गीकृत्य, वाचा इदमित्थं करोमीत्यादिरूपया, कर्मणा क्रियया तन्निष्पादनात्मिकया, उपपादयेद्विदधीतेति सूत्रार्थः ॥ ४३ ॥ सचैवं विनीततया यादृक् स्यात्तदाह—

मूलम्—वित्ते अचोइए णिच्चं, खिप्पं हवइ सुचोइए ॥ जहोवइट्ठं सुकयं, किच्चाइं कुव्वइ सया ॥ ४४ ॥

व्याख्या–वित्तो विनीततया प्रसिद्धः शिष्यः 'अचोइएत्ति' अनोदितोऽप्रेरित एव प्रतिप्रस्तावं गुरुकृत्येषु प्रवर्त्तते इत्यध्याहारः, नित्यं सदा न तु कदाचिदेवेति भावः, न चायं स्वयं प्रवर्त्तमानो गुरुभिः प्रेरितोऽनुशयवानपि स्यात्, किन्तु क्षिप्रं शीघ्रं भवति यथोचितकृत्यकारीति गम्यते, सुचोदके शोभनप्रेरयितरि गुरौ सतीति शेषः, ततश्च यथोपदिष्टं उपदिष्टानतिक्रमेण सुष्ठु कृतं सुकृतं यथा स्यादेवं कृत्यानि करोति, सदा सर्वदेति सूत्रार्थः ॥४४॥ अथोपसंहर्तुमाह—

मूलम्—णच्चा णमइ मेहावी, लोए कित्ती से जायइ ॥ हवइ किच्चाण सरणं, भूआणं जगई जहा ॥ ४५ ॥

व्याख्या–ज्ञात्वाऽनन्तरोक्तं सर्वमध्ययनार्थमवगम्य नमति तत्तत्कृत्यकरणं प्रति प्रह्वीभवति मेधावी मर्यादावर्त्ती,

लोके कीर्त्तिः सुलब्धमस्य जन्म ! निस्तीर्णो भवाब्धिरनेनेत्यादिका से तस्य जायते प्रादुर्भवति, तथारूपश्च भवति कृत्यानां पुण्यानुष्ठानानां शरणमाश्रयः, भूतानां प्राणिनां जगती पृथ्वी यथेति सूत्रार्थः ॥ ४५ ॥ ननु विनयः पूज्यप्रसादनफलः, पूज्यप्रसादनाच्च किं लभ्यते ? इत्याह—

मूलम्—पुज्जा जस्स पसीअंति, संबुद्धा पुव्वसंथुआ ॥ पसण्णा लाभइस्संति, विउलं अट्ठिअं सुअं ॥ ४६ ॥

व्याख्या—पूज्या आचार्यादयो यस्य शिष्यस्य प्रसीदन्ति तुष्यन्ति सम्बुद्धाः सम्यग्ज्ञाततत्वाः पूर्वं वाचनादिकालात् प्राक् संस्तुता विनयविषयतया परिचिताः सम्यक्स्तुता वा सद्भूतगुणोत्कीर्त्तनादिना पूर्वसंस्तुताः प्रसन्नाः सप्रसादाः लम्भयिष्यन्ति प्रापयिष्यन्ति, विपुलं विस्तीर्णं, अर्थो मोक्षः, स प्रयोजनमस्येत्यार्थिकं, श्रुतमङ्गोपाङ्गादिभेदं, अनेन पूज्यप्रसादनस्यानन्तरं फलं श्रुतलाभः, परम्परं तु मोक्ष इति सूचितमिति सूत्रार्थः ॥ ४६ ॥ अथ श्रुतावासौ तस्य ऐहिकमामुष्मिकं च फलं काव्याभ्यामाह—

मूलम्— स पुज्जसत्थे सुविणीअसंसए, मणीरुई चिट्ठइ कम्मसंपया ॥
तवोसमायारिसमाहिसंवुडे, महज्जुई पंचवयाइं पालिया ॥ ४६ ॥

व्याख्या—स इति प्रसादितगुरोः प्राप्तश्रुतः शिष्यः, पूज्यं विनीततया श्लाघ्यं शास्त्रं यस्यासौ पूज्यशास्त्रः, सुष्ठु विनीतोऽपनीतः प्रसादितगुरुणैव शास्त्ररहस्यप्रदानेन संशयः सूक्ष्मार्थविषयः सन्देहो यस्य स सुविनीतसंशयः, मनसःप्रस्तावाद्गुरुसम्बन्धिनश्चित्तस्य रुचिरिच्छा यस्मिन् स मनोरुचिर्गुरुमनोनुवर्ती, न तु स्वेच्छाचारीति भावः 'चिट्ठइकम्मसंपयत्ति' कर्म क्रिया, दशविधचक्रवालसामाचारी, तस्याः संपत् समृद्धिः कर्मसंपत् तयोपलक्षितस्तिष्ठति आस्ते । तथा तपसोऽनशनादेः समाचारी समाचरणं, समाधिश्चेतःस्वास्थ्यं, ताभ्यां संवृतो निरुद्धाश्रवः तपःसमाचारीसमाधिसंवृतः । महती द्युतिस्तपस्तेजोमयी यस्य स महाद्युतिर्भवतीति शेषः । किं कृत्वेत्याह—पञ्च व्रतानि प्राणातिपातविरमणादीनि पालयित्वा संस्पृश्येति सूत्रार्थः ॥ ४१ ॥ तथा—

मूलम्— स देवगंधव्वमणुस्सपूइए, चइत्तु देहं मलपंकपुव्वयं ॥
सिद्धे वा हवइ सासए देवे वा, अप्परए महिड्ढिएत्तिबेमि ॥ ४८ ॥

उत्तरज्झयणस्स पढमज्झयणं समत्तं ॥ १ ॥

व्याख्या—स विनीतविनेयो मुनिर्देवैर्वैमानिकज्योतिष्कैः, गन्धर्वैश्च गन्धर्वनिकायोपलक्षितैर्व्यन्तरभवनपतिभिर्मनुष्यैश्च नृपाद्यैः पूजितोऽर्चितो देवगन्धर्वमनुष्यपूजितः, त्यक्त्वाऽपहाय देहं शरीरं, 'मलपंकपुव्वयंति' मलपङ्कौ रक्तवीर्ये तत्पूर्वकं तत्प्रथमकारणं, सिद्धो वा भवति शाश्वतः सर्वकालावस्थायी, न तु बुद्धादिवत्तीर्थनिकारे पुनरत्रागंता ! । सावशेषकर्मा तु देवो वा भवति, अल्परजाः प्रतनुबध्यमानकर्मा, महती विकुर्वणादिरूपा ऋद्धिर्यस्य स महर्द्धिकः, अविराधितमुनिधर्माणां महर्द्धिकवैमानिकदेवेष्वेवोत्पादात्, इति परिसमाप्तौ ब्रवीमि तीर्थकरगणधराद्युपदेशेन न तु स्वबुद्ध्यैवेति सूत्रार्थः ॥ ४८ ॥

॥ इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणि-
शिष्याश्रवोपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ
विनयश्रुताख्यं प्रथमाध्ययनं सम्पूर्णम् ॥ १ ॥

## "अथद्वितीयमध्ययनम्"

॥ अर्हम् ॥ व्याख्यातं प्रथमाध्ययनमथ द्वितीयमारभ्यते, अस्य चायमभिसम्बन्धः, इह पूर्वाध्ययने विनय उक्तः, स च स्वस्थावस्थैः परीपहार्तैश्च विधेय एव, अथ के नामैते परीषहाः ? इति जिज्ञासायां तत्स्वरूपावेदकमिदमुच्यते, इत्यनेन सम्बन्धेनायातस्यास्य परीषहाध्ययनस्येदमादिसूत्रम्—

**मूलम्–सुअं मे आउसं तेणं भगवया एवमक्खायं,इह खलु बावीसं परीसहा, समणेणं भगवया महावीरेणं कासवेणं पवेइआ,जे भिक्खू सोच्चा णच्चा जिच्चा अभिभूय भिक्खायरिआ परिव्वयंतो पुट्ठो ण विहणेज्जा॥**

व्याख्या–श्रुतमाकर्णितं मे मया आयुष्मन्निति शिष्यामंत्रणं, इदञ्च सुधर्मस्वामी जम्बूस्वामिनं प्रत्याह, तेन जगत्त्रयप्रतीतेन भगवताऽष्टमहाप्रातिहार्यादिसमग्रैश्वर्ययुक्तेन एवममुना वक्ष्यमाणप्रकारेण आख्यातं कथितं, किमाख्यातमित्याह, 'इह खलुत्ति' अत्र खलुशब्दस्य एवकारार्थत्वात् इहैव जिनप्रवचने एव, न तु शाक्यादिशासने, द्वाविंशतिः परीषहा' सन्तीति गम्यते, यदिवा 'आउसंतेणंति' मया इत्यस्य विशेषणं कार्यं, ततश्च आवसता आगमोक्तमर्यादया वसता गुरुकुलवासे इति शेषः, अनेन च यावज्जीवं गुरुकुलवास एव सर्वथा वस्तव्यमित्याह, उक्तञ्च–

"णाणस्स होइ भागी, थिरयरओ दंसणे चरित्ते अ ॥ धण्णा आवकहा जे, गुरुकुलवासं ण मुंचंति॥१॥"अथ यद्भगवता द्वाविंशतिः परीषहाः सन्तीत्याख्यातं तत्किमन्यतोऽवगम्य स्वतो वेति शिष्यसंशयं निराकर्तुमाह,श्रमणेन तपस्विना भगवता महावीरेण श्रीवर्द्धमानस्वामिना काश्यपेन काश्यपगोत्रेण 'पवेइअत्ति' सूत्रत्वात् प्रविदिताः प्रकर्षेण उत्पन्नकेवलज्ञानतया स्वयं साक्षात्कारित्वलक्षणेन विदिता ज्ञाताः नत्वन्योपदेशेनेति भावः, ते च कीदृशा इत्याह–'जे भिक्खू' इत्यादि– यान् परीषहान् भिक्षुः साधुः श्रुत्वा गुरुपार्श्वे समाकर्ण्य, ज्ञात्वा यथावदवबुध्य, जित्वा पुनः पुनरभ्यासेन परिचितान् विधाय, अभिभूय सर्वथा तत्सामर्थ्यमुपहत्य, भिक्षाचर्यायां भिक्षाटने परिव्रजन् समन्ताद्गच्छन् स्पृष्टः आश्लिष्टः प्रक्रमात्परीषहैरेव नो नैव विहन्येत संयमशरीरोपघातेन विनाशं लभेत, उदीर्यन्ते हि भिक्षाटने प्रायः परीषहा इति तद्ग्रहणं, उक्तञ्च–"भिक्खायरिआए बावीसं परीसहा उईरिज्जंतित्ति" इत्युक्त उद्देशः। पृच्छामाह—

**मूलम्— कयरे खलु ते बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइआ जे भिक्खू सुच्चा णच्चा जिच्चा अभिभूय भिक्खायरिआए परिव्वयंतो पुट्ठो णो विहणेज्जा ॥**

व्याख्या–कतरे किं नामानस्ते अनन्तरसूत्रोद्दिष्टाः खलु वाक्यालंकारे शेषं प्राग्वत्। निर्देशमाह—

**मूलम्— इमे खलु ते बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइआ जे भिक्खू सुच्चा णच्चा जिच्चा अभिभूय भिक्खायरिआए परिव्वयंतो पुट्ठो णो विहणेज्जा ॥**

व्याख्या–इमे हृदि वर्त्तमानतया प्रत्यक्षाः, ते इति ये त्वया पृष्टाः, शेषं प्राग्वत् ॥

**मूलम्— तंजहा–दिगिंछापरीसहे ( १ ), पिवासापरीसहे ( २ ), सीअपरीसहे ( ३ ), उसिणपरीसहे ( ४ ), दंसमसयपरीसहे ( ५ ), अचेलपरीसहे ( ६ ), अरइपरीसहे ( ७ ), इत्थीपरीसहे ( ८ ), चरिआपरीसहे ( ९ ), णिसीहिआपरीसहे ( १० ), सिज्जापरीसहे ( ११ ), अक्कोसपरीसहे ( १२ ), वहपरीसहे ( १३ ), जायणापरीसहे ( १४ ), अलाभपरीसहे ( १५ ), रोगपरीसहे ( १६ ), तणफासपरीसहे ( १७ ), जल्लपरीसहे ( १८ ), सक्कारपुरक्कारपरीसहे ( १९ ), पण्णापरीसहे (२०), अण्णाणपरीसहे ( २१ ), दंसणपरीसहे ( २२ ) ॥**

व्याख्या–तद्यथा इत्युपन्यासार्थः, 'दिगिंछा' देशीपरिभाषया बुभुक्षा, सैव भृशमाकुलताहेतुरपि, असंयमभीरुत्वेन आहारपचनाप्रासुकानेषणीयभोजनादिवाञ्छाविनिवर्त्तनेन परि समन्तात् सह्यते इति परीषहो दिगिंछापरीषहः ( १ ) पिपासा तृषा, सैव परीषहः पिपासापरिषहः ( २ ) एवं सर्वत्रापि, नवरं, शीतं हिमसमयादौ जातः शीतस्पर्शः ( ३ ) उष्णं निदाघादितापात्मकम् ( ४ ) दंशमशकाः प्रतीताः, यूकाद्युपलक्षणञ्चैते ( ५ ) अचेलं चेलाभावो जिनकल्पिकविशेषाणां, अन्येषां तु जीर्णमल्पमूल्यञ्च चेलं सदप्यचेलमेव ( ६ ) रतिः संयमविषया धृतिस्तद्विपरीता चारतिः (७)

स्त्री रामा, सैव तद्गतरागहेतुगतिविलासहासचेष्टाचक्षुर्विकारकुचभाराद्यवलोकनेऽपि तदभिलाषविनिवर्त्तनेन परिषह्यमाणत्वात् परीषहः ( ८ ) चर्या विहारात्मिका ( ९ ) नैषेधिकी स्वाध्यायभूः ( १० ) शय्या उपाश्रयः ( ११ ) आक्रोशोऽसभ्यभाषणरूपः ( १२ ) वधो लकुटादिभिस्ताडनम् ( १३ ) याचना प्रार्थना ( १४ ) अलाभो वाञ्छितवस्तुनोऽप्राप्तिः ( १५ ) रोगः कुष्टादिः ( १६ ) तृणस्पर्शो दर्भादिस्पर्शः ( १७ ) जल्लो मलः ( १८ ) सत्कारो वस्त्रादिभिः पूजनम् , पुरस्कारोऽभ्युत्थानादिसम्पादनम् , तावेव परीषहः ( १९ ) प्रज्ञा स्वयं विमर्शपूर्वको वस्तुपरिच्छेदः ( २० ) ज्ञानं मत्यादि, तदभावश्चाज्ञानम् ( २१ ) दर्शनं सम्यग्दर्शनम् , तदेव विचित्रमतश्रवणेऽपि सम्यक् परिषह्यमाणं निश्चलतया धार्यमाणं परीषहो दर्शनपरीषहः (२२) इत्थं नामतः परीषहानुक्त्वा स्वरूपतो विवक्षुस्तानाह—

मूलम्—परीसहाणं पविभत्ती, कासवेणं पवेइआ ॥ तं भे उदाहरिस्सामि, आणुपुव्विं सुणेह मे ॥ १ ॥

व्याख्या—परीषहाणां पूर्वोक्तानां प्रविभक्तिः पृथक्स्वरूपतारूपः प्रविभागः काश्यपेन श्रीमहावीरेण प्रवेदिता प्ररूपिता, तां परीषहप्रविभक्तिं 'भेत्ति' भवतां उदाहरिष्यामि प्रतिपादयिष्यामि आनुपूर्व्या क्रमेण श्रृणुत हे शिष्याः ! यूयमिति शेषः, मे ममोदाहरतः सकाशादिति सूत्रार्थः ॥ १ ॥ इह च "छुहासमा वेअणा नत्थि" इति वचनात् परीषहाणां मध्ये क्षुत्परीषह एव दुस्सह इत्यादितस्तमाह—

मूलम्—दिगिंछापरिगए देहे, तवस्सी भिक्खु थामवं ॥ ण छिंदे ण छिंदावए, ण पए ण पयावए ॥ २ ॥

व्याख्या—दिगिंछापरिगते क्षुधाव्याप्ते देहे शरीरे सति तपस्वी षष्ठाष्टमादिविकृष्टतपोनुष्ठायी भिक्षुर्मुनिः स्थामवान् संयमबलवान् न छिन्द्यात् स्वयं, न छेदयेदन्यैः, फलादिकमिति शेषः, तथा न पचेत् स्वयं, न चान्यैः पाचयेत्, उपलक्षणत्वाच्च नान्यं छिन्दन्तं पचन्तं वाऽनुमन्येत, एवं न स्वयं क्रीणीयान्नापि क्रापयेदन्यैर्न चान्यं क्रीणन्तमनुमन्येत, तदेवं क्षुत्क्षामकुक्षिरपि नवकोटिशुद्धमेवाहारं स्वीकुर्यादिति सूत्रार्थः ॥ २ ॥ किञ्च—

मूलम्—कालीपव्वंगसंकासे, किसे धमणिसंतए ॥ मायण्णे असणपाणस्स, अदीणमणसो चरे ॥ ३ ॥

व्याख्या—काली काकजंघा, तस्याः पर्वाणि कालीपर्वाणि, तत्संकाशानि तत्सदृशानि तपःशोषितमांसशोणिततयाऽङ्गानि बाहुजंघादीनि यस्य स कालीपर्वसंकाशाङ्गः, सूत्रे तु व्यत्ययः प्राकृतत्वात् । अत एव कृशः कृशशरीरः, धमनीभिः शिराभिः सन्ततो व्याप्तः, ईदृशावस्थोऽपि मात्रज्ञः परिमाणवेदी, नत्वतिलौल्यादतिमात्रोपभोगी, कस्येत्याह—अशनमोदनादि, पानं सौवीरादि, तयोः समाहारेऽशनपानं, तस्य । तथा अदीनमना अनाकुलचित्तश्चरेत् संयममार्गे यायात् । अयं भावः, अत्यन्तं क्षुधापीडितोऽपि साधुर्नवकोटीशुद्धमप्याहारं प्राप्य न लौल्यादतिमात्रं भुञ्जीत, तदप्राप्तौ च न दीनत्वमवलम्बेतेत्येवं क्षुत्परीषहः सोढो भवतीति सूत्रार्थः ॥ ३ ॥ उदाहरणञ्चात्र, तथाहि—

अस्त्यत्र भरते स्वर्ग—जयिन्युज्जयिनी पुरी ॥ हस्तिमित्राभिधः श्रेष्ठी, तत्राभूद्भूरिभूतिमान् ॥ १ ॥ सौभाग्यसेवधिर्देक्षा—वधिस्तस्य च वल्लभा ॥ अकाण्ड एवाम्रियत, स्वप्राणेभ्योऽपि वल्लभा ॥ २ ॥ संसारासारतां ध्यायं—स्ततो वैराग्यवानसौ ॥ प्राव्राजीत् हस्तिभूत्याह्व—पुत्रयुक् साधुसन्निधौ ॥ ३ ॥ अन्यदा तावुज्जयिन्याः, प्रस्थितौ सह साधुभिः ॥ प्रति भोजकटं यान्ता—वरण्यानीमवापतुः ॥ ४ ॥ हस्तिमित्रमुनेस्तत्र, मर्माभित्कण्टको महान् ॥ भग्नः पादतले तेन, पुरो गन्तुं स नाशकत् ॥ ५ ॥ ततः स तद्व्यथापूरैः, प्रापितः प्राणसंशयम् ॥ स्वसन्निधिस्थितान् साधू—नभ्यधादिति धीनिधिः ॥ ६ ॥ यूयं व्रजत कान्तार—पारञ्च प्राप्नुत द्रुतम् ॥ अहं त्विहैवानशनं, करिष्ये गन्तुमक्षमः ॥ ७ ॥ तच्छ्रुत्वा मुनयः प्रोचु—र्हस्तिमित्र ! विषीद मा ॥ त्वां सहोत्पाट्य नेष्यामो, मोक्ष्यामो न पुनर्वने ॥ ८ ॥ धर्मकृत्येषु सारं हि, वैयावृत्यं जगुर्जिनाः ॥ तत्पुनर्ग्लानसम्बन्धि, विना पुण्यं न लभ्यते ॥ ९ ॥ वैयावृत्यं तदेतत्ते, करिष्यामो वयं मुदा ॥ तदाकर्ण्य जगौ हस्ति—मित्रर्षिः सत्वसेवधिः ॥ १० ॥ सत्यमेतत्परमहं, प्राप्तकालोऽस्मि साम्प्रतम् ॥ तन्मामुत्पाट्य मा यूयं, मुधा बाधामवाप्स्यथ ! ॥ ११ ॥ किञ्चात्र श्वापदाकीर्णे, प्रचुरोपद्रवे वने ॥ सर्वेषां त्यक्तसार्थानां, न स्थातुमुचितं चिरम् ॥ १२ ॥ इत्युक्त्वाऽनशनं कृत्वा, क्षमयित्वा च संयतान् ॥ स सद्यः प्रेषयामास, सह सार्थेन साग्रहम् ॥ १३ ॥ स्थातुकाममपि स्नेहा—त्सहादायाथ तत्सुतम् ॥ प्रस्थिता मुनयो हस्ति—मित्रस्त्वस्थाद्गुहान्तरे ॥ १४ ॥ दूरं गत्वापि तत्पुत्रो, वञ्चयित्वा मुनीनगात् ॥ पितुः समीपं स्नेहो हि, निर्मन्त्राकर्षणं मतम् ॥ १५ ॥ ततस्तातोऽवदत्पुत्र !, न शोभनमदः कृतम् ॥ मुनीन् विमुच्य मत्पार्श्वे—मविमृश्य यदागमः ॥ १६ ॥ प्रासुकान्नोदकादीनां, दाता नास्तीह कोऽपि यत् ॥ क्षुत्तृषाविवशस्तस्मा—त्त्वमप्यत्र विपत्स्यसे ! ॥ १७ ॥

ततः पुत्रोऽवदत्तात !, यद्भाव्यं तद्भवत्विह ॥ परमस्यामवस्थायां, मुक्त्वा वो न व्रजाम्यहम् !॥ १८ ॥ हस्तिमित्रोऽथ तत्रैव, दिवसे वेदनाकुलः ॥ स्मृतपञ्चनमस्कारो, विपद्याजनि निर्जरः ॥ १९ ॥ विपन्नमपि जीवन्तं, सुतो गोदाद्धि-वेदतम् ॥ प्रयुक्तावधिरज्ञासी–त्सुरोऽपि प्राग्भवं निजम् ॥ २० ॥ अद्राक्षीच्च वपुः स्वीयं, तत्रस्थं तनयञ्च तम् ॥ ततस्तत्कृपया स्वाङ्गे, प्रविश्येति सुरोऽब्रवीत् ॥ २१ ॥ भिक्षायै वत्स ! गच्छ त्वं, सोऽवादीत् क्व व्रजाम्यहम् ॥ उवाच निर्जरो याहि, भूरुहेषु वटादिषु ॥ २२ ॥ तद्वासिनो जनास्तुभ्यं, प्रदास्यन्त्यशनादिकम् ॥ तत्प्रपद्य ययौ सोऽपि, मुग्धात्मा भूरुहामधः ॥ २३ ॥ धर्मलाभ इति प्रोच्चैः, प्रोच्य तत्राथ तस्थुषे ॥ तस्मै भिक्षामदाद्वृक्षा–न्निर्गतालङ्कृतः करः ॥ २४ ॥ इत्थं भिक्षां ददौ तस्मै, हस्तिमित्रामरोऽन्वहम् ॥ कृताहारञ्च तं स्नेहा–द्वार्त्तयामास सर्वदा ॥ २५ ॥ देशे भोजकटस्याथ, जज्ञे दुर्भिक्षमुल्वणम् ॥ ततस्तत्राभवद्भिक्षा, भिक्षूणामतिदुर्लभा ॥ २६ ॥ व्रतिनस्ते ततो वर्षे, द्वितीये प्रति मालवम् ॥ वलिताः पूर्वदृष्टेन, चेलुस्तेनैव वर्त्मना ॥ २७ ॥ अटव्यां चाययुस्तस्यां, क्षुल्लकं ददृशुश्च तम् ॥ क्व तिष्ठसि ? कथं भुङ्क्षे ?, पप्रच्छुरिति तञ्च ते ॥ २८ ॥ अवादीत्सोऽथ तिष्ठामि, सर्वदा पितुरन्तिके ॥ वृक्षनिर्गत-हस्ताच्च, लभेऽहमशनादिकम् ॥ २९ ॥ अद्य यावद्दिनाऽऽहारं, वृद्धः किं जीवतीति ते ॥ तं वीक्षितुं गताः शुष्क–मद्राक्षुस्तत्कलेवरम् ॥ ३० ॥ ततस्ते व्यमृशन्नूनं, हस्तिमित्रोऽभवत्सुरः ॥ कृपयाऽन्नादिदानेन, तेनैवायमरक्ष्यत ॥३१॥ अत्राहुः केऽपि बालेन, न सोढः क्षुत्परीषहः ॥ वृद्धेन स पुनः सोढो, धैर्याधरितभूभृता ॥ ३२ ॥ अन्ये त्वाहुः सुते-नापि, सोढ एव परीषहः ॥ यन्नासौ प्रासुकालाभे–ऽप्यैच्छद्भोक्तुं फलादिकम् ॥ ३३ ॥ हस्तिभूतिरपि ज्ञात्वा–ऽऽहारलाभं सुधाशनात् ॥ आलोचितः प्रतिक्रान्तो, विजहार सहर्षिभिः ॥ ३४ ॥ परीषहो दुर्विषहो यथाऽऽभ्यां, सेहे बुभुक्षाविषयो मुनिभ्याम् ॥ ऐदंयुगीनैरपि पुण्यपीनैः, सह्यस्तथाऽसौ मनसाप्यदीनैः ॥ ३५ ॥ इति क्षुधापरी-षहे हस्तिमित्रकथा ॥ १ ॥

उक्तः क्षुत्परीषहः, क्षुधार्त्तस्य च शुद्धाहारार्थं पर्यटतः श्रमादेः पिपासोत्पद्यते, सापि सम्यक् सोढव्येति तत्परीषहमाह–

मूलम्—तओ पुट्ठो पिवासाए, दोगुंच्छी लज्जसंजए ॥ सीओदगं ण सेविज्जा, विअडस्सेसणं चरे ॥ ४ ॥

व्याख्या–ततः क्षुत्परीषहादनन्तरं स्पृष्टोऽभिद्रुतः, पिपासया, 'दोगुंच्छित्ति' जुगुप्सकोऽनाचारस्येति शेषः, 'लज्ज-संजएत्ति' लज्जायां संयमे सम्यक् यतते इति लज्जासंयतः, शीतोदकं सचित्ताम्बु न सेवेत न पानादिना भजेत्, किन्तु 'वियडस्सत्ति' विकृतस्य वह्न्यादिना विकारं प्रापितस्य एषणां एषणासमितिं चरेत् पुनः पुनः सेवेत, न त्वेकवारं एषणाया अशुद्धावपि तृषातिरेकात्तदनेषणीयं गृह्णीयादिति सूत्रार्थः ॥ ४ ॥ तथा—

मूलम्—छिण्णावाएसु पंथेसु, आउरे सुपिवासिए ॥ परिसुक्कमुहद्दीणो, तं तितिक्खे परीसहं ॥ ५ ॥

व्याख्या–छिन्नोऽपगत आपातो जनसंचारो येषु ते छिन्नापाता विजना इत्यर्थस्तेषु पथिषु मार्गेषु गच्छन्निति शेषः, आतुरोऽत्यन्ताऽऽकुलकायः, कुत एवमित्याह–यतः 'सुपिवासिए' सुष्ठु अतिशयेन पिपासितस्तृषितः परिशुष्कमप-गतनिष्ठीवनतयाऽनार्द्रं मुखं यस्य स परिशुष्कमुखः, स चासावदीनश्च परिशुष्कमुखादीनः, तं तृषापरीषहं तितिक्षेत सहेत, अयं भावः–एकान्तस्थानस्थोऽपि बहुतृषाव्याकुलोऽपि च नोक्तमर्यादामुल्लंघयेत्ततस्तृट्परीषहः सोढो भवती-तिसूत्रार्थः ॥ ५ ॥ कथासम्प्रदायश्चात्र । तथाहि—

अभूदुज्जयिनीपुर्यां, धनमित्राभिधो वणिक् ॥ धनशर्माश्रयस्तस्य, धनशर्मा सुतोऽभवत् ॥१॥ गुरुवाणीं समाकर्ण्य, गुरुवैराग्यवान् धनः ॥ पुत्रेण पुण्यसत्रेण, सत्रा तत्राऽऽददे व्रतम् ॥ २ ॥ स्वस्मिन् परे च सहितौ, सहितौ तौ व्रति-व्रजैः ॥ प्रस्थितावेलगपुरा–ऽध्वनि मध्यंदिनेऽन्यदा ॥ ३ ॥ तदा च भीष्मग्रीष्मार्क–करसम्पाततापितः ॥ पिपा-सापीडितो बालः, स चचाल शनैः शनैः ॥ ४ ॥ मुनयोऽन्येऽग्रतो जग्मु–र्धनमित्रमुनिः पुनः ॥ पश्चाच्चचाल सूनो-स्तत्–प्रेमपाशनियन्त्रितः ॥ ५ ॥ मार्गे तत्रापयौ रंग–त्तरंगाथ तरङ्गिणी ॥ ततः पिताऽलपत्पुत्रं, तां निरीक्ष्य प्रमो-दभाक् ॥ ६ ॥ जानामि चेष्टया वत्स !, त्वां पिपासापराजितम् ॥ मदभ्यर्णे च नास्त्यम्भः, प्रासुकं तत्करोमि किम् ? ॥ ७ ॥ तदिदानीं नदीनीरं, पीत्वोदन्यानि हन्यताम् ॥ निषिद्धमपि कार्यं हि, कार्यमापदि धीधनैः ॥ ८ ॥ यदुक्तं–

'निषिद्धमप्याचरणीयमापदि, क्रिया सती नाऽवति यत्र सर्वथा ॥ घनाम्बुना राजपथेऽति पिच्छिले, क्वचिद्बुधैरप्यप-थेन गम्यते ॥ ९ ॥'' मृत्युदामापदमिमां, तदुल्लंघ्य कथंचन ॥ पश्चादालोचयेः पापं, समीपे सद्गुरोरिदम् ॥ १० ॥ इत्युदीर्य समुत्तीर्य, स नदीमित्यचिन्तयत् ॥ नूनं मद्दर्शने पुत्रो, ह्रिया पास्यति नोदकम् ॥ ११ ॥ ह्रीमान् कुर्वन्न-

कार्यं हि, स्वच्छायातोऽपि शङ्कते ॥ तद्दर्शनपथादस्मा–पसरामि शनैः शनैः ॥ १२ ॥ ध्यात्वेति स पुरोऽचालीत्, क्षुल्लोऽथ प्राप निम्नगाम् ॥ तृषार्त्तोऽपि न तत्तोय–मपिबच्च दृढव्रतः ॥ १३ ॥ अन्ये त्वाहुरुदन्यानि, बाधितः स शिशुर्भृशम् ॥ शुष्यत्तालुमुखोरस्क–श्चेतसीति व्यचिन्तयत् ॥ १४ ॥ पिबाम्यऽनादेयमपि, नाऽऽदेयं वारि साम्प्रतम् ॥ प्रायश्चित्तं ग्रहीष्यामि पश्चात्सद्गुरुसन्निधौ ॥ १५ ॥ विमृश्येति समुत्पाट्य, पातुमञ्जलिना जलम् ॥ निन्ये यावन्मुखस्याग्रे, सोऽध्यासीदिदिति तावता ॥ १६ ॥ पिबामीमान् कथं जीवा–नहं विज्ञातजैनगीः ॥ उदविन्दौ यदेकत्राऽसङ्ख्यजन्तून् जिना जगुः ॥ १७ ॥ त्रसाः पूतरमत्स्याद्याः, स्थावराः पनकादयः ॥ नीरे स्युरिति तद्घाती, सर्वेषां हिंसको भवेत् ॥ १८ ॥ तत्कियद्भिर्दिनैर्यान्ति, रक्षिता अपि ये ध्रुवम् ॥ तान् प्राणान् रक्षितुं दक्षः, परप्राणान्निहन्ति कः ? ॥ १९ ॥ सजीवं जीवनमिदं, तन्न पास्यामि सर्वथा ॥ निर्णीयेति शनैर्नद्यां, स मुमोचाञ्जलेर्जलम् ॥ २० ॥ बालोऽप्यबालधैर्यस्ता–मुत्तीर्य तटिनीं ततः ॥ तत्तीर एव सोऽपत–त्तृष्णया गन्तुमक्षमः ॥ २१ ॥ धर्मस्थैर्यं दधच्चित्ते, पिपासाविवशोऽपि सः ॥ स्मृतपञ्चनमस्कारो, विपद्य त्रिदिवं ययौ ॥ २२ ॥ प्रयुज्याथावधिज्ञानं, ज्ञात्वा पूर्वभवं निजम् ॥ पुरो गत्वा स्थितं तातं, प्रेक्ष्य स्वाङ्गे प्रविश्य च ॥ २३ ॥ अन्वगाद्धनमित्रोऽपि, ततश्चलयितुं सुरः ॥ समायान्तं सुतं दृष्ट्वा, हृष्टः सोऽप्यचलत्पुरः ॥ २४ ॥ [ युग्मम् ] अथोदन्या व्यथार्त्तानां, मुनीनामनुकम्पया ॥ धनशर्माऽमरो भूरि– गोकुलान्यध्वनि व्यधात् ॥ २५ ॥ तेभ्योऽधिगत्य तक्रादि, साधवः स्वास्थ्यमासदन् ॥ सुधाकुण्डेभ्य आसाद्य, पीयूषमिव निर्जराः ॥ २६ ॥ विहरन्तः सुखेनैवं, तत्कृते व्रजिका व्रजे ॥ उल्लंघ्यारण्यमापुस्ते, क्रमादन्तिमगोकुलम् ॥ २७ ॥ ततोऽग्रे गच्छतां तेषां, मध्यात्कस्यापि विण्टिकाम् ॥ स्वं जिज्ञापयिषुः सोऽथ, तत्र व्यस्मरयत्सुरः ॥ २८ दूरं गत्वा विण्टिकां च, स्मृत्वा स वलितो व्रती ॥ उपधेर्विण्टिकां तत्रा–ऽपश्यत्तां न तु गोकुलम् ॥ २९ ॥ तामादाय प्रचलितो, मिलितोऽन्यतपोधनैः ॥ अवदद्विण्टिकालाभं, गोकुलादर्शनं च सः ॥ ३० ॥ जाताश्चर्यास्तदाकर्ण्य, मुनयो व्यमृशन्निति ॥ नूनं दिव्यानुभावेन, गोकुलान्यभवन् वने ॥ ३१ ॥ अत्रान्तरे प्रादुरासीत्, स सुरः कान्तिभासुरः ॥ विहाय पितरं सर्वान्, मुनीनऽन्यान्ननाम च ॥ ३२ ॥ एनं कुतो न नमसी–त्युक्तः स व्रतिभिस्ततः ॥ स्वीयं व्यतिकरं सर्वं, निवेद्येत्यवदत्सुरः ॥ ३३ ॥ सजीवाम्भोऽपि पातुं य–त्तदासौ मे मतिं ददौ, तत्पूर्वभववप्यापि, साधु रेष न वन्द्यते ॥ ३४ ॥ स्नेहादपि रिपोरेव, कार्यं विहितवानसौ ॥ यद्दुर्गतिनिमित्तं मे, तदा तदुपदिष्टवान् ॥ ३५ ॥ अपास्यं चेत्सचित्ताम्बु, तदैतद्वचनादहम् ॥ व्रतभङ्गभवात्पापा–दभ्रमिष्यं तदा भवे ॥ ३६ ॥ स एव हि बुधैः पूज्यो, गुरुश्च जनकोऽपि च ॥ शिष्यं सुतं च यः क्वापि, नैवोन्मार्गे प्रवर्त्तयेत् ॥ ३७ ॥ धनशर्मसुपर्वैव–मुदीर्यागात्त्रिविष्टपम् ॥ साधवोऽपि ततः स्थाना–द्विजह्रुस्ते यथासुखम् ॥ ३८ ॥ क्षुल्लो यथाऽयं धनशर्मनामा, सेहे पिपासां सुदृढप्रतिज्ञः ॥ एवं समग्रैरपि संयतैः सा, सह्या महानन्दपदानुरक्तैः ॥ ३९ ॥ इति तृट्परीषहे धनशर्ममुनि कथा ॥ २ ॥

उक्तस्तृषापरीषहः, क्षुत्पिपासासहनकृशतनोश्च शीतकाले शीतमपि बहु लगतीति शीतपरीषहमाह—

मूलम्——चरंतं विरयं लूहं, सीअं फुसइ एगया ॥ णाइवेलं मुणी गच्छे, सोच्चा णं जिणसासणं ॥ ६ ॥

व्याख्या–चरन्तं ग्रामानुग्रामं मोक्षमार्गे वा व्रजन्तं विरतं सावद्ययोगान्निवृत्तं 'लूहंति' तैलाभ्यंगस्नानस्निग्धाहारादिपरिहारेण रूक्षं, मुनिमितिशेषः, शीतं हिमं, स्पृशति, अभिद्रवति, बाधते इत्यर्थः । एकदा शीतकाले, ततः किं कुर्यादित्याह–न नैव अतिवेलं वेलां स्वाध्यायादिसमयात्मिकामतिक्रम्य शीतभयान्मुनिः साधुर्गच्छेत् स्थानान्तरमुपसर्प्येत्, श्रुत्वा 'णमिति' वाक्यालङ्कारे, जिनशासनं जिनागमं 'अन्यो जीवोऽन्यश्च देहः, तीव्रतराश्च नरकादौ शीतवेदना अनुभूता ! जीवैरित्यादिकम्' इतिसूत्रार्थः ॥ ६ ॥ किञ्च—

मूलम्—— ण मे णिवारणं अत्थि, छवित्ताणं ण विज्जइ ॥ अहं तु अग्गिं सेवामि, इइ भिक्खु ण चिंतए ॥ ७ ॥

व्याख्या–न मे मम निवारणं शीतवातादिनिवारकं सौधाद्यस्ति विद्यते, तथा छवित्राणं त्वक्त्राणं कम्बलवस्त्रादि न विद्यते, ततोऽहं शीतमपाकर्तुं तु पुनरग्निं सेवे इति भिक्षुर्न चिन्तयेन्न ध्यायेत्, चिन्तानिषेधे सेवनं तु दूरापास्तमिति सूत्रार्थः ॥ ७ ॥ दृष्टान्तश्चात्र । तथाहि—

पूरे राजगृहेऽभूवं–श्चत्वारश्चतुरोत्तमाः ॥ सखायोऽन्योन्यमुत्कृष्ट–प्रेमभाजो वणिग्वराः ॥ १ ॥ भद्रबाहुस्वामिपार्श्वे, श्रुत्वा धर्मं जिनोदितम् ॥ ते चत्वारोऽपि सञ्जात– संवेगाः प्राव्रजन् मुदा ॥ २ ॥ गुरुशुश्रूषणात्पार–दृश्वानस्ते श्रुतोदधेः ॥ एकाकित्वविहाराख्यां, प्रतिमां प्रतिपेदिरे ॥ ३ ॥ कल्पश्चायमभूत्तेषां, यद्विहाराशनादिकम् ॥

तृतीय एव प्रहरे, कार्यं कार्यं समाहितैः ॥ ४ ॥ तुर्ययामप्रवेशे तु, भवेद्यो यत्र संस्थितः ॥ तेन तत्र प्रतिमया, स्थेयं प्रहरसप्तकम् ॥ ५ ॥ कल्पमेनं श्रयन्तस्ते, विहरन्तो धरातले ॥ परेद्यवि पुरं राज-गृहं पुनरुपाययुः ॥ ६ ॥ तदा च तुहिनव्यूहैः, पीडयन् जगतीजनम् ॥ पत्रपुष्पफलोपेतान्, स्थाणून् कुर्वन् महीरुहान् ॥ ७ ॥ तटाकान्यपि सर्वाणि, स्त्यानयन्नाज्यवन्निशि ॥ निरास्पदान् पक्षिपशु-श्वापदान् दारुतां नयन् ॥ ८ ॥ शीतकम्प्रदरिद्राणां, दन्तवाद्यं प्रवादयन् ॥ कृशानुसेविनं कुर्वन्, सर्वं श्रोत्रियवज्जनम् ॥ ९ ॥ रुष्टानपि मिथोऽत्यर्थं, दम्पतीन् परिरम्भयन् ॥ हेमन्तर्तुः प्रववृते, विश्वं हेममयं सृजन् ॥ १० ॥ [ चतुर्भिः कलापकम् ] हिमर्त्तौ तत्र वैभार-गिरेस्ते मुनयः पुरे ॥ आहारार्थं समाजग्मुः, प्रहरेऽह्नस्तृतीयके ॥ ११ ॥ कृताहाराश्च ते सर्वे, गन्तुं वैभारभूधरम् ॥ पृथक् पृथग् न्यवर्त्तन्त, गुरुमध्यान्महर्षयः ॥ १२ ॥ वैभाराद्रिगुफाद्वारे, प्राप्तस्त्वेकस्तेष्वथ ॥ द्वितीयस्तु पुरोद्याने, तृतीयस्तु तदन्तिके ॥ १३ ॥ तुर्यस्तु पुरोपान्ते, चतुर्थः प्रहरोभवत् ॥ कायोत्सर्गं ततः कृत्वा, ते तत्रैवावतस्थिरे ॥ १४ ॥ [ युग्मम् ] तेष्वद्रिकंदराद्वार-संस्थितस्य तपस्विनः ॥ उच्चैः स्थितत्वादलग-च्छीतमत्यन्तदारुणम् ॥ १५ ॥ पतत्तुहिनसम्पर्क-शीतलैः शैलमारुतैः ॥ कायश्चकम्पे तस्योच्चै-र्न किञ्चिदपि मानसम् ॥ १६ ॥ स शीतवेदनां सम्यक्, सहमानो महामुनिः ॥ यामिन्याः प्रथमे यामे, परलोकमसाधयत् ॥ १७ ॥ उद्यानस्थस्य नीचैस्त्वा-च्छीतमल्पं किमप्यभूत् ॥ ततो रजन्याः प्रहेर, द्वितीये स व्यपद्यत ॥ १८ ॥ उद्यानपार्श्ववृत्तेस्तु, वृक्षाद्याश्रयतोऽलगत् ॥ शीतमल्पं ततो यामे, स विपन्नस्तृतीयके ॥ १९ ॥ आसीदल्पतरं शीतं, तुर्यस्य नगरोष्मणा ॥ ततः स प्रहरे तुर्ये, परासुत्वमगान्मुनिः ॥ २० ॥ चत्वारोऽपि प्राज्यधैर्या मुनींद्राः, स्वर्गं प्रापुस्ते विपद्येति शीतम् ॥ इत्थं सर्वैः साधुभिस्त्यक्तकामै-स्तत्सोढव्यं मुक्तिसंयुक्तिकामैः ॥ २१ ॥ इति शीतपरीषहे साधुचतुष्ककथा ॥ ३ ॥

इदानीं शीतविपक्षमुष्णमिति, यद्वा शीतकाले शीतं तदनु ग्रीष्मे उष्णमिति तत्परीषहमाह—

मूलम्—उसिणप्परिआवेणं, परिदाहेण तज्जिए ॥ घिंसु वा परिआवेणं, सायं णो परिदेवए ॥ ८ ॥

व्याख्या—उष्णं उष्णस्पर्शयुक्तं भूरेणुशिलादि, तेन परिताप उष्णपरितापस्तेन, तथा परिदाहेन बहिः स्वेदमलाभ्यां वह्निना वा, अन्तश्च तृष्णोत्थदाहरूपेण तर्जितोऽत्यन्तपीडितः, तथा 'घिंसुवत्ति' ग्रीष्मे, वाशब्दात् शरदि वा परितापेन रविकिरणकृतेन तर्जित इत्यत्रापि योज्यम्, सातं सुखं प्रतीतिशेषः, नो परिदेवेत् 'हा ! कदा चन्द्रचन्दनझंझानिलादयः सुखहेतवो मम संपत्स्यन्ते' इति न प्रलपेदिति सूत्रार्थः ॥ ८ ॥

मूलम्—उण्हाभितत्तो मेहावी, सिणाणं णोवि पत्थए ॥ गायं णो परिसिंचेज्जा, ण वीएज्जा य अप्पयं ॥ ९ ॥

व्याख्या—उष्णाभितप्तो मेधावी मर्यादावर्त्ती स्नानं जलाभिषेकं 'णोवि पत्थएत्ति' अपेर्भिन्नक्रमत्वात् नो नैव प्रार्थयेदपि, अभिलषेदपि, कथं पुनस्तत्कुर्यादितिभावः, तथा गात्रं देहं नो परिसिञ्चेत् न सूक्ष्माम्बुबिन्दुभिरार्द्रीकुर्यात्, न वीजयेच्च तालवृन्तादिभिः, अल्पकमपि, स्तोकमपि, किम्पुनर्बहुरिति सूत्रार्थः ॥ ९ ॥ उदाहरणञ्चात्र, तथाहि—

अभूल्लक्ष्मीकुलागारं, नगरी तगराभिधा ॥ दत्तप्रमोदस्तत्रासी-द्दत्तनामा वणिग्वरः ॥ १ ॥ स भद्राभार्यया सार्कं, भुञ्जानः सुखमुत्तमम् ॥ अरहन्नकनामानं, पुत्ररत्नमजीजनत् ॥ २ ॥ धर्ममार्हतमाकर्ण्यो-ऽर्हन्मित्राचार्यसन्निधौ ॥ विरक्तो व्रतमादत्त, दत्तः पत्नीसुतान्वितः ॥ ३ ॥ दत्तोऽरहन्नकं स्नेहा-दिष्टैर्भोज्यैरपोषयत् ॥ कदाचिदपि भिक्षार्थं, प्रेषयामास तं न तु ॥ ४ ॥ उत्तमर्ण इवानेन, किमयं पोष्यतेऽन्वहम् ॥ समर्थोऽपि च किं भिक्षा-चर्यामेष न कार्यते ? ॥ ५ ॥ ध्यायन्तोऽपीति निर्ग्रंथा, वक्तुं किमपि नाशकन् ॥ पुत्रं वा पालयन् वत्सा, निषेद्धुं केन शक्यते ? ॥ ६ ॥ [ युग्मम् ] निदाघसमयेऽन्येद्यु-र्दत्तः साधुर्व्यपद्यत ॥ तद्वियोगान्महादुःख- माससादाऽरहन्नकः ॥ ७ ॥ ततोऽन्ये संयतास्तात-विरहातुरचेतसे ॥ तस्मै द्वित्रान् दिनान् याव-दानीयाहारमार्पयन् ॥ ८ ॥ अथ तं यतयोऽवोचन्, भिक्षार्थं पर्यट स्वयम् ॥ नेदानीं पितृवत्कोऽपि, दास्यत्यानीय भोजनम् ॥ ९ ॥ दग्धोपरिस्थितात् पिटको- पमां वाचं निशम्य ताम् ॥ चचाल विमनाः सोऽथ, भिक्षायै मुनिभिः समम् ॥ १० ॥ अतीवसुकुमाराङ्गः, पूर्वमप्यकृतश्रमः ॥ तदा निदाघतापेन, पर्यभूयत सोऽधिकम् ॥ ११ ॥ ग्रीष्मार्ककिरणोत्तप्त-रेणुकानिकरेण सः ॥ अदह्यत पदोर्बाढं, मौलौ च तपनांशुभिः ॥ १२ ॥ पश्चात्स्थितोऽन्यसाधुभ्य-स्तृषा शुष्यन्मुखाम्बुजः ॥ महेभ्यसदनच्छायां, विश्रमाय स शिश्रिये ॥ १३ ॥ सौभाग्यमन्मथं तं च, तत्रस्थं तद्गृहेश्वरी ॥ धनाढ्यवणिजो भार्या-ऽपश्यत्प्रोषितभर्तृका ॥ १४ ॥ अचिंतयच्च सा रूप- महो ! अस्य मनोहरम् ॥ यद्दृष्टमात्रमपि मे, समाकृषति मानसम् ॥ १५ ॥ तदमुं रमयित्वा

स्वं, करोमि सफलं वयः ॥ ध्यात्वेति प्राहिणोद्दासीं, सा तदाह्वानहेतवे ॥ १६ ॥ दास्याहूतः सोऽपि तस्याः, मनसीव गृहेऽविशत् ॥ सापि हर्षभरोदञ्च–त्कुचकुम्भा तमभ्यगात् ॥ १७ ॥ पप्रच्छ च स्मितोन्मिश्र–दन्तांशुद्योतिताधरा ॥ समग्रसुभगोत्तंस !, किं याचति भवानिति ॥ १८ ॥ अथारहन्नकः स्माह, भिक्षामभ्यर्थये शुभे ॥ ततः सा व्यमृश-त्स्मेर–स्मरापस्मारविह्वला ॥ १९ ॥ वशीकरोम्यमुं स्निग्ध–मधुराहारदानतः ॥ स्वादुभोज्यं हि सर्वेषां, वशीकरणमुत्तमम् ॥ २० ध्यात्वेति सार्पयत्तस्मै, मोदकान् सुन्दरान् बहून् ॥ सोऽपि पर्यटनग्लानः, प्राप्य तान् मुमुदे भृशम् ॥ २१ ॥ पश्यन्ती स्निग्धया दृष्ट्या, सा प्रपच्छेति तं पुनः ॥ युवत्वेऽपि त्वया तीव्रं, किमर्थं व्रतमाददे ॥ २२ ॥ मुनिरूचे मया दीक्षा, जगृहे सौख्यहेतवे ॥ सुधामधुरया वाचा, ततः सा पुनरब्रवीत् ॥ २३ ॥ यद्येवं तन्मया सार्द्धं, भुङ्क्ष्व वैषयिकं सुखम् ॥ पालितायाः इयत्कालं, दीक्षायाः फलमाप्नुहि ॥ २४ ॥ कुरूपदुःस्थस्थविर– कर्कशाङ्गजनोचिताम्, इमां कष्टक्रियां मुञ्च, मुधा स्वं वञ्चयस्व मा ॥ २५ ॥ इदं गृहमियं लक्ष्मी–रयं परिजनोऽखिलः ॥ सर्वमेतत्त्वदायत्तं, यदि त्वं स्वीकरोषि माम् ॥ २६ ॥ लावण्याढ्यमिदं रूपं, शरीरं चेदमावयोः ॥ अन्योन्यसङ्गमादद्य, सफलत्वं प्रपद्यताम् ॥ २७ ॥ भवेद्यदि च दीक्षायां, भवतोऽत्यन्तमाग्रहः ॥ भुक्तभोगस्तदा भूयो, वार्द्धके तां समाचरेः ॥ २८ ॥ श्रुत्वेति तद्वचस्तस्याः, विभ्रमांश्च विलोक्य सः ॥ भग्नचित्तोऽभवत्को वा, कामिनीभिर्न भिद्यते ? ॥ २९ ॥ यदुक्तं–"दृष्टाश्चित्रेऽपि चेतांसि, हरन्ति हरिणीदृशः ! ॥ किम्पुनस्ताः स्मितस्मेर–विभ्रमभ्रमितेक्षणाः ! ॥ ३० ॥" ततः स्वीकृत्य तद्वाच– मवतस्थे स तद्गृहे ॥ तया साकं यथाकामं, रेमे चात्यन्तरक्तया ॥ ३१ ॥ अथ गोचरचर्यायां, वसतौ चाऽरहन्नकम् ॥ अप्रेक्षमाणा मुनयो–ऽन्वेषयन्निखिले पुरे ॥ ३२ ॥ तत्प्रवृत्तिमपि क्वापि, नालभन्त तथापि ते ॥ ततस्तन्मातुरार्याया–स्तं तद्वृत्तान्तमूचिरे ॥ ३३ ॥ वार्त्तां निशम्य तां पुत्र–शोकेनातिगरीयसा ॥ प्रणष्टचित्ता सा भूता–ऽऽविष्टेवोन्मत्ततामगात् ॥ ३४ ॥ ततोऽरहन्नकेत्युच्चै–र्विलपन्ती सगद्गदम् ॥ सा पुरे सकलेऽभ्राम्य– द्वृत्ता चेटकपेटकैः ॥ ३५ ॥ पन्थानमभिषिञ्चन्ती, नयनश्रवदश्रुभिः ॥ तमिस्रेणेव मोहेन, प्रस्खलन्ती पदे पदे ॥ ३६ ॥ दृष्टोऽरहन्नकः क्वापि, पुत्रो मे प्राणवल्लभः ? ॥ यं यं पश्यति तं तं च, पृच्छन्तीति पुनः पुनः ॥ ३७ ॥ कृतानुकम्पा सुजनै–र्हस्यमाना च दुर्जनैः ॥ दृष्टाऽरहन्नकेनोच्चै– र्गवाक्षस्थेन साऽन्यदा ॥ ३८ ॥ [ त्रिभिर्विशेषकम् ] प्रत्यभिज्ञाय तां प्रेक्ष्य, तदवस्थां च तादृशीम् ॥ स समुत्पन्ननिर्वेदः, स्वहृदीति व्यचिन्तयत् ॥ ३९ ॥ अहो ! मे निर्विवेकत्वमहो ! दुष्कर्मकारिता ॥ यदस्या वचनैस्त्यक्तं, मया मुक्तिप्रदं व्रतम् ॥ ४० ॥ दुस्सहे व्यसने माता, पातितेयमपीदृशे ॥ स्वात्मा च व्रतभङ्गेन, भवाब्धौ पातितो हहा ! ॥ ४१ ॥ इदानीमपि तन्मातुः, शोकमुन्मूलयाम्यहम् ॥ ध्यात्वेति स गृहात्तस्मा–न्निर्जगाम ससम्भ्रमः ॥ ४२ ॥ कुलाङ्गारोपमो मात–रसौ त्वामरहन्नकः ॥ नमतीति ब्रुवन् बाष्प–प्लुताक्षस्तां ननाम च ॥ ४३ ॥ तं वीक्ष्य स्वस्थचित्ता सा, सप्रमोदैवमब्रवीत् ॥ एतावन्ति दिनान्यस्थात् ?, कुत्र पुत्र ! भवानिति ॥ ४४ ॥ ततः प्रोवाच स प्राञ्च्यं, सर्वं व्यतिकरं निजम् ॥ तं श्रुत्वा साऽवदद्वत्स !, भूयः स्वीकुरु संयमम् ॥ ४५ ॥ तुच्छानां मर्त्यसौख्याना–मेतेषां हेतवे कृतिन् ! ॥ अनन्तदुःखदा मा स्म–स्वीकार्षीर्नरकव्यथाः ॥४६॥ सोऽशंसन्नैव शक्तोऽस्मि, पापोऽहं व्रतपालने ! ॥ ततो वदसि चेन्मातः !, करोम्यनशनं तदा ॥ ४७ ॥ तुष्टा भद्राऽभ्यधाद्भद्र !, तवैतदपि साम्प्रतम् ॥ नत्वनन्तभवभ्रान्ति–निमित्तं व्रतभञ्जनम् ॥ ४८ ॥ यदाहुः–"वरमग्गिंमि पवेसो, वरं विसुद्धेण कम्मुणा मरणं ॥ मा गहिअव्वयभंगो, मा जीअं खलिअसीलस्स ॥ ४९ ॥" ततः स योगं सावद्यं, प्रत्याख्याय महाशयः ॥ क्षमयित्वाऽखिलान् जन्तू–न्निन्दित्वा दुरितं निजम् ॥ ५० ॥ श्रित्वा चत्वारि शरणा–न्यादायाऽनशनं तथा ॥ गत्वा बहिर्दिनेशांशु–तापितामश्रयच्छिलाम् ॥ ५१ ॥ [ युग्मम् ] धर्मध्यानी पादपोपगमनं प्रतिपालयन् ॥ तामुष्णवेदनां सम्यक्, सहमानोऽतिदारुणाम् ॥ ५२ ॥ स साधुः सुकुमाराङ्गः, स्मरन् पञ्च नमस्क्रियाः ॥ व्यलीयत मुहूर्त्तेन, तत्र म्रक्षणपिण्डवत् ॥ ५३ ॥ [ युग्मम् ] इत्थमुष्णमधिसह्य स पश्चा– द्दत्तनन्दनमुनिस्त्रिदशोऽभूत् ॥ एवमेतदपरैरपि सम्यग्, मर्षणीयमृषिभिर्निरमर्षैः ॥५४॥ इत्युष्णपरीषहे अरहन्नकमुनिकथा ॥४॥

अथ ग्रीष्मे उष्णं तदनु च वर्षासु दंशमशकाः स्युरिति तत्परीषहमाह—

मूलम्—पुट्ठो अ दंसमसएहिं, समरेव महामुणी ॥ णागो संगामसीसे वा, सूरो अभिहणे परं ॥ १० ॥

व्याख्या–स्पृष्टोऽभिद्रुतः, चः पूर्त्तौ, दंशमशकैरुपलक्षणत्वाद्यूकामत्कुणादिभिश्च 'समरेवत्ति' सम एव शत्रुमित्रेषु तुल्यचित्त एव, प्राकृतत्वाद्विसर्जनीयस्य रेफः, महामुनिः 'णागो सङ्गामसीसे वत्ति' नाग इव करीव, वाशब्दस्येवार्थ-

स्यात्र सम्बन्धात् , संग्रामशिरसि रणमस्तके शूरः पराक्रमी अभिहन्यात् जयेत् परं शत्रुं, अयं भावः- यथा शूरः करी, शरैर्व्यथ्यमानोऽपि तानगणयन् रणशिरसि शत्रुं जयति, एवं मुनिरपि दंशाद्यैः पीड्यमानोऽपि भावविपक्षं क्रोधादिकं जयेदिति सूत्रार्थः ॥ १० ॥ कथं पुनर्भावरिपुं जयेदित्याह—

मूलम्—ण संतसे ण वारिज्जा, मणंपि ण पओसए॥ उवेह ण हणे पाणे, भुंजंते मंससोणिअं ॥ ११ ॥

व्याख्या—न संत्रसेन्नोद्विजेद्दंशादिभ्य इति शेषः, न वारयेन्न निषेधयेद्दंशादीनेव तुदतोऽपि माभूदन्तराय इति, तथा मनश्चित्तं तदपि आस्तां वचनादि न प्रदूषयेन्न प्रदुष्टं कुर्यात्, किन्तु 'उवेहत्ति' उपेक्षेत औदासीन्येन पश्येत्, अत एव न हन्यात् प्राणिनो जीवान् भुञ्जानान् भक्षयतो मांसशोणितं, किन्त्वाहारार्थिनोऽमी भोज्यं चैषां मम वपुर्बहुसाधारणं च यदि भक्षयन्ति तर्हि किमत्र प्रद्वेषेणेति चिन्तयेदिति सूत्रार्थः ॥ ११ ॥ उदाहरणञ्चात्र, तथाहि—

अस्त्यकम्पा पुरी चम्पा–भिधाना भूविभूषणम् ॥ तस्यां सान्वर्थनामासी–ज्जितशत्रुर्महीपतिः ॥ १ ॥ तस्य श्रमणभद्राह्वः, सूनुः सात्त्विकपुङ्गवः ॥ युवराजोऽजनि जग–ज्जनाह्लादनचन्द्रमाः ॥ २ ॥ धर्मघोषगुरोः पार्श्वे, धर्मं श्रुत्वा जिनोदितम् ॥ विरक्तः कामभोगेभ्यो, महात्मा सोऽग्रहीद्व्रतम् ॥ ३ ॥ श्रुताम्भोनिधिपारीणः, स प्रसादाद्गुरोरभूत् ॥ एकाकित्वविहाराख्यां, प्रतिमां च प्रपन्नवान् ॥ ४ ॥ निम्नभूमिप्रदेशेषु, विहरन् सोऽन्यदा मुनिः ॥ शरत्काले महाटव्यां, तस्थौ प्रतिमया निशि ॥ ५ ॥ सूचीसमानवदना–स्तत्र दंशा सहस्रशः ॥ विलग्य कोमले तस्य, शरीरे शोणितं पपुः ॥ ६ ॥ निरन्तरं विलग्नैस्तै–र्दंशैर्दशनतत्परैः ॥ स मुनिः स्वर्णवर्णोऽपि, लोहवर्ण इवाऽऽबभौ ॥ ७ ॥ दशत्सु तेषु तस्योच्चै–र्वेदनाऽऽसीत्तथापि सः ॥ तितिक्षामास तां क्षान्ति–क्षमो न तु ममार्ज तान् ॥ ८ ॥ अचिन्तयच्च दंशोत्था, व्यथाऽसौ कियता मम ॥ इतोऽप्यनन्तगुणिता, नरकेषु हि सा भवेत् ॥ ९ ॥ यतः—"परमाधार्मिकोत्पन्ना, मिथोजाः क्षेत्रजास्तथा ॥ नारकाणां व्यथा वक्तुं, पार्यन्ते ज्ञानिनाऽपि न ! ॥ १० ॥" किञ्च–अन्यद्वपुरिदं जीवा–ज्जीवश्चान्यः शरीरतः ॥ जानन्नपीति को दक्षः, करोति ममतां तनौ ? ॥ ११ ॥ किञ्चानेन शरीरेण, स्वल्पकालविनाशिना ॥ यद्येषां जायते तृप्तिः, किं न प्राप्तं ? तदा मया ॥ १२ ॥ भावयन्निति स प्राज्ञः, क्षममाणश्च तां व्यथाम् ॥ रात्रावेव जहौ प्राणान्, दंशैः शोषितशोणितः ॥ १३ ॥ इति विपद्य स दंशपरीषहं, श्रमणभद्रमुनिस्त्रिदशोऽभवत् ॥ तदपरैरपि साधुवरैरयं, जिनवचोनिपुणैः परिषह्यताम् ॥ १४ ॥ इति दंशमशकपरीषहे श्रमणभद्रश्रमणकथा ॥ ५ ॥

अथ दंशाद्यैः पीड्यमानेऽपि वस्त्रान्वेषणपरो न स्यादित्यचेलपरीषहमाह—

मूलम्—परिजुण्णेहिं वत्थेहिं, होक्खामित्ति अचेलए ॥ अदुवा सचेलए होक्खं, इइ भिक्खू ण चिंतए॥१२॥

व्याख्या—परिसमन्तात् जीर्णैर्दुर्बलैर्वस्त्रैः कल्पादिभिः 'होक्खामित्ति' भविष्यामि अचेलकश्चेलहीनोऽल्पदिनभावित्वादेषां, प्राच्यस्य 'इति' शब्दस्य भिन्नक्रमस्येह सम्बन्धात् इत्येतद्भिक्षुर्न चिन्तयेदिति योगः, 'अदुवत्ति' अथवा सचेलको भविष्यामि, परिजीर्णवस्त्रं हि मां दृष्ट्वा कश्चिदुपासकः सुन्दराणि वस्त्राणि दास्यतीति भिक्षुर्न चिन्तयेत्, अयं भावः- न जीर्णचेलोऽन्यचेलानां लाभासम्भावनया दैन्यं, लाभसम्भावनया वा प्रमोदं, गच्छेदिति सूत्रार्थः ॥ १२ ॥ यतः—

मूलम्—एगया अचेलओ होइ, सचेलेआवि एगया ॥ एअं धम्महिअं णच्चा, णाणी णो परिदेवए ॥१३॥

व्याख्या—एकदा जिनकल्पाद्यवस्थायां सर्वथा चेलाभावेन जीर्णादि वस्त्रतया वाऽचेलको भवति, सचेलकश्चापि एकदा स्थविरकल्पिकाद्यवस्थायां, ततः किमित्याह–एतदित्यवस्थौचित्येन सचेलत्वमचेलत्वञ्च धर्महितं साधुधर्मोपकारकं ज्ञात्वाऽवबुध्य, तत्राऽचेलत्वस्य धर्महितत्वमल्पप्रत्युपेक्षणादिना, सचेलकत्वस्य तु तथात्वमग्न्याद्यारम्भनिवारकत्वेनेति ध्येयं, ज्ञानी नो परिदेवयेत्, अचेलस्य मम शीतसम्पातसन्तापितस्य किमिदानी शरणमिति न दैन्यमालम्बेतेति सूत्रार्थः ॥ १३ ॥ उदाहरणम् सम्प्रदायश्चायमत्र, तथाहि—

अभूत्पुरे दशपुरे, सोमदेवो द्विजाग्रणीः ॥ तस्य भार्याऽभवद्रुद्र–सोमाह्वा परमार्हती ॥ १ ॥ तयोरभूतां द्वौ पुत्रौ, गुणरत्नमहोदधी ॥ तत्रार्यरक्षितो ज्येष्ठो, द्वितीयः फल्गुरक्षितः ॥ २ ॥ तत्राऽधीत्य पितुः पार्श्वे, तद्विद्यामार्यरक्षितः ॥ जगामाधिकविद्यार्थी, पाटलीपुत्रपट्टनम् ॥ ३ ॥ साङ्गवेदपुराणाद्याः, विद्यास्तत्र चतुर्दश ॥ अधीत्यागाद्दशपुरं, पुरं स स्वजनोत्सुकः ॥ ४ ॥ तमधीतचतुर्वेदं, ज्ञात्वाऽऽयातं नरेश्वरः ॥ अभिगम्य गजस्कन्धे–ऽध्यारोप्यावीविशत्पुरे ॥ ५ ॥ कृत्वोत्तम्भितकेतुं त–न्नगरं नागरा अपि ॥ अभ्याययुस्तं सर्वेऽपि, प्रौढप्राभृतपाणयः ॥ ६ ॥ सम्पूज्यमानः

सर्वेण, पूर्जनेन नृपेण च ॥ जगाम स्वगृहं बाह्य–शालामध्यवसच्च सः ॥ ७ ॥ पुरलोकेन राज्ञा चा–ऽर्च्यमानं तं धनादिना ॥ दृष्ट्वा तद्बन्धवो हृष्ट–मानसा बहुमानयन् ॥ ८ ॥ आवद्धतोरणं सद्यः, पौरैस्तन्मन्दिरं तदा ॥ रूप्यस्वर्णमणिधेनु–प्रभृतिप्राभृतैर्भृतम् ॥ ९ ॥ अथार्यरक्षितो दध्यौ, प्रमादाज्जननीं निजाम् ॥ यन्नाद्राक्षमहं पूर्वं, तद्विनीतस्य नोचितम् ॥ १० ॥ मद्वियोगाहृशां माता, कामप्यासा भविष्यति ॥ तदद्यापि निजां लक्ष्मीं, दर्शयन् मोदयामि ताम् ॥ ११ ॥ ध्यात्वेति स द्रुतं दिव्य–वस्त्राभरणभूषितः ॥ अन्तर्गेहमगात्स्वीयां, सवित्रीं प्रणनाम च ॥ १२ ॥ स्वागतं तव हे पुत्रे–त्युदित्वा मौनमाश्रिता ॥ उदासीनेव सा त्वस्थात्, प्रेमान्तर्बहु बिभ्रती ॥ १३ ॥ स्नेहोद्रेकं तदा मातु–रपश्यन्नित्युवाच सः ॥ चिरादेतं भक्तिमन्तं, मातर्मां भाषसे न किम् ? ॥ १४ ॥ अथेत्थं रुद्रसोमाख्य–त्किमेभिः स्वान्यनाशकैः ॥ हिंसोपदेशकैः शास्त्रै–रधीतैर्नरकप्रदैः ॥ १५ ॥ एतेषां च प्रभावेण, त्वां घोरे दुःखसागरे ॥ पतिष्यन्तं प्रपश्यन्त्याः, स्यादानन्दः कथं ? मम ॥ १६ ॥ मद्वाचि प्रत्ययश्चेत्ते, भक्तिश्च मयि विद्यते ॥ स्वर्गापवर्गदं वत्स !, दृष्टिवादं तदा पठ ॥ १७ ॥ अथार्यरक्षितो दध्या– वपि लोकप्रमोदिना ॥ तेनाधीतेन किं ? येन, जननी मे न तुष्यति ॥ १८ ॥ ध्यात्वेत्यम्बां स पप्रच्छ, दृष्टिवादः क्व पठ्यते ? ॥ साऽप्यवादीदृष्टिवादो–ऽधीयते साधुसन्निधौ ॥ १९ ॥ दर्शनानां विचारो यो, दृष्टिवादः स उच्यते ॥ तन्नामाऽप्यऽस्य शास्त्रस्य, दृश्यते सुन्दरान्वयम् ॥ २० ॥ इत्यार्यरक्षितो ध्यायन्, जगाद जननीमिति ॥ अध्येष्येऽहं दृष्टिवादं, त्वदादेशवशंवदः ॥ २१ ॥ [ युग्मम् ] सन्ति क्व पुनर्मे, दृष्टिवादस्य पाठकाः ॥ श्रुत्वेति रुद्रसोमा तं, साह हर्षोल्लसत्तनुः ॥ २२ ॥ त्वया विनीतपुत्रेण, सुपुत्रजननीष्वहम् ॥ नीता प्रथमतामेतं, मदादेशं चिकीर्षता ॥ २३ ॥ तद्गच्छ वत्स ! त्वरित–मिक्षुवाटमितो मम ॥ सूरींस्तोसलिपुत्राख्यान्, स्थितांस्तत्र समाश्रय ॥ २४ ॥ पाठयिष्यन्ति ते तुभ्यं, दृष्टिवादं महामते ! ॥ सोऽप्यूचे मातरध्येष्ये, प्रातर्गत्वा तदन्तिकम् ॥ २५ ॥ भावयन् दृष्टिवादार्थं, सोऽथ निश्यपि नाऽस्वपीत् ॥ आपृच्छ्याम्बां निशाशेषे, तमध्येतुं चचाल सः ॥ २६ ॥

इतश्च तत्पितुर्मित्रं, ग्रामे क्वाप्यभवद्विजः ॥ स चार्यरक्षितं श्रुत्वा–ऽऽयातं धाम्नीत्यचिन्तयत् ॥ २७ ॥ प्रमादेन सुहृत्पुत्रं, नाद्राक्षं गतवासरे ॥ पश्यामि तं तदद्यापि, मन्मनोम्भोजभास्करम् ॥ २८ ॥ ध्यात्वेति स द्विजः पूर्णा, इक्षुयष्टीर्नवोत्तमाः ॥ तत्खण्डं चैकमादायो– त्सुकस्तत्सदनं ययौ ॥ २९ ॥ निर्गच्छन्तं गृहादार्य– रक्षितं स निरैक्षत ॥ किन्तूपालक्षयत्स्पष्ट– प्रकाशाभावतो न तम् ॥ ३० ॥ कोऽसि त्वमिति भूदेवः, सोऽप्राक्षीदार्यरक्षितम् ॥ आर्यरक्षितनामाह–मस्मीति स्माह सोऽपि तम् ॥ ३१ ॥ अथावदद्विजो मित्र–पुत्र ! त्वां ह्यस्तने दिने ॥ नाद्राक्षमिति तज्जातं, दिनं मे वत्सरोपमम् ॥ ३२ ॥ इत्युक्त्वा सोमजं प्रेम्णा, समालिंग्य द्विजो जगौ ॥ त्वन्निमित्तं मयाऽऽनीता, गृहाणेक्षुलता इमाः ॥ ३३ ॥ सोऽवादीदिक्षुसन्दोहो, मन्मातुर्दीयतामयम् ॥ अहं तु देहचिन्तायै, बहिर्गच्छामि साम्प्रतम् ॥ ३४ ॥ मन्मातुश्चेति कथये– र्यद्गच्छन्नार्यरक्षितः ॥ मामेव पूर्वमद्राक्षी– त्कलितं ललितेक्षुभिः ॥ ३५ ॥ तेनेत्युक्तस्तदम्बायै, तत्सर्वं स द्विजोऽवदत् ॥ तच्छ्रुत्वा रुद्रसोमापि, निपुणेति व्यचिन्तयत् ॥ ३६ ॥ यत्सूनोः प्रस्थितस्याभू–न्निमित्तमिदमुत्तमम् ॥ तदसौ नव पूर्वाणि, साधिकानि पठिष्यति ॥ ३७ ॥ दध्यौ विशुद्धधीरार्य–रक्षितोऽपि पथि व्रजन् ॥ लप्स्येऽहं दृष्टिवादस्य, विभागान्नव साधिकान् ॥ ३८ ॥ अथेक्षुसदनं प्राप्तः, सोमसूरित्यचिन्तयत् ॥ अज्ञातवन्दनविधि– र्मध्ये गच्छाम्यहं कथम् ? ॥ ३९ ॥ तदिहाहं प्रवेक्ष्यामि, श्रमणोपासकैः समम् ॥ साधूनां वन्दनाचारं, यथा तेभ्योऽवधारये ॥ ४० ॥ विमृश्येति क्षणं याव–द्वार्यस्थादार्यरक्षितः ॥ तत्रागाद् ढङ्करश्राद्ध–स्तावद्वन्दनहेतवे ॥ ४१ ॥ सोऽविशद्वसतिं बाढ–स्वरं नैषेधिकी वदन् ॥ गर्जन्निर्वेर्यापथिकीं, प्रतिचक्राम च क्रमात् ॥ ४२ ॥ अभिवन्द्य ततः सूरीन्, मुनींश्च विधिपूर्वकम् ॥ पुरो गुरोरुपाविक्षत्, क्षितिं च प्रत्युपेक्ष्य सः ॥ ४३ ॥ अथार्यरक्षितस्तस्मा–दवधार्याखिलं विधिम् ॥ प्रविश्योपाश्रये सूरीन्, मुनींश्च विधिनाऽनमत् ॥ ४४ ॥ किन्त्वसौ ढङ्करश्राद्ध–मनत्वोपाविशद्यतः ॥ नव्यश्राद्धोऽयमिति तं, गुरवो विविदुस्ततः ॥ ४५ ॥ पप्रच्छुश्च तमाचार्यो, धर्मोऽस्मिस्ते कुतोऽभवत् ? ॥ सोऽप्यभ्यधान्मया धर्मः, श्राद्धादस्मादुपाददे ॥ ४६ ॥ तं वीक्ष्य मुनयोऽप्युच्चै–र्गुरून् व्यज्ञपयन्निति ॥ आर्यरक्षितभट्टोऽयं–रुद्रसोमात्मजः प्रभो ! ॥ ४७ ॥ चतुर्दशानां सद्विद्या–स्थानानामेष पारगः ॥ प्रावेशि पत्तने राज्ञा, गजारूढो गतेऽहनि ॥ ४८ ॥ अत्रागमनमप्यस्य, दुर्घटं वेदवेदिनः ॥ तदस्मिन् श्रावकाचारं, प्रेक्ष्य चित्रीयते मनः ! ॥ ४९ ॥ अथार्यरक्षितः सर्वं, स्ववृत्तान्तमुदीर्य तम् ॥ इति व्यजिज्ञपत्सूरीन्, पद्मकोशीकृताञ्जलिः ॥ ५० ॥

अध्येतुं दृष्टिवादं हि, पूज्यानहमशिश्रियम् ॥ तत्तदध्यापनेनोच्चैः, प्रसादः क्रियतां मयि ! ॥५१॥ तच्छ्रुत्वा सूरयोऽप्यूचु-र्यद्येवं तत्परिव्रज ॥ क्रमेण दृष्टिवादं ते, पाठयामो यथा वयम् ॥ ५२ ॥ सोमजन्माप्युवाचैवं, प्रव्राजयत मां द्रुतम् ॥ किन्तु स्थानादतोऽन्यत्र, गन्तव्यं सूरिपुङ्गवैः ॥ ५३ ॥ इह स्थितं हि मां राजा, स्वजनाः पूर्जनास्तथा ॥ दीक्षातः पातयिष्यन्ति, प्रसह्याप्यनुरागतः ॥ ५४ ॥ तच्छ्रुत्वा गच्छयुक्तास्ते, तमादायान्यतो व्रजन् ॥ अभूदाद्यमिदं शिष्य-चौर्यं ! श्रीवीरशासने ॥ ५५ ॥ ततः प्रव्राजयन्नार्य- रक्षितं मुनिपुङ्गवाः ॥ क्रमाच्चैकादशाङ्गानि, गुरुपार्श्वे पपाठ सः ॥ ५६ ॥ यावांस्तोसलिपुत्राणां, दृष्टिवादः स्फुटोऽभवत् ॥ तावन्तं तं च जग्राह, बुद्धिमानार्यरक्षितः ॥ ५७ ॥ श्रीवज्रस्वामिनो भूयान्, दृष्टिवादोऽस्ति सम्प्रति ॥ श्रुत्वेति सोऽचलद्वज्रा-श्रितां प्रति पुरीपुरीम् ॥ ५८ ॥ मार्गायातामथावंती- मासदत् सोमदेवभू. ॥ तत्र श्रीभद्रगुप्ताह्व- सूरिशक्रान्ननाम च ॥ ५९ ॥ ते सूरयोऽपि तं सर्व- गुणाढ्यं श्रुतपूर्विणः ॥ उपलक्ष्यालिलिङ्गुर्द्राक्, प्रमोदाच्चैवमूचिरे ॥ ६० ॥ धन्योऽसि कृतकृत्योऽसि, लब्धजन्मफलोऽसि च ॥ यत्त्यक्त्वा शासनं शैवं, जैनमङ्गीकृतं त्वया ! ॥ ६१ ॥ किञ्चाद्यानशनं कर्तु-मिच्छामि स्वल्पजीवितः ॥ ततस्त्वां प्रार्थये वत्स !, भव निर्यामको मम ॥ ६२ ॥ ततोऽङ्गीकृत्य तद्वाचं, तस्थौ तत्रार्यरक्षितः ॥ ते सूरयोप्यनशनं, विधायेति तमूचिरे ॥ ६३ ॥ एकत्रोपाश्रये वज्र-स्वामिना सह मा वसेः ॥ किन्तु स्थित्वा परत्र त्वं, पठेस्तस्यान्तिके श्रुतम् ॥ ६४ ॥ वसेद्वज्रेण सार्द्धं हि, यः सोपक्रमजीवितः ॥ एकामपि निशां नूनं, तेन साकं म्रियेत सः ॥ ६५ ॥ तद्वचः प्रतिपद्याथ, तान्निर्याम्य च सोमभू' ॥ पुरीमगाद्वज्रयुतां, वहिस्तस्थौ च तां निशाम् ॥ ६६ ॥ तस्याः क्षपायाः प्रान्ते च, वज्रोऽमुं स्वप्नमैक्षत ॥ मत्पात्रस्थं सावशेषं, पयः कोऽप्यऽतिथिः पपौ ॥ ६७ ॥ प्रातस्तं स्वप्नमाचख्यौ, साधूनां साधुसिन्धुरः ॥ तेषामजानतां सम्यक्, तदर्थञ्चैवमब्रवीत् ॥ ६८ ॥ आगन्ताद्य मुनिः कोपि, स च पूर्वगतं श्रुतम् ॥ अस्मत्पार्श्वात्सुधीः सर्वं, किञ्चिदूनं ग्रहीष्यति ॥ ६९ ॥ अथार्यरक्षितः प्रात-र्वज्राचार्यमवन्दत ॥ कुत आगास्त्वमिति ? तं, वज्रस्वाम्यपि पृष्टवान् ! ॥ ७० ॥ सोऽवक् तोसलिपुत्राह्व-सूरिपार्श्वादिहागमम् ॥ किमार्यरक्षितोऽसि ? त्व-मिति वज्रोऽपि तं जगौ ॥ ७१ ॥ एवमेवेति तेनोक्ते, वज्रसूरिरदोऽवदत् ॥ स्वागतं तव किन्तु त्वं, स्थितोऽसि क्व प्रतिश्रये ? ॥ ७२ ॥ सोऽवग् वहिः स्थितोस्मीति, ततो वज्रस्तमभ्यधात् ॥ वहिः स्थितं कथंकारं, त्वं पठिष्यसि ? सन्मते ! ॥७३॥ सोऽवादीत् भद्रगुप्ताह्व-सूरीन्द्रस्यानुशासनात् ॥ स्वामिन्नहमितो भिन्न-मुपाश्रयमुपाश्रयम् ॥ ७४ ॥ दत्तोपयोगं वज्रोऽपि, तन्निमित्तं विभाव्य च ॥ प्रोचे युक्तमिदं प्रोक्तं, तैः पूज्यैर्ज्ञानसागरैः ॥ ७५ ॥ अथाऽन्यवसतिस्थस्या-प्यार्यरक्षितसन्मुनेः ॥ श्रीमान् वज्रगुरुः पूर्वा-ऽध्यापनाय प्रचक्रमे ॥७६॥ ततोऽल्पेनापि कालेन, नव पूर्वाण्यधीत्य तम् ॥ दशमं पूर्वमध्येतुं, प्रवृत्तं गुरुरित्यवक् ॥७७॥ पूर्वस्य दशमस्याथ, यमकानि पठ द्रुतम् ॥ ततः पठितुमारेभे, विषमाण्यपि तानि सः ॥७८॥

---

१ दशम पूर्वमध्येतु, यैरधीतैः प्रभुर्भवेत् । यमकानीति तान्याहु, सूत्राणि परिकर्मण' ॥ ग्रन्थान्तरे 'यविकानि'' इति यमकस्थाने दृश्यते---इति गसञ्ज्ञकपुस्तके ।

इतश्च पितरावार्य-रक्षितस्य समुत्सुकौ ॥ इति प्राहिणुतां भूयः, सन्देशान् बहुभिर्जनैः ॥ ७९ ॥ आगच्छ कुलभानो ! त्वं, वत्सोद्योतं विधेहि नः ॥ त्वद्वियोगाद्यदस्माकं, दर्शरात्रीयते जगत् ॥ ८० ॥ इति सन्देशवचनै- र्यावदागान्न सोमभू' ॥ तावत्ताभ्यां तमाह्वातुं, प्रेषितः फल्गुरक्षितः ॥ ८१ ॥ सोऽप्यागत्य प्रणम्यार्य- रक्षितार्षिमदोऽवदत् ॥ किमेवं स्वकुटुम्बेऽपि, निर्मोहत्वं त्वयाऽऽदृतम् ? ॥ ८२ ॥ वैराग्याद्वा न ते रागो, यद्यपि स्वेषु विद्यते ॥ तथापि शोकमग्नांस्तान्, कारुण्येन समुद्धर ॥ ८३ ॥ किञ्चादातुं परिव्रज्या-मुत्सुकाः सन्ति बन्धवः ॥ तत्रागत्य ततस्तेषां, देहि मुक्तिप्रदं व्रतम् ॥ ८४ ॥ अथेति व्याजहारार्य-रक्षितः फल्गुरक्षितम् ॥ यदि सूनृतमेतत्स्यात्, तदा त्वं स्वीकुरु व्रतम् ॥ ८५ ॥ इति तेनोदितः प्राज्ञः, सोऽवदद्देहि मे व्रतम् ॥ ततस्तस्मै ददौ दीक्षां, भगवानार्यरक्षितः ॥८६॥ गन्तुं स्माह पुन' फल्गु- रक्षितोऽप्यार्यरक्षितम् ॥ गमनायोत्सुकः सोऽपि, श्रीवज्रं पृष्टवांस्ततः ॥ ८७ ॥ वज्रस्वामी ततोऽवादी-द्वत्स ! त्वं पठ मा व्रज ॥ निर्विण्णः सोऽथ यमकै-रित्यपृच्छत्पुनर्गुरून् ॥ ८८ ॥ कियन्मात्रं मयाऽधीतं, कियच्छेषं च वर्त्तते ॥ स्वामिन् ! दशमपूर्वस्ये-त्याख्याहि मम साम्प्रतम् ॥ ८९ ॥ ततः स्मित्वाऽवदत्सूरिः, पूर्वस्य दशमस्य हि ॥ विन्दुमात्रं त्वयाऽऽदायि, शेषं तु जलधेः समम् ॥ ९० ॥ अथार्यरक्षितः स्माह, श्रान्तोऽस्मि ! पठनादहम् ॥ पारं प्राप्तुं तदेतस्य, न शक्ष्याम्यम्बुधेरिव ॥ ९१ ॥ गुरुर्जगाद वत्स ! त्वं, सोद्यमोऽसि सुधीरसि ॥ नदस्य पारं त्वरितं, लप्स्यसे किं विषीदसि ? ॥ ९२ ॥ इत्थमुत्साहितोऽध्येतुं, प्रवृत्तोऽपि पुनः पुनः ॥ गन्तुं पप्रच्छ

स गुरुं, तं गुरुस्तु निषिद्धवान् ॥ ९३ ॥ अन्यदा स सहादाया–ऽनुजं गुर्वन्तिकं गतः ॥ इत्यूचेऽसौ मम भ्राता, मामाह्वातुमिहाययौ ॥ ९४ ॥ तदादिशत मां पूज्याः, श्रुत्वेति व्यमृशद्गुरुः ॥ रक्ष्यमाणोऽप्यसौ, कस्मा–द्गन्तुमुत्सहते? मुहुः ॥ ९५ ॥ विचिन्तयन्निति श्रीमान्, वज्रस्वामी गुणोदधिः ॥ श्रुतोपयोगं कृतवा–निति च ज्ञातवांस्ततः ॥ ९६ ॥ नाऽऽगन्ताऽसौ गतः सद्यः, स्वल्पमायुर्ममाऽपि च ॥ तदेतद्दशमं पूर्वं, मयि स्थास्यति निश्चितम् ॥ ९७ ॥ ज्ञात्वेत्यनुमतो गन्तुं, श्रीवज्रेणार्यरक्षितः ॥ पुरं दशपुरं फल्गु– रक्षितेन समं ययौ ॥ ९८ ॥ श्रुत्वा तमागतं रुद्र–सोमासोमौ नृपोऽपि च ॥ नागराश्च मुदागम्य, प्रणम्योपाविशन् पुरः ॥ ९९ ॥ तेषां हिताय सोप्युच्चै–र्विदधे धर्मदेशनाम् ॥ तांश्चाकर्ण्य महानन्द–मविन्दन्त नृपादयः ॥ १०० ॥ ततो भ्रातृव्यदौहित्र–स्नुषापुत्रादिभिः समम् ॥ रुद्रसोमाऽऽददे दीक्षां, सम्यक्त्वं पार्थिवः पुनः ॥ १०१ ॥ कथं पुत्रीस्नुषादीनां, पुरो नग्न इवाऽन्वहम् ॥ तिष्ठामीति ह्रिया सोम–देवो न प्राव्रजत्पुनः ॥ १०२ ॥ किन्तु स्वजनपुत्रादि–स्नेहपाशनियन्त्रितः ॥ शश्वत्तत्पार्श्व एवास्था–न्न त्वन्यत्र जगाम सः ॥ १०३ ॥ तच्चार्यरक्षिताचार्याः, प्रोचुरेवं मुहुर्मुहुः ॥ तात ! यूयं परिव्रज्य, फलं गृह्णीत जन्मनः ॥१०४॥ यज्ञसूत्रपदत्राण–छत्रशाटककुण्डिकाः ॥ चेन्मेऽनुमन्यसे तर्हि, प्रव्रजामीति सोऽप्यऽवक् ॥ १०५ ॥ यथाकथञ्चिद्वृद्धोऽयं, तार्य एवेति चिन्तयन् ॥ सूरिस्तदुररीकृत्य, सोमदेवमदीक्षयत् ॥ १०६ ॥ करणं चरणं चानु–वृत्तिमेव वितन्वता ॥ ग्राहणीयो मया तातो, ध्यात्वेति स्माह तं गुरुः ॥ १०७ ॥ सर्वेऽमी मुनयश्चोल–पट्टं परिदधत्यमी ॥ स्थविरत्वात्तु युष्माकं, शाटकोऽप्यनुमन्यते ! ॥ १०८ ॥ छत्रादिकं पुनर्नेत–दात्मनां बहु शोभते ! ॥ निशम्येति वचः सूरेः, सोमदेवमुनिर्जगौ ॥ १०९ ॥ गन्तुं शक्नोम्यहं नैव, पुत्र ! छत्रं विनाऽऽतपे ॥ विण्मूत्रोत्सर्जने शौचं, कथं स्यात्करकं विना ? ॥ ११० ॥ त्यजामि यज्ञसूत्रं च, विप्रत्वावेदकं कथम् ॥ पीडा च स्यात्कण्टकैर्मे, विनोपानहमध्वनि ॥१११॥ सूरिः स्माहाऽथ यद्येवं, तिष्ठत्वेतत्तदाऽखिलम् ॥ भवद्भिस्त्यज्यतां किन्तु, सर्वोऽप्यऽन्यः परिग्रहः ॥११२॥ ततः परिग्रहं सोऽन्य–मत्याक्षीदथ सूरयः ॥ बालान् किञ्चिच्छिक्षयित्वा–ऽन्यदा नन्तुं जिनान् ययुः ॥ ११३ ॥ ततस्तच्छिक्षिता बालाः, सोमदेवतपस्विनम् ॥ हित्वा क्षुल्लकपर्यन्तान्, सर्वसाधून् ववन्दिरे ॥ ११४ ॥ दर्शं दर्शं सोमदेवं, ते चैवं प्रोचिरे मिथः ॥ नाऽस्माभिर्वन्दनीयोऽयं, छत्रवान् स्थविरो मुनिः ॥ ११५ ॥ तच्छ्रुत्वा सोमदेवर्षी–रुष्टोऽभाषिष्ट तानिति ॥ अरे ! मत्पुत्रपौत्रादीन्, वन्दध्वे बालकानपि ॥ ११६ ॥ मां तु वृद्धं गुरोस्तात–मपि नो नमथाऽर्भकाः ! ॥ तत्किं मया परिव्रज्या, नोपात्ताऽद्यापि विद्यते ? ॥ ११७ ॥ बालाः प्रोचुर्दीक्षितस्य, भवेच्छत्रादिकं कथम् ॥ त्यक्तातपत्राः सर्वेऽपि, दृश्यन्ते साधवः खलु ! ॥ ११८ ॥ सोमोऽथ व्यमृशच्छावाः, अप्येवं शिक्षयन्ति माम् ॥ साध्वाचारविरुद्धं त–च्छत्रमेतज्जहाम्यहम् ॥ ११९ ॥ विचिन्त्येति जिनान्नत्वा–ऽऽगतान्सूरीनुवाच सः ॥ उद्वेजकेन सर्वेषां, छत्रेणानेन मे कृतम् ॥ १२० ॥ गुरुर्जगाद यद्येवं, तदा छत्रं विमुच्यताम् ॥ प्रबले त्वातपे धार्यः, कल्पको मस्तकोपरि ॥ १२१ ॥ गुरौ गतेऽन्यदा क्वापि, बालास्तच्छिक्षिताः पुनः ॥ तं विहायापरान्नेमु– स्तत्पृष्टाश्चैवमूचिरे ॥१२२॥ कमण्डलुधरत्वाद्धि, न त्वां वन्दामहे वयम् ॥ यत्कदापि यतेः पार्श्वे, नाऽपश्याम कमण्डलुम् ॥ १२३ ॥ तच्छ्रुत्वा सूरिमापृच्छ्य, स प्राग्वत्कुण्डिकां जहौ ॥ पात्रकेणैवाऽथ शौचं, कार्यं गुरुरपीत्यवक् ॥ १२४ ॥ पुनस्तथैव तं बाला, नाऽनमन् सूरिशिक्षिताः ॥ अवन्दननिदानञ्च, पृष्टास्तेनेति तं जगुः ॥ १२५ ॥ यज्ञोपवीतवन्तं नो, मुनिं मन्यामहे वयम् ॥ ततः सोमः सुतं पृष्ट्वो–पवीतमपि मुक्तवान् ॥ १२६ ॥ तन्मोक्षणक्षणे त्वेवं, प्रोचुः श्रीआर्यरक्षिताः ॥ एतन्मुञ्चत कोऽस्मान्, विप्रान्नो वेत्त्यदो विना ? ॥ १२७ ॥ इत्थं छत्रादिके तेन, त्यक्ते बालाः पुनर्जगुः ॥ न शाटकोपसंव्यान–मेनं वन्दामहे मुनिम् ॥ १२८ ॥ सोमदेवस्तदाकर्ण्य, अजल्पाऽनल्पकोपभाक् ॥ रे ! मा नमत मां यूयं, समं पितृपितामहैः ॥ १२९ ॥ येऽन्ये नमन्ति तैरेव, सन्तुष्टिर्मे भविष्यति ! ॥ कटीपट्टकमेनं तु, न त्यक्ष्यामि ! भवद्गिरा ॥१३०॥ तदाकर्ण्य ययुर्बालाः, अन्यदा च महामुनिः ॥ विहिताऽनशनः कोऽपि, तत्र गच्छे व्यपद्यत ॥१३१॥ तदा पितुः कटीपट्ट–त्याजनाय जगौ गुरुः ॥ अस्य देहं वहति य– स्तस्य लाभो भवेन्महान् ॥१३२॥ ततस्तच्छिक्षिताः पूर्वं–दीक्षिता भिक्षवः परे ॥ उदतिष्ठंस्तमुद्वोढुं, तदा चेत्यऽब्रवीद्गुरुः ॥ १३३ ॥ यूयं यदुत्थिताः सर्वे–ऽप्यमुं लाभं जिघृक्षवः ॥ तदस्मद्बन्धुवर्गोऽयं, निर्जरां लप्स्यते कथम् ? ॥ १३४ ॥ तदाकर्ण्य सकर्णोऽथ, सोमदेवमुनिर्जगौ ॥ किमत्र प्राप्यते पुत्र !, निर्जरा भूयसीतरा ? ॥ १३५ ॥ उवाच सूरिः कार्येऽस्मि–न्निर्जरा जायते भृशम् ॥ सोऽभ्यधादहमप्येनं, तद्वहिष्ये सहर्षिभिः ॥ १३६ ॥ गुरुर्जगौ बालकृतः, उपसर्गोऽत्र जायते ॥ तं चेत्सहितुमीशिध्वे, वहनीयस्तदा त्वयम् ॥ १३७ ॥

तं च चेन्न सहिष्यध्वे, तदा स्यात्सुन्दरं न नः ॥ इति शिक्षितः सोमो–ऽचालीत् सह साधुभिः ॥ १३८ ॥ तदा च तस्य पुरतो, गच्छन्तु बहुसाधवः ॥ तद्गुरुसर्गार्थमेताः, स्थितास्त्वाचार्यपृष्ठतः ॥ १३९ ॥ पूर्वसंकेतिता बालाः, सोम-देवमुनेर्द्रुतम् ॥ कटीपट्टकमाकृष्या–ऽऽदाय च त्वरितं ययुः ॥ १४० ॥ [ युग्मम् ] जातोऽत्र लज्जितः सोऽथ, परिस्कन्धं शयं त्यजन् ॥ उपसर्गं सहस्वाऽमुं, मा मुञ्च मृतकं कराद् ॥ १४१ ॥ ततस्तस्याऽन्यमुनिना, सानोपितान्यचोलकम् ॥ बद्धं दवरकेणोर्ध्व–न्निधाय कटिपट्टवत् ॥ १४२ ॥ पश्यन्ति मां सुताः पश्चा–दिति ह्रीणोऽपि तं तथा ॥ स उत्कृष्टोप-सर्गोऽसौ, जात इत्यवधारयन् ॥ १४३ ॥ परिधाप्य ततं पश्चा–दागतं वीक्ष्य तं गुरुः ॥ प्रोचे तात ! किमेतत्, प्रागः परिदधे ? लघु ॥ १४४ ॥ सोमः शशंस पुत्राऽद्यो–पसर्गोऽभूदुपरि मम ॥ गते च शाटके तेन, परिधां लघु चोलकम् ॥ १४५ ॥ ससम्भ्रमा इवाचार्या–स्तन्निशम्यैवमचिरं ॥ तातार्थमानयत भो–शिष्याः ! पृथु शाटकम् ॥ १४६ ॥ ततः सोमोऽवदत्ता-तपुत्र !, लज्जनीयं बभूव यत् ॥ तन्मेऽस्तु सर्वकालेऽपि–माऽस्तु कटिपट्टकः ॥ १४७ ॥ नग्नोऽस्त्वहं यथाऽस्तु, शाटकेन शमं मम ॥ इत्यूचानमनूचाना–स्तं तथैवाऽनुमेनिरे ॥ १४८ ॥ इत्युपसर्गतोऽल्पपट्टं, प्राप्तिः सुगिरीश्वरः ॥ सोमस्ततः परं सम्यक्, सेहेऽचेलपरीषहम् ॥ १४९ ॥ पश्चादनीवरपरिषहसेवनक, श्रीसोमदेवमुनिर्निर्गतिः स्मरन् ॥ नान्यैः परै-रपि तथा श्रमणैः स नित्यं, श्रीमज्जिनेन्द्रवचनान्यनुवर्त्तमानैः ॥ १५० ॥ इत्यचेलपरीषहे सोमदेवर्षिकथा ॥ ६ ॥

अचेलस्य चाऽप्रतिबद्धविहारिणः शीतादिभिः पीड्यमानस्याऽरतिरपि स्यादिति तत्परीषहमाह—

मूलम्–गामाणुगामं रीअंतं, अणगारं अकिंचणं । अरई अणुप्पविसे, तं तितिक्खे परीसहं ॥ १४ ॥

व्याख्या—ग्रामश्च जिगमिषतोऽनुग्रामश्च तन्मार्गानुकूलो ग्रामानुग्रामम्, उपलक्षणं चैतन्नगरादेः 'रीअंतंति' रीयमाणं विहरन्तं अनगारं मुनिं अकिञ्चनं निष्परिग्रहं, अरतिः संयमविषया धृतिः अनुप्रविशेत्तनानि कदाचित्प्रवेशा भवेत्, तं अरतिरूपं तितिक्षेत सहेत परीषहमिति सूत्रार्थः ॥ १४ ॥ तत्सहनोपायमाह—

मूलम्–अरइं पिट्ठओ किच्चा, विरए आयरक्खिए । धम्मारामे णिरारंभे, उवसंते मुणी चरे ॥ १५ ॥

व्याख्या—अरतिं पृष्ठतः कृत्वा धर्मविघ्नहेतुरियमिति तिरस्कृत्य विरतो निवृत्तो हिंसादेः, आत्मा रक्षितो दुर्गति-हेतोरपध्यानादेरनेनेत्यात्मरक्षितः, धर्मे श्रुतधर्मादौ आरमते रतिमान् स्यादिति धर्मारामः, निरारम्भोऽसत्क्रियाभ्यो निवृत्तः, उपशान्तः क्रोधाद्युपशमवान् मुनिश्चरेत्, संयमं परिपालयेत्र पुनरुत्पन्नारतिरपि सन् रत्यन्तराम स्यादिति सूत्रार्थः ॥ १५ ॥ कथानकश्चात्र तथाहि–

जितशत्रुरभूद्भूपः, पुरेऽचलपुरे पुरा ॥ तत्सुतो युवराड् दीक्षां, रथाचार्यान्तिकेऽग्रहीत् ॥ १ ॥ विहरन्तोऽन्यदा तेन, युवराजर्षिणा समम् ॥ पुण्यप्रथा रथाचार्या– स्तगरानगरीं ययुः ॥ २ ॥ तेषां स्वाध्यायशिष्यास्तु, विश्व-विख्यातकीर्त्तयः ॥ आर्यराधाभिधाचार्या, उज्जयिन्यां तदाऽभवन् ॥ ३ ॥ तच्छिष्याः केऽप्यनन्तीत–स्तगरानगरीं गताः ॥ रथाचार्यानवन्दन्त, ततस्तेरित्यपृच्छ्यत ॥ ४ ॥ आर्यराधा निराबाधा– स्सन्ति कच्चित्तपस्विनः ॥ कच्चिन्निरुपसर्गं वा–ऽवन्त्यां तिष्ठन्ति साधवः ? ॥ ५ ॥ ते प्रोचिरे सर्वमस्ति, भव्यं पूज्यप्रसादतः ॥ राट्पुरोधः–सुतौ किन्तु, तत्रोद्वेजयतो यतीन् ॥ ६ ॥ तच्छ्रुत्वा युवराजर्षिः, सोऽध्यासीदिति शुद्धधीः ॥ अवंतीनृप-पुत्रो यः, स भ्रातृव्यो भवेन्मम ॥ ७ ॥ असौ साधूनवज्ञाय, संसारे मा भ्रमेदिति ॥ आपृच्छ्य स्वगुरून् शीघ्र-मुज्जयिन्यां जगाम सः ॥ ८ ॥ आर्यराधान् प्रणम्याथ, तैर्निषिद्धोऽपि स स्वयम् ॥ ययौ भिक्षार्थमादाय, क्षुल्लकं गृहदर्शकम् ॥ ९ ॥ गच्छंश्च युवराजर्षिः, क्षुल्लकं तमदोऽवदत् ॥ वेश्म दर्शय मे ताव–न्नृपसून्वोर्मुनिद्विषः ॥ १० ॥ नृपाङ्गजगृहं तस्या–ऽदीदृशत् क्षुल्लकोऽपि सः ॥ प्राविशद्युवराजर्षि–रपि तत्र भयोज्झितः ॥ ११ ॥ तदा च तत्र क्रीडन्तौ, सुतौ राजपुरोधसोः ॥ अभूतां सङ्गतावेक–राशौ पापग्रहाविव ॥ १२ ॥ दृष्ट्वा तं चाऽऽगतं राज–परिवारोऽजनीदिति ॥ व्रजाऽन्यत्र मुने ! नो चेत्, त्वां कुमारौ हनिष्यतः ॥ १३ ॥ तदाकर्ण्यापि स पुरो, ययौ धैर्यनिधिर्मुनिः ॥ धर्म-लाभ इति प्रोच्चै–र्गाढस्वरमुवाच च ॥ १४ ॥ अयं क्रीडनकप्रायो, यदिहागान्मुनिः स्वयम् ॥ तदस्मद्भाग्ययोगेन, जातमद्याति शोभनम् ॥ १५ ॥ जल्पन्ताविति तौ राज–पुरोहितसुतौ शठौ ॥ तां मुनेर्गिरमाकर्ण्य, तदभ्यर्णमुपे-यतुः ॥ १६ ॥ [ युग्मम् ] अभ्यधत्तां च साधो ! त्वं, नर्त्तितुं बुध्यसे न वा ? सोऽवादीद्वेद्म्यहं नाट्यं, वाद्यं वादयतं युवाम् ॥ १७ ॥ आरेभाते ततस्तूर्य–ताडनं तौ यथातथा ॥ वाद्यं वादयितुं किन्तु, नाऽज्ञासिष्टां यथोचितम् ॥१८॥

ततो वाचंयमः प्रोचे, सम्यग् वादित्रवादनम् ॥ रे! कोलिकौ! न जानीथो, युवा जडशिरोमणी ॥ १९ ॥ तदाकर्ण्याति-रुष्टौ तौ, मुनिं हन्तुमधावताम् ॥ नियुद्धवेदी साधुस्तु, तावायान्तौ गृहीतवान् ॥ २० ॥ कुट्टयित्वा तदङ्गानि, सन्धिभ्यश्चोदतारयत् ॥ मुनिना हन्यमानौ तु, तौ चक्रन्दतुरुच्चकैः ॥ २१ ॥ श्रुत्वाऽऽक्रन्दांस्तदा दध्यौ, बहिःस्थस्तत्परिच्छदः ॥ हन्यमानः कुमाराभ्यां, नूनमाक्रन्दति व्रती ॥ २२ ॥ ऋषिद्विपोस्तयोरेवं, शिक्षां दत्वा गते मुनौ ॥ साशङ्कस्तत्परिकर-स्तयोः पार्श्वमगात्ततः ॥ २३ ॥ निश्चेष्टौ काष्टवद्धकु-मप्यशक्तौ गतौ भुवम् ॥ दशाऽतिदीनया प्रेक्षमाणौ सर्वं परिच्छदम् ॥ २४ ॥ तौ समीक्ष्य तथावस्थौ, सम्भ्रान्तस्तत्परिच्छदः ॥ न्यवेदयदुदन्तं तं, द्रुतं नृपपुरोधसोः ॥ २५ ॥ [ युग्मम् ] तदाकर्ण्यातिसम्भ्रान्तौ, सद्यो राजपुरोहितौ ॥ पुत्रयोर्दुरवस्थां तां, तत्रायातावपश्यताम् ॥ २६ ॥ परीवारगिरा ज्ञात्वा, मुनिमूलां दशां च ताम् ॥ जग्मतुर्यतिपार्श्वे तौ, क्षिप्रं क्षमापपुरोधसौ ॥ २७ ॥ इत्यूचतुश्च नत्वा श्री-आर्यराधपदाम्बुजान् ॥ पूज्याः! प्रसीदतेदानीं, पुत्रौ जीवयताऽऽवयोः ॥ २८ ॥ आर्यराधा जगुर्भूप!, वेद्म्यहं नात्र किञ्चन ॥ प्राघूर्णकमसुं किन्तु, प्रसादय महामुनिम् ॥ २९ ॥ भूपोऽप्युत्थाय तत्पार्श्वे, गत्वा नत्वा च तं मुनिम् ॥ उपाविशत्पुरस्तस्य, प्रत्यभिज्ञातवांश्च तम् ॥ ३० ॥ एवञ्चोवाच हे भ्रातः!, स्वभ्रातृव्यं पटूकुरु ॥ ततो मुनिर्जगादेत्थं, तस्य कल्याणकाम्यया ॥ ३१ ॥ यत्त्वं स्वपुत्रभाण्डाना-मपि साधु विडम्बिनाम् ॥ शिक्षां दातुं न शक्नोषि, तत्सौराज्यं धिगस्तु! ते ॥ ३२ ॥ राज्ञा न्यायवता लोकं, सामान्यमपि पीडयन् ॥ निग्राह्यः खलु पुत्रोऽपि, किम्पुनः साधुबाधकः! ॥ ३३ ॥ अथाऽभ्यधान्नृपो भ्रात-र्मन्तुमेनं क्षमस्व मे ॥ अनुकम्पस्व चेदानीं, तौ बालौ दुर्दशां गतौ ॥ ३४ ॥ मुनिः प्रोवाच यद्येता-वाददाते व्रतं हितम् ॥ तदा तौ सजयामि द्राक्, कुमारौ नान्यथा पुनः ॥ ३५ ॥ पुरोहितेन राज्ञा च, प्रतिपन्नेन तद्वचः ॥ पृष्टौ कुमारौ तौ दीक्षा-ऽऽदानं स्वीचक्रतुस्तदा ॥ ३६ ॥ ततः स युवराजर्षिः, प्राक् कृत्वा लुञ्चनं तयोः ॥ पश्चात्तौ सजयामास, दीक्षयामास च द्रुतम् ॥ ३७ ॥ तत्र पृथ्वीपतेः पुत्रो, निश्शङ्कोऽपालयद्व्रतम् ॥ मुहुर्जातिमदं चक्रे, पुरोहितसुतः पुनः ॥ ३८ ॥ प्रद्वेषादिति दध्यौ च, स दीक्षां पालयन्नपि ॥ अहो! अनेन मुनिना, दीक्षितोऽस्मि बलादहम् ॥ ३९ ॥ ततो दुर्लभबोधित्वं, पुरोधः सूनुरार्जयत् ॥ क्रमाद्द्वावपि तौ कालं, कृत्वा देवौ बभूवतुः ॥ ४० ॥ इतश्च पुर्यां कौशाम्ब्यां, श्रेष्ठ्यभूत्तापसाभिधः ॥ स मृत्वा स्वगृहे जज्ञे, लोभावेशेन शूकरः ॥ ४१ ॥ स स्वसौधादिकं दृष्ट्वा, जातजातिस्मृतिः किरिः ॥ निजघ्ने तत्सुतैरेव, तस्य श्राद्धदिनेऽन्यदा ॥ ४२ ॥ ततो रसावशावेणी-कल्पः स्वगृह एव सः ॥ भुजगोऽजनि जातिं च, सस्मार प्राग्वदात्मनः ॥ ४३ ॥ भ्रमन्नयं गृहान्तर्नो, मावधीदिति चिन्तिभिः ॥ सुतैरेव हतः सोऽहिः, स्वसूनोस्तनयोऽभवत् ॥ ४४ ॥ प्राग्वज्जातिस्मृतिं प्राप्तो, मूकत्वं स्वीचकार सः ॥ स्नुषामम्बां सुतं तातं, कथं? वच्मीति चिन्तयन् ॥ ४५ ॥ उपायैः प्रचुरैर्मातापितृभ्यां विहितैरपि ॥ मायामूकस्य तस्याऽगा-न्न मूकत्वं कदाचन ॥ ४६ ॥ अशोकदत्त इत्यासी-त्तस्याह्वा तातनि-

१ रसा पृथ्वी एव वशा स्त्री तस्या वेणीकल्पः ॥

र्मिता ॥ लोकास्तु तमजल्पंत-मजल्पन्मूकनामकम् ॥ ४७ ॥ ज्ञात्वा ज्ञानेन मूकस्य, प्रतिबोधमथाऽन्यदा ॥ चतुर्ज्ञानधरास्तत्र, स्थविराः समवासरन् ॥ ४८ ॥ तैश्च मूकगृहे श्रेष्ठौ, श्रमणौ प्रहितावुभौ ॥ तच्छिक्षितामिमां गाथां, पुरो मूकस्य पेठतुः ॥ ४९ ॥ "तावस! किमिमिणा१ मूअ-वएण पडिवज्ज जाणितुं धम्मं ॥ मरिऊण सूअरोरग, जाओ पुत्तस्स पुत्तोत्ति ॥ ५० ॥" श्रुत्वेति विस्मितो मूक-स्तौ प्रणम्येति पृष्टवान् ॥ एतद्युवां कथं वित्थ-स्ततस्तावित्यवोचताम् ॥ ५१ ॥ इहोद्याने स्थिता अस्म-द्गुरवो हि विदन्त्यदः ॥ ताभ्यां सह ततो मूको, गत्वोद्यानेऽनमद्गुरून् ॥ ५२ ॥ श्रुत्वा तद्देशनां पाप-पंकप्लावनवाहिनीम् ॥ स तापसश्रेष्ठिजीवः, श्राद्धधर्ममुपाददे ॥ ५३ ॥ इतश्च जातिमदकृ-त्पुरोहितसुतोऽमरः ॥ महाविदेहे सर्वज्ञ-मित्यपृच्छत्कृताञ्जलिः ॥ ५४ ॥ अहं किमस्मि? सुप्राप-बोधिस्तदितरोऽथ वा ॥ जिनो जगाद देव! त्व-मसि दुर्लभबोधिकः ॥ ५५ ॥ सुरोऽपृच्छत्पुनः सार्वं, क्कोत्पत्स्येऽहमितश्च्युतः ॥ जिनो जगौ त्वं कौशाम्ब्यां, मूकभ्राता भविष्यसि ॥ ५६ ॥ धर्मावाप्तिश्च ते मूका-द्भाविनीति निशम्य सः ॥ जिनं प्रणम्य कौशाम्ब्यां, मूकोपान्तमगात्सुरः ॥ ५७ ॥ दत्वा तस्मै बहुद्रव्यं, तमित्यूचे च सोऽमरः ॥ अहं त्वन्मातुरुत्पत्स्ये, गर्भे स्वर्गात्परिच्युतः ॥ ५८ ॥ अकालेऽपि तदा तस्याः, भावी माकन्ददोहदः ॥ सदाफलाम्रस्तद्धेतो-रोपितोऽस्ति मया गिरौ ॥ ५९ ॥ आम्राणि याचते सा च, यदा तद्दोहदाकुला ॥ अक्षराणि पुरस्तस्या-स्त्वमेतानि लिखेस्तदा ॥ ६० ॥ गर्भस्थमङ्गजमिमं, मातर्मह्यं ददासि चेत् ॥ ददे तदानीमानीय, सहकारफलानि ते ॥ ६१ ॥ इदं तस्यां प्रपन्नायां, समानीय ततो

-गिरेः ॥ फलानि तस्य चूतस्य, तस्यै दद्या महामते ! ॥ ६२ ॥ मां च जातं स्वसात्कृत्वा, जैनं धर्मं विबोधयेः ॥ न पुनस्त्वमुपेक्षेथा, देवभूयं गतोऽपि माम् ॥ ६३ ॥ किञ्च वैताढ्यनिलयार्ह-चैत्यपुष्करिणीजले ॥ न्यस्तमस्ति स्वनामाङ्कं, कुण्डलद्वितयं मया ॥ ६४ ॥ बहूपायैरनुत्पन्न-प्रतिबोधस्य मे पुनः ॥ तद्दर्शनीयं भवता, स्वर्गलोकमुपेयुषा ॥ ६५ ॥ इति तद्वचने तेन, मूकेनाऽङ्गीकृते सति ॥ पुरोहितसुतः स्वर्गी, स्वस्थः स्वस्थानमासदत् ॥ ६६ ॥ स चान्यदा दिवश्च्युत्वा, मूकाम्बाकुक्षिमाययौ ॥ तस्याश्चाभूदकालेऽपि, तदाम्रफलदोहदः ॥ ६७ ॥ तं ज्ञात्वेत्यलिखन्मूक-स्तदग्रे स्मृतदेवगीः ॥ चेन्मे गर्भममुं दत्से, तदाऽऽम्राणि समानये ॥ ६८ ॥ तद्वचः प्रतिपन्नाया-स्तस्या देवोक्तपर्वतात् ॥ आनीयाऽऽम्राणि मूकोऽपि, तं दोहदमपूरयत् ॥ ६९ ॥ सम्पूर्णदोहदा साऽथ, समये सुषुवे सुतम् ॥ तस्याऽर्हद्दत्त इत्याऽऽह्वां, पितरौ चक्रतुर्मुदा ॥ ७० ॥ ततः स मूकस्तं बाल-सोदरं लालयन् स्वयम् ॥ धर्माभ्यासकृते चैत्यो-पाश्रयेष्वनयत्सदा ॥ ७१ ॥ मुनीन् वन्दयितुं मूको, नीचैश्चक्रे च तं बलात् ॥ स तु वीक्ष्य मुनीनुच्चै-ररोदीन्न त्ववन्दत ॥७२॥ नीतोप्युपाश्रये तेन, मोदकाद्यैः प्रलोभ्य सः ॥ यतिदर्शनतोऽनश्यत्, करभादिव सैरिभः ॥ ७३ ॥ मूकेनोक्तोऽपि बहुधा, साधूनां गन्धमप्यसौ ॥ न सेहे कुग्रहग्रस्त, इव मन्त्रितगुग्गुलोः ॥ ७४ ॥ परिश्रान्तस्ततो मूकः, प्राव्राजीत्सा धुसन्निधौ ॥ प्रपाल्य संयमं स्वर्गं, गतः प्रायुङ्क्त चाऽवधिम् ॥ ७५ ॥ सानुजं तमपश्यच्च, परिणीतचतुष्प्रियम् ॥ तत्पूर्व-

१ उद्भ्रान्तमहिष इव ॥

भववाक्यं चा-स्मार्षीत्स्वीकृतमात्मना ॥ ७६ ॥ दुर्बोधस्य ततस्तस्य, प्रतिबोधाय सोऽमरः ॥ पाथः पूर्णदृतिप्रायं, प्रोच्चैश्चक्रे जलोदरम् ॥ ७७ ॥ उत्थातुमपि तद्भारा-दर्हद्दत्तः शशाक न ॥ जहुर्वैद्याश्च सर्वेऽपि, तं चिकित्सितुमक्षमाः ॥७८॥ सद्यः समग्ररोगान्तं, करोमीत्युच्चकैर्वदन् ॥ ततोऽभ्रमत्पुरे तत्र, स देवो वैद्यरूपभृत् ॥ ७९ ॥ अर्हद्दत्तोऽथ तं वीक्ष्य, सद्यः स्माह कृताञ्जलिः ॥ नीरुजं कुरु मां वैद्य !, व्यपनीय जलोदरम् ॥ ८० ॥ निजगादाऽगदङ्कारो, गदोऽसाध्योऽयमस्ति ते ॥ तथापि शमयाम्येन-मुपायैर्विविधैरहम् ॥ ८१ ॥ किन्तु भेषजशस्त्रादे-रमुं कोत्थलकं मम ॥ यावज्जीवं समुत्पाट्य, त्वया सेव्योऽहमन्वहम् ॥ ८२ ॥ ततो रोगी जगौ रोग-मेनं हृतवतस्तव ॥ सेवकोऽस्मि विना मूल्यं, क्रीतः किं ? भूरिभाषितैः ॥ ८३ ॥ नीतो नीरोगतां माया-भिषजा भेषजैस्ततः ॥ तद्दासत्वमुरीकृत्य, तेन साकं चचाल सः ॥ ८४ ॥ उत्पाटनार्थं तस्याथ, शस्त्रकोत्थलकं निजम् ॥ देवो ददौ महाभारं, निर्ममे तं च मायया ॥ ८५ ॥ अर्हद्दत्तोऽपि तं भूरि-भारमन्वहमुद्वहन् ॥ इति दध्यौ कथमयं, मया शश्वद्वहिष्यते ? ॥ ८६ ॥ वाग्बद्धश्च कथङ्कारं, भारमेनं जहाम्यहम् ॥ चिन्तयन्निति सोऽचाली-द्वीवधानतकन्धरः ॥ ८७ ॥ ददर्श चाऽन्यदा क्वापि, साधून्स्वाध्यायतत्परान् ॥ तदा तं वीवधोद्विग्न-मेवं मायाभिषग् जगौ ॥ ८८ ॥ प्रव्रज्यां यदि गृह्णासि, तदा त्वं मुच्यसे मया ॥ स निशम्येति

१ अत्रानिट्त्वादिटा न भाव्यम्, तथापि सर्वेषां धातूनां विकल्पितेट्त्वं [ धूगौदित'-४-४-३८ ] इति सूत्रे 'बहुलमेकेषां विकल्पः' इति मतान्तरप्रदर्शनेन समर्थितवन्त' श्रीहेमचन्द्रसूरयः ॥

तद्वाणी-मित्यभाणीद्भरार्दितः ॥ ८९ ॥ वाहं वाहममुं भारं, वज्रसारमहर्निशम् ॥ कुब्जीभूतोऽस्म्यहं तन्मे, साम्प्रतं साम्प्रतं व्रतम् ॥ ९० ॥ ततो मायागदङ्कार-स्तं निन्ये मुनिसन्निधौ ॥ तस्मै प्रदाप्य दीक्षां च, स्वयं स्वर्लोकमीयिवान् ॥९१॥ गते देवे व्रतं हित्वा-ऽर्हद्दत्तोऽगान्निजं गृहम् ॥ सुरोऽप्यवधिनाऽज्ञासी-त्तं प्रव्रज्यापरिच्युतम् ॥ ९२ ॥ ततो जलोदरव्याधि-बाधितं तं व्यधात्पुनः ॥ तथैव परिपाट्या च, दीक्षयामास निर्जरः ॥ ९३ ॥ मूकदेवे गतेऽत्याक्षी-दर्हद्दत्तः पुनर्व्रतम् ॥ तृतीयवारमप्येवं, व्रतमादाय सोऽमुचत् ॥ ९४ ॥ अथो चतुर्थवेलायां, पुनः प्रव्राज्य तं सुरः ॥ तत्स्थिरीकरणायाऽस्था-न्नित्यं तत्पार्श्व एव सः ॥ ९५ ॥ सुरस्तत्प्रतिबोधाय, तृणभारधरोऽन्यदा ॥ प्रवेष्टुं प्रज्वलद्ग्रामे, समं तेन प्रचक्रमे ॥ ९६ ॥ दक्षंमन्यस्ततो देव-मर्हद्दत्तोऽब्रवीदिदम् ॥ मध्ये प्रदीपनं यासि, तृणभारं ददत्कथम् ? ॥ ९७ ॥ देवोऽवक् वेत्सि यद्येत-र्हि कोपादिपावकैः ॥ जाज्वल्यमानं विशति, गृहवासं कुतो भवान् ? ॥ ९८ ॥ तन्निशम्याप्यबुद्धं तं, सहादाय पुरो व्रजन् ॥ मुक्त्वा मार्गं सुरोऽचाली-दुत्पथेनाऽटवीं प्रति ॥ ९९ ॥ ततो दुर्लभबोधिस्त-मिति प्रोवाच साग्रहम् ॥ हित्वाऽध्वानमरण्यानीं, प्रविशस्युत्पथेन किम् ? ॥ १०० ॥ स्वर्गी जगाद यद्येत-ज्जानासि त्वं तदा कुतः ? ॥ विहाय मुक्तिपन्थानं, विविक्षसि भवाटवीम् ॥ १०१ ॥ तदाकर्ण्याप्यबुद्धेन, तेन सार्धं सुधाशनः ॥ अनिर्वेदः श्रियां मूल-मिति ध्यायन् पुरो ययौ ॥ १०२ ॥ व्यन्तरं पूजितं सन्तं,

१ योग्यम् ॥

निपतन्तमधोमुखम् ॥ अर्हद्दत्तः क्वचिच्छैले–ऽद्राक्षीद्दिव्यानुभावतः ॥ १०३ ॥ ततः स विस्मयामर्ष–प्रकर्षावेशसङ्कुलः ॥ असुना वाक्यबाणेन, मुखचापमयोजयत् ॥ १०४ ॥ यथा यथाऽर्च्यते लोकै–र्व्यन्तरोऽसौ तथा तथा ॥ पतत्यधोमुखो नीचै–रुच्चैः संस्थापितोऽपि यत् ॥ १०५ ॥ तस्मादस्मादधन्योऽन्यो, न दृष्टः कोऽपि भूतले ॥ इत्यूचानं च तं साधु–मेवं देवोऽवदत्पुनः ॥ १०६ ॥ [ युग्मम् ] यदुच्चैः संयमस्थाने, स्थापितोऽपि पुनः पुनः ॥ पूज्यमानोऽपि लोकैश्च, ततोऽधः पतसि द्रुतम् ॥ १०७ ॥ तस्मात्त्वमप्यधन्योऽसि, रे दुर्बोधशिरोमणे ! ॥ तदाऽऽकर्ण्यातिसम्भ्रान्तो–ऽर्हद्दत्तः पृष्टवानिति ॥ १०८ ॥ भूयो भूयो वदन्नेवं, कोऽसि ? त्वमिति मे वद ॥ ततः सुरो मूकरूपं, दर्शयित्वेत्युवाच तम् ॥ १०९ ॥ शृणु भ्रातः ! सुरः श्रीमा–नासीस्त्वं पूर्वजन्मनि ॥ तदा च भवता मह्य–मित्यभूत्प्रतिपादितम् ॥ ११० ॥ भवत्सहोदरत्वेनो–त्पन्नं च्युत्वा त्रिविष्टपात् ॥ बोधयेर्जैनधर्मे मां, त्वं प्राप्तोऽपि सुरालयम् ॥ १११ ॥ इति त्वदुक्तं च मया, तदासीत्स्वीकृतं यतः ॥ त्वां विबोधयितुं देवी–भूतोऽप्यत्राऽऽगमं ततः ॥ ११२ ॥ स्वीकृत्याऽपि ततो धर्मं, मा विमुञ्च मुहुर्मुहुः ॥ निशम्येति मरुद्वाक्य–मर्हद्दत्तोऽब्रवीदिदम् ॥ ११३ ॥ देवोऽहं प्राग्भवेऽभूवं, यत्तत्र प्रत्ययो नु कः ? ॥ ततो देवस्तमादाय, ययौ वैताढ्यपर्वतम् ॥ ११४ ॥ कुण्डलद्वितयं तेन, प्रोक्तपूर्वं स निर्जरः ॥ तन्नामाङ्कं समाकृष्य, पुष्करिण्या अदर्शयत् ॥ ११५ ॥ तद्वीक्ष्य स्वाभिधानाङ्कं, जातिस्मरणमाप सः ॥ लब्धबोधिस्ततो भाव–संयमं प्रत्यपद्यत ॥ ११६ ॥ स्थापयित्वेति तं धर्मे, स्वस्थानं त्रिदशो ययौ ॥ अर्हद्दत्तोऽपि तदनु–सेहेऽरतिपरीषहम् ॥ ११७ ॥ प्राप्यबोधममरादिति यद्व–त्संयतोऽरतिपरीषहमेषः ॥ सोढवान् शमधनैरपरैर–प्येवमेव स सदा सहनीयः ॥ ११८ ॥ इत्यरतिपरीषहे अर्हद्दत्तमुनिकथा ॥ ७ ॥

उत्पन्नसंयमारतेश्च स्त्रीभिः प्रार्थ्यमानस्य तदभिलाषः स्यादिति स्त्रीपरीषहमाह—

मूलम्— संगो एस मणुस्साणं, जाओ लोगंमि इत्थीओ ।
जस्स एआ परिण्णाया, सुकडं तस्स सामण्णं ॥ १६ ॥

व्याख्या—सङ्गो लेप एष वक्ष्यमाणो मनुष्याणां मक्षिकाणामिव श्लेष्मा, तमेवाह–याः काश्चन मानुष्याद्या लोके जगति स्त्रियो युवतयः, एता हि हावभावादिभिरत्यन्तासक्तिहेतवो मनुष्याणामित्येवमुक्तं, अन्यथा गीताद्यपि सङ्गहेतुरेव, मनुष्यग्रहणं च तेषामेव मैथुनसंज्ञातिरेकात्, ततः किमित्याह– यस्य यतेरेताः स्त्रियः परिज्ञाता ज्ञपरिज्ञया अत्रामुत्र च महानर्थहेतुतया विदिताः, प्रत्याख्यानपरिज्ञया च प्रत्याख्याताः, 'सुकडंति' सुष्ठुकृतं 'तस्सत्ति' विभक्तिव्यत्ययात्तेन श्रामण्यं चारित्रं, अयं भावः–अवद्यहेतुत्यागो हि व्रतं, रागद्वेषावेव चावद्यहेतू, न च स्त्रीभ्यः परं रागद्वेषमूलमस्तीति स्त्रीप्रत्याख्यान एव श्रामण्यं सुकृतं भवतीति सूत्रार्थः ॥ १६ ॥ अतः किं विधेयमित्याह—

मूलम्— एअमादाय मेहावी, पंकभूआ उ इत्थीओ ॥ नो ताहिं विणिहणेज्जा, चरेज्जत्तगवेसए ॥ १७ ॥

व्याख्या–एतमनन्तरमुक्तं वक्ष्यमाणञ्चार्थमादाय बुद्ध्या गृहीत्वा मेधावी तमेवाह– पङ्कः कर्दमस्तद्भूता एव मुक्तिपथप्रवृत्तानां विघ्नकरत्वेन मालिन्यहेतुत्वेन च तदुपमा एव, तुरवधारणे, स्त्रियो भवन्तीत्यवधार्य नो नैव ताभिः स्त्रीभिः 'विणिहणिज्जत्ति' विनिहन्यात् संयमजीवितोपघातेन अतिपातयेदात्मानमिति शेषः । कृत्यमाह— चरेद्धर्मानुष्ठानं सेवेत, आत्मगवेषकः कथं मयाऽऽत्मा संसारान्निस्तारणीय इत्यभिप्रायवानिति सूत्रार्थः ॥ १७ ॥ उदाहरणञ्चात्र, तथाहि—

उदायिभूपोपज्ञेऽभूत्, पाटलीपुत्रपत्तने ॥ नन्दवंशे कृतानन्दो, नवमो नन्दभूपतिः ॥ १ ॥ कल्पकान्वयजोऽनल्प–बुद्धितल्पो विकल्पवित् ॥ तस्यासीच्छकटालाह्वो, मन्त्री जिष्णोरिवाङ्गिरा ॥ २ ॥ तस्य लक्ष्मीवती पत्नी, विष्णोर्लक्ष्मीरिवाऽभवत् ॥ स्थूलभद्रश्रीयकाह्वौ, द्वावभूतां तयोः सुतौ ॥ ३ ॥ यक्षा यक्षदत्ता भूता, भूतदत्ता च सेनिका ॥ वेणा रेणेति संज्ञाश्च, सुताः सप्ताऽभवंस्तयोः ॥ ४ ॥ यक्षा दक्षाऽग्रहीत्तासु, श्रुतं सकृदपि श्रुतम् ॥ एकैकवारवृद्ध्याऽन्या, अप्येवं जगृहुर्द्रुतम् ॥ ५ ॥ यावद्रेणा सप्तकृत्वः, काव्याद्याकर्ण्य सत्वरम् ॥ निर्ममे कण्ठपीठस्थं, स्वाभिधानमिवोच्चकैः ॥ ६ ॥ रूपेणाप्रतिरूपेण, दत्तपत्रा रतेरपि ॥ लावण्यपुण्या पण्यस्त्री, तत्र कोशाभिधाऽभवत् ॥ ७ ॥ स्थूलभद्रः कलाचार्या–दधीत्य सकलाः कलाः ॥ कोशां वीक्ष्यानुरक्तस्तां, तस्थौ तस्या निकेतने ॥ ८ ॥ भूरिभूरिप्रदानैस्तां, स स्वीचक्रे कलानिधिः ॥ तस्या मानसमप्यात्मा–यत्तं चक्रे गुणैर्निजैः ॥ ९ ॥ अहो ! श्रीस्थूलभद्रस्य, सौभाग्यं जगदुत्तमम् ॥ तन्मयीवाऽभवद्येन, कोशा वारवधूरपि ॥ १० ॥ तया सममविज्ञाता–ऽहोरात्रपरिवर्त्तनः ॥

विलासैर्विविधैः स्थूल–भद्रो रेमे गुणाम्बुधिः ॥ ११ ॥ यदभून्निबिडं प्रेम, तयोरन्योन्यरक्तयोः ॥ अपि वाचस्पते-र्वाचां, तद्भवेन्नैव गोचरः ॥ १२ ॥ दृढानुरागौ तौ भिन्न–देहावप्येकमानसौ ॥ अन्योन्यं विरहं नाधि–सेहाते नख-मांसवत् ॥ १३ ॥ कोशासक्त इति स्थूल–भद्रो नाऽगान्निजं गृहम् ॥ श्रीयकस्तु बभूवाङ्ग– रक्षको नन्दभूभुजः ॥१४॥ इतश्च नन्दनृपतिं, नाम्ना वररुचिः कविः ॥ नव्यैरष्टोत्तरशत–काव्यैरन्वहमस्तवीत् ॥ १५ ॥ तानि श्रुत्वा नृपस्तुष्टो, मन्त्रिवक्त्रं व्यलोकत ॥ स तु मिथ्यामतेस्तस्य, प्रशंसां नाऽकरोत्कवेः ॥ १६ ॥ ततः पृथ्वीपतिस्तस्मै, भट्टायाऽदान्न किञ्चन ॥ भट्टोऽपि धीसखाधीनं, विवेद नृपतिं तदा ॥ १७ ॥ लोकोक्त्या सचिवं तं च, विज्ञाय गृहिणीवशम् ॥ भेजे लक्ष्मीवतीं स्वार्थ–सिद्ध्यै वररुचिर्द्विजः ॥ १८ ॥ तां तुष्टां स्तुतिभिश्चैवं, ययाचे स महाकविः ॥ मत्काव्यं त्वद्गिरा राज्ञः, पुरो मन्त्री प्रशंसतु ॥ १९ ॥ दाक्षिण्येनैव दक्षापि, तद्वाचं तां प्रपद्य सा ॥ उवाच मन्त्रिणे सोऽपि, तदाकर्ण्याऽब्रवीदिति ॥ २० ॥ सम्यग्दृशो न युक्तं मे, तत्काव्यानां प्रशंसनम् ॥ किन्तु त्वदाग्रहाधीनः, करिष्ये तदपि प्रिये ! ॥ २१ ॥ प्रतिपद्येत्यगाद्भूप–सभां सचिवपुङ्गवः ॥ तत्रायातः स भट्टोऽपि, नृपं तुष्टाव पूर्ववत् ॥ २२॥ स्तुतिप्रान्ते च भूपेना–ऽमात्यवक्त्रे विलोकिते ॥ अहो ! सूक्तानि काव्यानि, प्राशंसीदिति धीसखः ॥ २३ ॥ नृपोऽथ तस्मै दीनारा–नष्टोत्तरशतं ददौ ॥ इत्थं तावद्धनं तस्मै, भूपोऽदात् प्रतिवासरम् ॥ २४ ॥ शकटालस्ततो दध्यौ, दत्त्वाऽस्मै धनमन्वहम् ॥ कोशं निष्ठापयत्येष, नृपो निष्कारणं किमु ? ॥ २५ ॥ ध्यात्वेति नन्दभूपाल–मवादीदिति धीसखः ॥ स्वामिन् ! किमस्मै भट्टाय, प्रत्यहं दीयते धनम् ॥ २६ ॥ राजा जगाद काव्यानि, वर्णितानि त्वयाऽस्य यत् ॥ ततोऽस्मै दीयते नोचे– त्पूर्वं नाऽदामहं कथम् ? ॥ २७ ॥ अमात्यः स्माह वृत्तानि, लौकिकानि पठत्ययम् ॥ तानि प्राशंसिषमहं, ततो भूपतिरित्यवक् ॥ २८ ॥ किं पुराणानि काव्यानि, पठत्येष पुरो मम ? ॥ उवाच सचिवः सन्ति, जीर्णान्येतानि निश्चितम् ॥ २९ ॥ यद्यत्र प्रत्ययो न स्या– त्तदा स्वसाऽपि मत्सुताः ॥ तदुक्तान्येव काव्यानि, पठिष्यन्ति प्रभोः पुरः ॥ ३० ॥ तन्निशम्याऽथ साश्चर्यो, नृपो जवनिकान्तरे ॥ स्वसाऽपि मन्त्रिपुत्रीस्ताः, समाहूय न्य-वीविशत् ॥ ३१ ॥ अथाऽऽगतो वररुचिः, काव्यैस्तावद्भिरुत्तमैः ॥ तुष्टाव क्ष्मापतिं क्षिप्रं, तानि यक्षाऽप्यधारयत् ॥ ३२ ॥ राजादेशात्सभामेत्य, तथैव कथयच्च सा ॥ एवं वारद्वयं श्रुत्वा, यक्षदत्ताऽपि तान्यऽवक् ॥ ३३ ॥ सर्वा अप्ये-वमूचुस्ता–स्तानि राज्ञोऽग्रतः क्रमात् ॥ ततो वररुचे राजा, रुष्टो दानमवारयत् ॥ ३४ ॥ गङ्गास्रोतोजले यन्त्रं, चक्रे वररुचिस्ततः ॥ अष्टाग्रशतदीनार–ग्रन्थिकां तत्र च न्यधात् ॥ ३५॥ प्रातश्च जाह्नवीं स्तुत्वा–ऽङ्घ्रिणा यन्त्रमचीचलत् ॥ दीनारग्रन्थिरुत्प्लुत्य, न्यपतत्तत्करे तदा ॥ ३६ ॥ लोकस्तत्प्रत्यहं प्रेक्ष्य, विस्मितः प्रोचिवानिति ॥ अहो ! गङ्गापि दीनारा–नस्मै दत्ते स्तुता सती ॥३७॥ जनोक्त्या तन्निशम्याऽथ, मन्त्रिणे स्माह भूधवः ॥ प्रोचेऽमात्यः प्रभो ! प्रात–र्द्रक्ष्यामोऽदः स्वयं वयम् ॥ ३८ ॥ इत्युक्त्वा स्वगृहं गत्वा, मन्त्री प्रैषीच्चरं वरम् ॥ गत्वा गङ्गां सोऽपि सायं, शरस्तम्बे तिरोदधे ॥ ३९ ॥ तदा चाष्टोत्तरशत–दीनारग्रन्थिकां स्वयम् ॥ तत्र गङ्गापयोयन्त्रे, छन्नं वररुचिर्न्यधात् ॥ ४० ॥ चलि-तश्च ततः सद्यो, जगाम निजधाम सः ॥ आदाय ग्रन्थिकां तां च, चरोऽदान्मन्त्रिणे रहः ॥ ४१ ॥ छन्नरक्षितदीनार–ग्रन्थिना मन्त्रिणा समम् ॥ प्रातः पौरपरीतोऽगा–द्भूजानिरथ जाह्नवीम् ॥ ४२ ॥ तत्रा ऽऽयातो वररुचि–र्दिदृक्षुं वीक्ष्य भूपतिम् ॥ प्रोत्सर्पिदर्पः प्रारेभे, गङ्गां स्तोतुं विशेषतः ॥ ४३ ॥ स्तुतिप्रान्ते च पादाभ्यां, विप्रो यन्त्रमचीचलत् ॥ दीना-रग्रन्थिका सा तु, नोत्प्लुत्याऽऽगात्करोदरे ॥ ४४ ॥ यदा स ग्रन्थिकां नाऽऽप, पाणिनाऽपि गवेषयन् ॥ स्मित्वाऽमात्यस्त-देत्यूचे, गङ्गा दत्तेऽद्य किं न ते ? ॥ ४५ ॥ स्वद्रव्यमुपलक्ष्याऽथ, गृहाणेति निगद्य सः ॥ तां ग्रन्थिकां ददौ तस्मै, तां च प्रेक्ष्य स खिन्नवान् ॥ ४६ ॥ स्वां प्रवर्धयितुं ख्यातिं, जनं वञ्चयितुं घनम् ॥ सायमत्र धनं क्षिप्त्वा, प्रातर्गृह्णात्यसौ प्रभो! ॥४७॥ इत्थं वररुचेर्दम्भे, मन्त्रिणोक्ते नृपादयः ॥ अयं महाधूर्त इति, तं निन्दन्तो गृहं ययुः ॥ ४८ ॥ [ युग्मम् ] तेना-मात्यप्रयोगेण, प्राप्तनिन्दः स वाडवः ॥ इति व्यचिन्तयद्रोषा–द्वाडवाग्निरिव ज्वलन् ॥ ४९ ॥ हिलीतोऽस्मि मुधा लोके, पापेनाऽनेन मन्त्रिणा ॥ तद्यथाशक्त्यहमपि, प्रतिकुर्वेऽस्य किञ्चन ॥ ५० ॥ ध्यात्वेति तस्याऽमात्यस्य, छिद्राणि ज्ञातुमन्वहम् ॥ वस्त्रादिदानैस्तद्दासीं, वशीचक्रे स काञ्चन ॥ ५१ ॥ मन्त्रिगेहस्वरूपं तं, पृच्छन्तं साऽन्यदेत्यवक् ॥ अस्ति श्रीयकवीवाहः, प्रारब्धोऽमात्यसद्मनि ॥ ५२ ॥ तत्र भूमिभुजो भोक्तुं, सतन्त्रस्यागमिष्यतः ॥ निष्पाद्यते प्रदानाय, विविधायुधधोरणी ॥ ५३ ॥ छलान्वेषी तदाऽऽसाद्य, छलं वररुचिर्द्विजः ॥ अपाठयच्छिशूनेवं, मोदकादिवशीकृतान् ॥ ५४ ॥ "यत्कर्त्ता शकटालोऽयं, तन्न जानाति पार्थिवः ॥ हत्वा नन्दं तस्य राज्ये, श्रीयकं स्थापयिष्यति ॥५५॥" प्रति-

ख्यानं पठ्यमानं, बालकैस्तन्निशम्य च ॥ तत्स्वरूपं नृपो ज्ञातुं, प्रैषीन्मन्त्रिगृहे चरम् ॥ ५६ ॥ सोऽप्यागत्य यथादृष्टं, शस्त्रनिष्पादनादिकम् ॥ राज्ञे व्यज्ञपयद्राजा–ऽप्यकुप्यन्मंत्रिणे ततः ॥ ५७ ॥ अथ सेवार्थमायातो–ऽनमन्मंत्री यतो यतः ॥ कोपात्पराङ्मुखस्तस्था–ऽभवद्भूपस्ततस्ततः ॥ ५८ ॥ ततोऽतिकुपितं पृथ्वी–पतिं विज्ञाय धीसखः ॥ व्याघुट्य गेहमागत्य, श्रीयकं प्रोचिवानिति ॥ ५९ ॥ प्रणते मयि भक्तेऽपि, यत्तिष्ठति पराङ्मुखः ॥ तन्मन्येऽसदुद्धिषा केना–ऽप्यद्यासौ द्वेषितो नृपः ॥ ६० ॥ द्विष्टश्च भूधवो भूरि, वैगुण्यं नः करिष्यति ॥ नृपदुर्जनसर्पाणा–मात्मीयो हि न कश्चन ॥ ६१ ॥ तद्यावदयमस्माकं, न करोति कुलक्षयम् ॥ तद्रक्षायै तावदेतं, वत्सादेशं कुरुष्व मे ॥ ६२ ॥ खड्गेन मौलिं छिन्द्यास्त्वं, भूपतिं नमतो मम ॥ ब्रूयाश्चेति प्रभुद्वेषी, पिताऽपि न मतो मम ॥ ६३ ॥ आसन्नमृत्यौ वृद्धत्वा–न्मयि चैवं मृते सति ॥ मद्वंशवेश्मस्तम्भस्त्वं, भवितासि चिरं ततः ॥ ६४ ॥ तच्छ्रुत्वा श्रीयकः स्माह, रुदन्निति सगद्गदम् ॥ तातेदं गर्हितं कर्म, श्वपचोऽपि किमाचरेत् ? ॥ ६५ ॥ त्वां निहत्य भविष्यामि, नैवाहं कुलपांसनः ॥ तन्मामेव कुलं त्रातुं, मारयोर्वीपतेः पुरः ॥ ६६ ॥ ततो मन्त्री जगौ वत्स !, मृतेऽपि त्वयि पार्थिवः ॥ कोपहेतौ मयि सति, क्षपयत्येव नः कुलम् ॥ ६७ ॥ तद्विमर्शममुं मुक्त्वा, वत्स ! स्वीकुरु मद्वचः ॥ त्यजेदेकं कुलस्यार्थे, श्रुतिमेनां विचारय ॥ ६८ ॥ नृपप्रणामावसरे, विषं तालपुटं मुखे ॥ क्षिप्त्वा स्वयं विपत्स्येऽहं, तातहत्या ततो न ते ॥ ६९ ॥ तदेतत्प्रतिपद्य त्वं, मलिनीकुरु विद्विषम् ॥ समुद्धरास्मत्कुलं चास्मा–दुद्धर व्यसनोदधेः ॥ ७० ॥ तच्छ्रुत्वा श्रीयको दध्यौ, किं करोमि ? क्व याम्यहम् ? ॥ वच्मि ? चेदं पुरः कस्य, द्विधाप्यापतितं मम ॥ ७१ ॥ इतस्तातवपुर्घातः, इतश्चाज्ञाव्यतिक्रमः ॥ आपन्नस्तदयं न्यायः, इतो व्याघ्र इतस्तटी ॥ ७२ ॥ ध्यायन्नेवं कथमपि, पितृवाणीं प्रपद्य ताम् ॥ पुरतो नृपतेः पार्श्वे, जगाम श्रीयको द्रुतम् ॥ ७३ ॥ पृष्ठतः शकटालोऽगा–न्नृपश्चाभूत्पराङ्मुखः॥ उपविश्य ततो मन्त्री, किञ्चिदूचे यथोचितम् ॥७४॥ तथाप्यजल्पति क्ष्मापे, क्षिप्त्वाऽमात्यो मुखे विषम् ॥ नृपं ननाम तन्मौलिं, श्रीयकोऽप्यऽसिनाऽच्छिनत् ॥ ७५ ॥ ततो हाहारवो लोके–श्चक्रे भूपोऽपि सम्भ्रमात् ॥ तमित्यूचे त्वया वत्स !, दुष्करं किमिदं कृतम् ? ॥ ७६ ॥ उवाच श्रीयकः स्वामिन् !, यदस्मिन् प्रणतेऽपि वः ॥ नासीत्प्रसत्तिस्तत् ज्ञातो, मयाऽयं द्रोहकृत् प्रभोः ॥ ७७ ॥ स्वामिद्रोही च निग्राह्य, इत्ययं निहतः पिता॥ येन प्रभोरतुष्टिः स्या–त्तातेनाऽपि हि तेन किम् ? ॥ ७८ ॥ तच्छ्रुत्वा व्यमृशद्भूपो, यदीदृक्सेवकानपि ॥ जनोऽन्यथाऽऽख्यत्सा नूनं, माया वररुचेः कवेः ! ॥ ७९ ॥ यद्वा ममैव दोषोऽयं, यत्तदा न व्यचारयम् ॥ अविमृश्यकरो यस्मा–दन्धादपि विशिष्यते ! ॥ ८० ॥ ध्यात्वेत्याश्वासयद्भूपः, श्रीयकं प्रियभाषितैः ॥ प्रेम्णा स्वयं वितेने च, शकटालोर्ध्वदेहिकम् ॥ ८१ ॥ ऊचे च श्रीयकं मन्त्रि–मुद्रेयं गृह्यतामिति ॥ प्रणम्य श्रीयकोऽप्येव–मथ व्यज्ञपयन्नृपम् ॥ ८२ ॥ अस्ति श्रीस्थूलभद्राह्वः, कोशागेहे ममाग्रजः ॥ तिष्ठतस्तत्र तस्याद्य, जज्ञे द्वादशवत्सरी ॥ ८३ ॥ तस्यासौ दीयतां मुद्रा, श्रुत्वेत्याहूय तं नृपः॥ जगाद मन्त्रिमुद्रेय–मस्माकं गृह्यतामिति ॥ ८४ ॥ विचार्येदं करिष्यामी–त्युक्ते तेन नृपोऽवदत् ॥ यद्विचार्यं तदद्यैव, विचारय महाशय ! ॥ ८५ ॥ अशोकवनिकां गत्वा, सोऽप्येवं व्यमृशत्ततः ॥ नियोगिनां राजकार्य–व्यग्राणां क्व सुखं भवेत् ? ॥ ८६ ॥ नियोगी दुःस्थवत्काले–ऽप्यश्नुते नहि भोजनम् ॥ अधमर्ण इव क्वापि, नेष्टे निद्रातुमप्यसौ ! ॥८७॥ राज्यचिन्ताकुलः स्त्रीश्च, स स्मर्तुमपि न प्रभुः ॥ क्वाऽसौ क्षमोऽनुभवितुं, गीतनाट्यादिकं पुनः ? ॥ ८८ ॥ सत्यप्येवं स्वामिभक्तैः, स्वामिकृत्यं विधीयते ॥ नोपद्रवेयुः पिशुना–श्चेन्निष्कारणवैरिणः ॥ ८९ ॥ पिशुनोपद्रवोऽप्युच्चै–र्न दुःखाकुरुते तदा ॥ यदि राज्ञां मनो न स्यात्, पताकाञ्चलचञ्चलम् ॥ ९० ॥ नृपेषु चलचित्तत्व–सन्देहस्त्वमुनैव हि ॥ राज्ञाऽपास्तोऽनुरक्तेऽपि, मत्ताते द्वेषमीयुषा ॥ ९१ ॥ तदेवमैहिकं सौख्यं, तस्य न स्यात्परत्र तु ॥ दुष्कर्म द्रविणक्रीता, ढौकते नरकव्यथा ॥ ९२ ॥ तदैहिकामुष्मिकार्थ–बाधके स्वामिकर्मणि ॥ यत्यते चेत्तदा किं न, यत्यते स्वहिते व्रते ? ॥ ९३ ॥ ध्यात्वेति स्थिरवैराग्यः, स्थूलभद्रो विशुद्धधीः ॥ वेणीमुदस्यन्तैल–कस्तूरीपङ्कपङ्किलाम् ॥ ९४ ॥ कृत्वा धर्मध्वजं रत्न–कम्बलस्य दशागणैः ॥ सभां गत्वाऽभ्यधाद्भूप–मालोचितमिदं मया ॥ ९५ ॥ इत्युक्त्वा धर्मलाभं च, दत्वा स प्रस्थितो मुनिः ॥ निर्मोहो निरगाद्राज–गेहादर्क इवाम्बुदात् ॥ ९६ ॥ मायां विधाय गन्ताऽयं, वेश्यावेश्मनि किं पुनः ? ॥ इति ध्यायन् गवाक्षेण, क्ष्मापस्तं यान्तमैक्षत ॥ ९७ ॥ कुथ्यत्कुणपदुर्गन्ध–दुर्गमेऽप्याऽऽस्पदे स तु ॥ गच्छन्नाच्छादयद् घ्राणं, नाऽपि वक्त्रममोटयत् ॥ ९८ ॥ तथा व्रजन्तं तं दृष्ट्वा, दध्यावेवं स भूधवः ॥ वीत मोहो महात्मायं, मुधा ध्यातं मयाऽन्यथा ॥९९॥ स्थूलभद्रोऽपि सम्भूत–विजयस्वामिसन्निधौ ॥ गत्वा नत्वा च तान्

दीक्षा-माददे विधिपूर्वकम् ॥१००॥ श्रीयकाय ददौ मन्त्री-मुद्रां नन्दनृपस्ततः ॥ सोऽपि चक्रे राज्यचिन्तां, धीर्निधि-र्विनयी नयी ॥ १०१ ॥ भट्टो वररुचिः सोऽपि, सिषेवे भूपमन्वहम् ॥ कोशा-स्वसारं भेजे चो-पकोशां तद्वशंवदः ॥ १०२ ॥ स्थूलभद्रे दृढप्रीतिः, कोशात्वन्यमियेष न ॥ स्थूलभद्रगुणान् किन्तु, सा सस्मार दिवानिशम् ॥ १०३ ॥ भ्रातुः प्रियेति तद्गेहे, प्रत्यहं श्रीयको ययौ । तं च वीक्ष्योद्भवद्भूरि-दुःखपूरा रुरोद सा ॥ १०४ ॥ श्रीयकस्तां तदेत्या-ख्य-द्ब्रूहि भद्रे ! करोमि किम् ? ॥ असौ पापो वररुचि-र्मम तातमघातयत् ॥ १०५ ॥ श्रीस्थूलभद्रविरहं, चायमे-वातनोत्तव ॥ अरुन्तुदविषादिग्ध-शल्यशल्यसहोदरम् ॥ १०६ ॥ तव स्वसारं तद्याव-दुपकोशां भजत्ययम् ॥ वैरनि-र्यातनोपायं, तावत्किञ्चिद्विचारय ॥ १०७ ॥ यदि चायं पिबेन्मद्यं, वैरशुद्धिस्तदा भवेत् ॥ तदादिश्योपकोशां त्वं, कार-याऽमुं सुरापिबम् ॥ १०८ ॥ एवं देवरवाक्यं सा, स्वीचकार पणाङ्गना ॥ ऊचे च भगिनीं मद्य-रुचिं वररुचिं कुरु ॥ १०९ ॥ ततस्तं मद्यपं चक्रे, साप्युपायेन केनचित् ॥ नह्यस्ति किञ्चनाकार्यं, स्त्रीवशानां विदामपि ॥ ११० ॥ स्वैरं वररुचिर्भट्टो, मद्यमद्यास्ति पायितः ॥ उपकोशेति कोशायै, प्रभातेऽज्ञापयत्ततः ॥ १११ ॥ कोशाऽपि तं तद्वृत्तान्तं, श्रीयकाय न्यवेदयत् ॥ तच्छ्रुत्वा श्रीयकोऽप्युच्चै-रतुष्टोऽगात् भूपपर्षदि ॥ ११२ ॥ शकटालगुणान् स्मारं, स्मारं नन्दनृपोऽ-न्यदा ॥ इत्यूचे श्रीयकामात्य-मास्थानस्थः सगद्गदम् ॥ १०३ ॥ शकटालो महामन्त्री, ममाऽभूद्भूरिधीनिधिः ॥ इदं तेन विना स्थानं, शून्यवत्प्रतिभाति मे ! ॥ ११४ ॥ उवाच श्रीयकः स्वामि-न्निह किं कुर्महे ? वयम् ॥ सुरापायी वर-रुचिः, पापं सर्वमिदं व्यधात् ॥ ११५ ॥ किमेष मद्यं पिबती-त्यपृच्छत्तं ततो नृपः ॥ इदं श्वो दर्शयिष्यामी-त्युवाच श्रीयकोऽपि हि ॥ ११६ ॥ द्वितीये चाह्नि सभ्यानां, गज्ञश्च श्रीयकः सुधीः ॥ एकैकमार्पयत्पद्मं, शिक्षितेनाऽनुजीविना ॥ ११७ ॥ उग्रप्रत्यग्रमदन-फलनिःस्यन्दभावितम् ॥ पापस्यादापयत्पाथो-रुहं वररुचेः पुनः ॥ ११८ ॥ नृपाद्यास्तानि पद्मानि, घ्रायं घ्रायमवर्णयन् ॥ ततो वररुचिः स्वीय-मप्यजिघ्रत् पयोरुहम् ॥ ११९ ॥ सुरां स चन्द्रहासाख्यां, निशा-पीतां ततोवमत् ॥ तद्वीक्ष्य भर्त्सितः सभ्यैः, सभाया निर्जगाम च ॥ १२० ॥ स स्वनिन्दापनोदाय, प्रायश्चित्तचिकी-र्षतः ॥ इत्यपृच्छत् द्विजान् किं हि, मद्यपानाघघातकम् ? ॥ १२१ ॥ तापितत्रपुणः पानं, मदिरापानपापहृत् ॥ तैरित्युक्ते सोऽपि सद्य- स्तन्निपीय व्यपद्यत ॥ १२२ ॥

इतश्च स्थूलभद्रोऽपि, सम्भूतविजयप्रभून् ॥ सेवमानः श्रुताम्भोधेः, पारं प्राप क्रमात्सुधीः ॥ १२३ ॥ सम्भूतविज-याचार्यान्, प्रणम्य मुनयस्त्रयः ॥ वर्षाकालेऽन्यदाऽऽयाते, चक्रुरेवमभिग्रहान् ॥ १२४ ॥ स्थित्वा सिंहगुहाद्वारे, चतुर्मासीमुपोषितः ॥ कायोत्सर्गं करिष्यामी-त्याद्यश्चक्रे प्रतिश्रवम् ॥ १२५ ॥ दृग्विषाशीर्विषबिल-द्वारे स्थास्याम्यु-पोषितः ॥ चतुर्मासीं कृतोत्सर्गो, द्वितीयोऽभ्यग्रहीदिति ॥ १२६ ॥ स्थास्यामि कूपफलके, कृत्वोत्सर्गमुपोषितः ॥ चतुर्मासीमहमिति, प्रतिपेदे तृतीयकः ॥ १२७ ॥ ज्ञात्वा तान् संयतान् योग्या- ननुमेने गुरुर्यदा ॥ स्थूलभ-द्रस्तदोत्थाय, गुरूनेवं व्यजिज्ञपत ॥ १२८ ॥ कुर्वन् षड्रसमाहार-मकुर्वन् प्रबलं तपः ॥ स्थास्याम्यहं चतुर्मासीं, कोशावेश्या निकेतने ॥ १२९ ॥ सूरिस्तमुपयोगेन, योग्यं ज्ञात्वाऽन्वमन्यत ॥ सर्वेऽप्यङ्गीकृतस्थाना-न्यऽगमन्मुनय-स्ततः ॥ १३० ॥ शान्तान् जितेन्द्रियान् घोर-तपोनिष्ठान्निरीक्ष्य तान् ॥ शान्तिं प्रापुस्त्रयोऽप्येते, सिंहसर्पारघट्टिकाः ॥ १३१ ॥ अथ श्रीस्थूलभद्रोऽपि, कोशासदनमासदत् ॥ कोशाऽपि प्रमदोत्सर्पि-रोमहर्षा तमभ्यगात् ॥ १३२ ॥ अयं परीषहोद्विग्नो, भग्नः संयमवीवधात् ॥ आगान्नूनं तदद्याऽपि, दैवं जागर्ति मामकम् ॥ १३३ ॥ चिन्तयन्तीति साऽवोच-द्वाचा पीयूषकुल्यया ॥ स्वागतं भवतः स्वामिन् ! कामधिक्काररूप हे ! ॥ १३४ ॥ अद्य चिन्तामणि-र्लब्धः, फलितोऽद्य सुरद्रुमः ॥ अद्य कामगवी प्राप्ता, नाथ ! त्वयि समागते ॥ १३५ ॥ अद्यान्तरायापगमात्, पुण्यं प्रादुरभून्मम ॥ दिष्ट्या पीयूषवृष्ट्याभं, यत्प्राप्तं तव दर्शनम् ॥ १३६ ॥ अथ प्रसद्य सद्यो मां, समादिश करोमि किम् ? ॥ सर्वमेतत्तवैवास्ति, वित्तं चित्तं वपुर्गृहम् ॥ १३७ ॥ ततः श्रीस्थूलभद्रर्षि-र्भगवानेवमब्रवीत् ॥ चित्रशा-लामिमां देहि, स्थातुं मासचतुष्टयम् ॥ १३८ ॥ गृह्यतामिति साऽप्युक्त्वा, सज्जयित्वा च तां ददौ ॥ भगवान् स्थूल-भद्रोऽपि, तस्थौ तत्र समाहितः ॥ १३९ ॥ कोशादत्तं षड्रसाढ्य-माहारमुपभुज्य च ॥ प्रणिधानं दधौ साधुः, साधुधर्माब्जषट्पदः ॥ १४० ॥ रूपलावण्यकोशोऽथ, कोशा कौशलशेवधिः ॥ शृङ्गारागारशृङ्गार-धराऽगान्मुनिस-न्निधौ ॥ १४१ ॥ कटाक्षैर्लक्षयन्ती तं, मुनिं स्मरशरोपमैः ॥ हावैर्मनोगतं भाव-मुद्वमंती मनोहरैः ॥ १४२ ॥ उत्त-रीययथास्थान-स्थापनव्याजतो मुहुः ॥ व्यञ्जयन्ती स्तनौ स्तब्धौ, स्वसौन्दर्यमदादिव ॥ १४३ ॥ सलावण्यसुधा-

पीन–त्रिवलीवल्लिमञ्जुलम् ॥ दर्शयन्ती मध्यदेश–मङ्गमोटनपाटवात् ॥ १४४ ॥ रोमराजीवलयितां, गम्भीरां नाभिकूपिकाम् ॥ प्रकाशयन्ती सुन्नीवी–बन्धोच्छ्वासनकैतवात् ॥ १४५ ॥ दग्धपूर्वं महेशेनो–ज्जीवयन्ती मनोभवम् ॥ पञ्चमस्वनिगीतेन, पीयूषद्रवबन्धुना ॥ १४६ ॥ वृता सखीगणैर्वेणु–वीणाद्यातोद्यवादकैः ॥ सा साधोः पुरतश्चक्रे, नाट्यं विश्वैकमोहनम् ॥ १४७ ॥ [ षड्भिः कुलकम् ] तद्वीक्ष्याऽपि स्थूलभद्रो, धर्मध्यानं मुमोच न ॥ ततः कोशा पुरस्तस्यो–पविश्येति गिरं जगौ ॥ १४८ ॥ स्वामिंस्तव वियोगेन, तीव्रदुःखौघदायिना ॥ अभून्मे दिनमेकैकं, दिव्यसंवत्सरोपमम् ॥ १४९ ॥ सोदरं वडवावह्ने–र्मन्ये त्वद्विरहं विभो ! ॥ यदयं नेत्रनीरौघं, पायं पायमवर्धत ॥ १५० ॥ तन्मां निर्वापय स्वांग–परिष्वंगसुधारसैः ॥ त्वद्विश्लेषज्वलज्ज्वाला–जिह्वज्वालाकरालिताम् ॥ १५१ ॥ सम्भोगकलहोत्पन्न–मपि मद्विरहं भवान् ॥ नासहिष्ट पुरा स्वामि–स्तत्प्रेम क्व गतं ? तव ॥ १५२ ॥ विचित्राश्लेषरुचिरा, यास्त्वया कामकेलयः ॥ अनुभूता मया सार्कं, ताः किं ते विस्मृताः ? प्रभो ! ॥ १५३ ॥ विभो ! विधेहि करुणां, निजे हृदि निधेहि माम् ॥ पिधेहि दुःखवदनं, देहि प्रतिवचो मम ॥ १५४ ॥ इति श्रुत्वाऽपि स मुनि–र्न चुक्षोभ मनागपि ॥ बह्वीभिरतिवात्याभिः, सुमेरुः किमु कम्पते ? ॥ १५५ ॥ इत्थं तत्क्षोभनोपाया–स्तया नित्यं कृता अपि ॥ अभवन् विफलास्तत्र, कुलिशे परशुव्रजवत् ॥ १५६ ॥ एवं तस्येन्द्रियजय–प्रकर्षं वीक्ष्य विस्मिता ॥ त्यक्तसम्भोगकामा सा, तं प्रणम्यैवमब्रवीत् ॥ १५७ ॥ यदज्ञानात्त्वया सार्कं, प्राग्वद्रन्तुमना अहम् ॥ अकार्षं क्षोभनोपायान्, तदागस्त्वं सहस्व मे ॥ १५८ ॥ स्थूलभद्रस्ततस्तस्यै, श्राद्धधर्ममभाषत ॥ प्रबुद्धा साऽपि तं धर्मं, स्वीकृत्याभ्यग्रहीदिति ॥ १५९ ॥ विश्राणयति मां यस्मै, तुष्टो नन्दमहीपतिः ॥ तं विहायाऽपरे मर्त्याः, सर्वेऽपि मम बान्धवाः ॥ १६० ॥ अथ प्रान्ते चतुर्मास्या–स्तीर्णस्वस्वप्रतिश्रवाः ॥ ते त्रयो मुनयो जग्मुः, क्रमात्स्वगुरुसन्निधौ ॥ १६१ ॥ तत्राऽऽयान्तं सिंहगुहा–महर्षिं किञ्चिदुत्थितः ॥ गुरुर्जगौ स्वागतं ते, वत्स ! दुष्करकारक ! ॥ १६२ ॥ अन्यावप्येवमेव द्वौ, प्रोचे सूरिः समागतौ ॥ स्थूलभद्रोऽप्यथाऽऽयासी–त्संतीर्णाभिग्रहार्णवः ॥ १६३ ॥ तञ्चाऽऽयान्तं समुत्थाय, स्माह सूरिः ससम्भ्रमम् ॥ दुष्करदुष्करकारिन् !, स्वागतं ते तपोनिधे ! ॥ १६४ ॥ सामर्षास्तन्निशम्येति, दध्युस्ते यतयस्त्रयः ॥ गुरवो मन्त्रिपुत्रत्वा–देवमामन्त्रयन्त्यमुम् ! ॥ १६५ ॥ नित्यं षड्रससमाहारं, भुक्त्वा तत्र स्थितोऽप्यसौ ॥ गुरुभिः कथ्यते साधुः, कृतदुष्करदुष्करः ! ॥ १६६ ॥ वयमप्यैषमब्दे त–द्ग्रहीष्यामोऽमुमभिग्रहम् । ध्यायन्त इति ते मासान्, कष्टादष्टाऽत्यवाहयन् ! ॥१६७॥ वर्षाकालेऽथ सम्प्राप्ते, मानी सिंहगुहामुनिः ॥ सम्भूतविजयाचार्यान्, प्रणम्येति व्यजिज्ञपत् ॥ १६८ ॥ सर्वदा षड्रसाहार–भोजी कोशानिकेतने ॥ स्थास्याम्यहं चतुर्मासीं, स्थूलभद्र इव प्रभो ! ॥१६९॥ अयं हि स्थूलभद्रस्य, स्पर्द्धयाऽङ्गीकरोत्यदः । विमृश्येत्युपयोगं च, दत्त्वैवं सूरिरब्रवीत् ॥ १७० ॥ वत्साभिग्रहमेनं मा–कार्षीर्दुष्करदुष्करम् ॥ क्षमो हि स्थूलभद्रोऽमुं, निर्वोढुं नाऽपरः पुनः ! ॥ १७१ ॥ अपि स्वयम्भूरमण–स्तरीतुं शक्यते सुखम् ॥ अयं त्वभिग्रहो धर्तुं, दुष्करेभ्योऽपि दुष्करः ! ॥ १७२ ॥ दुष्करोऽप्यस्ति नायं मे, क्व नु दुष्करदुष्करः ? ॥ करिष्याम्येव तदमु–मित्यूचे स पुनर्गुरून् ॥ १७३ ॥ अथोचे सूरिरेतस्मा–दभिग्रहकदाग्रहात् ॥ वत्स ! ते भाविनी लाभ–मिच्छतो मूलविच्युतिः ! ॥ १७४ ॥ एनामपि गुरोर्वाचं, मुमुक्षुरवमत्य सः ॥ वीरंमन्यो ययौ कोशा–सदनं मदनाश्रयम् ! ॥ १७५ ॥ स्पर्धया स्थूलभद्रस्य, नूनमागादयं मुनिः । कोशाऽपि तं विलोक्येति, दध्यौ दक्षा ननाम तम् ॥ १७६ ॥ स्थित्यर्थं प्रार्थयामास, स साधुश्चित्रशालिकाम् ॥ कोशापि तां ददौ सोऽपि, सोत्सेकस्तां प्रविष्टवान् ॥ १७७ ॥ बुभुजे च तया दत्त–माहारं षड्रसाञ्चितम् ॥ अथ कोशाऽपि तत्रागा–न्मध्याह्ने तं परीक्षितुम् ॥ १७८ ॥ मृगाक्षीं तां च स प्रेक्ष्य, क्षणात्क्षोभमुपागतः ॥ मदनावेशविवशः, संवेशनमयाचत ॥ १७९ ॥ ततः कोशा तमित्यूचे, स्वामिन् ! पण्याङ्गना वयम् ! ॥ स्वीकुर्मः शक्रमपि नो, धनदानं विना कृतम् ! ॥ १८० ॥ मुनिः स्माह प्रसद्य त्वं, मां निर्वापय सङ्गमात् ॥ वह्नौ शैत्यमिवाऽस्मासु, द्रविणं तु सुदुर्लभम् ! ॥ १८१ ॥ त्वदाज्ञाविवशश्चाहं, धनमप्यानये द्रुतम् ॥ निवेदयसि चेन्मह्यं, तत्प्राप्तिस्थानमुत्तमम् ॥ १८२ ॥ ततो बोधयितुं सा तं, प्रोचे नेपालभूपतिः ॥ नव्यसाधोर्लक्षमूल्यं, प्रदत्ते रत्नकम्बलम् ॥ १८३ ॥ ततस्त्वं तत्र गत्वाऽऽशु, तं समानय मत्कृते ॥ श्रुत्वेति सोऽप्यकालेऽपि, नेपालं प्रति चेलिवान् ॥ १८४ ॥ तत्र गत्वा धराधीशा–द्रत्नकम्बलमाप्य च ॥ ववले स मुनिः सद्यो, वेश्यां ध्यायन्मनोन्तरे ॥ १८५ ॥ तत्र मार्गे स्थितानां च, दस्यूनां शकुनस्तदा ॥ आयाति लक्ष्यमित्यूचे, तदज्ञासीच्च दस्युराट् ॥ १८६ ॥ किमायातीत्यपृच्छच्च, वृक्षारूढं

चरं ततः ॥ सोऽप्याख्यद्भिक्षुमेवैकं, वीक्षे कमपि नाऽपरम् ॥ १८७ ॥ अथ तत्रागतं साधुं, धृत्वा चौरा व्यलोकयन् ॥ अपश्यंतश्च किमपि, द्रव्यं ते मुमुचुर्मुनिम् ॥ १८८ ॥ शकुनः पुनरित्याख्य-द्याति लक्षमिदं पुरः ॥ ततो विधृत्य तं साधु-मभ्यधादिति चौरराट् ॥ १८९ ॥ वयं तवाभयं दद्मः, तथ्यं वद किमस्ति ? ते ॥ ततो यतिर्जगौ यूयं, सत्यं शृणुत दस्यवः ! ॥ १९० ॥ अस्ति क्षिप्तो वंशमध्ये, वेश्यार्थं रत्नकम्बलः ॥ मत्पार्श्वे इति तेनोक्ते-ऽमुचत्तं चौरराड् मुनिम् ॥ १९१ ॥ अथागत्य स कोशायै, रत्नकम्बलमार्पयत् ॥ गृहनिर्धमने साऽपि, तं निचिक्षेप पङ्किले ॥ १९२ ॥ विषण्णो वीक्ष्य तत्साधु-रित्यूचे सुन्दरि ! त्वया ॥ महामूल्योऽप्यसौ पङ्के, किं क्षिप्तो रत्नकम्बलः ? ॥१९३॥ कोशा शशंस यद्येत-ज्जानासि त्वं तदा कथम् ॥ आत्मानं गुणरत्नाढ्यं, क्षिपसि ? श्वभ्रकर्दमे ॥ १९४ ॥ किञ्च रत्नत्रयमिदं, भुवनत्रयदुर्लभम् ॥ मदङ्गे खालजम्बाल- कल्पे क्षिपसि किं मुधा ? ॥ १९५ ॥ तच्छ्रुत्वोत्पन्नवैराग्यः, कोशामिति जगौ यतिः ॥ संसाराब्धौ पतत्साधु, रक्षितोऽहं त्वयाऽनघे ! ॥ १९६ ॥ अतिचारोत्थदुष्कर्म-मलं क्षालयितुं निजम् ॥ अथ ज्ञानाम्बुसम्पूर्णं, श्रयिष्येऽहं गुरुह्रदम् ॥ १९७ ॥ कोशाऽब्रवीद्ब्रह्मचर्य-स्थितयाऽपि मया मुने ! ॥ यदेवं खेदितोऽसि त्वं, तन्मिथ्या दुष्कृतं मम ! ॥ १९८ ॥ आशातना मया युष्म-त्प्रतिबोधाय या कृता ॥ सा सोढव्या गुरोराज्ञा, वोढव्या च स्वमौलिना ! ॥ ९९ ॥ इच्छाम्येतदिति प्रोच्य, सोऽप्यागाद्गुरुसन्निधौ ॥ तान् प्रणम्य प्रकुर्वाणः, स्वनिन्दामिति चाब्रवीत् ॥ २०० ॥ अहं हि निर्गुणोऽपि श्री-स्थूलभद्र इवाचरन् ॥ प्रापं विडम्बनां काक, इव चक्राङ्गवत्तरन् ! ॥ २०१ ॥ काऽहं ? सत्वोज्झितः ! क ? श्री- स्थूलभद्रश्च धीरधीः ! ॥ क सर्षपः ? क हेमाद्रिः ?, क खद्योतः क चांशुमान् ? ॥ २०२ ॥ इत्युदीर्यालोचनां च, गृहीत्वा स विशुद्धधीः ॥ सुदुस्तपं तपस्तेपे, कर्मेन्धनहुताशनम् ॥ २०३ ॥ यथा च रथिकं पुण्य-कोशः कोशा व्यबोधयत् ॥ तथा कथानकं ज्ञेयं, श्रीआवश्यकवृत्तितः ॥ २०४ ॥ स्त्रीपरीषह इति श्रमणोघैः, स्थूलभद्रमुनिवत्सहनीयः ॥ मानसं हरिगुहामुनिवन्न त्वात्मनः शशिमुखीषु निधेयम् ॥ २०५ ॥ इति स्त्रीपरीषहे स्थूलभद्रर्षिकथा ॥ ८ ॥

स्त्रीपरीषहश्चैकत्र वसतस्तादृशवशाजनसंसर्गवशान्मन्दसत्वस्य स्यादिति नैकत्र स्थाने स्थेयं, किन्तु ग्रामानुग्रामविहाररूपा चर्या कार्येति तत्परीषहमाह—

**मूलम्—एग एव चरे लाढे, अभिभूअ परीसहे । गामे वा नगरे वावि, निगमे वा रायहाणिए ॥१८॥**

व्याख्या—एक एव रागादिरहित एव चरेत्, अप्रतिबद्धविहारेण विहरेत्, लाढयति प्रासुकैषणीयाहारेण यापयति आत्मानमिति लाढः, अभिभूय निर्जित्य परीषहान् क्षुधादीन्, क चरेदित्याह—ग्रामे वा, नगरे वा, 'अपिः' पूरणे, निगमे वा वणिग्निवासे, राजधान्यां वा राज्ञो निवासपुर्यां, मडम्बाद्युपलक्षणञ्चैतदिति सूत्रार्थः ॥ १८ ॥

पुनः प्रस्तुतमेवाह—

**मूलम्—असमाणो चरे भिक्खू, नेअ कुज्जा परिग्गहं । असंसत्तो गिहत्थेहिं, अणिकेओ परिव्वए ॥१९॥**

व्याख्या—असमानोऽसदृशो गृहस्थैः सहाश्रयमूर्च्छारहितत्वेन, अन्यतीर्थिकैश्च सहानियतविहारादिना चरेद्विहरेद्भिक्षुर्मुनिः,कथमेतत्स्यादित्याह—नैव कुर्यात्परिग्रहं,ग्रामादिषु ममत्वरूपं, ममत्वाभावश्च कथं स्यादित्याह—असंसक्तोऽसंबद्धो गृहस्थैर्गृहिभिः, अनिकेतो गृहरहितः परिव्रजेत् सर्वतो विहरेत्, गृहस्थसंसर्गादेरेव ग्रामादौ ममत्वं स्यादिति भाव इति सूत्रार्थः ॥ १९ ॥ आख्यानञ्चात्र, तथाहि—

अभवन् भुवनाभोग-भासनाम्भोजपाणयः ॥ सूरयः सङ्गमाह्वाना, जिनाज्ञापालनोद्यताः ॥ १ ॥ उत्सर्गञ्चापवादञ्च, विदन्तस्ते यथास्थितम् ॥ क्षीणजङ्घाबलास्तस्थुः, पुरे कोल्लकिराभिधे ॥ २ ॥ एकदा तत्र दुर्भिक्षे, सञ्जाते गच्छसंयुतम् ॥ सिंहाचार्यं स्वशिष्यं ते, दूरदेशे व्यहारयन् ॥ ३ ॥ स्वयं तु तत्रैव पुरे, नव भागान् प्रकल्प्य ते ॥ विजहुर्मासकल्पादि-विधिना विधिवेदिनः ॥ ४ ॥ क्षीणजङ्घाबलत्वात्ते, तत्रस्था अपि न व्यधुः ॥ प्रतिबन्धं पुरश्राद्ध-कुलशय्यासनादिषु ॥ ५ ॥ प्रकृष्टांस्तद्गुणान् वीक्ष्य, पुराधिष्ठायिका सुरी ॥ तेषु भक्तिं दधौ प्राज्यां, भेजे तांश्च दिवानिशम् ॥ ६ ॥ वर्षान्तरे च तत्रागात्, प्रहितः सिंहसूरिणा ॥ सङ्गमाचार्यशुद्ध्यर्थं, तच्छिष्यो दत्तसंज्ञकः ॥७॥ यत्र स्थितैस्तैराचार्यै-र्गच्छः प्रस्थापितोऽभवत् ॥ ते तत्रैवालयेऽभूवं-स्तदायाताः पुनः क्रमात् ॥ ८ ॥ तांश्च तत्र स्थितान् दृष्ट्वा, दुर्विदग्धशिरोमणिः ॥ उत्सर्गैकरुचिर्दत्त-साधुरेवं व्यचिन्तयत् ॥ ९ ॥ तिष्ठन्तोऽत्रैव दृश्यन्ते, यदमी सूरयस्ततः ॥ मन्ये न भावतोप्येते, मासकल्पादि कुर्वते ! ॥ १० ॥ तदमीभिः सहैकत्र, ममोद्युक्तविहारिणः ॥-

स्थातुं न युक्तमित्यस्था–त्पार्श्वस्थे स कुटीरके ॥ ११ ॥ पश्चाद्गत्वा सूरिपार्श्वे, सोऽनमत्तान्निरादरः ॥ साधुसौख्यविहारादि–वार्त्तां तैरप्यपृच्छयत ॥ १२ ॥ दत्तोऽपि सकलं सूरि–पृष्टं प्रोचे यथातथम् ॥ भिक्षाकाले च भिक्षार्थं, जगाम सह सूरिभिः ॥ १३ ॥ दत्तसाधुं सहादाय, सङ्गमस्थविरा अपि ॥ निस्संगाः पर्यटन्तिस्म, प्रोच्चनीचकुलेषु ते ॥ १४ ॥ कालदौःस्थ्यादटन्तोपि, नापुस्ते भैक्ष्यमुत्तमम् ॥ लेभिरे प्रान्तभैक्ष्यं तु, स्वल्पं स्वल्पं क्वचित् क्वचित् ॥ १५ ॥ ततो दत्तमुनिर्भैक्ष्यं, तथाविधमनाप्नुवन् ॥ कोपाविष्टो बभूवान्त–र्दुष्टश्चैवमचिन्तयत् ॥ १६ ॥ भ्रमयत्येष वृद्धो मां, प्रतिवेश्म निरर्थकम् ॥ सश्रद्धश्राद्धगेहानि, न दर्शयति मे पुनः ! ॥ १७ ॥ सूरयोपि तदाकूतं ज्ञात्वा कोपेङ्गितादिभिः ॥ तत्तुष्टिकारिभिक्षार्थ–मिभ्यश्रेष्ठिगृहं ययुः ॥ १८ ॥ दुष्टरेवतिकासंज्ञ–व्यन्तरीभिरुपद्रुतः ॥ तस्य च श्रेष्ठिनः पुत्रो, रुदन्नासीदहर्निशम् ॥ १९ ॥ अगाच्च रुदतस्तस्य, षण्मासी न तु केचन ॥ उपायाः प्राभवंस्तत्र, मातापित्रादिकारिताः ॥ २० ॥ गत्वा तस्य शिशोः पार्श्वे, कृत्वा चप्पुटिकाध्वनिम् ॥ वत्स ! मारुदिहीत्यूचु– स्तदा सङ्गमसूरयः ॥ २१ ॥ तेषां तद्वाक्यमाकर्ण्य, रेवत्यो भयविह्वलाः ॥ आशु नेशुः शिशुरपि, न रुरोद ततः परम् ॥ २२ ॥ तद्वीक्ष्य मुदितः श्रेष्ठी, मोदकैस्तान्यमन्त्रयत् ॥ हृद्या हि प्राप्यते भिक्षा, गुणैः परिचयेन वा ॥ २३ ॥ दत्तायाऽदापयंश्चित्त–मोदकांस्तांश्च मोदकान् ॥ सूरिमुख्याः पुनर्नैक–मपि तं जगृहुः स्वयम् ॥ २४ ॥ भ्रमन्मया समं पूर्णा–ऽऽहारो मा खिद्यतामसौ ! ॥ ध्यात्वेति वसतिं गन्तुं, व्यसृजन् गुरवोऽथ तम् ॥ २५ ॥ विशिष्टगृहमेकं मे, गुरवो दर्शयंश्चिरात् ॥ मां विसृज्याथ यास्यन्ति, सौधान् श्रेष्ठतरान् स्वयम् ॥ २६ ॥ चिन्तयन्निति दत्तर्षि– र्जगामोपाश्रयं निजम् ॥ स्वयं शठो हि सरल–मप्यन्यं मन्यते शठम् ॥ २७ ॥ आचार्यास्तु चिरं भ्रान्त्वा, गृहीत्वा प्रान्तभोजनम् ॥ आययुः स्वाश्रयं द्राव–प्याहारं च वितेनतुः ॥२८॥ अथावश्यककाले तं, प्रोचुः सङ्गमसूरयः ॥ आलोचयतु भिक्षाया, दोषानद्यतनान् भवान् ! ॥ २९ ॥ युष्माभिः सममेवाद्य, भिक्षायै हिण्डितोऽस्म्यऽहम् ॥ तत्किमालोचयामीति, दत्तेनोक्ते गुरुर्जगौ ॥ ३० ॥ धात्रीचिकित्सापिण्डोऽद्य, भक्षितोस्ति त्वयैव यः ॥ तमालोचय तच्छ्रुत्वा, सकोप इति सोऽब्रवीत् ॥ ३१ ॥ अपि सर्षपमात्राणि, परच्छिद्राणि पश्यसि ! ॥ आत्मनो बिल्वमात्राणि, पश्यन्नपि न पश्यसि ? ॥ ३२ ॥ द्रष्टुं स्वदोषान् लोकानां, नैकमप्यस्ति लोचनम् ॥ सन्ति लोचनलक्षाणि, परदोषविलोकने ॥ ३३ ॥ विब्रुवन्निति दत्तोऽगा–त्ततो निजकुटीरकम् ॥ तत्रस्थोऽपि च सूरीणां, दोषानेवं व्यचिन्तयत् ॥ ३४ ॥ तस्मै निन्दाकारिणेऽपि, नाकुप्यन् सूरयस्तु ते ॥ चुकोप किन्तु तद्भक्ता, पुराधिष्ठायिका सुरी ॥ ३५ ॥ ततस्तस्य कुशिष्यस्य, शिक्षायै विचकार सा ॥ मध्यरात्रे नीरवृष्टिं, सूचीदुर्भेददुर्दिनाम् ॥ ३६ ॥ सकर्करोत्करं रेणु–निकरं खरवायुना ॥ उत्क्षिप्योत्क्षिप्य चिक्षेप, तस्य चोपरि सा सुरी ॥ ३७ ॥ दत्तस्ततो भयभ्रान्त–स्वान्तो ध्वान्तावृतेक्षणः ॥ अन्धान्धुक्षिप्तवत्पश्य–न्नपि नैक्षिष्ट किञ्चन ॥ ३८ ॥ वेपमानवपुः सोऽथ, भयव्याकुलया गिरा ॥ क्व सन्ति पूज्या इत्युच्चैः, सूरिसिंहानशब्दयत् ॥ ३९ ॥ शब्देन तादृशा भीतं, तं ज्ञात्वेति गुरुर्जगौ ॥ वत्सात्रागच्छ सोऽथाऽऽख्य–न्न वः पश्यामि तामसैः ॥ ४० ॥ ततस्तस्याङ्गुलीमेका– मामृश्यादीदृशद्गुरुः ॥ सा च दीपशिखेवोच्चै–र्दिदीपे तत्प्रभावतः ॥ ४१ ॥ तद्दृष्ट्वा व्यमृशद्दत्तो, दोषदर्शी गुणेष्वपि ॥ निशि प्रदीपमप्यस्म–द्गुरवो रक्षयन्त्यमी ॥ ४२ ॥ तच्च तं चिन्तितं ज्ञात्वा–ऽवधिज्ञानेन देवता ॥ पुरो भूयेत्थमाचष्ट, रुष्टा निष्ठुरया गिरा ॥ ४३ ॥ चंद्रोज्ज्वलचरित्रेषु, यद्गुरुष्वीदृशेष्वपि ॥ दोषान् पश्यसि तन्नास्ति, त्वत्तोन्यो भुवि दुर्जनः ! ॥ ४४ ॥ त्वमेवं सद्गुरून्निन्द–न्निदानीं लप्स्यसे क्षयम् !॥ ज्वालाजिह्वं ज्वलद्रूप–माक्रामन् शलभो यथा ॥ ४५ ॥ समतारसपीयूष–कुण्डं यद्यपि सूरयः ॥ शक्तिमन्तोऽप्यऽमी निन्दा–फलं नो दर्शयन्ति ते ॥ ४६ ॥ तथापि गुरुपादाब्ज–भक्ताऽहं तव दुर्मते ! ॥ अधुना तदवज्ञाया, दर्शयामि द्रुतं फलम् ॥ ४७ ॥ तच्छ्रुत्वा जातभीर्दत्तो, निपत्य गुरुपादयोः ॥ स्वमन्तुं क्षमयामास, शरणीकृतवांश्च तान् ॥४८॥ गुरवोऽपि जगुर्वत्स !, माभैपीर्नास्ति ते भयम् ॥ उपशान्ता ततो देवी, तान्नत्वाऽगान्निजास्पदम् ॥ ४९ ॥ नवभागविहाराद्यां, गुरुणोक्तां निजक्रियाम् ॥ श्रुत्वा दत्तोऽपि निश्शङ्को, गुरुभक्तोऽभवद्भृशम् ॥ ५० ॥ यथा त्वरित्वेऽप्यसहिष्ट चर्या–परीषहं सङ्गमसूरिरेवम् ॥ तथा मुनीन्द्रैः सकलैः स सह्यो, नीवृत्पुरादिप्रतिबन्धमुक्तैः ॥ ५१ ॥ इति चर्यापरीषहे सङ्गमाचार्यकथा । ९ ॥

यथा च ग्रामादिष्वप्रतिबद्धेन चर्यापरीषहः सह्यते तथा नैषेधिकी परीषहोऽपि देहादिष्वप्रति बद्धेन सह्य इति तमाह–

मूलम्— सुसाणे सुण्णगारे वा, रुक्खमूले व एगगो । अकुक्कुओ निसीएज्जा, न य वित्तासए परं ॥२०॥

व्याख्या–श्मशाने प्रतीते, शून्यागारे वा शून्यगृहे, वृक्षमूले वा वृक्षाधोभूभागे, एकक उक्तरूपः, अकुत्कुचो दुष्टचेष्टारहितो निषीदेत् उपविशेत्। न च नैव वित्रासयेत्, परमन्यं मनुष्यादिकं, अयं भावः–श्मशानादौ एककोऽपि भूरिभैरवोपसर्गाद्युपलम्भेऽपि न स्वयं विभीयात्, न च विकृतखरशरीरविकारादिभिरन्येषां भयमुत्पादयदिति सूत्रार्थः ॥ २० ॥ तत्र तिष्ठतः कदाचिदुपसर्गोत्पत्तौ किं कृत्यमित्याह—

**मूलम्—तत्थ सेचिट्ठमाणस्स, उवसग्गाभिधारए। संकाभिओ न गच्छिज्जा, उट्ठित्ता अण्णमासणं ॥२१॥**

व्याख्या–तत्र श्मशानादौ 'से' तस्य तिष्ठत उपसर्गा दिव्याद्याः सम्भवेयुरिति शेषः। तानुपसर्गानभिधारयेत्, किं नामैते दृढमनसो मे करिष्यन्तीति चिन्तयन् सहेत, शङ्काभीरुस्तत्कृतापकारशङ्कातस्त्रस्तो न गच्छेन्न यायात् उत्थाय तत्स्थानमपहाय अन्यदपरमासनं स्थानमिति सूत्रार्थः ॥ २१ ॥ दृष्टान्तश्चात्र, तथाहि—

अभूत्पुरे गजपुरे, कुरुदत्तसुताभिधः ॥ महेभ्यपुत्रो महतां, गुणानामेकमास्पदम् ॥ १ ॥ स संविग्नो गुरूपान्ते, प्रव्रज्याधीत्य च श्रुतम् ॥ प्रतिपेदेऽन्यदैकाकि–विहारप्रतिमां सुधीः ॥ २ ॥ विहरन्नेकदा सोऽथ, साकेतनगरान्तिके ॥ तस्थौ प्रतिमया तुर्य– पौरुष्यां धैर्यमन्दरः ॥३॥ ततश्च गोधनं हृत्वा, चौरा ग्रामात्कुतश्चन ॥ कुरुदत्तसुतस्यैः, पार्श्वस्थेनाध्वना ययुः ॥ ४ ॥ साधुपार्श्वमथाभ्येयु– र्गोधनान्वेषका अपि ॥ द्वौ मार्गौ तत्र दृष्ट्वा ते, पप्रच्छुश्चेति तं मुनिम् ॥ ५ ॥ ब्रूहि साधो! पथा केन, जग्मुश्चौराः सगोधनाः! ॥ तच्छ्रुत्वापि मुनिस्तेषां, न ददौ किञ्चिदुत्तरम् ॥ ६ ॥ ततस्ते कुपिता वारि–क्लिन्नामादाय मृत्तिकाम् ॥ मौलौ तस्य मुनेः पालीं, बबन्धुर्दुष्टचेतसः ॥ ७ ॥ तत्र क्षिप्त्वा चिताङ्गारान्, ययुस्ते क्रोधविह्वलाः ॥ मुनिस्तु तैर्ज्वलन्मौलि– रप्येवं ह्यचिन्तयत् ॥ ८ ॥ "सह कलेवर! खेदमचिन्तयन्, स्ववशता हि पुनस्तव दुर्लभा! ॥ बहुतरं च सहिष्यसि जीव हे!, परवशो न च तत्र गुणोऽस्ति ते ॥ ९ ॥" ध्यायन्निति यतिर्मौलिं, मनश्चाकम्पयन्नहि ॥ सहित्वा चोपसर्गं तं, परलोकमसाधयत् ॥ १० ॥ नैषेधिक्याः परीषहः, श्रीमुनिराजेन यथाऽमुनाऽधिसेहे ॥ सकलैरपि साधुभिस्तथासौ, सहनीयो महनीयपादपद्मैः ॥ ११ ॥ इति नैषेधिकीपरीषहे कुरुदत्तसुतर्षिकथा ॥ १० ॥

नैषेधिकीतश्च स्वाध्यायादि कृत्वा शय्यामागच्छेदिति शय्यापरीषहमाह—

**मूलम्—उच्चावयाहिं सिज्जाहिं, तवस्सी भिक्खु थामवं। नाइवेलं विहण्णेज्जा,पावदिट्ठी विहण्णइ ॥२२॥**

व्याख्या–उच्चाः शीतातपनिवारकत्वादिभिर्गुणैरुत्कृष्टाः, तद्विपरीतास्त्ववचाः, उच्चाश्चावचाश्च, उच्चावचास्ताभिः शय्याभिर्वसतिभिस्तपस्वी तपःकर्त्ता, भिक्षुर्मुनिः, स्थामवान् शीतातपादि सहनं प्रति सामर्थ्यवान्, न नैव अतिवेलं स्वाध्यायादि वेलातिक्रमेण विहन्यात्, हंतेर्गतावपि प्रवृत्तेरत्राहं शीतादिभिरभिभूत इति स्थानान्तरं गच्छेत्। यद्वा अतिवेलं अन्यसमयातिशायिनीं मर्यादां समतारूपां उच्चशय्यावासी अहो! सभाग्योहं! यस्येदृशी सर्वर्तुसुखदा शय्येति हर्षेण, अवचावासी च अहो! मन्दभाग्योहं! शय्यामपि सुन्दरां न लेभे इति विषादेन, न विहन्यान्न लङ्घयेत्। कुतश्चैवमुपदिश्यत इत्याह– पापदृष्टिः पापबुद्धिः 'विहण्णइ' इति–प्राकृतत्वाद्विहन्ति उल्लङ्घते मर्यादामिति शेः। इति सूत्रार्थः ॥ २२ ॥ किम्पुनः कुर्यादित्याह–

**मूलम्—पइरिक्कं उवस्सयं लद्धुं, कल्लाणं अदुव पावगं। किमेगराइं करिस्सइ, एवंतत्थ हिआसए ॥२३॥**

व्याख्या–प्रतिरिक्तं स्त्र्यादिविरहितमुपाश्रयं वसतिं लब्ध्वा प्राप्य, कल्याणं शोभनं 'अदुवत्ति' अथवा पापकमशोभनं, किं 'न किञ्चित्सुखं दुःखं चेति गम्यते,' एकरात्रं एकां रात्रिं करिष्यति विधास्यति? कल्याणः पापको वा उपाश्रय इति प्रक्रमः। अयं भावः–केचित्सुकृतिनो मणिसुवर्णमयेषु विचित्रचित्रशालेषु सौन्दर्येन्दिराधरीकृतमन्दरेषु ससभौमादिमन्दिरेषु यावज्जीवं वसन्ति, तदन्ये तु जीर्णपर्णतृणादिमयेषु कोलोन्दरादिविलिखितभूतलेषु कुटीरकेषु, मम त्वद्यैवेयमेवंविधा वसतिः! कल्ये त्वन्या भविष्यति! तत्किमत्र हर्षेण विषादेन वा?। मया हि समभावार्थमेव व्रतमादृतमेवमनेन प्रकारेण तत्र कल्याणे पापके वोपाश्रयेऽध्यासीत, सुखं दुःखं वा। जिनकल्पिकापेक्षञ्चैकरात्रमिति, इतरापेक्षया तु कतिपयरात्रीरिति सूत्रार्थः ॥ २३ ॥ उदाहरणञ्चात्र तथाहि—

बभूव पूर्यां कौशाम्ब्यां, यज्ञदत्ताभिधो द्विजः ॥ तस्याभूतां सोमदत्त–सोमदेवाभिधौ सुतौ ॥ १ ॥ सोमभूतिमुनेः पार्श्वे, तौ द्वावपि महाशयौ ॥ प्राव्राजिष्टां भवोद्विग्ना–वभूतां च बहुश्रुतौ ॥ २ ॥ अन्यदा स्वजनान् द्रष्टुं, तौ कौशाम्बीमुपेयतुः ॥ स्वजनास्तु तदाऽवन्त्यां, गत्वाऽभूवन् स्थितास्तयोः ॥ ३ ॥ ततस्तावप्यचलता–मभिमालवकं मुनी ॥

पिबन्ति तत्र देशे च, मद्यं केचिद्द्विजा अपि ॥ ४ ॥ तत्र ब्राह्मणगेहेषु, भिक्षार्थं गतयोस्तयोः ॥ द्रव्येणान्येन संयोज्य, मद्यं विप्रस्त्रियो ददुः ॥ ५ ॥ अन्ये त्वाहुर्ददे ताभि–र्मद्यमेव यथास्थितम् ॥ तद्विशेषमजानन्ता–वपातां तच्च तावपि ॥ ६ ॥ वपुर्भ्रमादिना सीधु, पीतं ज्ञात्वाथ तौ मुनी ॥ जातानुतापौ निष्पापौ, मिथो व्यमृशतामिति ॥ ७ ॥ अयुक्तमेतदावाभ्या–मजानद्भ्यां महत्कृतम् ॥ सुरामप्यऽपिबावाऽऽवां, प्रमादादसमीक्ष्य यत् ॥ ८ ॥ सेवेताकल्प्य-मप्येव–माहारार्थी कदाचन ! ॥ तदाहारपरीहार–मेवाऽऽवां कुर्वहेऽधुना ! ॥ ९ ॥ इत्यालोच्यापगातीर–गतकाष्ठोपरि स्थितौ ॥ तावकार्ष्टां पादपोप–गमनं मुनिसत्तमौ ॥ १० ॥ अकालेऽपि तदा मेघ–वृष्टिर्जज्ञेऽतिभूयसी ॥ पूरयन्ती पयःपूरै–र्नदीं प्लावितसैकतैः ॥११॥ आरूढश्रमणं दारु, ततारोडुपवत्ततः ॥ उत्तेरतुस्ततो नैव, तदापि व्रतिनौ तु तौ ॥ १२ ॥ सोऽथ सिन्धुरयः कूल–तरून्मूलनतत्परः ॥ काष्ठारूढौ यती सद्य–स्तौ निनाय पयोनिधौ ॥ १३ ॥ उच्छलल्लोलकल्लोल–लोलनान्दोलनव्यथाम् ॥ उल्लोलोत्क्षिप्तकाष्ठौघा–भिघातश्चातिदारुणम् ॥ १४ ॥ जलजन्तुकृतां ग्रास–विबाधाश्चातिदुःसहाम् ॥ तत्र धीरमनस्कौ ता–वक्षमेतां क्षमानिधी ॥ १५ ॥ [ युग्मम् ] यावज्जीवं विषह्येति, तीव्रं शय्यापरीषहम् ॥ देवभूयं सोमदत्त–सोमदेवाववविन्दताम् ॥ १६ ॥ तौ साधुसिंहौ सहतः स्म शय्या–परीषहं यद्वदहार्यधैर्यौ ॥ तथा विपह्यो मुनिभिः स सर्वैः, शमामृतक्षीरपयोधिकल्पैः ॥ १७ ॥ इति शय्यापरीषहे सोमदत्तसोमदेवर्षिकथा ॥ ११ ॥

शय्यास्थितस्य च कदाचित्तथाविधः शय्यातरोऽन्यो वा कश्चिदाक्रोशेदपि, तत आक्रोशपरीषहमाह—

मूलम्—अक्कोसिज्ज परो भिक्खुं, न तेसिं पडिसंजले। सरिसो होई बालाणं, तह्मा भिक्खू न संजले॥२४॥

व्याख्या–आक्रोशेत्तिरस्कुर्यात् परोऽन्यो भिक्षुं, धिग् मुण्ड ! किमिह त्वमागतोसीत्यादिवाक्यैः, न 'तेसिंति' सुपो वचनस्य च व्यत्ययात्तस्मै प्रति संज्वलेत्, प्रत्याक्रोशदानादिना वह्निवद्दीप्येत। चिन्तयेच्चैवं–"आक्रुष्टेन मतिमता, तत्वार्थालोचने मतिः कार्या ॥ यदि सत्यं कः कोपः ?, स्यादनृतं किं नु कोपेन ? ॥ १ ॥" किमेवमुपदिश्यत इत्याह–प्रतिसंज्वलन् हि साधुः सदृशो भवति बालानामज्ञानां, तथाविधक्षपकवत् ॥

तथा हि क्वाप्यभूत्कश्चि–दनगारो गुणान्वितः ॥ तपोऽतिदुस्तपं मास–क्षपणादिकमाचरन् ॥ १ ॥ तद्गुणावर्जिता कापि, तं ननामाऽनिशं सुरी ॥ कार्यं मदुचितं पूज्यैः, प्रसाद्यमिति चाब्रवीत् ॥ २ ॥ श्रुत्वा विप्रस्य कस्यापि, दुर्वाक्यं सोऽन्यदा मुनिः ॥ जातकोपः समं तेन, योद्धुं प्रववृतेतराम् ॥ ३ ॥ क्षुत्क्षामदेहः क्षपक–स्ततस्तेन द्विजन्मना ॥ हत्वा मुष्ट्यादिभिः पृथ्व्या–मपात्यत तरस्विना ॥ ४ ॥ मुहुर्मुहुस्ताडयित्वा, द्विजेन मुमुचेऽथ सः ॥ ततः स्वस्थानमगम–त्क्षपकोऽपि कथञ्चन ॥ ५ ॥ तत्पार्श्वेऽथ विभावर्यां, विभाभिर्भासुरा सुरी ॥ समाजगाम तत्पादौ, प्रणनाम च पूर्ववत् ॥ ६ ॥ तां देवीं जल्पयामास, न किञ्चित्क्षपकः पुनः ॥ अजल्पन्तं च तं साधु–मेवं पप्रच्छ देवता ॥ ७ ॥ त्वं न जल्पयसि स्वामि–न्नपराधात्कुतोऽद्य मां ? ॥ ततो वाचंयमोप्युच्चैः, प्रत्युवाचेति निर्जरीम्॥८॥ द्विजेन हन्यमानोऽपि, यन्नाहं रक्षितस्त्वया ॥ ममापकारिणस्तस्य, किञ्चिन्नापकृतं च यत् ॥ ९ ॥ ततस्त्वां वादये नाहं, वाङ्मात्रप्रीतिकारिणीम् ॥ तच्छ्रुत्वेत्यभ्यधाद्देवी, स्मितविच्छुरिताधरा ॥ १० ॥ [ युग्मम् ] युवयोरभवद्युद्धं, यदान्योन्यविलग्नयोः ॥ तदाहमपि तत्रैवा–ऽभूवं कौतुकदर्शिनी ॥ ११ ॥ किन्तु तुल्यौ युवां दृष्टौ, कोपाविष्टौ मया तदा ॥ कः साधुः ? को द्विजश्चेति, नाज्ञासिषमहं तदा ! ॥ १२ ॥ युष्मद्रक्षां विप्रशिक्षा–मत एव च न व्यधाम् ॥ श्रुत्वेति क्षपकः शान्त–कोपाटोपोऽब्रवीदिति ॥ १३ ॥ सूनृता प्रेरणा देवि, त्वयाऽसौ विहिता मम ॥ तदमुष्यातिचारस्य, मिथ्यादुष्कृतमस्तु मे ! ॥ १४ ॥ ततो यतिं तं प्रणिपत्य सत्य–भक्त्या निजं धाम जगाम देवी ॥ कुप्यन्मुनिः स्यादिति बालतुल्यो, नाक्रोशकारिष्वपि तेन कुप्येत् ॥ १५ ॥ इतिक्षपककथा ॥

उक्तमेवार्थं निगमयितुमाह–'तम्हत्ति' यस्माद्बालानां सदृशो भवति तस्माद्भिक्षुर्न संज्वलेदिति सूत्रार्थः ॥ २४ ॥ कृत्योपदेशमाह—

मूलम्—सोच्चाणं फरुसा भासा, दारुणा गामकंटया। तुसिणीओ उवेहेज्जा, न ताओ मणसी करे ॥२५॥

व्याख्या–श्रुत्वा 'णमिति' वाक्यालंकारे, परुषाः कर्कशा भाषा वाचः, दारयन्ति संयमविषयां धृतिमिति दारुणाः, तथा ग्राम इन्द्रियग्रामस्तस्य कण्टका इवातिदुःखोत्पादकत्वेन ग्रामकण्टकाः, 'तुसिणीओत्ति' तूर्ष्णीशीलो न कोपात्परु-

यभाषी । उपेक्षेतावधीरयेत्, अक्रमात्परुषभाषा एव, कथमित्याह–न ना मनसि कुर्यात्तद्भाषिणि द्वेषाकरणेनेति भाव इति सूत्रार्थः ॥ २५ ॥ दृष्टान्तश्चात्र, तथाहि—

अभूत्पुरे राजगृहे, गृहे निःशेषसम्पदाम् ॥ मालाकारोऽर्जुनाह्वानः, स्कन्दश्रीस्तस्य च प्रिया ॥ १ ॥ यक्षो मुद्गरपाण्याह्वः पुराद्राजगृहाद्बहिः ॥ अर्जुनस्यारामगार्गे—ऽभवत्तद्गोत्रदेवता ॥ २ ॥ कुसुमैर्मेदुरामोद–प्रमोदितजगज्जनैः ॥ तं यक्षमर्जुनो भूरि–भक्त्याऽपूजयदन्वहम् ॥ ३ ॥ स्कन्दश्रीरन्यदा भर्तु–र्भक्तं दत्वा गृहं प्रति ॥ पुष्पाण्यादाय वलिता, यक्षचैत्यान्तिकं ययौ ॥ ४ ॥ तदा च तां दुर्ललित–गोष्ठीसत्का मदोत्कटाः ॥ यक्षवेश्मस्थिताः प्रेक्षा–मासुः षट् कामिनो नराः ॥५॥ असौ सौन्दर्यवसति–र्वनिताऽर्जुनमालिनः ॥ गृह्णतामिति जल्पन्तो, द्रुतं ते जगृहुश्च ताम् ॥ ६ ॥ यक्षायतनमध्ये च, तां समानीय कामिनीम् ॥ यक्षस्याग्रे बुभुजिरे, ते सर्वेऽपि पुनः पुनः ॥ ७ ॥ तदा च यक्षपूजार्थं, तत्रागादर्जुनोऽपि हि ॥ तच्चायान्तं विलोक्यैवं, स्कन्दश्रीस्तानभाषत ॥ ८ ॥ आगच्छत्यर्जुनोऽसौ त–र्त्किं मां यूयं विमोक्ष्यथ ? ॥ ततस्तेऽचिन्तयन्नून–मेतस्याः प्रियमस्त्वदः ॥ ९ ॥ वराकान्मालिकादस्मा–न्नास्माकं भीरु ! भीरिति ॥ ब्रुवन्तस्ते ववन्धुश्च, द्रुतमर्जुनमालिनम् ॥ १० ॥ तं यक्षस्य पुरो न्यस्य, तस्य पश्यत एव हि ॥ सिषेविरे ते तत्कान्ता–महम्पूर्विकया मुहुः ॥ ११ ॥ स्वभार्यां भुज्यमानां तै–र्वीक्ष्याऽचिन्तयदर्जुनः ॥ एनं यक्षं पुष्पपुञ्जैः, पूजयाम्यहमन्वहम् ॥ १२ ॥ अद्य त्वस्यैव पुरतः, प्राप्नोम्येतां विडम्बनाम् ॥ तन्निश्चितमिदं नैव, यक्षः कोप्यत्र विद्यते ! ॥ १३ ॥ यदि चात्र भवेद्यक्ष–स्तदासौ मां स्वसेवकम् ॥ नैवेदानीमुपेक्षेत, पीड्यमानमनाथवत् ॥ १४ ॥ ध्यायन्तमिति तं ज्ञात्वा, यक्षस्तदनुकम्पया ॥ प्रविवेशाशु तस्याङ्गे–ऽछिदत्तद्बंधनानि च ॥ १५ ॥ सहस्रपलनिष्पन्नं, गृहीत्वा लोहमुद्गरम् ॥ तान्नारीसप्तमान् गोष्ठी–पुरुषान् षट् जघान च ॥ १६ ॥ इत्थं प्रतिदिनं नारी–सप्तमान् मानवान् स षट् ॥ जघान सतताभ्यासा–द्भ्रामं भ्रामं पुराद्बहिः ॥ १७ ॥ तज्ज्ञात्वा पूर्जनः सर्व–स्तावन्न निरगाद्बहिः ॥ यावत्तेन हता न स्युः, षट् नारीसप्तमा नराः ॥ १८ ॥

अन्यदा तत्पुरोपान्ते, श्रीवीरः समवासरत् ॥ नत्वर्जुनभयात्कोऽपि, जिनं नन्तुं ययौ जनः ॥ १९ ॥ तदा तत्पुरवास्तव्यः, श्रुत्वा श्रीमज्जिनागमम् ॥ एवं सुदर्शनः श्रेष्ठी, दध्यौ हर्षोच्छ्लसत्तनुः ॥ २० ॥ अहो ! जगज्जनाम्भोज–प्रबोधननभोमणिम् ॥ श्रीवीरमपि नन्तुं नो, यात्यर्जुनभयाज्जनः ॥ २१ ॥ जिनस्य विश्वत्रितय–त्रायिणो ध्यायिनं जनम् ॥ हन्तुमीष्टे न हीन्द्रोऽपि, तज्जनोऽयं बिभेति किम् ? ॥ २२ ॥ यद्भाव्यं तद्भवतु वा, स्वामिनं किन्तु वन्दितुम् ॥ यास्याम्येवेति स ध्यात्वा, निरगान्नगराद्बहिः ॥ २३ ॥ अर्जुनोऽपि दधावे द्राग्, वीक्ष्यायान्तं सुदर्शनम् ॥ उल्लालयन् मुद्गरं तं, पुष्पकन्दुकलीलया ॥ २४ ॥ तं चापतन्तं वेगेन, धनुर्मुक्तपृषत्कवत् ॥ वीक्ष्येति व्यमृशद्धर्य–स्थैर्यधैर्यैः सुदर्शनः ॥ २५ ॥ अयं मुद्गरपाणिर्मां, हन्तुमायाति मालिकः ॥ तदात्मकृत्यं कुर्वेह–मेवं ध्यात्वेति सोऽब्रवीत् ॥ २६ ॥ अर्हत्सिद्धमुनीन् जैनं, धर्मं च जगदुत्तमम् ॥ शरणं प्रतिपन्नोऽस्मि, श्रीवीरं च जगद्गुरुम् ॥ २७ ॥ किञ्चास्मादुपसर्गाच्चे– द्यमोक्षो भवेन्मम ॥ तदा चतुर्विधाहारः, कल्पते नान्यथा पुनः ! ॥ २८ ॥ इत्थं निगद्य साकारा–ऽनशनं प्रतिपद्य च ॥ स्मरन् पञ्च नमस्कारान्, कायोत्सर्गं चकार सः ॥ २९ ॥ सद्यः सुदर्शनाभ्यर्ण–मायासीदर्जुनोऽप्यथ ॥ नाशकत्तमुपद्रोतुं, किन्तु धर्मप्रभावतः ॥ ३० ॥ ततस्तं परितोऽभ्राम्य–द्बलवानर्जुनोऽधिकम् ॥ शशाक शशकं सिंह–मिव नाक्रमितुं पुनः ॥ ३१ ॥ भ्रामं भ्राममविश्रामं, यक्षः श्रान्तोऽभवत्ततः ॥ न तु तं द्रष्टुमैशिष्ट, दुर्दृष्याऽर्कमुलूकवत् ॥ ३२ ॥ आदाय मुद्गरं मुक्त्वा–ऽर्जुनं यक्षोऽगमत्ततः ॥ अपि देवबलाद्धर्म–बलमेव विशिष्यते ! ॥ ३३ ॥ मुक्तस्तेनार्जुनः पृथ्व्यां, पपात च्छिन्नशाखिवत् ॥ उत्तस्थौ च क्षणादङ्गं, मोटयन् गतनिद्रवत् ॥ ३४ ॥ किमकार्षं ? क्व स्थितोऽस्मि ?, का दशा मम विद्यते ! ॥ इति स ज्ञातवान्नैव, निद्रावस्थानुभूतवत् ॥ ३५ ॥ सोऽथाऽप्राक्षीत्स्वस्वरूपं, कृतोत्सर्गं सुदर्शनम् ॥ उपसर्गः शशामेति, सोप्युत्सर्गमपारयत् ॥ ३६ ॥ सर्वं तत्पूर्ववृत्तान्तं, तस्मै सम्यग् जगाद च ॥ तच्छ्रुत्वा जातनिर्वेदो–ऽर्जुनश्चिन्तितवानिति ॥ ३७ ॥ अहो ! अज्ञानिना घोरं, कर्मेदं नरकप्रदम् ! ॥ मया कृतमिति ध्यायन्, सोऽपृच्छदिति तं पुनः ॥ ३८ ॥ किमर्थं प्रस्थितोसि त्वं ?, ब्रूहि भ्रातः ! सुदर्शन ! ॥ सोऽप्यधाच्छ्रीमहावीरं, वन्दनार्थं व्रजाम्यहम् ॥ ३९ ॥ तच्छ्रुत्वेत्यर्जुनोऽवादी–द्वन्दितुं परमेश्वरम् ॥ अहमप्यागमिष्यामि, त्वया सह महामते ! ॥ ४० ॥ ततस्तेन समं हृष्टः, श्रीमहावीरसन्निधौ ॥ अगात्सुदर्शनः स्वामि–दर्शनोत्सुकदर्शनः ॥ ४१ ॥ श्रीवर्द्धमानतीर्थेश–पादपद्मौ प्रणम्य तौ ॥ सम्यक् शुश्रुवतुर्धर्म–देशनां क्लेशनाशिनीम्

॥ ४२ ॥ देशनान्ते च सर्वज्ञं, प्रणम्याप्रृच्छदर्जुनः ॥ स्वामिन्! कथं विशुद्धिर्मे, भवेद्बहुलपाप्मनः ॥ ४३ ॥ अथोचे भगवांस्त्वं चे-दात्मशुद्धिं चिकीर्षसि ॥ तर्हि संयममादाय, तपस्तप्यस्व दुस्तपम् ॥ ४४ ॥ मलं स्वर्णगतं वह्नि-र्हंसः क्षीरगतं जलम् ॥ यथा पृथक्करोत्येवं, जन्तोः कर्ममलं तपः ॥ ४५ ॥ यथाम्बुदा विलीयन्ते, प्रचण्डपवनाहताः ॥ तथा तीव्रतपोऽपास्ताः, पाप्मानः प्रबला अपि ॥ ४६ ॥ तन्निशम्यार्जुनः स्वामि-समीपे व्रतमाददे ॥ निर्जरार्थं व्यहार्षीच्च, पुरे राजगृहे सदा ॥ ४७ ॥ निरन्तरं षष्ठतपः, कुर्वन् साम्यसुधाम्बुधिः ॥ साध्वाचारं च सकलं, निष्कलंकमपालयत् ॥ ४८ ॥ अस्मत्स्वजनहन्ताऽसौ, दुष्टो दुष्कर्मदूषितः ॥ धूर्तो धत्तेऽधुना साधु-वेषं वेषविडम्बकः! ॥ ४९ ॥ इत्याद्यैर्बहुलोकोक्तै-राक्रोशैस्ताडनैस्तथा ॥ स महात्मा न चुक्षोभ, प्रत्युतैवमचिन्तयत् ॥ ५० ॥ [युग्मम्]
"मन्निंदया यदि जनः परितोषमेति, नन्वप्रयासजनितोऽयमनुग्रहो मे ॥ श्रेयोऽर्थिनो हि मनुजाः परतुष्टिहेतो-र्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ ५१ ॥" किञ्च "अक्कोसहणणमारण-धम्मब्भंसाण बालसुलहाणं ॥ लाभं मण्णइ धीरो, जहुत्तराणं अलाभंमि ॥ ५२ ॥" इति ध्यायन् स षण्मासीं, सोढाक्रोशपरीषहः ॥ कृतकर्मक्षयः प्राप, केवलज्ञानमुज्ज्वलम् ॥ ५३ ॥ ततश्चिरं स प्रतिबोध्य भव्यान्, मुक्तिं ययावर्जुनमालिसाधुः ॥ एतद्वदाक्रोशपरीषहोऽन्यै-रपि क्षमाढ्यैः श्रमणैर्विषह्यः ॥ ५४ ॥ इत्याक्रोशपरीषहेऽर्जुनमालिकर्षिकथा ॥ १२ ॥

१ मुक्तिं ययावर्जुनमालिकर्षि. । इति 'ग' सञ्ज्ञकपुस्तके ॥

अथ कश्चिदाक्रोशमात्रदानेनातुष्यन् वधमपि विदध्यादिति वधपरीषहमाह—

**मूलम्— हओ न संजले भिक्खु, मणंपि न पओसए। तितिक्खं परमं नच्चा, भिक्खुधम्मं विचिंतए ॥२६॥**

व्याख्या—हतो यष्ट्यादिभिस्ताडितो न सञ्ज्वलेत्, कायतः कम्पनप्रत्याहननादिना, वचनतश्च प्रत्याक्रोशदानादिना ज्वलंतमिवात्मानं नोपदर्शयेद्भिक्षुर्मनश्चित्तं तदपि न प्रदूषयेत् न कोपाद्विकृतं कुर्वीत, किन्तु तितिक्षां क्षमां परमां धर्मसाधनं प्रति प्रकर्षवर्तीं ज्ञात्वा अवगत्य भिक्षुधर्मं यतिधर्मं क्षान्त्यादिरूपं वस्तुस्वरूपं वा विचिन्तयेत्, भावयेच्च क्षमामूल एव मुनिधर्मो, यच्च मन्निमित्तमयं कर्मोपचिनोति, सोऽपि ममैव दोष इति नैनं प्रति कोप उचित इति सूत्रार्थः ॥ २६ ॥ अमुमेवार्थं प्रकारान्तरेणाह—

**मूलम्— समणं संजयं दंतं, हणेज्जा कोवि कत्थइ। नत्थि जीवस्स नासोत्ति, एवं पेहिज्ज संजए ॥ २७ ॥**

व्याख्या—श्रमणं तपस्विनं, संयतं पृथ्वीकायादिहिंसानिवृत्तं, इदञ्च लाभाद्यर्थं बाह्यवृत्त्यापि सम्भवेदत आह—दान्तमिन्द्रियनोइन्द्रियदमेन, हन्यात्ताडयेत्कोऽपि तादृशो दुष्टः, कुत्रचिद्ग्रामादौ, तत्र किं कार्यमित्याह—नास्ति जीवस्यात्मन उपयोगलक्षणस्य नाशोऽभावः, शरीरस्यैव नाशात्। 'इतिः' पूर्णे, 'एवं' स्वरूपार्थे, प्रेक्षेत भावयेत्संयतः साधुरिति सूत्रार्थः ॥ २७ ॥ निदर्शनञ्चात्र, तथाहि—

अभून्नगर्यां श्रावस्त्यां, जितशत्रुर्महीपतिः ॥ सधर्मचारिणी तस्य, धारिणी संज्ञिकाऽभवत् ॥ १ ॥ गौरीशयोः स्कन्द इव, स्कन्दकोऽभूत्सुतस्तयोः ॥ पुरन्दरसुतादेश्या, पुरन्दरयशाः सुता ॥ २ ॥ तदा दण्डकि भूपोऽभू-त्कुम्भकारकृते पुरे ॥ पुरोहितस्तु तस्याऽऽसी-दभव्यः पालकाभिधः! ॥ ३ ॥ तेन दण्डकिसंज्ञेन, भूभृता भूरिभूतिना ॥ पुरन्दरयशाः कन्या, पितृभ्यां पर्यणायि सा ॥ ४ ॥ अन्यदा सुव्रतस्वामी, भव्याम्भोजनभोध्वगः ॥ श्रावस्त्यां समवासार्षी-त्सुरासुरनमस्कृतः ॥ ५ ॥ धन्यंमन्यः स्कन्दकोऽगा-त्तं नन्तुं परमेश्वरम् ॥ श्रुत्वा तद्देशनां श्राद्ध-धर्मञ्च प्रत्यपद्यत ॥ ६ ॥ पुरोधाः पालकः सोऽथ, कुम्भकारकृतात्पुरात् ॥ केनचिद्राजकार्येण, श्रावस्त्यामन्यदाऽऽययौ ॥७॥ स च भूपसभामध्ये, कुर्वन्निर्ग्रन्थगर्हणाम् ॥ द्रुतं निरुत्तरीचक्रे, स्कन्दकेन महाधिया ॥ ८ ॥ पापः प्राप ततो द्वेषं, पालकः स्कन्दकोपरि ॥ अपकर्तुम्पुनःकिञ्चि-त्तस्य न प्राभवत्तदा ॥ ९ ॥ कृतप्रस्तुतकृत्योऽथ, पालकः स्वास्पदं ययौ ॥ जगाम न तु तच्चित्ता-त्कोपः स्कन्दकगोचरः ॥ १० ॥ अथ श्रीसुव्रतस्वामि-पादान्ते दान्तमानसः ॥ प्राव्राजीत्स्कन्दकः साकं, मर्त्यानां पञ्चभिः शतैः ॥ ११ ॥ क्रमाद्बहुश्रुते जाते, स्कन्दके सुव्रतप्रभुः ॥ तस्मै शिष्यतया तानि, पंञ्च साधुशतान्यदात् ॥ १२ ॥ अन्येद्युः सुव्रतार्हन्तं, स्कन्दकः पृष्टवानिति ॥ व्रजाम्यहं स्वसुर्देश-मादेशः स्याद्यदि प्रभोः ॥ १३ ॥ जगौ जगत्प्रभुस्तत्रो-पसर्गस्ते मारणान्तिकः ॥ सर्वेषामुपसर्गो व-स्तच्छ्रुत्वा स्कन्दकोऽवदत् ॥ १४ ॥ आराधनासाधको हि, नोपसर्गस्तपस्विनाम् ॥ दुःखायते महानन्द-महानन्दाभिलाषिणाम्! ॥ १५ ॥ ततो

१ मुनिपञ्चशतान्यदात्। इति 'ग' सञ्ज्ञकपुस्तके ॥

ब्रूहि प्रभो! नस्मि-न्नुपसर्ग उपस्थिते ॥ आराधका भविष्यामो, वयं यद्वा विराधकाः ? ॥ १६ ॥ स्वामी स्माह त्वां विनाऽन्ये, सर्वेप्याराधका इति ॥ स्कन्दकस्तन्निशम्येति, व्यमृशद्भृशमुत्सुकः ॥ १७ ॥ आराधका इयन्तः स्यु-र्विहारे यत्र साधवः ॥ नूनं स शुभ एवेति, विचिन्त्य स्कन्दकोऽचलत् ॥ १८ ॥ क्रमाद्गत्वा कुम्भकार-कृते स सपरिच्छदः ॥ उद्याने समवासार्षी-त्तमश्रौषीच्च पालकः ॥ १९ ॥ ततः प्राग्वैरशुद्धयर्थ-मुद्याने तत्र पालकः ॥ प्रच्छन्नं गोपयामास, विविधायुधधोरणीम् ॥ २० ॥ इति दण्डकिराज्ञे चा-ऽपडक्षीणमुवाच सः ॥ जितः परीषहैरत्र, स्कन्दकोऽस्ति समागतः ॥ २१ ॥ अयं स्वयं महावीर्य-श्चण्डदोर्दण्डविक्रमैः ॥ साधुवेषधरैर्युक्तो, भटानां पञ्चभिः शतैः ॥ २२ ॥ उद्याने गोपितैः शस्त्र-प्रकरैरतिदारुणैः ॥ त्वां वन्दितुं गतं हत्वा, राज्यमेतद्ग्रहीष्यति ! ॥ २३ ॥ [ युग्मम् ] प्रत्ययश्चेन्न ते स्वामि-न्नस्मिन्मद्वचने भवेत् ॥ तदा तद्गोपितास्त्राणि, गत्वोद्यानं विलोकय ! ॥ २४ ॥ एवं व्युद्ग्राहितस्तेन, तदुद्यानं गतो नृपः ॥ स्थानेषु पालकोक्तेषु, नानास्त्राणि निरैक्षत ! ॥ २५ ॥ दृष्ट्वा तानि नृपः क्रुद्धो, मुनीन्सर्वानबन्धयत् ॥ अकार्यं विद्यते किञ्चि-न्नाऽविमृश्य विधायिनाम् ॥ २६ ॥ पापस्य पालकस्यैव, तान्निबद्धयार्पयन्नृपः ॥ यत्तुभ्यं रोचते तत्त्व- मेषां कुर्या इति ब्रुवन् ! ॥ २७ ॥ मूषकानिव मार्जार-स्तान् प्राप्य मुदितोऽथ सः ॥ संयतान् संयतान्मर्त्य-पीडायन्त्रान्तिकेऽनयत् ॥ २८ ॥ इति प्रोचे च रे! यूय-मिष्टं स्मरत दैवतम् ॥ इदानीं पीडयिष्यामि, यन्त्रेणानेन वोऽखिलान् ॥ २९ ॥ ततस्ते साधवो धीरा, ज्ञातोपस्थितमृत्यवः ॥ जीविताशामृत्युभीति-विप्रमुक्ता मनस्विनः ॥ ३० ॥ गृहीतालोचना सम्यक्, मैत्रीभावमुपागताः ॥ पर्यन्ताराधनां सर्वे, विदधुर्विधिपूर्वकम् ! ॥ ३१ ॥ [ युग्मम् ] मर्त्तव्यं कातरेणापि, धीरेणापि च भूस्पृशा ॥ द्विधापि नियते मृत्यौ, धीरैर्भाव्यं मनस्विभिः ॥ ३२ ॥ इत्यादि वदतोत्साह्य-मानाः स्कन्दकसूरिणा ॥ अभवंस्ते विशेषेण, स्वदेहेऽपि गतस्पृहाः ! ॥३३॥ [ युग्मम् ] क्रूराशयः क्रूरकर्मा, क्रूरगीः पालकस्ततः ॥ एकैकं श्रमणं यन्त्रे, क्षेपं क्षेपमपीडयत् ॥ ३४ ॥ पीड्यमानान्न विनेयान् स्वान्, वीक्ष्यान्तर्दह्यतामयम् ॥ इति स स्कन्दकं यन्त्र-पार्श्वे बद्धमधारयत् ॥३५॥ पीड्यमानानगाराङ्गो-च्छलच्छोणितबिन्दुभिः ॥ समन्ताद्ध्रियमाणोऽपि, नाऽकुप्यत्स्कन्दकः पुनः ! ॥ ३६ ॥ किन्तु साम्यसुधास्पन्द-भावितैः समयोचितैः ॥ वाक्यैर्निर्यामयामास, तानेवं स महाशयः ! ॥ ३७ ॥ "भिन्नः शरीरतो जीवो, जीवाद्भिन्नश्च विग्रहः ॥ विदन्निति वपुर्नाशेऽप्यन्तः खिद्येत कः कृती ? ॥ ३८ ॥ किञ्चाखिलो विपाकोऽय- मस्ति स्वकृतकर्मणः ॥ दुःखाय नोपसर्गस्त-त्सतां कर्मजिघांसताम् ॥ ३९ ॥ अवश्यं नाशिनो बाह्य-स्याङ्गस्याऽस्य कृते ततः ॥ कोपः कार्यो नान्तरङ्ग-ध्रुवधर्मधनापहः ॥ ४० ॥" स्कन्दकेनेति निर्याम्य-माना निर्मलमानसाः ॥ महात्मानो विपक्षे च, मित्रे च समदृष्टयः ॥४१॥ यन्त्रपीडनपीडां तां, क्षममाणाः क्षमाधनाः ॥ केवलं प्राप्य कैवल्य-सुखं ते लेभिरे क्रमात् ! ॥ ४२ ॥ [ युग्मम् ] द्रुतं हतेषु तेनैवं, न्यूनपञ्चशतर्षिषु ॥ एकं क्षुल्लकमुद्दिश्य, पालकं स्कन्दकोऽवदत् ॥ ४३ ॥ अनुकम्प्यमिमं बालं, पीड्यमानं निरीक्षितुम् ॥ नाहं शक्ष्यामि नियतं, पूर्वं पीडय मां ततः ! ॥ ४४ ॥ तच्छ्रुत्वा पालकस्तस्य, भूरि दुःखविधित्सया ॥ गुरोः पश्यत एव द्राक्, प्राक् तं बालमपीडयत् ! ॥ ४५ ॥ शुक्लध्यानसुधासार-शान्तकर्महुताशनः ॥ बालः सोऽपि महासत्त्वो, महानन्दमविन्दत ! ॥ ४६ ॥ तद्वीक्ष्य स्कन्दकाचार्यः, क्रुद्धोऽन्तर्ध्यातवानिति ॥ अनेन सपरीवारः, पापेनाऽस्मि विनाशितः ! ॥ ४७ ॥ क्षुल्लकोऽपि हि मद्वाचा, क्षणमेकं न रक्षितः ॥ निग्राह्य एव पापोऽसौ, तन्मया गर्वपर्वतः ॥ ४८ ॥ अयं भूपोऽपि निग्राह्यो-सद्विनाशनिबन्धनम् ॥ उपेक्षाकारिणोऽस्माकं, वध्या जानपदा अपि ! ॥ ४९ ॥ तद्दुष्करस्य चेदस्य, भवेन्मत्तपसः फलम् ॥ तदाहं दाहकोऽमीषां, भूयासं भाविजन्मनि ! ॥ ५० ॥ इत्थं कृतनिदानः स, पीडितस्तेन दुर्धिया ॥ मृत्वा वह्निकुमारेषु, सुरोऽभूत्परमर्द्धिकः ॥ ५१ ॥ पुरन्दरयशास्तत्र, दिने चैवमचिन्तयत् ॥ कुतो हेतोः पुरीमध्ये, न दृश्यन्तेऽद्य साधवः ! ॥ ५२ ॥ इतश्च स्कन्दकमुने-रजोहरणमुत्तमम् ॥ रक्ताभ्यक्तं कर इति, जगृहे गृध्रपक्षिणा ॥ ५३ ॥ तद्रजोहरणं च द्राग्, भवितव्यनियोगतः ॥ पुरः पुरन्दरयशो-देव्या गृध्रो न्यपातयत् ॥ ५४ ॥ तच्चादायोद्वेष्टयन्ती, सा स्वयं परिकर्मितम् ॥ काम्बलं खण्डमद्राक्षी-द्भ्रातुः प्रव्रजतोर्पितम् ॥ ५५ ॥ चिह्नेन तेन च ज्ञात्वा, सोदरादीन्मुनीन् हतान् ॥ महतीमधृतिं प्राप्ता, साऽवादीदिति भूपतिम् ॥ ५६ ॥ रे साधुद्विष्ट ! पापिष्ठ !, विनंक्ष्यत्यधुना भवान् ॥ महर्षीणां सुराणां च नह्यवज्ञा शुभावहा ! ॥ ५७ ॥ इत्युदीर्येति दध्यौ चा-ऽधुनाऽहं व्रतमाददे ॥ अलं संसारवासेना-ऽमुना दुःखौघदायिना ! ॥ ५८ ॥ चिन्तयन्तीति सा देवैः, सुव्रतस्वामिसन्निधौ ॥ नीताऽऽदाय परिव्रज्यां, परलोकमसाधयत् !

॥ ५९ ॥ ज्ञात्वाऽथाऽवधिना प्राच्यं, स्ववृत्तं स्कन्दकामरः ॥ क्रोधाध्मातो देशयुक्त-मधाक्षीन्मंक्षु तत्पुरम् ॥ ६० ॥ ततोऽरण्यमभूद्देश-भूमौ दण्डकिभूपतेः ॥ अद्यापि दण्डकारण्य-मिति तत्प्रोच्यते बुधैः ॥ ६१ ॥ एकोनपञ्चशतसाधुवरैरवार्य-वीर्यैर्यथा वधपरीषह एष सोढः ! ॥ सह्यस्तथा यमपरैरपि साधुमुख्यैः, श्रीस्कन्दकश्रमणवन्न पुनर्विधेयम् ॥ ६२ ॥ इति वधपरीषहे सपरिवारस्कन्दकार्षिकथा ॥ १३ ॥

परैरभिहतस्य च यतेस्तथाविधौषधादियाचितमेव स्यादिति तत्परीषहमाह—

**मूलम्—दुक्करं खलु भो निच्चं, अणगारस्स भिक्खुणो । सव्वं से जाइअं होई, नत्थि किंपि अजाइअं॥२८॥**

व्याख्या—दुष्करं दुरनुष्ठेयं, खलुर्विशेषणे, निरुपकारिण इति विशेषं द्योतयति, 'भो' इत्यामन्त्रणे, नित्यं सर्वकालं यावज्जीवमित्यर्थः, अनगारस्य भिक्षोः । किं तद्दुष्करमित्याह—यत्सर्वमाहारोपकरणादि 'से' तस्य याचितं भवति, नास्ति किञ्चिद्दन्तशोधनादिकमप्ययाचितमिति सूत्रार्थः ॥ २८ ॥ ततश्च—

**मूलम्—गोअरग्गपविट्ठस्स, पाणी नो सुप्पसारए । सेओ अगारवासोत्ति, इइ भिक्खू न चिंतए ॥ २९ ॥**

व्याख्या—गोचरो भिक्षाचर्या, तस्याग्रं गोचराग्रं, एषणा शुद्धग्राहितया प्रधानगोचर इत्यर्थः । तत्प्रविष्टस्य मुनेरिति गम्यं, पाणिर्हस्तो नो नैव सुप्रसारकः सुखेन प्रसारयितुं शक्यः । कथं हि निरुपकारिणा परः प्रतिदिनं प्रार्थयितुं शक्यते ? उत्तरस्य 'इति' शब्दस्यात्र योगादित्यतो हेतोः श्रेयान् प्रशस्योऽगारवासो गार्हस्थ्यं, तत्र हि न कोऽपि प्रार्थ्यते, स्वभुजार्जितं च दीनादिभ्यः संविभज्य भुज्यते इत्येतद्भिक्षुर्न चिन्तयेत्, बहुसावद्यो हि गृहवासः, कथं श्रेयानिति सूत्रार्थः ॥ २९ ॥ उदाहरणसम्प्रदायश्चात्र, तथाहि—

अस्त्यत्र भरते स्वर्ण-मयी त्रिदशैर्निर्मिता ॥ प्रतिबिम्बमिव स्वर्ग-लोकस्य द्वारका पुरी ॥ १ ॥ बलार्धचक्रिणौ राम-कृष्णाह्वौ विश्वविश्रुतौ ॥ तत्राऽभूतां वसुदेव-रोहिणीदेवकीसुतौ ॥ २ ॥ तौ च प्रद्युम्नशाम्बाद्यैः, सार्धकोटित्रयोन्मितैः ॥ युक्तौ कुमारैरन्यैश्च, कोटिशो यदुपुङ्गवैः ॥ ३ ॥ सुररामाभिरामाभिः, स्त्रीभिः सह सहस्रशः ॥ भोगाभोगानभुञ्जातां, पूर्णाखिलमनोरथौ ॥ ४ ॥ [ युग्मम् ] अन्यदा द्वारकापुर्यां, केवलज्ञानभास्करः ॥ भव्याब्जप्रतिबोधार्थं, श्रीनेमिः समवासरत् ॥ ५ ॥ तदा च श्रीनेमिनाथं, वन्दित्वा रामकेशवौ ॥ समाकर्णयतां धर्म-देशनां सपरिच्छदौ ॥ ६ ॥ देशनान्ते च सर्वज्ञं, प्रणम्यापृच्छदच्युतः ॥ अमुष्या द्वारकापुर्याः, स्वर्गाधिकारिसंपदः ॥ ७ ॥ यदूनां मम चान्तः किं, भावी स्वत उतान्यतः ? ॥ ततो जगाद भगवान्, ज्ञानराशिरिवाङ्गवान् ॥ ८ ॥ बहिः शौर्यपुरात्पारा-सराह्वस्तापसोऽभवत् ॥ वीक्ष्य नीचकुलां काञ्चित्कन्यां सोऽभूत्स्मरातुरः ॥ ९ ॥ तया समं च यमुना-द्वीपे गत्वाऽऽरराम सः ॥ ततस्तयोरभूत्सनु-र्व्रती द्वैपायनाह्वयः ॥ १० ॥ स परिव्राजको ब्रह्म-चारी शान्तो जितेन्द्रियः ॥ इहास्ते यदुषु स्नेहात्, कुर्वन् षष्ठतपः सदा ॥ ११ ॥ शाम्बादिभिः स मद्यान्धैः, कुट्टितश्चण्डतां गतः ॥ यदुभिः[1]

१ यदुभिः सकलैः साकं, द्वारकां ज्वालयिष्यति । इति 'ग' सञ्ज्ञकपुस्तके ॥

सकलैः साकं, द्वारकां ज्वालयिष्यति ॥ १२ ॥ वसुदेवजरादेवी-नन्दनान्निजसोदरात् ॥ भावी जराकुमाराख्य, तव मृत्युर्जनार्दन ! ॥ १३ ॥ श्रुत्वेति यदवः सर्वे-ऽप्युत्सुकायितदृष्टयः ॥ व्यलोकयन् जरापुत्रं, सोऽपि चैवमचिन्तयत् ॥ १४ ॥ कनीयांसं कुलाधारं, भ्रातरं भ्रातृवत्सलम् ॥ कथङ्कारं हनिष्यामि ? वसुदेवसुतोऽप्यहम् ! ॥ १५ ॥ तदेतदन्यथा कुर्वे, ध्यायन्निति जराङ्गजः ॥ जिनं नत्वा ययौ सद्यः, कान्तारं चापतूणभृत् ॥ १६ ॥ जिनवाचं जनश्रुत्या, श्रुत्वा द्वैपायनोऽपि ताम् ॥ यदूनां द्वारकायाश्च, रक्षां कर्तुमगाद्वनम् ॥ १७ ॥ नत्वार्हन्तं हरिरपि, प्राविशद्द्वारकापुरीम् ॥ तं चानर्थं मद्यमूलं, ध्यायन्नित्युदघोषयत् ॥ १८ ॥ मद्योन्मत्तकुमारौघ-हताद्द्वैपायनाद्यतः ॥ उपद्रवो द्वारकायाः, श्रीनेमिस्वामिनोदितः ॥ १९ ॥ तत्पार्श्वस्थाचलासन्न-कदम्बवनमध्यतः[1] ॥ कादम्बरीदरीवर्त्ति-शिलाकुण्डेषु भूरिषु ॥ २० ॥ सकलं प्राक्कृतं मद्यं, हेयं पेयं न तत्पुनः ॥ लोकाः सर्वेऽपि तच्छ्रुत्वा, जहुस्तत्राखिलां सुराम् ॥ २१ ॥ ( त्रिभिर्विशेषकम् ) भ्राताऽथ बलदेवस्य, स्नेहात्तस्यैव सारथिः ॥ सिद्धार्थः श्रुतसर्वज्ञ-वाणिरित्यवदद्बलम् ॥ २२ ॥ नोत्सहे दुर्दशां प्राप्ते, द्रष्टुं स्वीयपुरीकुले ॥ तदहं स्वामिपादान्ते, प्रव्रजामि त्वदाज्ञया ॥ २३ ॥ ततोऽभ्रवीद्बलोऽजस्र-स्रवदश्रुजलाविलः ॥ भ्रातर्मयेदं त्वद्व्यय-प्राणेनाऽप्यनुमन्यते ॥ २४ ॥ किन्तु व्रतं पालयित्वा, त्वं देवत्वमुपागतः ॥ भ्रातर्मां व्यसनप्राप्त-मागत्य प्रतिबोधयेः ॥ २५ ॥ तत्प्रपद्याथ सिद्धार्थो, परिव्रज्य जिनान्तिके ॥

१ कदम्बवनवर्त्तिषु । इति 'ग' संज्ञकपुस्तके ॥

गत्युग्रञ्च तपस्तप्त्वा, षड्भिर्मासैः सुरोऽभवत् ॥ २६ ॥ इतश्चानेकवृक्षौघ–पतत्कुसुमसङ्क्रमात् ॥ षण्मास्या सा सुरा कुण्ड–स्थिता पक्वरसाऽभवत् ॥ २७ ॥ तदा च कोऽपि शाम्बस्य, लुब्धकः पर्यटन् वने ॥ तत्र यातस्तृषाक्रान्तः, पपौ तां मदिरां मुदा ॥ २८ ॥ मुदितस्तेन मद्येन, भृत्वा पार्श्वस्थितां दृतिम् ॥ ददौ शाम्बाय तत्पीत्या, तुष्टः शाम्बोऽपि तं जगौ ॥ २९ ॥ प्राप्तं हृद्यमिदं मद्य–मद्य कुत्र ? त्वया सखे ! ॥ कादम्बरीकन्दराया–मवापमिति सोऽप्यवक् ॥ ३० ॥ कुमारैः सह दुर्दान्तै–स्ततः शाम्बोऽपरेऽहनि ॥ गुहां कादम्बरीं गत्वा, मुदितस्तां सुरां पपौ ॥ ३१ ॥ बहोः कालादधिगतां, यावत्तृप्ति निपीय ताम् ॥ उन्मत्ता गिरिमारोहन्, क्रीडन्तस्ते कुमारकाः ॥ ३२ ॥ तत्र द्वैपायनं ध्यान–स्थितमातापनापरम् ॥ वीक्ष्येति ते मिथः प्रोचु–र्मद्योन्मादवशंवदाः ! ॥ ३३ ॥ अयं हि नेमिना प्रोक्तो–ऽस्मत्पुरीकुलनाशकः ! ॥ तद्धन्यतां हतो क्षेप, कथं हन्ता पुरीकुले ! ॥ ३४ ॥ वदन्त इति ते सर्वे, चपेटायष्टिमुष्टिभिः ॥ निजघ्नुः पादघातैश्च, द्वैपायनमुनिं मुहुः ॥ ३५ ॥ इत्थं हत्वा मृतप्रायं, विधाय धरणीतले ॥ पातयित्वा च ते जग्मु', कुमारा द्वारकापुरीम् ॥ ३६ ॥ तद्विज्ञाय चरैर्विष्णु–र्विषण्णो ध्यातवानिति ॥ अहो ! एषां कुमाराणां दुर्दान्तत्वमनर्थकृत् ! ॥ ३७ ॥ अथैषां प्राणभूतानां, किं करोमीति चिन्तयन् ? ॥ द्वैपायनमनुनेतुं, तत्रागातसबलो हरिः ! ॥ ३८ ॥ तश्चापश्यत्परिव्राजं, कोपारुणविलोचनम् ॥ ततस्तत्कोपशान्त्यर्थ– मभ्यधादिति माधवः ॥ ३९ ॥ भो महातापस ! क्रोधः, परत्राऽत्र च दुःखदः ॥ नैवातः क्वापि कुप्यन्ति, महासत्त्वा दमेरताः ॥ ४० ॥ मद्योन्मादान्निर्विवेकै–र्मन्दज्ञानैश्च मत्सुतैः ॥ एभिर्यदपराद्धं त–न्महर्षे ! मृष्यतां त्वया ॥ ४१ ॥ इत्युक्तेऽपि स कृष्णेना–ऽशान्तक्रोधोऽभ्यधादिदम् ॥ भवतः सामवचनै–रथामीभिः कृतं हरे ! ॥ ४२ ॥ युवां मुक्त्वा लोकयुक्तां, निर्दग्धुं द्वारका मया ॥ चक्रे निदानं त्वत्पुत्रै–र्हन्यमानेन निष्ठुरम् ! ॥ ४३ ॥ नालीकं नेमिवाक्यं त–त्प्रतिज्ञाऽप्यन्यथा न मे ॥ तद्युवां यातमग्नौ हि, दीप्तेऽन्धुखननेन किम् ? ॥ ४४ ॥ रामोऽप्युवाच हे भ्रातः, प्रयत्नेनामुना कृतम् ! ॥ किं चाटूनि विधीयन्ते, मुधाऽमुष्य त्रिदण्डिनः ? ॥ ४५ ॥ अवश्यं भाव्यपाकर्तुं, न शक्रोऽपि प्रभूयते ॥ न च सर्वविदो वाक्य–मन्यथा स्यात्कथञ्चन ! ॥ ४६ ॥ ततः शोकाकुलमना, निजं धाम ययौ हरिः ॥ प्रसिद्धमासील्लोके च, द्वैपायननिदानकम् ॥ ४७ ॥ अथाच्युतो द्वितीयेह्नि, स्वपुर्यामित्यघोषयत् ॥ भवताऽतः परं लोकाः !, धर्मासक्ता विशेषतः ॥ ४८ ॥ तदाकर्ण्य जनः सर्वो, जज्ञे धर्मरतो भृशम् ! ॥ तदा रैवतकाद्रौ श्री–नेमिश्च समवासरत् ॥ ४९ ॥ तच्छ्रुत्वा तत्र गत्वा च, जिनं नत्वा च माधवः ॥ अश्रौषीद्देशनां विश्व–जनमोहतमोहराम् ॥ ५० ॥ श्रुत्वा तां देशनां शाम्ब–प्रद्युम्नाद्याः कुमारकाः ॥ बहवः प्राव्रजन् रुक्मि–ण्याद्याश्च यदुयोषितः ॥ ५१ ॥ द्वैपायनः कदा कर्त्ता, द्वारकाया उपद्रवम् ॥ तदेति विष्णुना पृष्टो, नेमिनाथोऽब्रवीदिति ॥ ५२ ॥ असौ द्वादश वर्षान्त–द्वारकां ज्वालयिष्यति ॥ इत्युक्त्वा व्यहरत्स्वामी, कृष्णोऽपि द्वारकां ययौ ॥ ५३ ॥ द्वितीयवारमप्येव–मथविष्णुरघोषयत् ॥ उपस्थितमिदं लोकाः !, द्वैपायनभयं महत् ॥ ५४ ॥ तत्कृपासूनृतास्तेय–ब्रह्मचर्यापरिग्रहान् ॥ यथाशक्ति प्रपद्यध्व–माचाम्लादि तपस्तथा ॥ ५५ ॥ कुरुध्वं देवपूजाञ्च, प्रयत्नेन महीयसा ॥ इत्याकर्ण्याऽखिलो लोक–स्तत्तथा प्रत्यपद्यत ॥ ५६ ॥ मृत्वा वह्निकुमारेषू–त्पन्नो द्वैपायनोऽप्यथ ॥ द्वारकामाययौ स्मृत्वा, प्राग्वैरं यदुगोचरम् ॥ ५७ ॥ देवपूजातपोनिष्ठ–पौरायां पुरि तत्र सः ॥ परं धर्मविशेषेण, नापकर्त्तुमभूत्प्रभुः ॥ ५८ ॥ ततः सोऽन्वेषयंश्छिद्रा–ण्यसुरोऽस्थात्पुरोऽन्तरे ॥ अथेत्थं द्वादशे वर्षे, प्राप्ते लोको व्यचिन्तयत् ॥ ५९ ॥ अस्मत्तपः प्रभावाद्धि, नष्टो द्वैपायनामरः ॥ तद्दुस्तपं तपस्त्यक्त्वाऽधुना स्वैरं रमामहे ! ॥ ६० ॥ इति ते क्रीडितुं लग्ना, मद्यमांसादिसेविनः ॥ द्वैपायनोऽपि तच्छिद्र–मासाद्य मुमुदेऽधिकम् ॥ ६१ ॥ द्वारकायां तदाचास–न्नुत्पाताः क्षयसूचकाः ॥ हलचक्रादिरत्नानि, प्रणेशुः सीरिशार्ङ्गिणोः ॥ ६२ ॥ ततो विकुर्व्य संवर्त्त–वातं द्वैपायनासुरः ॥ काष्ठपत्रतृणव्यूहा–नाहृत्याऽपूरयत्पुरीम् ॥ ६३ ॥ दिग्भ्योऽष्टभ्योऽपि तेनैव, वातेन निखिलान् जनान् ॥ पलायमानानानीय, निचिक्षेप पुरोऽन्तरे ॥ ६४ ॥ द्वासप्ततिं पुरो मध्य–गताः षष्टिं बहिःस्थिताः ॥ कुलकोटीः पिण्डयित्वा, स देवोऽभिमदीपयत् ॥ ६५ ॥ द्वारकायां ततो ज्वाला–जिह्वो जज्वाल सर्वतः ॥ उन्मूल्य वृक्षवल्ल्यादी–न्मुहुस्तत्राऽसुरोऽक्षिपत् ॥ ६६ ॥ वह्निना तेन नीरन्ध्र–धूमेन व्याकुलीकृताः ॥ सन्दानिता इवाऽनीशा, गन्तुमेकमपि क्रमम् ॥ ६७ ॥ बालवृद्धवधूयुक्ताः, क्रन्दन्तः करुणस्वरम् ॥ सर्वेप्यन्योन्यसंलग्नाः, पौरास्तत्रावतस्थिरे ॥ ६८ ॥ [ युग्मम् ] गृहा मणिस्वर्णमया, व्यलीयन्त क्षणात्तदा ॥

१ इत्थं द्वादश वर्षाणा, प्रान्ते लोको व्यचिन्तयत् । इति 'ग' सञ्ज्ञकपुस्तके ॥

पुस्फुटुः सौधपीठानि, तुत्रुटुः कुट्टिमान्यपि ॥ ६९ ॥ दृष्ट्वा पुरीं दह्यमाना—मथ व्याकुलमानसौ ॥ वसुदेवगृहं राम—कृष्णौ त्वरितमीयतुः ॥ ७० ॥ वसुदेवं देवकीं च, रोहिणीं च रथे द्रुतम् ॥ तावारोपयतां तस्मा—दाक्रष्टुं वह्निसङ्कटात् ॥ ७१ ॥ हया वृषाश्च नो चेलुः, स्तम्भितास्तेन नाकिना ॥ तदा राममुकुन्दौ तं, रथमाकृषतां स्वयम् ॥ ७२ ॥ श्यामाभिराम ! हा राम, ! हा महाराज ! केशव ! ॥ पाहि पावकपातोत्था—दस्मादस्मानुपद्रवात् ॥ ७३ ॥ इति पौरकृताक्रन्दान्, श्रुत्वा दैन्यं गतौ बलात् ॥ गोपुरे निन्यतुर्नाकि—भग्नाक्षमपि तौ रथम् ॥ ७४ ॥ [ युग्मम् ] ततस्तद्गोपुरं दत्त—कपाटं विदधेऽसुरः ॥ तौ चाऽररी पार्ष्णिघातै, रामकृष्णौ बभञ्जतुः ॥ ७५ ॥ तथापि न रथः पङ्क—मग्नवन्निरगात्पुरः ॥ द्वैपायनासुरोप्येवं, तदाऽवादीद्बलाच्युतौ ॥ ७६ ॥ युवां विहाय नैवान्यं, मोक्ष्यामीति मया पुरा ॥ प्रोक्तं तत्किं विस्मृतं वां, ? यद्व्यैवं विमुह्यथः ! ॥ ७७ ॥ तच्छ्रुत्वाऽतिव्याकुलौ तौ, पितरोऽप्येवमूचिरे ॥ वत्सौ यातं युवां सन्तु, श्रेयांसि युवयोः पुनः ! ॥ ७८ ॥ युवयोर्जीवतोर्भावी, पुनर्यदुकुलोदयः ॥ वयं त्वथ प्रपन्नाःस्म, शरणं नेमितीर्थपम् ॥ ७९ ॥ प्रत्याख्यातस्तथाऽस्माभि—राहारोऽपि चतुर्विधः ॥ इत्युक्त्वा ते नमस्कारान्, गणयन्तोऽवतस्थिरे ॥ ८० ॥ द्वैपायनामरस्तेषु, ववर्षाथ हुताशनम् ॥ ततो मृत्वाऽभवन् देवा, वसुदेवादयस्त्रयः ॥ ८१ ॥

अथो रुदन्तौ करुणं, बहिर्गत्वा बलाच्युतौ ॥ जीर्णोद्यानस्थितौ दह्य—मानां ददृशतुः पुरीम् ॥ ८२ ॥ ज्वलत्पशुजनाक्रन्द—कोलाहलसमाकुलाम् ॥ परितः प्रसृतज्वाला—जिह्वज्वालाकरालिताम् ॥ ८३ ॥ श्राद्धदेवश्रोत्रियस्य, वह्निकुण्डत्वमाश्रिताम् ॥ तौ वीक्ष्य द्वारकां बाष्पा—प्लुताक्षाविति दध्यतुः ॥ ८४ ॥ [ युग्मम् ] पुरन्दरधनुष्कल्प—मनित्यत्वमहो ! श्रियाम् ॥ जलबुद्बुददेश्यं च, जीवितव्यमहो ! विशाम् ॥ ८५ ॥ स्वप्नसङ्गमकल्पाश्च, बन्धुसङ्गा अहो अमी ! ॥ अहो ! अप्रतिकार्यत्वं, भवितव्यस्य वस्तुनः ॥ ८६ ॥ यदुक्तं—"धारिज्जइ इंतो जल—निही वि कल्लोल भिन्नकुलसेलो ॥ न हु अन्नजम्मनिम्मिअ, सुहासुहो दिव्वपरिणामो ॥ ८७ ॥" अथोवाच हरिः सर्व—सम्पत्स्वजनवर्जितौ ॥ आवां भ्रातः ! क्व यास्यावो ?, भीतौ यूथच्युतैणवत् ॥ ८८ ॥ बलोऽवादीत्पाण्डुपुत्राः, सन्ति नः स्निग्धबान्धवाः ॥ तत्पुरीं पाण्डुमथुरां, यास्यावोऽवाच्यवार्द्धिगाम् ॥ ८९ ॥ प्रोचे कृष्णो मया कृष्णां, प्रत्यादाय समेयुषा ॥ गङ्गोत्तरणवेलायां, बेडान्तर्द्धानरोषतः ॥ ९० ॥ पाण्डवा राज्यमाच्छिद्य, तदा निर्विषयाः कृताः ॥ दुर्दशायां गमिष्यावः, तत्पार्श्वे साम्प्रतं कथम् ? ॥ ९१ ॥ [ युग्मम् ] रामोऽवग् न स्मरन्त्यार्या, दुःस्वप्नमिव विप्रियम् ॥ दुष्प्रापमप्यल्पो—पकारं विस्मरन्ति च ॥ ९२ ॥ तन्मेदं विमृश भ्रातः !, कर्त्तारो भक्तिमेव ते ॥ श्रुत्वेति सबलः पूर्वां, प्रत्यचालीन्नारायणः ॥ ९३ ॥

इतश्च द्वारकापुर्यां, ज्वलन्त्यां कुब्जवारकः ॥ रामसूनुः स्वगेहाग्र— मारुह्योच्चैरदोऽवदत् ॥ ९४ ॥ अहं चरमदेहः श्री— नेमिना कथितः पुरा ! ॥ इदानीं तु प्रभोस्तस्य, शिष्योऽस्मि स्वीकृतव्रतः ॥ ९५ ॥ सा चेत्सत्या विभोर्वाणी,

१ यास्यावोऽपाच्यवार्द्धिगाम् । इति 'ग' संज्ञकपुस्तके ॥

तत्किमद्य ज्वलाम्यहम् ? ॥ इत्यूचानं ज्वलद्देहा—ज्जृम्भकास्तमुदक्षिपन् ॥ ९६ ॥ निन्युः पह्लवदेशस्थ—स्वामिपार्श्वे च तं सुराः ॥ ततः श्रीनेमिपादान्ते, प्राव्राजीत्कुब्जवारकः ॥ ९७ ॥ रामकृष्णयदूनां याः, स्त्रियोऽभूवन् गृहे स्थिताः ॥ ताः कृतानशनाः सर्वाः, पुरीदाहे दिवं ययुः ॥ ९८ ॥ पूर्वोक्ताः कुलकोट्यस्तु, प्रागदग्धास्तेन नाकिना ॥ पुरी तु दग्धा षण्मास्या, तदनुप्लाविताब्धिना ॥ ९९ ॥ इतश्च पादचारेण, व्रजन्तौ रामकेशवौ ॥ मार्गायातं हस्तिकल्प—नगरं जग्मतुः क्रमात् ॥ १०० ॥ तत्र चाभूदच्छदन्तो, भूपतिर्धृतराष्ट्रभूः ॥ पूर्वं केशवसाहाय्या—त्पाण्डवैर्हतबान्धवः ॥ १०१ ॥ तदेत्यूचेऽच्युतो रामं, क्षुधा मां बहु बाधते ! ॥ क्रमं तन्नैकमप्यार्य !, गन्तुं शक्नोमि साम्प्रतम् ॥ १०२ ॥ बलोऽब्रवीत्तव कृते, भक्तार्थं नगरीमिमाम् ॥ भ्रातर्गच्छाम्यहं त्वं तु, तिष्ठेरत्राऽप्रमद्वरः ॥ १०३ ॥ यदि चात्र पुरे कश्चि—दपायो मे भविष्यति ॥ तदा क्ष्वेडां करिष्येह—मागच्छेस्त्वं निशम्य ताम् ॥ १०४ ॥ इत्युक्त्वाऽन्तर्हरिं ध्यायन्, प्राविशत्तत्पुरं बलः ॥ दिव्यरूपः पुमान्कोऽय—मिति लोकैर्विलोकितः ॥ १०५ ॥ अहो ! प्रमाणोपेतत्व—महोरूपमहोमहः ! ॥ इति दध्युर्बलं प्रेक्ष्य, पौरास्तत्र पुरेऽखिलाः ॥ १०६ ॥ ते श्रुतद्वारकादाहा, इति च व्यमृशन्मिथः ॥ ज्वलत्स्वपुर्या निर्यातो, नन्वायातोऽस्त्यसौ हली ॥ १०७ ॥ रामोऽपि मुद्रिकां दत्वा, भोज्यं कान्दविकाच्छुभम् ॥ आददे कटकं दत्वा, शौण्डिकाद्वारुणीमपि ॥ १०८ ॥ तदादाय बहिर्गन्तुं, प्रस्थितं प्रेक्ष्य सात्वतम् ॥ सविस्मयाः पुरारक्षा, गत्वा राज्ञेऽवदन्निदः ॥ १०९ ॥ रूपेण सीरिणस्तुल्यो, नरः कोप्यद्य दस्युवत् ॥ मुद्रिका-

वलये भूरि-मूल्ये दत्वा भवत्पुरे ॥ ११० ॥ गृहीत्वा भोज्यमदिरे, असीदानीं वहिर्व्रजन् ॥ ततो यत् स्याद्विधेयं
त-द्द्वाराधीश ! विधीयताम् ॥ १११ ॥ [ युग्मम् ] तच्छ्रुत्वा स नृपो हन्तुं, वलं वलयुतो ययौ ॥ गोपुरं च व्यधा-
द्दत्त-कपाटं सज्जितार्गलम् ॥ ११२ ॥ युयुत्सया तमायान्तं, वीक्ष्य क्ष्वेडां व्यधाद्बलः ॥ मुक्त्वाऽन्नपाने पार्श्वेऽथ-
मारोहच्च महागजम् ॥ ११३ ॥ उन्मूल्यालानमहितान्, हन्तुं प्रववृते हली ॥ रामक्ष्वेडां मुकुन्दोऽपि, श्रुत्वाऽऽगाद्गो-
पुरे द्रुतम् ॥ ११४ ॥ भंक्त्वा कपाटौ पुर्यां च, प्रविश्यादाय चार्गलम् ॥ हत्वा सैन्यानच्छदन्तं, वशीकृत्याऽच्युतोऽ-
ब्रवीत् ॥ ११५ ॥ आत्मवैरिन्नरे मूढ !, किमिदं भवता कृतम् ॥ किमस्माकं वपुर्वीर्य-मप्यज्ञासीद्गतं भवान् ! ॥ ११६ ॥
अथ मुक्तोऽसि राज्यं स्वं, भुंक्ष्वेत्युक्त्वा वलाच्युतौ ॥ गत्वोद्यानमभुञ्जातां, किञ्चित्तद्भोजनादिकम् ॥ ११७ ॥ ततो
विधायाचमनं, चेलतुः प्रति दक्षिणाम् ॥ अवापतुश्च कौशाम्ब-वनं मुसलिकेशवौ ॥ ११८ ॥ सुरापानात्सलवणा-
ऽशनाद्ग्रीष्मातपात् श्रमात् ॥ शोकात्पुण्यक्षयाच्चाऽभू-त्तत्र विष्णुस्तृषातुरः ! ॥ ११९ ॥ सोऽथाऽवादीद्बलं भ्रात-स्तृषा
शुष्यति मे मुखम् ॥ गन्तुं शीततरुच्छाये-ऽप्यत्र शक्नोमि नो वने ॥ १२० ॥ रामोऽप्यूचे प्रियभ्रात-र्जलार्थं याम्यहं
द्रुतम् ॥ अत्राऽप्रमत्तो विश्राम्यं-स्तिष्ठेस्त्वं तु तरोस्तले ॥ १२१ ॥ क्षौमेण वपुराच्छाद्य, न्यस्य जानूपरि क्रमम् ॥
सुष्वाप द्रुतले विष्णु-स्ततो भूयोऽभ्यधाद्बलः ॥ १२२ ॥ यावदायाम्यहं वारि, समादाय त्वदन्तिकम् ॥ तावत्तिष्ठे-
रप्रमत्तः, प्राणवल्लभ हे हरे ! ॥ १२३ ॥ उद्दिश्य वनदेवीश्च, स्माह रामो ममानुजः ॥ वल्लभो विश्वलोकानां, जीना-
तुर्मम दुःखिनः ॥ १२४ ॥ अस्ति वः शरणे तस्मा-द्युष्माभिर्वनदेवताः ! ॥ त्रातव्योऽयमिति प्रोच्चैः, प्रोच्याऽगादम्भसे
वलः ॥ १२५ ॥ वितन्वन्मृगयां दीर्घ-कूर्चस्तूणधनुर्धरः ॥ व्याघ्रचर्मावृतोऽथाऽऽगा-त्तत्र व्याधो जराङ्गजः ॥१२६॥
तथास्थं सोऽच्युतं वीक्ष्य, मृगोऽयमिति चिन्तयन् ॥ निचखान शरं तीक्ष्णं, तदङ्घ्रितलमर्मणि ॥ १२७ ॥ उत्था-
याऽथ द्रुतं विष्णुः, स्माह निर्मन्तुरप्यहम् ॥ अनालाप्यैव केनैवं, शरेणाङ्घ्रितले हतः ! ॥ १२८ ॥ नाऽज्ञातगोत्रनामा
य-त्कोऽपि पूर्वं हतो मया ! ॥ तद्गोत्रञ्चाभिधानञ्च, त्वमप्याऽऽख्याहि मे निजम् ॥ १२९ ॥ निकुञ्जस्थोऽथ
स प्रोचे, हरिवंशरवेरहम् ॥ सुतोऽस्मि वसुदेवस्य, जरादेवीसमुद्भवः ॥ १३० ॥ जराकुमारनामाऽग्र-जन्मा
राममुकुन्दयोः ॥ श्रीनेमिवाक्यमाकर्ण्य, कृष्णं त्रातुमिहागमम् ! ॥ १३१ ॥ द्वादशाब्दीवभूवाऽद्य, वसतोऽत्र
वने मम ॥ नाऽपश्यं मानुषं त्वत्र, ब्रूहि कस्त्वमिहाऽऽगतः ? ॥ १३२ ॥ तच्छ्रुत्वा विष्णुरित्याख्य-दागच्छा-
गच्छ बान्धव ! ॥ तव भ्राताऽस्म्यहं कृष्णो, यं त्रातुं त्वं वनं श्रितः ! ॥ १३३ ॥ भ्रातर्द्वादश वर्षाणि, वनवासादिक-
स्तव ॥ मुधायासोऽभवन्मिथ्या-मतेरिव तपस्यतः ! ॥ १३४ ॥ तदाकर्ण्याकुलस्वांतः-सम्भ्रान्तो भृशमुन्मना ॥ केशवो
वक्ति किमय-मिति दध्यौ जराङ्गजः ॥ १३५ ॥ आययौ च द्रुतं तत्र, प्रेक्षाञ्चक्रे च केशवम् ॥ प्रजल्पन् हा ! हतो-
स्मीति, मुमूर्च्छोर्व्यां पपात च ॥ १३६ ॥ कथञ्चिल्लब्धसंज्ञस्तु, जराभूर्विलपन् भृशम् ॥ अप्राक्षीत्पुण्डरीकाक्षं, त्वमा-
गाद्भ्रातरत्र किम् ? ॥ १३७ ॥ द्वैपायनेन किं दग्धा, द्वारका यदुभिः समम् ? ॥ किं नेमिस्वामिनो वाणी, सा सर्वा
सूनृताऽभवत् ? ॥ १३८ ॥ कृष्णोऽथ सर्ववृत्तान्तं, यथाजातमभाषत ॥ ततः शोकाग्निसन्तप्तः, प्रोवाचैवं जरासुतः !
॥ १३९ ॥ आतिथ्यं भ्रातुरतिथेः, पापेनाऽदः कृतं मया ॥ हा ! क्व गच्छाम्यहं स्वास्थ्य-मवाप्स्यामि क्व वा गतः ?
॥ १४० ॥ दुर्दशाम्भोधिमग्नस्य, भ्रातुर्भ्रातृहितस्य ते ॥ घातकोऽहं न हि स्थानं, प्राप्स्यामि नरकेष्वपि ! ॥१४१॥ अहं
तवैव रक्षायै, वनवासमशिश्रियम् ! ॥ त्वमप्यत्रैव दुर्दैवे-नाऽऽनीतस्तत्करोमि किम् ? ॥ १४२ ॥ भूत्वा श्रीवसुदे-
वस्य, सुतस्तव च सोदरः ॥ किमकार्षमिदं कर्म, श्वपचैरपि गर्हितम् ! ॥ १४३ ॥ विधे ! विधेहि करुणां, द्रुतं मामपि
मारय ॥ नाऽऽस्यं पापस्य पश्येन्मे, भ्रातृहन्तुर्यथा जनः ! ॥ १४४ ॥ प्रसद्य सद्यो मातर्मे, देहि मार्गं वसुन्धरे ! ॥
पश्चादपि हि गन्तव्ये, श्वभ्रे याम्यधुनैव यत् ! ॥ १४५ ॥ यद्वा नेमिवचः श्रुत्वा-ऽमरिष्यं चेत्तदैव हि ॥ भ्रातृहत्या
महापाप-मलगिष्यत्तदा न मे ! ॥ १४६ ॥ मुकुन्दोऽथ तमित्यूचे, भ्रातः ! खेदममुं त्यज ॥ भवितव्यं भवत्येव, किं
तत्र परिदेवनैः ? ॥ १४७ ॥ तत्कौस्तुभमभिज्ञानं, लात्वा मे याहि पाण्डवान् ॥ वार्तां ममाखिलां ब्रूया-स्तेषां स्नेह-
लचेतसाम् ॥ १४८ ॥ द्रौपद्यानयने जात-मपराधं च मद्गिरा ॥ त्वं तेषां क्षमयेः सन्तु, ते ते साहाय्यदायिनः !
॥ १४९ ॥ यदुष्वेकस्त्वमेवाऽसि, जीवंस्तद्गच्छ सत्वरम् ॥ अन्यथा मद्वधक्रोधा-द्रामस्त्वां मारयिष्यति ! ॥ १५० ॥
भूयो भूय इति प्रोक्तः, केशवेन जराङ्गजः ॥ अगात्कौस्तुभमादाया-ऽऽकृष्य कृष्णक्रमाच्छरम् ॥ १५१ ॥ गते च
तस्मिन् कृष्णोऽपि, शरघातव्यथातुरः ॥ उत्तराभिमुखो धीरः, प्रोवाचेति कृताञ्जलिः ॥ १५२ ॥ अर्हत्सिद्धसदाचा-

र्यो-पाध्यायमुनिपुङ्गवान् ॥ नमामि नेमिनामानं, तीर्थनाथं च भावतः ॥ १५३ ॥ इत्युदीर्य हृषीकेशः, स्थित्वा च तृणसंस्तरे ॥ आवृत्य वाससा स्वीय-वपुश्चेति व्यचिन्तयत् ॥ १५४ ॥ पुत्रा प्रद्युम्नशाम्बाद्या, रुक्मिण्याद्याः स्त्रियश्च मे ॥ धन्या ये प्राव्रजन् पूर्वं, धिग् मां तु प्राप्तदुर्दशम् ! ॥ १५५ ॥ इति ध्यायन् हरिर्घात-जातपीडातिरेकतः ॥ तदैव नष्टसद्भाव-श्चेतसीति व्यचिन्तयत् ॥ १५६ ॥ अपराभूतपूर्वस्य, मर्त्यैर्देवैश्च जन्मतः ॥ द्वैपायनेन पापेन, दत्तेयं दुर्दशा मम ! ॥ १५७ ॥ कुलं च मे क्षयं नीतं, तेनैवाऽहेतुविद्विषा ॥ तच्चेत्पश्यामि तं दुष्टं, तदा हन्म्यऽधुनाऽप्यऽहम् ! ॥ १५८ ॥ क्षणं ध्यानमिति प्राप्य, रौद्रं विष्णुर्व्यथाकुलः ॥ सम्पूर्णाब्दसहस्रायु-स्तृतीयामवनीमगात् ! ॥ १५९ ॥ रामोऽथ पद्मिनीपत्र-पुटेनाऽऽदाय जीवनम् ॥ आगाद्दुर्विहगैर्जाता-शंकः कृष्णान्तिके द्रुतम् ॥ १६० ॥ एष निद्रां गतोस्तीति, ध्यायन्नस्थात्क्षणं बलः ॥ कृष्णोपरि भ्रमंतीश्च, ददर्श श्याममक्षिकाः ! ॥ १६१ ॥ भीतस्ततो हली भ्रातृ-मुखाद्वस्त्रं व्यपानयत् ॥ विपन्नं वीक्ष्य तं मूर्च्छा-कुलः पृथ्व्यां पपात च ॥ १६२ ॥ कथमप्याप्तसंज्ञस्तु, सिंहनादं व्यधाद्बलः ॥ वित्रस्तैः श्वापदैः साकं, चकम्पे तेन तद्वनम् ॥ १६३ ॥ इत्थं ततोऽब्रवीचाऽयं, भ्राता मे प्राणवल्लभः ॥ विश्वैकवीरः सुप्तोऽत्र, हतो येन दुरात्मना ॥ १६४ ॥ स चेत्सत्यो भटस्तन्मे, प्रत्यक्षीभवतु द्रुतम् ॥ न हि स्त्रीसुप्तबालर्षि-प्रमत्तान् हन्ति सत्पुमान् ! ॥ १६५ ॥ इत्युच्चैरुच्चरन् दुःख-भरभङ्गुरमानसः ॥ तत्रारण्ये भ्रमत्कृष्णा-ऽन्तिके गत्वाऽरुदच्च सः ॥ १६६ ॥ हा ! यादवकुलोत्तंस !, हा ! समग्रगुणाम्बुधे ! ॥ क्वासि ? त्वं पुण्डरीकाक्ष !, मन्मनोम्भोजभास्कर ! ॥ १६७ ॥ पूर्वं हि मां विना स्थातुं, नाऽभूः क्षणमपि क्षमः ! ॥ न मेऽधुना तु वचन- मपि दत्से कुतो ? हरे ! ॥ १६८ ॥ मया मन्तुः कृतो नास्ति, तत्कुतः कुपितो भवान् ? ॥ कालक्षेपो ह्ययं यद्वा, तव कोपस्य कारणम् ॥ १६९ ॥ कृतकालक्षेपमपि, मां त्वदायत्तजीवितम् ॥ सम्भाषय हरे ! न स्यु-स्त्वादृशा हि स्थिरक्रुधः ! ॥ १७० ॥ कदाप्यऽकुपितं मह्य-ममुं मे प्रियसोदरम् ॥ वनदेव्योऽनुनयत, यूयं मयि कृपालवः ! ॥ १७१ ॥ त्वयि प्रसन्ने सति मे, नैषाऽवस्थाऽपि दुःखदा ॥ रुष्टे तु त्वयि पश्यामि, सर्वं शून्यमिदं जगत् ! ॥ १७२ ॥ तत्प्रसद्य समुत्थाय, सलिलं पिब बान्धव ! ॥ अर्कोऽस्तं याति तन्नायं, निद्राकालो भवादृशाम् ! ॥ १७३ ॥ रामो विलापैरित्याद्यै-स्तां निशामत्यवाहयत् ॥ जजल्प प्रातरप्येव-मुत्तिष्ठोत्तिष्ठ बान्धव ! ॥ १७४ ॥ तथाऽप्यऽनुत्तिष्ठतोऽस्य, शवं मोहविमोहितः ॥ आरोप्य सीरभृत्स्कन्धे, बभ्रामाद्रिवनादिषु ! ॥ १७५ ॥ इत्थं तस्मिन् भ्रमत्येव, प्रावृट्कालः समाययौ ॥ अपश्यच्चाऽवधिज्ञाना-त्तं सिद्धार्थसुरोऽथ सः ॥ १७६ ॥ दध्यौ चैवं स्नेहरागा-तिरेकात्कुणपं हरेः ॥ भ्रमति स्वयमुत्पाट्य, भ्राता मे दुर्दशां गतः ! ॥ १७७ ॥ तदमुं बोधयामीति, ध्यायन्नागत्य सोऽमरः ॥ रथं कृत्वा मर्त्यरूपो, महाद्रेरुदतारयत् ॥ १७८ ॥ विषमं शैलमुल्लंघ्य, समे भग्नं च तं रथम् ॥ सन्धातुमुद्यतं देवं, तं वीक्ष्येति बलोऽब्रवीत् ॥ १७९ ॥ उल्लंघ्य स्थपुटं शैलं, योऽभज्यत समेऽध्वनि ॥ रथं तमक्षतं कर्तुं, कथमिच्छसि ? मूढ रे ! ॥ १८० ॥ ततः सुरोऽवदद्युद्ध-सहस्रेषु हतो न यः ॥ स तेऽनुजो यदा जीवे-द्विना जन्यं मृतोऽधुना ॥ १८१ ॥ रथोऽपि मामकीनोऽयं, नूनं सज्जो भवेत्तदा ॥ इत्युक्त्वाऽथ सुरो वप्तु-मारेभेऽश्मनि पद्मिनीम् ॥ १८२ ॥ तद्वीक्ष्योचे बलो रोह-त्यब्जिनी किं दृषद्यपि ॥ सोऽजल्पत्तेऽनुजो जीवे-द्यदा रोहेदियं तदा ॥ १८३ ॥ सुरो भूयः पुरो भूय, दग्धवृक्षं सिषेच सः ॥ बलोऽमृताम्बुसेकैः किं, दग्धद्रुः स्यात्सपल्लवः ? ॥ १८४ ॥ जगाद देवः कुणपं, तव स्कन्धे स्थितं यदा ॥ जीविष्यति तदा शाखी, भविताऽसौ सपल्लवः ॥ १८५ ॥ पुनः किञ्चित्पुरो गत्वा, हरितानि तृणानि सः ॥ देवो धेनुशवास्येषु, बलात्क्षेप्तुं प्रचक्रमे ॥ १८६ ॥ बलस्ततो बभाणैव-मेता गावोऽस्थितां गताः ॥ अमीभिर्हरितैर्भूयः, किं जीविष्यन्ति ? रे जड ! ॥ १८७ ॥ सुरोऽप्याऽऽख्यद्भवद्भ्राता, जीविष्यति यदा ह्ययम् ॥ एता गावस्तृणैरेभि-र्जीविष्यन्ति पुनस्तदा ॥ १८८ ॥ अथाऽध्यासीदिति बलः, किं ममार ममाऽनुजः ॥ एकयैव गिरा प्राहुः, सर्वेप्येते जना यतः ! ॥ १८९ ॥ ततः सुपर्वा सिद्धार्थ-रूपं कृत्वा बलं जगौ ॥ सिद्धार्थः सारथिः सोऽहं, प्रव्रज्य त्रिदशोऽभवम् ॥ १९० ॥ आपद्गतं बोधयेर्मा-मिति प्रव्रजतो मम ॥ त्वयोक्तमासीत्तदहं, त्वां बोधयितुमागमम् ॥ १९१ ॥ विष्णोर्मृत्युर्जरापुत्रात्, प्रोक्तः श्रीनेमिनाऽभवत् ॥ सत्वभूत्तत एवाम्भः-कृते त्वयि गते सति ! ॥ १९२ ॥ हरिणा प्रहितो दत्वा-ऽभिज्ञाने कौस्तुभं निजम् ॥ अगाज्जराकुमारस्तु, त्वरितं पाण्डवान्तिकम् ॥ १९३ ॥ बलभद्रोऽथ सिद्धार्थ-मालिंग्यैवमभाषत ॥ त्वयाऽहं बोधितः साधु, भ्रातः ! कुर्वेऽधुना किमु ? ॥ १९४ ॥ सिद्धार्थोऽथाऽवदद्भ्रात-रिदानीं ते विवेकिनः ॥ सर्वसङ्गपरित्यक्ता, परिव्रज्यैव युज्यते ! ॥ १९५ ॥ रामस्तत्प्रतिपद्याशु, नाकिना तेन

संयुतः ॥ तटिनीसङ्गमेऽभ्यर्च्य, सञ्चस्कार हरेर्वपुः ॥ १९६ ॥ रामस्य दीक्षाकालं च, ज्ञात्वा श्रीनेमितीर्थकृत् ॥ चारणश्रमणं प्रैषी–त्तत्पार्श्वे प्राव्रजद्बलः ॥ १९७ ॥ तुङ्गिकाशैलशृङ्गे च, गत्वाऽत्युग्रं तपोऽतनोत् ॥ तस्थौ सिद्धार्थदेवोऽपि, तद्रक्षायै तदन्तिके ॥ १९८ ॥

इतश्च स जरासूनुः, प्राप्तः पाण्डवसन्निधौ ॥ द्वारकाकृष्णनाशाद्य–मवदद्दत्तकौस्तुभः ॥ १९९ ॥ ततः शोकाम्भोधिमग्नाः, पाण्डवा वत्सरावधि ॥ क्रन्दन्तः करुणं प्रेत–कर्माणि विदधुर्हरेः ॥२००॥ व्रतार्थिनोऽथ तान् ज्ञात्वा, वृतं पञ्चशतर्षिभिः ॥ चतुर्ज्ञानं धर्मघोष–मुनिं प्रैषीच्छिवाङ्गजः ॥ २०१ ॥ ततो दत्वा जरासूनो–राज्यं तस्यान्तिके गुरोः ॥ प्रव्रज्य पाण्डवाश्चक्रु–र्घोरं साभिग्रहं तपः ॥ २०२ ॥ श्रीनेमिं तेऽन्यदा नन्तुं, प्रस्थिताः प्रति रैवतम् ॥ शुश्रुवुः स्वामिनिर्वाणं, हस्तिकल्पपुरं गताः ॥ २०३ ॥ ततस्ते प्रोद्वहद्दुःखा, आगत्य विमलाचलम् ॥ विधायानशनं प्राप्य, केवलं शिवमासदन् ॥ २०४ ॥

इतश्च तुङ्गिकाशैल–शृङ्गस्थो भगवान् बलः ॥ अतितीव्रं मासपक्ष–क्षपणादि तपोऽतनोत् ॥ २०५ ॥ सोऽन्यदा प्रविशन् क्वापि, पुरे मासस्य पारणे ॥ स्त्रिया कयाऽप्यनुत्कण्ठ–स्वयाऽदर्शि सपालया ॥ २०६ ॥ साऽभूदव्यग्रमना वीक्ष्य, रामरूपं मनोरमम् ॥ कुम्भकण्ठभ्रमाद्डिम्भ–कण्ठे पाशं बबन्ध च ॥ २०७ ॥ तं रुदन्तं क्षिप्यमाणं, कूपे प्रेक्ष्यार्भकं मुनिः ॥ दध्यौ रूपमिदं धिग्मे, महानर्थैककारणम् ! ॥ २०८ ॥ अहं वनस्थ एवाऽथ, दत्तं काष्ठादिहारकैः ॥ आहारादि ग्रहीष्यामि, न यास्यामि पुरादिषु ॥ २०९ ॥ अभिगृह्येति रामर्षि–स्तां वशां प्रतिबोध्य च ॥ तत एव निवृत्त्याऽगा–त्तुङ्गिकाद्रिगिरेर्वनम् ॥ २१० ॥ मासिकादि तपः कृत्वा, मुनिः पारणकेषु सः ॥ तृणकाष्ठादिहारिभ्यः, प्रासुकाहारमाददे ॥ २११ ॥ काष्ठादिहारकान्नीचा–न्नहमभ्यर्थये कथम् ? ॥ पुरा त्रिखण्डनाथोऽपि, नैवं दध्यौ बलस्तदा ! ॥ २१२ ॥ याचमानो महेभ्यान–प्यन्यो निर्वेदमश्नुते ॥ रामर्षिस्तु न निर्वेदं, लेभे तत्प्रार्थनादपि ॥ २१३ ॥ तितिक्षमाणो रामर्षि–रेवं याञ्चापरीषहम् ॥ सुदुस्तपं तपस्तेपे, मासिकादि महाशयः ॥ २१४ ॥ काष्ठादिहारकास्तेऽथ, स्वस्वराजसदोऽवदन् ॥ तपः करोति विपिने, नरः कोऽपि सुरोपमः ! ॥ २१५ ॥ ततस्ते व्यमृशन्नून–मस्मद्राज्यजिघृक्षया ॥ तपः करोति मन्त्रं वा, साधयत्ययमुत्तमम् ॥ २१६ ॥ सद्यो व्यापादयामस्त–त्तत्र गत्वाऽद्य तं नरम् ॥ सहन्ते न हि राजानो–ऽपरं राज्यार्थिनं जनम् ! ॥ २१७ ॥ ध्यात्वेति ते शैलोपान्ते, ससैन्या युगपद्ययुः ॥ बहून् सिंहांस्ततश्चक्रे, सिद्धार्थस्तत्र भीषणान् ॥ २१८ ॥ वीक्ष्य तान् विकृतान् भीता, नत्वा रामं ययुर्नृपाः ॥ नरसिंह इति ख्यातिं, लोके लेभे ततो बलः ॥ २१९ ॥ स च राममुनिस्तत्र, वने तिष्ठन् कृपोदधिः ॥ सिंहादीनां श्वापदानां, पुरो धर्मकथां व्यधात् ॥ २२० ॥ तया देशनया व्याघ्र–सिंहाद्याः श्वापदा अपि ॥ बभूवुर्बहवः शान्ताः, केचित्तु श्राद्धतां दधुः ॥ २२१ ॥ केचिच्चानशनं चक्रुः, केऽपि भद्रकतां ययुः ॥ त्यक्तमांसाशनाः केऽपि, रामसाधुं सिषेविरे ! ॥ २२२ ॥ एणस्त्वेको बलमुनिं, प्रेक्ष्य प्राग्भवसङ्गतेः ॥ जातजातिस्मृति प्राप्त–संवेगस्तं सदाऽभजत् ॥ २२३ ॥ स च तत्राऽऽगतान् सान्न–पानान् काष्ठादिहारकान् ॥ साधर्मन्वेषयितु–मरण्येऽन्वहमभ्रमत् ॥ २२४ ॥ तांश्च वीक्ष्याऽऽगतो भिक्षा–दायकान् साधुसन्निधौ ॥ स्पृशंस्तदङ्घ्री शिरसा, प्रेरयामास तं रयात् ॥ २२५ ॥ समाप्य ध्यानमेणेन, समं तेनाऽध्वदर्शिना ॥ रामर्षिरपि भिक्षायै, तपः पारणकेऽभ्यगात् ॥२२६॥ अथ प्रधानकाष्ठार्थ–मन्यदा रथकारकाः ॥ वने तत्र समाजग्मुः, चिच्छिदुश्च तरून् बहून् ॥ २२७ ॥ स सारङ्गो भ्रमन् वीक्ष्य, तान् भुञ्जानान् प्रमोदवान् ॥ द्रुतं न्यवेदयत् ध्यान–स्थिताय बलसाधवे ॥२२८॥ ध्यानं प्रपूर्य रामर्षि–रपि मासस्य पारणे ॥ हरिणेन समं तेन, तत्र भिक्षाकृते ययौ ॥ २२९ ॥ रथकारपुरोगोऽथ, रामं वीक्ष्य व्यचिन्तयत् ॥ दिष्ट्या दृष्टो वनेऽप्यत्र, मुनिः कल्पद्रुवन्मरौ ॥ २३० ॥ अहो ! अस्य मुनेः क्षान्ति–रहो ! रूपमहो ! महः ॥ तदहं कृतकृत्योऽस्मि, यस्यासावतिथिर्मुनिः ॥ २३१ ॥ अथास्मै भोजनं दत्वा–ऽऽत्मानं विमलयाम्यहम् ॥ विचिन्त्येति स पञ्चाङ्ग–स्पृष्टभूर्मुनिमानमत् ॥ २३२ ॥ आनीयाऽशनपानादि, प्रदातुञ्चोपचक्रमे ॥ तन्निर्दोषमिति ज्ञात्वा, जग्राह भगवानपि ॥ २३३ ॥ मृगोऽपि स तदा बाष्प–जलापूर्णविलोचनः ॥ निध्यायन् साधुरथिका–वध्यासीदिति शुद्धधीः ॥२३४॥ अहो ! अत्युग्रतपसां, निवासोऽसौ महामुनिः ॥ अनुग्रहं रथकृत–श्चक्रे स्वाङ्गेऽपि निर्ममः ॥२३५॥ अहो ! सुलब्धजन्माऽयं, रथकारो महामनाः ॥ शुद्धैः पानाशनैः साधुं, प्रतिलम्भयति स यः ॥२३६॥ निर्भाग्योऽहं तु सम्प्राप्त–तिर्यक्त्वः कर्मदोषतः ॥ तपस्तस्मै मुनेर्दातु–श्चासमर्थः करोमि किम् ? ॥२३७॥ तदा च रामरथकृ– न्मृ-

गाणामुपरि क्षणात् ॥ महावायुविधूतोऽर्द्धे–च्छिन्नोऽपतन्महाद्रुमः ॥ २३८ ॥ पतता तरुणा तेन, सुध्यानास्ते हतास्त्रयः ॥ ब्रह्मलोकेऽभवन् देवाः, पद्मोत्तरविमानगाः ॥ २३९ ॥ व्रतं वर्षशतं याव–त्प्रपाल्य त्रिदिवं गतः ॥ रामोऽथावधिनाऽज्ञासी–त्तृतीयनरकेऽनुजम् ॥ २४० ॥ ततः स भ्रातरं द्रष्टु–मुत्सुकः स्नेहसम्भ्रमात् ॥ कृष्णाभ्यर्णमगात्कृत्वा, वपुरुत्तरवैक्रियम् ॥ २४१ ॥ मणिद्युतिभिरुद्योतं, कृत्वा दृष्ट्वा च सोदरम् ॥ पूर्ववत्स्नेहलो रामः, परिरभ्यैवमब्रवीत् ॥ २४२ ॥ भ्राता ते रामनामाहं, पञ्चमाद्देवलोकतः ॥ इहाऽऽगतोऽस्मि तद्ब्रूहि, किमभीष्टं करोमि ते ? ॥ २४३ ॥ कृष्णोऽप्युवाच स्वकृत–कर्मदोषोद्भवामिमाम् ॥ पीडां भुञ्जे न कोऽप्यत्र, प्रतिकर्तुं भवेत्प्रभुः ॥ २४४ ॥ ततो रामस्तमाक्रष्टुं, नरकात्स्नेहमोहितः ॥ द्रुतमुत्पाटयामास, पाणियुग्मेन बालवत् ॥ २४५ ॥ उत्पाटितः स रामेण, वह्निस्थनवनीतवत् ॥ विलीयमान इत्यूचे, विष्णुस्तं गद्गदाक्षरम् ॥ २४६ ॥ मां मुञ्च मुञ्च हे भ्रातः !, प्रयासेनामुना कृतम् ॥ त्वया ह्युत्पाट्यमानस्य, पीडा मे जायते भृशम् ॥ २४७ ॥ न च कर्मपरीणामो, देवैरप्यन्यथा भवेत् ॥ तत्प्रयत्नममुं त्यक्त्वा, मदभीष्टमदः कुरु ॥ २४८ ॥ शङ्खचक्रगदाखड्ग–धारिणं गरुडध्वजम् ॥ पीताम्बरं विमानस्थं, कृत्वा मामञ्जनद्युतिम् ॥ २४९ ॥ आत्मानं हलमुसल–धारिणं नीलवाससम् ॥ तालकेतुं विमानस्थं, विकस्वरेन्दुच्छविच्छविम् ॥ २५० ॥ गत्वा च भरतक्षेत्रे, दर्शय त्वं पदे पदे ॥ विशेषतो द्वेषिपुरे–ष्वस्मन्नाशप्रमोदिषु ॥ २५१ ॥ [ त्रिभिर्विशेषकम् ] तया दुर्दशया जात–तिरस्कारो यथाऽऽवयोः ॥ उपशाम्यति लोकश्च, वेत्त्यावामविनश्वरौ ॥ २५२ ॥ इदं भ्रातृवचो रामः, स्वीकृत्य भरते गतः ॥ सर्वत्राऽदर्शयद्रूप–द्वयं कृत्वा तथैव तत् ॥ २५३ ॥ तद्वीक्ष्य विस्मितान् लोका–नित्यूचे च स निर्जरः ॥ आवयोः प्रतिमां कृत्वा, प्रपूजयत भो जनाः ! ॥ २५४ ॥ उत्पत्तिस्थितिविध्वंस–कारका वयमेव हि ॥ आगच्छाम इह स्वर्गा–त्स्वर्गं यामश्च लीलया ॥ २५५ ॥ अस्माभिर्द्वारकाऽकारि, क्षिप्ता संहृत्य चोदधौ ॥ वयमेव च लोकानां, स्वर्गादिसुखदायकाः ॥ २५६ ॥ तदाकर्ण्य जनाः सर्वे, सर्वत्र बलकृष्णयोः ॥ अर्चां कृत्वाऽर्चयंस्तेषा–मुदयं च ददौ सुरः ॥ २५७ ॥ लोकोऽखिलो विशेषाच्च–त्पूजासक्तोऽभवत्ततः ॥ इति भ्रातुर्वचः कृत्वा, रामः स्वस्थानमासदत् ॥ २५८ ॥ तस्य रामामरस्य प्राग्, द्वादशाब्दशतायुषः ॥ स्वर्लोके जीवितं जज्ञे, सागराणि दशैव हि ॥ २५९ ॥ ततश्च्युतश्चोत्सर्पिण्यां, भाविन्यां द्वादशार्हतः ॥ कृष्णजीवस्याऽममस्य, तीर्थेऽसौ सिद्धिमेष्यति ॥ २६० ॥ काष्ठादिहारकजनादशनादि गृह्णन्, याञ्चापरीषहमसौ बलभद्रसाधुः ॥ सेहे यथा विपुलसत्त्वनिधिस्तथाऽयं, सर्वैरपि व्रतिगणैर्नियतं विषह्यः ॥ २६१ ॥ इति याञ्चापरीषहे बलभद्रर्षिकथा ॥ १४ ॥

याञ्चाप्रवृत्तश्च कदाचिल्लाभान्तरायदोषान्न लभेत इत्यलाभपरीषहमाह–

मूलम्—परेसु घासमेसिज्जा, भोअणे परिणिट्ठिए । लद्धे पिंडे अलद्धे वा, नाणुतप्पिज्ज संजए ॥ ३० ॥

व्याख्या–परेषु गृहस्थेषु ग्रासं कवलं एषयेद्गवेषयेत्, अनेन मधुकरवृत्तिमाह । भोजने ओदनादौ परिनिष्ठिते निष्पन्ने सति, पूर्वं गमने हि साध्वर्थं पाकादिप्रवृत्तेः । ततश्च लब्धे प्रासे 'स्वल्पे अनिष्टे वा इत्यध्याहारः' पिण्डे आहारे । अलब्धे वा नानुतप्येत, संयतो मुनिः । यथाऽहो ! ममाऽधन्यता ! यदहं किञ्चिन्नलभे इति पश्चात्तापं न कुर्वीतेति सूत्रार्थः ॥ ३० ॥ किं विमृश्य नानुतप्येतेत्याह—

मूलम्–अज्जेवाहं न लब्भामि, अवि लाभो सुवे सिआ । जो एवं पडिसंचिक्खे, अलाभो तं न तज्जइ ॥ ३१ ॥

व्याख्या—अद्यैव अस्मिन्नेव दिने अहं न लभे, न प्राप्नोमि, 'अपिः' सम्भावने सम्भाव्यते एतल्लाभः प्राप्तिः श्वः आगामिनि दिने स्याद्भवेदुपलक्षणत्वादन्येद्युरन्यतरेद्युर्वा । य एवमुक्तनीत्या 'पडिसंचिक्खेत्ति' प्रतिसमीक्षते, अदीनमनाः सन्नऽलाभमाश्रित्य आलोचयति, 'अलाभो' अलाभपरीषहस्तं न तर्जयेन्नाभिभवेदन्यथाभूतं त्वभिभवेदिति भावः । अत्र लौकिकमुदाहरणं, तथाहि—

बलदेवो वासुदेवो, दारुकः सत्यकोऽपि च ॥ अन्यदाश्वैरपहृताः, प्रापुरेकां महाटवीम् ॥ १ ॥ प्रतियामं वारकेण, जाग्रद्भिः स्थेयमात्मभिः ॥ इति निश्चित्य ते तत्र, वटस्याधोऽवसन्निशि ॥ २ ॥ सुप्तेष्वऽन्येष्वाऽऽद्ययामे, यामिकं तत्र दारुकम् ॥ पिशाचरूपभृत्कोपः, समागत्यैवमऽब्रवीत् ॥ ३ ॥ ग्रसिष्ये शयितानेता–नहं क्षुत्क्षामकुक्षिकः ॥ त्वं रक्षकोऽसि यद्येषां, तन्नियुद्धं प्रदेहि मे ॥ ४ ॥ ओमित्युक्त्वा दारुकोऽपि, तेन साकमयुद्ध्यत ॥ अशक्नुवन् पिशाचं तं, जेतुमुच्चैश्चुकोप च ॥ ५ ॥ चुकोप दारुकोऽत्यर्थं, पिशाचाय यथा यथा ॥ कोपात्मकः पिशाचोऽपि, सोऽवर्धत तथा तथा ॥ ६ ॥ वर्द्धमानेन तेनाभि–भूयमानो मुहुर्मुहुः ॥ दारुकः प्रथमं यामं, कृच्छ्रेण महताऽत्यगात् ॥ ७ ॥ द्वितीये

यामे तूत्थाप्य, सत्यकं दारुकोऽस्वपीत् ॥ तमपि व्याकुलीचक्रे, स पिशाचस्तथैव हि ॥ ८ ॥ बलं प्रबोध्य सुष्वाप, सोऽथ यामे तृतीयके ॥ पिशाचोऽपि तथैव द्राक्, बलमप्यबलं व्यधात् ॥ ९ ॥ अथैत तुर्यप्रहरे, हरिरुत्थाप्य सात्वतः ॥ पिशाचस्तु तमप्येव-मभ्येत्योवाच गर्वितः ॥ १० ॥ शुसानेनानहं प्सातु-मागतोऽस्मि बुभुक्षितः ॥ विष्णुः प्रोचे मामजित्वा, सहायान् हंसि मे कथम् ? ॥ ११ ॥ ततः पिशाचगोपीशौ, नियुद्धं चक्रतुर्भृशम् ॥ स्फोटयन्ताविव भुजा-स्फोटैर्ब्रह्माण्डसम्पुटम् ॥ १२ ॥ यथा यथोचैर्युयुधे, स पिशाचस्तथा तथा ॥ अहो! तरस्वी मल्लोय-मित्यतुष्य-द्भृशं हरिः ॥ १३ ॥ कृष्णो यथा यथाऽतुष्य-त्सोऽहीयत तथा तथा ॥ हरिणेति क्षयं नीतो, लघुर्वोढं बभूव सः ॥१४॥ ततः प्रक्षिप्य तं नाभौ, ररक्ष मधुसूदनः ॥ तांस्त्रीन्प्रातरपश्यच, घृष्टकूर्परजानुकान् ! ॥ १५ ॥ यूयमेवं केन घृष्टाः ?, इत्यपृच्छच तान्हरिः ॥ ते प्रोचिरे वयं घृष्टाः, पिशाचेन बलीयसा ॥ १६ ॥ ततो निष्कास्य नाभेस्तं, दर्शयन्माधवोऽभ्यधात् ॥ पिशाचरूपः कोपोय-मायातो योऽभवन्निशि ॥ १७ ॥ अनेन युद्ध्यमानैर्य-द्युष्माभिश्चुकुपे भृशम् ॥ तदसौ ववृधे यस्मा-त्कोपः कोपेन वर्धते ॥ १८ ॥ वृद्धिं गतश्च युष्माकं, पराभवमसौ व्यधात् ॥ वृद्धिं गता हि दोषाय, छिद्र-कोपाग्निविपद्रुमाः ॥ १९ ॥ मया तु कुर्वता युद्धं, शान्तत्वेनोत्कटोऽप्ययम् ॥ प्रापितस्तनुतां यस्मा-त्कोपः क्षान्त्यैव जीयते ॥ २० ॥ तच्छ्रुत्वा तं पिशाचं च, तथाभूतं समीक्ष्य ते ॥ त्रयोऽपि विस्मिता वहीं, प्रशंसां चक्रिरे हरेः ॥ २१ ॥ कोपो यथा क्रूरपिशाचमूर्ति-र्मुरारिणा शान्ततया विजिग्ये ॥ जयन्त्यऽलाभं मुनयोऽपि तद्वत्, पूर्वोक्तसूत्रार्थविचिन्तनेन ॥ २२ ॥ इति कोपपिशाचजयकथेति सूत्रार्थः ॥ ३१ ॥ निदर्शनञ्चात्र, तथाहि—

मगधेषु पुरा ग्रामे, पूरवारकसंज्ञके ॥ विप्रो भूपनियुक्तोऽभू-त्कृषिः पाराशराभिधः ॥ १ ॥ ग्रामीणैः सोऽन्यदा लोकै-राजक्षेत्राणि वापयन् ॥ निर्दयं वाहयामास, वेष्टया सीरशतानि षट् ॥ २ ॥ क्षुधितांस्तृषितान् श्रांतान्, तान् वृषान्मानुषांश्च सः ॥ भोजनावसरे भक्ते, समायातेऽपि नाऽमुचत् ॥ ३ ॥ किन्तु तैर्व्याकुलैर्गोभिः, कर्षकैश्च पृथक् पृथक् ॥ एकैकवारं स्वक्षेत्रे-ऽवाहयत् हलपट्शतीम् ॥ ४ ॥ ततोऽन्तरायकरणात्, दृढं कर्मान्तरायिकम् ॥ उपार्ज्य मृत्वा भ्रान्त्वा च, भवे किमपि पुण्यतः ॥ ५ ॥ द्वारकापुरि कृष्णस्य, वासुदेवस्य नन्दनः ॥ सोऽभवढण्ढणादेवी-कुक्षिजो ढण्ढणाभिधः ॥ ६ ॥ [ युग्मम् ] क्रमात्स यौवनं प्राप्तो, भूयसीर्भूपपुत्रिकाः ॥ पर्यणैषीत्स्वसौन्दर्या-धरितामरसुन्दरीः ॥ ७ ॥ श्रीनेमिस्वामिनः पार्श्वे, धर्ममाकर्ण्य सोऽन्यदा ॥ विरक्तः प्राव्रजत्कृष्ण-कृतदीक्षामहोत्सवः ॥ ८ ॥ अधीयानः श्रुतं सार्धं, स्वामिना विजहार सः ॥ तस्यान्तरायिकं कर्मा-ऽन्यदोदयमवाप तत् ॥ ९ ॥ ततः स विष्णोः पुत्रोऽपि, शिष्योऽपि त्रिजगद्गुरोः ॥ द्वारकायां पुरि स्वर्ग-लक्ष्मीजित्वरसंपदि ॥ १० ॥ महेच्छानां महेभ्यानां, सदनेष्वपि पर्यटन् ॥ भैक्ष्यं किमपि न प्राप, प्राप चेन्नोचितं तदा ! ॥ ११ ॥ [ युग्मम् ] समं तेन गतोऽन्योऽपि, मुनिः किञ्चन नाऽऽनशे ॥ ततो हेतुमलब्धेः श्री-नेमिं पप्रच्छ ढण्ढणः ॥ १२ ॥ तत्पूर्वभववृत्तान्तं, ततस्तं प्रभुरभ्यधात् ॥ तं श्रुत्वा गाढसंवेगो, ढण्ढणोऽभ्यग्रहीदिति ॥ १३ ॥ लाभं मुनीनामन्येषां, न भोक्ष्येऽहमऽतः परम् ॥ अभिगृह्येति स प्राज्ञो, भिक्षायै प्रत्यहं ययौ ॥ १४ ॥ भिक्षां चालभमानः स, नोद्विवेज न वा जनम् ।' निनिन्द किन्तु स्वं कर्म-दोषमेव व्यचिन्तयत् ॥ १५ ॥ अदीनमानसो नित्य-मित्यलाभपरीषहम् ॥ सहमानोऽत्यगात्कालं, कियन्तमपि ढण्ढणः ॥ १६ ॥ अथान्यदा नेमिनाथं, पप्रच्छेति नरायणः ॥ एषु स्वामिविनेयेषु, को नु दुष्करकारकः ? ॥ १७ ॥ उवाच भगवान् सर्वे-ऽप्यमी दुष्करकारकाः ! ॥ सर्वेषु ढण्ढणमुनि-स्त्वतिदुष्करकारकः ! ॥ १८ ॥ हरिणा कथमित्युक्ते, तस्य व्यतिकरं प्रभुः ॥ परीषहस्यालाभस्य, सहनादिकमभ्यधात् ॥ १९ ॥ ततो भक्तिभरोदञ्च-द्रोमाञ्चः केशवोऽवदत् ॥ महात्मा ढण्ढणमुनिः, क्वाऽधुना विद्यते ? विभो ! ॥ २० ॥ जिनो जगौ स भिक्षार्थं, गतोऽस्ति द्वारकापुरीम् ॥ नगर्यां प्रविशंस्तस्यां, पश्यसि त्वं मुकुन्द ! तम् ॥ २१ ॥ श्रुत्वेत्यर्हन्तमानम्य, दाशार्हो द्वारकां ययौ ॥ तदीयदर्शनौत्सुक्य-सिन्धुपूरप्रणुन्नवत् ॥ २२ ॥ पुर्यां च प्रविशन् क्षाम-विग्रहं शान्तचेतसम् ॥ अद्राक्षीत्तं मुनिं मूर्ति-मन्तं धर्ममिवाऽच्युतः ॥ २३ ॥ ततोऽतिमुदितो विष्णु-र्भक्तिभावोल्लसन्मनाः ॥ उत्ततार करिस्कन्धा-दाकृष्ट इव तद्गुणैः ॥ २४ ॥ इलातलमिलन्मौलिः, प्रणनाम च तं हरिः ॥ निराबाधविहारं च, पप्रच्छ रचिताञ्जलिः ॥ २५ ॥ विष्णुना वन्द्यमानं च, कश्चिदिभ्यो निरीक्ष्य तम् ॥ दध्यौ महात्मा कोऽप्येष, गोविन्दो यं हि वन्दते ! ॥ २६ ॥ दैवात्तस्यैव धनिनः, सदने ढण्ढणोऽप्यगात् ॥ इभ्योऽपि मोदकांस्तस्मै, श्रद्धाशुद्धाशयो ददौ ॥ २७ ॥ ढण्ढणोऽथ जिनाभ्यर्णे, गत्वा दर्शितमोदकः ॥ इत्यप्राक्षीत्किमु क्षीणं, तन्मे कर्मान्तरा-

विकम् ? ॥ २८ ॥ जिनोऽवादीन्न तत्कर्म, क्षीणं लाभस्त्वयं हरेः ॥ विष्णुना वन्दितो यत्त्वं, तत्तेऽदान्मोदकान् धनी ! ॥ २९ ॥ तच्छ्रुत्वा रागरोषादि–विहीनो ढण्ढणो मुनिः ॥ परलाभममुं नैवो–पजीवामीति चिन्तयन् ॥३०॥ गत्वा शुद्धस्थण्डिलोर्व्यां, मोदकांस्तानमूर्च्छितः ॥ परिष्ठापयितुं धीरः, प्रारेभे क्षोदयन् भृशम् ! ॥ ३१ ॥ [ युग्मम् ] दध्यौ चैवमहो ! दार्ढ्यं, कर्मणां बज्रलेपवत् ॥ अहो ! तेषाञ्चाक्षयत्वं, चक्रवर्त्तिनिधानवत् ॥ ३२ ॥ देवेन्द्रा दानवेन्द्राश्च, नरेन्द्राश्च महाबलाः ॥ नैव कर्मपरीणाम–मन्यथा कर्तुमीश्वराः ! ॥ ३३ ॥ ध्यायन्निलादि सद्ध्यान–क्षीणदुष्कर्मसंहतिः ॥ महर्षिर्ढण्ढणः प्राप, केवलज्ञानमुत्तमम् ॥ ३४ ॥ विहृत्य सुचिरं पृथ्व्यां, भव्यजन्तून् विबोध्य च ॥ सर्वकर्मक्षयं कृत्वा, क्रमान्मुक्तिमवाप सः ॥ ३५ ॥ इत्यलाभविषयं परीषहं, ढण्ढणर्षिरधिसोढवान् यथा ॥ सह्यतां मुनिवरैस्तथापरै–रप्यसौ शिवसुखाप्तितत्परैः ॥ ३६ ॥ इत्यलाभपरीषहे ढण्ढणर्षिकथा ॥ १५ ॥

अलाभाद्यान्तप्रान्ताशिनां कदाचिद्रोगाः समुत्पद्येरन्निति रोगपरीषहमाह—

मूलम्—णच्चा उप्पइअं दुक्खं, वेअणाए दुहट्टिए ॥ अदीणो ठावए पण्णं, पुट्ठो तत्थ हि आसए॥३२॥

व्याख्या–ज्ञात्वाऽधिगम्य उत्पतितं उद्भूतं, दुःखयतीति दुःखो ज्वरादिरोगस्तं, वेदनया स्फोटपृष्ठग्रहादिपीडया दुःखेनार्तः क्रियतेस्म दुःखार्तितो दुःखपीडित इत्यर्थः । अदीनो दैन्यहीनः स्थापयेत्, दुःखार्तितत्वेन चलंतीं स्थिरीकुर्यात्, प्रज्ञां स्वकर्मफलमेवेदमिति तत्त्वधियं, 'पुट्ठोत्ति' अपेर्लुप्तत्वात् स्पृष्टोऽपि व्याप्तोऽपि राजमन्दादिभिः, तत्र प्रज्ञास्थापने सति अध्यासीत अधिसहेत, प्रक्रमाद्रोगजं दुःखमिति सूत्रार्थः ॥ ३२ ॥ ननु चिकित्सया किं न रोगापनोदः क्रियते ? इत्याह—

मूलम्—तेगिच्छं नाभिणंदिज्जा, संचिक्खत्त गवेसए॥ एअं खु तस्स सामण्णं, जं न कुज्जा न कारवे ॥३३॥

व्याख्या–चिकित्सां रोगप्रतिकाररूपां नाभिनन्देन्नानुमन्येत, अनुमतिनिषेधाच्च दुरापास्ते करणकारणे । 'संचिक्खत्ति' प्राकृतत्वादेकारस्य लुप्तस्य दर्शनात् 'संचिक्खे' समाधिना तिष्ठेत्, न तु कूजितकर्करायितादि कुर्यात्, आत्मानं चारित्रात्मानं गवेषयति तदपायरक्षणेन मार्गयति योऽसौ आत्मगवेषकः, किमित्येवमत आह—'एअंति' एतदनन्तरमभिधीयमानं 'खुत्ति' यस्मात्तस्य श्रमणस्य श्रामण्यं श्रमणभावो, यन्न कुर्यान्न कारयेत्, उपलक्षणत्वान्नानुमन्येत, प्रक्रमाच्चिकित्सां । जिनकल्पिकापेक्षञ्चैतत् । स्थविरकल्पिकास्त्वपवादे पुष्टालम्बना यतनया चिकित्सां कारयन्त्यपि, यदुक्तं—"काहं अच्छित्तिं अदुवा अहीहं, तवोवहाणेसु अ उज्जमिस्सं । गणं च नीईइ अ सारविस्सं, सालंबसेवी समुवेइ मुक्खं ॥ १ ॥" इति सूत्रार्थः ॥ ३३ ॥ दृष्टान्तश्चात्र, तथाहि—

अभूद्भूर्भूरिभृतीनां, नगरी मथुराभिधा ॥ तत्राऽऽसीच्छत्रुवित्रासी, जितशत्रुर्धराधवः ॥ १ ॥ कालाह्वां सोऽन्यदा वेश्यां, दृष्ट्वा हृद्यतराकृतिम् ॥ चिक्षेपान्तःपुरे स्मेर–स्मरापस्मारविह्वलः ! ॥ २ ॥ भुञ्जानस्य तया भोगां–स्तस्य राज्ञोऽभवत्सुतः ॥ कालावेश्यासुत इति, कालवैशिकसंज्ञकः ॥ ३ ॥ क्रमेण यौवनं प्राप्तः, प्रसुप्तः सोऽन्यदा निशि ॥ शब्दं श्रुत्वा शृगालानां, पप्रच्छेति स्वसेवकान् ॥ ४ ॥ शब्दोऽसौ श्रूयते केषां ?, फेरूणामिति तेऽवदन् ॥ कुमारोऽथाऽब्रवीदेतान्, बद्ध्वानयत काननात् ॥ ५ ॥ तेऽप्येकं जंबुकं बद्ध्वा–ऽऽनीय तस्मै ददुर्वनात् ॥ क्रीडारतिः कुमारोऽपि, वारं वारं जघान तम् ॥ ६ ॥ स 'खि' खीति ध्वनिं चक्रे, हन्यमानो यथा यथा ॥ तमाकर्ण्य कुमारोन्त–र्जहर्षोच्चैस्तथा तथा ॥ ७ ॥ मार्यमाणश्च तेनैवं, स गोमायुर्व्यपद्यत ॥ अकामनिर्जरायोगा–द्व्यन्तरत्वमवाप च ॥ ८ ॥

इतश्च स क्ष्मापसुतः, साधूनामन्तिकेऽन्यदा ॥ श्रुत्वा धर्मं विरक्तात्मा, परिव्रज्यामुपाददे ॥९॥ प्रतिपन्नोऽन्यदैकाकिविहारप्रतिमां च सः ॥ विहरन्मुद्गशैलाह्व–पुरेऽगाद्गुणसेवधिः ॥ १० ॥ तदा च तस्याऽर्शोरोगः, प्रादुरासीन्महामुनेः ॥ सुदुःसहव्यथासिन्धु–प्रवर्तनघनाघनः ॥ ११ ॥ सोऽत्यर्थं व्याधिना तेन, पीड्यमानोऽपि धीरधीः ॥ न जातु मनसाप्यैषी–द्भिषजं भेषजं तथा ॥ १२ ॥ कदा यास्यत्यसौ व्याधि–रित्यपि ध्यातवान्न सः ॥ किन्तु स्वकर्मदोषोऽय–मिति ध्यात्वाऽसहिष्ट तम् ॥ १३ ॥ तत्र चाऽभूत्पुरे श्रीमान्, हतशत्रुर्महीपतिः ॥ कालवैशिकसाधोश्च, स्वसा तस्य महिष्यऽभूत् ॥ १४ ॥ ज्ञात्वाऽर्शोरोगमुत्पन्नं, सा सोदरमुनेस्तदा ॥ चिकित्साविषयं तस्या–ऽभिग्रहं चाऽवबुध्य तम् ॥ १५ ॥ अर्शोघ्नमौषधं सार्धं, भिक्षया स्नेहमोहिता ॥ भिक्षार्थमागतायादा–त्तस्मै सोदरसाधवे ॥ १६ ॥ [ युग्मम् ] सोऽथ भुक्तदाहार–स्तदन्तर्गतमौषधम् ॥ ज्ञात्वा जातोऽनुतापोन्त–श्चिन्तयामास सन्मुनिः ॥ १७ ॥ अहो ! अनुपयोगेना–ऽयुक्तमेतन्मया कृतम् ॥ आददे भेषजमिदं, यदर्शोजन्तुनाशनम् ॥ १८ ॥ अभिग्र-

ह्स्य भङ्गोऽधि–करणग्रहणं तथा ॥ स्यादाहारार्थिनामेवं, तदाहारं जहाम्यहम् ! ॥ १९ ॥ इति ध्यात्वा स निर्गत्य, पुरादारुह्य भूधरम् ॥ महासत्त्वः पादपोप–गमनं विदधे मुनिः ॥ २० ॥ तस्यात्तानशनं ज्ञात्वा–ऽरक्षयत्स्वनरैर्नृपः ॥ अस्योपसर्गं माकार्षी–त्कश्चिदित्यवधारयन् ॥ २१ ॥

इतश्च यो हतस्तेन, शिवोऽभूद्यन्तरस्तदा ॥ सोऽपश्यत्तं भ्रमन् जात–कोपः प्रायुङ्क्त चावधिम् ॥ २२ ॥ ज्ञात्वा प्राग्भववार्तां तां, वैरनिर्यातनोद्यतः ॥ तं मुनीन्द्रमुपद्रोतुं, मयत्सां व्यकरोच्छिवाम् ॥ २३ ॥ नृपाऽऽयुक्ता नरा याव–त्तस्थुस्ते साधुसन्निधौ ॥ तावत्सा व्यन्तरकृता, श्रृगाली न जघास तम् ॥ २४ ॥ यदा तु ते नरा जग्मुः, साधुपार्श्वात्तदा तु सा ॥ शिवा 'खि' खीति कुर्वाणा, तं चखाद मुहुर्मुनिम् ॥ २५ ॥ तां शिवोत्पादितां पीडा–मर्शोबाधां च दुःसहाम् ॥ स महात्माऽसहिष्टोच्चै–र्धैर्याऽपरितभूधरः ! ॥ २६ ॥ दुःखे रोगोत्थिते सत्य–प्याऽऽर्त-ध्यानविधायके ॥ गोमायूत्पादिते चोग्र–रौद्रध्यानानुबन्धके ॥ २७ ॥ समतारसपाथोधि–र्मुनीन्द्रः कालवैशिकः ॥ नार्तरौद्रे व्यधात्किन्तु, धर्मध्यानं दधौ स्थिरम् ॥ २८ ॥ [ युग्मम् ] एवं पञ्चदशाहानि, तां श्रृगालीकृतव्यथाम् ॥ सहमानो महासत्वः, प्रपाल्याऽनशनं शुभम् ॥ २९ ॥ केवलज्ञानमासाद्य, कृत्वा कर्मक्षयं च सः ॥ महामुनिर्महा-नन्द–पदं प्राप महाशयः ॥ ३० ॥ [ युग्मम् ] इति रोगपरीषहं यथा, परिषेहे मुनिकालवैशिकः ॥ सकलैरपि साधुभिस्तथा, सहनीयोऽयमुदारसाहसैः ॥ ३१ ॥ इति रोगपरीषहे कालवैशिककथा ॥ १६ ॥

रोगिणश्च शयनादिषु दुःसहतरस्तृणस्पर्श इति तत्परीषहमाह—

**मूलम्—अचेलगस्स लूहस्स, संजयस्स तवस्सिणो ॥ तणेसु सुअमाणस्स, होज्जा गाय विराहणा॥३४॥**

व्याख्या–अचेलकस्य रूक्षस्य संयतस्य तपस्विनः तृणेषु दर्भादिषु शयानस्य उपलक्षणत्वादासीनस्य च भवेद्गात्रवि-राधना शरीरविदारणा, अत्र च सचेलस्य तपस्विनः तृणस्पर्शासम्भव इत्युक्तमचेलस्येति । अचेलस्यापि स्निग्धवपुषो नातिदुःखाकरस्तृणस्पर्श इत्युक्तं रूक्षस्येति, रूक्षस्यापि हरिततृणग्राहिणस्तापसादिवदसंयतस्य तृणस्पर्शो न व्यथायै स्यादिति संयतस्येत्युक्तमिति सूत्रार्थः ॥ ३४ ॥ ततः किमित्याह—

**मूलम्— आयवस्स निवाएणं, अउला हवइ वेअणा ॥ एअं नच्चा न सेवंति, तंतुजं तणतज्जिआ ॥३५॥**

व्याख्या–आतपस्य घर्मस्य निपातेन संपातेन अतुला महती भवति वेदना, ततः किं कार्यमित्याह–एतदनन्तरोक्तं ज्ञात्वा न सेवन्ते तंतुजं वस्त्रं कम्बलं वा, तृणैर्दर्भादिभिस्तर्जिताः पीडितास्तृणतर्जिताः । अयं भावः–यद्यपि दर्भादितृण-विलिखितवपुष आतपोत्पन्नस्वेदक्लेदवशात् क्षतक्षारनिक्षेपरूपैव पीडा स्यात्तथापि कर्मक्षयार्थिभिर्वस्त्रादिकमनाददा-नैरार्त्तध्यानमकुर्वाणैः सा सम्यक् सोढव्या, जिनकल्पिकापेक्षञ्चैतत् । स्थविरकल्पिकास्तु सापेक्षसंयमत्वाद्वस्त्रादि सेव-न्तेऽपीति सूत्रार्थः ॥ ३६ ॥ उदाहरणञ्चात्र, तथाहि—

श्रावस्तीनगरीभर्तु–र्जितशत्रुमहीपतेः ॥ भद्राभिधोऽभवत्सूनुः, सात्विकेषु शिरोमणिः ॥ १ ॥ मुनीनामन्तिके जैनं, धर्म श्रुत्वा विरक्तधीः ॥ स प्रव्रज्यामुपादत्त, क्रमाच्चाऽभूद्बहुश्रुतः ॥ २ ॥ प्रतिपद्याऽन्यदैकाकि–विहारप्रतिमा व्रती ॥ विजहार धरापीठे–ऽप्रतिबद्धः समीरवत् ॥ ३ ॥ अन्येद्युर्विहरन् सोऽथ, क्वापि राज्यान्तरे गतः ॥ हेरि-कोयमिति ज्ञात्वा, जगृहे राजपूरुषैः ॥ ४ ॥ कस्त्वं ? केन चरत्वाय, प्रहितोसीति ? जल्प रे ! ॥ पप्रच्छुरिति तं भूयः, पुरुषाः परुषाः रुषाः ॥ ५ ॥ व्रती तु प्रतिमास्थत्वा–न्न किमप्युत्तरं ददौ ॥ ततस्ते कुपिताः क्षार–दानेन तम-तक्षयन् ॥ ६ ॥ निशातखड्गवत्तीक्ष्ण–धारैर्दर्भैश्च तं मुनिम् ॥ गाढमावेष्ट्य मुक्त्वा च, ते दुष्टाः स्वाश्रयं ययुः ॥ ७ ॥ यतेस्तस्याऽऽमिषं वाढं, समन्तादपि तैः कुशैः ॥ विदग्धस्येव वैदग्ध्यं, दुर्विदग्धैरकृत्यत ! ॥ ८ ॥ तथापि कलुषं ध्यान–मकुर्वाणः क्षमानिधिः ॥ स सम्यगधिसेहे तं, तृणस्पर्शपरीषहम् ॥ ९ ॥ लग्ना शूकशिखाऽप्यङ्गे–ऽङ्गिनां क्षोभाय जायते ॥ स तु दक्षो न चुक्षोभ, मांसमग्नैः कुशैरपि ! ॥ १० ॥ एवं तृणस्पर्शपरीषहं यथा–ऽधिसोढवान् भद्रमुनिर्महाशयः ॥ तथाऽयमन्यैरपि साधुपुङ्गवै–स्तितिक्षणीयः क्षतमोहवैरिभिः ॥ ११ ॥ इति तृणस्पर्शपरीषहे भद्रमहर्षि कथा ॥ १७ ॥

तृणानि च मलिनान्यपि कानिचिद्भवन्ति तत्सङ्गमाच्च परिस्वेदेन जल्लः सम्भवतीति तत्परीषहमाह—

**मूलम्—किलिण्णगाए मेहावी, पंकेण व रएण वा । घिंसु वा परितावेणं, सायं नो परिदेवए ॥ ३६ ॥**

१ पप्रच्छुरिति तं भूपः—पुरुषा ऋषिपुङ्गवम् । इति 'ग' संज्ञकपुस्तके ॥

व्याख्या–क्लिन्नगात्रो व्याप्तदेहो मेधावी स्नानाकरणरूपमर्यादावर्ती, पङ्केन वा स्वेदार्द्रमलरूपेण, रजसा वा पांशुना, 'घिंसुवत्ति' ग्रीष्मे, वा शब्दाच्छरदि वा, परितापेन हेतुभूतेन, अयंभावः–परितापाद्धि स्वेदः, स्वेदाच्चपङ्करजसी, ततश्च क्लिन्नगात्रता भवतीति। ततो ग्रीष्मादौ परितापादिना क्लिन्नगात्रोऽपि किं न कुर्यादित्याह–सातं सुखमाश्रित्येति शेषः, नो परिदेवयेत्, कथं कदा वा मे मलापगमेन सातं भावीति न प्रलपेदिति सूत्रार्थः॥३६॥ किं तर्हि कुर्यादित्याह–

मूलम्––वेएज्ज निज्जरापेही, आरिअं धम्ममणुत्तरं॥ जाव सरीरभेओत्ति, जल्लं काएण धारए॥ ३७॥

व्याख्या–वेदयेत्सहेत, प्रक्रमात् जल्लजनितं दुःखं, निर्जरापेक्षी आत्यन्तिककर्मक्षयाभिकांक्षी, आर्यं सर्वाशुभाचाररहितं, धर्मं श्रुतचारित्ररूपं, अनुत्तरं सर्वोत्तमं, प्रपन्न इति शेषः। अथ सामर्थ्योक्तमप्यर्थं विशेषाद्व्यक्तीकुर्वन्नाह–जावेत्यादि–यावदिति मर्यादायां, शरीरभेदो देहनाशस्तं मर्यादीकृत्य, जल्लं मलं कायेनाङ्गेन धारयेत्। दृश्यन्ते हि केपि दवदग्धस्थाणुवद्विच्छायकृष्णकायाः शीतवातादिभिरुपहन्यमाना रजःपुञ्जावगुण्ठिता मलाविलकलेवरा नराः, अकामनिर्जरातश्च न कश्चित्तेषां गुणो, मम तु सम्यक् सहमानस्य महान् गुण इति मत्वा नो मलापनोदार्थं स्नानादि कुर्यात्, यतः–"न शक्यं निर्मलीकर्तुं, गात्रं स्नानशतैरपि ॥ अश्रान्तमिव स्रोतोभि–र्नवभिर्मलमुद्गिरत् ॥ १ ॥ इति सूत्रार्थः ॥ ३७ ॥ कथानकश्चात्र, तथाहि––

अभवत्पुरि चम्पायां, सुनन्दो नाम वाणिजः ॥ स च श्राद्धः सर्वपण्यै–र्व्यवहारं विनिर्ममे ॥ १ ॥ यदौषधादिकं तस्य, पार्श्वे योऽमार्गयन्मुनिः ॥ स तत्तस्मै ददौ दर्पा–ऽऽविष्टः किञ्चिदवज्ञया! ॥ २ ॥ तस्य हट्टेऽन्यदा जग्मु–र्ग्रीष्मकाले महर्षयः ॥ भैषज्यार्थं परिस्वेद–मलक्लिन्नकलेवराः ॥ ३ ॥ तेषां च मलगन्धेना–ऽत्युत्कटेन प्रसर्पता ॥ भेषजानामशेषाणा–मपि गन्धोऽभ्यभूयत ॥ ४ ॥ मलगन्धं तमाघ्राय, सुरभिद्रव्यभावितः ॥ सुनन्दोऽचिन्तयत्सर्वो–ऽप्याऽऽचारो व्रतिनां शुभः ॥ ५ ॥ किन्त्वेवमतिदुर्गन्ध–मशेषजनगर्हितम् ॥ यदेते बिभ्रति मलं, सर्वथा तन्न सुन्दरम्! ॥ ६ ॥ इति ध्यायन् स दुष्कर्मो–पार्जयन्मुनिनिन्दया ॥ मृतश्च तदनालोच्य, श्रावकत्वात्सुरोऽभवत् ॥ ७ ॥ ततश्च्युतश्च कौशाम्बी–पुर्यां सोऽभून्महेभ्यभूः ॥ प्राव्राजीच्च गुरोः पार्श्वे, श्रुत्वा धर्मं विरक्तधीः ॥ ८ ॥ तस्याऽन्यदा तन्निर्ग्रन्थ–मलगर्हासमर्जितम् ॥ कर्मोदियाय तेनाऽभू–त्सोऽतिदुर्गन्धविग्रहः ॥ ९ ॥ शटत्सर्पादिकुणप–गन्धादप्यधिकं तदा ॥ तदीयदेहदुर्गन्धं, न सोढुं कोऽप्यऽभूत्प्रभुः ॥ १० ॥ तद्वपुःस्पृष्टपूर्वेण, वायुनाऽपि जनोऽखिलः ॥ अत्यर्थं व्याकुलश्चक्रे, सर्पेणेव प्रसर्पता! ॥ ११ ॥ तदा च यत्र यत्राऽसौ, भिक्षाद्यर्थं ययौ यतिः ॥ तत्र तत्र जनः सर्व–स्तद्गन्धेनाऽभ्यभूयत ॥ १२ ॥ तदीयदेहदौर्गन्ध्यो–ड्डाहो जज्ञे जने महान् ॥ ततस्तमन्ये मुनयः, प्रोचुरेवं महाधियः ॥ १३ ॥ मुने! त्वदङ्गदौर्गन्ध्या–दुड्डाहो जायते भृशम्! ॥ तत्त्वया वसतावेव, स्थेयं गम्यं बहिर्न हि ॥१४॥ इत्युक्तो मुनिभिः सोऽथ, दौर्गन्ध्यापनिनीषया ॥ उद्दिश्य शासनसुरीं, कायोत्सर्गं व्यधान्निशि ॥ १५ ॥ ततस्तुष्टाऽवदद्देवी, किमभीष्टं करोमि ते? ॥ ऊचे वाचंयमो देवि!, चारुगन्धं विधेहि माम् ॥ १६ ॥ ततः सुरी सुगन्धं तं, तथा चक्रे यथा जनः ॥ सर्वस्तदङ्गमाघ्राय, नैपीत्कस्तूरिकामपि! ॥ १७ ॥ अहो! मुमुक्षुरप्येष, सुगन्धिद्रव्यभावितः ॥ सर्वदा तिष्ठतीत्युच्चै–रुड्डाहः पुनरप्यभूत् ॥ १८ ॥ ततस्तेन विषण्णेन, भूयोऽप्याराधिता सती ॥ गन्धं स्वाभाविकं तस्य, शरीरे विदधे सुरी ॥ १९ ॥ इति जल्लपरीषहं यथा, न सुनन्दः प्रथमं विसोढवान् ॥ अपरैरनगाररक्षुरै–र्न विधेयं विधिवेदिभिस्तथा ॥ २० ॥ इति मलपरीषहे सुनन्दश्राद्धकथा ॥ १८ ॥

जल्लोपलिप्तश्च शुचीन्परान् सत्क्रियमाणान् पुरस्क्रियमाणांश्च दृष्ट्वा सत्कारपुरस्कारौ स्पृहयेदिति तत्परीषहमाह–

मूलम्––अभिवायणमब्भुट्ठाणं, सामी कुज्जा निमंतणं॥ जे ताइं पडिसेवंति, न तेसिं पीहए मुणी ॥ ३८॥

व्याख्या–अभिवादनं शिरोनमनादिपूर्वं प्रणमामीत्यादिवचनं, अभ्युत्थानं ससम्भ्रममासनमोचनं, स्वामी राजादिः कुर्यात्, विदध्यात् निमन्त्रणं, अद्य युष्माभिर्मद्गृहे भिक्षा गृहीतव्येत्यादिरूपं, ये इति स्वयूथ्याः परतीर्थिका वा, तान्यभिवादनादीनि प्रतिसेवन्ते आगमनिषिद्धान्यपि भजन्ते, न तेभ्यः स्पृहयेत्। यथा भाग्यवन्तोऽमी ये इत्थमभिवादनाद्यैः सत्क्रियन्ते इति यतिर्न चिन्तयेदिति सूत्रार्थः ॥ ३८ ॥ किञ्च––

मूलम्––अणुक्कसाई अप्पिच्छे, अण्णाएसी अलोलुए॥ रसेसु नाणुगिज्झिज्जा, नाणुतप्पेज्ज पण्णवं॥ ३९॥

व्याख्या–अणुकषायी अल्पकषायी, तादृशो हि नमस्कारादिकमकुर्वते न कुप्यति, तत्संपत्तौ वा नाहंकारवान् भवति, न वा तदर्थमातापनादि छद्म कुरुते, न च तत्र गृद्धिं विधत्ते। अत एवाल्पेच्छो, धर्मोपकरणप्राप्तिमात्राभिलाषी, न स

त्काराद्याकांक्षी । अत एवाऽज्ञातो जातिश्रुतादिभिरेषयति गवेषयति पिण्डादीनीत्यज्ञातैषी । कुतः पुनरेवं ? यतोऽलोलुपः, न सरसौदनादिलाम्पट्यवान् । एवं विधोऽपि सरसाहारभोजिनोऽन्यान् वीक्ष्य कदाचिदन्यथा स्यादत आह--रसेषु मधुरादिषु नाऽनुगृद्ध्येत् नाभिकांक्षां कुर्यात् । तथा नाऽनुतप्येत तीर्थान्तरीयान् नृपाद्यैः सत्क्रियमाणान् प्रेक्ष्य किमहमेषां मध्ये न प्रव्रजितः ! किं मया स्तोकलोकपूज्या बहुजनपरिभवनीयाः श्वेतभिक्षवः कक्षीकृताः ! इति नाऽनुतापं कुर्यात्, 'पण्णवंति' प्रज्ञावान् हेयोपादेयविवेचननिपुणबुद्धिमान् । अनेन सत्कारकारिणि तोषं,न्यक्कारकारिणि रोषञ्चाकुर्वताऽसौ परीषहोऽध्यासीतव्य इत्युक्तं भवतीति सूत्रार्थः ॥३९॥ उदाहरणञ्चात्र, तथाहि–

बभूव मधुरापुर्या–मिन्द्रदत्तपुरोहितः ॥ गवाक्षस्थोऽन्यदाऽद्राक्षी–त्स व्रजन्तमधो मुनिम् ॥ १ ॥ साधोरस्य शिरस्यङ्घ्रिं, मुञ्चन्नस्मीति चिन्तयन् ॥ यतेस्तस्योपरि द्वेषात्, स स्वपादमलम्बयत् ॥ २ ॥ पुरोहितेन तेनैवं, न्यक्कारे विहितेऽपि सः ॥ मनसाऽपि मुनिर्नैवा–कुप्यच्छान्तरसोदधिः ॥ ३ ॥ तच्च प्रेक्ष्य पुरश्रेष्ठी, श्राद्धोऽन्तर्ध्यातवानिति ॥ ज्ञात्वैवाऽसौ दुरात्मास्य–न्यधान्मूर्ध्नि मुनेः क्रमम् ॥ ४ ॥ तदस्य साधुद्विष्टस्य, पापिष्ठस्य दुरात्मनः ॥ अवश्यं छेदनीयोऽङ्घ्रि–र्मयोपायेन केनचित् ॥ ५ ॥ ध्यात्वेति तस्य छिद्राणि, मार्गयन्नप्यनाप्नुवन् ॥ सोऽथ श्रेष्ठी पुरः सूरेः, स्वां प्रतिज्ञामभाषत ॥ ६ ॥ गुरुर्जगाद सत्कार–न्यक्कारौ हि महर्षिभिः ॥ हर्षखेदावकुर्वद्भिः, सह्यावेव महामते ! ॥ ७ ॥ प्रतिज्ञा तदियं श्रेष्ठिन् !, किमर्थं निर्मिता त्वया ? ॥ तदाकर्ण्य जगौ श्रेष्ठी, तथ्यमेतन्मुनिप्रभो ! ॥ ८ ॥ किन्तु तेन तदावज्ञा, यत्कृता भूयसी मुनेः ॥ उत्पन्नभूरिदुःखेन, तत्सन्धासौ मया कृता ॥ ९ ॥ किञ्च चेत्साध्ववज्ञायाः, फलमस्य न दर्श्यते ॥ तदा सर्वेऽप्यऽमी लोका, निःशूकास्तां वितन्वते ॥ १० ॥ सन्धा चेन्मे न पूर्यंत, तदा जीवाम्यहं कथम् ? ॥ तत्पूर्तेस्तदुपायं मे, किञ्चिद्ब्रूत मुनीश्वराः ! ॥ ११ ॥ सूरिस्तेनेत्थमत्यर्थं, प्रार्थ्यमानोऽब्रवीदिति ॥ पुरोधसस्तस्य सौधे, वद किं विद्यतेऽधुना ? ॥ १२ ॥ श्रेष्ठी स्माह गृहं नव्यं, कृतमस्ति पुरोधसा ॥ स भूपं तत्प्रवेशाहे, सतत्रं भोजयिष्यति ॥ १३ ॥ तदर्थमधुना भोज्यं, विविधं तत्र जायते ॥ तदाकर्ण्याऽवदत्सूरिस्तद्दाक्षिण्योपरोधतः ॥ १४ ॥ पुरोधसो नव्यसौधे, भुक्त्यर्थं सपरिच्छदम् ॥ प्रविशन्तं विशामीशं, करे धृत्वा स्वपाणिना ॥ १५ ॥ प्रासाद एष पतती–त्युदित्वा चापसारयेः ॥ तदा चाहं तदागारं, पातयिष्यामि विद्यया ॥ १६ ॥ [ युग्मम् ] तन्निशम्य तथाऽकार्षी–दिभ्योऽपतच्च तद्गृहम् ॥ ततः श्रेष्ठी नृपश्रेष्ठ–मित्यूचे तुष्टमानसः ॥ १७ ॥ युष्मान्हन्तुमुपायोऽय–मनेन विहितोऽभवत् ॥ न चेन्नव्योऽप्यसौ कस्मा–दकस्मान्निलयः पतेत् ? ॥ १८ ॥ ततः क्रुद्धो नृपो बद्ध्वा–र्पयत्तस्मै पुरोहितम् ॥ यत्तुभ्यं रोचते श्रेष्ठिं–स्तद्विदध्या इति ब्रुवन् ॥ १९ ॥ तं साध्ववज्ञावृत्तान्तं, स्मारयित्वा पुरोधसः ॥ श्रेष्ठीन्द्रकीले तत्पादं, छेत्तुकामो न्यधात्ततः ॥ २० ॥ पुरोधाः कान्दिशीकोऽथा–ऽब्रवीदेवं सगद्गदम् ॥ तं साध्ववज्ञामन्तुं मे, सहस्व त्वं महामते ! ॥ २१ ॥ नैवं मुनिजनावज्ञां, करिष्येहमतः परम् ॥ तत्कृपामयशील ! त्व, कृपां कृत्वा विमुञ्च माम् ॥ २२ ॥ तेनेत्युदीरितः श्रेष्ठी, कृपानिधो मुमोच तम् ॥ जैना हि द्रुतमेव स्युः, क्रुद्धाः अप्यार्द्रमानसाः ! ॥ २३ ॥ अथ पिष्टमयीं कृत्वा, मूर्तिं तस्य पुरोधसः ॥ श्रेष्ठी छित्त्वा च तत्पादं, स्वां प्रतिज्ञामपूरयत् ॥ २४ ॥ यथेति सत्कारपरीषहं स, श्रेष्ठी न सेहे न तथा विधेयम् ॥ किन्त्वेष सर्वैर्व्रतिभिः पुरोधो–ऽवज्ञातवाचंयमवद्विषह्यः ॥ २५ ॥ इति सत्कारपुरस्कारपरीषहे साधुश्राद्धकथा ॥ १९ ॥

इहात्र पूर्वञ्च श्रावकस्य यत् परीषहाभिधानं तदादिमनयचतुष्कमतेनेति भावनीयम्, उक्तञ्च–"तिण्हंपि णेगमणओ, परीसहो जाव उज्जुसुत्ताओत्ति" अत्र 'तिण्हंति' त्रयाणां सर्वविरतदेशविरताऽविरतानामिति । साम्प्रतं पूर्वोक्ताशेषपरीषहान् जयतोऽपि कस्यचिज्ज्ञानावरणीयस्योदयात् प्रज्ञाया अपकर्षे, तदपगमाच्च प्रज्ञोत्कर्षे, वैक्लव्योत्सेकौ स्यातामिति प्रज्ञापरीषहमाह—

मूलम्—से नूणं मए पुव्वं, कम्माणाणफला कडा । जेणाहं नाभिजाणामि, पुट्ठो केणइ कण्हुई ॥ ४० ॥

व्याख्या—से शब्दो ऽथशब्दार्थ उपन्यासे, नूनं निश्चितं मया पूर्वं प्राक् कर्माणि अज्ञानफलानि ज्ञानावरणरूपाणि कृतानि, ज्ञाननिन्दादिभिरुपार्जितानि । यदुक्तं–" ज्ञानस्य ज्ञानिनां चैव, निन्दाप्रद्वेषमत्सरैः । उपघातैश्च विघ्नैश्च, ज्ञानघ्नं कर्म बध्यते ॥ १ ॥" मयेत्यभिधानं च स्वयमकृतस्योपभोगासम्भवादुक्तं हि–"शुभाशुभानि कर्माणि, स्वयं कुर्वन्ति देहिनः ॥ स्वयमेवोपभुज्यन्ते, दुःखानि च सुखानि च ॥ १ ॥" कुत एतदित्याह– येन हेतुनाहं नाभि-

जानामि नावबुध्ये, पृष्टः, केनचित् स्वयमजानता कस्मिंश्चिज्जीवादौ वस्तुनि सुगमेऽपीति सूत्रार्थः ॥ ४० ॥ आह यदि पूर्वं कृतानि कर्माणि तर्हि किं न तानि तदैव वेदितानि ? उच्यते—

मूलम्—अह पच्छा उइज्जंति, कम्मानाणफला कडा । एवमासासि अप्पाणं, नच्चा कम्मविवागयं ॥४१॥

व्याख्या—अथेति वाक्यान्तरोपन्यासे, पश्चादबाधोत्तरकालमुदीर्यन्ते विपच्यन्ते कर्माण्यज्ञानफलानि कृतानि, द्रव्यादिसाचिव्यादेव तेषां विपाकदानात्ततस्तद्विघातायैव यत्नो विधेयो न तु विषादः, एवममुना प्रकारेण आश्वासय स्वस्थीकुरु आत्मानं मा वैक्लव्यं कृथा इत्यर्थः । उक्तमेव हेतुं निगमयति, ज्ञात्वा कर्मविपाकक कर्मणां कुत्सितविपाकमिति सूत्रार्थः ॥ ४१ ॥ इदञ्च सूत्रयुग्मं प्रज्ञापकर्षमाश्रित्योक्तं, उपलक्षणत्वाच्चास्य ज्ञानावरणक्षयोपशमात्प्रज्ञोत्कर्षेऽपि नोत्सेको विधेय इत्यपि दृश्यं, यदुक्तं–" पूर्वपुरुषसिंहानां, विज्ञानातिशयसागरानन्त्यं । श्रुत्वा साम्प्रतपुरुषाः, कथं स्वबुध्या मदं यान्ति ? ॥ १ ॥ इति" निदर्शनञ्चात्र, तथाहि—

उज्जयिन्यां पुरि स्वर्ग–जयिन्यां निजसम्पदा ॥ अभवन् कालकाचार्याः, सदोद्यतविहारिणः ॥ १ ॥ बहुश्रुतानां निर्ग्रन्थ–धर्माम्भोजविवस्वताम् ॥ तेषां शिष्यास्तु पार्श्वस्थाः, सर्वे पार्श्वस्थतां दधुः ! ॥ २ ॥ साध्वाचारेऽप्यनुद्योगाः, सूत्रार्थग्रहणालसाः ॥ शिक्षिता मृदुवाणीभि– रपि तेऽन्तर्दधुः क्रुधम् ॥ ३ ॥ तथापि शिक्षयामासु– स्तानाचार्याः सुशिक्षया ॥ शुनो लाङ्गूलवत्ते तु, तत्यजुर्वक्रतां न हि ! ॥ ४ ॥ ततस्ते सूरयः खिन्ना–श्चेतस्येवमचिन्तयन् ॥ स्मारणादिभिरेतेषां, स्वाध्यायो मेऽवसीदति ॥ ५ ॥ गुणश्च कश्चिदप्येषां, मद्वाक्यैर्नैव जायते ॥ कर्मबन्धस्तु मे नित्यं, भवत्येभिरनाश्रवैः ॥ ६ ॥ विहाय तदमून् क्वापि, गच्छामीति विचिन्त्य ते ॥ शय्यातरश्रावकाय, परमार्थं न्यवेदयन् ॥ ७ ॥ ऊचुश्चैवं मयि गते, चेत्स्युः सानुशया अमी ॥ तदा मदाश्रितामाशां, भृशं सन्तर्ज्य दर्शयेः ! ॥ ८ ॥ एवमुक्त्वा च मुक्त्वा च, सुप्तांस्तानखिलानपि ॥ निशावसाने सूरीन्द्रा, नगर्या निर्ययुस्ततः ॥ ९ ॥ स्वकीयशिष्यशिष्यस्य, बहुशिष्यस्य धीमतः ॥ पार्श्वे सागरसूरेस्ते, स्वर्णभूमौ स्वयं ययुः ॥ १० ॥ अदृष्टपूर्वान् तान्नोपा–लक्षयत्सागरस्ततः ॥ नाऽभ्युत्तस्थौ न चानंसी–दज्ञानं हि रिपूयते ! ॥ ११ ॥ नाऽकुप्यन् सूरयो ज्ञाना–त्ते तेनाऽसत्कृता अपि ॥ तस्थुः किन्तु तदभ्यर्णे, तानपृच्छच्च सागरः ॥ १२ ॥ ब्रूहि वृद्धमुने ! कस्मात्, स्थानादत्र त्वमागमः ? ॥ अवन्त्या इति गाम्भीर्या–म्भोधयः सूरयोऽभ्यधुः ! ॥ १३ ॥ विनेयान् पाठयन् सोऽथ, सूरीन्द्रानिति पृष्टवान् ॥ ज्ञातार्थोऽयं श्रुतस्कन्धो, वृद्ध ! ते विद्यते न वा ? ॥ १४ ॥ ज्ञातार्थ इति तैरुक्ते, प्रज्ञादर्पादुवाच सः ॥ मया व्याख्यायमानं त्वं, श्रुतस्कन्धममुं शृणु ॥ १५ ॥ इत्युक्त्वा स विशेषात्तं, व्याख्यातुमुपचक्रमे ॥ प्रज्ञावन्तमसौ वृद्धो, मां जानात्विति चिन्तयन् ! ॥ १६ ॥

इतश्च कालकार्याणां, शिष्यास्ते प्रातरुत्थिताः ॥ निजं गुरुमपश्यन्तो जज्ञिरे भृशमाकुलाः ॥ १७ ॥ पप्रच्छुरिति सम्भ्रान्त–स्वान्ताः शय्यातरं च ते ॥ अस्मान् विमुच्य गुरवः, क्व गता इति शंस नः ॥ १८ ॥ सकोप इव सोप्येवं, स्माह तेषा हितेच्छया ॥ अहो ! प्रमादिनो यूयं, विनयादिगुणोज्झिताः ! ॥ १९ ॥ दीक्षिताः शिक्षिता नाना–ऽऽहाराद्यैः पोषिताश्च यैः ॥ गुरुंस्तानपि नो यूयं, कृतघ्ना वरिवस्यथ ! ॥ २० ॥ प्रवर्त्तध्वं सदाचारे, नुन्ना अपि न सूरिभिः ॥ तत्का युष्मादृशैः शिष्यै–रर्थसिद्धिर्भवेद्गुरोः ? ॥ २१ ॥ किञ्च यूयं विनेया अ–प्यात्मीयं गुरुमप्यहो ! ॥ गतं क्वापि न चेद्वित्थ, जानामि तदहं कुतः ? ॥ २२ ॥ उक्ताः शय्यातरेणेति, लज्जितास्ते पुनर्जगुः ॥ अस्माभिर्यादृशं चक्रे, फलमासादि तादृशम् ॥ २३ ॥ गुरोर्वियुक्ता हि वयं, निराधारा गतह्रियः ॥ शोभां नाश्नुमहे मौले–र्भ्रष्टा इव शिरोरुहाः ॥२४॥ न च तुभ्यमनुक्त्वा ते, व्रजेयुः क्वाऽपि सूरयः ! ॥ दुर्विनीता न च प्राग्व–द्भविष्यामः पुनर्वयम् ॥ २५ ॥ तत्प्रसद्य त्वमस्माकं, ब्रूहि तत्पावितां दिशम् ॥ तानासाद्य यथात्मानं, सनाथं कुर्महे वयम् ! ॥२६॥ इति निर्बन्धपूर्वं तैः, पृष्टः शय्यातरोऽपि तान् ॥ जगौ गुरोर्विहाराशां, सर्वे तेऽप्यऽचलंस्ततः ॥ २७ ॥ सुवर्णभूमिं प्रति तान्, प्रस्थितान् प्रेक्ष्य संयतान् ॥ इत्यपृच्छज्जनो मार्गे, कोऽसौ व्रजति सूरिराट् ? ॥ २८ ॥ ते प्रोचुः कालकाचार्या, यान्त्येते गच्छसंयुताः ॥ तल्लोकोक्त्या सागरोऽपि, श्रुत्वा पप्रच्छ कालकान् ॥ २९ ॥ आयात्यवन्त्याः किमिह, वृद्धर्षे ! मत्पितामहः ? ॥ तेऽवदन् वेद्म्यदो नाहं, जनोक्त्या तु श्रुतं मया ॥ ३० ॥ इतश्च कालकाचार्यशिष्यास्ते निखिला अपि ॥ गवेषयन्तः स्वगुरू–नाजग्मुः सागरान्तिकम् ॥ ३१ ॥ तान्वीक्ष्याभ्युत्थितं सन्ति, क्व पूज्या इति वादिनम् ॥ मुनयः सागराचार्य–मपृच्छन्निति तेऽखिलाः ॥ ३२ ॥ आगताः सन्ति किमिह, केऽप्या-

चार्यधुरन्धराः ? ॥ पृष्टस्तैरिति साशंकः, सागरोऽप्यब्रवीदिति ॥ ३३ ॥ आचार्यवर्यानायाता–नत्र नो वेद्मि कांश्चन ॥ एको वृद्धयतिः किन्तू–ज्जयन्या अस्त्युपागतः ! ॥ ३४ ॥ तं वृद्धसाधुमस्माक–मिदानीं दर्शयेति तैः ॥ उदितः साग-राचार्य–स्तान्मुनीन्द्रानदीदृशत् ॥ ३५ ॥ तेऽथ तान्प्रत्यभिज्ञाय, सम्प्राप्ताः परमां मुदम् ॥ जगुः सागरमेते हि, सूरीन्द्राः कालकाभिधाः ! ॥ ३६ ॥ शिष्यैरस्मादृशैर्दुष्टै–रविनीतैः प्रमादिभिः ॥ खिन्ना अमी विमुच्यास्मा– नत्रैका किन आययुः ॥ ३७ ॥ प्रमादेन यथास्माभि–रज्ञानेन तथा त्वया ॥ अवज्ञाताः सूरयस्त–त्सागर ! स्मो वयं समाः ! ॥ ३८ ॥ इत्युक्त्वा ते स्वापराधं, क्षमयाञ्चक्रिरे गुरोः ॥ सागरार्योऽपि सम्भ्रान्तः, सूरीन्नत्वैवमब्रवीत् ॥ ३९ ॥ युष्माकं विश्वपूज्यानां, यदज्ञानवशान्मया ॥ आशातना कृता तस्या, मिथ्यादुष्कृतमस्तु मे ! ॥ ४० ॥ वारंवारमु-दीर्यैव–मित्यप्राक्षीच्च सागरः ॥ श्रुतं व्याख्यामि कीदृक्ष– महं ब्रूत पितामहाः ! ॥ ४१ ॥ सूरीन्द्राः प्रोचिरे वत्स !, भव्यं व्याख्यासि यद्यपि ॥ तथापि गर्वं मा कार्षीः, सर्वज्ञो ह्यस्ति कोऽधुना ? ॥ ४२ ॥ इत्युक्त्वा कालकाचार्याः, पल्लकं वालुकाभृतं ॥ नद्या आनाययं– स्तस्य प्रतिबोधाय धीधनाः ॥ ४३ ॥ स्थाने क्वाऽप्यऽखिलां क्षिप्त्वा, रेणु-मुद्धृत्य तां पुनः ॥ द्वितीयस्थानके न्यास्थं–स्ततोऽपि च तृतीयके ॥ ४४ ॥ स्थानेषु बहुषु क्षेपं, क्षेपमेवं समुद्धृताः ॥ वालुका जज्ञिरे स्तोक–तरा भूम्यादिसङ्गतः ॥ ४५ ॥ प्रदर्श्य रेणुदृष्टान्त– मेवं ते सागरं जगुः ॥ वत्स ! नद्यां यथा सन्ति, भूयस्यो वालुकाः स्वतः ॥ ४६ ॥ विज्ञानमेवं सम्पूर्ण–मनन्तमविनश्वरम् ॥ अभूत्सतो जिनेन्द्रेषु, लोकालो-कप्रकाशकम् ॥ ४७ ॥ पल्लकेन यथोपात्ताः, सरितः स्तोकवालुकाः ॥ तथा गणधरैः स्तोकं, जिनेन्द्रादाददे श्रुतम् ॥ ४८ ॥ स्थाने स्थाने च निक्षिप्यो–त्क्षिप्ताः क्षित्यादिसङ्गतेः ॥ क्षीयमाणा यथाऽभूवन्, स्तोकाः पल्लकवालुकाः ॥ ४९ ॥ तथा श्रुतं गणभृता–मप्यागतमनुक्रमात् ॥ कालादिदोषतः शिष्ये– ष्वल्पाल्पतरबुद्धिषु ॥ ५० ॥ विस्मृ-त्यादेः क्षीयमाण–मल्पमेवाऽथ वर्तते ॥ विवेकिना विमृश्येति, न कार्यो धीमदः क्वचित् ॥ ५१ ॥ [ युग्मम् ] एवमेवार्द्रमृत्पिण्ड–दृष्टान्तमपि दर्शयन् ॥ उज्जगार गुरुः प्रज्ञा– मदं मा कुरु सागर ! ॥ ५२ ॥ यतः–" मा वहउ कोवि गव्वं, इत्थ जगे पंडिओ अहं चेव ॥ आसव्वण्णुमईओ, तरतमजोगेण मइ विहवा ॥ ५३ ॥" प्रतिबुद्धस्तदाकर्ण्य, सागरो धिषणामदं ॥ जहौ प्राकृतधीदर्प–दोषं चालोचयन्मुहुः ॥ ५४ ॥ सागरक्षपकवन्मुनीश्वरै–र्नो विधेय इति धीमदः क्वचित् ॥ किन्तुकालकमुनीन्द्रवत्सदा, सह्य एव धिषणापरीषहः ॥ ५५ ॥ इति प्रज्ञापरीषहे सागराचार्यकथा ॥ २० ॥

इदञ्च प्रज्ञाप्रकर्षमाश्रित्योदाहरणमुक्तं, तदभावे तु स्वयं ज्ञेयमिति, इदानीं प्रज्ञाया ज्ञानविशेषरूपत्वात्त-द्विपक्षभूतत्वाच्चाज्ञानस्याज्ञानपरीषहमाह, सोऽपि चाज्ञानभावाभावाभ्यां द्विधैव स्यात्तत्र तत्सद्भावपक्षमधिकृ-त्येदं सूत्रद्वयमुच्यते—

मूलम्—णिरट्ठगंमि विरओ, मेहुणाओ सुसंवुडो। जो सक्खं नाभिजाणामि, धम्मं कल्लाणपावगं ॥ ४२ ॥

व्याख्या—' निरट्ठगंमित्ति ' अर्थः प्रयोजनं, तदभावो निरर्थं. तदेव निरर्थकं, तस्मिन्, प्रयोजनं विनेत्यर्थः, विरतो निवृत्तो, मैथुनादब्रह्मणः। सत्यामपि हिंसाद्याश्रवविरतौ यदस्योपादानं तदस्यैवाऽतिगृद्धिहेतुतया दुस्त्यज-त्वात्, सुसंवृत इन्द्रियनोइन्द्रियसंवरणेन, योऽहं साक्षात् परिस्फुटं नाभिजानामि, धर्मं वस्तुस्वभावं, 'कल्लाणत्ति' लुप्तस्य बिंदोर्दर्शनात्कल्याणं शुभं, पापकं च तद्विपरीतं, चकारस्य गम्यत्वात्। अयं भावो, यदि विरतेः कश्चिदर्थः सिध्येन्न तदा ममेत्थमज्ञानं सम्भवेदिति ॥ ४२ ॥ न च सामान्यचर्ययैव कुतो विशिष्टफलावाप्तिः स्यादिति वाच्यं ? यतः–

मूलम्—तवोवहाणमादाय, पडिमं पडिवज्जओ। एवंपि विहरओ मे, छउमं न णिअट्टइ ॥ ४३ ॥

व्याख्या—तपो भद्रमहाभद्रादिः, उपधानमागमोपचाररूपमाचाम्लादि, आदाय आसेव्य, प्रतिमां मासिक्यादि-रूपां प्रतिपद्यमानस्यांगीकुर्वतः, एवमपि विशिष्टचर्ययापि विहरतो निःप्रतिबन्धत्वेनानियतं विचरतः, छद्म ज्ञानाव-रणादि कर्म न नैव निवर्त्तते नापैति, तत्किमनेन ? कष्टानुष्ठानेनेति यतिर्न चिन्तयेदित्युत्तरसूत्रस्थेन सह सम्बन्ध नीयमिति सूत्रद्वयार्थः ॥ ४३ ॥ एवं ज्ञानाभावे व्याकुलत्वं न कार्यं, उपलक्षणत्वाच्चास्य ज्ञानसद्भावे नोत्सेकोऽपि विधेय इत्यप्यवसेयं, यतः–" ज्ञानं मददर्पहरं, माद्यति यस्तेन तस्य को वैद्यः ? ॥ अमृतं यस्य विषायते, तस्य चिकित्सा कथं क्रियते ? ॥ १ ॥ इति। उदाहरणश्चात्र, तथाहि—

गंगाकूले स्थिते क्वापि, नगरे भ्रातरावुभौ ॥ श्रुत्वा धर्मं गुरोः पार्श्वे, संविग्नौ भेजतुर्व्रतम् ॥ १ ॥ बहुश्रुतस्तयोरेको–ऽन्यस्त्वभूदबहुश्रुतः ॥ बहुश्रुतो यः स प्रापा–ऽऽचार्यकं स्वगुरोः क्रमात् ॥ २ ॥ सूत्रार्थग्रहणार्थं–मुपसर्पद्भिर-

न्वहम् ॥ विनेयैः क्षणमप्येकं, स लेभे नाऽह्नि विश्रमम् ॥ ३ ॥ रात्रावपि च तैरेव, प्रतिपृच्छादिकारिभिः ॥ नैव निद्रासुखं किञ्चि–दपि सूरिर्बभाज सः ॥ ४ ॥ अल्पश्रुतो यस्तद्भ्राता, स तु भुक्त्वाऽशनादिकम् ॥ वासरे च रजन्यां च, तिष्ठतिस्म यथासुखम् ॥ ५ ॥ ततः स सूरिः सततो–ज्जागरेणाऽतिखेदितः ॥ उद्विग्नचित्तो नितरा–मित्यन्येद्युरचिन्तयत् ! ॥ ६ ॥ अहो ! सपुण्यो मद्भ्राता, भुक्त्वा स्वपिति यः सुखम् ! ॥ अहं त्वधन्यो निद्रातुं, न शक्नोमि निशास्वपि ! ॥ ७ ॥ अभ्यस्तं हि मया ज्ञानं, सौख्यायाऽभूत्तु दुःखदम् ! ॥ तन्मूर्खत्वं वरं नूनं, निद्राप्रभृतिसौख्यदम् ! ॥ ८ ॥ [ यदुक्तं केनचित् ]" मूर्खत्वं हि सखे ! ममाऽपि रुचितं तस्मिन् यदष्टौ गुणाः, निश्चिन्तो बहुभोजनोऽत्रपमना नक्तं दिवा शायकः ॥ कार्याकार्यविचारणान्धबधिरो मानापमाने समः, प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ! ॥ ९ ॥" दुर्ध्यानेनामुना ज्ञाना–वरणीयमुपार्ज्य सः ॥ विपन्नस्तदनालोच्य, सुरोऽभूद्व्रतपालनात् ॥ १० ॥ ततश्च्युतश्च भरत–क्षेत्रेऽत्रैव स निर्जरः ॥ आभीरपल्यामाभीर–स्वामिनस्तनयोऽभवत् ॥ ११ ॥ स क्रमाद्यौवनं प्राप्तो, रूपलावण्यशालिनीम् ॥ आभीरतनयामेकां, पितृभ्यामुदवाहयत ॥ १२ ॥ तस्य सार्धं तया सौख्यं, भुञ्जानस्य सुताऽजनि ॥ भद्राभिधा स्वीयरूप–तृणीकृतसुराङ्गना ! ॥ १३ ॥ सा कन्यका क्रमान्नव्य–तारुण्येन विभूषिता ॥ जज्ञे समग्रतरुण–चेतोहरिणवागुराः ! ॥ १४ ॥ न वेषो नाप्युपस्कार–स्तादृशोऽभूत्तथापि सा ॥ स्वरूपेणैव सर्वेषा–माचकर्ष दृशो विशाम् ॥ १५ ॥ तस्याः पिताऽन्यदा सर्पि–र्विक्रेतुं तनयान्वितः ॥ घृतस्य शकटं भृत्वा, चचाल नगरं प्रति ॥ १६ ॥ अनांसि सर्पिःसम्पूर्णा–न्यादायान्येऽपि भूरयः ॥ गोदुहस्तरुणास्तेन, समं चेलुर्मदोत्कटाः ॥ १७ ॥ तस्याभीरस्य शकटं, भद्रा स्वयमखेटयत् ॥ शकटानां खेटने सा, ह्यतीवनिपुणाऽभवत् ॥ १८ ॥ ततोऽन्ये गोदुहस्त्यक्त–मार्गास्तस्या दिदृक्षया ॥ उत्पथे प्रैरयन् क्षिप्र–मनांसि स्वमनांसि च ॥ १९ ॥ स्मेरतद्वदनाम्भोज–भ्रमरीकृतदृष्टयः ॥ अखेटयन् स्वशकटां–स्तदीयशकटान्तिके ॥ २० ॥ विश्वैककार्मणं तस्याः, पश्यन्तो रूपमद्भुतम् ॥ प्राप्नुवन्तः शरव्यत्वं, स्मरस्याकृष्टधन्वनः ! ॥ २१ ॥ यथातथा खेटयन्तः, शकटानऽखिलानऽपि ॥ सद्यस्तरुणगोपास्ते, भञ्जयामासुरुत्पथे ! ॥ २२ ॥ [ युग्मम् ] ततः खिन्ना व्यधुस्तस्याः, संज्ञामशकटेति ते ॥ असावशकटातात, इति तज्जनकस्य च ॥ २३ ॥ तद्वीक्ष्य जातवैराग्य–स्तस्यास्तातो विवाह्य ताम् ॥ तस्यै दत्वा च सर्वस्वं, प्राव्राजीत्साधुसन्निधौ ॥ २४ ॥ स मुनि स्वगुरोः पार्श्वे. विधिपूर्वकमार्हतम् ॥ पठति स श्रुतं याव–दुत्तराध्ययनत्रयम् ॥ २५ ॥ चतुर्थाध्ययने तस्यो–द्दिष्टेऽसंखयसंज्ञके ॥ कर्मोदियाय तज्ज्ञाना– वरणं प्राग्भवार्जितम् ॥ २६ ॥ आचाम्लयुगलेन द्वौ, दिवसौ जग्मतुः परम् ॥ एकोऽप्याऽऽलापकस्तस्य, सोद्यमस्याऽपि नाऽगमत् ॥ २७ ॥ ततोऽवादीद्गुरुस्तं चेत् , प्रयत्नं कुर्वतोऽपि ते ॥ इदमध्ययनं नाया–त्यनुज्ञा क्रियते तदा ॥ २८ ॥ स प्रोचेऽध्ययनस्याऽस्य, स्वामिन् ! योगोस्ति कीदृशः ? ॥ गुरुर्जगादाऽऽचाम्लानि, कार्याणि पठनावधि ॥ २९ ॥ ततः शिष्योऽभ्यधादस्या–नुज्ञया मेऽधुना कृतम् ! ॥ आचाम्लानि करिष्येऽहं, यावत्पठनमन्वहम् ! ॥ ३० ॥ इत्युक्त्वा स प्रतिदिनं, कुर्वन्नाचाम्लसत्तपः ॥ अभ्यस्यति स्माऽध्ययनं, तदनिर्विण्णमानसः ! ॥ ३१ ॥ जडो हि शास्त्रेऽनायाति, तन्निन्दातत्परो भवेत् ॥ स तु स्वकीयं कर्मैव, निनिन्द ज्ञानबाधकम् ॥ ३२ ॥ एवं द्वादशभिर्वर्षै–स्तेनाचाम्लविधायिना ॥ तत्पेठेऽध्ययनं तस्य, तत्कर्माऽपि क्षयं ययौ ॥ ३३ ॥ ततोऽसौ द्रुतमेवान्य–दपि श्रुतमधीतवान् ॥ क्रमाच्च केवलज्ञानं, प्राप्य निर्वृत्तिमासदत् ! ॥ ३४ ॥ इति साधुवरो विसोढ– वानयमज्ञानपरीषहं यथा ॥ अनगारपुरन्दरैः प– रैरपि सह्यः स तथा क्षमापरैः ॥ ३५ ॥ इत्यज्ञानपरीषहसहनेऽशकटापितृमुनिकथा ॥ ज्ञानसद्भावे तु श्रीस्थूलभद्रोदाहरणं, तथाहि—

चतुर्दशानां पूर्वाणां, पारदृश्वा महामुनिः ॥ कदाचित्स्थूलभद्रर्षिः, श्रावस्त्यां समवासरत् ॥१॥ तत्र चाभूत्प्रभोस्तस्य, प्राग्वयस्योऽतिवत्सलः ॥ धनदेवाभिधस्तस्य, प्रिया चाऽऽसीद्धनेश्वरी ॥ २ ॥ तस्मिन्नन्तुमनायाते, स्थूलभद्रगुरुः स्वयम् ॥ जगाम सुहृदो धाम, तं चाऽपश्यद्धनेश्वरी ॥ ३ ॥ ततः सा द्रुतमुत्थाय, तं प्रणम्य च सादरम् ॥ ददावासनमत्युच्चं, तत्र चोपाविशत्प्रभुः ॥ ४ ॥ धनदेवः कुत्र यातः ?, इत्यप्राक्षीच्च तत्प्रियाम् ॥ सुदीर्घान्साऽपि निःश्वासा–न्मुञ्चन्तीत्यवदत्तदा ॥ ५ ॥ स्वामिन्मम प्रियः सर्वं, व्ययतेस्म बहिर्धनम् ॥ धनहीनश्च लेभेऽसौ, सर्वत्राप्यति लाघवम् ! ॥ ६ ॥ ततः सोऽन्वेषयामास, निधीन् पित्रादिसञ्चितान् ॥ विपर्ययादवस्थाया, न हि तानप्यविन्दत ॥ ७ ॥ मम कान्तोऽथ वाणिज्य–हेतोर्देशान्तरे ययौ ॥ लक्ष्मीर्वसति वाणिज्ये, लोकोक्तिमिति भावयन् ॥ ८ ॥ तच्छ्रुत्वा तस्य गेहं च, वीक्ष्यावस्थान्तरं गतम् ॥ श्रुतोपयोगमकरोत् , स्थूलभद्रगुरुर्गुणी ॥ ९ ॥ स्तम्भस्याधः स्थितं दृष्ट्वा, महान्तं

सेवधिं ततः ॥ तस्य प्रियवयस्यस्यो–पकारं कर्तुमुद्यतः ॥ १० ॥ मित्रप्रियायै तं स्तम्भं, दर्शयन् करसंज्ञया ॥ धर्मोपदेशव्याजेने–त्युवाच मुनिपुङ्गवः ॥ ११ ॥ [युग्मम्] इदमीदृक् तच्च तादृक्, पश्य जातं हि कीदृशम् ? ॥ इदं च वदतस्तस्या–ऽभिप्रायोऽयमभूद्गुरोः ॥ १२ ॥ इदमीदृग् द्रव्यजातं, सवेश्मन्येव विद्यते ॥ तथाप्यज्ञानतोऽभूत्त–द्भ्रमणं तस्य तादृशम् ! ॥ १३ ॥ प्रेक्षस्व कीदृशं जातं, तदेतदसमञ्जसम् ॥ श्रावकास्तु सहायाता–स्तदाकर्ण्येत्यचिन्तयन् ॥ १४ ॥ वेश्मेदं चारु वीक्ष्य प्राग्, जीर्णप्रायं च साम्प्रतम् ॥ अनित्यतादर्शनार्थं, भगवन्तो वदन्त्यदः ॥ १५ ॥ तस्यै पुनः पुनः प्रोच्य, स्थूलभद्रोऽपि तत्तथा ॥ पादाब्जैः पावयन्नुर्वीं, विहरन्नन्यतो ययौ ॥ १६ ॥ आगान्निर्धन एवाऽथ, धनदेवो निजं गृहम् ॥ स्थूलभद्रागमं तस्मै, स्माह हृष्टा धनेश्वरी ॥ १७ ॥ सोऽपृच्छत् स्थूलभद्रेण, किमुक्तमिति मे वद ॥ साऽभ्यधात् स्थूलभद्रो न, किञ्चिदूचे विशेषतः ॥ १८ ॥ किंत्वेनं स्तम्भमसकृ–द्दर्शयन्निसभापत ॥ इदमीदृक् तच्च तादृक्, पश्य जातं हि कीदृशम् ! ॥ १९ ॥ धनदेवस्तदाकर्ण्या–ऽध्यासीदेवं कुशाग्रधीः ॥ नैव निर्हेतुकां चेष्टां, तादृशाः क्वापि कुर्वते ! ॥ २० ॥ तन्नूनमस्य स्तम्भस्या–ऽधस्ताद्भावी निधिः क्वचित् ॥ ध्यात्वेत्युदखनत् स्तम्भं, निधिश्चाविरभून्महान् ॥ २१ ॥ धनदेवो निधेस्तस्मा–न्नानाविधमणिव्रजम् ॥ आसाद्यापेतदारिद्र्यो, बभूव धनदोपमः ॥ २२ ॥ भगवान् शकटालनन्दनर्षि–र्न यथा ज्ञानपरीषहं विषेहे ॥ अपरैर्मुनिभिस्तथा न कार्यं, भवितव्यं हि पयोधिवद्गभीरैः ॥ २३ ॥ इति ज्ञानपरीषहे स्थूलभद्राचार्यकथा ॥ २१ ॥ साम्प्रतमज्ञानाद्दर्शनेपि कस्यापि शङ्कास्यादिति दर्शनपरीषहमाह—

**मूलम्— णत्थि नूणं परे लोए, इड्ढीवावि तवस्सिणो। अदुवा वंचिओ म्हित्ति, इइ भिक्खू न चिंतए॥४४॥**

व्याख्या— नास्ति नूनं निश्चितं परलोको जन्मान्तरं, भूतचतुष्टयात्मकत्वाद्वपुषः, तस्य चात्रैव पातादात्मनश्च प्रत्यक्षतयाऽनुपलभ्यमानत्वात्। ऋद्धिर्वा तपोमाहात्म्यरूपा आमर्षौषध्यादिः, साऽपि नैव विद्यते, अपेर्भिन्नक्रमत्वात्तपस्विनोऽपि सतो ममेति गम्यते, तस्या अप्यनुपलभ्यमानत्वादेवेति भावः । 'अदुवत्ति' अथवा वञ्चितोऽस्मि, भोगानामिति शेषः, इति अनेन शिरस्तुण्डमुण्डनोपवासादिना यातनात्मकेन धर्मानुष्ठानेन इत्येतद्भिक्षुर्न चिन्तयेत्। यत आत्मीय आत्मा स्वप्रत्यक्ष एव, चैतन्यादितद्गुणानां मानसप्रत्यक्षेण स्वयमनुभवात्, केवलिनां तु सर्वेप्यात्मानः प्रत्यक्षा एव, ततश्च भूतचतुष्टयात्मकस्याङ्गस्यात्रैव नाशेऽप्यात्मनो भवान्तरगामित्वादस्त्येव परलोक इति। ऋद्धयोऽप्यत्र कालानुभावेन न सन्ति परं महाविदेहेषु सर्वदा सन्त्येव । आत्मनो वञ्चनाकल्पनमप्ययुक्तं, भोगानां दुःखात्मकत्वात्, उक्तञ्च–"आपातमात्रमधुरा, विपाककटवो विषोपमा विषयाः ॥ अविवेकिजनाचरिता, विवेकिजनवर्जिताः पापाः ॥ १ ॥" तपोपि न यातना, दुःखनिबन्धनं, कर्मक्षयहेतुत्वात्, यथाशक्तिविधानाच्च, यदुक्तं–" सो हु तवो कायव्वो, जेण मणो मंगुलं न चिंतेई ॥ जेण न इंदिअहाणी, जेण य जोगा न हायंति ॥१॥ इति सूत्रार्थः ॥४४॥

—तथा—

**मूलम्—अभू जिणा अत्थि जिणा, अदुवा वि भविस्सई। मुसं ते एवमाहंसु, इइ भिक्खू न चिंतए ॥ ४५॥**

व्याख्या—अभूवन्नासन् जिनाः केवलिनः, 'अत्थित्ति' निपातः ततश्च अस्ति विद्यन्ते जिना महाविदेहेषु, अथवा भविष्यन्ति जिना इत्यपि मृषा अलीकं, ते जिनास्तत्त्ववादिनः, एवमनन्तरोक्तप्रकारेण आहुः कथयन्ति, इति भिक्षुर्न चिन्तयेत्, अनुमानप्रमाणादिसिद्धत्वात् सर्वज्ञस्येति सूत्रार्थः ॥ ४५ ॥ निदर्शनं चात्र, तथाहि—

वत्साभूमौ भूरिशिष्य–परिवारा बहुश्रुताः ॥ आर्याषाढाभिधाचार्या, बभूवुर्विश्ववत्सलाः ॥ १ ॥ यो यस्तेषां गणे भक्तं, प्रत्याख्याय व्यपद्यत ॥ तं तं निर्याम्य निर्ग्रन्थ–मित्थं ते सूरयोऽवदन् ॥ २ ॥ देवभावंगतेनाऽऽशु, देयं मे दर्शनं त्वया ॥ इत्युक्तेऽपि बहूनां तै–र्नागात्कोऽपि दिवं गतः ॥ ३ ॥ अथाऽन्यदा स्वशिष्यं ते, निर्याम्यातीव वल्लभम् ॥ एवमूचुः सनिर्बन्धं, गुरवो गद्गदाक्षरम् ॥ ४ ॥ स्वर्गगतेन भवता, वत्स ! वत्सलचेतसा ॥ अवश्यं दर्शनं देयं, त्वामिति प्रार्थये भृशम् ॥५॥ मया हि बहुसाधूना–मेवमुक्तमभूत्परम् ॥ नाऽऽगात्कोऽपि त्वं तु वत्सा–ऽऽगच्छेः स्नेहमस्मरन् ॥ ६ ॥ तत्प्रपद्य विपद्याशु, देवीभूतोऽपि स द्रुतम् ॥ नाययौ प्रथमोत्पन्न– सुरकार्यैर्विलम्बितः ॥ ७ ॥ तस्मिन्ननागते सद्यो, विपर्यस्तमना गुरुः ॥ एवं व्यचिन्तयन्नूनं, परलोको न विद्यते ! ॥ ८ ॥ ज्ञानदर्शनचारित्रा–राधकाः शान्तचेतसः ॥ विहितानशनाः सम्य–ग्मया निर्यामिताः स्वयम् ॥ ९ ॥ मद्वाचं प्रतिपन्नाश्च, विनेया मम ये मृताः ॥ स्नेहलेष्वपि तेष्वेको–ऽप्याऽऽगान्नो कथमन्यथा ? ॥ १० ॥ [युग्मम्] तदद्य यावच्चक्रेऽसौ, क्रिया कष्टप्रदा मुधा ॥ भोगान् हित्वा मनोज्ञांश्च, मयात्मा वञ्चितो वृथा ! ॥ ११ ॥ भुक्त्वा भोगांस्तदद्यापि, करिष्ये सफलं जनुः ॥ पर-

लोके वसति कः, क्लिश्यते कुशलो मुधा ! ॥१२॥ विमृश्येति स्वलिङ्गस्थ, एव मिथ्यात्वमाश्रितः ॥ उत्प्रव्रजितुकामोऽसौ, मुक्त्वा गच्छं विनिर्ययौ ॥ १३ ॥ अत्रान्तरेऽवधिज्ञाना–त्स्वरूपं स्वगुरोरिदम् ॥ ज्ञात्वा दिवं गतः शिष्यो, विषण्णो ध्यातवानिति ! ॥ १४ ॥ अहो ! मद्गुरवो जैना–गमनेत्रान्विता अपि ॥ विमुक्तिमार्गं मुञ्चन्ति, मोहान्धतमसाकुलाः ! ॥ १५ ॥ अहो ! मोहस्य महिमा, जगज्जैत्रो विजृम्भते ॥ जात्यन्धा इव चेष्टन्ते, पश्यन्तोऽप्यखिला जनाः ! ॥ १६ ॥ कुलवानपि धीरोऽपि, गभीरोऽपि सुधीरपि ॥ मोहाज्जहाति मर्यादां, कल्पान्तादिव वारिधिः ॥ १७ ॥ तन्मोहप्रेरिता याव–न्नामी दुष्कर्म कुर्वते ॥ तावदेतान्विबोध्याहं, कुर्वे सन्मार्गमाश्रितान् ! ॥ १८ ॥ ध्यात्वेत्यागत्य स सुरः, स्वगुरोर्गमनाध्वनि ॥ ग्राममेकं विचक्रे तत्–पार्श्वे दिव्यं च नाटकम् ॥ १९ ॥ ततः स सूरिस्तन्नाट्यं, प्रेक्षमाणो मनोहरम् ॥ ऊर्द्ध्व एव हि षण्मासी–मासीत्प्राज्यप्रमोदभाक् ॥ २० ॥ शीतातपक्षुधातृष्णा–षण्मासातिक्रमश्रमान् ॥ दिव्यानुभावान्नाज्ञासी–त्तन्नाट्यं स विलोकयन् ॥ २१ ॥ तस्मिन्नृत्लेऽथ देवेन, संहृते सोऽचलत्पुरः ॥ क्षणमेकं शुभं नाट्यं, दृष्टं दिष्ट्येति भावयन् ॥ २२ ॥ स देवोऽथ तदाकूतं, परीक्षितुमलङ्कृतान् ॥ षट् जीवकायसंज्ञान् षट्, विदधे बालकान् वने ॥ २३ ॥ दृष्ट्वाथ सूरिस्तेष्वाद्यं, भूरिभूषणभूषितम् ॥ इति दध्यौ शिशोरस्या–ऽलङ्कारानाच्छिनद्म्यहम् ॥ २४ ॥ एषां द्रव्येण भोगेच्छा, चिरं मे पूरयिष्यते ॥ मृगतृष्णाम्बुपानेच्छा–देश्या द्रव्यं विना हि सा ॥ २५ ॥ विमृश्येति स तं क्षीर–कण्ठं सोत्कण्ठमब्रवीत् ॥ रे ! मुञ्च मुञ्चालङ्कारान्, बालकः स तु नाऽमुचत् ॥ २६ ॥ ततो रुष्टः स तं शावं, जग्राह गलकन्दले ॥ सोऽर्भकोऽपि भयोद्भ्रान्त–स्तमित्यूचे सगद्गदम् ॥ २७ ॥ अस्यामटव्यां भीमायां, बिभ्यचौराद्युपद्रवात् ॥ पृथ्वीकायिकसंज्ञोऽह–मस्मि त्वां शरणं श्रितः ॥ २८ ॥ अशाश्वता ह्यमी प्राणा, विश्वकीर्तिश्च शाश्वती ॥ यशोर्थी प्राणनाशेऽपि, तद्रक्षेच्छरणागतम् ! ॥ २९ ॥ बालं मां दीनतां प्राप्तं, पाहि पाहि प्रभो ! ततः । तैरेव भूपिता भूर्ये, रक्षेयुः शरणागतम् ! ॥ ३० ॥ यतः–"विहलं जो अवलंबइ, आवइपडिअं च जो समुद्धरइ ॥ सरणागयं च रक्खइ, तिसु तेसु अलंकिआ पुहवी ॥ ३१ ॥" इत्याद्युक्तोऽपि लुब्धात्मा, स सूरिस्तस्य कन्धराम् ॥ यावन्मोटयितुं लग्न–स्तावच्छावः पुनर्जगौ ॥ ३२ ॥ भगवन्नेकमाख्यानं, श्रुत्वा कुर्या यथोचितम् ॥ सूरिर्जगाद तद्ब्रूहि, सोप्याख्यत् श्रूयतामिति ॥ ३३ ॥

ग्रामे क्वापि कुलालोऽभू–त्स चान्येद्युर्मृदं खनन् ॥ आक्रान्तः पतता खानि–तटेनेति वचोऽवदत् ॥ ३४ ॥ यत्प्रसादाद्बलिं भिक्षां, ददे ज्ञातीश्च पोषये ॥ साऽप्याऽऽक्रामति भूमिर्मां, तज्जातं शरणाद्भयम् ! ॥ ३५ ॥ यथाऽऽजीविकामुख्य–सौख्यार्थी पृथिवीं श्रितः ॥ वराकः कुम्भकारोऽयं, तयैवोपहतो द्रुतम् ! ॥ ३६ ॥ भगवन्नहमप्येवं, भीतस्त्वां शरणं श्रितः ॥ त्वं च मुष्णासि मां तद्धी–र्ममापि शरणादभूत् ! ॥ ३७ ॥ तदाकर्ण्यातिदक्षोऽसि, रे ! बालेति वदन् गुरुः ॥ तद्भूषणानि जग्राह, निजग्राह च तां शिशुम् ! ॥ ३८ ॥ तानशेषानलङ्कारा–नक्षिपत्स्वप्रतिग्रहे ॥ व्रताद्भ्रष्टो हि दक्षोऽपि, निश्शङ्को जायते भृशम् ! ॥ ३९ ॥

ततः पुरो व्रजन् काञ्चि–दतिक्रान्तो वनीं गुरुः ॥ बालकं प्राग्वदद्राक्षी–दप्कायाख्यं द्वितीयकम् ॥ ४० ॥ तस्मिंस्तस्याऽप्यऽलङ्कारां–स्तथैवाऽऽदातुमुद्यते ॥ सोऽप्याऽऽख्याय निजामाख्या–माख्यानं ख्यातवानिति ॥ ४१ ॥ "एकस्तालाचरश्चारु–कथाकथनकोविदः ॥ पाटलाह्वोऽभवद्भूरि–सुभाषितरसहृदः ॥ ४२ ॥ सोऽन्यदा प्रोत्तरन् गङ्गां, नीरपूरैः प्रवाहितः ॥ तीरस्थैर्ददृशे लोकै–रित्यूचे च सविस्मयैः ॥ ४३ ॥ बहुश्रुतं चित्रकथं, गंगा वहति पाटलम् ॥ वाह्यमानाऽस्तु भद्रं ते, ब्रूहि किञ्चित्सुभाषितम् ॥ ४४ ॥ समाकर्ण्योभयाकर्णि–सकर्णसज्जनोदितम् ॥ श्लोकमेकमनश्लीलं, पाटलोऽप्येवमब्रवीत् ॥ ४५ ॥ येन रोहन्ति बीजानि, येन जीवन्ति कर्षकाः ॥ तस्य मध्ये विपद्येत, जातं मे शरणाद्भयम् ! ॥ ४६ ॥" कथां प्रोच्येति तद्भावं, चाविष्कृत्य स्थिते शिशौ ॥ कृपां हित्वाऽऽददे सूरि–स्तस्याप्याभरणव्रजम् ॥ ४७ ॥

ततोऽप्यग्रे व्रजंस्तेज–स्कायिकाख्यं तृतीयकम् ॥ वीक्ष्यार्भकमभूत्सूरि–स्तद्भूषाग्रहणोद्यतः ॥ ४८ ॥ ततः सोऽपि शिशुः प्राग्व–त्प्रादुष्कृत्य निजाभिधाम् ॥ इत्थं कथां कथयितुं, पटुवाक्यैः प्रचक्रमे ॥ ४९ ॥ "क्वाप्याश्रमे तापसोऽभू–त्सर्वदा वह्निपूजकः ॥ तस्योटजेऽनले नैवा–ऽन्यदा दग्धे स इत्यवक् ॥ ५० ॥ यमहं मधुसर्पिर्भ्यां, तर्पयामि दिवानिशम् ॥ दग्धस्तेनैवोटजो मे, जातं तच्छरणाद्भयम् ! ॥ ५१ ॥ यद्वारण्यं गतः कश्चि–द्वार्हिं व्याघ्रभिया निशि ॥ अज्वालयत् प्रमत्तश्च, दग्धस्तेनाऽब्रवीदिति ॥ ५२ ॥ मया हि व्याघ्रभीतेन, पावकः शरणीकृतः ॥ दग्धं तेन च

गात्रं मे, जातं शरणतो भयम्! ॥ ५३ ॥” इत्युक्त्वाख्यानकं तस्यो–पनयं च प्रकाश्य सः ॥ तस्थौ शिशुस्ततस्तस्य, भूषणान्याददे गुरुः ॥ ५४ ॥

ततोऽप्यग्रेऽर्भकं वायु–कायाख्यं वीक्ष्य पूर्ववत् ॥ लातुं तस्याप्यलङ्कारान्, सूरिरुद्यमवानऽभूत् ॥ ५५ ॥ सोऽपि शावो निजं नाम, प्राग्वत्तस्मै प्रकाशयन् ॥ आख्यानं वक्तुमारेभे, वाग्मित्वं नाटयन्निजम् ॥ ५६ ॥ “एकः कोऽपि युवा भूरि–बलोऽभूत्पीनभूघनः ॥ वातरोगगृहीतं तं, प्रेक्ष्य कोऽपीति पृष्टवान् ॥ ५७ ॥ लङ्घनप्लवनोद्योगी, प्राग्भूत्वाप्यधुना भवान् ॥ याति यष्टिमवष्टभ्य, कस्य व्याधेरुपद्रवात्? ॥ ५८ ॥ सोऽवादीद्यो मरुज्ज्येष्ठा–ऽऽपाढयोः सौख्यदो भवेत् ॥ स एव बाधतेऽङ्गं मे, जातं हि शरणाद्भयम्! ॥५९॥” आख्यानमित्युदित्वा त–द्भावयित्वा च पूर्ववत् ॥ शिशोः स्थितस्य तस्यापि, भूषणान्यग्रहीद्गुरुः ॥ ६० ॥

भूयोपि पुरतो बालं, प्राग्वदाभरणैर्भृतम् ॥ स वनस्पतिकायाख्यं, पञ्चमं सूरिरैक्षत ॥ ६१ ॥ तस्यापि भूषणगणं, ग्रहीतुं सोद्यमे गुरौ ॥ सोऽपीत्याख्यानमाचख्यौ, स्वाभिख्याख्यानपूर्वकम् ॥ ६२ ॥ “द्रुमे पुष्पफलाकीर्णे, क्वापि केऽप्यवसन् खगाः ॥ वृक्षोऽयं नः शरण–मिति विश्रब्धचेतसः ॥ ६३ ॥ तेषां च वसतां तत्र, निराबाधमथान्यदा ॥ अपत्यानि बहून्यन्त–र्नीडं क्रीडन्ति जज्ञिरे ॥ ६४ ॥ इतश्च तस्य वृक्षस्य, पार्श्वोत्काप्युद्गता लता ॥ तं तरुं परिवेष्ट्योच्चै–रारुरोह द्रुमोपरि ॥ ६५ ॥ तया च लतयाऽन्येद्यु–र्विलग्य भुजगो महान् ॥ आरुह्य तं द्रुमं तानि, खगापत्यान्यभक्षयत् ॥ ६६ ॥ ततस्ते विहगाः स्वीया–पत्यविध्वंसदुःखिताः ॥ कुर्वन्तस्तुमुलं प्रोचु–रित्यमाहुर्मुहुर्मिथः ॥ ६७ ॥ अद्य यावत्सुखं वृक्षे, स्थितमत्रानुपद्रवे ॥ अस्मादेव लतायुक्ता–दद्याभूच्छरणाद्भयम् ॥ ६८ ॥” इत्युदीर्य कथां तस्या, भावं प्राग्वत् प्रकाश्य च ॥ तस्थुपस्तस्य शावस्या–ऽप्याददे भूषणानि सः ॥ ६९ ॥

ततोऽग्रे प्रस्थितः षष्ठं, त्रसकायाख्यमर्भकम् ॥ वीक्ष्य तस्याप्यलङ्कारान्, सोऽभूदाच्छेत्तुमुत्सुकः ॥७०॥ निजामाख्यां समाख्याय, सोऽप्याऽऽख्यानचतुष्टयम् ॥ अवादीद्वीन्द्रियादीनां, चतुर्णां तत्र सम्भवात् ॥ ७१ ॥ “तथा हि नगरे क्वापि, परीते परितोऽरिभिः ॥ भीता बहिस्था मातङ्गाः, पुरान्तः प्राविशन् द्रुतम् ॥ ७२ ॥ तांश्च मध्यस्थितैर्लोकै– रन्नादिक्षयभीरुभिः ॥ निष्काश्यमानान्नगरा–द्विद्विपोऽपीडयन् भृशम् ॥ ७३ ॥ पुरं नः शरणं भावी–त्याशया विशतोऽपि तान् ॥ निरीक्ष्य दुर्दशां प्राप्तां–स्तदा कोऽपीत्यऽभापत ॥ ७४ ॥ भीताः पौराः कर्षयन्ति, युष्मान्निघ्नन्ति च द्विपः ॥ तत्क्वापि यात मातङ्गाः!, जातं शरणतो भयम् ॥ ७५ ॥” प्राग्वत् सोपनये तेन, प्रोक्तेऽप्येवं कथानके ॥ असुञ्चति गुरौ बालो, द्वितीयामब्रवीत्कथाम् ॥ ७६ ॥ “नगरे क्वाप्यभूद्भूपः, स च दुष्टो निजैर्नरैः ॥ स्वीय एव पुरे चौर्यं, सर्वदाऽचीकरद्भृशम् ॥ ७७ ॥ राज्ञस्तस्य पुरोधास्तु, सर्वं जनमभण्डयत् ॥ खिन्नास्ततोऽखिला लोकाः, परस्परमदोऽवदन् ॥ ७८ ॥ यत्र राजा स्वयं चौरो, भण्डकश्च पुरोहितः ॥ यात पौराः! पुरात्तस्मा–ज्जातं हि शरणाद्भयम् ॥ ७९ ॥” कथां सोपनयां प्राग्व–दिमामूचानमप्यमुम् ॥ नाऽनूचानोऽमुचद्ग्रस्तं, जनं दुष्ट इव ग्रहः! ॥ ८० ॥ ततस्तृतीयमाख्यानं, वक्तुं प्राक्रंस्त सोऽर्भकः ॥ “तथा हि क्वाप्यभूद्ग्रामे, द्विजन्मा कोऽपि कामुकः ॥ ८१ ॥ तस्य चासीत्सुता मध्य– वयोभूपितभूघना ॥ उदग्ररूपलावण्या, जगन्नेत्रसुधाञ्जनम् ॥ ८२ ॥ अन्यदा तां सुतां वीक्ष्य, रिरंसुः स द्विजोऽभवत् ॥ न हि प्रबलभोगेच्छः, स्थानास्थाने विचारयेत् ॥ ८३ ॥ तां च कामयमानोऽपि, न सिषेवे स लज्जया ॥ तत्कामस्यानिवृत्तेश्च, जज्ञे क्षीणतनुर्भृशम् ॥ ८४ ॥ तं चातिदुर्बलं प्रेक्ष्य, सनिर्बन्धं तदङ्गना ॥ अप्राक्षीत्क्षामताहेतुं, सोऽप्याचख्यौ यथातथम् ॥ ८५ ॥ ततः सा व्यमृशद्दक्षा, यद्येनां नाप्नुयादयम् ॥ तदावश्यं विपद्येत, द्राग् दशां दशमीं गतः ॥ ८६ ॥ विधायाकार्यमप्येत–त्तदेनं जीवयाम्यहम् ॥ निजो भर्त्ता हि पत्नीभि–र्जीवनीयो यथातथा ॥ ८७ ॥ सा विचिन्त्येति तं प्रोचे, मा कार्षीरधृतिं प्रिय! ॥ अहं केनाऽप्युपायेन, करिष्यामि तवेहितम् ॥ ८८ ॥ तमित्याश्वास्य सा पुत्री–मिति प्रोवाच दम्भिनी ॥ पूर्वं हि नः सुतां यक्षो, भुङ्क्ते पश्चाद्विवाह्यते ॥ ८९ ॥ कृष्णभूतेष्टानिशायां, तत्त्वं यक्षालयं व्रजेः ॥ त्वां भोक्तुमुद्यतं तत्रा–ऽऽगतं यक्षं च मानयेः ॥ ९० ॥ हे पुत्रि! तत्रोद्योतं च, मा कार्षीर्यक्षमीक्षितुम् ॥ उद्योते हि कृते यक्षः, सरोपमुपयास्यति ॥ ९१ ॥ तच्छ्रुत्वा मातृविस्रम्भा, स्वीचक्रे साऽपि तद्वचः ॥ विस्रब्धो हि जनोऽकार्य–मपि सद्यः प्रपद्यते! ॥ ९२ ॥ रात्रौ च मातृप्रोक्तायां, सा यक्षेक्षणकौतुकात् ॥ शरावस्थगितं दीपं, लात्वा यक्षालयं ययौ ॥ ९३ ॥ तन्मात्रा प्रहितो भट्टो–ऽप्याऽऽगात्तद्यक्षमन्दिरम् ॥ तां चोपभुज्य निःशंकं, रतश्रान्तोऽस्वपीत्सुखम् ॥ ९४ ॥ शरावसम्पुटाद्दीप– माविष्कृत्याऽथ कौतुकात् ॥

पश्यन्ती तत्सुता तत्र, तातं दृष्ट्वेत्यचिन्तयत् ॥ ९५ ॥ अहो मया समं माया, मात्राऽपि महती कृता ॥ भर्त्ता तदयमेवास्तु, मम किं लज्जयाऽधुना ? ॥ ९६ ॥ किञ्च स्वतातमप्येन–मपशंकं भजाम्यथ ॥ नर्त्तनोद्युक्तनर्त्तक्या, वदनावरणेन किम् ? ॥ ९७ ॥ सा विमृश्येति पित्राऽपि, समं रेमे यथारुचि ॥ रतश्रान्तौ च तौ सुप्तौ, प्राबुध्येतां प्रगेऽपि न ॥ ९८ ॥ माता तस्यास्ततः कान्त–वियोगोदग्रदुःखतः ॥ अलब्धनिद्रा यामिन्यां, प्रातस्तावित्यभाषत ॥ ९९ ॥ उद्गतेऽपि रवौ विश्वं, विश्वं स्पृशति चाऽऽतपे ॥ प्रबुद्धेऽप्यऽखिले लोके, हले ! जागर्त्ति नो सुखी ॥१००॥ तत्सवित्रीवचः पूर्वं–प्रबुद्धा सा तदङ्गजा ॥ श्रुत्वा तदीयभावं चा–ऽवगम्येत्युत्तरं ददौ ॥ १०१ ॥ मातस्त्वयैव प्रोक्तं मे, यद्यक्षं बहु मानयेः ॥ यक्षेण चाहृतस्तात–स्तदन्यं तातमेपय ! ॥ १०२ ॥ इमामाकर्ण्य तद्वाचं, ब्राह्मणीत्यब्रवीत्पुनः ॥ नव मासान् स्वीयकुक्षौ, कष्टेनाऽधारि या मया ॥ १०३ ॥ विण्मूत्रे च चिरं यस्या, मर्दिने साऽपि नन्दना ॥ मत्कान्तमहरत्तन्मे, जातं शरणतो भयम् ॥ १०४ ॥'' पूर्ववच्चावनापूर्व–मित्युक्तेपि कथानके ॥ तेनाऽमुक्तः शिशुस्तुर्यमाख्यानमित्युक्तवान् ॥ १०५ ॥ "तथा हि क्वाप्यभूद्ग्रामे, विप्रः कोऽपि महाधनः ॥ स च धर्मधिया मूढः, सरोवरमचीखनत् ॥ १०६ ॥ तस्य पाल्यां देवकुल–मारामं च विधाप्य सः ॥ प्रवर्त्य छागयज्ञं च, मुहुस्तत्र चकार सः ॥ १०७ ॥ अयं हि धर्मत्राणं मे, परलोके भविष्यति ॥ ध्यायन्निति स यज्ञेषु, छगलानवधीद्बहून् ॥ १०८ ॥ भूदेवः सोऽन्यदा मृत्वा, छागेष्वेवोदपद्यत ॥ सोऽपि छागः क्रमाद्वृद्धिं, प्राप्तोऽभूत्पीनभूघनः ॥ १०९ ॥ यज्ञे हन्तुं नीयमानः, स्वपुत्रैरेव सोऽन्यदा ॥ स्वोपज्ञं तत्तटाकादि, दृष्ट्वा स्वां जातिमस्मरत् ॥ ११० ॥ मयैव कारितमिदं, ममैवाभूद्विपत्तये ॥ निन्दन्नेवं स्वकृत्यं स, 'बुबु' शब्दं व्यधान्मुहुः ॥ १११ ॥ तथाभूतं च तं वीक्ष्य, ज्ञानी कोऽपि महामुनिः ॥ तत्पूर्वभववृत्तान्तं, विज्ञायैवमवोचत ॥ ११२ ॥ खानितं हि त्वयैवेदं, सरो वृक्षाश्च रोपिताः ॥ प्रवर्तिता मखाश्चाऽथ, किं 'बुबू' कुरुषे पशो ! ॥ ११३ ॥ इति साधुवचः श्रुत्वा, स छागो मौनमाश्रयत् ॥ स्वकर्मण्युदिते किं हि, पूत्कारैरिति चिन्तयन् ॥ ११४ ॥ तूष्णीकः साधुवाचाऽय–मजोऽभूदित्यवेत्य ते ॥ अथाऽपृच्छन् द्विजाः साधु–मित्याश्चर्यभराकुलाः ॥ ११५ ॥ किमेष मेषो भगव–न्नाकर्ण्य भवतां वचः ॥ तूष्णीकत्वं दधौ नाग, इव मन्त्रवशीकृतः ? ॥ ११६ ॥ मुनिर्जगौ भवत्तातो, मृत्वाऽसौ छगलोऽभवत् ॥ दृष्ट्वा चैतत्तटाकादि, जातिस्मरणमासदत् ॥ ११७ ॥ ततो दुःखाद्बुबुध्वान–मुच्चैः कुर्वन्मयोदितम् ॥ स्वकर्मणां दोषमसुं, ज्ञात्वा मौनं दधौ द्रुतम् ॥ ११८ ॥ ततस्तदङ्गजाः प्रोचुः, कः प्रत्यय इह प्रभो ! ॥ विना प्रत्ययमुक्तं हि, परोक्षं श्रद्दधीत कः ? ॥ ११९ ॥ साधुरूचे समर्थं वः, प्राग्भवे निहितं स्वयम् ॥ निधिं चेद्दर्शयत्येष, तदा ह्येतद्यथातथम् ॥ १२० ॥ तदाकर्ण्य निधिस्थानं, दर्शयेत्युदितः सुतैः ॥ छागो गत्वा निधिस्थाने, पादाग्रेणाऽखनद्भुवम् ॥ १२१ ॥ ततस्तत्तनयैर्जात–प्रत्ययैर्येतिसन्निधौ ॥ स छागो मुमुचे जैन–धर्मश्च प्रत्यपद्यत ॥ १२२ ॥ धर्मं श्रुत्वा मुनेस्तस्मा–न्मेषोऽपि प्रतिपद्य सः ॥ विहितानशनः सद्यो, देवभूयमविन्दत ॥ १२३ ॥ प्रेत्य मे शरणं भावी–त्याशया स द्विजो यथा ॥ तटाकादि व्यधात्तच्च, तस्याशरणतामगात् ॥ १२४ ॥ एवं मयाऽपि भीतेन, भवन्तः शरणीकृताः ॥ चेन्मुष्णन्ति तदा मेऽपि, त्राणमत्राणतां गतम् ॥ १२५ ॥" इत्थं चतुर्भिराख्यानै–र्गुरोस्तेनोदितैरपि ॥ न दुर्भावो न्यवर्त्तिष्टा–ऽसाध्यो रोग इवौषधैः ॥१२६॥ ततस्तस्याऽप्यलङ्कारान्, सूरिर्जग्राह पूर्ववत् ॥ लुब्धो जनो हि नो द्रव्यै–स्तृप्यत्यब्धिरिवाम्बुभिः ॥ १२७ ॥ एवं षण्णां कुमाराणा–मत्तैराभरणव्रजैः ॥ प्रतिग्रहं दुर्विकल्पै–रात्मानं च बभार सः ॥ १२८ ॥ ततो द्रुतं द्रुतं सूरिः, पुरो गन्तुं प्रचक्रमे ॥ सम्बन्ध्येषां शिशूनां मां, माद्राक्षीदिति चिन्तयन् ॥ १२९ ॥ देवोऽप्येवं परीक्षाभि–स्तं प्रणष्टव्रतागयम् ॥ ज्ञात्वैकां व्यकरोत्साध्वीं, तत्सम्यक्त्वं परीक्षितुम् ॥ १३० ॥ तां च गुर्वीमलङ्कार–निकरैः परिमण्डिताम् ॥ वीक्ष्य सूरिः ससंरम्भा–रम्भमेवमुवाच सः ॥ १३१ ॥ अञ्जिताक्षी भूरिभूषा–भूषिता तिलकाङ्किता ॥ शासनोड्डाहकृदुष्ट–साध्वि ! त्वं कुत आगता ? ॥ १३२ ॥ सूरेस्तस्येति वचनं, श्रुत्वा रोषभराकुला ॥ सा व्रतिन्यपि निःशङ्कं, प्रत्युवाचेति तं द्रुतम् ॥ १३३ ॥ रे सूरे ! सर्षपाभानि, परच्छिद्राणि पश्यसि ? ॥ आत्मनो बिल्वमात्राणि, पश्यन्नपि न पश्यसि ? ॥ १३४ ॥ किञ्चैवं शिक्षयन्नन्यं, निर्दोषः खलु शोभते ॥ स्वयं सदोषस्तु परं, न शिक्षयितुमर्हति ! ॥ १३५ ॥ यदि च त्वं मन्यसे स्वं, श्रमणं ब्रह्मचारिणम् ॥ समलेष्टुसुवर्णं स–त्क्रियमुग्रविहारिणम् ॥१३६॥ तदभ्येहि ममाभ्यर्णं–मुत्कर्णः किं प्रणश्यसि ? ॥ विलोकयामि ज्येष्ठार्य !, यथाहं ते प्रतिग्रहम् ॥ १३७ ॥ तयेत्युद्गाहितः साध्व्या, तूष्णीकः स व्रजन् पुरः ॥ ददर्श सैन्यमागच्छत्, कृतं तेनैव नाकिना ॥१३८॥ भयोद्भ्रान्तस्ततः सूरिः,

सैन्याध्वानं विहाय सः ॥ नश्यन्नपि नृपस्यैव, पुरोगाद्दैवयोगतः ॥ १३९ ॥ नृपोऽपि प्रेक्ष्य तं हस्ति–स्कन्धादु-त्तीर्य चाऽनमत् ॥ आह स्म चाऽहो! भाग्यं मे, यूयं यदिह वीक्षिताः! ॥ १४० ॥ तत्कृत्वाऽनुग्रहं स्वामि–न्नमु-यीदं मोदकादिकम् ॥ एषणीयं प्रासुकं च, गृह्णतां गृह्णतां द्रुतम् ॥ १४१ ॥ नाऽद्य भोक्ष्येऽहमित्युच्चै–र्वदन् सूरि-स्तु नाऽऽददे ॥ पात्रस्थो भूषणौघो मा, दृश्यतामिति चिन्तयन्! ॥ १४२ ॥ तं मुञ्च मुञ्चेत्यूचानं, भिया भूपस्तु नाऽमुचत् ॥ ह्रिया न नेति जल्पन्तीं, नवोढां रमणो यथा! ॥ १४३ ॥ भूभुजा मुहुराकृष्ट–मपि सूरिः पतद्ग्रहम् ॥ न मुमोच नवोढा स्त्री, भर्त्राकृष्टमिवांशुकम्! ॥ १४४ ॥ ततः प्रसह्य तत्पाणे–रमाच्छिद्य पतद्ग्रहम् ॥ तत्र यावन्नृपः क्षेप्तु–मारेभे मोदकादिकम् ॥ १४५ ॥ तावत्स तानलङ्कारा–न्निरीक्ष्य कुपितो भृशम्! ॥ तमाचार्यमुवाचैवं, भ्रुकुटी-विकटाननः ॥ १४६ ॥ अरे पाप! त्वया नूनं, पुत्रा व्यापादिता मम ॥ नो चेत्कथममी तेषा–मलङ्कारास्त्वदा-न्तिके ॥ १४७ ॥ रे दुष्ट! धिष्ट! पापिष्ठ!, साधुवेषविडम्बक! ॥ यास्यसि त्वं कथं जीवन्, व्यापाद्य मम नन्दनान्? ॥ १४८ ॥ श्रुत्वेति भूभृतो भाषां, साध्वसाकुलमानसः ॥ अधोमुखः सोऽनूचानो–ऽनूचानो ध्यातवानिति ॥ १४९ ॥ अहो! विमूढचित्तेना–ऽकार्यमेतत्कृतं मया ॥ यदेतदीयपुत्राणा– माददे भूषणव्रजः! ॥ १५० ॥ मत्पातकं च सकलं, ज्ञातं भूस्वामिनाऽमुना ॥ तदसौ मां कुमारेण, मारयिष्यति केनचित्! ॥ १५१ ॥ पाप्मनो निखिलस्यापि, फलमे-तदुपस्थितम् ॥ इदानीमेव तत्कोऽत्र, शरणं मे भविष्यति? ॥ १५२ ॥ अथवा पूर्वमेवेद–मविमृश्य व्यधामहम् ॥ तत्संयमसुखं त्यक्तं, यन्मया भोगकाम्यया ॥ १५३ ॥ तत्रैवं चिन्तयत्येव, मायां संहृत्य तां सुरः ॥ आविर्बभूव स्वतनु–द्युतिद्योतितदिङ्मुखः ॥ १५४ ॥ तमित्यूचे च भगवन्!, सोऽहं शिष्योऽस्मि वः प्रियः ॥ स्वयं निर्याम्य यः पूज्यै– रागन्तुं प्रार्थितोऽभवत् ॥ १५५ ॥ अहं हि व्रतमाहात्म्या–त्सुरोऽभूवं महर्द्धिकः ॥ स्मृत्वा वाक्यं च पूज्यानां, स्ववाग्बद्ध इहाऽऽगमम् ॥ १५६ ॥ मदनागमने कश्चि–त्कालक्षेपो बभूव यः ॥ स तु ज्ञेयो नवोत्पन्न–देवकार्याकुलत्वतः ॥ १५७ ॥ संयमभ्रष्टचित्तांश्च, युष्मान् बोधयितुं मया ॥ तन्नाट्यं विदधे पूज्यै–र्यद्दृष्टमधुनाऽध्वनि! ॥ १५८ ॥ मयैव युष्मदाकूत–परीक्षार्थं परिष्कृताः ॥ षट्कायाह्वा दारकाः षट्, ससाध्वीका विकुर्विताः ॥ १५९ ॥ ततोऽवबुध्य वः प्राज्यं, मोहोन्मादमुदित्वरम् ॥ मयोदपादि सैन्यादि–भयं तद्ध्वंसनौषधम् ॥ १६० ॥ शङ्कातङ्कममुं तस्मा–त्यक्त्वा मोहसमन्वितम् ॥ उन्मार्गगं मनोऽश्वास–न्मार्गं कुरुताऽऽत्मनः ॥ १६१ ॥ किञ्च–"संकंतदिव्वपेमा, विसयपसत्तासमत्तकत्तव्वा ॥ अणहीणमणुअकज्जा, नरभवमसुइं न इंति सुरा ॥ १६२ ॥ चत्तारि पंच जोअण–सयाइं गंधो उ मणुअलोगस्स ॥ उड्ढं वचइ जेणं, न हु देवा तेण आवंति ॥ १६३ ॥" इत्याद्यागमवाक्यानि, जान-द्भिरपि सूरिभिः ॥ मदनागमनेप्येत–त्कमीरव्धं किमीदृशम्? ॥ १६४ ॥ अन्यच्च दिव्यनाट्यादि–विलोकनकुतू-हलात् ॥ कालं यान्तं बहुमपि, नैव जानन्ति निर्जराः! ॥ १६५ ॥ युष्माभिरपि तद्दिव्य–नाटकाक्षिप्तमानसैः ॥ ऊर्द्ध्वस्थैरेव षण्मासी, निन्येऽश्रान्तैर्मुहूर्त्तवत्! ॥ १६६ ॥ तद्भदन्ताः! विमोहोऽयं, कर्तुं वो नैव युज्यते ॥ कल्पान्तेऽपि किमु क्षीरा–म्भोधिरुल्लङ्घतेऽवधिम्? ॥ १६७ ॥ भवादृशा अपि यदा, कुर्वन्त्येवमनीदृशम् ॥ दृढधर्मा जगति कः–स्तदा ह्यन्यो भविष्यति? ॥ १६८ ॥ तद्दुराचरितं सर्व–मालोच्येदं महाधियः! ॥ समाचरत चारित्रं, कर्मकक्षहुताशनम् ॥ १६९ ॥ गीर्वाणवाणीं श्रुत्वेति, प्रतिबुद्धो महाशयः ॥ स सूरिः स्वदुराचारं, भूयो भूयो निनिन्द तम् ॥ १७० ॥ वारं वारं च तं देव–माषाढोऽब्रवीदिति ॥ साधु साधु त्वया वत्स!, बोधितोऽहं महामते! ॥ १७१ ॥ अहं हि नरकाध्वानं, प्रपन्नोऽपि स्वकर्मभिः ॥ मोक्षमार्गे त्वयैवाऽथ, प्रापितो भाववन्धुना ॥ १७२ ॥ धर्माद्भ्रष्टस्य मे भूयो, धर्मदानविधायिनः ॥ तवाऽनृणोऽहं नैव स्यां, ब्रवीमि किमतः परम्? ॥ १७३ ॥ तं देवमभिनन्द्येति, स्वस्थानमगम-द्गुरुः ॥ आलोचितप्रतिक्रान्त–स्तपोऽत्युग्रं चकार च ॥ १७४ ॥ सुरोऽपि सूरिं नत्वा तं, प्रमोदभरमेदुरः ॥ क्षमयित्वा स्वापराधं, सुरलोकमगात्पुनः ॥ १७५ ॥ नाषाढसूरिरिति दर्शनगोचरं प्राक्, सेहे परीषहममुं न तथा विधेयम् ॥ सूरिः स एव सहते स्म यथा च पश्चा–त्सर्वैस्तथा व्रतिवरैः सततं स सह्यः ॥ १७६ ॥ इति सम्यक्त्वपरीषहे श्रीआ-षाढाचार्यकथा ॥ २२ ॥ इत्युक्ता द्वाविंशतिः परीषहाः ॥

नन्वेते कस्मिन् कस्मिन्कर्मण्यन्तर्भवन्तीति चेदुच्यते–"दंसणमोहे दंसण–परीसहो पण्ण १ नाण २ पढमंमि ॥ चरिमेलाभपरीसह, सत्तेव चरित्तमोहंमि ॥ १ ॥" अत्र 'पढमंमित्ति' ज्ञानावरणे, 'चरिमेत्ति' अंतराये। अथ यदुक्तं सप्त चरित्रमोहे, इति तानाह–"अक्कोस १ अरइ २ इत्थी ३, निसीहिआ ४ अचेल ५ जायणा ६ चेव ॥ सक्कार

पुरक्कारे ७, एक्कारस वेअणिज्जंमि ॥ २ ॥" यदुक्तं एकादश वेदनीये इति तेऽमी—"पंचेव आणुपुवी ५, चरिआ ६ सेज्जा ७ तहेव जल्ले ८ अ ॥ वह ९ रोग १० तणप्फासा ११, सेसेसु नत्थि अवयारो ॥ ३ ॥" तथा उत्कर्षतः समकं विंशतिरेव परीषहा उदयन्ते, मिथो विरुद्धयोः शीतोष्णयोश्चर्यानैषेधिक्योश्चैकतरस्यैव भावात्। तथाऽनिवृत्तिबादराख्यं नवमगुणस्थानकं यावत्सर्वेऽपि परीषहाः सम्भवन्ति, उदयस्तु पूर्वोक्तहेतोर्विंशतेरेव। सूक्ष्मसम्परायादित्रये तु चतुर्दश, सप्तानां चारित्रमोहप्रतिबद्धानां दर्शनपरीषहस्य च तत्राभावात्, उदयस्त्वेतेषु द्वादशानाम्। सयोगिकेवलिनि एकादश, वेद्यप्रतिबद्धानामेव तत्र सम्भवात्, उदयस्त्विह नवानामिति ॥ साम्प्रतमध्ययनोपसंहारार्थमाह—

मूलम्—एए परीसहा सवे, कासवेणं पवेइआ। जे भिक्खू ण विहण्णेज्जा, पुट्ठो केणइ कण्हुइत्ति बेमि ॥४६॥

व्याख्या—एते अनन्तरोक्ताः परीषहाः सर्वे काश्यपेन श्रीमहावीरस्वामिना प्रवेदिताः प्ररूपिता यान् ज्ञात्वेति शेषः, भिक्षुर्न विहन्येत न पराजीयेत, स्पृष्टो बाधितः केनाऽपि द्वाविंशतेरेकतरेणाऽपि, 'कण्हुइत्ति' कस्मिंश्चिद्देशे काले वा इति सूत्रार्थः, 'इतिः' परिसमाप्तौ, ब्रवीमीति प्राग्वत् ॥ ४६ ॥

इति श्रीतपागच्छीयोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्यभुजिष्योपाध्याय-श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ द्वितीयाध्ययनं सम्पूर्णम् ॥ २ ॥

## "अथ तृतीयाध्ययनम्"

॥ अर्हन् ॥ उक्तं परीषहाध्ययनं सम्प्रति चतुरङ्गीयमारभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तराध्ययने परीषहसहनमुक्तं, तच्च किमालम्बनमङ्गीकृत्य कर्तव्यमिति प्रश्नसम्भवे मानुषत्वादिचतुरङ्गदुर्लभत्वमालम्बनमाश्रित्येत्युत्तरं, तच्चालम्बनमनेनोच्यते, इत्यनेन सम्बन्धेनायातस्यास्येदमादिसूत्रम्—

मूलम्—चत्तारि परमंगाणि, दुल्लहाणिह जंतुणो। माणुसत्तं सुई सद्धा, संजमम्मि अ वीरिअं ॥ १ ॥

व्याख्या—चत्वारि चतुःसंख्यानि परमाङ्गानि प्रधानकारणानि, धर्मस्येति शेषः, दुर्लभानि दुःप्रापाणि, इह संसारे, जन्तोर्देहिनस्तान्येवाह—मानुषत्वं नरजन्म दुर्लभम्। यतः—"एगिंदिआइजाइसु, परिभममाणाण कम्मवसगाण ॥ जीवाणं संसारे, सुदुल्लहं माणुसं जम्मं ॥ १ ॥" श्रुति श्रवणं, धर्मस्येति गम्यते, साऽपि दुरवापा। यतः—"आलस्स मोहवण्णा, थंभा कोहा पमाय किविणत्ता ॥ भय सोगा अण्णाणा, वक्खेव कुऊहला रमणा ॥ १ ॥ एएहिं कारणेहिं, लद्धूण सुदुल्लहंपि माणुस्सं ॥ न लहइ सुइं हिअकरिं, संसारुत्तारणिं जीवो ॥ २ ॥ इति" तथा श्रद्धा श्रद्धानं, धर्मस्यैव, साऽपि दुर्लभैव। यतः—"कुबोहमिच्छाभिणिवेसजोगओ, कुसत्थपासंडविमोहिआ जणा ॥ न सद्दहंते जिणणाहदेसिअं, चयंति बोहिं पुण केइ पाविअं ॥१॥ इति"। संयमे विरतौ, चः समुच्चये, वीर्यं सामर्थ्यं, तदपि दुर्लभम्। यतः—"सद्दहमाणोवि जओ, सम्मं जिणणाहदेसिअं धम्मं ॥ न तरइ समायरिउं, विसयाइपमायविवसमणो ॥ १ ॥ इति सूत्रार्थः ॥ १ ॥ मानुषत्वादीनां च दुर्लभत्वं कथयता चोल्लकादयो दश दृष्टान्ताः सूचिताः, तांश्चैवमाविश्चकार निर्युक्तिकारः। "चोल्लग १ पासग २ धण्णे ३, जूए ४ रयणे अ ५ सुमिण ६ चक्के अ ७ ॥ चम्म ८ जुगे ९ परमाणू १०, दस दिट्ठंता मणुअलंभे ॥१॥" तत्र चोल्लको भोजनं, तदुपलक्षितमुदाहरणं चोल्लकस्तच्चैवं, तथा हि—

अत्रैव भरतक्षेत्रे, पुरे काम्पील्यनामके ॥ ब्रह्माभिधोऽभवद्भूप—श्चुलन्याह्वा च तत्प्रिया ॥ १ ॥ तयोः पुत्रो ब्रह्मदत्तो, ब्रह्मभूपे मृते सति ॥ चुलनीरतदीर्घाख्य—भूपभीतेः पलायितः ! ॥ २ ॥ सुहृदा वरधनुना, समं पृथ्व्यां परिभ्रमन् ॥ सुन्दराकृतिरित्यग्र—जन्मनाऽसेवि केनचित् ! ॥ ३ ॥ [ युग्मम् ] तं भूदेवं भूयसीषु, सहायं दुर्दशास्वपि ॥ दिवानिशं सेवमानं, ब्रह्मदत्तोऽब्रवीदिति ॥ ४ ॥ ब्रह्मदत्ताभिधं लब्ध—राज्यमाकर्ण्य मां सखे ! ॥ मत्समीपे त्वयाऽऽगम्य— मनृणः स्यामहं यथा ! ॥ ५ ॥ ओमित्युक्त्वा द्विजः सोऽथ, स्वस्थानमगमन्मुदा ॥ क्रमेण ब्रह्मदत्तोऽपि, चक्रवर्तित्वमासदत् ॥ ६ ॥ तद्विज्ञाय स विप्रोऽपि, काम्पील्यपुरमागमत् ॥ अभिषेकस्तदा चाऽभू—च्चक्रिणो द्वादशाब्दिकः ॥ ७ ॥ ततो रविमिवोलूको, ददर्शाऽपि नृपं न सः ॥ नाप पाप इव स्वर्गे, प्रवेशमपि तद्गृहे ! ॥ ८ ॥ विना हि गुणवैगुण्ये, दुष्प्रापो भूपसङ्गमः ॥ सोऽथ ध्यात्वेति जीर्णानां, चक्रे ध्वजमुपानहाम् ! ॥ ९ ॥ अथ द्वादशभिर्वर्षैः, क्रीडायै निर्गते नृपे ॥ द्विजस्तं ध्वजमुत्पाट्या—ऽत्रजद्ध्वजधरैः समम् ॥ १० ॥ भूपोऽथ तं ध्वजं वीक्ष्य, सर्वध्वजवि-

लक्षणम् ॥ ईदृशोऽयं ध्वजः कस्ये–त्यपृच्छत्पारिपार्श्वकान् ! ॥ ११ ॥ न विद्म इति तैरुक्ते, पार्थिवस्तमजूहवत् ॥ अभ्यर्णमागतं तं च, प्रेक्ष्योपालक्षयत्स्वयम् ॥ १२ ॥ दुर्दशासु सहायोऽसौ, ममासीदिति चिन्तयन् ॥ गजादुत्तीर्य तं चक्री, सस्नेहं परिपस्वजे ! ॥ १३ ॥ तस्मै कौशलिकीं वार्ता–माप्रच्छयेति नृपोऽवदत् ॥ याचस्व सन्मते ! सद्यो, यत्तुभ्यं रोचतेऽधुना ॥ १४ ॥ विप्रोऽजल्पत् प्रियां पृष्ट्वा, याचिष्ये त्वामहं विभो ! ॥ विहस्याऽथ नृपः प्रोचे, तां पृष्ट्वा द्रुतमापतेः ॥ १५ ॥ द्विजस्ततो निजग्रामं, गत्वाऽप्राक्षीदिति प्रियाम् ॥ चक्री तुष्टो ददातीष्टं, तत्किमभ्यर्थये प्रिये ! ॥ १६ ॥ तन्निशम्येति सा दध्यौ, वृद्धिं प्राप्तो ह्ययं द्विजः ॥ मानयिष्यति मां नैव, सम्पदुत्कर्षगर्वितः ! ॥१७॥ यदुक्तं–"प्रवर्द्धमानः पुरुष–स्त्रयाणामुपघातकः ॥ पूर्वार्जितानां मित्राणां, दाराणां वेश्मनां तथा ॥ १८ ॥" तदस्मै तादृशं किञ्चित्, प्रार्थ्यमर्थं ब्रवीम्यहम् ॥ जीवामः ससुखं येन, न चोत्कर्षः प्रजायते ॥ १९ ॥ ध्यात्वेति साऽभ्यधाद्विप्रं, स्वामिन् ! याचस्व भोजनम् ॥ दीनारदक्षिणायुक्तं, भरते सर्ववेश्मसु ! ॥ २० ॥ नगरग्रामदेशाद्यै–र्बहुभिः किं परिग्रहैः ॥ कश्चाकुलो भवेन्नित्यं, तेषां सत्यापनादिना ? ॥ २१ ॥ तत्प्रपद्य ततः सद्यः, सोऽपि गत्वा नृपान्तिके ॥ अयाचत स्वजायोक्त–मित्यूचे च प्रमोदभाक् ॥ २२ ॥ अहं हि प्राक् भवद्गेहे, प्रभो ! भोक्ष्ये ततः परम् ॥ त्वदन्तःपुरभूमीशा–ऽमात्यलोकगृहेष्वऽपि ॥ २३ ॥ एवमस्मिन्पुरे भुक्त्वा, परेष्वपि पुरादिषु ॥ भोक्ष्येऽहं भरतक्षेत्रे, सकलेषु यथाक्रमम् ॥ २४ ॥ इत्थं सर्वत्र भुक्त्वा च, भोक्ष्ये त्वत्सदने पुनः ॥ इत्यूचानं च तं विप्र–मित्यूचे मेदिनीपतिः ॥ २५ ॥ तुष्टान्मत्तः किमेताव–द्याचसे ? त्वं महामते ! ॥ प्रत्यक्षात्कल्पवृक्षात्किं, करीरं कोऽपि याचते ? ॥२६॥ त्वमेतद्याचमानो हि, याच्ञाभ्यासान्न लज्जसे ! ॥ विडम्बनाप्रायमिदं–न त्वहं दातुमुत्सहे ! ॥ २७॥ तत्त्वं वृणुष्व देशाद्यं, द्रविणं वा यथेप्सितम् ॥ संस्थितश्च ममाभ्यर्णे, भुंक्ष्व वैषयिकं सुखम् ॥ २८ ॥ विप्रः प्रोचे न देशाद्यैः, कार्यं मम महीपते ! ॥ किन्तु पूर्वोक्तमेव त्वं, देहि चेद्दातुमीहसे ! ॥ २९ ॥ तदाकर्ण्य नृपोऽध्यासी–दहो ! सत्यपि दातरि ॥ नाऽऽदातुमीष्टे निर्भाग्य–स्तद्दाम्येतदेव हि ॥ ३० ॥ ध्यात्वेति चक्री तद्वाचं, प्रतिपद्य स्वसद्मनि ॥ तस्मै भोजनदीनारौ, ददौ दिव्ये च चीवरे ॥ ३१ ॥ ततः प्रतिगृहं विप्रो, भुञ्जानोऽपि नृपाज्ञया ॥ पारं पुरस्य तस्याऽपि, न प्रापापारसद्मनः ! ॥ ३२ ॥ तर्हि क्व भरतक्षेत्र–वेश्मनां प्रान्तमाप्य सः ॥ चक्रवर्तिगृहे भोक्तुं, भूयो वारकमाप्नुयात् ! ॥ ३३ ॥ दिव्यानुभावाद्यदि वा स भूयो–ऽप्युर्वीपतेर्भोजनमश्नुवीत ॥ भ्रष्टो नरत्वान्न तु धर्महीनः, पुनर्नरत्वं लभते प्रमादी ! ॥ ३४ ॥ इति चोल्लकदृष्टान्तः प्रथमः ॥ १ ॥ अथ पाशकदृष्टान्तः—

तथा हि गोल्लविषये, ग्रामे च चणकाभिधे ॥ चणेश्वरीप्रियो जैन–विप्रोऽभूच्चणकाह्वयः ॥ १ ॥ अन्यदा तद्गृहे तस्थु–र्ज्ञानिनः केऽपि साधवः ॥ तदा च तस्य पुत्रोऽभू–द्दुद्गतैर्दशनैः समम् ॥ २ ॥ जातमात्रं च तं बालं, मुनिभ्योऽनमयद्द्विजः ॥ हे भदन्ताः ! सदन्तोऽसौ, जातोऽस्तीति निवेदयन् ॥ ३ ॥ ततस्ते मुनयः प्रोचु–र्बालोऽयं भविता नृपः ॥ तच्छ्रुत्वा चणको भूरि–विषण्णो ध्यातवानिदम् ॥ ४ ॥ मत्सुतोऽप्येष मायासी–द्राज्यारम्भैरधोगतिम् ! ॥ ध्यात्वेति घृष्ट्वा तद्दन्तान्, स साधुभ्यस्तदप्यवक् ॥ ५ ॥ मुनयोऽप्यवदन्नेव–मयं हि रदघर्षणात् ॥ भविता भूपतिर्बिम्बा–न्तरितो भरितो गुणैः ॥ ६ ॥ ततस्तस्याऽभिधां चक्रे, चाणक्य इति तत्पिता ॥ सोऽथ शुक्लद्वितीयेन्दु–रिव वृद्धिं दधौ क्रमात् ॥ ७ ॥ कलिन्दिकाः कण्ठपीठे, स चकार स्वनामवत् ॥ जन्मान्तरानुगामीव, श्राद्धत्वञ्चादितोऽश्रयत् ॥ ८ ॥ यौवने पर्यणैषीच्च, कुलीनां विप्रकन्यकाम् ॥ निर्धनोऽपि हि सन्तोषा–द्द्रव्यार्थं नोद्यमं व्यधात् ! ॥ ९ ॥ अन्यदा तत्प्रिया भ्रातु–र्विवाहेऽगाद्गृहे पितुः ॥ निर्धनत्वेन सामान्य–वेषा भूषणवर्जिता ! ॥ १० ॥ महेभ्यब्राह्मणोदूढा–स्तद्भगिन्योऽपरा अपि ॥ तत्राऽऽययुर्महामूल्य–वस्त्रभूषणभूषिताः ! ॥ ११ ॥ तासां परिजनः सर्व–श्चक्रे भूयांसमादरम् ॥ वाक्यैः पैञ्जुषपीयूषै–र्भूयः सम्भाषणादिकम् ! ॥ १२ ॥ चाणक्यस्याऽङ्गनां तां तु, न किञ्चित्कोऽप्यऽजल्पयत् ॥ आदरो हि भवेत्सर्वः, श्रीणां न तु वपुष्मताम् ॥ १३ ॥ तां च भूषणताम्बूल–गन्धमाल्यादिवर्जिताम् ॥ बन्धुवर्गो भगिन्यादि–रपि बाढमहीलयत् ॥ १४ ॥ भ्रातृजायादयोऽप्यऽस्याः, प्रतिपत्तिं न चक्रिरे ॥ पङ्क्तिभेदञ्च नियतं, भोजनादावपि व्यधुः ! ॥ १५ ॥ ततोऽतिलज्जितोद्विग्ना, दौःस्थ्यात्प्राप्ता पराभवम् ॥ कथञ्चिदपि वीवाह–मतिवाहयति स्म सा ॥ १६ ॥ विवाहोत्सवपूर्त्तौ तु, सा स्वीयैरेव चीवरैः ॥ आगात्पत्युर्गृहे शोक–स्रवदश्रुजलाविला ॥ १७ ॥ चाणक्येनाऽथ तद्दुःख– दुःखिना दुःखकारणम् ॥ पृष्टाऽपि सा तत्कुस्थान–व्रणवन्न ह्रियाऽवदत् ॥ १८ ॥ ततो भर्त्रा सनिर्बन्ध–मुक्ता मुक्तागणोपमम् ॥ मुञ्चन्त्यश्रुव्रजं स्माह, कथञ्चित्तं पराभवम् ॥१९॥

तं निशम्याऽथ चाणक्य–श्चेतसीति व्यचिन्तयत् ॥ नूनं जगति दारिद्र्यं, सोच्छ्वासं मरणं नृणाम्! ॥ २० ॥ परं पराभवस्थानं, विशां दारिद्र्यमेव हि ॥ येन मातुर्गृहेप्येवं, प्रापदेषा पराभवम्! ॥ २१ ॥ प्रकाशयन्ति धनिना–मसत्यामपि बन्धुताम् ॥ लज्जन्ते दुर्गतैर्लोका–स्तात्त्विकस्वजनैरपि! ॥ २२ ॥ कलावान् कुलवान् दाता, यशस्वी रूपवानपि ॥ विना श्रियं भवेन्मर्त्यो, निस्तेजाः क्षीणचन्द्रवत् ॥२३॥ दौःस्थ्यनाशाय तत्किञ्चि–द्दातारं प्रार्थये स्वयम् ॥ द्विजन्मनां हि याञ्चैव, निधानं परमं मतम् ॥ २४ ॥ मम दौःस्थ्यापनोदस्तु, भावी राज्ञैव केनचित् ॥ तापोपशान्तिः शैलस्य, न हि स्यान्मेघमन्तरा ॥ २५ ॥ ददाति नन्दभूपश्च, विप्राणां बहुलं धनम् ॥ विमृश्येति जगाम द्राक्, चाणक्यः पाटलीपुरम् ॥ २६ ॥ सोऽथ कार्तिकराकायां, पूर्वन्यस्तासनव्रजाम् ॥ गत्वाऽऽस्थानसभां नन्द–नृपासनमशिश्रियत् ॥ २७ ॥ अथ राजसभां नन्द–महीपतिरुपागमत् ॥ एकेन सिद्धपुत्रेण, निमित्तज्ञेन संयुतः ॥ २८ ॥ तत्रस्थं वीक्ष्य चाणक्यं, सिद्धपुत्रोऽब्रवीदिति ॥ विप्रोऽसौ नन्दवंशस्य, छायामाक्रम्य तिष्ठति ॥ २९ ॥ ततश्चाणक्यमुर्वीश–दास्युवाचेति सादरम् ॥ भगवन्निदमध्यास्स्व, द्वितीयं सिंहविष्टरम् ॥ ३० ॥ स्थास्यत्यस्मिन्नासने म– त्कमण्डलुरिति ब्रुवन् ॥ स तत्र कुण्डिकां न्यास्थ–न्नाऽत्याक्षीदाद्यमासनम् ॥ ३१ ॥ तृतीयमेवं दण्डेन, चतुर्थञ्चाक्षमालया ॥ पञ्चमं ब्रह्मसूत्रेण, सोऽरुन्धन्नर्मनाटयन् ॥ ३२ ॥ ततो दासी जगौ धार्ष्ट्यं–महो! अस्य द्विजन्मनः ॥ यदेवमुच्यमानोऽपि, न मुञ्चत्याद्यमासनम् ॥ ३३ ॥ तद्विप्रेणाऽपि धृष्टेन, किमनेनेति वादिनी ॥ सा निहत्याऽङ्घ्रिणा वेगा–च्चाणक्यमुदतिष्ठिपत् ॥ ३४ ॥ तया दास्येति चाणक्यो–ऽधिक्षिप्तः प्रज्वलन् क्रुधा ॥ समक्षं सर्वलोकाना–ममुं चक्रे प्रतिश्रवम् ॥३५॥ "कोशैश्च भृत्यैश्च निबद्धमूलं, पुत्रैश्च मित्रैश्च विवृद्धशाखम् ॥ उत्पाट्य नन्दं परिवर्तयामि, महाद्रुमं वायुरिवोग्रवेगः! ॥ ३६ ॥" प्रतिश्रुत्येति चाणक्यो, निरगान्नगराद्बहिः ॥ अनेन भिक्षुणा किं स्या–दिति राज्ञाप्युपेक्षितः! ॥ ३७ ॥ पित्रा प्रोक्तं स्मरन् बिम्बा– न्तरितं राज्यमात्मनः ॥ बिम्बभूतं नरं सोऽथ, प्राप्तुकामोऽभ्रमद्भुवि ॥ ३८ ॥ मयूरपोषकग्रामं, सोथागान्नन्दभूपतेः ॥ परिव्राजकवेषेण, भिक्षार्थं तत्र चाऽभ्रमत् ॥ ३९ ॥ तत्रासीद्ग्रामणीपुत्र्याः, शशभृत्पानदोहदः ॥ तं च पूरयितुं कोऽपि, नाऽशकन्मतिमन्तरा ॥ ४० ॥ तस्याऽपूर्त्तौ च सा बाला, लतेव तनुतां दधौ ॥ स्त्रीणां हि दोहदापूर्त्ति–र्व्याधिमरणं स्मृतम्! ॥ ४१ ॥ तदा च प्रेक्ष्य चाणक्यं, तस्याः पित्रादिबन्धवः ॥ इत्यपृच्छंश्चन्द्रपान– दोहदः पूर्यते कथम्? ॥ ४२ ॥ चाणक्योऽथ जगादैवं, तत्सुतं दत्त चेन्मम ॥ तदाहं दोहदं तस्या–स्त्वरितं पूरयाम्यमुम् ॥ ४३ ॥ अपूर्णदोहदा गर्भा–न्विता मा म्रियतामियम् ॥ तैर्विमृश्येति चाणक्य–वचनं प्रतिपेदिरे ॥ ४४ ॥ सच्छिद्रमथ चाणक्यो–ऽचीकरत्पटमण्डपम् ॥ तस्योर्ध्वञ्चाऽमुचच्छन्नं, नरं छिद्रपिधायकम् ॥ ४५ ॥ छिद्रस्य तस्य चाऽधस्ता–न्न्यधात्स्थालं पयोभृतम् ॥ निशीथे कार्त्तिकीचन्द्र–स्तत्र प्रतिमितिं दधौ ॥ ४६ ॥ प्रतिबिम्बं च तच्चान्द्र–मन्तर्वत्न्याः प्रदर्श्य सः ॥ पिबेत्यूचे ततस्तुष्टा, तत्पातुं सा प्रचक्रमे ॥ ४७ ॥ चन्द्रपानधिया स्थाल–पयः साऽपाद्यथायथा ॥ पिदधे मण्डपच्छिद्र–मुपरिस्थस्तथा तथा ॥ ४८ ॥ एवं दोहदमापूर्य. तस्याः पृथ्व्यां परिभ्रमन् ॥ चाणक्यो धातुवादाद्यैः, प्रारेभे द्रविणार्जनम् ॥ ४९ ॥ सम्पूर्णदोहदा साऽपि, समये सुषुवे सुतम् ॥ तं च पित्रादयश्चन्द्र–गुप्तनामानमूचिरे ॥ ५० ॥ ववृधे चन्द्रगुप्तोऽपि, स्वजनान् मोदयन् क्रमात् ॥ औदार्यधैर्यगाम्भीर्यसौन्दर्यादिगुणैः समम् ॥ ५१ ॥ स बालकैः सह क्रीडां, कुर्वन्नुर्वीशवत्सदा ॥ ददौ ग्रामादिकं तेषां, हयीकृत्यारुरोह तान् ॥ ५२ ॥ तं द्रष्टुकामश्चाणक्यो, भ्रमंस्तत्राऽन्यदा ययौ ॥ अपश्यच्चन्द्रगुप्तं च, क्रीडन्तं भूपलीलया ॥ ५३ ॥ महाराज! ममाऽपि त्वं, किञ्चिद्देहीति चाऽब्रवीत् ॥ ततश्चन्द्रोऽवदद्विप्र!, गृहाण सुरभीरिमाः ॥ ५४ ॥ चाणक्योऽथाऽब्रवीदेता, गावो गृह्णन् बिभेम्यहम् ॥ बभाण चन्द्रो मा भैषी–र्वीरभोग्या हि भूरियम् ॥ ५५ ॥ ततः पप्रच्छ चाणक्यः, कस्यायमिति बालकान्? ॥ शिशोरप्यस्य विज्ञानं, प्रकृष्टमिति चिन्तयन् ॥ ५६ ॥ जगुर्बालाः परिव्राजः, पुत्रोऽसौ विप्र! वर्तते ॥ गर्भस्थोऽप्येष यत्तस्मै, दत्तो दोहदपूरणात्! ॥ ५७ ॥ चाणक्योऽथ स्वकीयं तं, बालं ज्ञात्वेत्यभाषत ॥ एहि वत्स! ददे राज्यं, यस्मै दत्तोऽसि सोऽस्म्यहम् ॥ ५८ ॥ तच्छ्रुत्वा द्रुतमायातं, हत्वा तं राज्य काङ्क्षिणं ॥ चाणक्यो द्राक् पलायिष्ट, सलोप्त्र इव तस्कर ॥ ५९ ॥ धातुवादार्जितद्रव्यैः, सेनां कृत्वाऽथ काञ्चन ॥ रुरोध पाटलीपुत्रं, प्रतिज्ञापूरणाय सः ॥ ६० ॥ ततो नन्देन तत्सैन्ये, स्वल्पत्वाद्विद्रुते द्रुतम् ॥ चाणक्यश्चन्द्रगुप्तेन, समं सद्यः पलायत! ॥ ६१ ॥ ततो नन्दश्चन्द्रगुप्तं, ग्रहीतुं सादिनो बहून् ॥ आदिश्य प्राविशत्तुष्टैः, पौरैः क्लृप्तोत्सवे पुरे ॥६२॥ तेषां नन्दाश्ववाराणां, मध्यादेकः समाययौ ॥ चन्द्रगुप्तमनुक्षिप्रं, वायुवेगेन वाजिना ॥ ६३ ॥ दूराद्वीक्ष्य तमायान्तं,

चाणक्यश्चारुधीनिधिः ॥ प्रावीविशच्चन्द्रगुप्तं, सवेशस्थे सरोन्तरे ॥ ६४ ॥ स्वयं तु निर्णेजकवत्, प्रारेभे वस्त्रधावनम् ॥ तत्राऽऽयातोऽथ नन्दाश्व–वारस्तमिति पृष्टवान् ॥ ६५ ॥ चन्द्रगुप्तो व्रजन्नत्र, दृष्टो रे ! रजक ! त्वया ॥ सोऽप्यूचेऽन्तः-सरो नंष्ट्वा, प्रविष्टः स हि विद्यते ॥ ६६ ॥ ततः सादी तमाक्रष्टुं, प्रविविक्षुः सरोन्तरे ॥ उत्तीर्य तुरगान्छस्त्र–सन्नाहादि विहाय च ॥ ६७ ॥ कौपीनमात्रभृद्याव–ज्जलोपान्तमुपाययौ ॥ तावत्तस्यैव खड्गेन, चाणक्यस्तच्छिरोऽच्छिनत् ॥ ६८ ॥ [ युग्मम् ] चन्द्रगुप्तमथाहूय, तस्मिन्नारोप्य वाजिनि ॥ चाणक्यः पुरतोऽचाली–दप्रतिमाविमवोर्जितः ॥६९॥ कुमारं चेति पप्रच्छ, हे वत्स ! त्वामहं यदा ॥ सादिनेऽदर्शयं चित्ते, किमचिन्ति त्वया तदा ॥ ७० ॥ चन्द्रः प्रोवाच हे पूज्याः !, ध्यातमेतन्मया तदा ॥ एतदेव विदन्त्यार्याः, सुन्दरं खलु न त्वहम् ! ॥ ७१ ॥ तदाकर्ण्यातिसन्तुष्टश्चाणक्यो ध्यातवानिति ॥ वशंवदः सदाप्येष, भावी मम सदश्ववत् ॥ ७२ ॥ ध्यायन्तमिति चाणक्यं, व्रजन्तं पुरतो द्रुतम् ॥ चन्द्रगुप्तोऽब्रवीदार्य !, क्षुधा मां बाधतेऽधिकम् ॥ ७३ ॥ ततश्चन्द्रं बहिर्मुक्त्वा, भक्तार्थं चणकात्मजः ॥ प्रति ग्रामं व्रजन्नेकं, भट्टं दृष्ट्वेति पृष्टवान् ॥ ७४ ॥ ग्रामेऽत्र लभ्यते भिक्षा, सोऽभ्यधाल्लभ्यते भृशम् ! ॥ मयाप्यत्राधुना लेभे, दधिकूरकरम्बकः ॥ ७५ ॥ चाणक्योऽचिन्तयद्भक्त–कृते ग्रामे व्रजाम्यहम् ॥ एकाकी चन्द्रगुप्तस्तु, बहिस्तिष्ठति साम्प्रतम् ॥ ७६ ॥ तदयं मयि दूरस्थे, निर्दयैर्नन्दसादिभिः ॥ हनिष्यते चेत्तद्भावि, राज्यं मे स्वप्न एव हि ! ॥ ७७ ॥ तस्मादस्यैव भट्टस्यो–दरात्कृष्ट्वा करम्बकम् ॥ ददे तस्मै दुर्दशा हि, तरणीया यथातथा ! ॥ ७८ ॥ ध्यात्वेति जठरं तस्य, चाणक्यो दारयत्स्वयम् ॥ स्वार्थसिद्ध्यै परद्रोह–करान् धिग् धिग् नराधमान् ! ॥ ७९ ॥ ततो हृत्वा स तद्भोज्यं, चन्द्रगुप्तमभोजयत् ॥ सोप्यतिक्षुधितोऽज्ञासी–न्न तद्रसविपर्ययम् ! ॥८०॥ मौर्ययुक्तोऽथ चाणक्यो, ग्राममेकं दिनात्यये ॥ अगात्तत्र च भिक्षार्थं, भ्राम्यन् रोरगृहं ययौ ॥ ८१ ॥ तदा च तस्य गेहस्य, स्वामिन्या वृद्धयैकया ॥ बालानां भूयसामुष्ण–रब्बाऽभूत्परिवेषिता ॥ ८२ ॥ तस्यामेकः शिशुर्बाढं, क्षुधितः प्रक्षिपन् करम् ॥ दग्धाङ्गुली रुरोदोच्चै–स्तं च वृद्धेत्यभाषत ॥ ८३ ॥ वेत्सि चाणक्यवन्नैव, किञ्चित्त्वमपि मूढ रे ! ॥ तन्निशम्याऽथ चाणक्यस्तां पप्रच्छेति सादरम् ॥ ८४ ॥ वृद्धे ! त्वया कुतश्चक्रे, चाणक्योऽत्र निदर्शनम् ! ॥ वृद्धबुद्धिस्ततो वृद्धा, चाणक्यमिदमभ्यधात् ॥ ८५ ॥ यथा हि पूर्वं चाणक्यो, वाह्यं देशमसाधयन् ॥ रुन्धानः पाटलीपुत्रं, मूढः प्राप विगोपनाम् ॥ ८६ ॥ बालकोऽपि तथैवाय–मलिहन् परितः शनैः ॥ मध्य एव क्षिपन् पाणिं, दाहमत्युग्रमासदत् ॥ ८७ ॥ चाणक्यस्तत एवास्य, तुलामारोपितो मया ॥ महानपि हि निर्बुद्धि–र्बालादपि विशिष्यते ॥ ८८ ॥ तच्छ्रुत्वा योषितोऽप्यस्याः, शस्या धीरिति चिन्तयन् ॥ चाणक्यो हिमवत्कूट–सन्निवेशं ततो ययौ ॥ ८९ ॥ तत्र राज्ञा पर्वतकाभिधेन समसुत्तमाम् ॥ चाणक्यो विदधे मैत्रीं, कांक्षन् साहायकं ततः ॥ ९० ॥ अन्येद्युरिति चाणक्य–स्तं प्रोचे चेत्सखीहसे ॥ नन्दमुन्मूल्य तद्राज्यं, विभज्यादद्वहे तदा ॥ ९१ ॥ मम बुद्धिबलं सैन्य–बलं च भवतोऽतुलं ॥ कार्येस्मिन्निर्मिते विश्व–श्लाघ्यतां लभतां सखे ! ॥ ९२ ॥ तदङ्गीकृत्य चाणक्य–वाक्यं पर्वतको नृपः ॥ सचन्द्रगुप्तः प्रारेभे, नन्ददेशस्य साधनम् ॥ ९३ ॥ पुरमेकं तु तेनैव, ग्रहीतुमशकन् बलात् ॥ विवेश तत्र चाणक्यो, भिक्षार्थं भिक्षुवेषभृत् ॥ ९४ ॥ तत्र वास्तूनि सम्प्रेक्ष–माणः सोथ त्रिदण्डिकः ॥ सकलापाः सप्त देव्यो–ऽपश्यदिन्द्रकुमारिकाः ॥९५॥ अभङ्गं तत्पुरं तासां, प्रभावादवबुध्य सः ॥ मयैताः कथमुत्थाप्या, विममर्शेति यावता ॥ ९६ ॥ तावत्तं पुररोधार्ताः, पप्रच्छुरिति नागराः ॥ भगवन् ! पुररोधोऽयं, कदा खल्वपयास्यति ? ॥ ९७ ॥ ततः प्रोवाच चाणक्यो, यावदत्र भवन्त्यमूः ॥ देवीनां प्रतिमास्ताव–त्पुररोधक्षतिः कुतः ? ॥ ९८ ॥ पौरास्तेऽथ ततः स्थाना–त्ताः क्षिप्रमुदपाटयन् ॥ धूर्तैः प्रतारितानां हि, नाऽकार्यं किञ्चिदङ्गिनाम् ! ॥ ९९ ॥ तदा चाणक्यसङ्केता–च्चन्द्रपर्वतकावपि ॥ पलायेतां द्रुतं तच्चा–ऽऽकर्ण्योच्चैर्मुमुदे जनः ॥ १०० ॥ भूयो व्याघुट्य तौ क्षिप्र–मग्रहीष्टां च तत्पुरम् ॥ नन्ददेशं च चाणक्य–धियाऽसाधयतां रयात् ॥ १०१ ॥ प्रवर्धमानसैन्यादि– संयुतास्ते त्रयोऽप्यऽथ ॥ अवेष्टयन्नन्दपुरं, निधानमिव भोगिनः ॥ १०२ ॥ तदा च क्षीणपुण्यत्वात्, क्षीणबुद्धिपराक्रमः ॥ चाणक्यस्यान्तिके नन्दो, धर्मद्वारमयाचत ! ॥ १०३ ॥ ततः प्रोवाच चाणक्य–स्त्वमेकेन रथेन यत् ॥ नेतुमीशस्तदादाय, पुरान्निर्याहि निर्भयः ॥ १०४ ॥ नन्दोऽपि द्वे स्त्रियौ कन्या–मेकां सारधनानि च ॥ रथेऽधिरोप्य नगरा–न्निर्ययौ दीनतां गतः ॥ १०५ ॥ चाणक्यचन्द्रगुप्तौ च, स च पर्वतको नृपः ॥ पुरे प्रवेष्टुमाजग्मु–स्तदैवानन्दमेदुराः ॥ १०६ ॥ तदा च सा नन्दसुता, चन्द्रगुप्तं निरैक्षत ॥ सद्यो जातानुरागा च, जज्ञे तत्सङ्गमोत्सुका ॥ १०७ ॥ चन्द्रगुप्तास्यचन्द्रैक–चकोरायितलोचनाम् ॥

वीक्ष्य स्वनन्दनां नन्दो, निरानन्दोऽब्रवीदिदम् ॥ १०८ ॥ हे पुत्रि ! यद्यसौ सौम्यो, रोचते ते युवा तदा ॥ आश्रयामुं द्रुतं राज–पुत्र्यो हि स्युः स्वयंवराः ॥ १०९ ॥ याहि याहि त्वदुद्वाह–चिन्तया सह सत्वरम् ॥ तेनेत्युक्ता मृगाक्षी सा, रथादुदतरत्ततः ॥ ११० ॥ चन्द्रस्य च रथे याव–त्साऽऽरोढुमुपचक्रमे ॥ दैवात्तावदभज्यन्त, द्रुतं तस्यारका नव ॥ १११ ॥ अमङ्गलकरीं तां च, ज्ञात्वा चन्द्रो न्यवारयत् ॥ चाणक्यस्तं ततोऽवादी–द्वत्सेमां मा निषेधय ॥ ११२ ॥ यदनेन निमित्तेन, सुन्दरोदर्कवादिना ॥ पुरुषान्नव यावत्ते, वंशो भावी महर्द्धिकः ॥ ११३ ॥ मूर्त्तामिव श्रियं चन्द्र–स्तामथारोपयद्रथे ॥ नन्दसम्पदमादातुं, तद्गेहे ते त्रयोऽप्ययुः ॥ ११४ ॥ तत्र चैकाऽभवत्कन्या, गरलीभूतभूघना ॥ आजन्माभोजयत्तां हि, नन्दराड् विषमं विषम् ॥ ११५ ॥ तां च पर्वतकः प्रेक्ष्य, जज्ञे गाढानुरागभाक् ॥ चाणक्योऽपि ततस्तस्मै, तां ददौ धिषणानिधिः ॥ ११६ ॥ तदैव तस्या विवाहं, प्रारेभे स महीपतिः ॥ संक्रान्तगरलश्चाभू–त्सद्यस्तत्पाणिसङ्गमात् ॥ ११७ ॥ विषव्याप्तवपुः सोऽथ, चन्द्रगुप्तमिदं जगौ ॥ हे मित्र ! याम्यहं मूर्च्छा–सुरगग्रस्तवद्भ्रमम् ॥ ११८ ॥ तत्पाहि पाहि मां वत्स !, कुरु काञ्चित्प्रतिक्रियाम् ॥ अन्यथाहं मरिष्यामि, नियतं व्यथयानया ॥ ११९ ॥ ततो जाङ्गुलिका मन्त्र–विज्ञाश्च केति वादिनम् ॥ चाणक्योऽन्वशिषच्चन्द्र– गुप्तमेवं तदा शनैः ॥ १२० ॥ पश्चान्मार्योऽप्ययऽयं मौर्य !, म्रियते स्वयमेव चेत् ॥ तदोपेक्षस्व दक्षो हि, रक्षेत्को यान्तमामयम् ? ॥ १२१ ॥ ["अन्यच्च"–]तुल्यार्थं तुल्यसामर्थ्यं, मर्मज्ञं व्यवसायिनम् ॥ अर्धराज्यहरं मित्रं, यो न हन्यात्स हन्यते ! ॥ १२२ ॥ तत्साम्प्रतं साम्प्रतं ते, मौनमेवेति तेन सः ॥ अनुशिष्टो भ्रकुट्या च, निषिद्धो मौनमाश्रयत् ॥ १२३ ॥ ततः पर्वतकोर्वीशः, प्रपेदे नामशेषताम् ॥ उद्यमो हि विना भाग्यं, प्रत्युतानर्थदो भवेत् ! ॥ १२४ ॥ तस्य राज्यमपुत्रस्य, राज्यं नन्दस्य चाखिलम् ॥ बभूव चन्द्रगुप्तस्या–धीनं भाग्यैकसेवधेः ॥ १२५ ॥ तदा च केऽपि तद्राज्ये, चौर्यं नन्दनरा व्यधुः ॥ अन्यमारक्षकं कञ्चि–च्चाणक्योऽमार्गयत्ततः ॥ १२६ ॥ अगाच्च नलदामाह्व–कुविन्दस्य गृहं भ्रमन् ॥ मत्कोटकविलेष्वग्निं, क्षिपन्तं तं ददर्श च ॥ १२७ ॥ किं करोषीति चाणक्य–स्तमप्राक्षीच्च सादरम् ? ॥ उन्मुखीभूय सोत्कर्षं, कुविन्दोप्येवमब्रवीत् ॥ १२८ ॥ दुष्टान्मत्कोटकानेतान्, मत्सूनोर्दंशदायिनः ॥ सान्वयान् हन्तुमनलं, विलेषु प्रक्षिपाम्यहम् ॥ १२९ ॥ इति तस्य गिरा ज्ञात्वा, कर्मठं सोद्यमं च तम् ॥ गत्वा च चन्द्रगुप्तान्ते, चाणक्योऽजूहवन्मुदा ॥ १३० ॥ तस्मै पुराध्यक्षतां च, चन्द्रगुप्तादृदापयत् ॥ भोज्याद्यैः सोऽपि विश्वास्या–ऽखिलांश्चौरान् जघान तान् ॥ १३१ ॥ एवं मौर्यस्य साम्राज्ये, जाते निष्कण्टकेऽन्यदा ॥ कोशार्जनाय चाणक्यः, पौरानाढ्यानजूहवत् ॥ १३२ ॥ भोजयित्वा च तान् सद्यो, मद्यं हृद्यमपाययत् ॥ हालाहलाहलेनास्तविवेकास्ते ततोऽभवन् ॥ १३३ ॥ तेषून्मत्तेषु नृत्यत्सू–त्पतत्सु प्रपतत्सु च ॥ चाणक्योऽपि क्षीवचेष्टा–मनुतिष्ठन्नदोऽवदत् ॥ १३४ ॥ त्रिदण्डं धातुरक्ते द्वे, चीवरे स्वर्णकुण्डिका ॥ वशंवदो मे भूमांश्च, तन्मे वादय होलकम् ! ॥ १३५ ॥ तन्निशम्याऽपरः सीधु–पानान्धो मदमुद्वहन् ॥ कस्याप्यनुक्तां स्वां लक्ष्मी, प्रादुष्कुर्वन्निदं जगौ ॥ १३६ ॥ योजनानां दशशतीं, व्रजतो मत्तदन्तिनः ॥ पदे पदे ददे लक्षं, तन्मे वादय होलकम् ! ॥ १३७ ॥ ततोऽहम्पूर्विकापूर्व–मन्योप्येवमवोचत ॥ उप्ते तिलाढके बाढ–मुद्गते फलितेऽपि च ॥ १३८ ॥ निष्पद्यन्तेऽत्र यावन्त–स्तिलास्तावन्ति मद्गृहे ॥ सन्ति दीनारलक्षाणि, तन्मे वादय होलकम् ! ॥ १३९ ॥ [ युग्मम् ] अन्योप्यूचे नव्यवर्षा–पूर्णशैलापगारये ॥ एकवासरसञ्जात–नवनीतेन भूयसा ॥ १४० ॥ पालीमहं निबध्नामि, तन्मे वादय होलकम् ! ॥ तेनेत्युक्तेऽपरोऽवादीद्वादी चाक्षेपपूर्वकम् ॥ १४१ ॥ [ युग्मम् ] एकाहजातजात्याश्व–किशोरस्कन्धकेसरैः ॥ वेष्टयेऽदः पुरं विष्वक्, तन्मे वादय होलकम् ! ॥ १४२ ॥ ततः परोऽवदच्छाली, विद्येते द्वे ममोत्तमे ॥ प्रसूतिकागर्दभिके, छिन्नछिन्नप्ररोहिके ॥ १४३ ॥ एतद्रत्नद्वयपते–स्तन्मे वादय होलकम् ! ॥ अन्यस्त्वेवं जगौ द्रव्य–सहस्रं मम विद्यते ॥ १४४ ॥ सदा चन्दनलिप्ताङ्ग–मप्रवासी ऋणोज्झितः ॥ अस्मि स्ववशभार्यश्च, तन्मे वादय होलकम् ! ॥ १४५ ॥ इत्थं ते मदिरापान–विवशाः सम्पदोऽखिलाः ॥ प्रादुश्चक्रुर्मद्यपो हि, सद्भावं द्राक् प्रकाशयेत् ॥ १४६ ॥ यतः–"कुविअस्स आउरस्स य, वसणप्पत्तस्स रागरत्तस्स ॥ मत्तस्स मरंतस्स य, सब्भावा पायडा होंति ॥ १४७ ॥" ततश्च तेषां चाणक्यः, श्रियं विज्ञाय धीनिधिः ॥ तेभ्यः स्वास्थ्यं प्रपन्नेभ्यो, यथार्हं धनमग्रहीत् ॥ १४८ ॥ [तथा हि–] सामयोनेः शुभगतेरेकयोजनयायिनः ॥ पदमेयानि दीनार–लक्षाण्याद्यादुपाददे ॥ १४९ ॥ प्ररूढैकतिलोत्पन्न–तिलमेयानि चापरात् ॥ एकाहम्रक्षणाज्यं च, प्रतिमासं तृतीयतः ॥ १५० ॥ तुर्याच्चैकदिनोत्पन्नान्, प्रतिमासं किशोरकान् ॥ शालींश्च पञ्च-

मात्कोष्ठा–गारपूरणमंभिनान् ॥ १५१ ॥ इत्यादाय श्रियं तेभ्यो–ऽपरादपि जनव्रजात् ॥ द्रव्यमादातुमकरो–चा-णक्यो यन्त्रपाशकान् ॥ १५२ ॥ केप्याहुर्दैवतादत्ता, देवनामास्य तेऽभवन् ॥ ततः स स्थालमापूर्य, दीनारैश्चत्वरे ययौ ॥ १५३ ॥ इत्यूचे च जनान् यो हि, धूते जयति मां जनः ॥ तस्मै ददामि नियतं, दीनारानखिलानमून् ॥ १५४ ॥ जेष्यामि यद्यहं तर्हि, ग्रहीष्ये निष्कमेककम् ॥ तच्छ्रुत्वारेभिरे रन्तुं, लुब्धास्तेन समं जनाः ॥ १५५ ॥ धूतक्रीडासु दक्षोऽपि, विजेतुं तं न कोपि हि ॥ अलंभूष्णुरभूत्तेषां, पाशकानां प्रभावतः ॥ १५६ ॥ पाशकैः सम्पदापाशै– स्तैर्नि-जेच्छानुवर्त्तिभिः ॥ विजित्य लोकांश्चाणक्यः, स्वर्णैः कोशमपूरयत् ॥ १५७ ॥ तं तु निर्जेतुमपरा– त्पुरादेरागता अपि ॥ स्वर्णमेव ददुस्तस्मै, न तु कोऽपि जिगाय तम् ॥ १५८ ॥ दिव्यानुभावादिबलेन यद्वा, जीयेत के-नाऽपि स धीसखोऽपि ॥ प्रमादतो हारितमर्त्यजन्म, जन्मी पुनर्नो लभते नरत्वम् ॥ १५९ ॥ इति पाशकदृष्टान्तो द्वितीयः ॥ २ ॥ अथ धान्यदृष्टान्तः—

तथा हि भरतक्षेत्रे, विशाले शालिलक्ष्मीभिः ॥ द्वात्रिंशता सहस्रैः स–द्विषयैः शोभितेऽभितः ॥ १ ॥ अनेकनगर-ग्राम–पत्तनादिविराजिते ॥ प्रशस्तायां मेघवृष्टौ, संपन्नायां घनागमे ॥ २ ॥ सर्वधान्येषु चोप्तेषु, कृषिदक्षैः कृषीवलैः ॥ तन्निष्पत्तौ प्रकृष्टायां, जातायां निरुपद्रवम् ॥ ३ ॥ बहुभेदानि धान्यानि, प्रधानानि भवन्ति हि ॥ समग्रजन्तुजी-वातु–कल्पानि सरसानि च ॥ ४ ॥ [ चतुर्भिः कलापकम् ] तथा हि–"शालिगोधूमचनक–मुद्गमाषतिलाणुकाः ॥ राजमाषयवव्रीहि–कलायकंगुकोद्रवाः ॥ ५ ॥ मकुष्टकाढकीवल्ल–कुलत्थशणचीनकाः ॥ युगन्धरीमसूरौ चा–ऽतसी-कलमषष्टिकाः ॥ ६ ॥" इत्यादीन् सस्यराशींस्तान्, भरतक्षेत्रमध्यगान् ॥ संमील्य रचयेत्कोऽपि, पुञ्जमभ्रलिहं सुरः ॥ ७ ॥ सर्षपप्रस्थमेकं च, तत्र क्षिप्त्वा करम्बयेत् ॥ तान् सर्षपान् पृथक्कर्तु–मेकां वृद्धां समादिशेत् ॥ ८ ॥ जरती सा जराकम्प्र–करा शूर्पकधारिणी ॥ विगलल्लोचना भूरि–विलोलवलिवल्लरी ॥ ९ ॥ विविच्य धान्यराशीस्तान्, पि-ण्डितानखिलानपि ॥ तैरेव सर्षपैः प्रस्थं, किं भूयोऽपि प्रपूरयेत् ? ॥ १० ॥ [ युग्मम् ] दिव्यप्रभावाद्यदि वा क-दाचि–द्विवेचयेत्तानपि सर्षपान् सा ॥ च्युतो नरत्वान्न तु पापकर्मा, जनः पुनर्विन्दति मर्त्यजन्म ! ॥ १ ॥ इति धान्यदृष्टान्तः ॥ ३ ॥ अथ धूतदृष्टान्तः, तथा हि—

अभूत्पुरे रत्नपुरे, नृपो नाम्ना शतायुधः ॥ तस्य चैको युवाऽवाप्त–यौवराज्यः सुतोऽभवत् ॥ १ ॥ स चेत्यालोच-यामासा–ऽन्यदा मित्रादिभिः समम् ॥ अद्य तातं निहत्याहं, स्वयं राज्यमुपाददे ! ॥ २ ॥ आलोचन्तं च निपुणो, ज्ञात्वाऽमात्यः कथञ्चन ॥ राज्ञे व्यज्ञपयत्सोऽपि, तन्निशम्येत्यचिन्तयत् ॥ ३ ॥ असम्भाव्यमिदं तात–मपि यन्मा-रयेत्सुतः ! ॥ शशाङ्कः शोषयेद्वा–ब्धिमिति हि श्रद्दधीत कः ? ॥ ४ ॥ लोभावेशाकुलो यद्वा, कुग्रहग्रस्तवज्जनः ॥ नैव कार्यमकार्यं वा, निर्व्रीडो वेत्ति किञ्चन ! ॥ ५ ॥ यदुक्तं–"नोवेक्खइ कुलजाई, पेम्मं सुकयं च गणइ न य अयसं ॥ लुद्धो कुणइ अकज्जं, मारइ पहु बंधु मित्तंपि ! ॥ ६ ॥" तदेष पुत्रो यावन्मां, लोभग्रस्तो न मारयेत् ॥ तावत्स्वरक्षणोपायं, सद्यः कञ्चित्करोम्यहम् ॥ ७ ॥ विमृश्येति महाबुद्धिः, प्रणामायागतं सुतम् ॥ इति प्रोवाच तद्भाव–मविदन्निव भूधवः ॥ ८ ॥ राज्यभारपरिश्रान्तो, राज्यं ते दित्सुरप्यहम् ॥ स्वकीयकुलमर्यादां, नोल्लङ्घयि-तुमुत्सहे ॥ ९ ॥ अतिक्रामन् हि मर्यादा–माचीर्णां पूर्वपूरुषैः ॥ शलभोग्निमिवोल्लङ्घ्य–मानो विपदमश्नुते ! ॥ १० ॥ कुप्येत्कुलाधिदेवी च, मर्यादोल्लङ्घकाय तत् ॥ समाकर्णय तां राज्य– सुखभूरुहसारणीम् ॥ ११ ॥ उल्लङ्घ्यानुक्रमं रा-ज्य–मभिकांक्षति यः सुतः ॥ जनको वा स्वयं यस्मै, राज्यं दातुं समीहते ॥ १२ ॥ स चेत्सुतो जयेत्तातं, धूते राज्यं तदाऽश्नुते ॥ तत्र धूते यया रीत्या, जेयं सा श्रूयतां त्वया ॥ १३ ॥ अस्यां सभायां स्तम्भानां, वर्त्ततेऽष्टोत्तरं शतम् ॥ अश्रयोऽपि प्रतिस्तंभं, वर्तन्तेऽष्टोत्तरं शतम् ॥ १४ ॥ तत्रैकेनैव दायेन, दीव्यन् यदि निरन्तरम् ॥ अष्टो-त्तरशतं वारान्, धूते जयति मां भवान् ॥ १५ ॥ अश्रिरेका तदा स्तम्भ–स्यैकस्य विजिता भवेत् ॥ एवं साष्ट-शताश्रीणां, जये स्तम्भो भवेज्जितः ॥ १६ ॥ इत्थमष्टोत्तरशत–स्तम्भानां विजये कृते ॥ राज्यं तवार्पयिष्यामि, सत्वरं नात्र संशयः ॥ १७ ॥ किञ्चैकवारमप्यत्र, हारिते सकलं जितम् ॥ यात्येव सकृदप्यन्य–स्त्रीसङ्गे ब्रह्मचर्यवत् ॥ १८ ॥ इत्याकर्ण्य पितुर्वाक्यं, भूपभूरित्यचिन्तयत् ॥ धूताचेल्लभ्यते राज्यं, को हन्याज्जनकं तदा ? ॥ १९ ॥ ध्यात्वेति स समं राज्ञा, धूतक्रीडां प्रचक्रमे ॥ विजित्य निखिलान् स्तंभा–न्न तु राज्यमविन्दत ॥ २० ॥ सुरानु-

भावादथवा स सर्वान्, स्तम्भान् विजित्यापि लभेत राज्यम् ॥ प्रमादतो नष्टमनुष्यजन्मा, प्राप्नोति जन्तुर्न पुनर्नरत्वम् ! ॥ २१ ॥ इति द्यूतदृष्टान्तश्चतुर्थः ॥ ४ ॥ अथ रत्नदृष्टान्तः, तथा हि—

पुरे धनसमृद्धेऽभू–द्धनदाह्वो वणिग् जरी ॥ प्रभूतरत्नकोटीनां, प्रभुः प्रभुरिवाम्भसाम् ॥ १ ॥ उदारं व्यवहारं च, कारं कारं सदापि सः ॥ उपार्जितैरपि धनै–र्यत्नाद्रत्नान्युपाददे ॥ २ ॥ धनदः स्वधनं तच्च, नैव कस्याप्यवोचत ॥ आयुर्वित्तं गृहच्छिद्रं, नो वाच्यमिति चिन्तयन् ॥ ३ ॥ विश्वासं स्वीयपुत्राणा–मप्यकुर्वन् दिवानिशम् ॥ निधानमिव भोगीन्द्र–स्तं रत्नौघं ररक्ष सः ! ॥ ४ ॥ अपरेऽपि पुरे तत्र, भूयांसो धनिनोऽभवन् ॥ अनेकधनकोटीनां, स्वामिनो धनदोपमा. ॥ ५ ॥ ते च स्वीयेषु सौधेषु, पताकाः कोटिसंमिताः ॥ स्वैरमुत्तम्भयामासु–र्नानावर्णविराजिताः ॥ ६ ॥ वेल्लद्भिस्तैर्ध्वजैस्तेषां, सुधाशुद्धा बभुर्गृहाः ॥ हिमाद्रिशिखराणीव, सन्ध्याभ्रैः पवनेरितैः ॥ ७ ॥ धनदस्तु ध्वजं नैवो–त्तम्भयामास कर्हिचित् ॥ न श्रीणामनुसारेण, वेषादिकमपि व्यधात् ! ॥ ८ ॥ ततो महत्त्वमिच्छन्तः, सुतास्तस्येत्यचिन्तयन् ॥ रोरवच्चेष्टते रत्न–व्रजे सत्यपि नः पिता ! ॥ ९ ॥ रत्नविक्रयणोत्पन्न–धनकोटीमितानसौ ॥ ध्वजानपि निजे गेहे, नैवोत्तम्भयति क्वचित् ! ॥ १० ॥ तदयं जातयामश्चे–द्याति क्वापि तदा वयम् ॥ रत्नानि तानि विक्रीय, ध्वजानुत्तम्भयामहे ॥ ११ ॥ व्यापारार्थमथान्येद्यु–र्वृद्धे देशान्तरं गते ॥ प्रारेभिरे ते रत्नानां, विक्रयं प्रीतचेतसः ॥ १२ ॥ तेभ्यो मूल्यानभिज्ञेभ्य–स्तानि देशान्तरागताः ॥ रत्नानि जगृहुर्यत्त–न्मूल्यं दत्वा वणिग्जनाः ॥ ॥ १३ ॥ तेन रत्नौघलाभेन, हृष्टास्ते वणिजां व्रजाः ॥ जग्मुः पारसकूलादी–न्निजदेशान् द्रुतं द्रुतम् ! ॥ १४ ॥ रत्नविक्रयसञ्जात–वित्तकोटिमितान् ध्वजान् ॥ सोत्सवं तत्सुताः स्वीय– सौधेऽध्यारोपयंस्तत ॥ १५ ॥ वृद्धोऽथ गेहमायातः, श्रुत्वा रत्नौघविक्रयम् ॥ पताकाश्च प्रेक्ष्य दुःखं, मानसेऽमानमानशे ॥ १६ ॥ इत्यूचे च सुतान् कोप–कम्प्रकायोरुणेक्षणः ॥ रे लक्ष्मीकन्दकुद्दालाः !, यूयं निर्यात मद्गृहात् ॥ १७ ॥ तानि विक्रीतरत्नानि, समानीयाऽखिलान्यपि ॥ ममौकसि प्रवेष्टव्यं , युष्माभिर्नान्यथा पुनः ! ॥ १८ ॥ इति तेनोदितास्तस्य, तनया विनयान्विताः ॥ प्रत्याशमभ्रमन् रत्न–प्राप्तिं प्रत्याशयाकुलाः ॥ १९ ॥ अन्यान्यदेशवास्तव्य–वणिजां दत्तमुत्तमम् ॥ परं ते पर्यटन्तोऽपि, तं रत्नौघ न लेभिरे ॥ २० ॥ मरुन्महिम्ना यदि वाऽऽप्नुवीरं–स्तं रत्नराशिं धनदस्य पुत्राः ॥ च्युतो नरत्वात्कृतपापकर्मा, नरोधिगच्छेन्न तु मानुषत्वम् ! ॥ २१ ॥ इति रत्नदृष्टान्तः पञ्चमः ॥ ५ ॥ अथ स्वप्नदृष्टान्तः, तथा हि—

अभूद्भूभामिनीभाले, क्षेत्रे भरतनामनि ॥ गौडदेशो जातरूप–तिलकश्रियमाश्रयन् ॥ १ ॥ तत्रासीत्पाटलीपुत्रं, पुरं सुरपुरोपमम् ॥ मूलदेवो राजपुत्र– स्तत्राऽभूद्रूपमन्मथः ॥ २ ॥ उदारचित्तः सकल–कलाशाली प्रियंवदः ॥ कृतज्ञो नैकविज्ञान–विज्ञो विमलधीनिधिः ॥ ३ ॥ शूरः प्रतिज्ञानिर्वाही, धूर्त्तविद्यैकसेवधिः ॥ सोऽभूदुचितविज्ञाना–नाथबन्धुर्गुणप्रियः ॥ ४ ॥ [ युग्मम् ] तस्करद्यूतकारादिः, साधुप्राज्ञाधिकोऽथवा ॥ यो यो मिमिल ताद्रूप्यं, स भेजे स्फटिकाश्मवत् ॥ ५ ॥ कुतूहलैर्नवनवै– र्मानवान् विस्मयं नयन् ॥ वृत्तो मित्रैः पुरे तत्रा–ऽचरत् खेचरवच्च सः ॥ ६ ॥ तत्राशेषगुणाढ्येऽपि, द्यूतव्यसनमुत्कटम् ॥ अभूत्सर्वकलापूर्णे, शशाङ्क इव लाञ्छनम् ॥ ७ ॥ पित्रादिभिर्निषिद्धोऽपि, द्यूतासक्तिं स नामुचत् ॥ व्यसनं हि विशां प्रायो, दुस्त्यजं स्यात्स्वभाववत् ! ॥ ८ ॥ ततोऽसौ व्यसनासक्त, इति पित्रा तिरस्कृत. ॥ मानान्निजपुरं हित्वा, भ्रमन्नुज्जयनीं ययौ ॥ ९ ॥ गुलिकायाः प्रयोगाच्च, तत्र वामनरूपभृत् ॥ कलाभिर्बहुभिर्लोकान्, रञ्जयन् विश्रुतोऽभवत् ॥ १० ॥ रूपलावण्यविज्ञान–कलाकौशलशालिनी ॥ तत्रासीद्देवदत्ताह्वा, वेश्या स्वर्गे इवोर्वशी ॥ ११ ॥ तां सर्वोत्कृष्टसकल– कलाकौशलगर्विताम् ॥ कलाभिर्विस्मयं नेतुं न दक्षोऽपि क्षमोऽभवत् ॥ १२ ॥ लोकेभ्यस्तत्स्वरूपं त–न्मूलदेवो निशम्य ताम् ॥ दिदृक्षामास दक्षो हि, दक्षमन्यं दिदृक्षते ॥ १३ ॥ ततो निशान्ते गत्वा स, तन्निशान्तस्य सन्निधौ ॥ वामनस्तन्मनो हर्तुं, गीतं गातुं प्रचक्रमे ॥ १४ ॥ तद्गीतं स्फीतमाकर्ण्यो–दञ्चद्रोमाञ्चकञ्चुका ॥ देवदत्ताऽभवद्भूरि– सुधापूरैरिवार्द्रिता ॥ १५ ॥ गीतेन तेन हल्लोहा–कर्षायस्कान्तबन्धुना ॥ कुरङ्गीवाकृष्टचित्ता, सा तन्वङ्गीत्यचिन्तयत् ॥ १६ ॥ अहो ! अश्रुतपूर्वासौ, गीतिरस्यातिबन्धुरा ॥ तद्गातासौ न सामान्यो, नरः किन्तु नरोत्तमः ! ॥ १७ ॥ ध्यात्वेति चेटिकामेकां, सा प्रैषीत्तं समीक्षितुम् ॥ साऽपि तं वामनं वीक्ष्या–ऽऽगता तामित्यभाषत ॥ १८ ॥ गन्धर्वो वामनाकारः, कोऽपि स्वामिनि ! गायति ॥ कुरङ्गमदवद्रूप–मन्तगपि मनोहरः ॥ १९ ॥ तदाकर्ण्य तमाह्वातुं, प्रैषीन्माधविकाभिधाम् ॥ कुब्जां दासीं देवदत्ता, साऽपि गत्वेति त जगौ ॥ २० ॥ अस्माकं स्वामिनी देव–दत्ता विज्ञपयत्यदः ॥ कलानिधे ! प्रसीद त्व–मा-

गच्छाम्यन्निकेतनम् ॥२१॥ मूलदेवोऽवदत्कुब्जे !, नागमिष्यामि तद्गृहम् ॥ गणिकाजनसङ्गो हि, निषिद्धो बुद्धिशालिनाम् ॥ २२ ॥ यदुक्तं–"या विचित्रविटकोटिनिघृष्टा, मद्यमांसनिरताऽतिनिकृष्टा ॥ कोमला वचसि चेतसि दुष्टा, तां भजन्ति गणिकां न विशिष्टाः ॥ २३ ॥" तेनेत्युक्ताऽपि सा चाटु–शतैरावर्ज्य तं भृशम् ॥ सनिर्बन्धं करे धृत्वा–ऽचीचलन्निलयं प्रति ॥ २४ ॥ सोऽथ गच्छन् पुरो यान्तीं, कुब्जामास्फाल्य तां रयात् ॥ कलायाः कौशलाद्विद्या–प्रयोगाच्च व्यधादृजुम् ॥ २५ ॥ ततस्सविस्मयानन्दा, सा तं प्रावीविशद्गृहे ॥ देवदत्ताऽपि तं प्रेक्ष्य, बभूवाऽऽमोदमेदुरा ॥ २६ ॥ वामनस्याऽपि सा तस्य, वीक्ष्य लावण्यमद्भुतम् ॥ विस्मिता विष्टरे तुङ्गे, गौरवात्तं न्यषीविशत् ॥ २७ ॥ ततस्तया कुब्जिकया, दर्शयन्त्या निजं वपुः ॥ प्रोक्ते तच्चेष्टिते देव–दत्ता देवं विवेद तम् ॥२८॥ वैदग्ध्यगर्भैरालापैः, कुर्वन् गोष्ठीं तया समम् ॥ मूलदेवो मनस्तस्याः, स्ववशं विदधे द्रुतम् ॥ २९ ॥ यतः–"अणुणयकुसलं परिहा–सपेसलं लडहवाणिदुल्ललिअं ॥ आलवणंपि हु च्छेआ– ण कम्मणं किं च मूलीहिं ? ॥३०॥" अथैको वैणिकस्तत्रा–ऽऽययौ वीणाविशारदः ॥ आदेशाद्देवदत्तायाः, सोऽपि वीणामवीवदत् ॥ ३१ ॥ तामाकर्ण्य प्रमुदिता, देवदत्तैवमब्रवीत् ॥ साधु साधु त्वया वीणा, वादिता वरवैणिक ! ॥ ३२ ॥ स्मित्वाऽथ वामनः प्रोचे–ऽवन्तीलोकोऽखिलोप्यहो ॥ शुभाशुभविभागं द्राग्, वेत्ति कामं विचक्षणः ! ॥ ३३ ॥ देवदत्ता तदाकर्ण्य, साशङ्केति शशंस तम् ॥ महात्मन् ! किमिह क्षुण्णं, विद्यते यद्वदस्यदः ? ॥ ३४ ॥ सोऽवादीत्किमपि न्यूनं, वर्त्तते न भवादृशाम् ॥ किन्तु वंशः सशल्योऽय–मस्ति तन्त्री च गर्भिणी ॥ ३५ ॥ विद्वन् ! कथमिदं ज्ञेय–मित्युक्ते देवदत्तया ॥ सोऽप्येतद्दर्शयामीति, वदन् वीणामुपाददे ॥ ३६ ॥ तंत्र्याः केशं दृषत्खण्डं, वंशाच्चाकृष्य दत्तवान् ॥ तां चाशु प्रगुणीकृत्य, स्वयं वीणामवादयत् ॥ ३७ ॥ व्यक्तग्रामस्वरां ग्राम–रागसङ्क्रममञ्जुलाम् ॥ अतुच्छमूर्च्छनां लोक–कर्णपान्थसुधाप्रपाम् ॥ ३८ ॥ मञ्जुघोषवतीं घोष–वतीमाकर्ण्य तां रयात् ॥ देवदत्ता सतत्रासी–त्परतन्त्रमना भृशम् ! ॥ ३९ ॥ [ युग्मम् ] करेणुरेका पूत्कार–शीलाऽभूत्तद्गृहान्तिके ॥ तद्वीणाक्वणितं श्रुत्वा, साऽपि तूष्णीकतां दधौ ! ॥ ४० ॥ देवदत्ता ततः स्नेहो–दञ्चद्रोमोद्गमाऽवदत् ॥ अहो ! विदग्ध ! वैदग्ध्य–मिदं ते जगदुत्तमम् ॥४१॥ विपञ्चीवादने दक्षा, वाणीतुम्बुरुनारदाः ॥ गीयन्ते ये बुधैर्विश्वे, ते विश्वेऽपि जितास्त्वया ॥ ४२ ॥ वैणिकोऽपि तदा नत्वा, तस्य पादाब्जयोऽवदत् ॥ विपञ्चीवादनं सद्यः, प्रसद्य मम शिक्षय ॥ ४३ ॥ धूर्त्ताधिपोऽभ्यधान्नाहं, सम्यग्जानामि वल्लकीम् ॥ अस्ति किन्तु दिशि प्राच्यां, पाटलीपुत्रपत्तनम् ॥ ४४ ॥ तत्र विक्रमसेनाह्वः, कलाचार्योऽस्ति धीनिधिः ॥ मूलदेवोऽहञ्च किञ्चि–द्वीणां विद्वस्तदाश्रयात् ॥ ४५ ॥ विपञ्चीवादनाम्नायं, सम्पूर्णं तु त एव हि ॥ कलयन्ति कलाकेलि–निलयाः कुशलोत्तमाः ! ॥ ४६ ॥ नाट्याचार्योऽथ तत्राऽऽगा–द्विश्वभूतिर्महामतिः ॥ वामनायावदद्देव–दत्ता तं भरतोपमम् ॥ ४७ ॥ मूलदेवोऽब्रवीदेत–च्छिक्षितायाः पुरस्तव ॥ अस्त्ययं भरतः किन्तु, विशेषो ज्ञास्यतेऽधुना ॥ ४८ ॥ विचारं भारतं तस्या–ऽप्राक्षीद्धूर्त्ताधिपस्ततः ॥ विश्वभूतिस्तु तं मूढो–ऽवमेने वामनत्वतः ॥ ४९ ॥ ततः स तस्य भरत–व्याख्यां स्वैरं वितन्वतः ॥ पूर्वापरविरोधाख्यं, दोषं तत्रोदभावयत् ॥ ५० ॥ उवाचानुचितं किञ्चि–द्विश्वभूतिस्ततो रुषा ॥ सोपहासं शशंसैवं, मूलदेवोऽपि तं तदा ॥ ५१ ॥ रङ्गाचार्याङ्गनास्वेव, त्वमेवं नाटयेः क्रुधम् ॥ न त्वन्यत्रेति तेनोक्ते, ह्रीणो मौनं बभार सः ॥ ५२ ॥ देवदत्ताऽथ तं खर्वं, पश्यन्ती स्निग्धया दृशा ॥ विश्वभूतेर्विलक्षत्व–मपनेतुमदोऽवदत् ॥ ५३ ॥ भवन्तो नाधुना स्वस्थाः, सन्ति कार्याकुलत्वतः ॥ ततो विमृश्य वक्तव्यः, प्रश्नस्यार्थः क्षणान्तरे ! ॥ ५४ ॥ जायते नाट्यवेला त–द्देवदत्ते ! व्रजाम्यहम् ॥ एवं वदंस्ततो विश्व–भूतिस्तस्या गृहाद्ययौ ॥ ५५ ॥ देवदत्ताऽथ सम्मान्य, वैणिकं विससर्ज तम् ॥ भोजनावसरे जाते, चेटिकां चैवमभ्यधात् ॥ ५६ ॥ आहूयतामङ्गमर्दः, कोऽपि स्नानार्थमावयोः ॥ उवाच खर्वः कुर्वेह–मभ्यङ्गं ते यदीच्छसि ! ॥ ६७ ॥ देवदत्ताऽवददक्ष !, त्वमेतदपि वेत्सि किम् ? ॥ सोवादीद्वेद्मि नो किन्तु, तज्ज्ञपार्श्वे स्थितोस्म्यहम् ॥ ५८ ॥ दास्यानीतं गृहीत्वाऽथ, पक्वतैलं स वामनः ॥ प्रारेभेऽभ्यञ्जनं तेन, वशीचक्रे च तन्मनः ॥ ५९ ॥ अहो ! सर्वकलादाक्ष्यं, पाणिस्पर्शोप्यहो ! मृदुः ॥ तन्नसर्वथा न सामान्यः, किन्तु सिद्धपुमानसौ ॥ ६० ॥ प्रकृत्येदृशरूपस्य, न स्युरेतादृशा गुणाः ॥ प्रच्छन्नं रूपमेतस्य, तत्प्रादुष्कारयाम्यहम् ॥ ६१ ॥ देवदत्तेति सञ्चिन्त्य, तत्पादाब्जे प्रणम्य च ॥ इत्युवाच गुणैरेव, ज्ञातं ते रूपमद्भुतम् ! ॥ ६२ ॥ दक्षो दाक्षिण्यवान् सिद्ध–पुमानाश्रितवत्सलः ॥ महाभागश्च मे ख्यात–स्त्वं गुणैरेव तादृशैः ॥ ६३ ॥ तत्ते स्वाभाविकं रूपं, द्रष्टुमुत्कण्ठते मनः ॥ त्यक्त्वा मायामिमां कृत्वा, कृपां तन्मे

प्रदर्शय ॥ ६४ ॥ इत्थं तया सनिर्बन्ध-मुदितो मुदितोऽथ सः ॥ आकृष्य गुटिका रूप-विपर्ययकरीं मुखात् ॥६५॥ नवयौवनलावण्य-मञ्जुलं स्मरजित्वरम् ॥ आविश्चक्रे निजं रूपं, जगज्जनमनोहरम् ॥ ६६ ॥ [ युग्मम् ] ततस्तं दृक्च-कोरैकै-चन्द्रं लवणिमोदधिम् ॥ वीक्ष्य हर्षोल्लसद्रोम-हर्षोच्चैः सा विसिष्मिये ॥ ६७ ॥ प्रसादो मे महांश्चक्रे, युष्मा-भिरिति वादिनी ॥ देवदत्ता वितेनेऽथ, तदङ्गाभ्यंगमात्मना ॥ ६८ ॥ अथ द्वावपि तौ स्नात्वा, व्यधत्तां सह भोज-नम् ॥ देवदूष्ये ततो देव-दत्तादत्ते स पर्यधात् ॥ ६९ ॥ ततो विदग्धगोष्ठीं तौ, क्षणं रहसि चक्रतुः ॥ मूलदेवं तदा देव-दत्तैवमवदन्मुदा ॥ ७० ॥ परो लक्षा नरा दक्षा, महात्मन् ! वीक्षिता मया ॥ न तु त्वामन्तराऽन्येन, हृतं केनापि मे मनः ! ॥ ७१ ॥ यतः—"नयणेहिं को न दीसइ, केण समाणं न होंति उल्लावा ॥ हिअयाणंदं जं पुण, जणयइ तं माणुसं विरलं ॥ ७२ ॥" किञ्च—"भवन्ति सगुणाः केऽपि, कुरूपा मृगनाभिवत् ॥ इन्द्रवारुणवत्केऽपि, रूपवन्तोऽपि निर्गुणाः ॥ ७३ ॥ ये तु मन्दारवद्रूप- वन्तः सारगुणान्विताः ॥ ते चिन्तामणिवत्पृथ्व्यां, दुर्लभाः स्युर्भवादृशाः ! ॥ ७४ ॥" नाथामि तदहं नाथ !, नाऽथ कार्या विचारणा ॥ यथा स्थितोऽसि मच्चित्ते, तथा स्थेयं ममालये ॥ ७५ ॥ सोऽथाऽऽवादीदयि ! द्रव्य-हीने वैदेशिके मयि ॥ प्रतिबन्धो न ते युक्तो, भ्रमर्या इव किंशुके ! ॥ ७६ ॥ सर्वेषामपि जन्तूनां, प्रेम स्यात्सधने जने ॥ अर्थमात्रैषिणां वेश्या-जनानां तु विशेषतः !॥ ७७ ॥ गुणा-नुरागाद्गणिका, यदि स्यान्निर्धने रता ॥ तदा ह्युपार्जनाभावा-त्सीदेत्तस्याः कुलं सदा ! ॥ ७८ ॥ वेश्या स्माह गुण-ज्ञानां, प्रेम्णो मानसजन्मनः ॥ धनं निबन्धनं न स्या-द्गुणाः किन्तु निबन्धनम् ॥ ७९ ॥ धनं हि बाह्यमिभ्यास्त-द्बहिरेव स्पृशन्ति नः ॥ चित्ते तु त्वादृशा एव, प्रविशन्ति कलाधनाः ! ॥ ८० ॥ यतः—"सज्जनानां वचो द्रव्य-सहस्रादतिरिच्यते ॥ स्निग्धं चालोकितं लक्षा-त्सौहार्दं कोटितस्तथा ॥ ८१ ॥ स्वदेशः परदेशश्चा-ऽन्येषां न तु कलावताम् ॥ सकलो हि शशीव स्या-त्पूजनीयो जगत्त्रये ॥ ८२ ॥" तदन्वहं त्वयाऽवश्य-मागन्तव्यं ममौकसि ॥ सनिर्बन्धं तयेत्युक्तः, प्रतिपेदे स तद्वचः ॥ ८३ ॥ ततो मिथोऽनुरक्तौ तौ, तुल्यचातुर्यशालिनौ ॥ चिरं चिक्रीडतुः स्वैरं, करेणुकरिणाविव ॥ ८४ ॥ देवदत्ताऽथ नृत्यार्थ-माहूता राजवेत्रिणा ॥ मूलदेवं सहादाय, ययौ पार्थिवपर्षदि ॥ ८५ ॥ उद्दामकरणं तत्र, नाटकं निर्ममे च सा ॥ पटहं वादयंस्तां चा-ऽनर्तयद्धूर्तनायकः ॥ ८६ ॥ वीक्ष्य तं नाटकं कान्तं, भूकान्तो विस्मितो भृशम् ॥ याचस्व वरमित्यूचे, न्यासीचक्रे तया तु सः ॥ ८७ ॥ गाढप्रेमा ततो मूल-देवे देव इवाप्सराः ॥ देवदत्ता समं तेन, सौख्यमन्वहमन्वभूत् ॥ ८८ ॥ मूलदेवस्तु तत्रापि, न द्यूतव्यसनं जहौ ॥ ततस्तं देवदत्तैव-मूचे सानुनयं रहः ॥ ८९ ॥ कलङ्कस्त्वादृशां द्यूतं, वैरस्यमिव वारिधेः ॥ तदिदं व्यसनं श्रीणां, व्यसनं मुञ्च वल्लभ ! ॥ ९० ॥ तयेत्युक्तोऽपि नाऽत्याक्षी-न्मूलदेवस्तु देवनम् ॥ दुस्त्यजं व्यसनं प्रायो, विशां गुणव-तामपि ! ॥ ९१ ॥ तस्यां पुर्यां सार्थवाहो-ऽचलाह्वोऽभून्महाधनः ॥ स तु पूर्वं मूलदेवा-द्देवदत्तारतोऽभवत् ॥ ९२ ॥ बयत्साऽमार्गयत्तत्त-स्सोऽदात्तस्यै धनादिकम् ॥ प्राणानपि जनो रागी, दत्ते वित्तस्य का कथा ! ॥ ९३ ॥ तत्राऽऽ-यान्तं मूलदेवं, ज्ञात्वा सोऽन्तः क्रुधं दधौ ॥ रोषः स्यात्प्राणिनां प्रायः, एकद्रव्याभिलाषिणाम् ! ॥ ९४ ॥ छिद्राणि मूलदेवस्या-ऽन्वेषयामास सोऽन्वहम् ॥ तद्भिया न ययौ तस्याः, सौधे धूर्त्तो विना छलम् ॥ ९५ ॥ अथोचे देवदत्तां त-न्माता कैतवसेवधिम् ॥ कितवं मूलदेवाह्वं, निर्द्रव्यं मुञ्च नन्दने ! ॥ ९६ ॥ भूरिवित्तप्रदे नित्य-मचले निश्चला भव ॥ एकत्र कोशे द्वौ खड्गौ, न हि मातः कदाचन ! ॥ ९७ ॥ देवदत्ताऽब्रवीन्मातः !, केवलं धनरागिणी ॥ नास्म्यहं किन्तु मे भूयान्, प्रतिबन्धो गुणोपरि ! ॥ ९८ ॥ क्रोधाध्माताऽवदन्माता, धूर्त्ते स्युस्तत्र के गुणाः ? ॥ देवदत्ता ततोऽवादी-त्तद्गुणाक्षिप्तमानसा ॥ ९९ ॥ दक्षो दाक्षिण्यवान् धीरः, कलावेदी प्रियंवदः ॥ दाता विशेषवि-च्चायं, तन्नैवाऽमुं जहाम्यहम् ॥ १०० ॥ ततः सा कुट्टिनी कोपा-विष्टा दुष्टा निजाङ्गजाम् ॥ प्रतिबोधयितुं नैकान्, दृष्टान्तानिस्यदीदृशत् ॥ १०१ ॥ सा यावकेऽर्थितेऽदात्तं, नीरसं दारु चन्दने ॥ माल्ये निर्माल्यमिक्षौ च, तत्प्रान्तं नीरमासवे ॥ १०२ ॥ किमेतदिति सा पुत्र्या, पृष्टा चैवमवोचत ॥ इदं यादृक्प्रियस्तेऽसौ, तादृक् तं मुञ्च तद्रुतम् ॥ १०३ ॥ देवदत्ताऽभ्यधान्मातः !, परीक्षामविधाय किम् ॥ तमेतत्सममाख्यासि, मूर्खो मणिमिवोपलम् ? ॥ १०४॥ परीक्ष्यतामयं तर्हि, जनन्येत्युदिता सुता ॥ इक्षून् प्रार्थयितुं दासीं, प्राहिणोदचलान्तिके ॥ १०५ ॥ देवदत्ता याचते त्वा-मिक्षूनिति तयोदितः ॥ इक्षुभिः शकटं भृत्वा-ऽचलः प्रैषीत्प्रमोदतः ॥ १०६ ॥ तद्दृष्ट्वाऽक्काऽवदत्पश्या-ऽचल-सौदार्यमद्भुतम् ॥ प्रैषीन्मानातिगानिक्षून्, कल्पवृक्ष इवाशु यः ॥ १०७ ॥ ततः सुता जगौ मात-र्यद्यहं स्यां करे-

णुका ॥ तदा ममोपयुज्यन्त, इक्षवोऽमी असंस्कृताः ॥ १०८ ॥ अत्रैवार्थे मूलदेवो-ऽप्यादेष्टव्यो भुजिष्यया ॥ इयो-
रपि तयोर्मात-र्विशेषो ज्ञायते यथा ॥ १०९ ॥ इत्युक्त्वा मूलदेवान्ते, प्रैषीत्सा माधवीलताम् ॥ साप्यस्ति देवद-
त्ताया, इक्षुश्रद्धेति तं जगौ ॥ ११० ॥ ततस्स पंचपानिक्षु-नादायापास्य तत्त्वचम् ॥ मुक्त्वा मूलाग्रपर्वाणि, चतुरङ्गुल
गण्डिका व्यधात् ॥ १११ ॥ कर्पूरवासितास्ताश्च, चातुर्जातकसंस्कृताः ॥ शूलप्रोताः शरावान्त', क्षिप्त्वा प्रैषीत्तदा-
कृताः ॥ ११२ ॥ ताः प्रेक्ष्य मुदिता देव-दत्ताऽऽख्यज्जननीमिति ॥ अनयोरन्तरं पश्य, काचवैडूर्ययोरिव ! ॥ ११३ ॥
तदहं तद्गुणैरेव, तस्मिन् रक्तास्मि नान्यथा ॥ अक्का दध्यौ नैनमेषा, त्यजत्यत्यन्तमोहिता ॥ ११४ ॥ करोम्युपायं
तत्कञ्चि-द्येनायं कामुकः स्वयम् ॥ पुर्या निर्याति जाल्मल्या', पाठेनेव गृहादहिः ॥११५॥ ध्यात्वेति शम्भली स्माहा-
ऽचलं कैतवकोविदा ॥ ग्रामान्तरं गमिष्यामी-त्यलीकं ब्रूहि मे सुताम् ॥ ११६ ॥ तमाहास्यति धूर्त्तं सा, ज्ञात्वा
त्वामन्यतो गतम् ॥ तदा भटैर्वृतः सज्जै-मैत्सङ्केतात्त्वमापतेः ॥ ११७ ॥ धूर्त्ततामृगधूर्त्तं च, तं तथैवापमानयेः ॥
यथाभूयोऽत्र नागच्छे-त्सर्पधास्नीव मूषकः ॥ ११८ ॥ तत्स्वीकृत्याऽचलो देव-दत्तायै स्वं वितीर्यच ॥ ग्रामं यामी-
त्युदित्वा च, निरगात्तन्निकेतनात् ॥ ११९ ॥ निःशंका देवदत्ताऽथ, मूलदेवमवीविशत् ॥ अक्कावाचाऽचलोप्यागा-
त्तत्र सत्रोद्भटैर्भटैः ॥ १२० ॥ तं चाऽऽयान्तं वीक्ष्य देव-दत्ता तस्मै न्यवेदयत् ॥ ततो भीतो मूलदेव-स्तल्पस्याधो
न्यलीयत ॥ १२१ ॥ शय्याधःस्थं च तं ज्ञात्वा, शम्भलीसंज्ञयाचलः ॥ तत्रोपविश्य पल्यङ्के, देवदत्तामिदं जगौ
॥ १२२ ॥ स्नास्याम्यहं देवदत्ते !, स्नानीयं प्रगुणीकुरु ॥ साऽवादीदासने तर्हि, स्नानार्हेऽत्रोपविश्यताम् ॥ १२३ ॥
स प्रोचेऽत्रैव पर्यङ्के-ऽभ्यक्तः स्नातश्च साम्बरः ॥ स्वप्नेऽद्याऽहं स च स्वप्नो, भवेत्सत्यापितः श्रियै ॥ १२४ ॥ स्नास्या-
म्यहं तदत्रैव, तेनेत्युक्ते जगाद सा ॥ स्वामिन्नेवमिदं हृद्यं, तूलिकादि विनंक्ष्यति ॥ १२५ ॥ अचलोऽप्यऽब्रवीत्तर्हि,
दास्ये सर्वमितः शुभम् ॥ अक्काप्युवाच किं पुत्रि !, भर्तुरिष्टं करोषि न ॥ १२६ ॥ ततः परवशा देव-दत्ता दूनमना
अपि ॥ अभ्यज्योद्वर्तयामास, पर्यङ्कस्थितमेव तम् ॥ १२७ ॥ उष्णैः खलिजलाद्यैस्तं, स्नपयामास सा ततः ॥ तल्पा-
धःस्थो मूलदेव-स्तैरभ्रियत सर्वतः ॥ १२८ ॥ सोऽथ दध्यौ ममाप्यद्या-ऽऽपतितं व्यसनं महत् ॥ प्राणिनः प्राज्य-
रागस्य, किं वा दुःखं न सम्भवेत् ! ॥ १२९ ॥ यतः—"देशत्यागं वह्नितापं, कुट्टनं च मुहुर्मुहुः ॥ रागातिरेकात्स्वं-
जिष्ठा-ऽप्यश्नुते किं पुनः पुमान् ! ॥ १३० ॥" तदिदानीमुपायं कं, कुर्वे तिष्ठामि यामि वा ॥ दिग्मूढवदिति ध्यायं-
स्तत्रास्थाद्धूर्तराट् तदा ॥ १३१ ततोऽचलभटान् दृष्टि-संज्ञयाऽऽहूय कुट्टिनी ॥ तयैवाऽचलमादिक्ष-द्धूर्तो निष्काश्य-
तामिति ॥ १३२ ॥ ततस्तमचलो धृत्वा, केशपाशे समाकृषत् ॥ इति चोवाच रे ! ब्रूहि, शरणं तव कोऽधुना ?
॥ १३३ ॥ मया भूरितरैर्वित्तैः, स्वीकृतां गणिकामिमाम् ॥ रिरंसोस्तेऽधुना ब्रूहि, कुर्वेऽहं कस्य निग्रहम् ? ॥ १३४ ॥
मूलदेवोऽथ परितः, प्रेक्ष्य शस्त्रोद्भटान् भटान् ॥ इति दध्यौ बलं कुर्वे, चेत्तदा जीवितं क्व मे ? ॥ १३५ ॥ निरा-
युधोऽहं कर्तव्यं, वैरनिर्यातनं च मे ॥ तद्बलावसरो नाय-मिति ध्यात्वेत्युवाच सः ॥ १३६ ॥ यत्तुभ्यं रोचते तत्त्वं,
साम्प्रतं कुरु सत्वरम् ॥ तच्छ्रुत्वाऽचिन्तयत्सार्थ-पतिरित्थं महामतिः ॥ १३७ ॥ महापुरुष इत्येष, रूपेणैव निरू-
प्यते ॥ सुलभानि च संसारे, व्यसनानि सतामपि ! ॥ १३८ ॥ यदुक्तं—"कस्य स्यान्न स्खलितं, पूर्णाः सर्वे मनो-
रथाः कस्य ॥ कस्येह सुखं नित्यं, दैवेन न खण्डितः को वा ? ॥ १३९ ॥" दैवादापदमापन्न-स्तन्नायं निग्रहोचितः ॥
विमृश्येत्यचलः प्रोचे, मूलदेवं महामनाः ! ॥ १४० ॥ इतोऽपराधान्मुक्तोऽसि, प्रासोप्येनां दशां मया ॥ तत्त्वया-
प्युपकर्तव्य-मीदृशे समये मम ! ॥ १४१ ॥ तेनेत्युक्त्वा विमुक्तोसौ, सद्यो निर्गत्य तद्गृहात् ॥ पुरीवहिःस्थे सरसि,
स्नात्वा वस्त्राणि धौतवान् ॥ १४२ ॥ दध्यौ चेत्युन्मना मायां, कृत्वाऽनेनाऽस्मि वञ्चितः ॥ तदुपायं वैरशुद्धेः, क्वापि
गत्वा करोम्यहम् ! ॥ १४३ ॥ ध्यायन्नित्यचलन्मूल-देवो वेण्णातटं प्रति ॥ तत्र मार्गेऽटवीं चैकां, प्राप द्वादशयो-
जनीम् ॥ १४४ ॥ विना सहायं दुष्प्राप-पारां तामवधारयन् ॥ सहायं मार्गयन्मार्ग-मुखेऽटव्याः स तस्थिवान्
॥ १४५ ॥ तदा च सुन्दराकारः, शम्बलस्थगिकाधरः ॥ विप्रः कुतोऽपि टक्काह्व-जातिस्तत्र समाययौ ॥ १४६ ॥
पृष्टस्ततोऽवदन्मूल-देवस्तमिति सादरम् ॥ कियद्दूरं क्व च ग्रामे, गन्तव्यं ते द्विजोत्तम ! ॥ १४७ ॥ द्विजो जगाद
यास्यामि, कान्तारात्परतः स्थितम् ॥ ग्रामं वीरनिधानाख्यं, ब्रूहि क्व त्वं गमिष्यसि ? ॥ १४८ ॥ धूर्तोऽभ्यधत्त
गन्तव्यं, मम वेण्णातटे पुरे ॥ द्विजोऽवादीत्तदाऽऽगच्छा-तिगच्छावो यथाऽटवीम् ॥ १४९ ॥ तौ व्रजन्तौ वने
मध्यं-दिने पल्वलमापतुः ॥ क्षणं विश्रम्यतामत्रे-त्यूचे तत्राऽपरं द्विजः ॥१५०॥ ततः प्रक्षाल्य वदन-पाणिपादादि

धूर्त्तराट् ॥ द्रुच्छायामाश्रयत् स्निग्ध–वधूवत्खेदहारिणीम् ॥ १५१ ॥ विप्रस्तु स्थगिकामध्या–त्सक्तूनाऽऽकृष्य वारिणा ॥ आर्द्रयामास तान् भोक्तुं, चैक एवोपचक्रमे ॥ १५२ ॥ धूर्तो दध्यौ क्षुधार्तत्वा–द्भोज्यं नाऽऽदावऽदान्मम ॥ भुक्त्वा तृप्तः पुनरयं, ममाऽप्येतत्प्रदास्यति ! ॥ १५३ ॥ विप्रस्तु मार्गमित्राया–ऽप्यस्मै नो किञ्चिदप्यदात् ॥ याचको हि स्वयं प्रायो–ऽन्यस्मै दातुं न शक्नुयात् ! ॥ १५४ ॥ विप्रेऽथ स्थगिकां बद्ध्वा, पुरतः प्रस्थिते सति ॥ धूर्तेशोऽनुव्रजन् दध्या–वपराह्णे प्रदास्यति ! ॥ १५५ ॥ द्विजस्तथैव सायाह्ने–ऽप्यभुक्ताऽस्मै तु नो ददौ ॥ कल्ये दास्यत्यसौ नून–मिति दध्यौ च धूर्तपः ॥१५६॥ पुरो यान्तौ च तौ रात्रौ, जातायां वटसन्निधौ ॥ मार्गं मुक्त्वा सुषुपतुः, प्रभाते च प्रचेलतुः ॥ १५७ ॥ जाते मध्यंदिने प्राग्व–द्विप्रो भुङ्क्ते स्म नत्वदात् ॥ मूलस्त्वाशातन्तुबद्ध–जीवितः पुरतोऽचलत् ! ॥ १५८ ॥ तृतीये तु दिने मूल–देवो दध्यौ क्षुधातुरः ॥ तीर्णप्रायाटवी तस्मा–दद्यावश्यं प्रदास्यति ॥ १५९ ॥ तत्राप्यह्नि द्विजो नादा–त्तीर्णेऽरण्ये जगौ तु तम् ॥ वयस्य ! तव मार्गोयं, मम चायं व्रजामि तत् ॥ १६० ॥ मूलदेवोऽभ्यधाद्भट्ट !, त्वत्साहाय्यादियं मया ॥ तीर्णा महाटवी तुम्ब–महिम्नेव महानदी ॥ १६१ ॥ कार्योत्पत्तौ ततो मूल–देवनाम्नो ममान्तिके ॥ वेण्णातटे त्वमागच्छे–र्नामाऽऽख्याहि निजं च मे ॥ १६२ ॥ अहं निर्घृणशर्मेति, जनैर्दत्तापराभिधः ॥ द्विजोऽस्मि सद्धडो नामे–त्युदित्वा सोऽगमत्ततः ॥ १६३ ॥ प्रति वेण्णातटं गच्छन्, मूलदेवस्ततोऽन्तरा ॥ वसन्तं ग्राममैक्षिष्ट, भिक्षार्थं तत्र चागमत् ॥ १६४ ॥ भ्रामं भ्रामं तत्र लेभे, कुल्माषानेव केवलान् ॥ तानादाय प्रतस्थेऽथ, मूलः प्रति जलाशयम् ॥ १६५ ॥ अत्रान्तरे तपस्तेज–स्तर्णिं शान्तचेतसम् ॥ मासोपवासिनं साधु–मायान्तं ग्रामसंमुखम् ॥ १६६ ॥ समीक्ष्य मुदितो मूल–देव एवमचिन्तयत् ॥ धन्योऽहं यन्मया दृष्टः, समयेऽस्मिन्नसौ मुनिः ॥ १६७ ॥ [ युग्मम् ] यथा भवेन्मरुस्थल्यां, दुर्लभस्त्रिदशद्रुमः ॥ तथारत्नत्रयाधारः, स्थानेऽत्राऽसौ महामुनिः ! ॥ १६८ ॥ ग्रामेऽस्मिन्कृपणे किञ्चि–दप्यसौ न च लप्स्यते ॥ लप्स्येऽहं तु पुनर्भोज्य–मत्र वाऽन्यत्र वा भ्रमन् ॥ १६९ ॥ इमान् विशुद्धान् कुल्माषां–स्तद्दत्वाऽस्मै महात्मने ॥ विवेकशाखिनं कुर्वे–ऽचिरात्सफलमात्मनः ! ॥ १७० ॥ ध्यात्वेत्युद्गतरोमाञ्चः, प्रमोदाश्रुविमिश्रदृक् ॥ भक्तिपूर्वं मूलदेवो, मुनिं नत्वैवमब्रवीत् ॥ १७१ ॥ व्यसनाम्भोधिपतिते, मयि कृत्वा कृपां प्रभो ! ॥ एतानादत्स्व कुल्माषा–न्मां च निस्तारय द्रुतम् ! ॥ १७२ ॥ द्रव्यादिशुद्धिं विज्ञाय, ततस्तानाददे यतिः ॥ ततः प्रमुदितो मूल–देव एवमवोचत ॥ १७३ ॥ धन्यानां हि नराणां स्युः, कुल्माषाः साधु पारणे ॥ तदा च वीक्ष्य तद्भक्तिं, हृष्टा काऽपि सुरीत्यवक् ॥ १७४ ॥ वत्स ! त्वया कृतं साधु, साधुभक्तिं वितन्वता ॥ ततः श्लोकोत्तरार्धेन, यत्तेऽभीष्टं वृणुष्व तत् ! ॥ १७५ ॥ मूलदेवोऽपि तां देवी–मवादीन्मुदितस्ततः ॥ देहि वेश्यां देवदत्तां, राज्यञ्चेभसहस्रयुक् ॥ १७६ ॥ देव्युवाचाऽचिरादेव, लप्स्यसे सर्वमप्यदः ॥ मूलदेवस्ततः साधुं, नत्वा ग्रामेऽगमत्पुनः ॥ १७७ ॥ भिक्षां तत्राऽपरां प्राप्य, भुक्त्वा च स पुरो व्रजन् ॥ प्राप वेण्णातटं पान्थ–शालायां तत्र चास्वपीत् ॥ १७८ ॥ निशायाश्चान्तिमे यामे, पूर्णेन्दुं निर्मलद्युतिम् ॥ स्वप्नेऽपश्यन्मूलदेवः, प्रविशन्तं निजानने ॥ १७९ ॥ तदा कार्पटिको–ऽप्येकोऽद्राक्षीत्स्वप्नं तमेव हि ॥ विनिद्रः स तु पप्रच्छा–ऽन्येषां स्वप्नफलं ततः ॥ १८० ॥ स्वप्नार्थं तस्य तत्रैव–मेकः कार्पटिकोऽवदत् ॥ मण्डकं साज्यमद्य त्वं, खण्डायुक्तं च लप्स्यसे ! ॥ १८१ ॥ स च कार्पटिकः प्राप, तावताऽपि परां मुदम् ॥ मूलदेवस्तु मूढानां, नो तेषां स्वप्नमब्रवीत् ॥ १८२ ॥ सोऽथ कार्पटिको लेभे, गेहाच्छादनकर्मणि ॥ यथोक्तं मण्डकं तथा–ऽन्येषां स्वेषां न्यवेदयत् ॥ १८३ ॥ प्रत्यूषे मूलदेवस्तु, गत्वोद्याने धिया निधिः ॥ मालिकं प्रीणयामास, कुसुमावचयादिना ॥ १८४ ॥ तुष्टस्तस्मै मालिकोऽपि, वरपुष्पफलान्यदात् ॥ तान्यादायाऽगमत्स्वप्न–शास्त्रकोविदधाम्निसः ॥ १८५ ॥ नत्वा दत्वा च पुष्पादि, पाठकाय न्यवेदयत् ॥ मूलदेवो निजं स्वप्नं, सोऽपि हृष्टोऽब्रवीदिति ॥१८६॥ वत्स ! वक्ष्याम्यहं स्वप्न–फलं तव शुभे क्षणे ॥ अद्यातिथी भवास्माकं, सोऽपि तत्प्रत्यपद्यत ॥ १८७ ॥ ततस्तं स्नपयित्वा च, भोजयित्वा च सादरम् ॥ उपाध्यायोऽभ्यधाद्वत्स !, कन्येयं परिणीयताम् ॥ १८८ ॥ मूलोऽवादीन्ममाज्ञात–कुलस्यापि निजां सुताम् ॥ तात ! दत्से कथं कारं, ततः सोऽप्येवमालपत् ॥ १८९ ॥ कुलं गुणाश्च ते वत्स !, मूर्त्यैव विदिता मया ॥ तदिमां मे सुतां सद्यः, पाणौ कृत्य कृतार्थय ! ॥ १९० ॥ इत्युक्त्वाऽध्यापकस्तस्मै, कन्यां दत्वैवमब्रवीत् ॥ संसरात्रान्तरे भावी, स्वप्नादस्मान्नृपो भवान् ! ॥ १९१ ॥ हृष्टस्ततो मूलदेव–स्तदावासे सुखं

---

१ मध्येसप्तदिन भावी ॥ इति 'ग' सञ्ज्ञकपुस्तके ॥

वसन् ॥ गत्वोद्याने पञ्चमेऽह्नि, चम्पकद्रुतलेऽस्वपीत् ॥ १९२ ॥ तदा च तत्पुराधीशः, प्रापापुत्रः परासुताम् ॥ ततोऽधिवासयामासुः, पञ्च दिव्यानि धीसखाः ॥ १९३ ॥ हस्त्यश्वछत्रभृङ्गार–चामरा मन्त्रवासिताः ॥ पुरीमध्ये भ्रमन् राज्य–योग्यं मर्त्यं तु नाऽऽश्रुवन् ! ॥ १९४ ॥ ततो बहिर्भ्रमन्तस्ते, मूलदेवं व्यलोकयन् ॥ प्रगुसमपरावृत्त–च्छायं चम्पकसन्निधौ ॥ १९५ ॥ ततश्चक्रे हयो हेषां, गजो गुलगुलायितम् ॥ अभिषेकं च भृङ्गार–श्चामरौ वीजनं तथा ॥ १९६ ॥ पुण्डरीकं च तस्योर्द्ध्वं, व्यकसत्पुण्डरीकवत् ॥ सुस्वामिप्राप्तिमुदितै–र्जनैश्चक्रे जयारवः ॥ १९७ ॥ ततस्तं सिन्धुरः सौव–स्कन्धेऽध्यारोपयत्स्वयम् ॥ प्रावीविशच नगरे, नागरैर्निर्मितोत्सवे ॥ १९८ ॥ राज्याभिषेकं तस्याऽथ, चक्रुः सामन्तमन्त्रिणः ॥ तदा च देवता व्योम्नि, व्यक्तमेवमवोचत ॥ १९९ ॥ "देवतानां प्रभावेणा–वाप्तराज्यः कलानिधिः ॥ एष विक्रमराजाह्वो, राजा मान्योऽखिलैर्जनैः ॥ २०० ॥ यस्त्वस्य भूपतेराज्ञा–मात्मद्वेषी न मंस्यते ॥ तमहं निग्रहीष्यामि, विद्युत्पात इवाङ्घ्रिपम् ॥ २०१ ॥" तन्निशम्याऽखिलं राज–मण्डलं भीतविस्मितम् ॥ तस्याऽवश्यमभूद्वश्यं, सौख्यं धर्मवतो यथा ॥ २०२ ॥ सोऽथ भूपो व्यधात्प्रीतिं, प्राभृतप्रेषणादिना ॥ विचारधवलाख्येनो–ज्जयनीस्वामिना समम् ॥ २०३ ॥

[इतश्च—] देवदत्ताऽपि तां प्रेक्ष्य, मूलदेवविडम्बनाम् ॥ इत्युवाचाऽचलं कोपा–वेशकम्पितविग्रहा ॥ २०४ ॥ रेमूढ ! किं त्वया ज्ञाता, परिणीतवधूरहम् ॥ यन्ममापि गृहेऽकार्षी–रसमञ्जसमीदृशम् ॥ २०५ ॥ अतः परं समागम्यं, नैवास्मद्वेश्मनि त्वया ॥ इत्युक्त्वा तं च निष्काश्य, गेहात्सागान्नृपान्तिकम् ॥ २०६ ॥ इत्यूचे च प्रभो ! दत्तं, तं वरं मम साम्प्रतम् ॥ नृपः प्रोचे यदिष्टं ते, तदाख्याहि यथा ददे ॥ २०७ ॥ मूलदेवं विना नान्यः, कोऽपि प्रेष्यो मदालये ॥ अचलश्चायमागच्छ–न्निवार्य इति साऽवदत् ॥ २०८ ॥ अस्त्वेवं किन्तु को हेतु–रिति पृष्टेऽथ भूभृता ॥ देवदत्ताज्ञयावार्तां, तामवोचत माधवी ॥ २०९ ॥ रुष्टोऽथ पार्थिवः सार्थ– वाहमाहूय तं जगौ ॥ रे ! किमत्राऽधिपोऽसि त्वं, यदेवं कुरुषे बलम् ? ॥ २१० ॥ देवदत्तामूलदेवौ, रत्नभूतौ पुरे मम ॥ यत्त्वया धर्षितौ तत्त्वां, मारयिष्यामि साम्प्रतम् ॥ २११ ॥ क्षुद्रेणानेन भूजाने !, किं हतेनेति वादिनी ॥ देवदत्ताऽमोचयत्तं, भूपश्चैत्यवदत्तदा ॥ २१२ ॥ अस्या वाक्येन मुक्तस्त्वं, यद्यप्यचल ! सम्प्रति ॥ तथापि मूलदेवेऽत्रा–ऽऽनीते शुद्धिर्भवेत्तव ॥ २१३ ॥ अचलोऽथ नृपं नत्वा–ऽन्वेषयामास सर्वतः ॥ मूलदेवं न तु प्राप, निर्भाग्य इव सेवधिम् ॥ २१४ ॥ तया न्यूनतया भूपा–द्भीतः सार्थपतिस्ततः ॥ अगात्पारसकूलं द्राग्, भाण्डान्यादाय वाहनैः ॥ २१५ ॥ इतश्च मूलदेवोऽपि, तद्राज्यमपि नीरसं ॥ मन्यमानो विना देव–दत्तां निर्लवणान्नवत् ॥ २१६ ॥ प्राहिणोद्देवदत्तायै, लेखं सद्दूतपाणिना ॥ साऽपि तं वाचयामासा–ऽऽनन्दापूर्णमना इति ॥ २१७ ॥ [ युग्मम् ] स्वस्ति वेण्णातटान्मूल–देवेनोज्जयनीस्थिता ॥ आलिंग्यालाप्यते देव–दत्ता चित्ताब्जहंसिका ॥ २१८ ॥ अस्तीह कुशलं देव– गुरुपादप्रसादतः ॥ त्वयाऽपि स्वाङ्गवार्तेत्व–वार्ता ज्ञाप्या मुदे मम ॥ २१९ ॥ किञ्च साधोर्मया दत्तं, दानं तद्वीक्ष्य मां सुरी ॥ ऊचे वरं वृणुष्वेति, ततोऽहमिति तां जगौ ॥ २२० ॥ देवदत्तासहस्रेभ–युक्तं राज्यं प्रदेहि मे ॥ ततो राज्यं मया लब्धं, तच्च व्यर्थं त्वया विना ! ॥ २२१ ॥ तत्सत्वरं त्वयाऽऽगम्य–मिहापृच्छ्य धराधरम् ॥ कालक्षेपश्च नात्रार्ये, कर्तव्य इति मङ्गलम् ॥ २२२ ॥ वाचयित्वेति सा तुष्टा, दूतमेवमभाषत ॥ अहं तदेकचित्तापि, कुर्वेऽपेक्षां पुरीपतेः ॥ २२३ ॥ हृष्टो दूतस्ततो गत्वा, भूपमेवं व्यजिज्ञपत् ॥ मूलदेवनृपो देव !, मन्मुखेनेति याचते ॥ २२४ ॥ स्वामिन्मे देवदत्तायां, निविडं प्रेम वर्त्तते ॥ तत्सा प्रेष्या यदा तस्या, युष्माकं च रुचिर्भवेत् ॥ २२५ ॥ ततः प्रोचे नृपो राज्य–मप्येतत्तस्य विद्यते ॥ तत्किं विक्रमराजेन, राज्ञैतन्मात्रमर्थितम् ? २२६ ॥ इत्युदित्वा देवदत्तां, समाकार्य नृपोऽलपत् ॥ भद्रे ! चिरेण सम्पूर्णं, तव चेतःसमीहितम् ! २२७ ॥ देवतादत्तराज्यश्रीः,प्राहिणोन्मूलदेवराट् ॥ त्वामानेतुं निजं मर्त्यं, तत्त्वया तत्र गम्यताम् ॥ २२८ ॥ इत्यवन्तीनृपेणोक्ता, सागाद्वेण्णातटं क्रमात् ॥ तां च प्रावीविशन्मूल–देवराट् सोत्सवं पुरे ॥ २२९ ॥ सोऽथ वैषयिकं सौख्यं, भुञ्जानो देवदत्तया ॥ धर्मकृत्यं व्यधान्नित्य–मर्हच्चैत्यार्चनादिकम् ॥ २३० ॥

इतश्चागण्यपण्यौघं, भृत्वा पारसकूलतः ॥ आगाद्वेण्णातटेऽन्येद्यु–, सार्थवाहोऽचलाह्वयः ॥ २३१ ॥ किं नामात्र नृपोऽस्तीति, तत्र लोकान् स पृष्टवान् ॥ राजा विक्रमराजाख्यो, वर्ततेऽत्रेति ते जगुः ॥ २३२ ॥ ततः स्वर्णमणीमुक्ता–भृतस्थालोपदां दधत् ॥ क्ष्मापालं प्रेक्षितुं सोऽगा–द्भूपोप्यासनमार्पयत् ॥ २३३ ॥ तमुपालक्षयन्मंक्षु, भूपो भूपं तु नाऽचलः ॥ श्रेष्ठिन् ! कुतस्त्वमायासी–रित्यप्राक्षीन्नृपोऽथ तम् ॥ २३४ ॥

प्रत्युवाचाऽचलः स्वामि–न्नागा पारसकूलतः ॥ ततस्तं वार्तयामास, प्रजानाथः सगौरवम् ॥ २३५ ॥ भाण्डं दर्शयितुं पञ्च–कुले तेनाऽथ याचिते ॥ भूपोऽभ्यधात्समेष्यामः, कौतुकेन स्वयं वयम् ॥ २३६ ॥ महाप्रसाद इत्युक्ते–ऽचलेनाऽथ नृपो ययौ ॥ तत्सार्थस्थानमास्थानं, धियां पञ्चकुलान्वितः ॥ २३७ ॥ मञ्जिष्ठाक्रमुकादीनि, सोऽपि भाण्डान्यदर्शयत् ॥ ततोऽवदन्नृपो भाण्ड–मिदमेवास्ति किं तव ? ॥ २३८ ॥ भाण्डं ममेदमेवास्ती–त्युक्ते तेन नृपोऽवदत् ॥ सत्यं ब्रूया न चेच्छुल्क–चौर्यो विग्रहनिग्रहः ॥ २३९ ॥ नान्यस्यापि पुरोलीकं, वचूम्यहं किं पुनः प्रभो ! ॥ तेनेत्युक्ते नृपोऽवादी–दिति पञ्चकुलं प्रति ॥ २४० ॥ अर्धदानं श्रेष्ठिनोऽस्य, क्रियतां सत्यवादिनः ॥ किन्तु भाण्डानि सर्वाणि, तोलनीयानि मे पुरः ॥ २४१ ॥ तेषां च तोलने भार–वैषम्यादङ्घ्रिघाततः ॥ वंशवेधाच्च मञ्जिष्ठा–द्यंतर्मेने नृपोऽपरम् ॥ २४२ ॥ भाण्डस्थानानि सर्वाणि, नरेन्द्रोऽभेदयत्ततः ॥ तेभ्यो मुक्तास्वर्णरूप्य–विद्रुमादि विनिर्ययौ ॥ २४३ ॥ तत्प्रेक्ष्योत्पन्नकोपेना–ऽचलोऽवध्यत भूभृता ॥ अरे प्रत्यक्षचौरोऽयं, वध्यतामिति वादिना ! ॥ २४४ ॥ मुक्त्वा भटांश्च तत्सार्थ–स्थानेऽगात्पार्थिवो गृहम् ॥ आरक्षकोऽपि तं बद्ध–मनैषीद्भूपसन्निधौ ॥ २४५ ॥ गाढबद्धं च तं दृष्ट्वा, छोटयित्वा च भूधवः ॥ सार्थवाह ! किमु त्वं मां, सञ्जानासीति पृष्टवान् ? ॥ २४६ ॥ सोऽवादीद्भुवनोद्योत–करं वैरितमोहरम् ॥ त्वां जनेशं दिनेशं च, नो जानाति जडोऽपि कः ? ॥ २४७ ॥ चाटुवाक्यैः कृतं सम्यक्, यदि वेत्सि तदा वद ॥ नृपेणेत्युदितः प्रोचे–ऽचलस्तर्हि न वेद्म्यहम् ॥ २४८ ॥ ततः पृथ्वीपतिर्देव–दत्तामाहूय तं तथा ॥ अदर्शयत्तां च वीक्ष्या–ऽचलोऽभूद्व्याकुलो भृशम् ॥ २४९ ॥ ततो विलक्षं क्ष्मान्यस्ते–क्षणं ह्रीणमधोमुखम् ॥ विस्मयस्मेरनयना, देवदत्तेति तं जगौ ॥ २५० ॥ दैवाद्विपदमासस्य, कार्यमेवं त्वयाऽपि मे ॥ तदेत्युक्तस्त्वया योऽभू–न्मूलदेवोऽयमस्ति सः ॥ २५१ ॥ तदिदं व्यसनं वित्त–देहसन्देहसाधनम् ॥ प्राप्तोऽपि त्वं विमुक्तोऽसि, राज्ञा दीनदयालुना ॥ २५२ ॥ वीक्षापन्नोऽथ स श्रेष्ठी, प्रणिपत्य तयोः क्रमान् ॥ इत्युवाचाखिलान्मन्तून्, सहध्वं मे तदाकृतान् ॥ २५३ ॥ आगसा कुपितस्तेन, विचारधवलोनृपः ॥ प्रवेशमप्यवन्त्यां मे, युष्मद्वाचैव दास्यति ॥ २५४ ॥ नरदेवोऽवदद्देव–दत्तादेवी यदा त्वयि ॥ प्रसादमकरोन्मन्तु–र्मया सोढस्तदैव ते ॥ २५५ ॥ ततोऽचलः प्रमुदितो, भूयोऽपि प्रणनाम तौ ॥ स्नपयित्वाऽभोजयत्तं, देवदत्ताऽपि सादरम् ॥ २५६ ॥ भूपोऽपि भूरिमूल्यानि, दत्वा वासांसि तस्य तत् ॥ शुल्कं मुमोच सन्तोहि, द्विषामप्युपकारिणः ॥ २५७ ॥ दूतं दत्वाऽऽत्मनो गन्तु–मवन्त्यां व्यसृजच्च तम् ॥ अवन्तीशोऽपि तद्वाचा, प्रवेशं तस्य दत्तवान् ॥ २५८ ॥ विप्रो निर्घृणशर्माऽपि, प्राप्तराज्यं निशम्य तम् ॥ अगाद्बेण्णातटं मूल–देवभूपं ननाम च ॥ २५९ ॥ प्रत्यभिज्ञाय भूपोऽपि, तं कृतज्ञशिरोमणिः ॥ अदृष्टसेवया तस्मै, ददौ ग्रामं तमेव हि ॥ २६० ॥

सोऽथ कार्पटिकोऽश्रौषी–द्यच्चन्द्रग्रासलक्षणात् ॥ स्वप्नादासीन्मूलदेवो, नृपः सम्यग्विचारितात् ॥ २६१ ॥ ततः सोऽचिन्तयद्धिग्मां, यत्स्वप्नस्तादृशस्तदा ॥ आवेदनेन मन्दानां, नीतो निष्फलतां मया ! ॥ २६२ ॥ तदद्यापि हि चेत्पीत्वा, गोरसं सरसं शये ॥ तदाहमीदृशं स्वप्नं, भूयः पश्यामि राज्यदम् ! ॥२६३॥ इति ध्यायन् राज्यलक्ष्मीं, कांक्षन् सोऽनिशमस्वपीत् ॥ न तु तं स्वप्नमैक्षिष्ट, गूढमर्थमिवाबुधः ! ॥ २६४ ॥ कदाप्यसौ कार्पटिकोऽपि पश्ये–त्स्वप्नं तमप्युत्कटभाग्ययोगात् ॥ न तु प्रमादाच्च्युतमर्त्यजन्मा, लभेत भूयोऽपि जनो नरत्वम् ! ॥ २६५ ॥ इति स्वप्नदृष्टान्तः षष्ठः ॥ ६ ॥ अथ 'चक्केत्ति' पदसूचितो राधावेधदृष्टान्तस्तथा हि—

अभूदिन्द्रपुरं नाम, पुरमिन्द्रपुरोपमम् ॥ नृपस्तत्रेन्द्रदत्ताह्वो, बभूवेन्द्र इव श्रिया ॥ १ ॥ राज्ञस्तस्याऽभवन् बह्व्यो, वल्लभाः प्राणवल्लभाः ॥ सुता द्वाविंशतिस्तासा–मासन् पृथ्वीपतिप्रियाः ॥ २ ॥ तांस्तु सर्वानपि नृपो, महोत्सवपुरस्सरम् ॥ कलाभ्यासार्थममुच–त्कलाचार्यस्य सन्निधौ ॥ ३ ॥ स च भूपोऽन्यदा प्रेक्ष्य, मन्त्रिपुत्रीं मनोरमाम् ॥ उपयेमे तां च मन्त्री, दीर्घदर्शीत्यशिक्षयत् ॥ ४ ॥ यदा गर्भसमुत्पत्ति–र्जायते तव हे सुते ! ॥ तदा दिनादिकं सर्व–मपि ज्ञाप्यं त्वया मम ॥ ५ ॥ प्रतिपेदे पितुर्वाणीं, तथाऽमात्यसुताऽपि ताम् ॥ नोद्वाहमनु भूपस्तु, तां पस्पर्श ददर्श च ॥ ६ ॥ बहुप्रियो भूप्रियस्तां, सस्माराऽपि न कर्हिचित् ! ॥ भूरिभार्यस्य किं कार्यं, तस्य न स्यात् विनापि ताम् ? ॥७॥ अन्यदा तामृतुस्नातां, ददर्श पृथिवीपतिः ॥ वधूः कस्येयमित्यन्याः, पप्रच्छ च निजप्रियाः ॥ ८ ॥ प्रभो ! तवैव पत्नीय–मिति ताभिरुदीरिते ॥ तयैव सह तां रात्रि–मुवासाऽवनिवासवः ॥ ९ ॥ तत्रैव रात्रौ सा गर्भं, बभार नृपसङ्गमात् ॥ स्वातिपाथोमुचः सङ्गा–च्छुक्तिर्मुक्तामणीमिव ॥ १० ॥ गर्भसम्भवकालं तं, साऽथ पित्रे न्यवेदयत् ॥

अभिज्ञानार्थसुर्वीश–प्रोक्तानि वचनानि च ॥ ११ ॥ साभिज्ञानं धीसखोऽपि, तत्सर्वं पत्रकेऽलिखत् ॥ नृपाज्ञयाऽऽ-नयत्तां च, स्वगेहे प्रसवोन्मुखीम् ॥ १२ ॥ गर्भकाले च सम्पूर्णे, साऽसूत सुतमुत्तमम् ॥ ततः प्रमुदितोऽमात्य–स्तस्य जन्मोत्सवं व्यधात् ॥ १३ ॥ सुरेन्द्रदत्त इत्याख्यां, तस्य चक्रे च सोत्सवम् ॥ सोऽप्यवर्धिष्ट तद्गेहे, कल्पद्रुरिव नन्दने ॥ १४ ॥ अग्निकाख्यः पर्वतको, बहली सागराभिधः ॥ दासेरा इति चत्वार–स्तस्याऽभूवन् सहोद्भवाः ॥१५॥ तैश्चतुर्भिः समं दासा–पत्यैः क्रीडां मनोरमाम् ॥ कुर्वाणः स कलाभ्यास–योग्यः समजनि क्रमात् ॥ १६ ॥ तं च मातामहोऽन्येद्युः, कलाग्रहणहेतवे ॥ कलाचार्यस्य तस्यैवा–ऽभ्यासेऽमुञ्चन्महामहैः ॥ १७ ॥ मातामहकलाचार्य–शिक्षाभिः सकला अपि ॥ क्रीडास्त्यक्त्वा कलाभ्यास–मेकचित्तो व्यधत्त सः ॥ १८ ॥ दासेरास्ते कलाभ्यासा–व-सरे पूर्वसंस्तवात् ॥ अन्तरायान् व्यधुस्तस्य, तुमुलाकर्षणादिना ॥ १९ ॥ तैरप्यस्खलितोत्साहः, कुर्वन् सोऽभ्यास-मन्वहम् ॥ स्वभाववत्तदभ्यस्ता–श्चक्रे द्वासप्ततिं कलाः ॥ २० ॥ विशेषाच्च धनुर्वेदा–भ्यासं स विदधे तथा ॥ यथा-धयद्यथाराधा–वेधमप्यनुवासरम् ॥ २१ ॥ ते तु द्वाविंशतिः सम्य–क्कलाभ्यासं न चक्रिरे ॥ कुर्वन्तो विविधां क्रीडा–मन्योन्यं वल्गनादिकाम् ॥ २२ ॥ पाठकेन प्रणुन्नास्तु, कलाग्रहणकर्मणि ॥ दुष्टवाक्यानि जल्पन्तो–ऽभवं-स्तत्कुट्टनोद्यताः ! ॥ २३ ॥ तांश्च कम्बादिनाचार्य–स्ताडयेद्यदि कर्हिचित् ॥ तदा रुदन्तस्ते गत्वा, स्वमातृणां न्य-वेदयन् ॥ २४ ॥ ततस्तास्तं कलाचार्य–मित्युपालम्भयन् रुषा ॥ भवन्त्यस्मादृशां प्राय–स्तनयाः खलु दुर्लभाः ! ॥ २५ ॥ तदस्माकं सुता एते, पाठनीया यथासुखम् ॥ ताडनीयास्तु युष्माभि–र्नैव निष्ठुरमानसैः ॥ २६ ॥ ततो दध्यावुपाध्यायो–ऽमीषामध्यापनान्मया ॥ सम्प्राप्तं नैव सन्मान–मुपालम्भस्त्वलभ्यत ! ॥ २७ ॥ तदमीषां श्रृक-लाश्व–द्वेश्यानां दुष्टचेतसाम् ॥ अध्यापनप्रयासेन, ममातिबहुना कृतम् ! ॥ २८ ॥ तेनेत्युपेक्षिताः क्ष्माप–पुत्रास्ते सकलाः कलाः ॥ नाम्नैव जगृहुः सम्यक्, नत्वविन्दन्त काञ्चन ॥ २९ ॥ यतः—"नानुद्योगवता न च प्रवमता ना-त्मानमुत्कर्षता, नालस्योपहतेन नान्यमनसा नाचार्यविद्वेषिणा ॥ न भ्रूभङ्गविलासविस्मितमुखीं सीमन्तिनीं ध्यायता, लोके ख्यातिकरः सतामभिमतो विद्यागुणः प्राप्यते ! ॥ ३० ॥" तादृशानपि भूपस्तान्, विवेद विदुषोऽखिलान् ॥ आन्तरङ्गं गुणं वेत्ति, परीक्षामन्तरा हि कः ? ॥ ३१ ॥ सपुत्रां मन्त्रिपुत्रीं तु, पूर्ववद्व्यस्मरन्नृपः ॥ गताहर्भुक्तमप्यल्प–बुद्धयो हि स्मरन्ति न ! ॥ ३२ ॥

इतश्च मथुरापुर्यां, जितशत्रोर्महीपतेः ॥ भूर्भुवःस्वर्वधूजैत्रा, सुता निर्वृतिरित्यभूत् ॥ ३३ ॥ तामशेषकलादक्षां, प्राप्ताभिनवयौवनाम् ॥ अन्येद्युः प्राहिणोन्माता, परिष्कृत्य नृपान्तिके ॥ ३४ ॥ साऽपि गत्वा सभामध्ये, प्रणनाम महीधवम् ॥ तां निवेश्य निजोत्सङ्गे, नृपोऽप्येवमचिन्तयत् ॥ ३५ ॥ पाणिग्रहणयोग्याऽसौ, सुताऽभूत्प्राप्तयौवना ॥ प्रायो भवन्ति भूपानां, नन्दनाश्च स्वयंवराः ॥ ३६ ॥ तदभीष्टेन भर्त्राऽसौ, विवाह्येति विमृश्य सः ॥ सुते ! कस्ते वराऽभीष्टः, सस्नेहमिति पृष्टवान् ? ॥ ३७ ॥ सा प्रोचे यः पुमान् राधा–वेधं साधयति स्फुटम् ॥ स्वामिन्नहं वरि-ष्यामि, तं वरं वसुधावरम् ॥ ३८ ॥ तत इन्द्रपुराधीश–स्येन्द्रदत्तस्य भूभुजः ॥ कलाभ्यासपरान् भूय–स्तरामाकर्ण्य नन्दनान् ॥ ३९ ॥ जितशत्रुनृपस्तत्र, गन्तुं प्रातिष्ठिपत्सुताम् ॥ युक्तां वृद्धैः कुलामात्यै–श्चतुरङ्गचमूवृताम् ॥ ४० ॥ [ युग्मम् ] क्रमादिन्द्रपुरे साऽगा–दिन्द्रदत्तनृपोऽपि ताम् ॥ पुरे प्रावीविशत्तुष्ट–चेता गुरुभिरुत्सवैः ॥ ४१ ॥ दध्यौ चाऽशेषभूपेभ्यः, कृतपुण्योऽस्मि नन्वहम् ॥ यत्कनीयं विहायान्या–न्मत्सुतं परिणेष्यति ! ॥ ४२ ॥ ध्यायन्निति प्रतिज्ञां च, तस्यास्तामवधारयन् ॥ अकारयन्नृपो भव्यं, स्वयंवरणमण्डपम् ॥ ४३ ॥ काञ्चनस्तम्भसंलग्न–चञ्चन्मा-णिक्यतोरणे ॥ मौक्तिकस्वस्तिकश्रेणी–दन्तुरीभूतभूतले ॥ ४४ ॥ सुगन्धिपञ्चवर्णाढ्य–पुष्पप्रकरपूजिते ॥ विचित्रो-ल्लोचरचना–चित्रीयितजगत्त्रये ॥ ४५ ॥ अकाण्डोद्भूतसन्ध्याभ्र–पटलभ्रान्तिकारिभिः ॥ अभ्रंलिहैः पञ्चवर्णैः, केतु-लक्षैर्विभूषिते ॥ ४६ ॥ तस्मिंश्च मण्डपे शक्रा–स्थानमण्डपसन्निभे ॥ इन्द्रदत्तो नृपः स्तम्भ–मेकमुच्चैरतिष्ठिपत् ॥४७॥ [ चतुर्भिः कलापकम् ] चत्वारि सृष्ट्या चत्वारि, संहृत्या चातिवेगतः ॥ भ्राम्यन्ति लोहचक्राणि, स्तम्भोर्ध्वे च न्यवीविशत् ॥ ४८ ॥ तेषां चोपरि राधेति–प्रसिद्धां शालभञ्जिकाम् ॥ अस्थापयदधस्ताच्च, तैलसम्पूर्णकुण्डिकाम् ॥४९॥ कुण्डीतैलस्थचक्रादि–प्रतिबिम्बानुसारतः ॥ राधाया वामनयनं, वेध्यं तत्र च साधकैः ॥ ५० ॥ ततः स भूपः सानन्दं, द्वाविंशत्या सुतैः समम् ॥ पुराद्बहिःस्थे तत्रागा–न्मण्डपे सपरिच्छदः ॥ ५१ ॥ सुरेन्द्रदत्तसचिव–स्तत्रागा-त्सचिवोऽपि सः ॥ पौराश्च कोटिशस्तत्रा–ऽऽययुः कौतुकमीक्षितुम् ॥ ५२ ॥ सर्वालङ्कारसुभगा, लक्ष्मीरिव वपुष्मती ॥

स्वयंवरस्रजं काम–दोलाभां बिभ्रती करे ॥ ५३ ॥ दधाना श्वेतवस्त्राणि, व्यूतानीवेन्दुकान्तिभिः ॥ हरन्ती सर्ववधू-गर्वं, नेत्रैरेव सविभ्रमैः ॥ ५४ ॥ दर्शनादपि विश्वेषां, निशां निर्वृतिदायिनी ॥ तस्थौ निर्वृतिकन्यापि, तस्य स्तम्भस्य सन्निधौ ॥ ५५ ॥ [ त्रिभिर्विशेषकम् ] अथोचे भूपतिर्ज्येष्ठ–सुतं श्रीमालिसंज्ञकम् ॥ राधावेधात्कनीमेनां, राज्यं चामुहि वत्स हे ! ॥ ५६ ॥ स त्वनभ्यासतश्चापा–कर्षणेप्यक्षमोऽभवत् ॥ तथापि धार्ष्ट्यमालम्ब्य, कथञ्चित्तदुपाददे ॥ ५७ ॥ यत्र वा तत्र वा यातु, मुक्तः श्रीमालिना शरः ॥ इत्युक्त्वा सोऽमुचद्बाणं, सद्यः पाञ्चालिकां प्रति ॥ ५८ ॥ विशिखः स तु चक्रेणा–स्फल्य भग्नोऽपतद्भुवि ॥ अहो ! कलावानिति सो–ऽहासि लोकैस्ततो भृशम् ! ॥ ५९ ॥ वीक्षापन्नस्ततो वीक्षा–न्नभूय भुवमेव सः ॥ विविक्षुरिव पातालं, तया निन्दोत्थया ह्रिया ॥ ६० ॥ शरः कस्याप्येव-मेक–मतिचक्राम चक्रकम् ॥ कस्यापि द्वे त्रीणि कस्या–प्यन्येषां चान्यतो ययौ ॥ ६१ ॥ न पुनः कोऽपि राट्पुत्रो, राधावेधमसाधयत् ॥ मिथो नस्तुल्यता हानि–र्माऽभूदिति धिया किमु ! ॥ ६२ ॥ तद्विलोक्य सनिर्वेदं, दध्यावेवं धराधवः ॥ अमीभिस्तनयैर्लोक- समक्षं धर्षितोऽस्मि हा ! ॥ ६३ ॥ भूतलव्यापिमत्कीर्ति–मूर्त्तिसंहारकारिणः ॥ मम वैरिण एवामी, पुत्ररूपेण जज्ञिरे ! ॥ ६४ ॥ अमीभिः सत्कलाहीनै–र्भूयोभिरपि किं सुतैः ? ॥ श्रेष्ठः कलावांस्त्वेको-ऽपि, क्षीराब्धेरिव चन्द्रमाः ! ॥ ६५ ॥ पुत्रो हि गुणवान् पित्रो–र्महानन्दाय जायते ॥ गुणहीनस्तु दुःखाय, वह्ने-र्धूम इवाङ्गजः ! ॥ ६६ ॥ यदाहुः–"कामं श्यामवपुस्तथा मलिनयत्यावासवस्त्रादिकम् ॥ लोकं रोदयते भनक्ति जनतागोष्ठीं क्षणेनापि यः ॥ मार्गेप्यङ्गुलिलग्न एव जनकस्याभ्येति न श्रेयसे ॥ हा ! स्वाहाप्रिय ! धूममङ्गजमिमं सूत्वा न किं लज्जितः ? ॥ ६७ ॥" गतसर्वस्ववद्भूपे, ध्यायत्येवमधोमुखे ॥ उवाच सचिवः स्वामिन् !, किमेवं दुर्मनायसे ? ॥ ६८ ॥ बभाषे भूपतिर्मन्त्रिन् !, पुत्रैरेभिरशिक्षितैः ॥ ध्वस्तो मे महिमा तेन, दौर्मनस्यं श्रयाम्यहम् ! ॥ ६९ ॥ मन्त्र्यूचे दौर्मनस्येन, कृतं यत्ते सुतोऽपरः ॥ सुरेन्द्रदत्तनामाऽस्ति, दौहित्रो मे कलानिधिः ॥ ७० ॥ राधा-वेधं विधातुं स, प्रभूष्णुर्विद्यते प्रभो ! ॥ तदाकर्ण्योऽभ्यधाद्भूपो, मन्त्रिन्नाहं स्मरामि तम् ! ॥ ७१ ॥ राज्ञः पुरं ततो वृत्त–पत्रं तत्सचिवोऽमुचत् ॥ तद्वाचयित्वा स्मृत्वा च, सर्वं भूपोऽप्यमोदत ॥ ७२ ॥ क्वाऽधुना स सुतोऽ-स्तीति, राज्ञोक्ते धीसखोऽपि तम् ॥ दर्शयामास भूपोऽपि, तमालिङ्ग्येत्यवोचत ॥ ७३ ॥ राधावेधं साधयित्वा, वत्स ! केनाप्यसाधितम् ॥ राज्ययुक्तां कनीमेनां, स्वीकुरु त्वं महामते ! ॥ ७४ ॥ ततः प्रमाणमादेशः, पूज्याना-मित्युदीर्य सः ॥ स्तम्भस्य तस्य पार्श्वे च, गत्वा चापमुपाददे ॥ ७५ ॥ अधिजीकृत्य तत्सत्य– सन्धः संधाय चाशु-गम् ॥ ऊर्ध्वमुष्टिरधोदृष्टि–स्तत्र तस्थौ च भूपभूः ॥ ७६ ॥ दध्यौ निर्वृत्तिकन्याऽपि, वीक्ष्य तं रूपमन्मथम् ॥ अहो रूपमहो कान्ति–रहो लावण्यमद्भुतम् ! ॥ ७७ ॥ ॥ एष विध्यति चेद्राधां, तत्कृतार्था भवाम्यहम् ॥ ध्यायन्तीति तदेकाग्र–चित्तासीद्योगिनीव सा ॥ ७८ ॥ तदा च तत्समीपस्था, दासेरास्ते चतुर्दिशम् ॥ चक्रुः कोलाहलं प्रोच्चै–स्तालिकास्फालनादिना ॥ ७९ ॥ तेऽपि द्वाविंशती राज–सुता उल्लण्ठभाषणैः ॥ असौ विध्यतु मा राधा–मित्य-पायान् वितेनिरे ॥ ८० ॥ स्खलिते सति ते शीर्षं, छेत्स्याव इति वादिनौ ॥ पार्श्वयोस्तस्थतुस्तस्य, खड्गव्यग्रकरौ नरौ ॥ ८१ ॥ समीपस्थः कलाचार्यो–ऽप्येवं स्माह मुहुर्मुहुः ॥ स्खलिते ते वधो भावी, तद्भूयास्त्वं समाहितः ॥ ८२ ॥ दासेरांस्तान् कुमारांश्चा–ऽगणयन् सुभटौ च तौ ॥ कुण्डिकातैलसंक्रान्त–चक्रान्तर्न्यस्तलोचनः ॥ ८३ ॥ लक्ष्ये निरुद्धया दृष्ट्या, ज्ञात्वा चक्राष्टकान्तरम् ॥ तदेकाग्रमनाः सद्यः, कुमारो व्यमुचच्छरम् ॥ ८४ ॥ [ युग्मम् ] प्रविश्य तेषां चक्राणा–मन्तराले शरोऽपि सः ॥ क्षणाद्विव्याध राधाया, वामनेत्रकनीनिकाम् ॥ ८५ ॥ ततो लोकैः प्रमु-दितै–श्चक्रे जयजयारवः ॥ तदैकाग्र्यकरस्थैर्य–लघुहस्तत्वशंसिभिः ॥ ८६ ॥ तदा निर्वृत्तिकन्याऽपि, मुखे तस्य प्रमो-दभाक् ॥ कटाक्षमालिकां न्यास्थ–त्कण्ठे तु कुसुमस्रजम् ॥ ८७ ॥ तमोभिरिव लोकस्य, सुतैरेभिरभून्मम ॥ यन्मा-लिन्यं तदा पूर्ण–विधुनेव त्वया हृतम् ॥ ८८ ॥ तत्त्वयैव सुतेनाह–मस्मि पुत्रीत्युदीरयन् ॥ तदेन्द्रदत्तराजेन्द्रः, प्रेम्णा तं परिषस्वजे ॥ ८९ ॥ [ युग्मम् ] ततः कुमारस्तां कन्या–मुपायंस्त महामहैः ॥ इन्द्रदत्तनरेन्द्रोऽपि, तस्मै राज्यं ददौ क्रमात् ॥ ९० ॥ ते तु द्वाविंशतिः पूर्व–मनभ्यासात्तदा कथम् ॥ राधावेधं साधयन्ति, श्रयन्ति च नृपश्रि-यम् ? ॥ ९१ ॥ दिव्यानुभावादथ तेऽपि राधा–वेधं कुमाराः किल साधयेयुः ॥ प्रमत्तचित्तस्तु जनो नरत्वा–च्च्युतः पुनस्तत्र लभेत सद्यः ॥ ९२ ॥ इति राधावेधदृष्टान्तः सप्तमः ॥ ७ ॥ अथ चर्मदृष्टान्तस्तथा हि—

ह्रद एकोऽभवत् क्वापि, योजनानि सहस्रशः ॥ विस्तीर्णोऽगाधपानीयो, भूरिनीरचरैर्भृतः ॥ १ ॥ तस्य चोपरि

शैवाल-जालैरन्योन्यमङ्गतैः ॥ सर्वत्राच्छादनं चर्म-समानं समभूत्सदा ॥ २ ॥ तत्र चैकोऽवसत्कूर्मः, पुत्रपौत्रादि-संयुतः ॥ ग्रीवां प्रसारयामास, स चाब्दानां शते शते ॥ ३ ॥ अन्यदा तस्य सान्द्रस्य, मध्ये शैवालचर्मणः ॥ छिद्रं बभूव प्रबल-समीरणसमीरणात् ॥ ४ ॥ दैवयोगात्स कूर्मोऽपि, ग्रीवां प्रासारयत्तदा ॥ रन्ध्रेण तेन ग्रीवाऽपि, निरगाच्चर्मणो बहिः ॥ ५ ॥ ततः स पूर्णिमाचन्द्र-तारामण्डलमण्डितम् ॥ अदृष्टपूर्वमाकाशं, वीक्ष्यात्यन्तं विसिस्मिये ॥ ६ ॥ महाश्चर्यमिदं स्वीय-बन्धूनां दर्शयाम्यहम् ॥ ध्यात्वेत्याह्वातुमात्मीया-न्मध्ये ह्रदमगाच्च सः ॥ ७ ॥ तानाहूय समेतस्तु, न लेभे पर्यटन्नपि ॥ तच्छिद्रं पवनोद्धूतैः, शैवालैः स्थगितं क्षणात् ! ॥ ८ ॥ कूर्मः पुनस्तत्र लभेत रन्ध्रं, पश्येच्च पूर्णं शशिनं कदाचित् ॥ परिच्युतो मर्त्यभवान्नरत्वं, लभेत जन्तुर्न तु धर्महीनः ! ॥ ९ ॥ इति चर्मदृष्टान्तोऽष्टमः ॥ ८ ॥ अथ युगदृष्टान्तः तथा हि—

अस्ति स्वयम्भुरमण-वारिधिर्वलयाकृतिः ॥ सहस्रयोजनोद्वेधो-ऽसंख्ययोजनविस्तृतः ॥ १ ॥ विहाय वलयं सर्वा-कारैर्जलचरैर्भृते ॥ सर्वेषामपि वार्द्धीना-मन्तिमे तत्र नीरधौ ॥ २ ॥ देवः कोऽपि दिशि प्राच्यां, लीलया निक्षिपेद्युगम् ॥ युगस्य तस्य ककुभि, पश्चिमायां च कीलिकाम् ॥ ३ ॥ [ युग्मम् ] तस्मिन्नपारेऽकूपारे, भ्राम्यन्ती समिलाऽथ सा ॥ स्वयमेव युगच्छिद्रे, प्रविशेत्किं कदाचन ? ॥ ४ ॥ प्रचण्डवातोत्थितवीचिनुन्ना, दैवात्स्वयं साऽपि युगस्य रन्ध्रे ॥ कुर्यात्प्रवेशं न तु पुण्यहीनः, पुमान्पुनर्विन्दति मर्त्यभावम् ! ॥ ५ ॥ इति युगदृष्टान्तो नवमः ॥ ९ ॥ अथ परमाणुदृष्टान्तस्तथा हि—

स्तम्भमेकं महामानं, माणिक्यमयमुत्तमम् ॥ स्वसामर्थ्यपरीक्षार्थं, गीर्वाणः कोप्यचूर्णयत् ॥ १ ॥ तच्च चूर्णमतिश्लक्ष्णं, निर्माय परमाणुवत् ॥ नलिकान्तर्निचिक्षेप, क्षेपीयः स सुधाशनः ॥ २ ॥ आरुह्य मेरुचूलायां, सोऽथ फूत्कृतमारुतैः ॥ द्रुतमुच्छालयामास, तच्चूर्णं परितोऽखिलम् ॥ ३ ॥ तेन देवेन विक्षिप्ता-स्ततस्ते परमाणवः ॥ प्रचण्डपवनोद्धूता, अभजन्त दिशोदिशम् ॥ ४ ॥ अथ विश्वत्रये कोऽपि, शक्तिमान् विद्यते न सः ॥ यस्तं स्तम्भं पुनः कुर्या-त्तैरेव परमाणुभिः ॥ ५ ॥ स्तम्भो यथाऽसौ परमाणुभिस्तैः, केनापि निष्पादयितुं न शक्यः ॥ प्रमादिना प्राणभृता तथैव, भूयोऽपि लभ्येत न मानवत्वम् ॥ ६ ॥ इति ॥ यद्वा काऽपि सभा भूरि-स्तम्भा दग्धा कृशानुना ॥ तैरेव पुद्गलैर्न सा-त्तथा नृत्वेऽपि भावना ॥ ७ ॥ इति वा परमाणुदृष्टान्तो दशमः ॥ १० ॥ इत्थं जिनेन्द्रगदितानि मनुष्यजन्म-दौर्लभ्यसूचनचणानि निदर्शनानि ॥ आकर्ण्य भो भविजनाः ! भगवत्प्रणीते, धर्मे महोदयकरे कुरुत प्रयत्नम् ॥ ६२६ इति दश दृष्टान्ताः सम्पूर्णाः । तत्र यथा मानुषत्वं दुर्लभं तथा दर्शयितुमाह—

**मूलम्—समावण्णा ण संसारे, नाणागुत्तासु जाइसु ॥ कम्मा नाणाविहा कट्टु, पुढो विस्संभिआ पया ॥२॥**

व्याख्या—समापन्नाः समन्तात्प्राप्ताः प्रजा इति योगः, मानुष्यमिति गम्यते, 'णेति' वाक्यालंकारे, केत्याह—संसारे भवे, तत्रापि केत्याह— नानागोत्रासु अनेकाभिधानासु जातिषु क्षत्रियादिषु, अत्र हेतुमाह—कर्माणि ज्ञानावरणीयादीनि नानाविधानि अनेकप्रकाराणि कृत्वा निर्वर्त्य तेषामधीनाः सन्तः 'पुढोत्ति' पृथक्भेदेन एकैकश इत्यर्थः, 'विस्संभिअत्ति' प्राकृतत्वादनुस्वारलोपे विश्वभृतो जगत्पूरका वर्तन्ते इति शेषः, क्वचित्कदाचिदुत्पत्त्या सर्वजगद्व्यापनादुक्तं च-"नत्थि किर सो पएसो, लोए वालग्गकोडिमित्तोवि ॥ जम्मणमरणावाहा,जत्थ जिएहिं न संपत्ता ॥१॥" ततोऽवाप्याऽपि नरजन्म स्वकृतकर्मानुभावतोऽन्यान्यगतिभागिन्य एव प्रजा जनसमूहरूपा भवन्तीति दुर्लभमेव पुनर्नरजन्मेति सूत्रार्थः ॥ २ ॥ एतदेव स्पष्टयति—

**मूलम्—एगया देवलोएसु, नरएसुवि एगया ॥ एगया आसुरं कायं अहाकम्मेहिं गच्छइ ॥ ३ ॥**

व्याख्या—एकदा शुभकर्मानुभवकाले देवलोकेषु सौधर्मादिषु, नरकेषु च रत्नप्रभादिषु, अपिशब्दश्चकारार्थे, एकदा दुष्कर्मोदयकाले, एकदा 'आसुरं' असुरसम्बन्धिनं कायं निकायं, 'अहाकम्मेहिंति' यथाकर्मभिस्तत्तद्गत्यनुरूपचेष्टितैर्यथायोगं सरागसंयममहारम्भबालतपःप्रभृतिभिः, 'गच्छइत्ति' वचनव्यत्ययाद्गच्छन्ति प्राणिन इत्युत्तरेण योग इति सूत्रार्थः ॥ ३ ॥

**मूलम्—एगया खत्तिओ होई, तओ चंडालबोक्कसो ॥ तओ कीडपयंगो अ, तओ कुंथुपिवीलिआ ॥ ४ ॥**

व्याख्या—एकदा क्षत्रियो राजा भवति,जन्तुरिति गम्यं,सूत्रवैचित्र्याद्बहुवचनप्रक्रमेप्येकवचनं,ततस्तदनन्तरं चण्डालो

मातङ्ग', यद्वा शूद्रेण ब्राह्मण्यां जातश्चण्डालः, बोक्कसो वर्णान्तरसङ्करजन्मा, तथाहि—ब्राह्मणेन शूद्र्यां जातो निषादः, ब्राह्मणेनैव वैश्यस्त्रियां जातश्चांबष्ठ इत्युच्यते। तत्र निषादेनाम्बष्ठ्यां जातस्तु बोक्कसो भण्यत इति वृद्धवादः। इह च क्षत्रियचाण्डालबोक्कसग्रहणाद्यथाक्रमं सर्वा उच्चनीचसङ्कीर्णजातय उपलक्षिताः। ततः कीटः प्रसिद्धः, पतङ्गः शलभः, चः समुच्चये, कुंथुः, पिपीलिका च, भवतीति योज्यं, अशेषतिर्यग्भेदोपलक्षणञ्चेदमिति सूत्रार्थः ॥ ४ ॥ इत्थं सर्वत्र पर्यटन्तोऽपि गुरुकर्मत्वेन ते न निर्विद्यन्ते इत्याह—

मूलम्—एवमावट्टजोणीसु, पाणिणो कम्मकिव्विसा ॥ न निविज्जंति संसारे, सवट्ठेसु व खत्तिआ ॥ ५ ॥

व्याख्या—एवमनेन न्यायेन आवर्त्त. पुनः पुनर्भ्रमणरूपः परिवर्त्तस्तत्प्रधाना योनयश्चतुरशीतिलक्षप्रमाणानि जीवोत्पत्तिस्थानानि आवर्तयोनयस्तासु, प्राणिनो जीवाः, कर्मणा क्लिष्टेन किल्बिषा अधमाः कर्मकिल्बिषाः, न निर्विद्यन्ते, कदैतस्मात्पर्यटनान्मोक्षो भावीति नोद्विजन्ते, संसारे भवे, केष्विव के? सर्वे च ते अर्थाश्च धनकनकादयः सर्वार्थाः तेष्विव क्षत्रिया राजानः, अयं भावः—यथा मनोज्ञान् शब्दादीन् भुञ्जानानां तेषां तृष्णा वर्धते एवं तासु तासु योनिषु पुनः पुनरुत्पत्तिमनुभवतामपि संसारिणां, कथमन्यथा ते तत्प्रतिघातार्थं नोद्यमं कुर्युः? इति सूत्रार्थः ॥५॥ ततश्च—

मूलम्—कम्मसंगेहिं संमूढा, दुक्खिआ बहुवेअणा ॥ अमाणुसासु जोणीसु, विणिहम्मंति पाणिणो ॥ ६ ॥

व्याख्या—कर्मसंगैर्ज्ञानावरणीयादिकर्मसम्बन्धैः संमूढाः अत्यर्थं मूढाः दुःखिता असातयुक्ताः, कदाचित्तन्मानसमेवैकं स्यादित्याह—बहुवेदना भूरिशारीरपीडाः, अमानुषीषु नरकतिर्यगाभियोग्यादिदेवदुर्गतिसम्बन्धिनीषु योनिषु विनिहन्यन्ते, विशेषेण निपात्यन्ते, अर्थात्कर्मभिः न तु ताभ्य उत्तारं लभन्ते प्राणिनो जीवास्ततो दुर्लभमेव मानवत्वमिति सूत्रार्थः ॥ ६ ॥ कथं तर्हि तदवाप्तिरित्याह—

मूलम्—कम्माणं तु पहाणाए, आणुपुव्वी कयाइ उ ॥ जीवा सोहिमणुप्पत्ता, आययंति मणुस्सयं ॥ ७ ॥

व्याख्या—कर्मणां तु पुनर्नरकगतिप्रतिबन्धकानामनन्तानुबन्ध्यादीनां 'पहाणाएत्ति' प्रहाण्या अपगमेन, कथं प्रहाणिरित्याह—आनुपूर्व्या क्रमेण, न तु झगित्येव, अत एवाह—'कयाइउत्ति' 'तु' शब्द एवकारार्थे, ततः कदाचिदेव न सर्वदा जीवाः प्राणिनः शुद्धिं क्लिष्टकर्मापगमात्मिकां, अनुप्राप्ताः सम्प्राप्ताः आददते स्वीकुर्वन्ति मनुष्यतां मनुजजन्म, विशिष्टशुद्धिनिबन्धनैस्तनुकषायत्वादिभिरेव तदायुर्बन्धादिति सूत्रार्थः ॥ ७ ॥ एवं कथञ्चिन्मानुष्ये प्राप्तेऽपि श्रुतिर्दुर्लभेत्याह—

मूलम्—माणुस्सं विग्गहं लद्धुं, सुइ धम्मस्स दुल्लहा ॥ जं सुच्चा पडिवज्जंति, तवं खंतिमहिंसयं ॥ ८ ॥

व्याख्या—'माणुस्संति' सूत्रत्वान्मानुष्यकं मनुष्यभवसम्बन्धिनं विग्रहं देहं, 'लद्धुंति' लब्ध्वाऽपि, अपेर्गम्यत्वात्, श्रुतिः श्रवणं, धर्मस्य दुर्लभा दुष्प्रापा पूर्वोक्तालस्यादिहेतुभिः, स च धर्मः "मृद्वी शय्या प्रातरुत्थाय पेया, मध्ये भक्तं पानकं चापराह्णे ॥ द्राक्षाखण्डं शर्करा चार्धरात्रे, मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥ १ ॥" इत्यादिबौद्धादिकल्पितोऽपि स्यादतस्तदपोहार्थमाह—यं धर्मं श्रुत्वा प्रतिपद्यन्ते भव्या इति शेषः, तपोऽनशनादि द्वादशविधं, क्षान्तिं क्रोधजयलक्षणां, मानादिजयोपलक्षणञ्चैषा, अहिंस्रतां हिंसनशीलत्वाभावं, अनेन प्रथमव्रतमुक्तं, शेषव्रतोपलक्षणञ्चैतत्, एतद्वृत्तितुल्यानि हि शेषव्रतानि, एवञ्च तपसः क्षान्तिप्रभृतिचतुष्टयस्य महाव्रतपञ्चकस्य चाभिधानाद्दशविधोऽपि धर्मोऽभ्यधायीति सूत्रार्थः ॥ ८ ॥ श्रुतिप्राप्तावपि श्रद्धा दुर्लभेत्याह—

मूलम्—आहच्च सवणं लद्धुं, सद्धा परमदुल्लहा ॥ सोच्चा नेआउअं मग्गं, बहवे परिभस्सई ॥ ९ ॥

व्याख्या—'आहच्च' कदाचित् श्रवणं प्रक्रमाद्धर्मस्याकर्णनं, उपलक्षणत्वान्मानुष्यं च, 'लद्धुंति' अपिशब्दस्य गम्यमानत्वात् लब्ध्वाप्यवाप्यापि श्रद्धा धर्मरुचिरूपा परमदुर्लभातीवदुरापा, कुतः पुनः परमदुर्लभत्वमस्या इत्याह—श्रुत्वाकर्ण्य नैयायिकं न्यायोपपन्नं मार्गं सम्यग्दर्शनादिरूपं मुक्तिपथं बहवोऽनेके 'परिभस्सइत्ति' परिभ्रश्यन्ति च्यवन्ते, प्रक्रमान्नैयायिकमार्गादेव। यथा जमालिप्रभृतयः, यच्च प्राप्तमप्यपैति तच्चिन्तामणिवत्परमदुर्लभमेवेतिभावः। अथ के ते जमालिप्रभृतय इति तद्वक्तव्यता लिख्यते, तद्यथा—"बहुरय जमालि पभवा १, जीवपएसा य तीसगुत्ताओ २ ॥ अव्वत्तासाढाओ ३, सामुच्छेआसमित्ताओ ४ ॥ १ ॥ गंगाओ दो किरिआ ५, छलुआ तेरासिआण उप्पत्ती ६ ॥ थेरा य गोट्ठमाहिल—पुट्ठमबद्धं परूवंति ७ ॥ २ ॥" अनयोरर्थः—बहुभिः समयैर्वस्तु निष्पद्यते न त्वेकसमयेनेतिमन्वाना बहुरता जमालिप्रभवा जमालेरुत्पन्नाः १। प्रदेशोऽन्त्यप्रदेशः, स एव जीवो येषां ते प्रदेशजीवाः, प्राकृतत्वाच्च व्यत्यये

जीवप्रदेशास्ते तिष्यगुप्तादुद्भूताः २। अव्यक्ताः संयतादिज्ञाने सन्देहवादिन आषाढाचार्याज्जाताः ३। सामुच्छेदा उत्पादानन्तरमेव वस्तुसमुच्छेदवादिनोऽश्वमित्राज्जाताः ४ ॥ १ ॥ द्विक्रिया एकत्र समये क्रियाद्वयानुभववादिनो गंगाचार्याज्जाताः ५। त्रैराशिकानां जीवाजीवनोजीवरूपराशित्रयवादिनां 'छलुअन्ति' वैशेषिकाभिमतपट्पदार्थनिरूपकत्वादुलूकगोत्रत्वाच पडुलूको रोहगुप्तस्तस्मादुत्पत्तिः ६। स्थविराश्च गोष्ठामाहिलाः, स्पृष्टं कञ्चुकवत्, अबद्धश्चाऽसंबद्धं, न तु क्षीरनीरवदन्योन्यानुगतमात्मप्रदेशैः समं कर्मेतिशेषः, प्ररूपयन्ति, अनेन च गोष्ठामाहिलादेवाबद्धिकानामुत्पत्तिरिति सूचितमिति गाथाद्वयाक्षरार्थः ॥ २ ॥ भावार्थस्त्वनयोः सम्प्रदायादवसेयः, स चायं—"श्रीवीरज्ञानतो वर्षे—श्चतुर्दशभिरुत्थितं ॥ तेष्वादिनिह्नवस्यादौ, वृत्तान्तं वच्मि तद्यथा ॥ १ ॥"—

पुरे क्षत्रियकुण्डाख्ये, श्रीमद्वीरजिनस्वसुः ॥ सुदर्शनायास्तनयो, जमालिः क्षत्रियोऽभवत् ॥ २ ॥ जगत्त्रयमनोहारिदर्शना प्रियदर्शना ॥ श्रीवीरस्वामिदुहिता, प्रिया तस्याऽभवत् प्रिया ॥३॥ अन्येद्युस्तत्र भगवान्, श्रीवीरः समवासरत् ॥ जमालिर्जायया साकं, सार्चे नन्तुमगात्तदा ॥४॥ स्वामिदेशनया जात—संवेगः संयमोत्सुकः ॥ गृहं गत्वाग्रहीत्पित्रो—रनुज्ञां स कथञ्चन ॥ ५ ॥ महोत्सवैस्ततो विश्व—श्लाघ्यैर्गत्वाऽर्हतोऽन्तिके ॥ जमालिः प्राव्रजत्पञ्च—शतक्षत्रियसंयुतः ॥ ६ ॥ तदा च स्वामिनः पुत्री, तत्प्रिया प्रियदर्शना ॥ प्राव्राजीत्स्वामिनोऽभ्यर्णे, स्त्रीसहस्रेण संयुता ॥ ७ ॥ जमालिश्रमणः सोऽथ, विहरन् स्वामिना समम् ॥ पपाठैकादशाङ्गानि, तपस्तेपे च दुस्तपम् ॥ ८ ॥ ततः साध्वीसहस्रं त— त्साधुपञ्चशतीं च ताम् ॥ प्रभुस्तस्मै ददौ शिष्य—तयामुख्यं विधाय तम् ॥ ९ ॥ सोऽन्यदा स्वामिनं नत्वा, पप्रच्छेति कृताञ्जलिः ॥ मतत्रोऽहं निभोऽन्यत्र, विहरामि त्वदाज्ञया ॥ १० ॥ लाभाभावात्प्रभुस्तस्मै, न ददौ किञ्चिदुत्तरम् ॥ अनिषिद्धं ह्यनुमत—मिति मेने तदा स तु ॥ ११ ॥ निरगाच्च प्रभोः पार्श्वा—द्विहर्तुं सपरिच्छदः ॥ क्रमाच्च पुर्यां श्रावस्त्यां, विहरन्नन्यदाऽगमत् ॥ १२ ॥ तत्रोद्याने कोष्ठकाख्ये, तस्थुपस्तस्य कर्हिचित् ॥ अन्तप्रान्ताशनैर्दाघ—ज्वरः प्रादुरभून्महान् ॥ १३ ॥ उपविष्टतया स्थातु—मक्षमः स ततो यतीन् ॥ इत्यूचे संस्तारको मे, क्रियतां क्रियतां द्रुतम्! ॥१४॥ ततः संस्तारकं कर्तुं, प्रवृत्तान् व्रतिनो निजान् ॥ संस्तारकः कृतो नो वे—त्यपृच्छत्स मुहुर्मुहुः ॥ १५ ॥ संस्तारकः कृतो नास्ति, किन्त्वद्यापि विधीयते ॥ तैरित्युक्ते परिभ्रष्ट—सम्यक्त्वः स व्यचिन्तयत् ॥ १६ ॥ 'क्रियमाणं कृतमिति', जिनोक्तं सूनृतं कथम्? ॥ संस्तारको यत्संस्तीर्य—माणोऽप्येष न संस्तृतः! ॥ १७ ॥ तदध्यक्षविरुद्धत्वा—त्तन्न सङ्गतिमङ्गति ॥ विमृश्येत्यखिलान्साधू—नाहूयैवमभाषत ॥ १८ ॥ 'क्रियमाणैः कृतमिति', श्रीमहावीरभाषितम् ॥ मिथ्याध्यक्षविरुद्धत्वा—च्छैत्यं हुतभुजो यथा! ॥ १९ ॥ न चाध्यक्षविरुद्धत्वं, तस्यासिद्धं भवेत्कचित् ॥ संस्तारको यत्संस्तीर्य—माणोऽप्येष न संस्तृतः ॥ २० ॥ निष्पद्यते क्षणव्यूहै—र्यत्कार्यमपरापरैः ॥ तत्कथं कृतमित्याद्य—समयेऽपि निगद्यते? ॥ २१ ॥ प्रारम्भेऽपि कृतं चेत्स्या—त्तदाऽन्यत्र क्षणव्रजे ॥ कृतस्यैव विधानेना—ऽनवस्था स्यादनाहता! २२ ॥ सत्यप्येवं मन्यते चे—त्क्रियमाणं कृतं तदा ॥ घटादेरुपलम्भोऽस्तु, प्रारम्भक्षण एव हि ॥ २३ ॥ 'कृतमेव कृतं' तस्मा—द्यौक्तिकं भो महर्षयः! ॥ तदमुं भामकं पक्षं, कक्षीकुरुत सूनृतम्! ॥ २४ ॥ न च वाच्यं स सर्वज्ञः, कथं मिथ्यावदेदिति? ॥ यद्ब्रूयात्सोऽपि तज्जातु, महान्तोऽपि स्खलन्ति हि ॥ २५ ॥ एवं विप्रवदन्तं तं, जमालिं मार्गविच्युतम् ॥ स्थविराः प्रोचुरार्य! त्वं, विरुद्धं किं वदस्यदः? ॥ २६ ॥ रागद्वेषविनिर्मुक्ता, न भाषन्ते मृषा जिनाः ॥ वचनेऽपि च नो तेषां, दोषलेशोऽपि सम्भवेत् ॥ २७ ॥ [तथाहि—]आद्यक्षणे चेत्कार्यस्यो— त्पत्तिर्न स्यात्तदा कथम् ॥ क्षणान्तरे तदुत्पत्तिः, स्यात्क्षणत्वाविशेषतः? ॥ २८ ॥ उक्तञ्च—"आद्यतन्तुप्रवेशे च, नोतं किञ्चिद्घटा पटे ॥ अन्त्यतन्तुप्रवेशेऽपि, नोतं स्यान्न पटोदयः ॥ २९ ॥" न चाऽध्यक्षविरोधोऽपि, सम्भवेदिह कर्हिचित् ॥ संस्तीर्यते यद्वस्त्रादि, तद्धि संस्तृतमेव यत् ॥ ३० ॥ यावत् प्राक् संस्तृतं तावत्, पुनः संस्तीर्यते न यत् ॥ ततः कृतस्याऽकरणा—न्नाऽनवस्थापि विद्यते ॥ ३१ ॥ यच्चारम्भक्षणे कुम्भो—पलम्भोऽस्त्विति भाषितम् ॥ तदप्यसद्यदन्यस्या—रम्भेऽन्यद् दृश्यतां कथम्? ॥ ३२ ॥ तदा हि शिवकादीना—मेवावान्तरकर्मणाम् ॥ वर्त्तते क्रियमाणत्वं, ते च दृश्यन्त एव हि ॥ ३३ ॥ कुम्भः पुनरनारब्ध—स्तदानीं दृश्यते कथम्? ॥ घटं करोतीत्युक्तिस्तु, प्रारम्भे स्थूलबुद्धितः ॥ ३४ ॥ क्रियमाणं कृतमिति, सर्वज्ञस्य वचस्ततः ॥ प्रमाणमेव न पुन—श्छद्मस्थानां भवादृशाम्! ॥ ३५ ॥ सर्वज्ञोऽप्यनृतं ब्रूया—दिति त्वद्वचनं पुनः ॥ सतां न श्रोतुमप्यर्हं, मत्तोन्मत्तप्रलापवत्! ॥ ३६ ॥ तज्जैनेन्द्रं वचसथ्यं, मा दूषय महामते! ॥ दुष्कर्मणाऽमुना मास्म—भ्राम्यस्संसारसागरे! ॥ ३७ ॥ एकस्यापि जिनोक्तस्य, पद-

स्रोत्थापने जन ॥ मिथ्यात्वं लभते तस्मा–दिदमालोचय द्रुतम् ॥ ३८ ॥ तैरित्युक्तोऽपि नात्याक्षी–ज्जमालिः स्वाग्रहं यदा ॥ तदा विहाय तं केचि–न्मुनयो जिनमाश्रयन् ॥ ३९ ॥ केचित्तु श्रद्दधानास्त–न्मतं तस्थुस्तदन्तिके ॥ अथाययौ पुरीमप्या–स्तं नन्तुं प्रियदर्शना ॥ ४० ॥ तदग्रेऽपि जमालिस्त–न्मतं प्राग्वद्व्यरूपयत् ॥ पूर्वस्नेहात्साऽपि सर्वं, प्रत्यपद्यत तत्तथा ॥ ४१ ॥ गत्वा चोपाश्रये टण्क–कुम्भकारस्य वेश्मनि ॥ प्राकाशयत्पुरः सर्व–साध्वीनां स्वपतेर्मतम् ॥ ४२ ॥ शय्यातरस्य टण्कस्या–ऽप्यग्रे सा तदवोचत ॥ स तु श्राद्धस्तदाकर्ण्य, दध्यावेवं विशुद्धधीः॥४३॥ उत्थापयत्यसौ जैनं, वचस्तथ्यं तदाग्रहात् ॥ तदिमां बोधयिष्यामि, समये क्वापि युक्तिभिः ॥ ४४ ॥ ध्यात्वेति सोऽब्रवीदार्ये !, विशेषमहमीदृशम् ॥ सम्यग्जानामि नो किन्तु, यूयं जानीथ तद्विदः ॥ ४५ ॥ कुलालः सोऽन्यदा पक्व–भाण्डान्युद्वर्तयन्स्वयम् ॥ स्वाध्यायकरणैकाग्र–श्रीवीरदुहितुः पटे ॥ ४६ ॥ चिक्षेप ज्वलदङ्गारं, धीमान्केनाप्यलक्षितम् ॥ ततः पटं दह्यमानं, वीक्ष्य सा व्रतिनी जगौ ॥ ४७ ॥ [ युग्मम् ] संघाटी मम दग्धेयं, भो टण्क ! त्वत्प्रमादतः ॥ टण्कोऽवादीद्दह्यमाना, दग्धेति प्रोच्यते कथम् ? ॥ ४८ ॥ भवन्मते हि सम्पूर्ण–संघाटीदहने खलु ॥ दग्धा संघाटीति वक्तुं, युक्तं न पुनरन्यथा ! ॥ ४९ ॥ अथ चेद्भगवद्वाक्यं, स्वीक्रियेत तदा सदः ॥ वक्तुं युज्येत तद्विश्व–मान्यं तत्प्रतिपद्यताम् ॥ ५० ॥ तन्निशम्य गलन्मिथ्या–दर्शना प्रियदर्शना ॥ इत्यवादीदहो आर्य !, साध्वहं बोधिता त्वया ! ॥ ५१ ॥ अतः परं जैनवचः, प्रमाणं मे जगद्धितम् ॥ यत्तु तद्दूषितं तस्य, मिथ्यादुष्कृतमस्तु मे ! ॥ ५२ ॥ इत्युक्त्वा सा ययौ पार्श्वे, जमालेः सपरिच्छदा ॥ तस्याग्रे चावदन्नैका, युक्तीर्जिनमतानुगाः ॥५३॥ तस्या वचोभिरपि स, नामुचत्तं कदाग्रहम् ॥ रसोन इव दुर्गन्धं, सुगन्धिद्रव्यवासनैः ॥ ५४ ॥ ततः सा सपरीवारा, गतशेषाश्च साधवः ॥ हित्वा दुर्मतमग्रं तं, श्रीमहावीरमाश्रयत् ॥ ५५ ॥ तदा च भगवांश्चम्पानगरीं पावयन्नभूत् ॥ जमालिरपि नीरोग–श्चम्पायामगमत्ततः ॥ ५६ ॥ तत्र चैत्ये पूर्णभद्रा–ऽभिधाने तस्थुपोऽर्हतः ॥ पार्श्वे गत्वा नातिदूरे, स्थित्वा चैवमुवाच सः ॥ ५७ ॥ भगवन् ! भवतः शिष्या–श्छद्मस्था बहवो यथा ॥ परलोकं गता नाहं, विज्ञेयः किल तादृशः ! ॥ ५८ ॥ यतोऽहमस्मि सम्प्राप्त–केवलज्ञानदर्शनः ॥ जिनोऽर्हंश्चेति तेनोक्ते, गौतमस्तमदोऽवदत् ॥ ५९ ॥ जमाले ! केवली जात–स्त्वं चेदेतत्तदा वद ॥ लोको जीवश्च किमसौ, शाश्वतोऽशाश्वतोऽथवा ? ॥ ६० ॥ सोऽथ तस्योत्तरं दातु–मशक्तो मौनमाश्रयत् ॥ ततो जगाद भगवान्, जमाले ! शृणु मद्वचः ॥६१॥ प्रश्नस्यास्योत्तरे मद्व–च्छक्ताः शिष्याः सहस्रशः ॥ छद्मस्थाः सन्ति मे किन्तु, त्वद्वन्नैवं वदन्ति ते ॥ ६२ ॥ अत्र प्रत्युत्तरं चेदं, जानीहि त्वं यथातथम् ॥ लोकजीवौ हि विद्येते, शाश्वताशाश्वतौ सदा ॥ ६३ ॥ तथा हि द्रव्यरूपेण, लोकः शाश्वत उच्यते ॥ अशाश्वतस्तु पर्याय–परावृत्तेः प्रतिक्षणम् ॥ ६४ ॥ द्रव्यरूपेण जीवोऽपि, कथ्यते किल शाश्वतः ॥ नृदेवत्वादिपर्याय–परावृत्तेस्त्वशाश्वतः ॥ ६५ ॥ इति स्वामिवचो नैव, श्रद्दधौ स कदाग्रहात् ॥ प्रभुपार्श्वाच्च निर्गत्य, स्वैरं पर्यटि भूतले ॥ ६६ ॥ निह्नवत्वाच्च संघेना–ऽखिलेनापि बहिष्कृतः ॥ स व्युद्ग्राहयल्लोकान्, बहुभिः कुमतोक्तिभिः ॥ ६७ ॥ एवं जमालिः श्रामण्यं, प्रपाल्य बहुवत्सरान् ॥ प्रान्ते संलेखनामर्ध–मासिकीं प्रविधाय च ॥ ६८ ॥ तत्पातकमनालोच्य, मृतः षष्ठे सुरालये ॥ त्रयोदश समुद्रायुः, सुरः किल्बिषिकोऽभवत् ॥ ६९ ॥ [ युग्मम् ] विपन्नं तं समाकर्ण्य, प्रभुं पप्रच्छ गौतमः ॥ जमालिरत्युग्रतपाः, कां गतिं गतवानिति ? ॥ ७० ॥ जिनो जगौ षष्ठकल्पे, सोऽभूत्किल्बिषिकः सुरः ॥ गणी स्माह कुतो घोर–तपसोऽप्यस्य सा गतिः ? ॥ ७१ ॥ जिनोऽप्यधाद्धर्मगुरू–पाध्यायादेर्विरोधतः ॥ जमालिस्तां गतिं लेभे, कृतभूरितपा अपि ! ॥ ७२ ॥ ततश्च्युत्वा क्व स स्वामिन् ! यास्यतीति पुनर्जिनम् ? ॥ पप्रच्छ गौतमस्वामी, ततोऽवादीददो विभुः ॥ ७३ ॥ तिर्यङ्नृनाकिषु भवान् कतिचिद्भ्रमित्वा, सिद्धिं गमिष्यति चिरेण ततश्च्युतोऽसौ ॥ प्राप्याऽपि बोधमिति केचन हारयन्ति, तद्देवरत्नमिव दुर्लभ एव बोधिः ॥ ७४ ॥ इति प्रथमनिह्नवकथा ॥ १ ॥

"अथ वीरविमोक्षज्ञानात्, षोडशाब्दा बभूवुषः ॥ निह्नवस्य द्वितीयस्य, वृत्तान्तं वच्मि तद्यथा ॥ १ ॥" पुरा पुरे राजगृहे, चैत्ये गुणशिलाभिधे ॥ वसुसंज्ञा महाप्रज्ञाः, सूरयः समवासरन् ॥ २ ॥ तेषामशेषपूर्वाब्धि–पारगाणां मनस्विनाम् ॥ शिष्योऽभूत्तिष्यगुप्ताख्यः, पूर्वाध्ययनतत्परः ॥ ३ ॥ पूर्वमात्मप्रवादाख्यं, सप्तमं पठतोऽन्यदा ॥ जीवप्रदेशविषय– स्तस्यार्थोऽयमुपागमत् ॥ ४ ॥ एकः प्रदेशो जीवस्य, न जीव इति कथ्यते ॥ एवं द्वित्रिचतुष्पञ्च–संख्यातासंख्यका अपि ॥ ५ ॥ यावत्प्रदेशेनाऽप्यूनो, जीवो जीवो न भण्यते ॥ ऊने वस्तुनि यत्पूर्ण–व्यपदेशो न वा-

स्तव. ॥ ६ ॥ लोकाकाशप्रदेशौघ–तुल्याशेषप्रदेशवान् ॥ जीवः पुनर्जीव इति, वक्तव्यो व्यक्तबुद्धिभिः ॥ ७ ॥ एत-मर्थमधीयानो–ऽधमकर्मोदयेन सः ॥ तदा निप्रतिपेदानः, स्थविरानित्यभाषत ॥ ८ ॥ एकेनापि प्रदेशेन, विहीनाः सकला अपि ॥ जीवप्रदेशा नो जीव–व्यपदेशं लभन्ति चेत् ? ॥ ९ ॥ तदा स एव वक्तव्य, प्रदेशो जीवसंज्ञया ॥ तद्भाव एव जीवत्वं, भवतीति विनिश्चयात् ॥ १० ॥ ततस्तं प्रोचुराचार्या, वत्साऽयुक्तं ब्रवीषि किम् ? ॥ नह्येकस्य प्रदेशस्य, जीवत्वं युज्यते क्वचित् ॥ ११ ॥ अंशा निरंशा जीवस्य, प्रदेशा इत्युदीरिताः ॥ घटस्येवाणवस्ते च, तुल्याः सर्वे परस्परम् ॥ १२ ॥ तद्विशेषात्कुतस्तस्यै–कस्य जीवत्वमिष्यते ? ॥ पूरणादिति चेत्तन्न, युक्तं युक्तिविरोधतः ॥ १३ ॥ यथायं पूरकस्तद्व–त्सन्ति सर्वेऽपि पूरकाः ॥ तेषामन्यतमेनापि, विना स्याज्जीवता न यत् ॥ १४ ॥ अथा-न्तिमत्वादिति चेत्, तदपि स्या न्न यौक्तिकम् ॥ अन्तिमत्वं यतस्तस्या–ऽऽपेक्षिकं न तु तात्विकम् ॥ १५ ॥ आपे-क्षिकञ्च नैकत्र, नियतं स्यात्कदाचन ॥ अपेक्षावशतस्तस्य, सर्वत्रापि प्रवर्तनात् ॥ १६ ॥ तदेकेन विना तेन, जीवत्वं न यथाऽपरे ॥ लभन्ते न तथा सोऽपि, तैर्विनाप्नोति जीवताम् ॥ १७ ॥ ["ततश्च"] अणावेकत्र नो कुम्भ–व्यपदेशो भवेद्यथा ॥ तथैकस्मिन्प्रदेशे स्या–न्निर्देशो नात्मनोपि हि ॥ १८ ॥ भवेत्प्रदेशादेकस्मा–त्पूर्णस्यार्थक्रियापि न ॥ पटकार्यं हि नो तन्तो–रेकस्मादुपलभ्यते ॥ १९ ॥ तत्कृत्स्नात्मप्रदेशेषु, जीवत्वमिति निश्चितम् ॥ श्रद्धेहि भगवद्वाक्यं, विधेहि सफलं जनुः ॥ २० ॥ एवं प्रज्ञाप्यमानोऽपि, गुरुभिः करुणापरैः ॥ कदाग्रहगृहीतः स, न तत्कुमतमत्यजत् ! ॥ २१ ॥ ततः कायोत्सर्गपूर्वं, सूरीन्द्रैः स बहिष्कृतः ॥ पर्याट पृथव्यां कुमतै–र्जनान् व्युद्ग्राहयन् घनान् ॥ २२ ॥ पुर्यामाम-लकल्पायां, सोऽन्यदा पर्यटन् ययौ ॥ आम्रसालवने चास्था–त्स परिच्छदसंयुत. ॥ २३ ॥ तस्यां पुर्यां च मित्रश्री–संज्ञोऽभूत् श्रावकाग्रणीः ॥ जिनेन्द्रचरणाम्भोज–भजनैकमधुव्रतः ॥ २४ ॥ स तं सतत्रमायातं, श्रुत्वाऽन्यश्रावकैः समम् ॥ तत्रोद्यानेऽगमत्तं च, प्रणनाम यथोचितम् ॥ २५ ॥ तद्देशनां च शुश्राव, निह्नवं तं विदन्नपि ॥ तदग्रे तिष्यगुप्तोऽपि, निजं प्राकाशयन्मतम् ॥ २६ ॥ समये बोधयिष्यामि, दृष्टान्तेनेति चिन्तयन् ॥ मित्रश्रीर्न समं तेन, विवादं विदधे तदा ॥ २७ ॥ किन्तु स प्रत्यहं तत्र, तं नन्तुं मायया ययौ ॥ समयज्ञा हि कुर्वन्ति, शुभोदर्काय तामपि ॥ २८ ॥ अथ जेमनवाराऽभू–द्वरिष्ठा तद्गृहेऽन्यदा ॥ तदोद्याने तमाह्वातुं, मित्रश्रीश्रावको ययौ ॥ २९ ॥ अद्य यूयं स्वपादाभ्यां, पावित्रयत मद्गृहम् । इत्युक्त्वा सपरीवारं, स्वसौधे च निनाय तम् ॥ ३० ॥ सोऽथ हृद्यैः खण्डखाद्यै–र्मोदकाद्यैश्च भूरिभिः ॥ भृतानि बहु पात्राणि, ढौकयामास तत्पुरः ॥ ३१ ॥ खाद्यस्यैकस्यैकमंशं, तिल-मात्रं च तस्य सः ॥ ददावेवं मोदकादे–रपि सर्वस्य वस्तुनः ॥ ३२ ॥ इत्थं कूरस्य सूपस्या–प्येकैकं सिक्थमार्प-यत् ॥ घृतस्य विन्दु शाकस्या–प्यंशं तन्तुं पटस्य च ॥ ३३ ॥ स तु शिष्ययुतो दध्यौ, नूनं केनापि हेतुना ॥ पूर्वमेवं ददात्येष, पश्चात्पूर्णं प्रदास्यति ॥ ३४ ॥ मित्रश्रीस्तु तदा प्रोचे, वन्धूनेवं स्वयं नमन् ॥ द्रुतं नमत भो ! यूयं, निर्ग्रन्थान् प्रतिलम्भितान् ! ॥ ३५ ॥ ततः सशिष्यः सोऽवादी–त्किं वयं धर्षिता इति ? ॥ मित्रश्रीरब्रवीद्यूयं, मयका धर्षिताः कथम् ? ॥ ३६ ॥ अन्त्या ह्यवयवा देय–वस्तूनामर्पिता मया ॥ अन्त्यावयवमात्रश्च, मते वोऽवयवी भवेत् ! ॥ ३७ ॥ तच्चेत्सत्यं तदा का हि, धर्षणा विहिता मया ? ॥ एभिरेव हि पूर्णानां, कार्यं भावि भवन्मते ! ॥ ३८ ॥ अथ चेदर्हतां वाणी, सूनृताभ्युपगम्यते ॥ तदा तेषां मतेनाहं, भवन्तं प्रतिलम्भये ॥ ३९ ॥ तया गिरा तिष्यगुप्तः, संबुद्धः सपरिच्छदः ॥ इत्यभ्यधान्महाश्राद्ध !, सत्येयं प्रेरणा कृता ! ॥ ४० ॥ अथ वीर विभोर्वाक्यं, प्रमाणं मम सर्वदा ॥ तदुत्थापनसञ्जातं, मिथ्यादुष्कृतमस्तु मे ॥ ४१ ॥ ततः प्रमुदितस्वान्तो, मित्रश्रीर्भक्तिपूर्वकम् ॥ वस्त्रा-हारादिभिः सम्यक्, प्रतिलम्भयति स्म तम् ॥ ४२ ॥ आलोच्य तत्पापमवाप तिष्य–गुप्तोऽपि शुद्धिं परिवारयुक्तः ॥ गतोऽपि बोधिर्यदनेन लब्ध–स्तदस्य भाग्यं विषयो न वाचाम् ॥ ४३ ॥ इति द्वितीयनिह्नवकथा ॥ २ ॥

"चतुर्दशोत्तरे वीर–मोक्षाद्वर्षशतद्वये ॥ जातस्याथ तृतीयस्य, निह्नवस्योच्यते कथा ॥१॥" "तद्यथा"– पुर्यां श्वेतम्बि-कानाम्न्यां, वने पोलाशसंज्ञके ॥ सगच्छाः समवासार्षु–रार्याषाढाख्यसूरयः ॥ २ ॥ आगाढयोगवहनं, प्रतिपन्नाः क्रियारताः ॥ बभूवुर्बहवः शिष्या–स्तेषामागमपाठिनः ॥ ३ ॥ अन्यदा निशि सूरीणां, तेषामासीद्विसूचिका ॥ न त्वजागरयन् कञ्चि–द्विनेयं ते महाधियः ! ॥ ४ ॥ तया रुजा विपन्नाश्च, कल्पे सौधर्मसंज्ञके ॥ विमाने नलिनीगुल्मे, सुध्यानाद्देवतां ययुः ॥ ५ ॥ सोऽथ देवोवधिज्ञानो–पयोगात्तं निजं वपु ॥ ददर्शागाढयोगान्तः–प्रविष्टांस्तांश्च संयतान् ॥ ६ ॥ ततस्तत्कृपया स्वाङ्गे, प्रविश्य स गुरो मुनीन् ॥ वैरात्रिकस्य वेलाऽभू–दित्युदित्वोदतिष्ठपत् ॥ ७ ॥

प्रागद्योगक्रिया सर्वा, कारयंस्तांश्च पाठयन् ॥ दिव्यानुभावात्सकलं, द्रुतमेव समापयत् ॥ ८ ॥ निर्व्यूढयोगकार्यो-स्ता-नथेत्यूचे स निर्जरः ॥ देवभूयं गतोऽभूव-ममुकस्मिन् दिने ह्यहम् ॥ ९ ॥ स्वाङ्गे च प्राविशं भूयो, युष्मद्योगसमाप्तये ॥ अथ त्वहं गमिष्यामि, कृतकृत्यो निजास्पदम् ॥ १० ॥ तदसंयतभावेऽपि, युष्माभिः संयतैर्मया ॥ कारितं यद्वन्दनादि, तत्क्षमध्वं क्षमाधनाः ! ॥ ११ ॥ क्षमयित्वेति तान् देवो, देहं हित्वाऽगमद्दिवम् ॥ तदङ्गं तेऽपि मुनयः, परिष्ठाप्येत्यचिन्तयन् ॥ १२ ॥ अज्ञानाद्वन्दितोऽस्माभि-रियत्कालमसंयतः ॥ तदन्योऽपि मुनिर्देवः, संयतो वेति वेत्ति कः ? ॥ १३ ॥ यथाऽहं नाऽपरं वेद्मि, तथा सोऽपि न मामिति ॥ एवं सुरी वा साध्वी वे-त्यार्यिकामपि वेत्ति कः ? ॥ १४ ॥ ततः सकलमव्यक्तं, वक्तव्यं तत्त्ववेदिभिः ॥ यथा न स्यान्मृषावादो, न चासंयतवन्दनम् ॥ १५ ॥ ध्यायन्त इति ते जाताः, शङ्कामिथ्यात्वमाश्रिताः ॥ अव्यक्तभावस्वीकारा-न्नावन्दन्त परस्परम् ॥ १६ ॥ अव्यक्तभावं ते सर्वे-ऽन्येषामपि पुरस्तथा ॥ प्ररूपयन्तो व्यहरन्, सममेव यथारुचि ! ॥ १७ ॥ ज्ञात्वा विप्रतिपन्नांस्तान्, स्थविराः केचिदूचिरे ॥ अव्यक्तभावाङ्गीकारे, भावो हि भवतामयम् ॥ १८ ॥ निर्णेतुं शक्यते किञ्चि-दपि ज्ञानेन नैव यत् ॥ अव्यक्ताः प्रतिपत्तव्या-स्तद्भावाः सकला अपि ! ॥ १९ ॥ न चेदं सङ्गतं युष्म- न्मतं युक्तिविरोधतः ॥ यद्वस्तुनिर्णयकरं, ज्ञानमेवोपलभ्यते ! ॥ २० ॥ चेद् ज्ञानस्याखिलस्यापि, न स्यान्निश्चयकारिता ॥ ज्ञानोपदर्शिता तर्हि, क्रियेयं क्रियते कथम् ? ॥ २१ ॥ किञ्च चेत्सर्वथा ज्ञानं, नैव निश्चयकारकम् ॥ तत्कथं प्रत्यहं भक्त-पानादेरपि निश्चयः ? ॥ २२ ॥ यतः-"इदं शुद्धमुताशुद्धं, निर्जीवमुत जीवयुक् ॥ इत्यादिकमपि ज्ञानं, विना निश्चीयते न हि ॥ २३ ॥" अथ चेद्बहुशो दृष्ट-संवादं व्यवहारतः ॥ उच्यते भक्तपानादे-र्ज्ञानं निर्णयकारकम् ॥ २४ ॥ व्यवहारादेव तर्हि, साध्वादेरपि वस्तुनः ॥ ज्ञानं निर्णयकारीति, कुतो न प्रतिपद्यते ? ॥ २५ ॥ छद्मस्थानां हि सर्वा स्या-त्प्रवृत्तिर्व्यवहारतः ॥ तदुच्छेदे तु तीर्थस्या-ऽप्युच्छेदो यत्प्रसज्यते ॥ २६ ॥ यदाहुः-"जइ जिणमयं पवज्जह, ता मा ववहार निच्छए मुअह ॥ ववहार नओच्छेए, तित्थुच्छेओ जओ वस्सं ॥ २७ ॥" व्यवहारं प्रपद्यध्वं, तद्यूयमपि साधवः ! ॥ इत्युक्ता अपि तैर्नैव, तत्यजुस्ते तमाग्रहम् ॥ २८ ॥ ततः कायोत्सर्गपूर्वं, स्थविरैस्ते बहिष्कृताः ॥ पर्यटन्तोऽन्यदा जग्मुः, पुरं राजगृहाभिधम् ॥ २९ ॥ मौर्यवंश्यो नृपस्तत्र, बलभद्राभिधोऽभवत् ॥ आगतान् स्वपुरेऽश्रौषी- द्यक्तः सोऽव्यक्तनिह्नवान् ॥ ३० ॥ सुश्रावकः स राजा तान्, प्रतिबोधयितुं निजैः ॥ भटैरानाययद्बद्धां-श्चैत्याद्गुणशिलाह्वयात् ॥ ३१ ॥ कटमर्देन सर्वान-प्यमून्मर्दयतेति च ॥ सेवकानादिशद्भूमान्, दर्शयन् कृत्रिमां रुषम् ॥ ३२ ॥ कटमर्दे हि मर्द्यन्ते, कटाधःस्था जना द्विपैः ॥ इति द्विपान् कटांश्चैवा-निन्यिरे राजपूरुषाः ॥ ३३ ॥ तान्वीक्ष्य मुनयो भीता, इति भूपतिमूचिरे ॥ श्राद्धोऽपि त्वं कथं साधू-नस्मान् हंसि महीपते ! ॥ ३४ ॥ तस्करा हेरिका वेति, को वो वेत्तीति भूभुजा ॥ प्रोक्ते ते प्रोचिरे राज-न्नूनं साधूनवेहि नः ॥३५॥ भूपोऽवादीद्वस्तु सर्व-मप्यव्यक्तं भवन्मते ॥ तन्न. साधूनवेहीति, युष्माभिः कथ्यते कथम् ? ॥३६॥ युष्मन्मते चाहमपि, श्राद्धोऽन्यो वाऽस्मि तत्कथम् ॥ यूयं मां श्रावकं ब्रूत, स्वयमव्यक्तवादिनः ? ॥ ३७ ॥ अथ चेत्प्रतिपद्येत, व्यवहारनयस्तदा ॥ निर्ग्रन्थश्रमणान् युष्मान्, श्रद्दधाम्यहमुत्तमान् ॥ ३८ ॥ ततस्ते लज्जिता बाढं, संबुद्धा भूभुजो गिरा ॥ श्रमणाः स्मो वयमिति, निरशङ्कं प्रतिपेदिरे ॥ ३९ ॥ ऊचुश्चैवं चिरभ्रान्ताः, साधु राजंस्त्वया वयम् ॥ सन्मार्गं प्रापिता मार्ग-दर्शिनेव विलोचनाः ॥ ४० ॥ ततोऽवादीन्नृपो युष्मान्, प्रतिबोधयितुं मया ॥ अयुक्तं विदधे यत्त-न्मर्षणीयं महर्षिभिः ॥ ४१ ॥ इत्युदीर्य बहुमानपूर्वकं, तेन भूपतिवरेण वन्दिताः ॥ साधवः पुनरवाप्तबोधयः, पूर्ववज्जगति ते विजह्रिरे ॥ ४२ ॥ इति तृतीयनिह्नवकथा ॥ ३ ॥

"स्वामिमोक्षाद्गते विंश-त्यधिकेऽब्दशतद्वये ॥ उत्पन्नस्याऽथ तुर्यस्य, निह्नवस्य कथां ब्रुवे ॥ १ ॥" "तथाहि" नगर्यां मिथिलाख्यायां, चैत्ये लक्ष्मीगृहाभिधे ॥ समवासार्षुराचार्याः, श्रीमहागिरिसंज्ञकाः ॥ २ ॥ तेषां शिष्यस्य कोडिन्ना-ख्यस्य शिष्योऽभवत्सुधीः ॥ अश्वमित्राभिधः पूर्व-पठनोद्यतमानसः ॥ ३ ॥ पूर्वे विद्यानुप्रवादा-भिधाने दशमेऽन्यदा ॥ तस्य नैपुणिकं वस्तु, पठतोऽर्थोऽयमागमत् ॥ ४ ॥ वर्तमानक्षणगता, जीवा नैरयिकादयः ॥ वैमानिकान्ताः सर्वेऽपि, व्युच्छेत्स्यन्ति क्षणान्तरे ॥ ५ ॥ इह विप्रतिपन्नः स, प्रत्यपद्यत सर्वथा ॥ जीवादीनां पदार्थानां, समुच्छेदं प्रतिक्षणम् ॥ ६ ॥ ऊचे च सर्वथा सर्वं, वस्तूत्पन्नमनुक्षणम् ॥ याति नाशं यथा शक्र-चापविद्युद्घनादयः ॥ ७ ॥ इत्यूचानं तमाचार्याः, स्माहुरेवं महाधियः ॥ सर्वथा वस्तुनो नाशं, मा स्वीकार्षीः प्रतिक्षणम् ॥ ८ ॥

यतः–"अपरापरपर्यायो–त्पत्तिनाशाद्यपेक्षया ॥ कथञ्चिदेव वस्तूनां, नाशोऽनुक्षणमिष्यते ॥ ९ ॥" सर्वथा त्वर्थ-विध्वंस–स्वीकारे तु क्षणान्तरे ॥ प्रत्यक्षेण तथारूपः, पदार्थो दृश्यते कथम् ? ॥ १० ॥ "किञ्च"–प्रतिक्षणं वस्तु-नाशे, सर्वथा स्वीकृते कथम् ॥ ऐहिकः पारत्रिकश्च, व्यवहारोऽपि सिध्यति ? ॥ ११ ॥ तथाहि–"भुक्तिप्रारम्भ-कोऽन्यः स्या–त्तृप्तिरन्यस्य जायते ॥ अन्यो गच्छति पन्थान–मन्योऽनुभवति श्रमम् ॥ १२ ॥" "पश्यत्यन्यो घटा-द्यर्थान्, ज्ञानमन्यस्य जायते ॥ अन्यः प्रारभते कार्यं, कर्ता चान्यो भवेज्जनः ॥ १३ ॥" "अन्यः करोति दुष्कर्म, नरके याति चापरः ॥ चारित्रं पालयत्यन्यो, मुक्तिमन्योऽधिगच्छति ॥ १४ ॥" इति सर्वं वैपरीत्यं, भवेत्क्षणिक-वादतः ॥ न चैतद्दृष्टमिष्टं वा, केनापि क्वचिदप्यहो ! ॥ १५ ॥ ततसर्वथा वस्तुनाशो–ऽनुक्षणं नैव यौक्तिकः ॥ ज्ञेयोऽसौ किन्तु पर्याय–परावृत्त्या विचक्षणैः ॥ १६ ॥ सूत्रेऽपि नारकादीना–मुच्छेदो यः प्रकीर्तितः ॥ पर्यायान्तरसम्प्रा-प्ति–रूपः सोऽप्यवबुध्यताम् ॥ १७ ॥ जैनानां ह्यखिलं वस्तु, द्रव्यतः शाश्वतं भवेत् ॥ अपरापरपर्याय–परावृत्ते-स्त्वशाश्वतम् ॥ १८ ॥ इति सूरिभिरुक्तोपि, न मेने स मुनिर्यदा ॥ बहिश्चक्रे तदोत्सर्ग–पूर्वं निह्नव इत्ययम् ॥ १९ ॥ ततो व्युद्ग्राहितैः सार्धं, साधुभिर्भूतलेऽभ्रमत् ॥ स समुच्छेदवादोक्त्या, लोकान् व्युद्ग्राहयन् भृशम् ॥ २० ॥ सोऽन्यदा पर्यटन् राज–गृहेगात्सपरिच्छदः ॥ शुल्काध्यक्षास्तत्र राज्ञो, बभूवुः श्रावकोत्तमाः ! ॥ २१ ॥ ते च ताना-गतान् ज्ञात्वा, मासुच्छेदिकनिह्नवान् ॥ दध्युरेतान् बोधयामः, कर्कशेनापि कर्मणा ॥ २२ ॥ यतः–"यः कर्कशो-प्युपायः प्राग्, विपाके सुन्दरो भवेत् ॥ सोप्यङ्गिनां हितस्तीव्रः, प्रतिकार इवापटोः ॥ २३ ॥ ध्यात्वेत्यारेभिरे तेषां, ताडनं ते कशादिभिः ॥ ततस्ते मुनयः प्रोचु–र्भयवेपितभूघनाः ॥ २४ ॥ अस्माभिः श्रावका यूयं, जनश्रुत्या श्रुताः पुरा ॥ तत्किं विधत्त विध्वंस–मस्माकं व्रतिनामपि ? ॥ २५ ॥ श्राद्धाः प्रोचुरभूदात्तं, व्रतं यैस्ते भवन्मते ॥ व्यु-च्छिन्नाः सर्वथा यूयं, चोत्पन्नाः केचनाऽपरे ! ॥ २६ ॥ किञ्च प्रतिक्षणं युष्मान्, स्वयमेव विनश्वरान् ॥ विनाश-यत्यन्य इति, प्रतिपद्येत कः सुधीः ? ॥ २७ ॥ युष्मन्मते च वयम–प्यपरे श्रावका न तु ॥ अथ चेत्स्वामिसिद्धान्तं, प्रमाणीकुरुतोत्तमम् ॥ २८ ॥ तदा तु युष्मांस्तानेव, श्रद्ध्मः श्रमणोत्तमान् ॥ न च युष्मान्नाशयाम–स्त एव श्रावका वयम् ॥ २९ ॥ यतः–"तदेव वस्तु कालादि–सामग्र्या स्वामिनो मते ॥ एकसामयिकत्वेन, व्युच्छिनत्ति क्षणा-न्तरे ॥ ३० ॥ द्विसामयिकभावेनो–त्पद्यते चापरे पुनः ॥ द्विसामयिकतां त्यक्त्वा, तत्त्रिसामयिकं भवेत् ॥ ३१ ॥ एवं पुनः पुनर्वाच्यं, चतुरादिक्षणेष्वपि ॥ नारकाद्या अप्यनेना–ऽऽशयेन क्षणिका मताः ॥ ३२ ॥ श्रुत्वेति प्रति-बुद्धास्ते, क्षणक्षयकदाग्रहम् ॥ हित्वा वीरविभोर्वाणीं, तथेति प्रतिपेदिरे ॥ ३३ ॥ अथ तैर्मुदितैरुपासकैः, क्षमयित्वा परिवन्दिता मुदा ॥ व्यहरन् भुवि ते महर्षयः, पुनरासादितश्रुतबोधयः ॥ ३४ ॥ इति चतुर्थनिह्नवकथा ॥ ४ ॥

"प्रभोर्मोक्षाद्गतेऽब्दाना–मष्टाविंशे शतद्वये ॥ जातस्य निह्नवस्याथ, पञ्चमस्योच्यते कथा ॥ १ ॥" "तद्यथा"— तटिन्या उल्लुकाह्वायाः, पूर्वस्मिन्पुलिने पुरं ॥ आसीदुल्लुकतीराख्यं, परमर्द्धि मनोरमम् ॥ २ ॥ तस्या एव सरस्वत्याः, द्वितीयपुलिने पुनः ॥ बभूव भूरिलक्ष्मीकं, खेटस्थामाभिधं पुरम् ॥ ३ ॥ महागिरिगुरोः शिष्यः, खेटस्थामपुरेऽन्यदा ॥ धनगुप्ताभिधः सूरि–श्चतुर्मासीमवास्थितः ॥ ४ ॥ तस्य शिष्यो गङ्गदेवा–चार्यस्तु सपरिच्छदः ॥ तस्थावुल्लुकतीरा-ख्ये, पुरे प्राच्यतटस्थिते ॥ ५ ॥ स चान्येद्युः शरत्काले, गुरुवन्दनहेतवे ॥ खेटस्थामपुरे गच्छन्, प्रविवेशोल्लुकान-दीम् ॥ ६ ॥ खल्वाटस्य तदा तस्य, शीर्षे सूर्यांशुसङ्गमात् ॥ बभूव तापः पानीय–सङ्गाच्छैत्यं च पादयोः ॥ ७ ॥ गङ्गदेवस्ततो दध्या–वेकत्र समये क्रिया ॥ एकैव वेद्यत इति, सूत्रोक्तिर्घटते कथम् ? ॥ ८ ॥ शीतमुष्णं च युग-प–द्यदहं वेदयेऽधुना ॥ क्रियाद्वयोपयोगः स्या–त्तदेकसमयेऽपि हि ॥ ९ ॥ ध्यात्वेति स्वगुरून्नत्वा, सोऽवादीत्तं निजं मतम् ॥ ततस्ते प्रोचिरे मास्म–वादीरेतदयौक्तिकम् ॥ १० ॥ उपयोगयुगं वत्स !, युगपन्नोपपद्यते ॥ छाया-तपवदन्योन्यं, विरुद्धं तद्धवेद्यतः ॥ ११ ॥ यदा स्यात्प्राणिनां शीतो–पयोगव्यापृतं मनः ॥ तदा नोष्णोपयोगे त–द्याप्रियेत विरोधतः ॥ १२ ॥ यौगपद्याभिमानस्तू–पयोगयुगलस्य यः ॥ स तु मानससञ्चार–क्रमस्याऽनुपलक्षणात् ॥ १३ ॥ मनो हि मौलिपादादा–वुपयुक्तीभवन्न हि ॥ ज्ञायते सूक्ष्मतात्यन्ता–स्थिरताशीघ्रतादिभिः ॥ १४ ॥ "ततश्च" यथा पाथोरुहदल–शतस्य व्यतिभेदने ॥ प्रतीयमानमप्यस्ति, यौगपद्यं न वास्तवम् ॥ १५ ॥ तथोपयो-गयुग्मस्य, यौगपद्यं भवादृशाम् ॥ प्रतीयमानमपि नो, वास्तवं किं बहूक्तिभिः ? ॥ १६ ॥ इति सूरिभिरुक्तः स, तदा तूष्णीकतां दधौ ॥ न त्वहासीद्वासनां तां, श्वपुच्छमिव वक्रताम् ॥ १७ ॥ असन्मतेन तेनान्यान्, स व्युद्ग्रा-

द्वयन्मुनीन् ॥ आग्रही हि स्वमतकर्तु–मिच्छत्यन्यमलर्कवत् ॥ १८ ॥ तं च श्रुत्वा जनश्रुत्या, जनन्व्युद्ग्राहणोद्यतम् ॥ सूरयोऽवारयन्नेष, संसारे मा भ्रमीदिति ! ॥ १९ ॥ तथापि तं तथावस्थ–मत्यजन्तं तमाग्रहम् ॥ उत्सर्गपूर्वमाचार्याः, शासनान्निरकाशयन् ॥ २० ॥ ततो व्युद्ग्राहयन् लोका–नसद्भावनया तया ॥ पुरे राजगृहेऽन्येद्यु–र्ययौ स्वैरं परिभ्रमन् ॥ २१ ॥ सुखं तत्रावतस्थे च, मणिनागाख्यभोगिनः ॥ चैत्ये महातपस्तीर–प्रभाह्वहृदपार्श्वगे ॥ २२ ॥ तत्र चोपादिशदिदं, श्रोतृसन्दोहसंसदि ॥ वेद्यते युगपज्जीवैः, क्रियायुगलमप्यहो ! ॥ २३ ॥ इति प्ररूपयन्तं तं, पर्षन्मध्यस्थमेव सः ॥ उद्यम्य मुद्गरमिति, प्रोचे, चैत्याधिपः फणी ॥ २४ ॥ श्रीवीरेणाऽत्र समव–सृतेनेति प्ररूपितम् ॥ एकैव वेद्यते जीवै–रेकस्मिन् समये क्रिया ॥ २५ ॥ तत्किं त्वमधिकज्ञानो, जातो ? वीरप्रभोरपि ॥ यदन्यथा वचस्तस्य, कुरुषे दुष्ट शिष्य रे ! ॥ २६ ॥ मुञ्च दुर्वासनामेना–मङ्गीकुरु विभोर्वचः ॥ नो चेत्त्वां शिक्षयिष्यामि, मुद्गरेणाऽमुनाऽधुना ॥ २७ ॥ प्रत्यक्षीभूय तेनैवं, शिक्षितो नागनाकिना ॥ ततसोऽङ्गीकृतवान् मिथ्या–दुष्कृतं मेऽस्त्विति ब्रुवन् ॥ २८ ॥ गङ्गदेव इति तेन भोगिना, बोधितः पुनरवाप्तबोधिकः ॥ गाङ्गवारिविमलं दधद्व्रतं, भूतले विहरति स्म पूर्ववत् ॥ २९ ॥ इति पञ्चमनिह्नवकथा ॥ ५ ॥

"चतुश्चत्वारिंशदाढ्यै–र्वर्षाणां पञ्चभिः शतैः ॥ श्रीवीरमुक्तेर्जातस्य, षष्ठस्याथोच्यते कथा ॥ १ ॥ "तद्यथा"— श्री अन्तरञ्जिकापुर्यां, बलश्रीरभवन्नृपः ॥ तिरस्कारी रिपुबल–श्रियां स्वीयबलश्रिया ॥ २ ॥ तस्यां नगर्यामन्येद्यु–श्चैत्ये भूतगुहाभिधे ॥ सगच्छाः समवासार्पुः, श्रीगुप्ताह्वयसूरयः ॥ ३ ॥ इतश्चैको भूरिविद्या–बलाढ्यो गेवपर्वतः ॥ परिव्राडाययौ तस्यां, पुर्यामखिलशास्त्रवित् ॥ ४ ॥ लोहपट्टावबद्धतुन्दो, जम्बूशाखां दधत् करे ॥ पुरे तत्राभ्रमल्लोकैः, पृष्टश्चैवमुवाच सः ॥ ५ ॥ इदं तुन्दं महाविद्या–सम्भारेणातिभूयसा ॥ स्फुटतीति मया लोह–पट्टकेन निबध्यते ! ॥ ६ ॥ जम्बूद्वीपे च मे कोपि, प्रतिवादी न विद्यते ॥ इति सूचयितुं जम्बू–शाखासौ ध्रियते मया ! ॥ ७ ॥ ततो लोकाः 'पोट्टसाल', इति नाम्ना तमूचिरे ॥ सोऽपि राजसभां गत्वा, बलश्रीनृपमित्यवक् ॥ ८ ॥ तव पुर्यां भवेत्कोऽपि, यदि वादी तदा मया ॥ वादं कारय नो चेन्मे, जयढक्कां समर्पय ! ॥ ९ ॥ तादृशो वादिनोऽन्यस्या–ऽभावाद्भूमिविभुस्ततः ॥ विमनस्कोऽप्यदात्तस्मै, पटहं जयसूचकम् ॥ १० ॥ परप्रवादाः सर्वेऽपि, शून्या इतकि सोऽप्यथ ॥ उद्घोषयितुमारेभे, डिण्डिमाघातपूर्वकम् ॥ ११ ॥ इतश्च तेषां श्रीगुप्त–सूरीणां भगिनीसुतः ॥ शिष्यश्च रोहगुप्ताख्य–स्तत्रागच्छन् पुरान्तरात् ॥ १२ ॥ परिव्राट्कारितां श्रुत्वोद्घोषणां तामदोवदत् ॥ करिष्ये वादमसुना, तन्मावादय तानकम् ! ॥ १३ ॥ उद्घोषणां निषिध्येति, गत्वा च गुरुसन्निधौ ॥ परिव्राट्पटहापोह–वार्तां तेषां जगाद सः ॥ १४ ॥ ततस्तं प्रोचुराचार्या, वत्स ! दुष्टु कृतं त्वया ॥ स हि त्रिदण्डिको भूरि–विद्याढ्यो विद्यते यतः ॥ १५ ॥ स च वादे पराभूतो, विद्याभिः प्रतिवादिनः ॥ करोत्युपद्रवं नाना–विधाभिर्दाम्भिकाग्रणीः ॥ १६ ॥ वृश्चिकान्पन्नगानाखू–न्मृगशूकरवायसान् ॥ शकुन्तिकाश्च कुरुते, स हि विद्याभिरुत्कटान् ॥ १७ ॥ ततोऽवादीद्रोहगुप्तः, कृतं चिन्तनयाऽनया ॥ न हि वादंप्रतिज्ञाया–ऽन्तर्द्धातुं शक्यतेऽधुना ॥ १८ ॥ मया हि शासनं जैन–मपि मा धर्षयत्वयम् ॥ इति वादोऽङ्गीकृतस्त–द्यद्भाव्यं तद्भवत्विह ! ॥ १९ ॥ ततस्तं वादकरणेकामं निर्णीय सूरयः ॥ परिव्राड्जित्वरीः पाठ–सिद्धा विद्या इमा ददुः ॥ २० ॥ केकिनो नकुला ओतु–व्याघ्रसिंहाश्च कौशिकाः ॥ श्येनाश्च याभिर्जायन्ते, तद्विद्याबाधकाः क्रमात् ॥ २१ ॥ अथ चेदपरं किञ्चि–दुपद्रवकरं भवेत् ॥ रजोहरणमेतत्त्वं, भ्रमयेः परितस्तदा ॥ २२ ॥ अनेनैव निहन्याश्च, तदुपद्रवकारकम् ॥ अस्यानुभावाच्छक्रस्या–ऽप्यजय्यस्त्वं भविष्यसि ! ॥ २३ ॥ इत्युक्त्वा मन्त्रयित्वा च, ते रजोहरणं वरम् ॥ ददुस्तस्मै तदादाय, सोप्यगाद्भूपपर्षदि ॥ २४ ॥ किं वेत्ति दुर्विदग्धोऽसौ, परिव्राजकदर्दुरः ॥ पूर्वपक्षस्तदस्यैव, भवत्विति जगाद च ॥ २५ ॥ एते हि जैना दक्षाः स्यु–र्वादादौ युक्तिपाटवात् ॥ तदेषामेव सिद्धान्तं, गृह्णामीति विचिन्तयन् ॥ ततस्त्रिदण्डिकोऽवादीत्, द्वौ राशी मम सम्मतौ ॥ जीवराशिरजीवानां, राशिश्चेति क्रमेण तौ ॥ २७ ॥ [युग्मम्] तदाकर्ण्य तदा रोहगुप्त एवं व्यचिन्तयत् ॥ अयं हि मम सिद्धान्ते, प्रविष्टो धूर्तधूर्वहः ॥ २८ ॥ अहमप्येवमेवाथ, चेद्वक्ष्ये तदयं जनः ॥ ज्ञास्यत्यसौ परिव्राजो, मतं स्वीकृतवानिति ॥ २९ ॥ तद्वचः सत्यमप्यस्यो–त्थापनीयं मयाऽधुना ॥ वादे हि तथ्यमप्यन्य–वचो हन्येत युक्तिभिः ॥ ३० ॥ ध्यात्वेति सोऽवदद्वादि–न्मावादीरीदृशं वचः ॥ यज्जीवाजीवनोजीव–रूपं राशित्रयं भवेत् ॥ ३१ ॥ तत्र जीवा भवस्थाद्या, अजीवाश्च घटादयः ॥ नो जीवास्तु छिन्नगृह–गोधापुच्छादयो

मताः ॥ ३२ ॥ वाच्यं न चेदं त्रैविध्य-मयुक्तं युक्तिवेदिभिः ॥ दण्डादावादिमध्यान्त-रूपत्रैविध्यदर्शनात् ॥ ३३ ॥
भावेष्वेवं जगत्काल-मुख्येषु सकलेष्वपि ॥ त्रैविध्यं दृश्यते तत्र, द्वैविध्यं सादिहोचितम् ॥ ३४ ॥ तेनेति राशि-
त्रितयं, व्यवस्थाप्य पराजितः ॥ परिव्राट् तज्जयायाऽथ, वृश्चिकान् विदधे बहून् ॥ ३५ ॥ ऊर्ध्वीकृतोरुपुच्छांस्ता-
नायातो वीक्ष्य दुर्धरान् ॥ रोहगुप्तो व्यधाद्भूरि-बर्हिणस्तन्निबर्हणान् ॥ ३६ ॥ वृश्चिकेषु मयूरैस्तै-र्निहतेषु त्रिद-
ण्डिकः ॥ भोगाभोगेन कीनाश-दण्डाभान् भोगिनोऽतनोत् ॥ ३७ ॥ दृष्ट्वोत्कटस्फुटाटोप-विकटांस्तानथो मुनिः ॥
चकार नकुलांस्तैश्च, ते व्याला जघ्निरे द्रुतम् ॥ ३८ ॥ ततः परिव्राड् विदधे, मूषकान् दशनोद्यतान् ॥ रोहगुप्त-
विमुक्तैस्ते-ऽप्योतुभिर्द्राग् निजघ्निरे ॥ ३९ ॥ तीक्ष्णशृङ्गांस्ततोऽमुञ्च-त्स परिव्राजको मृगान् ॥ तेऽपि व्याघ्रैः
साधुमुक्तै-र्निहता विलयं ययुः ॥ ४० ॥ चकार शूकरान् सोऽथ, त्रिदण्डी चण्डदंष्ट्रिकान् ॥ रोहगुप्तोऽपि तान्
रुद्रैः, पारीन्द्रैर्द्राक् न्यवारयत् ॥ ४१ ॥ मुमोचाऽथ द्विकव्यूहान्, वज्रतुण्डांस्त्रिदण्डिकः ॥ तांश्च न्यषेधयद्विद्या-
विहितैः कौशिकैर्व्रती ॥ ४२ ॥ अतिदुष्टाः शकुनिका-स्ततः सांन्यासिकोऽमुचत् ॥ श्येनैर्निरुत्तरीचक्रे, तांश्च साधु-
र्महाबलैः ॥ ४३ ॥ विद्याभिराभिस्तं जेतुं, परिव्राड् नाऽशकद्यदा ॥ तदा स मुमुचे विद्या-निर्मितां रासभीं रुषा
॥ ४४ ॥ तां चायान्तीं रोहगुप्तो, निरीक्ष्य परितस्तनुम् ॥ तद्रजोहरणं भ्रामं, भ्रामं तेन जघान ताम् ॥ ४५ ॥
तन्महिम्ना निष्प्रभावा, निवृत्ता साऽपि रासभी ॥ तस्योपरि परिव्राज-श्छर्दयित्वा तिरोदधे ॥ ४६ ॥ क्षीणविद्या-
बलः सोऽथ, त्रिदण्डी तेन निर्जितः ॥ अहील्यताऽखिलैर्लोकै-र्निर्दंष्ट्र इव पन्नगः ॥ ४७ ॥ ततः स लज्जितोऽत्यर्थं,
निरगाद्राजसंसदः ॥ रोहगुप्तस्त्वगाल्लोकैः, स्तूयमानोऽन्तिके गुरोः ॥ ४८ ॥ यथा जातमवादीच्च, नादव्यतिकरं
गुरोः ॥ तदाकर्ण्याऽवदत्सूरि-र्दूरीकृतकदाग्रहः ॥ ४९ ॥ विजेतुं वादिनं राशि-त्रितयं स्थापितं त्वया ॥ राशि-
द्वितयमेवास्ति, वास्तवं तु जगत्त्रये ॥ ५० ॥ एवमुत्तिष्ठता वत्स, ! नोक्तं चेत्पर्षदि त्वया ॥ इदानीमपि तत्तत्र,
गत्वाख्याहि यथातथम् ॥ ५१ ॥ [ युग्मम् ] श्रीगुप्तसूरिभिरिति, प्रोक्तोऽपि स पुनः पुनः ॥ ममापभ्राजना माऽभू-
दिति नैषीद्गुरोर्गिरम् ॥ ५२ ॥ एवमूचे च नन्वत्र, दोषः को नाम विद्यते ? ॥ अस्त्येव राशित्रितयं, वास्तवं यज्ज-
गत्त्रये ॥ ५३ ॥ गुरुर्जगावसद्भाव-मेनं माख्याहि सन्मते ! ॥ आशातना जिनानां स्या-दसतो हि प्ररूपणे ॥ ५४ ॥
एवं निवार्यमाणोऽपि, सूरिभिः स तमाग्रहम् ॥ नात्याक्षीत्किन्तु तैः साक-मारेभे वादमुन्मदः ॥ ५५ ॥ ततस्तेन
सहाचार्या, गत्वा पार्थिवपर्षदि ॥ इत्यूचुर्मम शिष्येणा-ऽमुनाऽयुक्तं तदोदितम् ॥ ५६ ॥ द्वावेव राशी विद्येते, मते नः
कथितौ जिनैः ॥ असौ तु वादिनं जेतुं, जगौ राशित्रयं तदा ॥ ५७ ॥ अथ चाऽयं मदाध्मातः, सत्यं न प्रति-
पद्यते ॥ मया प्रज्ञाप्यमानस्तु, विवादायोपतिष्ठते ॥ ५८ ॥ आकर्णयोभयाकर्णि, राजंस्तद्वादमावयोः ॥ सत्यास-
त्यविवेको हि, न स्याद्युष्मादृशैर्विना ॥ ५९ ॥ ततो राज्ञाभ्यनुज्ञाता-स्तत्र श्रीगुप्तसूरयः ॥ उपविश्याऽवदन् रोह-
गुप्तं ब्रूहि निजं मतम् ॥ ६० ॥ रोहगुप्तो जगौ जीवा-दजीवो भिद्यते यथा ॥ विलक्षणत्वान्नोजीवो-ऽप्येवं तस्मा-
द्विभिद्यते ॥ ६१ ॥ तज्जीवाजीवनोजीव-रूपं राशित्रयं स्फुटम् ॥ मतं ममेति तेनोक्ते, जजल्पुरिति सूरयः ॥ ६२ ॥
जीवाद्विलक्षणत्वं य-न्नोजीवस्योदितं त्वया ॥ तन्न सङ्गच्छते जीव-धर्माणां तत्र दर्शनात् ॥ ६३ ॥ नोजीवो
हि छिन्नपल्ली-पुच्छादिस्तव संमतः ॥ तत्र तु प्रेक्ष्यते जीव-लक्षणं स्फुरणादिकम् ॥ ६४ ॥ अथ चेज्जीवदेशत्वा-न्नो-
जीवः स त्वयोच्यते ॥ तत्किं स देशः स्याज्जीवा-द्भिन्नस्तदितरोऽथवा ? ॥ ६५ ॥ भिन्नश्चेत्तेन जीवेन, पुनस्तत्सङ्गमः
कथम् ? ॥ भिन्नो हि देशोऽन्यत्रापि, संमिलेत्परमाणुवत् ॥ ६६ ॥ तस्य देशस्य चान्येन, जीवेन सह सङ्गमे ॥
सुखदुःखादि साङ्कर्यं, स्यात्तयोः कर्मसङ्करात् ॥ ६७ ॥ अथ जीवस्य कर्मैव, देशे संक्रामतीति चेत् ॥ तदा तु दोषौ
जायेतां, कृतनाशाकृतागमौ ॥ ६८ ॥ कृतनाशो हि जायेत, नाशाद्देशस्थकर्मणः ॥ जीवस्थकर्मणो देशे, सञ्चारा-
दाकृतागमः ॥ ६९ ॥ किञ्चामूर्तस्य जीवस्य, गगनस्येव कर्हिचित् ॥ नैव देशो भवेद्भिन्नः, स्वतोऽपि परतोऽपि च
॥ ७० ॥ अभिन्नश्चेत्तदा तु स्या-जीवान्तर्गत एव सः ॥ तदा च राशिद्वितय-मेवासीन्न तु तत्त्रयम् ॥ ७१ ॥
अथाऽभिन्नोऽप्ययं देशः, स्थानभेदविवक्षया ॥ नो जीवः कथ्यते कुम्भ-गृहाद्याकाशवद्यदि ॥ ७२ ॥ तर्हि राशिर्नो-
अजीव-नामाऽपि प्रतिपद्यताम् ॥ व्योमादीनामजीवाना-मप्येवं देशसम्भवात् ॥ ७३ ॥ तथात्वे च भवेद्राशि-
चतुष्कं भवतो मते ॥ तद्राशित्रयमेवात्र, कुतस्त्वं प्रतिपद्यसे ? ॥ ७४ ॥ अथाऽजीवान्नोअजीवो, लक्षणैक्यान्न
भिद्यते ॥ नो जीवोऽपि तदा जीवा-ल्लक्षणैक्यान्न भिद्यते ॥ ७५ ॥ तद्राशिद्वयमेवास्ति, वास्तवं न तु तत्त्रयम् ॥

एवं तयोरभूद्वादः, षण्मासीं यावदन्वहम् ॥ ७६ ॥ अथ भूपो गुरुं प्रोचे, स्वामिन् ! वादः समाप्यताम् ॥ नित्यं सीदति मे राज–कार्यं व्यग्रतयाऽनया ॥ ७७ ॥ ऊचे सूरिरियत्कालं, धृतोऽयं लीलया मया ॥ अथाऽस्य निग्रहं प्रातः, करिष्ये नात्र संशयः ॥ ७८ ॥ ततः प्रभाते गुरवः, सभां गत्वेति तं जगुः ॥ एहि सत्यपरीक्षार्थं, गच्छामः कुत्रिकापणम् ॥ ७९ ॥ हट्टो हि देवसम्बन्धी, 'कुत्रिकापण' उच्यते ॥ सद्भावानखिलांस्तत्र, प्रदत्ते प्रार्थितः सुरः ॥ ८० ॥ इत्युक्त्वा ते सहादाय, रोहगुप्तं नृपान्विताः ॥ सुधियामापणा जग्मु–र्गुरवः कुत्रिकापणम् ॥ ८१ ॥ तत्र जीवानजीवांश्च, नोजीवांश्च प्रदेहि नः ॥ तैरित्युक्तः सुरो जीवा–नजीवांश्च ददौ द्रुतम् ॥ ८२ ॥ नोजीवास्तु जगत्यत्र, नो सन्तीति शशंस च ॥ नोजीवे याचिते भूयो–ऽप्यजीवं वा ददौ सुरः ॥ ८३ ॥ रोहगुप्तं ततः सूरि–रूचे मुञ्च कदाग्रहम् ॥ नोजीवश्चेदस्ति विश्वे, तर्हि नादात्कथं सुरः ? ॥ ८४ ॥ प्रश्नैरित्यादिभिः सूरि–स्तं द्रुतं नृपसाक्षिकम् ॥ निजग्राह चतुश्चत्वा–रिंशद्युतशतोन्मितैः ॥ ८५ ॥ तथापि रोहगुप्तस्या–ऽत्यजतस्तं कदाग्रहम् ॥ खेलमल्लकभस्म द्राक्, शिरसि न्यक्षिपद्गुरुः ॥ ८६ ॥ ततस्तं निह्नव इति, सूरिराजैर्बहिष्कृतम् ॥ चक्रे निर्विषयं भूपः, क्रुद्धस्तच्छास्त्रदर्शनात् ॥ ८७ ॥ जयति श्रीमहावीर–जिन इत्यखिले पुरे ॥ उद्घोषणां धराधीश–श्चकार गुरुशासनात् ॥८८॥ गुरुदत्तेयमित्यङ्के, वहन् भूतिं ततः परम् ॥ निर्लज्जो रोहगुप्तोऽपि, स्वैरं बभ्राम भूतले ॥८९॥ स वैशेषिकसूत्राणि, कल्पयामास च स्वयम् ॥ पदार्थान्नियतं द्रव्य–गुणादीन् षट् प्ररूपयन् ॥ ९० ॥ पूर्वोदिताः प्रश्नगणास्त्विह ज्ञै–र्ज्ञेया बृहद्वृत्तिविलोकनेन ॥ आसादितोऽप्येवमपैति बोधि–र्येनादयं तन्ननु रक्षणीयः॥९१॥इति षष्ठनिह्नवकथा॥६॥

"अथो चतुरशीताढ्यै–र्वर्षाणां पञ्चभिः शतैः ॥ श्रीवीरमुक्तेर्जातस्य, सप्तमस्योच्यते कथा ॥ १ ॥" "तथा हि"— देवेन्द्रवन्दिताः पूर्वो–दिताः श्रीआर्यरक्षिताः ॥ पुरं दशपुरं जग्मु–रन्यदा गच्छसंयुताः ॥२॥ तेषां शिष्यास्त्रयोऽभूवन्, विशेषेण विचक्षणाः ॥ तेषु दुर्बलिकापुष्प–मित्रनामादिमो मतः ॥ ३ ॥ द्वैतीयिकस्तु सूरीणां, सोदरः फल्गुरक्षितः ॥ तृतीयस्त्वभवद्गोष्ठा–माहिलः सूरिमातुलः ॥ ४ ॥ तदा च मथुरापुर्या–मार्यो कोऽपि नास्तिकः ॥ नास्त्यात्मेत्यादिभिर्वाक्यै–र्लोकान् व्युद्ग्राहयन् बहून् ॥ ५ ॥ तत्र चाऽभूत्साधुसङ्घो, न पुनः कोऽपि वादकृत् ॥ नास्तिकस्तु स निग्राह्यः, कथञ्चिल्लोकवञ्चकः ॥ ६ ॥ इति वादिनमानेतुं, सङ्घः स मथुरास्थितः ॥ श्रमणान् प्राहिणोत् श्रीमदार्यरक्षितसन्निधौ ॥ ७ ॥ इति व्यज्ञपयंस्तेऽपि, गत्वा श्रीआर्यरक्षितान् ॥ लोकान् व्युद्ग्राहयत्युच्चै–र्मथुरापुरि नास्तिकः ॥ ८ ॥ तत्तं जेतुं स्वयं पूज्या, नगरीं पावयन्तु ताम् ॥ प्रेषयन्त्वथवा कञ्चि–द्विनेयं वादिजित्वरम् ॥ ९ ॥ ततस्ते सूरयस्तत्र, वृद्धत्वाद्गन्तुमक्षमाः ॥ वादलब्धिधरं गोष्ठा–माहिलं प्रैषयंस्तदा ॥ १० ॥ सोऽपि तत्रागमत्तस्था–ऽऽह्वातुमागतसाधुभिः ॥ वादे निरुत्तरीचक्रे, तञ्च चार्वाकमुग्रधीः ॥ ११ ॥ जितकाशी सूरिपार्श्वे, यियासुरपि स व्रती ॥ सङ्घाग्रहवशात्तत्र, चतुर्मासीमवास्थितः ॥ १२ ॥

इतश्च विश्ववन्द्याः श्री–आर्यरक्षितसूरयः ॥ निजायुःप्रान्तमासन्नं–विज्ञायैवमचिन्तयन् ॥ १३ ॥ योग्यस्यैव विनेयस्य, प्रदेया गणधारिता ॥ अयोग्यस्य तु तद्दाने, दातुर्दोषो भवेन्महान् ॥ १४ ॥ यदाहुः—"वूढो गणहरसद्दो, गोअमाईहिं धीरपुरिसेहिं ॥ जो तं ठवेइ अपत्ते, जाणंतो सो महापावो ! ॥ १५ ॥" तदाचार्यपदं देयं, योग्यस्यैव विवेकिना ॥ अयोग्यस्तु न तस्यार्हः, पायसस्येव वायसः ! ॥ १६ ॥ योग्यस्तु मम शिष्येषु, गुणरत्नमहोदधिः ॥ अस्ति दुर्बलिकापुष्प–मित्रनामा महाशयः ॥ १७ ॥ सर्वेषामात्तदीक्षाणां, मद्बन्धूनां तु सर्वथा ॥ श्रीफल्गुरक्षितो गोष्ठा–माहिलो वाऽस्ति सम्मतः ॥ १८ ॥ कांक्षन्ति गणधारित्वं, स्वजनत्वाद्धि ते तयोः ॥ सम्यग्जानन्ति न त्वेषां, त्रयाणां गौणमन्तरम् ॥ १९ ॥ ततस्तदन्तरं प्रोच्य, सर्वेषामां निजे पदे ॥ शिष्यं दुर्बलिकापुष्प–मित्राख्यं स्थापयाम्यहम् ॥ २० ॥ विमृश्येत्यखिलान् साधून्, समाहूय मुनीश्वरः ॥ वल्लतैलाज्यकुम्भानां, दृष्टान्तानित्यवोचत ॥ २१ ॥ वल्लकुम्भाद्यथा रिक्ती–कर्तुं नीचैर्मुखीकृतात् ॥ निष्पावा निखिला मध्य–गता निर्यान्ति सत्वरम् ॥ २२ ॥ एवं दुर्बलिकापुष्प–मित्रनाम्नो महामतेः ॥ जातोऽस्मि श्रुतसूत्रार्थ–दाने वल्लघटोपमः ॥ २३ ॥ अधोमुखीकृतात्तैल–घटात्तैलं यथा द्रुतम् ॥ निर्याति भूरि किञ्चित्तु, तिष्ठत्यपि घटाश्रितम् ॥ २४ ॥ फल्गुरक्षितसंज्ञस्य, श्रुताम्नायार्पणे तथा ॥ जातोऽस्म्यहं तैलकुम्भ–सन्निभो भो महर्षयः ! ॥ २५ ॥ अवाङ्मुखीकृतादाज्य–कुम्भात्तु स्तोकमेव हि ॥ घृतं निर्याति भूयस्तु, तिष्ठत्येव घटान्तरे ॥ २६ ॥ एवं जातोऽस्म्यहं गोष्ठा–माहिलाभिधसन्मुनेः ॥ श्रीमत्सिद्धान्तसूत्रार्थ–दाने घृतघटोपमः ॥ २७ ॥ तदयं श्रुतपाथोधि–पारदृश्वा गुणोदधिः ॥ अस्तु

दुर्बलिकापुष्प-मित्रर्षिर्वो गणाधिपः ॥ २८ ॥ इयत्कालं मदादेशो, युष्माभिर्मानितो यथा ॥ अतः परं तथा मान्यो, वचोऽमुष्य गणेशितुः ॥ २९ ॥ अकृतेऽपि मदादेशे, जातु कोपो न मे भवेत् ॥ अयं तु स्तोकमप्यागो, न कस्यापि सहिष्यते ॥ ३० ॥ इत्युक्ते सूरिभिः सर्वे, प्रत्यपद्यन्त तत्तथा ॥ ततो दुर्बलिकापुष्प-मित्रमित्थं जगौ गुरुः ॥ ३१ ॥ गुणित्वाद्वत्स ! गच्छोऽयं, त्वदङ्के स्थाप्यते मया ॥ तदसौ भवता सम्य-क्पालनीयो महामते ! ॥ ३२ ॥ श्रीफल्गुरक्षिते गोष्ठा-माहिले च यथा मया ॥ प्रवृत्तं भवताऽप्येवं, वर्त्तितव्यं, विशेषतः ॥ ३३ ॥ इत्युक्त्वा स्थापयित्वा च, तं मुनीन्द्रं निजे पदे ॥ विहितानशनाः स्वर्गं, जग्मुः श्रीआर्यरक्षिताः ॥ ३४ ॥ श्रीआर्यरक्षिताचार्यान्, समाकर्ण्य दिवङ्गतान् ॥ गोष्ठामाहिलनामापि, ययौ दशपुरे द्रुतम् ॥ ३५ ॥ न्यधीयत निजे पट्टे, शिष्यः को नाम सूरिभिः ? ॥ इति चागतमात्रोऽपि, सोऽप्राक्षीदखिलान् मुनीन् ॥ ३६ ॥ ततोऽभ्युत्थाय ते कुम्भ-दृष्टान्तांस्तानुदीर्य च ॥ श्रीमद्दुर्बलिकापुष्प-मित्राख्यं सूरिमूचिरे ॥ ३७ ॥ तन्निशम्योद्धतामर्षो, माहिलः सर्वसाधुभिः ॥ इहैव तिष्ठेत्युक्तो-ऽप्यनिच्छन्निर्ययौ बहिः ॥ ३८ ॥ पूर्वोपाश्रयपार्श्वस्थे, स्थित्वा सोपाश्रये पृथक् ॥ प्रावर्तिष्टान्यसाध्वादीन्, व्युद्ग्राहयितुमुच्चकैः ॥ ३९ ॥ व्युद्ग्राहयितुमैशिष्ट, न पुनः कञ्चनापि सः ॥ ततः सोऽन्वेषयामास, सूरीणां छिद्रमन्वहम् ॥ ४० ॥ इतश्च पुष्पमित्राख्य-सूरयोऽप्यर्थपौरुषीम् ॥ सर्वर्षीणां पुरश्चक्रुः, श्रुतार्थकथनात्मिकाम् ॥ ४१ ॥ सूरीणां सन्निधानेऽर्थं, शृणुतेति महर्षिभिः ॥ तदा प्रोक्तो माहिलर्षि-रीर्ष्याविष्टोऽब्रवीदिति ॥ ४२ ॥ निष्पावकुम्भकल्पस्य, तस्याभ्यर्णे महाधियः ! ॥ यूयमेव श्रुताम्नायान्, गृह्णीत निखिलानपि ॥ ४३ ॥ पूर्वं कर्मप्रवादाख्य-मष्टमं सूरयस्तु ते ॥ अध्यापयन्तो विन्ध्यादि-साधूनामभवंस्तदा ॥ ४४ ॥ तत्रावन्ध्यमतिर्विन्ध्यो-ऽन्यदाधीत्यानुचिन्तयन् ॥ त्रैविध्यं कर्मबन्धस्य, व्याचख्याविति तद्यथा ॥ ४५ ॥ जीवैर्हि बध्यते कर्म, बद्धं स्पृष्टं निकाचितम् ॥ तत्र बद्धं यथा सूची-कलापस्तन्तुवेष्टितः ॥ ४६ ॥ स्पृष्टं यथा सूचिकास्ताः, किट्टेनैकत्वमाश्रिताः ॥ निकाचितं यथा ताप-कुट्टनैरेकतां गताः ॥ ४७ ॥ बध्नात्येवं पूर्वमात्मा, रागादिपरिणामतः ॥ प्रदेशैः सकलैः कर्म, विज्ञानावरणादिकम् ॥ ४८ ॥ तदेव कुरुते स्पृष्टं, तत्परीणामवृद्धितः ॥ संक्लिष्टात्तु परीणामा-त्तत्करोति निकाचितम् ॥ ४९ ॥ तत्र बद्धं याति नाश-मुपायैर्निन्दनादिभिः ॥ प्रायश्चित्ताद्युपायैस्तु, स्पृष्टं कर्म निवर्तते ॥ ५० ॥ निकाचितं तु यत्कर्म, जीवैः सुदृढबन्धनात् ॥ उदयेनैव तत्प्रायो, वेद्यते नान्यथा पुनः ॥ ५१ ॥ इत्यनुप्रेक्षमाणं तं, गोष्ठामाहिल इत्यवक् ॥ मैवं वादीर्यदस्माभि-र्गुरुभ्यो नेदृशं श्रुतम् ॥ ५२ ॥ यदि स्यादात्मना कर्म, बद्धं स्पृष्टं निकाचितम् ॥ तदा तदपृथग्भावा-न्मोक्षस्तस्य कथं भवेत् ? ॥ ५३ ॥ विन्ध्योऽभ्यधात्कथं तर्हि, सम्बन्धो जीवकर्मणोः ॥ तत इत्यलपद्गोष्ठा-माहिलः कल्पनापटुः ॥ ५४ ॥ यथा कञ्चुकिनो देहं, बहिः स्पृशति कञ्चुकः ॥ वपुषा सह सम्बद्धो, न त्वसौ जातु जायते ॥ ५५ ॥ एवं कर्मापि जीवेन, स्पृष्टं बद्धं पुनर्न तत् ॥ यस्तु तन्मन्यते बद्धं, तस्य न स्याद्भवक्षयः ॥ ५६ ॥ एतावदेव गुरुभिः, प्रोक्तं नः पाठनक्षणे ॥ एष सूरिस्तु तत्तत्त्वं, नैव जानाति किञ्चन ॥ ५७ ॥ जाताशङ्कस्ततो गत्वा, विन्ध्यः सूरीन्द्रसन्निधौ ॥ निवेद्य माहिलवचः, किं तथ्यमिति पृष्टवान् ? ॥ ५८ ॥ सूरयः प्रोचुरुक्तं हि, प्राग्मया तथ्यमेव ते ॥ माहिलस्य तु गीर्नैव, युक्ता युक्तिविरोधतः ॥ ५९ ॥ जीवो हि स्वावगाहाभि-व्याप्त एवाम्बरे स्थितम् ॥ गृह्णाति कर्मदलिकं, जातु न त्वन्यदेशगम् ॥ ६० ॥ तथा च वह्न्ययःपिण्ड-वदैक्यं जीवकर्मणोः ॥ स्यान्न तु स्पृष्टमात्रत्वं, देहकञ्चुकवत्तयोः ॥ ६१ ॥ अथात्मान्यप्रदेशस्थं, कर्मादायानुवेष्टयेत् ॥ यद्यात्मानं तदा तस्य, घटते कञ्चुकोपमा ॥ ६२ ॥ किन्तु स्यादपसिद्धान्त-स्तदा सूत्रविरोधतः ॥ सूत्रे ह्यन्यप्रदेशस्थ-कर्मादानं निषिध्यते ॥ ६३ ॥ किञ्च कञ्चुकवत्कर्म, चेद्बहिःस्थितमात्मनि ॥ वेदनापि तदा कर्म-निमित्तान्तः कथं भवेत् ? ॥ ६४ ॥ अथ संचारिभावात्स्या-त्कर्म मध्येपि संस्थितम् ॥ इत्यन्तर्वेदनापि स्या-दिति चेत्तेन मन्यते ॥ ६५ ॥ तर्हि कञ्चुककल्पत्वं, कर्मणो व्याहतं स्फुटम् ॥ कञ्चुको हि बहिः स्पृष्ट, एव स्यान्न तु मध्यगः ॥ ६६ ॥ तदा च युगपन्न स्या-द्बहिर्मध्ये च वेदना ॥ कर्मणो बहिरन्तर्वाऽसम्बन्धाद्वेदना कुतः ? ॥ ६७ ॥ संचारित्वाच्च तत्कर्म, न गच्छति भवान्तरे ॥ जीवेन सह देहस्थ-निःश्वासादिसमीरवत् ॥ ६८ ॥ सर्वैर्जीवप्रदेशैस्त-न्निबद्धं कर्म मन्यताम् ॥ रागादिबन्धहेतूनां, सद्भावात्सकलात्मनि ॥ ६९ ॥ न चाविभागसम्बन्धा-त्पार्थक्यं जीवकर्मणोः ॥ नैव भावीति विज्ञेयं, तद्वाक्याकर्णनात्त्वया ॥ ७० ॥ यतोऽविभागसम्बन्ध-वतोरप्यश्महेमयोः ॥ पृथग्भावो जायमानः, प्रत्यक्षेण निरीक्ष्यते ॥ ७१ ॥ इत्यादिभिः सूरिवाक्यै-र्विन्ध्यो निःशङ्कतां गतः ॥ माहिलायाऽवदत्तानि, द्रुतं गत्वा तदन्तिके ॥ ७२ ॥

तथापि स शठश्चित्ता–न्नात्याक्षीत्तं कदाग्रहम् ॥ क्षोभनां पुनरन्यत्र, करिष्यामीति चिन्तयन् ॥ ७३ ॥ अन्यदा नवमं पूर्वं, प्रत्याख्यानाभिधं पठन् ॥ वन्ध्यमाधुर्मुनेः प्रत्या–ख्यानमेवमवर्णयत् ॥ ७४ ॥ यावज्जीवं सर्वमेव, प्राणिप्राणातिपातनम् ॥ त्रिविधं त्रिविधेनाङ्गी, प्रत्याख्याति व्रतीभवन् ॥ ७५ ॥ इत्याद्याकर्ण्य तं गोष्ठा–माहिलः प्रोचिवानिति ॥ परिमाणयुतं प्रत्या–ख्यानं साधोर्न युज्यते ॥ ७६ ॥ यावज्जीवमिति प्रोक्ते, कालमानमुरीकृतम् ॥ तथा चाग्रे हनिष्यामी–त्याशंसादूषणं भवेत् ॥ ७७ ॥ तस्मादपरिमाणेन, प्रत्याख्याम्यखिलं वधम् ॥ त्रिविधं त्रिविधेनेति, वाच्यं स्वीकुर्वता व्रतम् ॥ ७८ ॥ एवं वदन्तं तं वन्ध्यो–ऽभ्यधादिति महामतिः ॥ आशंसा किं कालमाना–ज्जायते वाञ्छयाऽथवा ? ॥ ७९ ॥ आद्ये पक्षे मुनेरद्धा–प्रत्याख्यानं वितन्वतः ॥ पौरुष्यादिपदोच्चारे–ऽप्याशंसा स्यादनाहता ! ॥ ८० ॥ पौरुष्यादिपदेनाद्धा–प्रत्याख्यानेऽपि निश्चितम् ॥ यामादिकं कालमान–मेव यस्मादुदीर्यते ॥ ८१ ॥ अथ तत्रापि पदं त–न्नो वाच्यमिति चेत्तदा ॥ भवेदनशनापत्तिः, प्रव्रज्यादिन एव हि ! ॥ ८२ ॥ न च साधोर्भवेन्नाद्धा–प्रत्याख्यानमिति त्वया ॥ वक्तव्यमपसिद्धान्त–दोषापत्तिर्यतो भवेत् ॥ ८३ ॥ सिद्धान्ते हि जिनैरद्धा–प्रत्याख्यानं तपस्विनाम् ॥ कर्तव्यत्वेन कथितं, दशधाऽनागतादिकम् ॥ ८४ ॥ वाञ्छारूपो द्वितीयोऽपि, पक्षो नो युज्यते क्वचित् ॥ मुनेरन्यभवेऽवद्य–सेवाशा यन्न विद्यते ॥ ८५ ॥ अन्यच्चापरिमाणत्वं, प्रत्याख्यानस्य यत्पुरा ॥ त्वया प्रोक्तं तदपि नो, युक्तं युक्तिविरोधतः ॥ ८६ ॥ क्रियमाणेऽपरिमाण–प्रत्याख्याने हि जायते ॥ अनागताद्धा सर्वापि, प्रत्याख्यानस्य गोचरः ॥ ८७ ॥ तदा चायुःक्षयाद्देव–भवं गतवतो यतेः ॥ सावद्यसेवनेऽवश्यं, व्रतभङ्गः प्रसज्यते ! ॥ ८८ ॥ अथ यावच्छक्ति यस्मात्, प्रत्याख्यानं विधीयते ॥ तस्मादपरिमाणत्व–मिति चेदभिधीयते ॥ ८९ ॥ तर्हि शक्तिमितं प्रत्या–ख्यानमङ्गीकृतं स्वयम् ॥ तथा चापरिमाणत्व–स्वीकारस्तस्य नोचितः ॥ ९० ॥ किञ्चाशंसावशान्नैव, यावज्जीवेति पठ्यते ॥ व्रतभङ्गभयात्किन्तु, यावज्जीवेति पठ्यते ॥ ९१ ॥ आशंसारहितत्वेन, तत्सावधिकमप्यहो ॥ प्रत्याख्यानं न दोषाय, कायोत्सर्गनिदर्शनात् ॥ ९२ ॥ इत्यादिवन्ध्यवचनं, न यदा स्वीचकार सः ॥ तदा सर्वेऽपि मुनय–स्तमेवं प्रोचिरे मुहुः ॥ ९३ ॥ महात्मन्नित्थमेवेदं, वन्ध्यवाक्यमुरीकुरु ॥ एवमेवैतदुक्तं श्री–आर्यरक्षितसूरिभिः ॥ ९४ ॥ अन्येऽपि स्थविरा अन्य–गच्छीया ये बहुश्रुताः ॥ तेऽपि पृष्टा जगुः प्रत्या–ख्यानं सावधिकं ध्रुवम् ॥ ९५ ॥ तथाऽपि माहिलो नैव, तं कदाग्रहमत्यजत् ॥ आग्रहो ह्यङ्गिनां प्रायो–ऽसाध्यः स्यात्क्षयरोगवत् ॥ ९६ ॥ तानित्यूचे च नो यूयं, तत्त्वं जानीथ किञ्चन ॥ तीर्थङ्करैर्हि भावोऽयं, कथितोऽस्ति मदुक्तवत् ॥ ९७ ॥ ततः साध्व्यादिकः सर्व–सङ्घः प्रष्टुं जिनेश्वरम् ॥ उद्दिश्य शासनसुरीं, कायोत्सर्गं विनिर्ममे ॥ ९८ ॥ सुरी साऽप्याऽऽययौ ब्रूत, किं करोमीति वादिनी ? ॥ सङ्घः स्माहेति पृच्छ त्वं, गत्वा सीमन्धराधिपम् ॥ ९९ ॥ किं गोष्ठामाहिलमुनि–रुदीरयति सूनृतम् ॥ सङ्घो दुर्बलिकापुष्प–मित्रादिः सकलोऽथवा ? ॥ १०० ॥ ततो देव्यवदद्दत्त, कायोत्सर्गबलं मम ॥ यथाऽनेकसुराकीर्णे, मार्गे स्यां गन्तुमीश्वरी ॥ १ ॥ सङ्घेनाऽथ कृते कायो–त्सर्गे शासनदेवता ॥ गत्वा विदेहे सङ्घोक्त–युक्त्याऽप्राक्षीजगत्प्रभुम् ॥ २ ॥ शशंस शम्भुशक्रोऽथ, सङ्घोऽसौ वक्ति भूनृतम् ॥ माहिलस्त्वनृतं ब्रूते, निह्नवो ह्येष सप्तमः ॥ ३ ॥ तदाकर्ण्याऽऽगता देवी, सङ्घमेवमवोचत ॥ कायोत्सर्गं पारयित्वा, भाषितं श्रृणुताऽर्हतः ॥ ४ ॥ सङ्घः सत्यो माहिलस्तु, निह्नवोऽनृतभाषकः ॥ तयेत्युक्तेऽवदद्गोष्ठा–माहिलोऽतिकदाग्रही ! ॥ ५ असौ वराकी स्वल्पर्द्धी–स्तत्र गन्तुं क्व शक्नुयात् ? ॥ तत्कल्पितमियं वक्ति, न पुनर्जिनभाषितम् ! ॥ ६ ॥ ततस्तं पुष्पमित्राख्य–सूरयोऽप्येवमूचिरे ॥ सम्यक् श्रद्धेहि नोचेत्त्वं, सङ्घबाह्यः करिष्यसे ! ॥ ७ ॥ तथापि तत्तन्मतमत्यजन्तं, चकार सङ्घोऽखिलसङ्घबाह्यं ॥ व्युद्ग्राहयन् सोऽपि जनाननेकान्, बभ्राम भूमौ गतबोधिरत्नः ! ॥१०८॥ इति सप्तमनिह्नवकथा ॥ ७ ॥

"इति स्वल्पजिनप्रोक्त–वचनोत्थापका अमी ॥ सप्तोक्ता निह्नवाः पूर्वं, प्रोक्ता गाथाद्वयेन ये ॥ १ ॥" "अथ भूरिविसंवादी, प्रसङ्गात् प्रोच्यतेऽष्टमः ॥ श्रीवीरमुक्तेर्जातोऽब्द–शतैः षड्भिर्नवोत्तरैः ॥ २ ॥" "तथाहि"—रथवीरपुराभिख्ये, पुरेऽभूद्दीपकाभिधम् ॥ वनं तत्रार्यकृष्णाख्याः, सूरयः समवासरन् ॥ ३ ॥ इतश्च शिवभूत्याख्यः, क्षत्रियः सात्त्विकाग्रणीः ॥ सहस्रयोधी तत्रत्यं, नृपं सेवितुमाश्रयत् ॥ ४ ॥ नृपो दध्यौ परीक्षेऽह–मस्य धैर्यादिकान् गुणान् ॥ निर्गुणो ह्यनुजीवी स्या–त्स्वामिनो नो सुखाकरः ॥ ५ ॥ परीक्षापूर्वमेवास्मै, प्रदास्ये वृत्तिमप्यहम् ॥ निर्गुणे हि जने दत्तं, स्याद्भस्मनि हुतोपमम् ! ॥ ६ ॥ ध्यात्वेति भूपतिः श्याम–चतुर्दश्यां निशामुखे ॥ पशुमेकं वारुणीं च,

तस्य दत्वैवमब्रवीत् ॥ ७ ॥ श्मशानस्थे मातृदेवी–गृहे गत्वा त्वमेककः ॥ पशुमध्यबलिं देहि, कृत्यमेतद्विधेहि नः ॥ ८ ॥ शिवभूतिस्तदादाय, धीरः प्रेतवने ययौ ॥ निहत्य छगलं मातृ–देवीनां च बलिं ददौ ॥ ९ ॥ क्षुधितोऽस्मीति तत्रैवा–ऽऽरेभे तन्मांसभक्षणम् ॥ श्मशानमातृदेवीभ्यो, बिभयामास न त्वसौ ॥ १० ॥ तदा च तद्व्यापनाय, भूपेन प्रहिता नराः ॥ तत्रागत्य शिवाशब्दान्, भैरवान् परितो व्यधुः ॥ ११ ॥ बभाज तैरपि क्षोभं, तन्मनो न मनागपि ॥ न चाङ्गेऽप्यभवत्तस्य, रोमोद्भेदो भयोद्भवः ॥ १२ ॥ तत्स्वरूपं ततो राज्ञे, प्रोचुस्ते राजपूरुषाः ॥ सोऽपि स्वस्थतया भुक्त्वा, जगाम क्ष्मापसन्निधौ ॥ १३ ॥ ततोऽवबुध्य तं शूरं, बह्वीं वृत्तिं ददौ नृपः ॥ शिवभूतिस्ततो भूपं, सिषेवे तमहर्निशम् ॥ १४ ॥ अन्यदा स नृपः सेना–पत्यादीनखिलान् भटान् ॥ इत्यादिदेश मथुरानगरी गृह्यतां द्रुतम् ॥ १५ ॥ ततः सर्वाभिसारेण, चेलुस्ते मथुरां प्रति ॥ पुराद्बहिश्च गत्वेति, परस्परमचिन्तयन् ॥ १६ ॥ वयं हि मथुरां जेतुं, प्रस्थिताः पार्थिवाज्ञया ॥ द्वे चात्र मथुरापुर्यौ, विद्येते दक्षिणोत्तरे ॥ १७ ॥ तद्गोचरो विशेषश्च, नोक्तः कोऽपि महीभृता ॥ चण्डस्वभावो भूपश्च, न प्रष्टुं शक्यते पुनः ! ॥ १८ ॥ तदस्माभिः क्व गन्तव्यं, ध्यायन्त इति तेऽखिलाः ॥ स्थातुं गन्तुं चासमर्था, यावन्मार्गेऽवतस्थिरे ॥ १९ ॥ शिवभूतिस्तावदागा–त्तत्र तांश्चैवमब्रवीत् ॥ किं स्थिता यूयमशुभ–निमित्तस्खलिता इव ॥ २० ॥ यथास्थितेऽथ तैरुक्ते, सोऽवादीचिन्तया कृतम् ॥ सममेव ग्रहीष्यामो, वयं तन्नगरीद्वयम् ॥ २१ ॥ ते प्रोचुरस्याः सेनायाः, विभागयुगले कृते ॥ नाऽऽदातुं शक्यतेऽस्माभि–रेकापि नगरी सखे ! ॥ २२ ॥ भावी भूयस्तरः काल, एकस्या अपि निर्जये ॥ एकां जित्वा तदन्यस्या, निर्जयोऽप्यऽति दुष्करः ॥ २३ ॥ शिवभूतिस्ततोऽवादी–द्यद्येवं तर्हि भो भटाः ! ॥ तयोर्मध्ये दुर्जया या, सा सद्यो मम दीयताम् ॥ २४ ॥ द्वयोर्मध्ये दविष्ठा या, तां व्रजेत्युदितेऽथ तैः ॥ सोऽपाच्य मथुरादेशं, ययौ बुद्धिबलोर्जितः ॥ २५ ॥ तस्य देशस्य च प्रान्त्यान्, ग्रामादीन् साधयन् स्वयम् ॥ दुर्गान् जग्राह निखिलान्, क्रमाच्च नगरीमपि ॥ २६ ॥ वशीकृत्याथ तद्राज्यं, शिवभूतिर्महामतिः ॥ गत्वा च भूभुजोऽभ्यर्णे, सर्वं व्यतिकरं जगौ ॥ २७ ॥ ततः प्रीतोऽवदद्भूपः, कामितं ते ददामि किम् ? ॥ किञ्चिद्विमृश्य सोऽप्यूचे, स्वातन्त्र्यं देहि मे प्रभो ! ॥ २८ ॥ यथा हि मां मनोभीष्टां, क्रीडां कुर्वन्तमुच्चकैः ॥ यत्तद्वा वस्तु गृह्णन्तं, न कोऽपि प्रतिषेधयेत् ! ॥ २९ ॥ एवमस्त्विति भूपोऽपि, सत्यसन्धोऽभ्यधात्ततः ॥ सोऽपि नानाविधाः क्रीडाः, कुर्वंस्तत्राऽभ्रमत्पुरे ॥ ३० ॥ द्यूतकारैः समं रेमे, स कदाचिद्दिवानिशम् ॥ कदाचित्तु सुरां पीत्वा, क्षीबः क्षीबैः सहारमत् ॥ ३१ ॥ कदाचित्तु सिषेवेऽसौ, सुन्दरं गणिकागणम् ॥ कदाचित्तु जलक्रीडां, चकार जलहस्तिवत् ॥ ३२ ॥ विजहार कदाचित्तु, कानने नन्दनोपमे ॥ कुर्वन् पुष्पोच्चयक्रीडां, वृतो विटजनैर्घनैः ॥ ३३ ॥ भ्रमन्नेवं स स्वसौधे, निशीथेऽप्याऽऽययौ न वा ॥ उल्लङ्घते हि मर्यादां, प्रायो वीतभयो जनः ! ॥ ३४ ॥ यावच्च स गृहे नागा–त्तावत्तस्य वशा स्वयम् ॥ नाश्नातिस्म न चाशेत, पालयन्ती सतीव्रतम् ॥ ३५ ॥ नित्यं क्षुधाजागराभ्यां, साऽथ खिन्ना मनस्विनी ॥ अन्यदा तस्य जननी–मिति स्माह सगद्गदम् ॥ ३६ ॥ पुत्रो युष्माकमायाति, निशीथे प्रत्यहं गृहे ॥ यावदागमनं चाहं, न भुञ्जे न शयेऽन्वहम् ॥ ३७ ॥ नित्यं क्षुज्जागराभ्यां तत्पीडा मे जायते भृशम् ॥ तत्किङ्करोम्यहं मात–स्त्वदादेशवशंवदा ॥ ३८ ॥ श्वश्रूः शशंस सुभगे !, स्वपिहि त्वं यथासुखम् ॥ अद्याहमेव जागर्मि, तयेत्युक्ताऽस्वपीद्वधूः ॥ ३९ ॥ गृहद्वारं पिधायास्था–त्तस्य माता तु जाग्रती ॥ सोऽथाऽऽगतोऽवदत्सद्यो, द्वारमुद्घाट्यतामिति ॥ ४० ॥ माता प्रोचेऽधुना यत्र, द्वारमुद्घाटितं भवेत् ॥ तत्र प्रयाहि न ह्यत्र, द्वारमुद्घाट्यतेऽधुना ! ॥ ४१ ॥ तदाकर्ण्याऽखर्वगर्वः, शिवभूतिरचिन्तयत् ॥ मात्राऽपमानितोऽद्याऽहं, तद्याम्यन्यत्र कुत्रचित् ! ॥ ४२ ॥ यतः–"स्थानस्थादपमानेऽपि, देहिनस्तद्वरं रजः ॥ पादाहतं यदुत्थाय, मूर्द्धानमधिरोहति ! ॥ ४३ ॥" विमृश्येति निजाद्गेहा–द्यापुत्थ्य नगरे भ्रमन् ॥ दैवादुद्घटितद्वारं, साधूपाश्रयमैक्षत ! ॥ ४४ ॥ ततस्तत्र प्रविश्यार्य–कृष्णाचार्यान् प्रणम्य तान् ॥ मां प्रव्राजयतेत्यूचे, ते तु प्राव्राजयन्न तम् ॥ ४५ ॥ स्वयमेव ततस्तेन, लुञ्चिते, स्वीयमस्तके ॥ गुरवो ददिरे तस्मै, लिङ्गं धर्मध्वजादिकम् ॥ ४६ ॥ तमुपात्तव्रतं ज्ञात्वा, प्रातस्तत्राऽऽययौ नृपः ॥ मामनापृच्छ्य किमिदं, त्वया कृतमिति ब्रुवन् ? ॥ ४७ ॥ स प्रोचे पृष्टमेवैत–त्स्वातंत्र्यप्रार्थिना मया ॥ ततो नृपस्तं नत्वाऽगा–द्विमनास्तद्वियोगतः ॥ ४८ ॥ बहिर्विहृत्य तत्राऽऽगुः, सूरयोऽप्यऽन्यदा पुनः ॥ तदा शिवं नृपःस्नेहा–दाहूय स्वगृहेऽनयत् ॥ ४९ ॥ अनिच्छतोऽपि तस्याऽदा–द्भूधवो रत्नकम्बलम् ॥ तमादायागतं सूरिः, शिवभूतिं तदेत्यवक् ॥ ५० ॥ किमयं भवता वत्स !, जगृहे रत्नकम्बलः ॥ न हि

नो बहुमूल्यस्य, वस्त्रादेर्ग्रहणं मतम् ! ॥ ५१ ॥ इत्युक्तोऽपि स सूरीन्द्रै–स्तं न तत्याज मूर्च्छया ॥ किन्तूपधौ गोपयित्वा, ररक्ष छन्नमन्वहम् ॥ ५२ ॥ अस्य मूर्च्छानिदानेन, किमनेनेति सूरयः ॥ तस्मिन् क्वापि गते रत्न–कम्बलं तमकर्षयन् ॥ ५३ ॥ विधाय तस्य शकला–न्निषद्यायै तपस्विनाम् ॥ आर्पयंस्तच्च विज्ञाय, शिवभूतिरदूयन ॥ ५४ ॥ कृतावहित्थस्तस्थौ च, गुरोश्छिद्राणि मार्गयन् ॥ अन्यदा वर्णयंश्चैवं, सूरयो जिनकल्पिकान् ॥ ५५ ॥ भवन्ति द्विविधास्ताव–ज्जिनकल्पिकसाधवः ॥ तत्रैके भुञ्जते पाणा–वन्ये त्वश्नन्ति पात्रके ॥ ५६ ॥ तेऽपि प्रत्येकमुदिता, द्विविधा जिनपुङ्गवैः ॥ तत्र वस्त्रधरा एके–ऽन्ये तु चीवरवर्जिताः ॥ ५७ ॥ श्रुत्वेत्यादि शिवोऽवोच–ज्जिनकल्पोऽधुना कुतः ॥ विधीयते न निर्ग्रन्थै–र्निष्परिग्रहतार्थिभिः ? ॥ ५८ ॥ सूरिर्जगाद व्युच्छिन्नो, जिनकल्पो हि भारते ॥ श्रीवीरस्वामिपौत्रेण, श्रीजम्बूस्वामिना समम् ॥ ५९ ॥ सोऽवादीदल्पसत्त्वानां, व्युच्छिन्नोऽसौ न मादृशाम् ॥ मादृशो हि महासत्वः, कर्तुमीष्टेऽधुनाप्यमुम् ! ॥ ६० ॥ मोक्षार्थिना हि सकल–स्त्याज्य एव परिग्रहः ॥ वस्त्रपात्रादिकमपि, तत्त्यक्ष्यामि परिग्रहम् ! ॥ ६१ ॥ सूरयः प्रोचिरे वत्स !, वस्त्रपात्रादिकं ह्यदः ॥ धर्मोपकरणं तेन, न परिग्रह उच्यते ! ॥ ६२ ॥ तद्रक्षणे च नो कश्चि–द्दोषो मोक्षार्थिना भवेत् ॥ लोभादेव हि मोक्षस्य, विघ्नः स्यान्न तु चीवरात् ! ॥ ६३ ॥ प्रयोगश्चात्र वस्त्रादि, न दोषाय तपस्विनाम् ॥ धर्मोपष्टम्भदायित्वात्, शुद्धाहारादिवत्स्फुटम् ! ॥ ६४ ॥ न च हेतुरसिद्धोऽय–मिति वाच्यं त्वया यतः ॥ धर्मोपष्टम्भदायित्वं, तस्याऽध्यक्षेण दृश्यते ! ॥ ६५ ॥ तथा हि—स्थानोपवेशनस्वाप–निक्षेपग्रहणादिषु ॥ जन्तुप्रमार्जनार्थं हि, रजोहरणमिष्यते ॥ ६६ ॥ सम्पातिमादिसत्वानां, रक्षायै मुखवस्त्रिकाम् ॥ भक्तपानस्थजन्तूना, परीक्षायै च पात्रकम् ॥ ६७ ॥ सम्यक्त्वज्ञानचारित्र–तपःसांधनहेतवे ॥ चीवराणि च कल्पादी–न्यङ्गीकुर्वन्ति साधवः ॥ ६८ ॥ [ युग्मम् ] वस्त्रैर्विना तु शीतोष्ण–दंशादिभिरुपद्रुतः ॥ अपध्यानान्मुनिर्जातु, सम्यक्त्वादेः स्खलेदपि ! ॥ ६९ ॥ धर्मोपकरणस्यैवं, धर्मोपष्टम्भदायिता ॥ सुनिश्चितेति व्रतिनां, तदादानं न दुष्यति ॥ ७० ॥ विनोपकरणं यस्तु, जीवादींस्त्रातुमीश्वरः ॥ जिनेन्द्रवत्तस्य दोषः, स्यात्तद्ग्रहणेऽपि न ॥ ७१ ॥ स चाद्यसंहननवा–नेवस्यान्नाऽपरः पुनः ॥ तच्च संहननं कस्या–ऽप्यधुना नास्ति भारते ॥ ७२ ॥ युक्त्येत्यादिकयोक्तोऽपि, शिवोऽत्यक्तकदाग्रहः ॥ हित्वा वस्त्रादिकं नग्नो, निरगान्नगराद्बहिः ॥ ७३ ॥ तस्योद्यानस्थितं नन्तुं, तद्भगिन्युत्तराभिधा ॥ ययौ नग्नं च तं वीक्ष्य, साऽपि नग्नाऽभवद्द्रुतम् ! ॥ ७४ ॥ भिक्षार्थं नगरीमध्ये, प्रविष्टां तां तु नग्निकाम् ॥ ददर्श गणिका काचि–द्दध्यौ चैवं स्वचेतसि ॥ ७५ ॥ अङ्गान्याच्छादितान्येषा–ऽस्माकं गौरवमिग्रति ॥ प्रकाश्यानि तु तानि स्यु–र्जुगुप्स्यानि स्वभावतः ॥ ७६ ॥ तदेनां नग्निकां वीक्ष्या–ऽस्मासु लोको विरंक्ष्यते ॥ ध्यात्वेति तस्यै वस्त्राणि, सा बलात्पर्यधापयत् ॥ ७७ ॥ तथापि तामनिच्छन्तीं, शिवभूतिरदोऽवदत् ॥ साध्वीनां वसनादाने, नूनं दोषो न विद्यते ॥ ७८ ॥ अत एव च देवीयं, प्रदत्ते चीवराणि ते ॥ तत्त्वयामूनि धार्याणी–त्युक्ता सा तेन तान्यधात् ॥ ७९ ॥ शिवभूतेश्च शिष्यौ द्वा– वभूतां बुद्धिशालिनौ ॥ कोडिन्नकोट्टवीराख्यौ, ताभ्यामासीतपरम्परा ॥ ८० ॥ इत्यष्टमो दिक्पटसंज्ञनिह्नवः, प्रकाशितो हारितशुद्धबोधिकः ॥ लब्धोऽपि बोधिर्व्रजतीति कस्यचित्, तद्रक्षणं तत्कुरुत प्रयत्नतः ! ॥ ८१ ॥ इत्यष्टमनिह्नवकथा ॥ इति समासा निह्नववक्तव्यतेति सूत्रार्थः ॥ ९ ॥ अथ मानुषत्वादित्रयावाप्तावपि संयमे वीर्यं दुर्लभमित्याह—

मूलम्—सुइं च लद्धुं सद्धं च, वीरिअं पुण दुल्लहं ॥ बहवे रोअमाणावि, नोयणं पडिवज्जए ॥ १० ॥

व्याख्या—श्रुतिं, चशब्दात्मानुषत्वं च, लब्ध्वा प्राप्य, श्रद्धां च, वीर्यं, प्रक्रमात्संयमविषयं पुनःशब्दस्य विशेषकत्वात् विशेषेण दुर्लभं, यतो बहवो रोचमाना अपि श्रद्दधाना अपि 'नोयणंति' सूत्रत्वान्नो एनं संयमं प्रतिपद्यन्ते चारित्रमोहनीयकर्मोदयतः सत्यकिश्रेणिकादिवत्कर्तुं नाङ्गीकुर्वन्तीति सूत्रार्थः ॥ १० ॥ अथास्य चतुरङ्गस्य फलमाह—

मूलम्—माणुसत्तंमि आयाओ, जो धम्मं सुच्च सद्दहे ॥ तवस्सी वीरिअं लद्धुं, संवुडे निद्धुणे रयं ॥ ११ ॥

व्याख्या—मानुषत्वे आयातो यो धर्मं श्रुत्वा 'सद्दहेत्ति' श्रद्धत्ते स तपस्वी निदानादिरहिततया प्रशस्ततपोन्वितः वीर्यं संयमोद्योगं लब्ध्वा संवृतः स्थगिताश्रवो निर्धुनोति नितरामपनयति, रजो बध्यमानकर्मरूपं, तदपनयनाच्च मुक्तिमेवाप्नोतीति भाव इति सूत्रार्थः ॥ ११ ॥ इत्यामुष्मिकं फलमुक्तमिदानीमैहिकं फलमाह—

मूलम्—सोही उज्जुअभूअस्स, धम्मो सुद्धस्स चिट्ठइ ॥ णिव्वाणं परमं जाइ, घयसित्तिव पावए ॥ १२ ॥

व्याख्या—शुद्धिः कषायकालुष्यापगमः, स्यादिति गम्यते, ऋजुभूतस्य चतुरङ्गप्राप्त्या मुक्तिं प्रति प्रगुणीभूतस्य

तथा च धर्मः क्षान्त्यादिः शुद्धस्य तिष्ठत्यविचलतया आस्ते, अशुद्धस्य तु कदाचित्कषायोदयादसौ विचलत्यपि, धर्मोपस्थितौ च निर्वाणं जीवन्मुक्तिरूपं परमं प्रकृष्टं याति गच्छति, उक्तं हि—"निर्जितमदमदनाना, वाक्कायमनोविकाररहितानाम् ॥ विनिवृत्तपराशाना-मिहैव मोक्षः सुविहितानाम् ॥ १ ॥ इति" कथम्भूतः सन्? घृतसिक्तः पावक इव ज्वलन इव, तपस्तेजोज्वलितत्वेन घृततर्पितानलसमानः सन्निति सूत्रार्थः ॥ १२ ॥ इत्थं फलमुपदर्श्य शिष्योपदेशमाह—

मूलम्—विगिंच कम्मुणो हेउं, जसं संचिणु खंतिए ॥ पाढवं सरीरं हिच्चा, उड्ढं पक्कमई दिसिं ॥ १३ ॥

व्याख्या—'विगिंचत्ति' विवेचय पृथक्कुरु कर्मणः प्रस्तावान्मानुपत्वादिप्रतिबन्धकस्य हेतुमुपादानकारणं मिथ्यात्वाविरत्यादिकं, तथा यशोहेतुत्वात् यशः संयमो, विनयो वा, तत्सञ्चिनु पुष्टं कुरु, कया? क्षान्त्या, उपलक्षणत्वान्मार्दवादिभिश्च, एवं च कृते किं स्यादित्याह—'पाढवंति' पार्थिवं, परप्रसिद्ध्या पृथिवीविकारं, शरीरं वपुर्हित्वा त्यक्त्वा, उर्ध्वां दिशमिति सम्बन्धः, प्रक्रामति प्रकर्षेण पुनर्भवाभावरूपेण गच्छतीति सूत्रार्थः ॥ १३ ॥ एवं तद्भव एव मुक्तियायिनां फलमुक्त्वा सम्प्रति तदितरेषां तदाह—

मूलम्—विसालिसेहिं सीलेहिं, जक्खा उत्तरउत्तरा ॥ महासुक्काव दिप्पंता, मण्णंता अपुणच्चयं ॥ १४ ॥
अप्पिआ देवकामाणं, कामरूवविउव्विणो ॥ उड्ढं कप्पेसु चिट्ठंति, पुव्वावाससया बहू ॥ १५ ॥

व्याख्या—'विसालिसेहिंति' मगधदेशीभाषया विसदृशैः स्वस्वचारित्रमोहनीयकर्मक्षयोपशमापेक्षया विभिन्नैः शीलैर्व्रतपालनात्मकैरनुष्ठानविशेषैर्यक्षा देवा ऊर्ध्वं कल्पेषु तिष्ठन्तीति उत्तरेण सम्बन्धः । कीदृशा यक्षा इत्याह—उत्तरोत्तरा यथोत्तरं प्रधाना', महाशुक्ला अतिशयोज्वलतया चन्द्रादित्यादयः ते इव दीप्यमानाः प्रकाशमानाः, अनेन शरीरसम्पदुक्ता, सुखसम्पदमाह—मन्यमाना मनस्यवधारयन्तो विशिष्टकामादिप्राप्तिसमुत्थरतिसागरावगाढतया दीर्घस्थितिमत्तया च अपुनश्च्यवं अपुनश्च्यवनं तिर्यगादिपूत्पत्तेरभावम् ॥ १४ ॥ तथा 'अप्पि अत्ति' अर्पिता इवार्पिता ढौकिताः प्रक्रमात्प्राक्तनसुकृतेन, केषामित्याह—देवकामानां दिव्याङ्गनास्पर्शादीनां, कामेन इच्छया रूपविकरणं येषां ते कामरूपविकरणा यथेष्टरूपादिकरणशक्तियुक्ता इत्यर्थः । ऊर्द्धमुपरिकल्पेषु सौधर्मादिषु, उपलक्षणत्वात् ग्रैवेयकानुत्तरेषु च, तिष्ठन्ति आयुःस्थितिमनुभवन्ति, पूर्वाणि सप्ततिकोटिलक्षपट्पंचाशत्कोटिसहस्रवर्षपरिमितानि, वर्षशतानि प्रतीतानि, बहून्यसंख्येयानि, जघन्यतोऽपि तत्र पल्योपमस्थितित्वात्, पल्योपमे च तेषामसंख्येयानामेव भावात्, पूर्ववर्षशतग्रहणं त्विह पूर्ववर्षशतायुषामेव चरणयोग्यतया विशेषादेशनायोग्यत्वमिति सूचनार्थमिति सूत्रद्वयार्थः ॥ १४ ॥ ॥ १५ ॥ अथ तेषामेतावदेव फलमुतान्यदपीत्याह—

मूलम्—तत्थ ठिच्चा जहाठाणं, जक्खा आउक्खए चुआ ॥ उवेन्ति माणुसं जोणिं, से दसंगेभिजायइ ॥ १६ ॥

व्याख्या—तत्र तेषु देवलोकेषु सौधर्मादिषु स्थित्वा यथास्थानं यद्यस्य स्वानुष्ठानानुरूपमिन्द्रादिपदं तस्मिन् यक्षा आयुःक्षये स्वस्वजीवितावसाने च्युता भ्रष्टा उपयान्ति गच्छन्ति मानुषीं योनिं, तत्र च 'सइति' सावशेषशुभकर्मा जन्तुर्दश अङ्गानि भोगोपकरणानि यस्यासौ दशाङ्गोऽभिजायते, एकवचननिर्देशस्त्विह विसदृशशीलतया कश्चिद्दशाङ्गः कश्चिन्नवाङ्गादिरपि जायते इति वैचित्र्य सूचनार्थ इति सूत्रार्थः ॥ १६ ॥ अथ दशाङ्गान्येवाह—

मूलम्—खित्तं वत्थुं हिरण्णं च, पसवो दास पोरुसं ॥ चत्तारि कामखंधाणि, तत्थ से उववज्जई ॥ १७ ॥

व्याख्या—क्षेत्रं ग्रामारामादि, सेतुकेतूभयात्मकं वा, वास्तु खातोच्छ्रितोभयात्मकं, हिरण्यं सुवर्णं, उपलक्षणत्वात् रूप्यादि च, पशवो गोमहिष्यादयाः, दासाश्च प्रेष्यरूपाः, 'पोरुसंति' प्राकृतत्वात् पौरुपेयं च पदातिसमूहो दासपौरुषेयमिति, चत्वारश्चतुःसंख्या, अत्र हि क्षेत्रं वास्तु चेत्येकः, हिरण्यमिति द्वितीयः, पशव इति तृतीयः, दासपौरुषेयमिति चतुर्थः, एते कामा मनोज्ञाः शब्दादयः तद्धेतवः स्कन्धास्तत्तत्पुद्गलसमूहाः कामस्कन्धा यत्र भवन्तीति गम्यते, प्राकृतत्वाच्च नपुंसकनिर्देशः, तत्र तेषु कुलेषु स उपपद्यते ॥ १७ ॥ अनेन चैकमङ्गमुक्तमथ शेषाणि नवाङ्गान्याह—

मूलम्—मित्तवं नाइवं होइ, उच्चागोए अवण्णवं ॥ अप्पायंके महापण्णे, अभिजाए जसो बले ॥ १८ ॥

(१) तत्र सेतुक्षेत्रं यदरघट्टादिजलेन सिच्यते ॥ १ ॥ केतुक्षेत्रमाकाशोदकनिष्पाद्यसस्यम् ॥ २ ॥ उभयक्षेत्रं तु उभयजलनिष्पाद्यसस्यमिति ॥ ३ ॥ (२) तत्र खातं भूमिगृहादि ॥ १ ॥ उच्छ्रितं प्रासादादि ॥ २ ॥ तदुभयं भूमिगृहोपरिस्थप्रासादम् ॥ ३ ॥

व्याख्या—मित्रवान्वयस्यवान् भवतीति योगः १ । ज्ञातिमान् स्वजनवान् भवति २ । उच्चैर्गोत्र उत्तमकुलः ३ । चः समुच्चये, वर्णवान् प्रशस्तशरीरच्छविः ४ । अल्पातङ्क आतङ्कविरहितो नीरोग इत्यर्थः ५ । महाप्राज्ञः पण्डितः ६ । अभिजातो विनीतः, स हि सर्वजनाभिगम्यो भवति, दुर्विनीतस्तु शेषगुणयुक्तोपि न तथेति ७ । अत एव च 'जसोत्ति' यशस्वी शुभख्यातिमान् ८ । 'बलेत्ति' बली कार्यकरणम्प्रति सामर्थ्यवान् ९ । उभयत्र सूत्रत्वान्मत्वर्थीयलोप इति सूत्रद्वयार्थः ॥ १८ ॥ ननु यथोक्तगुणयुक्तं मानुष्यमेव तत्फलमुतान्यदपीत्याह—

मूलम्—भोच्चा माणुस्सए भोए, अप्पडिरूवे अहाउअं ॥ पुव्वं विसुद्धसद्धम्मे,केवलं बोहि बुज्झिआ ॥१९॥

व्याख्या—भुक्त्वा मानुष्यकान् मनुष्यसम्बन्धिनो भोगान् मनोज्ञशब्दादीन्, अप्रतिरूपान् अनन्यतुल्यान्, यथायुरायुषोऽनतिक्रमेण, पूर्वं पूर्वजन्मनि विशुद्धो निदानादिरहितः सद्धर्मः शोभनधर्मोऽस्येति विशुद्धसद्धर्मः, केवलमकलङ्कं बोधिं जिनोक्तधर्मावाप्तिलक्षणं बुद्ध्वा अनुभूय प्राप्येति यावत् ॥ १९ ॥ ततः किमित्याह—

मूलम्—चउरंगं दुल्लहं मच्चा, संजमं पडिवज्जिआ ॥ तवसा धुअकम्मंसे,सिद्धे हवइ सासएत्ति बेमि॥२०॥

॥ इइ तइयमज्झयणं सम्मत्तं ॥

व्याख्या—चतुरङ्गमुक्तस्वरूपं दुर्लभं दुष्प्रापं मत्वा ज्ञात्वा संयमं सर्वसावद्यविरतिरूपं प्रतिपद्यासेव्य तपसा बाह्येनान्तरेण च धुतकर्मांशो विध्वस्ताशेषकर्मभागः सिद्धो भवति, स चान्यतीर्थिककल्पितसिद्धवन्न पुनरिहायातीत्याह-शाश्वतः शश्वद्भवनात्, शश्वद्भवनञ्च पुनर्भवनिबन्धनकर्मबीजात्यन्तिकोच्छेदात्तथा चाह-"दग्धे बीजे यथात्यन्तं, प्रादुर्भवति नाङ्कुरः ॥ कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥" इति सूत्रद्वयार्थः इति ब्रवीमीति प्राग्वत् ॥ २० ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ तृतीयाध्ययनं सम्पूर्णम् ॥ ३ ॥

## ॥ अथ चतुर्थाध्ययनम् ॥

॥ अर्हन् ॥ उक्तं तृतीयमध्ययनमथ चतुर्थमारभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तराध्ययने चतुरङ्गी दुर्लभेत्युक्तमिह तु तत् प्राप्तावपि महते दोषाय प्रमादो, महते गुणाय चाप्रमाद इति प्रमादाप्रमादौ हेयोपादेयतया वक्तुं प्रमादाप्रमादाभिधं चतुर्थाध्ययनमाह, तस्य चेदमादिसूत्रम्—

मूलम्—असंखयं जीविअ मा पमायए, जरोवणीअस्स हु नत्थि ताणं ॥
एअं विआणाहि जणे पमत्ते, कं नु विहिंसा अजया गहिंति ॥ १ ॥

व्याख्या—असंस्कृतं असंस्करणीयं, जीवितं प्राणधारणं, यत्नशतैरपि सतो वर्धयितुं त्रुटितस्य वा तस्य कर्णपाशवत्सन्धातुमशक्यत्वात्, यदुक्तं—"वासाइं दोण्णि तिण्णि व, वाहिज्जइ जइ घरं पि सीडेइ ॥ सा का वि नत्थि नीई, सीडिज्जइ जीविअं जीए ! ॥ १ ॥" तथा-"मङ्गलैः कौतुकैर्योगै-र्विद्यामंत्रैस्तथौषधैः ॥ न शक्ता मरणात्रातुं, सेन्द्रा देवगणा अपि ! ॥ १ ॥" ततः किं कार्यमित्याह- मा प्रमादीः, अयं भावः- यद्यायुः कथञ्चित्संस्कर्तुं शक्यं स्यात्तदा चतुरङ्गीप्राप्तावपि न प्रमादो दोषाय, यदा तु नैवं तदा चतुरङ्गी प्रमादिनां भूयो दुर्लभेति मा प्रमादं कृथाः । ननु ? वार्धक एव धर्मं करिष्यामीति कोऽपि वक्ति इत्याशंक्याह—जरामुपनीतः प्रापितो गम्यमानत्वात्स्व-

कर्मभिर्जरोपनीतस्तस्य 'हु' इति निश्चये नास्ति त्राणं शरणं, येन जराऽपनीयते न तच्छरणमस्ति, यदुक्तं—"रसायणं निसेवंति, मज्जं मंसं रसं तहा ॥ भुंजंति सरसाहारं, जरा तहवि न नस्सए ॥ १ ॥" जराजर्जरवपुषश्च नैव तादृशी धर्मकरणशक्तिः स्यात्ततो यावदसौ न व्याप्नोति तावद्धर्मे मा प्रमादीः । उक्तं च—"तद्यावदिन्द्रियबलं, जरया रोगैर्न बाध्यते प्रसभम् ॥ तावच्छरीरमूर्च्छां, त्यक्त्वा धर्मे कुरुष्व मतिम् ॥ १ ॥" जरोपनीतस्य च त्राणं नास्तीत्यत्राऽट्टनमल्लो दृष्टान्तस्तत्र चायं सम्प्रदायः, तथाहि—

उज्जयन्यां नगर्यां श्री—जितशत्रुर्नृपोऽभवत् ॥ तत्र चाप्रतिमल्लोभून्मल्लराजोऽट्टनाभिधः ॥ १ ॥ स च गत्वान्यराज्यस्थै—रपि मल्लैरयुध्यत ॥ तस्य दोर्दण्डकण्डूस्तु, व्यपनिन्ये न केनचित् ॥ २ ॥ तदा चाम्भोधितीरस्थे, पुरे सोपारकाभिधे ॥ मल्लयुद्धप्रियः सिंह—गिरिसंज्ञोऽभवन्नृपः ॥ ३ ॥ यो मल्लेष्वजयत्तस्मै, भूपः सोऽदाद्धनं घनम् ॥ इति तत्राऽट्टनो गत्वा, प्रत्यब्दमजयत्परान् ॥ ४ ॥ ततः सिंहगिरिर्दध्यौ, यदागत्यान्यराज्यतः ॥ अयं जयति मन्मल्लान्ममापभ्राजना हि सा ॥ ५ ॥ ततोऽहमपरं कञ्चि—त्कुर्वे मल्लं बलोत्कटम् ॥ ध्यात्वेति मार्गयन्मल्लं, वार्द्धितीरे ययौ नृपः ॥ ६ ॥ वसां पिबन्तं मीनानां, तत्राद्राक्षीच्च धीवरम् ॥ ततस्तं बलिनं ज्ञात्वा, पोषयामास पार्थिवः ॥ ७ ॥ अशिक्षयन्नियुद्धं च, भूपस्तस्य तरस्विनः ॥ ततः सोऽभून्महामल्लो—ऽजय्योन्यैर्हस्तिमल्लवत् ॥ ८ ॥ अथाट्टनो नियुद्धाहे, समासन्ने निजात्पुरात् ॥ शम्बलेन बलीवर्दं, भृत्वा सोपारकं ययौ ॥ ९ ॥ स च मात्स्यिकमल्लेन, नियुद्धे निर्जितो द्रुतम् ॥ विषादमाससादोच्चै—र्भग्नो हस्तीव हस्तिना ॥ १० ॥ स्वीयावासे ततो गत्वा—ऽट्टन एवं व्यचिन्तयत् ॥ केनाप्यजितपूर्वोहं, मल्लेनानेन निर्जितः ॥ ११ ॥ तारुण्योपचयाच्चायं, चीयमानबलः कथम् ? ॥ पुनर्जय्यो मया क्षीणौ—जसा यौवनहानितः ! ॥ १२ ॥ कर्तव्या वैरशुद्धिश्च, मयोपायेन केनचित् ॥ शल्यवत् खाद्रकरोत्यन्त—र्मानम्लानिर्हि मानिनाम् ॥ १३ ॥ ध्यात्वेति तज्जैत्रबलं, सोऽन्यं मल्लं गवेषयन् ॥ सौराष्ट्रे बहवो मल्लाः, श्रुत्वेति तमभिव्रजन् ॥ १४ ॥ भृगुकच्छसमीपस्थ—हरणीग्रामसीमनि ॥ एकं कर्षकमद्राक्षी—त्कर्पासवपनोद्यतम् ॥ १५ ॥ [ युग्मम् ] हलमेकेन हस्तेन, वाहयन्तं द्रुतं द्रुतम् ॥ द्वितीयेनोत्पाटयन्तं, फलहीस्तृणलीलया ॥ १६ ॥ तञ्च प्रेक्ष्य पुमानेष, बलिष्ठ इति चिन्तयन् ॥ तदीयाहारवीक्षायै, तत्रास्थाद्यावदट्टनः ॥ १७ ॥ [ युग्मम् ] प्रातराशकृते ताव—ल्लात्वा कूरभृतं घटम् ॥ तत्रागात्तत्प्रिया सोऽपि, सीरमच्छोटयत्ततः ॥ १८ ॥ कूरञ्च सद्यः कुम्भस्थं, जग्रसे ग्रासलीलया ॥ गत्वा क्वापि पुरीषस्यो—त्सर्गं चक्रे च कर्षकः ॥ १९ ॥ अट्टनोऽपि ततो गत्वा, तत्पुरीषं व्यलोकत ॥ तच्चाद्राक्षीदतिस्वल्पं, शुष्कं छागपुरीषवत् ॥ २० ॥ जाठराग्निं ततस्तस्य, ज्ञात्वा प्रबलमट्टनः ॥ वैरशुद्धिसमर्थोयं, भावीत्यन्तरभावयत् ॥ २१ ॥ तस्यैव सौधं सन्ध्यायां, ययाचे वसतिं च सः ॥ सोऽपि तामार्पयत्तत्र, मल्लोप्यस्थाद्यथासुखम् ॥ २२ ॥ का युष्माकं जीविकेति, तं च पप्रच्छ वार्तयन् ॥ प्रोचे कृषीबलोप्येव—मस्म्यहं ननु निर्धनः ॥ २३ ॥ तत्प्राज्येन प्रयत्नेन, कृषिं कुर्वे तथा पि हि ॥ अन्नमप्युदरापूर्ति—करं सम्पद्यते न मे ! ॥ २४ ॥ मल्लोवादीदमुं मुक्त्वो—द्यममेहि समं मया ॥ अतिस्तोकेन कालेन, कुर्वे त्वामीश्वरं यथा ! ॥ २५ ॥ सोप्यूचेऽहं तदागच्छा—म्यादिशेद्यदि मां वशा ॥ पृष्टा मल्लेन तत्रार्थे, ततः साप्येवमब्रवीत् ॥ २६ ॥ उप्तोस्त्यनेन कर्पासो—ऽधुना स च विनाऽमुना ॥ विनश्यति तदा च स्या—त्कथमाजीविका मम ? ॥ २७ ॥ मल्लोब्रवीदत्र यावान्, कर्पासश्चिन्तितो भवेत् ॥ गृहाण तावतो मूल्य—मधुनैवार्पयामि ते ॥ २८ ॥ इत्युदीर्य तया प्रोक्त—मानं मल्लो ददौ धनम् ॥ ततोनुमेने सा कान्तं, किं हि वित्तान्न जायते ? ॥ २९ ॥ अट्टनोऽथ तमादाय, ययावुज्जयनीं जवात् ॥ पोषयामास तं प्रोच्चै—रुपायैश्च परश्शतैः ॥ ३० ॥ अशिक्षयच्च तस्योग्रं, मल्लयुद्धं महौजसः ॥ फलहीमल्ल इत्यस्या—ऽभिधानं च विनिर्ममे ॥ ३१ ॥ द्वितीयाब्दे च सम्प्राप्ते, मल्लयुद्धमहोत्सवे ॥ अट्टनोगात्समं तेन, पुनः सोपारके पुरे ॥ ३२ ॥ अथ सिंहगिरौ राज्ञि, मल्लयुद्धदिदृक्षया ॥ समं पौरैः परोलक्षै—रङ्गमण्डपमाश्रिते ॥ ३३ ॥ योधं योधमनेकेषु, मल्लेषूपरतेषु च ॥ नियुद्धार्थमढौकेतां, फलहीमात्स्यिकौ मिथः ॥ ३४ ॥ [ युग्मम् ] क्षोभयन्तौ भुजास्फोट—रवैर्वीरमनांस्यपि ॥ कम्पयन्तौ धरापीठं, दुर्धरैः पाददर्दुरैः ॥ ३५ ॥ मुष्टामुष्टिप्रकुर्वन्तौ, दन्तादन्तीव कुञ्जरौ ॥ प्रबलैः पदविन्यासै—र्नमयन्ताविव क्षमाम् ॥ ३६ ॥ भूतले निपतन्तौ च, छिन्नमूलमहाद्रुवत् ॥ क्ष्मातलाच्चावधूयाङ्ग—मुत्तिष्ठन्तौ विनिद्रवत् ॥ ३७ ॥ विलगन्तौ मिथो बाढं, चिरान्मिलितबन्धुवत् ॥ कृतप्रहारहुङ्कार—द्वियुञ्जानौ च सत्वरम् ॥ ३८ ॥ उत्पतन्तौ पतङ्गवत्, प्लवमानौ प्लवङ्गवत् ॥ तौ चिरं चक्रतुर्मल्ल—युद्धं मल्लशिरोमणी ॥ ३९ ॥

[ पञ्चभिः कुलकम् ] किन्तु तुल्यबलौ वीक्ष्य, तौ जयश्रीः स्वयंवरा ॥ ध्यायन्ती कं वृणोर्मीति, नैकमप्यवृणोत्तदा ॥ ४० ॥ पूर्णं भावि द्वितीयेह्नि, नियुद्धमनयोर्ननु ॥ इत्युक्त्वाथौ नृपस्ताव–त्तावपि स्वाश्रयं गतौ ॥ ४१ ॥ ततोऽट्टनेन फलही, प्रोचे पुत्र ! तदुच्यताम् ॥ तेन मल्लेन यद्गाढं, त्वदङ्गं बाधितं भवेत् ॥ ४२ ॥ अट्टनाय ततः सर्वं, फलही सत्यमब्रवीत् ॥ प्रायश्चित्तग्रहीतेव, गुरवे शुद्धमानसः ! ॥ ४३ ॥ ततोऽट्टनः पक्वतैल–मर्दनैर्वह्निनापनैः ॥ तदर्हैर्भेषजैश्च द्राग् , विदधे तं पुनर्नवम् ॥ ४४ ॥ मात्स्यिकस्यापि पार्श्वेऽङ्ग–मर्दकान्प्राहिणोन्नृपः ॥ स तु श्रमार्दिताङ्गोऽपि, गर्वान्नामर्दयद्वपुः ॥ ४५ ॥ प्रोचे च कनु रङ्कोयं, स्थातुं शक्ष्यति मे पुरः ॥ अहं ह्यमुष्य जनक–मप्यजैषं पुरा जवात् ! ॥ ४६ ॥ ममयुद्धावजायेतां, द्वितीयदिवसेऽपि तौ ॥ पार्थिवे चोत्थिते प्राग्व–न्नमसज्जगदट्टनः ॥ ४७ ॥ मात्स्यिकस्तु मदाविष्टो–ऽस्वीकुर्वन्नङ्गमर्दनम् ॥ नियुद्धमारभेतां तौ, तृतीयेप्यह्नि पूर्ववत् ॥ ४८ ॥ तदा च मात्स्यिकं वीक्ष्य, नियुद्धश्रान्तविग्रहम् ॥ निरोजस्कप्रहारश्च, वैशाखस्थानसंस्थितम् ॥ ४९ ॥ फलहीति वदंस्तस्य, भ्रूसंज्ञामट्टनो व्यधात् ॥ जग्राह फलहीग्राहं, पाणिना सोऽपि मात्स्यिकम् ॥ ५० ॥ [ युग्मम् ] तं कमण्डलुवन्मौलिं, परितोऽभ्रमयच्च सः ॥ ततस्तुष्टो बहुद्रव्य–मट्टनायार्पयन्नृपः ॥ ५१ ॥ तच्च दत्वा हालिकाया–ऽट्टनोऽपि विससर्ज तम् ॥ स्वयं त्ववन्तीमगमत्, कृतार्थो वैरशुद्धितः ॥ ५२ ॥ विमुक्तयुद्धव्यापारो, गृहे तिष्ठन् सुतादिभिः ॥ वृद्धोऽयमऽसमर्थोय–मिति सोऽहील्यतान्वहम् ! ॥ ५३ ॥ ततो मानादनापृच्छ्य, तान् काशाम्बीं जगाम सः ॥ आवत्सरं सिषेवे च, स्थित्वा क्वापि रसायनम् ॥ ५४ ॥ बलिष्ठतां ततः प्राप्तः, प्राप्ते युद्धोत्सवेऽट्टनः ॥ कुर्वन्नियुद्धमवधी–द्राज्ञो मल्लं निरङ्गणम् ॥ ५५ ॥ आगन्तुकेन मल्लो मे, व्यापादित इति क्रुधा ॥ प्रशशंस न तं भूप–स्तेन लोकोऽपि नाऽस्तवीत् ! ॥ ५६ ॥ ततो माभूच्छ्रमो व्यर्थो, ममेयानिति चिन्तयन् ॥ इत्येकामब्रवीदार्यां, स्वं ज्ञापयितुमट्टनः ॥ ५७ ॥ सा चेयं–"कथयति वनशकुनानां, कथयत हे शकुनकाः ! शकुनकानाम् ॥ यदिहाट्टनेन निहतो, निरङ्गणः शस्त्ररहितेन ! ॥ ५८ ॥" श्रुत्वेति श्रुतपूर्वी तं, महामल्लं महीपतिः ॥ यावज्जीवं जीविकार्हं, तुष्टस्तस्मै ददौ धनम् ॥ ५९ ॥ लोकोऽपि द्रविणं तस्मै, यथाशक्ति ददौ तदा ॥ तत्रस्थं प्राप्तवित्तं च, श्रुश्रुवुर्बन्धवोऽपि तम् ॥६०॥ ततस्तेऽभ्येत्य तत्पार्श्वे, तं पादपतनादिभिः ॥ विश्वास्यौपयिकैः प्राग्व–दश्रयन् वित्तलोभतः ॥ ६१ ॥ अध्यासीदट्टनो वित्त–लुब्धा ह्येते श्रयन्ति माम् ॥ निर्धनस्य तु मे भूयः, करिष्यन्ति पराभवम् ॥ ६२ ॥ विस्रसापि शरीरं मे, स्वीकरोति शनैः शनैः ॥ तया व्यासस्तु नैवाहं, भविष्याम्यौषधैर्ध्रुवा ॥ ६३ ॥ अधीनं मानवानां त–द्भेषजं न हि विद्यते ॥ पुनर्नवं भवेद्येन, जराजर्जरमङ्गकम् ॥ ६४ ॥ न च वार्धकदिव्यास्त्रं, प्रयुक्तं कालविद्विषा ॥ पत्त्काये स्खलयितुं, शक्यं स्वजनकङ्कटैः ! ॥ ६५ ॥ तज्जराया न हि त्राणं, भेषजं बन्धवोऽपि च ॥ त्राणं तु धर्म एव स्या–त्सर्वावस्थासु तत्वतः ॥ ६६ ॥ तत्सामर्थ्यं किञ्चिदस्तीह देहे, यावत्तावद्धर्ममाराधयामि ॥ ध्यात्वेत्यन्तं सद्गुरूणामुपान्ते, प्रव्रज्याऽभूदट्टनः सौख्यपात्रम् ॥ ६७ ॥ इत्यट्टनमल्लकथा ॥

एवं जराभिभूतस्याट्टनस्येव भेषजैः स्वजनैर्वा त्राणं न भवति । ततश्च 'एअमित्यादि' एतमनन्तरोक्तमर्थं विजानीहि विशेषेणावबुध्यस्व, तथा एतच्च वक्ष्यमाणं जानीहि, जना लोकाः प्रमत्ताः प्रमादपराः 'उभयत्र सूत्रत्वादेकवचनं' कं ? अर्थं, प्रक्रमात् त्राणं, 'नु' इति वितर्के, विहिंसा विविधहिंसनशीलाः, तथा अयताः पापस्थानेभ्योऽनुपरताः, 'गहिंतित्ति' ग्रहीष्यन्ति स्वीकरिष्यन्ति, अयं भावः—एते प्रमत्तादिविशेषणान्विताः स्वकृतदुष्कर्मभिर्नरकादिकमेव यातनास्थानं यास्यन्ति, परं नास्ति त्राणमिति सूत्रार्थः ॥ १ ॥ इह चासंस्कृतं जीवितं, जरोपनीतस्य च न त्राणमतो मा प्रमादीरित्युक्ते, अर्थस्यापि पुरुषार्थतया सकलैहिकामुष्मिकफलनिबन्धनतया च तदुपार्जनं प्रति प्रमादो न कार्य इति केषाञ्चित्कदाशयो भवतीति तन्मतमपाकर्तुमाह—

मूलम्— जे पावकम्मेहिं धणं मणूसा, समाययंती अमइं गहाय ॥
पहाय ते पासपयट्टिए नरे, वेराणुबद्धा नरयं उविंति ॥ २ ॥

व्याख्या—ये केचन पापकर्मभिः कृषिवाणिज्यादिभिरनुष्ठानैर्धनं द्रव्यं मनुष्या मानवास्तेषामेव प्रायो द्रव्योपार्जनोपायप्रवृत्तेरित्थमुक्तं, समाददते स्वीकुर्वते, अमतिं कुमतिं, "धनैर्दुःकुलीनाः कुलीना भवन्ति, धनैरेव पापात्पुनर्निस्तरन्ते ॥ धनेभ्यो विशिष्टो न लोकेऽस्ति कश्चि–द्धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ १ ॥" इत्यादिकां गृहीत्वा सम्प्रधार्य, प्रहाय प्रकर्षेण हित्वा धनमेव ते धनैकरसिकाः, 'पासपयट्टिअत्ति' पाशा इव पाशा बन्धननिबन्धन-

त्वात्स्त्रियः, उक्तं च—“वारी गयाण जालं, तिमीण हरिणाण वग्गुरा चेव ॥ पासा य सउणयाणं, नराण बंधत्थमित्थीओ ॥ १ ॥” इति, तेषु ‘पयट्टिअत्ति’ आर्षत्वात् प्रवृत्ताः पापप्रवृत्ता नराः पुरुषाः, पुनर्नरोगादानमाहरम्यापनार्थं, वैरेण वैरहेतुना पापकर्मणानुबद्धाः सततमनुगता वैरानुबद्धा नरकं रत्नप्रभादिकं उपयान्ति गच्छन्ति, न हि द्रव्यमुपार्ज्य रामास्वभिरमन्ते, तदभिरत्या च नरकगतिभाज एव स्युरिति भावः, तस्मादिहैव वधबन्धादिहेतुतया परत्र च नरकादि दुर्गतिदायित्वेन तत्वतः पुरुषार्थ एव न भवत्यर्थ इति तत्त्यागतो धर्मं प्रति मा प्रमादीरित्युक्तं भवति । द्रव्यलुब्धानां चात्रैवापायदर्शकोऽयमुदाहरणसम्प्रदायः—

तथा हि नगरे क्वापि, बभूवैको मलिम्लुचः ॥ स चैकमखनत्कूपं, महान्तं स्वगृहान्तरे ॥ १ ॥ हृत्वा धाम्नं तमस्विन्यां, सलक्ष्मीकगृहेषु सः ॥ बहुलं द्रव्यमादाय, कूपे तत्राक्षिपत्सदा ॥ २ ॥ धनं दत्त्वा च कस्यापि, परिणिन्ये स कन्यकाम् ॥ निर्गुणोऽपि जनो जाया-मवाप्नोति धनेन हि ! ॥ ३ ॥ प्रजातायां तु जायाया-मिति दध्यौ स तस्करः ॥ वृद्धिङ्गतान्यपत्यानि, वक्ष्यन्त्यन्यस्य मे रमाम् ! ॥ ४ ॥ अपत्यमपि हन्तव्यं, तल्लक्ष्मीरक्षणेच्छया ॥ तज्जनन्यां तु जीवन्त्यां, तन्निहन्तुं न शक्ष्यते ! ॥ ५ ॥ सापत्यापि वधूर्वध्या, तन्मयेति निगृह्य सः ॥ तत्रैव कूपे चिक्षेप, निहत्य ससुतां स्त्रियम् ॥ ६ ॥ द्रव्येणान्यां पुनः पाणौ, कृत्वा प्राग्वज्जघान सः ॥ एवं पुनः पुनर्लोभ-ग्रहग्रस्तो विनिर्ममे ! ॥ ७ ॥ अन्यदा स कनीमेका-मुपयेमे मनोरमाम् ॥ जातापत्यामपि न ता-मवधीद्रूपमोहितः ॥ ८ ॥ पूर्णोऽष्टवर्षे सञ्जाते, तज्जाते चेत्यचिन्तयत् ॥ मया भूयस्तर काल-मियं मोहेन रक्षिता ॥ ९ ॥ एनां निहत्य तत्पश्चात्, मारयिष्यामि दारकम् ॥ ध्यात्वेति मारयित्वा तां, कूपे तत्राक्षिपद्द्रुतम् ! ॥ १० ॥ मार्यमाणां च तां वीक्ष्य, भयभ्रान्तस्तदङ्गजः ॥ गृहान्निर्गत्य पूच्चक्रे, निर्बलानां रुदो बलम् ! ॥ ११ ॥ ततः किं पूत्करोषीति, लोकैः पृष्टो जगाद सः ॥ निहत्य जनयित्री मे, कूपे क्षिप्ताधुनामुना ॥ १२ ॥ तच्छ्रुत्वा तस्य सौधान्तः, प्रविश्योर्वीशपूरुषाः ॥ तं चौरं जगृहुर्जीव-ग्राहं ग्राहा इव द्विपम् ॥ १३ ॥ कूपं च ददृशुर्द्रव्या-पूर्णमस्थिभिराकुलम् ॥ ततोऽवबुध्य तं दस्युं, बद्ध्वा निन्युर्नृपान्तिकम् ॥ १४ ॥ भूपोऽप्युपायैर्भूयोभि-स्तं प्रपीड्याखिलं धनम् ॥ लोकेभ्यो दापयत्तं च, विडम्ब्यामारयद्द्रुतम् ॥ १५ ॥ इत्यर्थलोभेन कुकर्म कुर्व-न्निहापि पीडामधियाति जन्तुः ॥ अमुत्र चाधोगतिमेति तेन, त्यक्त्वार्थलोभं कुरु धर्मयत्नम् ॥ १६ ॥ इति द्रव्यलोभे चौरकथा ॥ तदेवं धनमत्र परत्र चानर्थकारीति सूत्रार्थः ॥ २ ॥ अथ कर्मणोऽवन्ध्यतां कथयन् प्रस्तुतमेवार्थं द्रढयितुमाह—

मूलम्—तेणे जहा संधिमुहे गहीए, स कम्मुणा किच्चइ पावकारी ॥
एवं पया पेच्च इहं च लोए, कडाण कम्माण न मुक्खु अत्थि ॥ ३ ॥

व्याख्या—स्तेनश्चौरो यथा सन्धिमुखे क्षात्रद्वारे गृहीतः सन् स्वकर्मणा स्वीयानुष्ठानेन कृत्यते छिद्यते पापकारी पापकरणशीलः, कथं पुनरयं कृत्यते ? इत्यत्र सम्प्रदायस्तथा हि—

नगरे काप्यभूत्कोपि, चौरश्चौर्यविशारदः ॥ स चानेकप्रकारेषु, क्षात्रेषु निपुणोभवत् ॥ १ ॥ नन्द्यावर्तघटाम्भोधि—कपिशीर्षादिसंस्थितम् ॥ क्षात्रं दत्वान्वहं चक्रे,तास्कर्यं स हि तस्करः ॥ २ ॥ सर्वतो दत्तफलके—ऽन्यदाऽपवरके क्वचित् ॥ स क्षात्रमखनच्चारु, कपिशीर्षकसंस्थितम् ॥ ३ ॥ तत्र क्षात्रं खनन्तं तं, ज्ञात्वा जाग्रद्गृहाधिपः ॥ उत्थाय तं प्रदेशं द्राक्, बभाज निभृतक्रमः ॥ ४ ॥ गृहे प्रविष्टः शस्त्रेण, प्रहरिष्यति मामसौ ॥ इति सोऽर्धप्रविष्टं तं, द्रुतं जग्राह पादयोः ॥ ५ ॥ ततो गृहीतोहमिति, स प्रोचे बाह्यदस्यवे ॥ सोऽपि तं हस्तयोर्धृत्वा, बहिः क्रष्टुं समाकृषत् ॥ ६ ॥ सोऽन्तःस्थेन गृहेशेन, वहिःस्थेन च दस्युना ॥ आकृष्यमाणो नैवाभू—त्स्वाङ्गसङ्गोपने क्षमः ॥ ७ ॥ अतीव सङ्कटे क्षात्रे, तदा तत्र स्वनिर्मिते ॥ सोऽकृत्यत भृशं तीक्ष्णैः, कपिशीर्षकदन्तकैः ॥ ८ ॥ ततः स चौरः सपराक्रमाभ्यां, ताभ्यामुभाभ्यामपि कृष्यमाणः ॥ क्षात्रेण तेन स्वकृतेन कृत्तः, पीडां प्रपेदे मरणावसानाम् ! ॥ ९ ॥ इति स्वकृतकर्मभोगे चौरकथा ॥ एवमनेनोदाहरणदर्शितन्यायेन प्रजा प्राणिसमूहरूपा, प्रेत्य परलोके, ‘इहं च लोएत्ति’ इह लोके च, स्वकृतकर्मनिर्मितविविधबाधाभिः कृत्यते, कुतश्चैवमुच्यत इत्याह—यतः कृतानां कर्मणां न मोक्षोऽस्ति, यदुक्तं—“यदिह क्रियते कर्म, तत् परत्रोपभुज्यते ॥ मूलसिक्तेषु वृक्षेषु, फलं शाखासु जायते ॥ १ ॥” ततः पापकर्म न विधेयं, आस्तां वा पापकर्म, तत्प्रशंसाऽऽशंसाऽपि न कार्या, तस्या अप्यनर्थहेतुत्वात्तथा च वृद्धाः—

दस्युरेकः पुरे क्वापि, दुरारोहेपि मन्दिरे ॥ आरुह्य क्षात्रमखन–द्धनं चादाय निर्ययौ ॥ १ ॥ ततः प्रातर्बहुद्रव्य–विनाशोत्पन्नदुःखतः ॥ प्रबुद्धेन गृहेशेन, तुमुले बहुले कृते ॥ २ ॥ लोके च मिलिते भूरि–तरे तत्र स तस्करः ॥ कः किं वक्तीति निर्णेतु–मागान्मञ्जुलवेषभृत् ॥ ३ ॥ [ युग्मम् ] लोकाश्चैवं तदा प्रोचु–र्दुरारोहेऽत्र वेश्मनि ॥ आरुह्य दस्युना तेन, क्षात्रमेतत्कथं कृतम् ? ॥ ४ ॥ क्षात्रेणानेन लघुना, परास्कन्दी कथं च स ॥ प्रविष्टो वित्तमादाय, निर्गतो वा भविष्यति ? ॥ ५ ॥ तदस्य खेचरस्येव, पाटच्चरशिरोमणेः ॥ वाचामगोचरां शक्तिं, दृष्ट्वा चित्रीयते मनः ॥ ६ ॥ इति लोकोक्तिमाकर्ण्य, तुष्टश्चौरोऽप्यचिन्तयत् ॥ सत्यमेतत्कथमहं, प्रविष्टो निर्गतोऽमुना ? ॥७॥ इति स्वीयं वीक्षमाणो, वक्षः कुक्षी कटीतटम् ॥ मुहुर्मुहुः क्षात्रमुखं, प्रेक्षाञ्चक्रे जडाशयः ! ॥ ८ ॥ तत्रागता राजनरास्ततस्तं, निश्चित्य चौरं जगृहुः सुदक्षाः ॥ निन्युश्च सद्यो नृपतेरुपान्ते, नृपोपि तं शिक्षयति स्म सम्यक् ! ॥ ९ ॥ इति पापप्रशंसाभिलाषे चौरकथा ॥ एवं पापकर्मप्रशंसाभिलाषोपि सदोष इति न कार्य इति सूत्रार्थः ॥ ३ ॥ इह च कर्मणामवन्ध्यत्वमुक्तं, तत्र च कदाचिद्बन्धुभ्य एव तन्मुक्तिर्भाविनी, अमुक्तौ वा धनादिवत्तद्विभज्यैवामी भोक्ष्यन्त–इत्यपि कश्चिन्मन्येताऽत आह—

मूलम्—संसारमावण्ण परस्स अट्ठा, साहारणं जं च करेइ कम्मं ॥
कम्मस्स ते तस्स उ वेअकाले, न बंधवा बंधवयं उविंति ॥ ४ ॥

व्याख्या—संसरणं तेषु तेषूच्चावचकुलेषु पर्यटनं संसारस्तमापन्नः प्राप्तः परस्यात्मव्यतिरिक्तस्य पुत्रकलत्रादेः 'अट्ठत्ति' अर्थात् प्रयोजनमाश्रित्य साधारणं 'जंचत्ति' चस्य वा शब्दार्थत्वाद्भिन्नक्रमत्वाच्च साधारणं वा यदात्मनोन्येपाञ्चैतद्भविष्यतीति बुद्धिपूर्वकं करोति कर्म कृष्याद्यनुष्ठानं, भवानिति गम्यं, कर्मणस्तस्यैव कृष्यादेः ते तव कर्मकर्तुः 'तस्सउत्ति' तु शब्दस्यापिशब्दार्थत्वात्तस्यापि परार्थस्य साधारणस्य वा आस्तामात्मनिमित्तस्येति भावः, वेदकाले विपाककाले न नैव बान्धवाः स्वजना यदर्थं कर्म कृतवान् ते बान्धवतां तद्विभजनस्फेटनादिना 'उविंतित्ति' उपयान्ति, तेन स्वजनोपरि मोहं हित्वा धर्म एवावहितेन भाव्यं। उक्तञ्च—

"रोगग्रातो दुःखार्दितस्तथा स्वजनपरिवृतो जीवः ॥ क्वणति करुणं सबाष्पं, रुजं निहन्तुं न शक्तोसौ ॥ १ ॥ माता भ्राता भगिनी, भार्या पुत्रस्तथा च मित्राणि ॥ न घ्नन्ति ते यदि रुजं, स्वजनबलं किं वृथा वहसि ? ॥ २ ॥ रोगहरणेप्यशक्ताः, प्रत्युत धर्मस्य ते तु विघ्नकराः ॥ मरणाच्च न रक्षन्ति, स्वजनपराभ्यां किमभ्यधिकम् ? ॥ ३ ॥ तस्मात्स्वजनस्यार्थे, यदिहाकार्यं करोषि निर्लज्ज ! ॥ भोक्तव्यं तस्य फलं, परलोकगतेन ते मूढ ! ॥ ४ ॥ तस्मात्स्वजनस्योपरि, विहाय रागं च निर्वृतो भूत्वा ॥ धर्मं कुरुष्व यत्ना–दिहपरलोकस्य पथ्यदनम् ! ॥ ५ ॥" अत्रोदाहरणमाभीरीवञ्चकवणिजस्तत्र चायं सम्प्रदायः—

तथा हि नगरे क्वापि, वणिगेकोऽभवत्पुरा ॥ स च हट्टस्थितश्चक्रे, व्यापारं प्रतिवासरम् ॥ १ ॥ अन्यदा सरलात्यर्थ–माभीर्येका तदापणे ॥ रूपकद्वयमादाय, कर्पासार्थमुपागमत् ॥ २ ॥ कर्पासश्च समर्घोऽभू–त्तदा तस्मात्स नैगमः ॥ एकरूपककर्पासं, तोलयित्वा ददौ द्विशः ॥ ३ ॥ द्वयो रूपकयोर्दत्तः, कर्पासो मे द्विरर्पणात् ॥ सा तु ज्ञात्वेति तावन्तं, तमादाय ययौ द्रुतम् ॥ ४ ॥ वणिक् स तु तदा दध्यौ, रूपकोऽयं मया मुधा ॥ लेभे भाग्यात्तदेनं–मुपभुञ्जेऽहमात्मना ! ॥ ५ ॥ इति ध्यात्वा रूपकस्य, तस्याज्यसमितागुडान् ॥ गृहे प्रैषीद्भार्यया च, घृतपूरानचीकरत् ! ॥ ६ ॥ तयाऽथ घृतपूरेषु, कृतेष्वागात्पुरान्तरात् ॥ तज्जामाता तत्र मित्र–युक्तः कार्येण केनचित् ! ॥ ७ ॥ ततः सा घृतपूरैस्तै–स्तं सतंत्रमभोजयत् ॥ जामाता हि भवेत्प्रायः, श्वश्रूणामतिवल्लभः ! ॥ ८ ॥ तस्मिन् गते च स वणिग्, भोजनाय गृहं गतः ॥ वीक्ष्य स्वाभाविकं भक्त–मेवं पप्रच्छ कामिनीम् ! ॥ ९ ॥ मनस्विनि ! कुतो नाथ, घृतपूराः कृतास्त्वया ? ॥ जगाद रमणी स्वामि–न्निर्मितास्तेऽभवन्मया ॥ १० ॥ किन्तु हेतोः कुतोप्यत्रायातोऽस्मद्दुहितुः पतिः ॥ समित्रो घृतपूरैस्तै–र्भोजितो गमनोत्सुकः ! ॥ ११ ॥ तन्निशम्य समुत्पन्न–विषादः स व्यचिन्तयत् ॥ मया परार्थमाभीरी–वराकी वञ्चिता वृथा ! ॥ १२ ॥ तद्विप्रतारणोत्पन्नं, पापमेव मम स्थितम् ॥ घृतपूरास्तु ते जग्धाः, परैरेत्य कुतश्चन ॥ १३ ॥ पापं हि क्रियते मूढैः, स्त्रीपुत्रादिकृते भृशम् ॥ विपाकस्य तु काले त–त्स्वयमेवोपभुज्यते ! ॥ १४ ॥ इति ध्यायन् बहिर्गत्वा, देहचिन्तां विधाय सः ॥ ग्रीष्ममध्याह्नार्कतप्तो, विशश्राम तरोस्तले ॥ १५ ॥ साधुमेकं च भिक्षायै, यान्तं वीक्ष्यैवमब्रवीत् ॥ भगवन्नेहि विश्राम्य, वार्तयन्मामिह

क्षणम् ॥ १६ ॥ मुनिर्ज्ञानी जगौ गम्यं, स्वकार्येण मया ध्रुतम् ॥ विश्रामाय ततो नाहं, गम्यामीह महामते ! ॥ १७ ॥ वणिक् प्रोचेन्यकार्येणा–ऽप्यार्य ! किं कोपि गच्छति ? ॥ यद्भवद्भिः स्वकार्येण, मया गम्यमितीरितम् ! ॥ १८ ॥ उवाच मुनिरन्यार्थे, क्लिश्यन्ते यद्वयो जनाः ॥ भार्यार्थमेव क्लिश्यमान–स्त्वमेवात्र निदर्शनम् ॥ १९ ॥ इत्येकेनैव वाक्येन, प्रतिबोधमवाप सः ॥ समयार्हं वचः स्वल्प–मपि हि स्यान्महाफलम् ! ॥ २० ॥ ततः पूज्याः क्व तिष्ठन्तीत्यपृच्छत्तं मुनिं वणिक् ॥ जगाद यतिरुद्याने, तिष्ठाम्यहमितः स्थिते ॥ २१ ॥ निर्ग्रन्थोऽन्न पुरे गत्वा, प्रासप्रासुकभोजनः ॥ उद्यानेगात्कृताहारः, स्वाध्यायं च व्यधात्सुधीः ॥ २२ ॥ वेलानुगाम्यतो ज्ञात्वा, कृताहारं तपोधनम् ॥ गत्वा तदन्तिके श्रौषी–ज्जैनं धर्मं स नैगमः ॥ २३ ॥ बन्धूनापृच्छ्य दीक्षार्थं, यावद्यास्याम्यहं विभो ! ॥ तावत्पूज्यैरिह स्थेय–मित्यूचे च विरक्तधीः ॥ २४ ॥ गृहे च गत्वा स्वजनान्, वार्तां चेति जगाद सः ॥ इह व्यापारतो लाभः, स्वल्प एव प्रजायते ॥ २५ ॥ करिष्ये देशवाणिज्यं, प्राज्यलाभकृते ततः ॥ तत्र स्यात्सार्थवाहेन, विदेशे द्वौ च ताविह ॥ २६ ॥ तत्रैकः स्वधनं दत्त्वा, नयते पुर्मीहितम् ॥ तत्र चोपार्जिते वित्ते, भागं गृह्णाति न स्वयम् ॥ २७ ॥ द्वितीयस्तु निज वित्तं, प्रदत्ते नैव किञ्चन ॥ पूर्वार्जितं च सकलं, सेवितः सन् विलुम्पति ॥ २८ ॥ तद्ब्रूत सार्थनाथेन, केन साकं व्रजाम्यहम् ? ॥ स्वजनाः प्रोचिरे यातु, प्रथमेन समं भवान् ॥ २९ ॥ ततः स बन्धुभिस्सत्रा, तत्रोद्याने द्रुतं ययौ ॥ क्व सार्थवाह इति तैः, पृष्टश्चैवमवोचत ॥ ३० ॥ स्थितः शिक्षेद्विरुक्षाधः, साधुरेष गुणोदधिः ॥ सिद्धिपुर्याः सार्थवाहो, दत्त्वा धर्मधनं निजम् ॥ ३१ ॥ व्यापारं कारयत्यंगं, न च गृह्णात्युपार्जिते ॥ तद्नेन समं मुक्ति–पुरीं यास्यामि कामिताम् ॥ ३२ ॥ [ युग्मम् ] सार्थेशोऽन्यस्तु विज्ञेयो, जायादिस्वजनात्मकः ॥ स हि धर्मधनं प्राच्यं, हन्ति दत्ते न च स्वतः ॥ ३३ ॥ किञ्च युष्माभिरेवोक्तं, यदाद्येन समं व्रज ॥ तन्मुक्त्वा बन्धुसम्बन्धं, साधुमेनं श्रयाम्यहम् ॥ ३४ ॥ इत्युदीर्य स वणिग्मुनिपार्श्वे, बन्धुमोहमपहाय महात्मा ॥ स्वीचकार मुनिधर्ममुदारं, सौख्यमत्र च परत्र च लेभे ॥ ३५ ॥ इति बन्धुमोहापोहे वणिक्कथा ॥ यथा चायं वणिक् स्वजनस्वरूपं भावयन् धर्मं प्रतिपन्नस्तथान्यैरपि दक्षैर्येतितव्यमिति सूत्रार्थः ॥ ४ ॥ इत्थं तावत्स्वकृतकर्मणां बन्धुभ्यो न मुक्तिरित्युक्तं, अधुना तु द्रव्यमेव तन्मुक्तये भावीति कस्याप्याशयः स्यादत आह—

मूलम्—वित्तेण ताणं न लभे पमत्ते, इमम्मि लोए अदुवा परत्था ॥
दीवप्पणट्ठेव अणंतमोहे, नेआउअं दट्ठुमदट्ठुमेव ॥ ५ ॥

व्याख्या—वित्तेन द्रव्येण त्राणं स्वकृतकर्मभ्यो रक्षणं न लभते न प्राप्नोति, प्रमत्तो मद्यादिप्रमादवशं गतः, क्वेत्याह–'इमम्मित्ति' अस्मिन्ननुभूयमाने लोके जन्मनि, 'अदुवत्ति' अथवा परत्रेति परभवे । यथोक्तमिह लोके इति, तत्र पुरोहितपुत्रोदाहरणम्, तत्र चायं सम्प्रदायः— तथा हि नगरे क्वापि, भूपः कुत्रचिदुत्सवे ॥ बहिर्निर्यातिं शुद्धान्ते, प्रोच्चैरित्युदघोषयत् ॥ १ ॥ सर्वैरपि नरैः सद्यो, निर्गन्तव्यं बहिः पुरात् ॥ न निर्यास्यति यस्तं तु, निग्रहीष्यति भूपतिः ॥ २ ॥ तदाकर्ण्य नराः सर्वे, निर्ययुस्त्वरितं पुरात् ॥ राज्ञामाज्ञामनुल्लंध्यां, सुधीरुल्लंघते हि कः ? ॥ ३ ॥ तदाचैको राजमित्रं, पुरोहितसुतो युवा ॥ न निर्ययौ पुराद्वार–वधूधामनि संस्थितः ॥ ४ ॥ कथञ्चित्तं च विज्ञाय, जगृहुर्नृपपूरुषाः ॥ तेभ्यः किञ्चिद्वितीर्यात्मा, न तु तेन व्यमोच्यत ॥ ५ ॥ किन्तु राज्ञो वयस्योह–मिति दर्पात्स तैः समम् ॥ चक्रे विवादं दर्पो हि, स्यादन्धकरणो नृणाम् ! ॥ ६ ॥ ततस्तं पार्थिवोपान्ते, निन्यिरे नृपपूरुषाः ॥ राज्ञाप्याज्ञाभङ्गकारी–त्यादिष्टो वध्य एव सः ! ॥ ७ ॥ पुरोहितस्तदाकर्ण्यो–पेत्योर्वीशमदोवदत् ॥ स्वामिन् ! ददामि सर्वस्वं, तद्विमुञ्चत मे सुतम् ॥ ८ ॥ पुरोहितेनेति धनेन भूपो, निमंत्र्यमाणोऽपि न तं मुमोच ॥ ततः सशूलामधिरोपितोऽन्तं, जगाम दीनः शरणेन हीनः ! ॥ ९ ॥ धनं न त्राणायेत्यर्थे पुरोहितसुतकथा ॥ एवमन्येपि वित्तेन त्राणमत्रैव तावन्न लभन्ते आस्तामन्यजन्मनि, तन्मूर्च्छावतः पुनरधिकं दोषमाह–'दीवेत्यादि' तत्र 'दीवप्पणट्ठत्ति' प्राकृतत्वात्प्रनष्टदीप इव, विगतप्रकाशदीप इव, अनन्तस्तद्भव एव प्रायस्तस्यानुपरमात् मोहो मिथ्याज्ञानमोहरूपो द्रव्यादिमोहात्मको वाऽस्येत्यनन्तमोहः, 'नेआउअंति' निश्चित आयो लाभो न्यायो मुक्तिरित्यर्थः, स प्रयोजनमस्येति नैयायिकस्तं, सम्यग्दर्शनादिरूपं मुक्तिमार्गं, 'दट्ठुंति' अपेर्गम्यत्वाद् दृष्ट्वापि उपलभ्यापि, 'अदट्ठुमेवत्ति' प्राकृतत्वादद्रष्टैव भवति, अत्र चायं सम्प्रदायः—

तथा हि महति क्वापि, भूधरे भूरिकन्दरे ॥ तिग्मांशुकिरणाभेद्य–नीरन्ध्रवनगह्वरे ॥ १ ॥ वह्निमेधांसि चादाय, गृहीतगुरुदीपिकाः ॥ बिलेन विविशुः केपि, धातुवादपरा नराः ॥ २ ॥ [ युग्मम् ] तत्र तेषां प्रमादेन, विध्यातौ

वह्निदीपको ॥ सर्वेषामपि जन्तूनां, प्रमादो हि रिपूयते ! ॥ ३ ॥ ततो गुहातमोजात–मोहास्ते परितोऽभ्रमन् ॥ दृष्टपूर्वं बिलाध्वानं, न पुनर्लेभिरे तदा ॥ ४ ॥ तत्र भ्रमन्तश्च महाविषैस्ते, दष्टा भुजङ्गैर्विषघूर्णिताङ्गाः ॥ कुत्रापि गर्ते पतिताश्च निम्ने, जग्मुः कृतान्तातिथितां वराकाः ! ॥ ५ ॥ इति धातुवादिकथा ॥ यथा चैते प्रदीपदृष्टबिलाध्वानोपि प्रमादप्रनष्टप्रदीपास्तमोविमूढाः सर्पदष्टा गर्ते पतिताश्च तं मार्गं दृष्ट्वाप्यद्रष्टार एव जाताः, एवमन्योऽपि प्राणी कथञ्चित्कर्मक्षयोपशमादेः प्रासात् श्रुतज्ञानदीपान्मुक्तिमार्गं दृष्ट्वापि वित्ताद्यासक्तिप्रमादनष्टश्रुतज्ञानदीपो मिथ्याज्ञानतमोविमूढो लोभाहिदष्टः कुगतिगर्ते पतितश्च तस्याऽद्रष्टैव भवति, तथा च न केवलं स्वतस्त्राणाय वित्तं न भवति किन्तु कथञ्चिल्लब्धं त्राणहेतु सम्यग्दर्शनादिकमप्युपहन्तीति सूत्रार्थः ॥ ५ ॥ एवं वित्तादि न त्राणायेत्युपदर्श्य यत्कर्तव्यं तदाह—

मूलम्—सुत्तेसु आवी पडिबद्धजीवी, न वीससे पंडिअ आसुपण्णे ।
घोरा मुहुत्ता अबलं सरीरं, भारुंडपक्खीव चरप्पमत्तो ॥ ६ ॥

व्याख्या—सुप्तेषु द्रव्यतः शयानेषु, भावतस्तु धर्मं प्रत्यजाग्रत्सु, 'चः' पादपूरणे, 'अपिः' सम्भावने, ततोऽयमर्थः, सुप्तेष्वप्यास्तां जाग्रत्सु, प्रतिबुद्धो द्रव्यतो निद्रारहितो, भावतस्तु यथावस्थितवस्तुज्ञानवान्, जीवतीत्येवं शीलः प्रतिबुद्धजीवी, अयं भावः–द्विधा सुप्तेष्वपि निर्विवेकजनेषु विवेकी न गतानुगतिकतया स्वपिति, किन्तु द्विधापि प्रतिबुद्ध एव यावज्जीवमास्ते, अत्र च द्विधाप्यप्रमत्ततायां 'अगडदत्त' उदाहरणं, तत्र चायं सम्प्रदायः । तथा हि–

अत्रैव भरते पुण्य–पीयूषकमलाकरे ॥ पद्माश्रितं पद्ममिवा–ऽभवच्छङ्खपुरं पुरम् ॥ १ ॥ न्यायान्यायक्षीरनीर–विवेचनविचक्षणः ॥ राजहंसोऽभवत्तत्र, गुणैर्नाम्ना च सुन्दरः ॥ २ ॥ शक्रस्येव शची तस्य, सुलसाख्या महिष्यभूत् ॥ सर्वाङ्गसुभगालोक–नेत्राध्वगसुधाप्रपा ॥ ३ ॥ यथामनोरथं भोगा–नुपभुञ्जानयोस्तयोः ॥ बभूवागडदत्ताह्वो, नन्दनः सुन्दराकृतिः ॥ ४ ॥ पित्रोर्मनोरथैः सार्धं, वर्धमानः क्रमेण सः ॥ प्राप तारुण्यमस्वर्ण–रत्नं सर्वाङ्गभूषणम् ॥ ५ ॥ लोकंपृणस्य तस्योर्वी–दयितस्य सुतोऽपि सः ॥ जनोद्वेगकरो जज्ञे, भानोः पुत्र इवान्तकः ॥ ६ ॥ स हि हिंसाप्रियोऽलीक–वादी धर्मार्थवर्जितः ॥ रममाणोऽन्यरामाभि–र्निःशङ्कं गर्वपर्वतः ॥ ७ ॥ मांसाशी मद्यपो द्यूत–रतिव्यूतो वृतो विटैः ॥ वेश्यावृन्दैरनुगतो–ऽन्वहं तत्राभ्रमत्पुरे ॥ ८ ॥ [ युग्मम् ] ततो विमुक्तमर्यादं, महोन्मादमुदीक्ष्य तम् ॥ व्याकुलाः सकलाः पौरा, भूपायेति व्यजिज्ञपन् ॥ ९ ॥ स्वामिंस्त्वदीयपुत्रेण, षण्ढवत्स्वैरचारिणा ॥ उद्वेजिता वयं भूरि–भुजगेनेव मूषकाः ! ॥ १० ॥ न च वाच्यं मत्सुतो वः, कथमुद्वेजयेदिति ? ॥ क्षीरोदादपि सम्भूतः, कालकूटो न हन्ति किम् ? ॥ ११ ॥ अनाचारा न ये स्वप्ने–ऽप्यभवन् भवतां पुरे ॥ ते सर्वेपि तदाचार्ये–णेवानेन प्रवर्तिताः ! ॥ १२ ॥ न चैवं चेष्टमानस्य, तस्योपेक्षा वरीयसी ॥ दाहाय जायते वह्नि–रिवान्यायो ह्युपेक्षितः ! ॥ १३ ॥ इत्यादिभिर्लोकवाक्यै–राकर्ण्य सुतचेष्टितम् ॥ मर्यादाजलधिर्भूपः, कोपाटोपाददोवदत् ॥ १४ ॥ अरे ! कुमारं वदत, यन्मे देशाद्व्रज द्रुतम् ! ॥ अतः परं तवान्यायं, सहिष्ये न हि सर्वथा ! ॥ १५ ॥ पुत्रोप्यन्यायकृन्न्याय–तत्परैः परिहीयते ॥ न हि कर्णापहं स्वर्णं, केनापि परिधीयते ! ॥ १६ ॥ इदञ्च वचनं राज्ञो, जनश्रुत्या निशम्य सः ॥ खड्गपाणिरहङ्कारा–त्कुमारो निरगाद्बहिः ॥ १७ ॥ उलंघ्याद्रिसरिद्ग्राम–पुरारण्यानि भूरिशः ॥ गङ्गाजलाप्लुताभ्यर्णां, पुरीं वाराणसीं ययौ ॥ १८ ॥ स चापरिचितत्वेन, केनाप्यविहितादरः ॥ बभ्राम विमनास्तत्र, यूथभ्रष्ट इवैणकः ॥ १९ ॥ भ्रमंश्चैवं महात्मानं, शास्त्राकूपारपारगम् ॥ कृपावन्तं पापभीरुं, गम्भीरमुपकारिणम् ॥ २० ॥ रथाश्वगजशिक्षाश्च, शिक्षयन्तं नृपाङ्गजान् ॥ क्वचित्पवनचण्डाख्यं, कलाचार्यं स दृष्टवान् ॥ २१ ॥ [ युग्मम् ] तं च प्रेक्ष्य कुमारोन्त–रविन्दत परां मुदम् ॥ निर्वापयन्ति सन्तो हि, दर्शनेनापि चन्द्रवत् ॥ २२ ॥ अमुं कलाचार्यरविं, प्रतिभाभानुभासुरम् ॥ श्रये तमोपनोदार्थ–मिति चान्तरचिन्तयत् ॥ २३ ॥ तत्पादकमले नत्वो–पाविशच्च तदन्तिके ॥ कुतस्त्वमागा इति तं, कलाचार्योऽपि पृष्टवान् ॥ २४ ॥ एकान्तेऽथ तमाहूय, कुमारश्चरितं निजम् ॥ जगाद सकलं सत्य–मित्यूचे च कृताञ्जलिः॥२५॥स्वामिन् ! दुर्मतिना क्रीडा–रतिना मयका पुरा ॥ कलाभ्यासः कृतो नास्ति, नास्तिकेन दमो यथा ! ॥ २६ ॥ चिकीर्षामि कलाभ्यासं, पूज्यानामन्तिके ततः ॥ निष्कलो हि पुमान् विश्वे, पशोरप्यतिरिच्यते॥२७॥ततोऽलपत्कलाचार्यः, परोपकृतिकर्मठः ॥ वत्स ! मत्सदने स्थित्वा, कलाभ्यासं कुरुष्व हे ! ॥ २८ ॥ किन्तु त्वया स्ववंशादि–प्रकाश्यं नैव कस्यचित् ॥ इहत्यभूपत्वत्पित्रो–र्नास्ति तुष्टिर्मिथो

मतः ? ॥ २९ ॥ कुमारोऽपि वचस्तस्य, तत्तथा प्रत्यपद्यत ॥ ततस्तं सार्थमादाय, निजं धाम जगाम सः ॥ ३० ॥ भ्रातृव्योऽयं ममायात, इति पत्न्यै जगाद च ॥ जननीमिव तां भक्त्या, कुमारोप्यनमत्ततः ॥ ३१ ॥ ततः सा स्नपयित्वा तं, भोजयामास सादरम् ॥ कलाचार्योप्यदात्तस्मै, वस्त्राण्याभरणानि च ॥ ३२ ॥ इदं मदीयं तुरग—सदनस्यन्दनादिकम् ॥ स्वकीयं भवता ज्ञेयं, स्थेयं चात्रेत्युवाच च ॥ ३३ ॥ ततः कुमारः सन्तुष्ट—चेतास्तस्य गृहे वसन् ॥ प्राच्या विसृज्य दुश्चेष्टाः, कलाभ्यासपरोभवत् ॥ ३४ ॥ विनयामृतवान् लोक—कैरवाणि प्रमोदयन् ॥ सोऽग्रहीदल्पकालेन, चन्द्रवत्सकलाः कलाः ॥ ३५ ॥ मा विसरन्त्विमा भूरि—भाग्यैर्लब्धा ममेति सः ॥ कलापरिश्रमं चक्रे, गृहोद्यानगतोन्वहम् ! ॥ ३६ ॥ तस्योद्यानस्य पार्श्वे च, चारुवातायनाञ्चितम् ॥ अभूद्विशालमुत्तुङ्गं, श्रेष्ठस्य श्रेष्ठिनो गृहम् ॥ ३७ ॥ तत्र चासीत्सुता तस्य, नाम्ना मदनमंजरी ॥ सर्ववधूगर्वसर्वस्व—सर्वङ्कषपपुर्लता ॥ ३८ ॥ सा च नित्यं गवाक्षस्था, तं ददर्श नृपाङ्गजम् ॥ प्राक्षिपत्तं प्रतिप्रेम्णा, पत्रपुष्पफलादि च ॥ ३९ ॥ राजाङ्गजस्तु नो सम्यक्, तां मृगाक्षीमुदैक्षत ॥ विद्याग्रहणलोभेन, गुरोराशङ्कया तथा ॥ ४० ॥ अन्यदा मदनोन्माद—विवशा सा वशा द्रुतम् ॥ जघानाशोकगुच्छेन, तं कलाभ्यासतत्परम् ॥ ४१ ॥ तदा त्वगडदत्तस्तां, सविशेषं निरैक्षत ॥ नित्यं नितम्बिनीमक्षैः कस्य वा स्यान्मनो दृढम् ? ॥ ४२ ॥ सम्पूर्णचन्द्रवदनां, विनिद्राम्भोजलोचनाम् ॥ स्वर्णकुम्भाभवक्षोजां, पल्लवाताम्रपाणिकाम् ॥ ४३ ॥ प्रादुर्भूतैर्बहिर्मूर्तै—रनुरागलवैरिव ॥ किङ्केलिपल्लवैश्छन्नां, मूर्तामिव वनश्रियम् ॥ ४४ ॥ लिप्तां स्वर्णद्रवेणेव, पीयूषेणेव निर्मिताम् ॥ तां वीक्ष्य विस्मितश्चित्ते, कुमारो ध्यातवानिति ॥ ४५ ॥ [ त्रिभिर्विशेषकम् ] किमियं कमला नाग—कनी देवाङ्गनाऽथवा ॥ विद्याधरी वा मत्पुण्यैः, प्रत्यक्षा वा सरस्वती ? ॥ ४६ ॥ ध्यात्वेत्यूचे च तां सुभ्रु !, काऽसि त्वं कस्य वा सुता ? ॥ मां कलाभ्यासरक्तञ्च, परिमोहयसे कुतः ? ॥ ४७ ॥ सानन्दा सा ततः प्रोचे, नाम्ना मदनमंजरी ॥ बन्धुदत्ताभिधश्रेष्ठि—मुख्यस्य तनयाऽस्म्यहम् ॥ ४८ ॥ इहैव हि पुरे यूना, केनाप्यस्मि विवाहिता ॥ इदं तु मन्दिरं विद्धि, मत्पितुर्गुणमन्दिरम् ॥ ४९ ॥ त्वां च दृष्ट्वा जगज्जैत्र—रूपं चित्तारुभास्करम् ॥ जातास्म्येषा महाभाग !, त्वदेकायत्तजीविता ॥ ५० ॥ मारधिक्काररूपस्त्वं, यतःप्रभृति वीक्षितः ॥ ततःप्रभृति मामुच्चै—र्बाधते घस्मरः स्मरः ! ॥ ५१ ॥ कामदाघज्वरोच्छित्त्यै, नित्यं त्वद्दर्शनामृतम् ॥ पिबामि स तु तेनापि, वृद्धिमेव प्रयात्यहो ! ॥ ५२ ॥ अमृतस्यापि तन्नून—मसाध्योऽसौ महाज्वरः ॥ नो चेत्तद्भोजना देवाः, सन्ताप्यन्तेऽमुना कथम् ? ॥ ५३ ॥ त्वत्सङ्गमैकगोशीर्ष—साध्योऽयमथवा ज्वरः ॥ परःशतैरपि परै—र्हीयते भेषजैः कथम् ? ॥ ५४ ॥ तद्योपज्ञोपचारं मे, न करिष्यति चेद्भवान् ॥ तदावश्यमयं जन्तुः, परलोकं गमिष्यति ! ॥ ५५ ॥ यथा निर्वापिते नेत्रे, दर्शनेन श्रुती गिरा ॥ तथा निर्वापय स्वाङ्ग—सङ्गमेनाङ्गमप्यदः ॥ ५६ ॥ इति तद्वाक्यमाकर्ण्य, कुमारोन्तरचिन्तयत् ॥ नूनं कामानलप्लुष्टा, प्राप्नुयात्प्रान्तमप्यसौ ॥ ५७ ॥ "प्राणिनां हि सकामानां, शास्त्रे प्रोक्ता दशा दश ॥ तत्राद्यायां भवेच्चिन्ता—ऽपरस्यां सङ्गमस्पृहा ॥ ५८ ॥ तृतीयायां तु निःश्वास—श्चतुर्थ्यां तु स्मरज्वरः ॥ देहे दाहश्च पञ्चम्यां, षष्ठ्यां स्यादभोजनारुचिः ॥ ५९ ॥ सप्तम्यां तु भवेन्मूर्छा—ऽष्टम्यामुन्माद उल्बणः ॥ नवम्यां प्राणसन्देहो, दशम्यां प्राणविच्युतिः ॥ ६० ॥" तदसौ सुन्दरी मास्म, म्रियतां मद्वियोगतः ॥ ध्यात्वेत्यूचे कुमारस्तां, गिरा पीयूषकल्पया ॥ ६१ ॥ मृगाक्षि ! सुन्दराख्यस्य, राज्ञः शङ्खपुरेशितुः ॥ प्रथमं नन्दनं नाम्ना—ऽगडदत्तमवेहि माम् ॥ ६२ ॥ कलाचार्यान्तिके कर्तुं, कलाभ्यासमिहागमम् ॥ त्वत्सेवने तु नायान्ति, कला रुष्टा इवाङ्गनाः ॥ ६३ ॥ तदुत्सुकोऽपि नेदानीं, त्वया सङ्गन्तुमुत्सहे ॥ इतो व्रजंस्तु हृत्वा त्वां, गमिष्यामि न संशयः ॥ ६४ ॥ इत्याद्युक्त्वा कथञ्चित्तां, स्वस्थीकृत्य नृपाङ्गजः ॥ जगाम गेहमुद्याना—त्तद्रूपाक्षिप्तमानसः ॥ ६५ ॥ अन्यदा भूपभूरश्वा—रूढो राजपथे व्रजन् ॥ तुमुलं रोदसीकुक्षि—म्भरिं श्रुत्वेत्यचिन्तयत् ॥ ६६ ॥ किं चुक्षोभ पयोराशी—र्जज्वाल ज्वलनोऽथवा ॥ वैरिसैन्यमुतायातं, तडिद्वा पतिता क्वचित् ! ॥ ६७ ॥ ध्यायन्नेवं ददर्शैकं, कुमारो मत्तदन्तिनम् ॥ मूलादुन्मूलितालानं, पर्यटन्तमितस्ततः ॥ ६८ ॥ निषादिना परित्यक्तः, कुशिष्य इव सूरिणा ॥ महाबलैः पादपातै—र्न्यञ्चयन्निव मेदिनीम् ॥ ६९ ॥ मारयन् पशुमर्त्यादीन्, गृहहट्टादि पातयन् ॥ सोऽपि व्यालः क्षणात्काल, इवाभ्यागान्नृपाङ्गजम् ॥ ७० ॥ [ युग्मम् ] तदा च लोकाः प्राकारा—गारादेरुपरि स्थिताः ॥ मुञ्च मुञ्च व्यालमार्ग—मिति राजाङ्गजं जगुः ॥ ७१ ॥ कुमारस्तु हयं हित्वा, तूर्णमाह्वास्त हस्तिनम् ॥ ततस्तं प्रति मत्तेभो, दधावे क्रोधविह्वलः ॥ ७२ ॥ उत्तरीयं पुरस्तस्य, कुमारः प्राक्षिपत्ततः ॥ दन्तप्रहारांस्तत्रादा—द्रोषान्धः सिन्धुरस्तु सः ॥ ७३ ॥ पृष्ठे गत्वा

कुमारोऽथ, गाढमुष्ट्या जघान तम् ॥ अवलिष्ट ततस्तूर्णं, कुमारमभिकुञ्जरः ॥ ७४ ॥ तत्पृष्ठस्थः स्वयं भ्राम्यन्, प्रह-रंस्तं च मुष्टिभिः ॥ चक्रभ्रमेणाभ्रमयत्, कुमारस्तु द्विपं चिरम् ॥ ७५ ॥ भ्रामं भ्रामं च निर्विण्णं, तं गजं सुलसा-ङ्गजः ॥ आरुरोह महासत्वः, पारीन्द्र इव पर्वतम् ॥ ७६ ॥ वशीकृतद्विपं तं च, वीक्ष्य सौधोपरि स्थितः ॥ भूपो भुवनपालाख्यः, प्राज्यं विस्मयमानशे ॥ ७७ ॥ सूर्याचन्द्रमसौ तेजः—सौम्यत्वाभ्यां जयन्निव ॥ कुमारः कोयमि-त्युर्वी—नाथोऽपृच्छच्च वेत्रिणम् ॥ ७८ ॥ वेत्री प्रोचे प्रभोऽमुष्य, वेद्मि नाहं कुलादिकम् ॥ पठन् किन्तु कलाचार्य—पार्श्वे दृष्टोस्त्ययं मया ॥ ७९ ॥ ततः पृष्टः कलाचार्यैः, समाकार्य महीभृता ॥ समभ्यर्थ्याभयं तस्य, वृत्तान्तं सर्वमब्रवीत् ॥ ८० ॥ ततस्तुष्टस्तमाह्वातुं, वेत्रिणं प्राहिणोन्नृपः ॥ रिपोरपि गुणान् दृष्ट्वा, गुणरागी हि मोदते ! ॥ ८१ ॥ तेनाहूतः कुमारोऽपि, बद्ध्वालाने मतङ्गजम् ॥ साशङ्कः क्ष्मापतेः पार्श्वे, ययौ लोकैः कृतस्तुतिः ॥ ८२ ॥ यावन्ननाम पञ्चाङ्ग—प्रणामेन स पार्थिवम् ॥ तावदालिङ्ग्य भूपस्त—मुपावेशयदासने ॥ ८३ ॥ तं च पश्यन्नृपो दध्यौ, पुरुषो ह्ययमुत्तमः ॥ एतादृशो भवेदस्मि—न्विनयः कथमन्यथा ? ॥ ८४ ॥ यथा नमन्ति पाथोभिः, पाथोदाः फलदाः फलैः ॥ नमन्ति विनयेनैव, तद्वदुत्तमपूरुषाः ॥ ८५ ॥ ध्यात्वेत्यादि नृपः प्रेम्णा, ताम्बूलादि समर्प्य च ॥ तमित्य-पृच्छद्दक्षत्व—मस्ति कासु कलासु ते ? ॥ ८६ ॥ ततो व्रीडावशात्किञ्चि—दजल्पति नृपाङ्गजे ॥ गुरुः प्रोचेऽस्ति दक्षो-ऽसौ, कलासु सकलास्वपि ॥ ८७ ॥ किन्तु सन्तो न भाषन्ते, सतोपि स्वगुणान् ह्रिया ॥ इत्यसौ मौनमाधत्ते, कुमारो गुणसेवधिः ॥ ८८ ॥ इति श्रुत्वा गुणास्तस्य, राज्ञि रोमाञ्चमञ्चति ॥ उपदापाणयः पौरा—स्तत्राजग्मुः सह-स्रशः ॥ ८९ ॥ ते मुक्त्वा प्राभृतं नत्वा, नृपं चोपाविशन् पुरः ॥ प्राभृतं तत्तु भूजानिः, कुमाराय ददौ मुदा ॥ ९० ॥ अथ ते नागरा इत्थं, नरनाथं व्यजिज्ञपन् ॥ स्वामिन्नियं पुरी पूर्व—मासीत्स्वर्गपुरीसमा ॥ ९१ ॥ सा तस्करेण केना-पि, मुष्यमाणा प्रतिक्षणम् ॥ जातास्ति रोरसदन—प्राया तद्रक्ष रक्ष ताम् ॥ ९२ ॥ ततोऽब्रवीत्पुरारक्ष— मेवं क्रुद्धो नराधिपः ॥ रे ! सत्यपि त्वयि कथं, मुष्यते दस्युना पुरी ? ॥ ९३ ॥ पुरारक्षोऽवदद्देव !, भूयांसो दिवसा गताः ॥ ममान्वेषयतश्चौरं, न तु प्राप्तं करोमि किम् ? ॥ ९४ ॥ अत्रान्तरे नृपं नत्वा—ऽगडदत्तो व्यजिज्ञपत् ॥ समादिशत मां स्वामिन् !, यथा गृह्णामि तस्करम् ॥ ९५ ॥ [1]सप्तभिर्वासरैश्चौरा—ऽलाभे त्वग्नौ विशाम्यहम् ॥ ततोतिविस्मितः क्ष्मापः, स्माह साधय कामितम् ! ॥ ९६ ॥ ततोभिनम्य भूजानि—मनुद्विग्नमनाः स्वयम् ॥ बभ्राम भूपभूश्चौर— वी-क्षायै परितः पुरीम् ॥ ९७ ॥ मठप्रपादेवकुल—वेश्याशौण्डिकवेश्मसु ॥ मालिकद्यूतकारादि—स्थानेषु विपिनेषु च ॥ ९८ ॥ प्रत्यहं कुर्वतस्तस्य, परिमोषिगवेषणम् ॥ षड् दिनानि ययुः किन्तु, नाससाद स तं क्वचित् ॥ ९९ ॥ [युग्मम्] सप्तमेऽह्नि कुमारोऽथ, चिन्ता चान्तो व्यचिन्तयत् ॥ मुधा सन्धां व्यधामेना—महं जीवितनाशिनीम् ! ॥ १०० ॥ तत्तामादाय वामाक्षीं, क्वचिदन्यत्र याम्यहम् ॥ यद्वा स्वयं प्रतिश्रुत्य, करोमि कथमन्यथा ? ॥ १०१ ॥ प्रतिज्ञापालनं

---

१ मध्येसप्तदिन चौरा—लाभे त्वग्नौ विशाम्यहम् ॥ इति 'ग' संज्ञकपुस्तके ॥

वीर— नराणां हि महाव्रतम् ॥ शिरश्छेदेऽपि तद्वीरः, स्वां प्रतिज्ञां न मुञ्चति ! ॥ १०२ ॥ ततः प्रतिज्ञानिर्वाहः, कार्य एव मयाधुना ॥ ध्यात्वेत्यादि कुमारोगा—दपराह्णे पुराद्बहिः ! ॥ १०३ ॥ अधो रसालसालस्य, कस्यचित्संस्थितोऽथ सः ॥ विद्याभ्रष्टः खेचरेन्द्र इवापश्यद्दिगोखिलाः ॥ १०४ ॥ अत्रान्तरे च तत्रैकः, परिव्राजक आययौ ॥ त्रिदण्डकुण्डि-कामाली, मुण्डमौलिर्महाबलः ॥ १०५ ॥ रक्ताक्षं हस्तिहस्ताभ—हस्तं कर्कशकुन्तलम् ॥ रौद्राकारं दीर्घजङ्घ—मजिनोद्ध-द्धपिण्डिकम् ॥ १०६ ॥ तं वीक्ष्य क्ष्मापभूर्नून—ममीभिर्देहलक्षणैः ॥ तस्करोयमिति ध्यायन्, परिव्राजेत्यभाषत ॥ १०७ ॥ [ युग्मम् ] कोसि त्वं हेतुना केन, चिन्ता चान्तश्च दृश्यसे ? ॥ ततः कुमारो धिषणा—धिपणस्तमदोवदत् ॥ १०८ ॥ दारिद्र्यविद्रुतः शून्य—स्वान्तः स्वामिन् ! भ्रमाम्यहम् ॥ परं पराभवस्थानं, विशां दारिद्र्यमेव हि ! ॥ १०९ ॥ अद्य छिनद्मि ते दौःस्थ्य—मित्यूचेऽथ त्रिदण्डिकः ॥ सोप्यूचे सर्वमिष्टं मे, भावि युष्मत्प्रसादतः ! ॥ ११० ॥ तदा चोरुनभोमार्गो—ल्लंघ-नोत्थश्रमादिव ॥ पश्चिमाम्भोनिधौ तूर्णं, मज्जति स्म नभोमणिः ॥ १११ ॥ ततोऽर्ककान्तविश्लेषो—त्पन्नशोकभरैरिव ॥ दिगङ्गनासु मालिन्य—मुपेतासु तमोभरैः ॥ ११२ ॥ कोशात्कृपाणमाकृष्य, बद्ध्वा परिकरं च सः ॥ प्रोचे कुमारमेह्येहि, यथा कुर्वे तवेहितम् ! ॥ ११३ ॥ [ युग्मम् ] इत्युदीर्य समं तेन, गत्वा पुर्यां स तस्करः ॥ क्वचिदिभ्यगृहेऽकार्षी—त्क्षात्रं श्रीवत्ससंस्थितम् ॥ ११४ ॥ तेन क्षात्रेण गेहान्तः, प्रविश्य निभृतक्रमम् ॥ पेटाः पाटच्चरो वह्वी, वित्तापूर्णाः समाकृषत् ॥ ११५ ॥ तद्रक्षायै कुमारं च, तत्र संस्थाप्य तस्करः ॥ प्रलोभ्य दुःस्थानानिन्ये, सुसान्देवकुलादिषु

॥ ११६ ॥ पेटाश्चोत्पाट्य तैः शेषं, कुमारेणात्मना तथा ॥ नगर्या निर्ययौ केना–ऽप्यदृष्टः स पिशाचवत् ॥ ११७ ॥
तदा च भूपभूर्दध्यौ, हन्म्येनमसिनाऽधुना ॥ यद्वा मम कुलीनस्य छलं कर्तुं न युज्यते ! ॥ ११८ ॥ किञ्च नित्यं
कृते कस्य, मुष्णाति नगरीमयम् ॥ गेहे चास्य कियद्वित्त–मिति च ज्ञेयमस्ति मे ॥ ११९ ॥ तन्नायमधुना मार्य, इति
ध्यायन्नृपाङ्गजः ॥ तमन्वयासीद्दक्षो हि, नौत्सुक्यं कुरुते क्वचित् ॥ १२० ॥ सर्वेष्वथ पुरोद्यान–मागतेषु मलिम्लुचः ॥
ऊचे कुमारमद्यापि, बहुका विद्यते निशा ॥ १२१ ॥ क्षणमात्रमिहोद्याने, वत्स ! विश्रम्यतां ततः ॥ विनीयते यथा
सर्वै–र्वीवधोद्वहनश्रमः ॥ १२२ ॥ आमेत्युक्त्वा ततो राज–पुत्रो वृक्षस्य कस्यचित् ॥ मूलाद्दक्षिणतस्तस्थौ, परि-
मोषी तु वामतः ॥ १२३ ॥ अन्योन्यं हन्तुमिच्छन्तौ, विजेतुं वादिनाविव ॥ अलीकनिद्रया धूर्त–प्रष्ठौ सुषुपतुश्च
तौ ! ॥ १२४ ॥ भारवाहास्तु ते श्रान्त–सुप्ता विश्रब्धचेतसः ॥ तीव्रां तन्द्रामविन्दन्त, तादृशां सुलभा हि सा !
॥ १२५ ॥ उत्थाय चस्तराद्दक्षः, कुमारस्तु शनैः शनैः ॥ कृपाणपाणिरन्यस्य, तरोर्मूलमशिश्रियत् ॥ १२६ ॥ अप्र-
मत्ते श्रमणवत्, कुमारे तत्र संस्थिते ॥ निस्त्रिंशपाणिर्निस्त्रिंशः, समुत्तस्थौ स तस्करः ॥ १२७ ॥ निहत्य भारिका-
स्तांश्च, कुमारं यावदैक्षत ॥ आकृष्टासिः पुरोभूय, तावत्सोऽप्येवमब्रवीत् ॥ १२८ ॥ पुरलुण्टाक रे ! पाप !, विश्वस्त-
जनघातक !॥ चिरं कृतस्य पापस्य, फलमाप्नुहि साम्प्रतम् ! ॥ १२९ ॥ इत्युक्त्वा गच्छतस्तस्य, पादौ खड्गेन सोऽ-
च्छिनत् ॥ छिन्नमूलस्तरुरिवा–पतच्चौरस्ततो भुवि ॥ १३० ॥ प्रोचे चैवं परित्यक्त–जीविताशो नृपाङ्गजम् ॥ अहं
भुजङ्गमाह्वान–श्चौरोऽभूवं महाबलः ॥ १३१ ॥ इह श्मशाने भूम्यन्तः, सदनं मम विद्यते ॥ तत्रास्ति मे स्वसा, 'वीर-
मती' संज्ञा कुमारिका ॥ १३२ ॥ अभिज्ञानाय तदसिं, ममादाय महामते ! ॥ गत्वामुष्य वटस्याधः, शब्दयेस्तां सुलो-
चनाम् ॥ १३३ ॥ मद्भूमिवेश्मनो द्वारे, तया चोद्घाटिते सति ॥ तामुद्वाह्याखिलं द्रव्य–माददीथा मदर्जितम् ॥१३४॥
पश्चात्तु ससुखं तत्र, तिष्ठेरन्यत्र वा व्रजेः ॥ तेनेत्युक्तः कुमारस्तं, वाक्यैराश्वासयञ्छुभैः ॥ १३५ ॥ तस्मिन्मृते तु
तत्खड्गं, लात्वा गत्वा वटान्तिके ॥ शब्दिता तेन सम्भ्रान्ता, सा द्वारमुदघाटयत् ॥ १३६ ॥ तां च दृष्ट्वा जगन्नेत्र–कैर-
वाकरकौमुदीम् ॥ इयं हि स्मरसर्वस्व–मिति दध्यौ नृपात्मजः ॥ १३७ ॥ सौम्य ! कस्त्वं किमर्थं वा–ऽऽयासीरिति
तया च सः ॥ पृष्टोऽवादीद्यथा वृत्तं, ततः सान्तरदूयत ॥ ॥ १३८ ॥ कृतावहित्था प्रोचे च, स्वामिन्नेहि गृहा-
न्तरे ॥ धीरः सोप्यविशत्तत्र, तस्मै साप्यासनं ददौ ॥ १३९ ॥ अथ नाथस्त्वमेवास्य, भूघनस्य धनस्य च ॥ इत्युदी-
र्यैव धूर्ता सा, वासवेश्मोदघाटयत् ॥ १४० ॥ तल्पं च प्रगुणीकृत्य, स्माह विश्रम्यतामिह ॥ अहं तु त्वत्कृते कान्त !,
गोशीर्षद्रवमानये ॥ १४१ ॥ तयेत्युक्तः कुमारोपि, भेजे तल्पमनल्पधीः ॥ तस्यां बहिर्गतायां च, चेतसीति व्यचि-
न्तयत् ॥ १४२ ॥ न्यायशास्त्रे हि विश्वासः, सर्वस्यापि निषिध्यते ॥ विशेषतस्तु नारीणा–मरीणां च विचक्षणैः
॥ १४३ ॥ स्त्रीणां द्विषां वा विश्वासो, विश्वासं जनयेज्जनम् ॥ इयं तु स्त्रीरिपुश्चेति, विश्वासार्हा न सर्वथा ॥ १४४ ॥
ध्यात्वेति तल्पे विन्यस्य, वसनच्छन्नदारुकम् ॥ ततो दूरे तिरोधाय, तस्थौ सुन्दरनन्दनः ॥ १४५ ॥ बहिर्हन्तुमशक्यो यः,
सोऽत्र सुप्तो हनिष्यते ॥ इत्यूर्ध्वं तस्य तल्पस्य, न्यस्ता यंत्रशिलाभवत् ॥ १४६ ॥ तदा च सा शिला दस्यु–स्वस्रा
यंत्रप्रयोगतः ॥ पातिताऽचूर्णयत्तूर्णं, तां शय्यां शरकाण्डवत् ॥१४७॥ ततो मया हतः सुष्ठु, भ्रातृघातीति वादिनीम् ॥
धृत्वा केशेषु तामेव–मवादीत्पार्थिवाङ्गजः ॥ १४८ ॥ कपटैरपि मां हन्तु–मा: ! पापे ! कः प्रभुर्भवेत् ? ॥ शाम्येत्किं
वडवावह्नि–र्घनैरपि घनाघनैः ? ॥ १४९ ॥ इत्युक्त्वा तां सहादाय, भूगेहान्निर्जगाम सः ॥ रूपं निरूप्य रक्तोऽपि,
विरक्तस्तत्कुकर्मणा ॥ १५० ॥ अथ धैर्यनिधेस्तस्य, मुखाब्जमिव वीक्षितुम् ॥ पूर्वाचलशिरोदेश–मारुरोह नभोमणिः
॥ १५१ ॥ भूपाभ्यर्णं ततो गत्वा, निशावृत्तं निवेदयन् ॥ हतो दस्युः स्वसा तस्या–ऽऽनीतेयमिति सोऽब्रवीत्
॥ १५२ ॥ मेदिनीमन्दिरं तच्चा–दीदृशन्मेदिनीपतेः ॥ नृपोपि वित्तं तत्रस्थं, सर्वं तत्स्वामिनामदात् ॥ १५३ ॥
निजाङ्गजाञ्च कमल–सेनाख्यां कमलेक्षणाम् ॥ ददौ भूपभुवे भूप–स्तच्चरित्रैश्चमत्कृतः ॥ १५४ ॥ शतं गजेन्द्रान्
ग्रामांश्च, सहस्रमयुतं हयान् ॥ लक्षं पदातीन्निष्कांश्च, तस्मै प्रयुतमार्पयत् ॥ १५५ ॥ पौरा अपि पुरीदस्यु–हन्तारं
तमपूजयन् ॥ गुणवान् राजमान्यश्च, यद्वा केन न पूज्यते ? ॥ १५६ ॥ ततो भूमीभुजादत्ते, प्रासादे सप्तभूमिके ॥
तस्थौ नृपात्मजश्चित्ते, बिभ्रन्मदनमंजरीम् ॥ १५७ ॥ प्राप्तोऽपि भूपतेः पुत्रीं, लक्ष्मीं कीर्त्तिञ्च भूयसीम् ॥ तां नोद-
तारयच्चित्ता–दहोमोहोऽति दुस्त्यजः !॥१५८॥ अथान्यदा कुमारस्य,स्वसौधे तस्थुषोऽन्तिके ॥ आगात्काचिद्वशा दत्ता-
ऽऽसना चोपविशत्पुरः ॥ १५९ ॥ किमर्थमागतासीति, तेन पृष्टा च साब्रवीत् ? ॥ अहं मदनमंजर्या, प्रेषितास्मि

तवान्तिके ॥ १६० ॥ तयेन्युक्तं च हे कान्त !, मां वियोगाग्नितापिताम् ॥ निजसङ्गमगोशीर्ष-द्रवैर्निर्वापय द्रुतम् ॥ १६१ ॥ अन्यच्च मत्तमातङ्ग-बन्धं तस्करमारणम् ॥ दुष्टस्त्रीदम्भवेदित्वं, नृपनिर्मितपूजनम् ॥ १६२ ॥ लोके च विश्रुतां कीर्तिं, तवाकर्ण्याति विस्मिता ॥ त्वत्सङ्गमोत्सुका प्राणा-नपि कृच्छ्राद्दधाति सा ॥ १६३ ॥ [ युग्मम् ] श्रुत्वेति दत्वा ताम्बूलं, तस्यै भूपात्मजोऽवदत् ॥ भद्रे ! तां ब्रूहि यन्नैव, विधेयोत्सुकता त्वया ! ॥ १६४ ॥ यथा मत्सङ्गमौत्सुक्यं, बाधते त्वां सुलोचने ! ॥ तथा त्वत्सङ्गमौत्सुक्यं, बाढं मामपि बाधते ! ॥ १६५ ॥ प्रस्तावमन्तरा किन्तु, न किञ्चित्क्रियते बुधैः ॥ ततः समयमासाद्य, करिष्यामि समीहितम् ! ॥ १६६ ॥ इत्युक्त्वा सुलसासूनु-र्दूतिकां विससर्ज ताम् ॥ सापि प्रामूमुदत्तस्य, वाक्यैर्मदनमंजरीम् ॥ १६७ ॥ अन्येद्युः करभारूढौ, तत्पितुः सेवकावुभौ ॥ आयातौ तद्गृहे तौ च, दृष्ट्वाऽमोदत भूपभूः ॥ १६८ ॥ तौ चालिङ्ग्य दृढं बाष्प-जलाप्लावितलोचनः ॥ सोप्राक्षीत्कुशलं ? पित्रो-स्ततस्ताविलयवोचताम् ॥ १६९ ॥ पित्रोः श्रेयोस्ति किन्तु त्व-द्विरहाकुलयोस्तयोः ॥ न चेत्त्वद्दर्शनं भावि, तदा तूर्णं मरिष्यतः ! ॥ १७० ॥ सोथ गत्वा नृपं प्रोचे, मत्पितुः सेवकावुभौ ॥ मामाह्वातुमिहायातौ, तत्र तद्गन्तुमुत्सहे ॥ १७१ स्माहोर्वीशः पुनर्देय-मस्माकं दर्शनं त्वया ॥ त्वद्दर्शनेन तृप्ताः स्मः, पीयूषेणेव नो वयम् ॥ १७२ ॥ इत्युदित्वा नृपस्तस्मै, दत्वा चाभरणादिकम् ॥ समं तेन निजां पुत्रीं, प्राहिणोत्सपरिच्छदाम् ॥ १७३ ॥ ततः पुर्या बहि· सेनां, निवेश्य सकलां निजाम् ॥ एकेन स्यन्दनेनास्था-त्पूर्मध्ये भूपभूः स्वयम् ॥१७४॥ यामिन्याः प्रथमे यामे, रहस्तां दूतिकां प्रति ॥ प्राहिणोत्सेवकं चैकं, सोपि गत्वेति तां जगौ ॥ १७५ ॥ सेनां प्रस्थाप्य नृपभू- रथेनैकेन तिष्ठति ॥ कृते मदनमंजर्या-स्तत्तामानय सत्वरम् ॥ १७६ ॥ ततो गत्वा तया क्षिप्रं, प्रोक्ता मदनमंजरी ॥ पार्श्वे भूपभुवो हर्षो-त्फुल्लाङ्गाऽऽगात्सखीयुता ॥ १७७ ॥ सोपि रागामयक्षीण-दाक्ष्यमन्दाक्षलोचनः ॥ स्यन्दनेध्यारोपयत्ता-महो सर्वङ्कषाः स्त्रियः ! ॥ १७८ ॥ सोथ प्रेर्य हयान् पुर्या, निर्यातोऽनीकमागतः ॥ प्रयाणं कारयामास, ढक्कावादनपूर्वकम् ॥ १७९ ॥ गच्छन् प्रयाणैरच्छिन्नै-र्देशमुल्लंघ्य भूभृतः ॥ कुमारः पादपाकीर्णां, प्रापदेकां महाटवीम् ॥ १८० ॥ प्रमद्वराञ्जरान् गर्जा-रवैर्जागरयन्निव ॥ धारासारैर्भुवं सिञ्चं-स्तदा चागाद् घनागमः ॥ १८१ ॥ ऋतौ तत्रापि राट्पुत्रः, पित्रोः सङ्गन्तुमुद्यतः ॥ न तस्थौ क्वापि चक्राङ्ग, इव मानसमन्तरा ॥ १८२ ॥ तत्रारण्ये व्रजतस्य, सैन्यं च बहु भिल्लवान् ॥ रुरोध कोपि भिल्लेशः, स्रोतोवेगमिवाचलः ॥ १८३ ॥ तद्भिल्लैः प्रबलैर्भिन्नं, कुमारस्याबलं बलम् ॥ दिशोदिशं ननाश द्राग्, मेघवृन्दमिवानिलैः ॥ १८४ ॥ सैन्ये नष्टेपि सुलसा-सुतः प्राज्यपराक्रमः ॥ युक्तो मदनमंजर्या, रथेनैकेन तस्थिवान् ॥ १८५ ॥ युध्यमानश्च तद्भिल्ल-बलं प्रबलमप्यलम् ॥ स शरैररुपद्रुद्राव, ध्वान्तमंशुरिवांशुभिः ॥ १८६ ॥ ततो नष्टं निजानीकं, दृष्ट्वा भिल्लप्रभुः स्वयम् ॥ युद्धायाढौकत क्रोध-दष्टोष्ठो निष्ठुरं ब्रुवन् ॥ १८७ ॥ घोरैर्ज्याघातनिर्घोषै-स्त्रासयन्तौ वनेचरान् ॥ पृषत्कैः सततोन्मुक्तैः, कुर्वाणौ व्योम्नि मण्डपम् ॥ १८८ ॥ अन्योन्यमुक्तनाराच-घर्षणोत्पन्नवह्निना ॥ अनभ्रं विद्युदुद्योतं, दर्शयन्तौ मुहुर्मुहुः ॥ १८९ ॥ साश्चर्यं वनदेवीभि-र्वीक्षितौ वीरकुञ्जरौ ॥ ततस्तौ चक्रतुर्बाणा-बाणि तुल्यबलौ चिरम् ॥ १९०॥ [ त्रिभिर्विशेषकम् ] न त्वेकोपि जयं लेभे, ततो दध्यौ नृपात्मजः ॥ जय्योऽसौ नौजसा तस्मा-च्छलेनापि जयाम्यमुम् ॥ १९१ ॥ विमृश्येति धराधीश-सूनुर्मदनमंजरीम् ॥ कारितोदारशृङ्गारां, पुरः स्वस्य न्यवीविशत् ॥ १९२ ॥ तां च प्रेक्ष्य सुरीकल्प-रूपां मोहितमानसम् ॥ कुमारस्तीक्ष्णबाणेन, हृन्मर्मणि जघान तम् ॥ १९३ ॥ ततः स भिल्लभूमीशः, पतितः पृथिवीतले ॥ घातव्यथाकुलोप्येवं, कुमारं प्रत्यभाषत ॥ १९४ ॥ अहं हि स्मरवीरेण, हतपूर्वस्त्वया हतः ॥ तन्मयायं हत इति, स्वयं मास्म कृथा वृथा ॥ १९५ ॥ इत्युदीर्य मृते तस्मिन्, भूपभूः सपरिच्छदम् ॥ प्रेक्षमाणोपि नैक्षिष्ट, नंष्ट्वा क्वापि गतं तदा ॥ १९६ ॥ एकेनैव स्यन्दनेन, ततो गच्छन्नृपाङ्गजः ॥ उल्लंघ्य तामरण्यानी-मेकं गोकुलमासदत् ॥ १९७ ॥ निर्गत्य गोकुलाच्च द्वौ, पुरुषौ तमपृच्छताम् ॥ क्व यास्यतीति स स्माह, यामि शङ्खपुरे ह्यहम् ॥ १९८ ॥ आवामपि त्वया सार्ध-मागच्छावो यदीच्छसि ? ॥ इति ताभ्यां पुनः पृष्टोऽवादीदोमिति भूपभूः ॥ १९९ ॥ रथे चाश्वौ योजयन्तं, तमेवं तावचोचताम् ॥ अस्त्यत्र मार्गे कान्तारं, क्रूरश्वापदसङ्कुलम् ॥ २०० ॥ चौरो दुर्योधनाह्वान-स्तत्र तिष्ठति दुर्जयः ॥ मत्तो हस्ती दृग्विषश्च, व्यालो व्याघ्रश्च दारुणः ॥ २०१ ॥ तदध्वानममुं मुक्त्वा, सौम्य ! गच्छाधुनामुना ॥ सोपद्रवं हि पन्थान-मृजुमप्याश्रयेत कः ? ॥ २०२॥ प्रोचे कुमारोस्मिन्नेव, मार्गे गच्छत निर्भयाः ॥ ससुखं प्रापयिष्यामि, युष्मान् शङ्खपुरे द्रुतम् ॥ २०३ ॥ तच्छ्रुत्वा

तौ नरावन्ये, चाध्वनीना धनान्विताः ॥ चेलुस्तेन समं मीना, इवाब्धिः स्रोतसा सह ॥ २०४ ॥ तदा चैको जटा-जूट-मुकुटाङ्कितमस्तकः ॥ त्रिशूलकुण्डिकाधारी, भस्मोद्धूलितभूघनः ॥ २०५ ॥ महाव्रती समेत्यैव-मुवाच नृपनन्दनम् ॥ पुत्र! शङ्खपुरे देवा-न्नन्तुमेमि त्वया समम् ॥२०६॥ [ युग्मम् ] किन्तु मत्सन्निधौ स्वर्ण-दीनाराः सन्ति केचन ॥ देवानां बलिपूजार्थं, दत्ता धार्मिकपूरुषैः ॥ २०७ ॥ तानादत्स्व यथा मार्गे, व्रजामो निर्भयं वयम् ॥ धने हि निकटस्थे नः, साशङ्कं स्वान्मनो भृशम् ॥ २०८ ॥ इत्युदित्वा कुमाराय, स धनग्रन्थिकां ददौ ॥ आशिषश्च ददत्तस्मै, चचाल सह सार्थिकैः ॥ २०९ ॥ स च गानेन नृत्येन, चेष्टाभिर्गतिभिः स्वरैः ॥ कथाभिर्विविधाभिश्चा-ऽरञ्जयत्पथिकान् पथि ॥ २१० ॥ न तस्य व्यश्वसीद्भिक्षु-वेषस्यापि नृपात्मजः ॥ अविश्वासः श्रियां मूल-मित्यन्तः परिचिन्तयन् ॥ २११ ॥ वाहांश्च वाहयंस्तूर्णं, कान्तारान्तर्जगाम सः ॥ तदा च राजपुत्रादीन्, जटिलः सोऽब्रवीदिदम् ॥ २१२॥ एकं गोकुलमस्त्यत्र, कलगोकुलसङ्कुलम् ॥ वर्षारात्रं तत्र चाहं, गतवर्षे स्थितोऽभवम् ॥ २१३ ॥ तत्रत्यानां बल्लवाना-मत्यर्थं वल्लभोस्म्यहम् ॥ सर्वेषामात्मनां तस्मा-त्तेऽद्य दास्यन्ति भोजनम् ॥ २१४ ॥ गत्वाऽऽगच्छामि तद्याव-त्तावदत्र प्रतीक्षताम्॥ करोमि सफलं जन्म, यथातिथ्यं विधाय वः ॥ २१५ ॥ इत्युक्त्वा स व्रती गत्वा-ऽऽनीय दध्याज्यपायसम् ॥ कुमारमवदत्पुत्र!, कृतार्थय मम श्रमम् ॥ २१६ ॥ प्रत्युत्पन्नमतिः सोऽथ, प्रोचे मौलौ व्यथास्ति मे ॥ ऋषिभोज्यं च नो कल्प्यं, तन्नेदं भोक्ष्यते मया ॥ २१७ ॥ इत्युक्त्वा वारयन्नेत्र-संज्ञया सार्थिकांश्च सः ॥ कुशिष्या इव गुर्वाज्ञां, ते तु तां नैव मेनिरे ॥२१८॥ विषमिश्रं च तद्भोज्यं, भुक्त्वा द्राग् मृत्युमाप्नुवन् ॥ ततोऽधावच्छरान्मुञ्चन्, कुमारं प्रति स व्रती ॥ २१९ ॥ कुमारोऽप्यर्धचन्द्रेण, हत्वा मर्माणि मर्मवित् ॥ पातयामास तं पृथ्व्यां, ततः सोप्येवमब्रवीत् ॥ २२० ॥ अहं दुर्योधनाह्वान-श्चौरः केनाप्यनिर्जितः ॥ त्वयैकेनैव बाणेन, प्रापितः प्राणसंशयम् ॥२२१॥ त्वद्वीर्यं वीक्ष्य तुष्टोन्त-र्वच्मि ते सूनृतं वचः ॥ वामतोऽस्माद्गिरेर्मध्ये, नद्योरस्ति सुरालयः ॥ २२२ ॥ तस्य पश्चिमभागे च, सज्जिता विद्यते शिला ॥ तां प्रेर्य प्रविशेर्वाम-भागस्थे भूमिधामनि ॥ २२३ ॥ तत्रास्ति रूपलावण्य-पुण्याङ्गी नवयौवना ॥ नाम्ना जयश्रीः पत्नी मे, द्रविणं चातिपुष्कलम् ॥ २२४ ॥ तत्सर्वमात्मसात्कुर्या, दद्याश्चाग्निं मृतस्य मे ॥ वदन्नेवं क्षणाद्दस्यु-र्दीर्घनिद्रामवाप सः ॥२२५॥ ततो दारूणि संमील्य, तं प्रज्वाल्य महीशसूः ॥ रथमारुह्य तत्प्रोक्ते, ययौ देवकुले द्रुतम् ॥ २२६ ॥ शिलां चोद्घाट्य तेनोच्चैः, शब्दिता दस्युसुन्दरी ॥ मध्येसौधं समेहीति, समेत्य तमभाषत ॥ २२७ ॥ तद्रूपं च जगज्जैत्रं, कुमारो यावदैक्षत ॥ तं जघानापहस्तेन, तावन्मदनमंजरी ॥ २२८ ॥ इति चाख्यन्मया सख्यः, पितरौ स्वजनास्तथा ॥ त्यक्तास्तव कृते त्वञ्चा-ऽत्रपः कामयसे पराम् ॥ २२९ ॥ ततोऽसौ मा भवत्वस्या, विषाद इति चिन्तयन् ॥ विहाय वित्तयुक्तां तां, रथारूढः पुरोऽचलत् ॥ २३० ॥ लङ्घमानश्च गहनं, गहनं स्त्रीचरित्रवत् ॥ पुलिन्दवृन्दमुत्रस्त-मपश्यन्नश्यदुच्चकैः ॥ २३१ ॥ किमस्ति मत्तहस्तीति, ध्यायंश्चायं व्यलोकयत् ॥ यावत्सर्वादिशस्ताव-द्ददर्शैकं मतङ्गजम् ॥ २३२ ॥ उदस्तेन स्वहस्तेन, पातयन्तं पतत्रिणः ॥ मूलादप्युन्मूलयन्तं, पादपान् सिन्धुवेगवत् ॥ २३३ ॥ मदाम्बुनिर्झरक्लिन्नं, सितं सितमरीचिवत् ॥ उग्रदन्तं महापादं, कैलासमिव जङ्गमम्॥२३४॥ तं मत्तानेकपं प्रेक्ष्य, त्रस्तां मदनमंजरीम् ॥ आश्वास्योदतरत्तूर्णं, स्यन्दनान्नृपनन्दनः ॥ २३५ ॥ [ त्रिभिर्विशेषकम् ] ययौ च संमुखं तस्य, धैर्याधरितभूधरः ॥ तं च वञ्चयितुं न्यास्थ-दुत्तरीयं तदग्रतः ॥ २३६ ॥ प्रहर्तुं तत्र दन्ताभ्यां, नीचैर्जातं च तं गजम् ॥ उत्प्लुत्यारोहदत्यर्थं, खेदयित्वा मुमोच च ॥ २३७ ॥ रथमारुह्य गच्छंश्च, पुरो व्याघ्रं विलोक्य सः ॥ हित्वा रथमगात्तस्य, संमुखं विकसन्मुखः ॥ २३८ ॥ तमायान्तं प्रति व्याघ्रः, क्रोधोद्धुषितकेसरः ॥ पुच्छमाच्छोटयन् व्यात्त-वक्त्रो यावदधावत ॥ २३९ ॥ तावद्वामकरं वस्त्रा-वेष्टितं न्यस्य तन्मुखे ॥ जघानापरपाणिस्थ-कृपाण्या निष्कृपः स तम् ॥ २४० ॥ पुनः शताङ्गमारुह्य, पुरो गच्छन्नतुच्छधीः ॥ दूराद्ध्वनि निःशूकं, दन्दशूकं ददर्श सः ॥ २४१ ॥ अत्युत्कटस्फटाटोपं, भासुरं मणिकान्तिभिः ॥ धमनीस्फारफूत्कारं, प्रचण्डं यमदण्डवत् ॥२४२॥ लोहिताक्षं कालकान्ति-मायान्तं वीक्ष्य तं भयात् ॥ कम्प्राङ्गी व्यलगत्पत्युः, कण्ठे मदनमंजरी ॥ २४३ ॥ [ युग्मम् ] भुजङ्गाद्भीरु! मा भैषी-रित्युक्त्वा भूपभूस्ततः ॥ तन्नेत्रगतिवक्राणि, स्तम्भयामास विद्यया ॥ २४४ ॥ आहितुण्डिकवद्भूरिः, क्रीडयित्वा मुमोच तम् ॥ इत्थं कथञ्चिदुलंघ्या-ऽरण्यं शङ्खपुरे ययौ ॥२४५॥ यच्च तस्य बलं भिल्ल-बलान्नष्टमभूत्पुरा ॥ तदप्यन्येन मार्गेणा-ऽऽययौ भूपभुवोन्तिके ॥ २४६ ॥ तं चायान्तं समाकर्ण्य, सुन्दरो भूपुरन्दरः ॥ अभ्याजगाम सानन्दं, नन्दनं द्रष्टुमुद्यतः ॥ २४७ ॥ अभ्यायान्तं कुमारोपि, श्रुत्वा तातं ससम्भ्रमः ॥ गत्वा ननाम

भूपीठ–न्यस्तशस्तस्वमस्तकः ॥ २४८ ॥ ततः प्रमोदाश्रुजल–क्लिन्ननेत्रो धराधवः ॥ तमालिंग्य निवेश्याङ्के, मूर्ध्नि जघ्रौ मुहुर्मुहुः ॥ २४९ ॥ उत्तम्भितध्वजे बद्ध–तोरणे स्वपुरे च तम् ॥ प्रियाद्वयान्वितं हस्त्या–रूढं प्रावीविशन्नृपः ॥२५०॥ ततो गतो गृहेऽनंसी–त्स सवित्रीं वधूयुतः ॥ पुत्र ! त्वमक्षयो भूया, इति साप्याशिषं ददौ ॥ २५१ ॥ भोजनानन्तरं पित्रा, पृष्टः पुत्रो यथातथम् ॥ सर्वं स्ववृत्तमाचख्यौ, सर्वेषां विस्मयावहम् ॥ २५२ ॥ ततो राज्ञा यौवराज्ये, स्थापितो मोदयन् जनान् ॥ कुर्वाणो विविधाः क्रीडाः, स कालं कञ्चिदत्यगात् ॥ २५३ ॥ अन्यदानङ्गभूपाज्ञा–वर्त्तिनं जनयन् जनम् ॥ द्रुमान् विभूषयन् सर्वान्, मानवानिव यौवनम् ॥ २५४ ॥ मानिनीमानकुट्टाक–कलकोकिलकूजितः ॥ मत्तद्विरेफझंकार–मुखरीकृतदिग्मुखः ॥ २५५ ॥ विप्रयुक्तवधूधैर्य–लुण्टाकमलयानिलः ॥ मदमुत्पादयन् यूनां, प्रावर्त्तत मधूत्सवः ॥ २५६ ॥ [ त्रिभिर्विशेषकम् ] तदा च रन्तुमुद्यानं, पार्थिवः पौरसंयुतः ॥ ययौ कृताह्वानमिव, वातोद्धूतद्रुपल्लवैः ॥ २५७ ॥ समं मदनमंजर्या, तत्रागाद्भूपभूरपि ॥ सविस्मयं सकामं च, पौरदारैर्निरीक्षितः ॥ २५८ ॥ दोलान्दोलनपानीय–क्रीडापुष्पोच्चयादिभिः ॥ स तत्र कान्तया साकं, रेमे हरिरिव श्रिया ॥ २५९ ॥ रामं रामं यथाकामं, विनोदैर्विविधैरथ ॥ अपराह्णे पुराधीशः, समं पौरैः पुरे ययौ ॥ २६० ॥ रतिप्रियः कुमारस्तु, विसृष्टान्यपरिच्छदः ॥ प्रियाद्वितीयः सुचिरं, रन्त्वा यावत्पुरे व्रजेत् ॥ २६१ ॥ तावत्प्राणप्रिया तस्य, दष्टा दुष्टेन भोगिना ॥ उत्सङ्गे न्यपतत्पत्यु–र्दष्टाहमिति वादिनी ॥ २६२ ॥ ततो मंत्रादिभिर्याव–त्तां चिकित्सति भूपभूः ॥ तावत्सा गरलव्यापा–न्मूर्च्छिताऽभूदचेतना ॥ २६३ ॥ ततो विपन्नां तां ज्ञात्वा, कुमारो मोहमोहितः ॥ रुरोद रोदसीकुक्षिम्भरिभिः परिदेवनैः ॥ २६४ ॥ दध्यौ चैवं विनामुष्याः, कथं जीविष्यते मया ॥ वल्लभानां वियोगो हि, वह्नेरप्यतिरिच्यते ॥ २६५ ॥ तदवश्यं प्रवेष्टव्यं, मया वह्नौ सहानया ॥ स्वल्पा हि सह्यते पीडा, भूरिपीडापहा बुधैः ॥ २६६ ॥ इति ध्यात्वा चितां कृत्वा, तत्र कान्तां निधाय च ॥ प्रविविक्षुः स्वयं याव–ज्ज्वलयामास सोऽनलम् ॥ २६७ ॥ तावत्तत्राजग्मतुर्द्वौ, दैवाद्विद्याधरोत्तमौ ॥ इत्यूचतुश्च तं सद्य–स्तद्दुःखं वीक्ष्य दुःखितौ ॥ २६८ ॥ हुताशे होतुमात्मानं, कुतो हेतोस्त्वमीहसे ? ॥ न हीष्टं विद्यते किञ्चित्, प्राणिनां प्राणिताद्दृते ! ॥ २६९ ॥ कुमारः स्माह कान्ता मे, विपन्ना पन्नगादियम् ॥ विना चैनां न शक्नोमि, जीवितुं तच्छ्रयेऽनलम् ॥ २७० ॥ जीवयावो जीवितेशां, तव तन्मा मृथा वृथा ॥ इत्युक्त्वा मंत्रितैर्नीरैः, खेचरौ तामसिञ्चताम् ॥ २७१ ॥ ततः सा वीतनिद्रेव, विकसल्लोचना स्वयम् ॥ संवृत्य स्वाङ्गमुत्तस्थौ, कुमारस्य मुदा समम् ॥ २७२ ॥ अथापृच्छ्य कुमारं खे–चरयोर्गतयोस्तयोः ॥ घोरान्धकारनिकरे, जाते च क्षणदाक्षणे ॥ २७३ ॥ पुरमध्येऽधुना गन्तुं, न युक्तमिति चिन्तयन् ॥ सप्रियो भूपभूः प्रत्या–सन्नदेवकुले ययौ ॥ २७४ ॥ [ युग्मम् ] उद्योतायाऽऽनयाम्यग्नि–मित्युदित्वा गतश्च सः ॥ आत्ताग्निः पुनरायाति, यावद्ध्यायन्निजां प्रियाम् ॥ २७५ ॥ तावदालोकमद्राक्षी–न्मध्येदेवकुलं स्फुटम् ॥ तत आगत्य साशङ्कं, स कान्तामिति पृष्टवान् ॥ २७६ ॥ आदाय वह्निमह्नाय, निवृत्तेन मया प्रिये ! ॥ दृष्टो महानिहालोकः, सोऽधुना किं न दृश्यते ? ॥ २७७ ॥ सा प्रोचे स्वकरस्थस्य, वह्नेर्दीप्तस्य वायुना ॥ आलोक इह संक्रान्तो, दृष्टो भावी प्रिय ! त्वया ॥ २७८ ॥ ततः प्रियायै दत्वासिं, निधाय भुवि जानुनी ॥ धमत्यधोमुखो धूम–ध्वजं यावन्नृपाङ्गजः ॥ २७९ ॥ तावत्तस्याः करात्कोश–विहीनोऽसिस्तदग्रतः ॥ पपात गुरुनिर्घातो, विद्युद्दण्ड इवाम्बुदात् ॥ २८० ॥ कृपाणः कोशहीनोऽय–मपतद्भूतले कुतः ? ॥ सम्भ्रान्तेनाऽथ तेनैव–मपृच्छ्यत नितम्बिनी ॥ २८१ ॥ संमोहव्याकुलं चेतः, साम्प्रतं मेऽभवद्भृशम् ॥ ततोऽयं न्यपतत्पाणेः, कृपाण इति साऽब्रवीत् ॥ २८२ ॥ ततो ज्वलनमुज्ज्वाल्य, रात्रिं तत्रातिवाह्य च ॥ प्रातर्जायापती स्वीय–सौधे तौ मुदितौ गतौ ॥ २८३ ॥ वृत्तान्तं तं च बन्धूना–मूचतुः खेदहर्षदम् ॥ सुखं चाभजतां नित्यं, पञ्चगोचरगोचरम् ॥ २८४ ॥ अन्यदा भूपभूर्वाह–वाहनार्थं बहिर्गतः ॥ निन्येऽरण्येऽपहृत्याशु, वक्रशिक्षितवाजिना ॥ २८५ ॥ तत्र चायं भ्रमन्नेक–मद्राक्षीचैत्यमुत्तमम् ॥ किमिहाद्भुतवीक्षार्थं, सिद्धसद्माऽऽगतं दिवः ॥ २८६ ॥ चैत्यस्य तस्य पार्श्वे च, कल्पद्रुरिव जङ्गमः ॥ चतुर्ज्ञानधरः साम्य–सुधारसमहोदधिः ॥ २८७ ॥ व्रतिव्रातैः परिवृतः, पुरन्दर इवामरैः ॥ आश्रयः श्रेयसां श्रेष्ठ–रत्नानामिव रोहणः ॥ २८८ ॥ भासमानो गुरुगुणै–र्महोभिरिव भास्करः ॥ जितेन्द्रियत्वरूपाभ्यां, कलाकेलिकलां हरन् ॥ २८९ ॥ चारणश्रमणस्तेन, नयनानन्दचन्द्रमाः ॥ अदर्शि साहसगति–र्नाम्ना धाम्ना रविं जयन् ॥ २९० ॥ [ चतुर्भिःकलापकम् ] ततः प्रणम्य तं भक्त्या, प्राप्ताशीरुपविश्य च ॥ शुश्राव भूपभूर्धर्म–देशनां क्लेशनाशिनीम् ॥ २९१ ॥ तत्र च प्रेक्ष्य पुरुषान्, पञ्च चारि-

प्रकांक्षिणः ॥ कुमारोऽवसरं प्राप्य, पप्रच्छेति कृताञ्जलिः ॥ २९२ ॥ रूपलावण्यतारुण्य–पुण्याः पञ्च नरा अमी ॥ स्वामिन् ! दीक्षां जिघृक्षन्ति, कुतोहेतोस्त्वदन्तिके ॥ २९३ ॥ गुरुर्जगाद चमरी–संज्ञा पल्लीह विद्यते ॥ धरणीधरनामासी–द्भिल्लेशस्तत्र दुर्धरः ॥ २९४ ॥ अन्यदा नृपभूः कश्चि–दागात्तद्भुवि सैन्ययुक् ॥ सेनामनागयत्तस्य, भिल्लेशो भिल्लवृन्दयुक् ॥ २९५ ॥ नाशिते भिल्लचक्रे च, कुमारेण तरस्विना ॥ स्तेनेशस्तेन युयुधे, न त्वेकोप्यजयत्परम्॥२९६॥ ततः कुमारः स्वां नारीं, पुरश्चक्रे मनोरमाम् ॥ तां च प्रेक्ष्य क्षुब्धचित्तं, सोवधीद्भिल्लभूपतिम् ॥ २९७ ॥ कुमारे च गते पञ्च, सोदराः शबरप्रभोः ॥ तदाययुर्विपन्नं चा–पश्यन् ज्येष्ठसहोदरम् ॥ २९८ ॥ ततस्ते वैरशुद्ध्यर्थं, रयाध्वानमनुश्रिताः ॥ प्राप्ताः शङ्खपुरेऽद्राक्षु–स्तं कुमारं भटैर्वृतम् ॥ २९९ ॥ कुमारमारणच्छिद्रं, वीक्षमाणाश्च तेऽन्यदा ॥ उद्याने दद्दशुः सायं, तं स्त्रीमात्रपरिच्छदम् ॥ ३०० ॥ तदा तन्मारणोपायं, तेषु ध्यायत्सु भोगिना ॥ दष्टा तस्याङ्गना तां च, कुमारो ज्ञातवान् मृताम् ॥ ३०१ ॥ ततस्तया समं मोहात्, कुमारे मर्तुमुद्यते ॥ आयातं खेचरयुगं, कृपया तामजीवयत् ॥ ३०२ ॥ विहायोद्यानमासन्ने, गत्वा देवकुले ततः ॥ विमुच्य कामिनीं तत्र, कुमारो वह्नये ययौ ॥ ३०३ ॥ चिराल्लब्धच्छलास्ते तु, छन्नं देवकुले स्थिताः ॥ अत्रागतममुं हन्म, इति पञ्चाप्यचिन्तयन् ॥३०४॥ अन्यान्निवार्य चतुरः, चतुरश्छद्मकर्मणि ॥ तद्विघातैकनिष्ठोऽस्था–त्कनिष्ठो द्वारसन्निधौ ॥ ३०५ ॥ विसेरकौतुकः

१ तौ चिर चक्रतुर्युद्ध । इति 'ग' संज्ञकपुस्तके ॥

सोऽथ, तज्जायारूपमीक्षितुम् ॥ चिरसङ्गोपितं दीप–माविश्चक्रे समुद्गकात् ॥ ३०६ ॥ ततो निरीक्ष्य तं जाता–नुरागा सैवमब्रवीत् ॥ सौम्य ! त्वं भव भर्त्ता मे, मरिष्यामि न चेदहम्॥ ३०७ ॥ मुग्धे ! त्वां कामये कामं, बिभेमि त्वत्पतेः परम् ॥ तेनेत्युक्ता च सा क्रूरा–शया पुनरदोवदत् ॥ ३०८ ॥ अधुनाहं हनिष्यामि, स्वपतिं तव पश्यतः ॥ तन्मा भैषीस्त्वयेत्युक्तः, स दीपं निरवापयत् ॥ ३०९ ॥ अचिन्तयच्च यो मर्तु–मुद्यतोऽभूत्सहानया ॥ कान्तं तमपि दुष्टेयं, मयि रक्ता जिघांसति ! ॥ ३१० ॥ हरिद्रारागया तन्मे, कृतमञ्जनयानया ॥ विषवल्लीमिव क्रूरो–दर्कां नारीं हि कः श्रयेत् ? ॥ ३११ ॥ अस्या दुष्टस्त्रिया योगा–द्ध्रियते मृत एव यः ॥ विपक्षस्यापि तस्याथ, मारणं नो न युज्यते ॥ ३१२ ॥ तत्सर्वथा वराकं तं, जीवयिष्यामि साम्प्रतम् ॥ तत्रैवं चिन्तयत्येव, सोऽप्यागादात्तपावकः ॥ ३१३ ॥ आगच्छता मयोद्योतो, दृष्टः कुत इहाधुना ॥ स्वकान्तामित्यपृच्छच्च, ततः सा कुटिलाब्रवीत् ॥ ३१४ ॥ स्वपाणिस्थज्वलद्वह्नेः, प्रकाश इह सङ्क्रमात् ॥ दृष्टो भावीति तन्मेने, सरलः सोऽपि सूनृतम् ॥ ३१५ ॥ अथ पत्न्याः प्रदायासिं, तस्मिन् धमति पावकम् ॥ कोशात्कृपाणमाकृष्य, घातं यावन्मुमोच सा ॥ ३१६ ॥ तावत्कृपारसाम्भोधि–रसौ भिल्लाधिपानुजः ॥ अपहस्तेन हत्वासिं, पातयामास भूतले ॥ ३१७ ॥ तच्च स्त्रीचरितं प्रोचे, सोदराणां स दारुणम् ॥ ततो विरक्ताः सर्वेऽमी, व्रतं लातुमिहाययुः ॥ ३१८ ॥ कुमारेदं तव प्रोक्त–मेषां वैराग्यकारणम् ॥ तदाकर्ण्यातिसम्भ्रान्तः, कुमारो ध्यातवानिति ॥ ३१९ ॥ अहो ! चरित्रं नारीणां, दारुणेभ्योऽपि दारुणम् ॥ अहो ! तन्मनसां क्रूर–भावो व्याघ्रादिजित्वरः ॥ ३२० ॥ ध्यातुं वक्तुं च यन्नैव, शक्यं धीधनवाग्मिभिः ॥ नार्यो रक्ता विरक्ताश्च, विचेष्टन्ते तदप्यहो ! ॥ ३२१ ॥ यः प्रेम्णा मन्यते वामाः, स्वप्राणेभ्योऽपि वल्लभाः ॥ अध्यवस्यन्ति तमपि, हन्तुं हेतुं विनापि ताः ॥ ३२२ ॥ अपि वारांनिधेरापो, गङ्गायाः सिकताकणाः ॥ मीयन्ते धीधनैः कैश्चि–न्नैव स्त्रीचरितं पुनः ॥३२३॥ ध्यायन्त्यन्यद्वदन्त्यन्य–न्नार्यः कुर्वन्ति चेतरत् ॥ या मायाशाकिनीग्रस्ता–स्तासु रज्येत कः सुधीः ?॥३२४॥ तन्मां धिगस्तु निर्लज्जं, येन तस्याः कृते मया ॥ अहारि तद्यशो हारि,कुलञ्च मलिनीकृतम् ॥३२५॥ यद्वा विवेको वैराग्यं, पाण्डित्यं संयमो दमः ॥ तावत्स्यात्प्राणिनां याव–न्न स्युस्ते रमणीवशाः ॥ ३२६ ॥ संसारे च सुखं स्त्रीभ्य–स्ताश्चैवंविधचेष्टिताः ॥ तन्मे संसारवासेन, कृतं दुःखौघदायिना ! ॥ ३२७ ॥ ध्यात्वेत्यादि गुरूनत्वा, जगादैवं नृपाङ्गजः ॥ स्वामिन्निदं चरित्रं मे, यत्पूज्यैः प्रतिपादितम् ॥ ३२८ ॥ अहं ह्येषां भ्रातृघाती, तस्या दुष्टस्त्रियाः पतिः ॥ निर्विण्णोस्मि भवादस्मा–न्निशम्य चरितं निजम् ! ॥ ३२९ ॥ सद्यः प्रसद्य तन्मह्यं, दीक्षां दत्त मुनीश्वराः ! ॥ ऐहिकामुष्मिकानन्त– सुखाङ्कुरसुधापगाम् ! ॥ ३३० ॥ ततस्तैर्दीक्षितो दीक्षा–मत्युग्रां परिपाल्य सः ॥ सुदुस्तपं तपस्तप्त्वा, क्रमान्निर्वाणभागभूत् ॥ ३३१ ॥ यथा चायं सुधीर्द्रव्य–निद्रां परिहरन् पुरा ॥ दस्युना तरङ्गिन्या च, नावञ्च्यत कथञ्चन ! ॥ ३३२ ॥ प्रान्ते च भावतो जाग्र–त्परत्राप्यभवत्सुखी ॥ अन्योप्येवं द्विधा जाग्र–दुभयत्र सुखी भवेत् ॥ ३३३ ॥ इति सुन्दरभूपनन्दनर्षे–श्चरितं चित्रकरं निशम्य सम्यक् ॥ भविकैः शिवकां-

श्विभिर्द्विधापि, श्रयणीय. प्रतिबुद्धजीविभावः ॥ ३३४ ॥ इति द्रव्यभावनिद्रात्यागेऽगडदत्तसाधुकथा ॥

प्रतिबुद्धजीवी सन् किं कुर्यादित्याह—'न वीससे' इत्यादि—न विश्वस्यात्प्रमादेष्विति गम्यते, अयं भावः—बहुजनादृतत्वात् प्रमादा नानर्थकारिण इति विश्रम्भवान्न भवेत् ,पण्डितो विद्वान्। आशु शीघ्रमुचितकृत्येषु प्रवर्तितव्यमिति प्रज्ञा यस्य स आशुप्रज्ञः, कुतश्चायमाशुप्रज्ञो ? यतो घोरा रौद्राः सततमपि प्राणापहारिणो मुहूर्ता' कालविशेषा दिवसाद्युपलक्षणं चैते, कदाचिच्छारीरबलाद् घोरा अप्यमी न प्रभविष्यन्तीत्यत आह—अबलं बलरहितं मृत्युदायिनो मुहूर्तोन्निराकर्तुं विसोढुं वा असमर्थं शरीरं वपुः, उक्तञ्च—"सत्थग्गीजलसावय–वीसूइआवाहिअहिविसाईहिं ॥ जज्जरमिणं सरीरं, उवक्कमेहिं बहुविहेहिं ॥ १ ॥ जं ऊसासायत्तं, देहं जीवस्स कयलिखंभसमं ॥ जरडाइणिआवासं, का कीरउ तत्थ दीहासा ! ॥ २ ॥" तर्हि किं कार्यमित्याह—भारुण्डपक्षीव चराऽप्रमत्तः, यथा भारुण्डपक्षी अप्रमत्तश्चरति, तथा त्वमपि प्रमादरहितश्चर, विहितानुष्ठानमासेवस्व, अन्यथा तु यथा भारुण्डपक्षिणः पक्ष्यन्तरेण सह साधारणस्य मध्यवर्त्तिचरणस्य सम्भवात्स्वल्पमपि प्रमाद्यतोऽवश्यमेव मृत्युः, उक्तञ्च—"एकोदराः पृथग्ग्रीवा, अन्यान्यफलकांक्षिणः ॥ प्रमत्ता हि विनश्यन्ति, भारुण्डा इव पक्षिणः ॥ १ ॥" तथा तवापि प्रमाद्यतः संयमजीविताद्भ्रंश एवेति सूत्रार्थः ॥ ६ ॥ अमुमेवार्थं स्पष्टयन्नाह—

मूलम्— चरे पयाइं परिसंकमाणो, जं किंचि पासं इह मन्नमाणो ॥
लाभंतरे जीविअ वूहइत्ता, पच्छा परिण्णाय मलावधंसी ॥ ७ ॥

व्याख्या—चरेद्गच्छेन्मुनिरिति शेषः, पदानि पादनिक्षेपरूपाणि परिशङ्कमानः, मा मे संयमविराधना भूयादिति परिभावयन् तथा 'जं किंचित्ति' यत्किञ्चिद्दुश्चिन्तितायपि प्रमादपदं पाशमिव पाशं बन्धहेतुतया मन्यमानो जानानः, अयं भावः— यथा भारुण्डपक्षी पदानि परिशङ्कमानश्चरति, यत्किञ्चिद्वरकाद्यपि पाशं मन्यमानस्तथा साधुरप्यप्रमत्तश्चरेत् । ननु ? यदि परिशङ्कमानश्चरेत्तर्हि पूर्वोक्तदोषपरिहारार्थमादित एवाऽनशनं कुरुतामित्याशङ्कानिरासार्थमाह—लाभान्तरे अपूर्वार्थप्राप्तिरूपे सति, अयं भावः—यावद्विशिष्टविशिष्टतरसम्यग्दर्शनज्ञानाद्यवाप्तिरितः सम्भवति तावदिदं जीवितं प्राणधारणरूपं बृंहयित्वा, अकालोपक्रमरक्षणेन अन्नपानोपयोगादिभिश्च वृद्धिं नीत्वा पश्चाल्लाभविशेषप्राप्तेरुत्तरकालं परिज्ञाय सर्वप्रकारैरवबुध्य यथेदं नेदानीं प्राग्वद्गुणविशेषार्जनक्षमं, न चातस्तादृशी निर्जरा, न च जरया व्याधिना चाभिभूतं तत्तथाविधधर्मध्यानं प्रति समर्थमिति ज्ञपरिज्ञया ज्ञात्वा ततः प्रत्याख्यानपरिज्ञया भक्तं प्रत्याख्याय सर्वथा जीवितनिरपेक्षो भूत्वेति भाव', मलापध्वंसी कर्ममलविनाशी स्यादिति शेषः, यद्वा मलाश्रयत्वान्मल औदारिकं शरीरं, तदपध्वंसी स्यात्तन्निरपेक्षो भवेदिति भावः । ततो यथागमं प्रवर्त्तमानस्य यावल्लाभं देहधारणमपि गुणायैवेति स्थितम् । इह च यावल्लाभं देहधारणे मण्डिकदस्युरुदाहरणम् , तत्रायं वृद्धवादः । तथाहि—

बेण्णातटपुरे तुन्न–कारो मण्डिकसंज्ञकः ॥ परस्वहरणासक्तो–ऽभवन्मायानिकेतनम् ॥ १ ॥ स च मे व्रणमस्तीति, जानुबद्धपटचरः ॥ राजमार्गे स्थितश्चक्रे, वासरे तुन्नकारिताम् ॥ २ ॥ रात्रौ तु धनिधामभ्यो, धनं हृत्वा पुराद्बहिः ॥ उद्यानस्थे भूमिगेहे, निचिक्षेपानुवासरम् ॥ ३ ॥ तत्र चासीत्स्वसा तस्य, कन्यका प्राप्तयौवना ॥ कूपश्चैकोऽभवत्तत्रो–पकण्ठन्यस्तविष्टरः ॥ ४ ॥ यं च प्रलोभ्यानयति, स चौरो भारवाहकम् ॥ तमुपावीविशत्कूप–पार्श्वस्थासने तत्स्वसा ॥ ५ ॥ पादशौचमिषात्पादे, धृत्वान्धौ न्यक्षिपच्च तम् ॥ इत्थं तस्यात्यगात्कालो, मुष्णतः सकलं पुरम् ॥ ६ ॥ पिशाचमिव तं धर्तुं, पुरारक्षोपि नाशकत् ॥ पूर्वोक्तो मूलदेवाह्व–स्तत्र चाभून्नृपस्तदा ॥ ७ ॥ तत उद्वेजितास्तेन, राक्षसेनेव दस्युना ॥ पौरा. सर्वे मूलदेव–भूपमेवं व्यजिज्ञपन् ॥ ८ ॥ स्वामिन् ! केनापि चौरेण, प्रत्यहं मुष्णता पुरम् ॥ व्रतं विनापि निर्ग्रन्थो, निर्ममे निखिलो जन' ! ॥ ९ ॥ स च ग्रहीतुं केनापि, शक्यते न महीपते ! ॥ पाहि पाहि प्रजाः सर्वा–स्तस्मादस्मादुपद्रवात् ! ॥१०॥ सद्यस्तं निग्रहीष्यामी–त्युक्त्वा पौरान् विसृज्य च ॥ नृपश्चक्रेन्यमारक्षं, तं धर्तुं सोऽपि नाशकत् ! ॥ ११ ॥ ततो निशि स्वयं श्यामां–शुकं प्रावृत्य भूपतिः ॥ शङ्कास्थानेषु बभ्राम, न तु तस्करमैक्षत ! ॥ १२ ॥ श्रान्तो भूपस्ततो याव–त्सभायामस्वपीत्क्वचित ॥ कोत्रास्तीति वदंस्ताव–त्तत्रोपेयाय मण्डिक. ॥ १३ ॥ अहं कार्पटिकोऽस्मीति, समयज्ञोऽवदन्नृपः ॥ एहि त्वामीश्वरं कुर्वे, मण्डिकोप्येवमब्रवीत् ॥ १४ ॥ भुजिष्य इव भूजानि–स्ततो मण्डिकमन्वगात् ॥ स्वकार्यसिद्ध्यै दक्षो हि, नीचम-

प्यनुवर्त्तते । ॥ १५ ॥ ततो धनिगृहे क्वापि, कृत्वा क्षात्रं मलिम्लुचः ॥ आकृष्टसारवस्तूनि, भानुमूनुरसूनिव ॥१६॥ तच सर्वं परास्कन्दी, शिरसारोप्य भूपतेः ॥ पुरस्कृत्य च तं कृष्ट–कृपाणो भूगृहं ययौ ॥ १७ ॥ मध्ये भूमिगृहं भूप–मानीयोत्तार्य वीवधम् ॥ क्षालयाऽस्यातिथेः पादा–विति जामिमुवाच सः ॥ १८ ॥ ततः कूपोपकण्ठस्थे, पीठे सा विनिवेश्य तम् ॥ पादशौचच्छलाद्याव–त्तस्य पादमुपाददे ॥ १९ ॥ तावत्तन्मृदुतामङ्ग–जितवरीमनुभूय सा ॥ मदिराक्षी मृदूभूत–चित्ता चित्ते व्यचिन्तयत् ॥ २० ॥ एष सत्पुरुषो भुक्त–पूर्वराज्योऽस्ति निश्चितम् ॥ जन्मतो भारवाहस्य, पादस्पर्शो हि नेदृशः ! ॥ २१ ॥ नरोत्तममम्मुं तत्र, कूपे क्षेप्स्यामि सर्वथा ॥ ध्यात्वेति सा शनैरेवं, तमुवाच मनस्विनी ॥ २२ ॥ कूपेऽत्र बहवः क्षिप्ताः, पादशौचमिषान्मया ॥ त्वां तु क्षेप्स्यामि नैवात्र, त्वन्महिम्ना वशीकृता ! ॥ २३ ॥ ततो द्रुतमितः स्वामिन् !, याहि कृत्वा कृपां मयि ॥ अन्यथा त्वधुना भावि, मरणं ध्रुवमावयोः ! ॥ २४ ॥ तन्निशम्य वलसायं, समयो नेति चिन्तयन् ॥ आनीतवित्तविन्यास–व्यग्रे चौरे ननाश सः ॥ २५ ॥ गते च राज्ञि नष्टोय–मित्यूचे सा तु सोदरम् ॥ कङ्कलोहासिमादाया–ऽनुभूपं सोप्यधावत ॥ २६ ॥ तं सन्निकृष्टमाकृष्ट–कृपाणं प्रेक्ष्य पार्थिवः ॥ निलीयास्थाच्चत्वरस्थ–पाषाणस्तम्भसन्निधौ ॥ २७ ॥ कोपान्धो मण्डिकस्तु द्राक् , स एवायं पुमानिति ॥ कंकासिना दृषत्स्तम्भं, छित्त्वा तं स्वगृहे ययौ ॥ २८ ॥ पाटचरो जानुबद्धा–वलेपार्द्रपटच्चरः ॥ प्रातश्च तुन्नकारत्वं, गत्वा राजपथे व्यधात् ॥ २९ ॥ भूपोपि स्वगृहे गत्वा–ऽतिवाह्य रजनीं च ताम् ॥ तं द्रष्टुं निरगाद्राज–पाटिकाकपटाद्बहिः ॥ ३० ॥ तं च प्रेक्ष्यापणद्वारे, तीक्ष्णप्रेक्षापणो नृपः ॥ रात्रिदृष्टानुमानेन, प्रत्यभिज्ञातवान् द्रुतम् ॥ ३१ ॥ दध्यौ च निशि याजीव, यो जवेन व्रजन्नभूत् ॥ स एवायं दिने खञ्ज, इव व्याजेन चेष्टते ! ॥ ३२ ॥ स्ववेश्मनि ततो गत्वा–ऽभिज्ञानाख्यानपूर्वकम् ॥ तमाकारयितुं क्ष्मापः, प्राहिणोन्निजसेवकान् ॥ ३३ ॥ तैराहूतः स चौरोपि, मनस्येवममन्यत ॥ न हतः स नरो नून–मुत्तालेन मया निशि ! ॥ ३४ ॥ सम्भाव्यते नराधीशः, स एव च पुमान् सुधीः ॥ मां हि प्रत्यभिजानीया–द्बूजानिः कथमन्यथा ? ॥ ३५ ॥ इति ध्यायन् ययौ राज्ञः, समीपे स मलिम्लुचः ॥ तश्चोपाविविशद्भूपो, महाबुद्धिर्महासने ॥ ३६ ॥ आलापयन् सुधाकल्पै–स्तञ्चालापैः सगौरवम् ॥ इत्यूचे पार्थिवो मह्यं, दीयतां भगिनी निजा ॥ ३७ ॥ दृष्टा मे भगिनीं नान्यो, निरगान्मद्गृहाद्बहिः ॥ तत्स एवायमित्यन्त–र्निश्चिकाय स तस्करः ॥ ३८ ॥ स्वसा मे गृह्यतां स्वामि–न्नित्यूचे च धराधवम् ॥ नृपोपि चारुरूपाढ्या–मुपयेमे तदैव ताम् ॥ ३९ ॥ मण्डिकं च महामात्यं, चक्रे नीतिविदां वरः ॥ द्रव्येण कार्यमस्तीति, तं च राजाऽन्यदाऽवदत् ॥ ४० ॥ ततोऽतिप्रचुरे वित्ते, दत्ते तेन महीपतिः ॥ तं बहुमानयद्भूयो–ऽप्यन्यदानाययद्धनम् ॥ ४१ ॥ एवं पुनः पुनः कुर्व–स्तद्वित्तं सकलं नृपः ॥ आनाययद्विदग्धा हि, कार्यं बुद्ध्यैव कुर्वते ! ॥ ४२ ॥ कियन्मात्रमथ द्रव्य–मस्ति त्वत्सोदरान्तिके ॥ इत्यन्यदा तत्स्वसार– मप्राक्षीच्च क्षमाप्रभुः ॥ ४३ ॥ धनमेतावदेवाभूद–स्येत्युक्ते तया च राट् ॥ लेख्यकस्यानुसारेण,तत्पौराणामदापयत् ॥ ४४ ॥ मण्डिकञ्च प्रचण्डाज्ञो, विडम्ब्य निविडं नृपः ॥ शूलामारोपयत्पाप–कारिणां हि कुतः सुखम् ? ॥ ४५ ॥ यथा चायं मूलदेव–नृदेवेन मलिम्लुचः ॥ अकार्यकार्यपि द्रव्य–लाभं यावदधार्यत ! ॥ ४६ ॥ एवं मुनीन्द्रैरपि भूरिदोष–निदानमप्यङ्गमुदारसत्वैः ॥ आनिर्जरालाभमपेक्षणीय–मुपेक्षणीयं च ततोऽन्यथात्वे ॥ ४७ ॥ इति यावल्लाभं देहधारणे मण्डिकदृष्टान्त इति सूत्रार्थः ॥ ७ ॥ सम्प्रति यदुक्तं जीवितं बृंहयित्वा मलापध्वंसी स्यादिति तत्किं स्वातंत्र्येणैव ? उतान्यथेत्याह—

मूलम्—छंदं निरोहेण उवेइ मुक्खं, आसे जहा सिक्खिअवम्मधारी ॥
पुव्वाइं वासाइं चरप्पमत्तो, तम्हा मुणी खिप्प मुवेइ मुक्खं ॥ ७ ॥

व्याख्या—छन्दोनिरोधेन स्वच्छन्दतानिषेधेन उपैति मोक्षं मुक्तिं, अयं भावः– गुरुपारतंत्र्येण स्वाग्रहविरहेण च तत्र तत्र प्रवर्तमानोपि संक्लेशविकलतया न कर्मबन्धभाक् किन्त्वविकलचरणतया निर्जरामेवाप्नोति, गुरुपारतंत्र्येणाप्रवर्तमानश्चाग्रहग्रहग्रस्ततया अनन्तसंसारित्वाद्यनर्थभागेव भवति, यदुक्तं–"छट्ठट्ठमदसमदुवालसेहिं मासद्धमासखमणेहिं ॥ अकरिंतो गुरुवयणं, अणंतसंसारिओ होई ॥१॥" तत्सर्वथा गुरुपरतंत्रेणैव मुनिना भाव्यं उक्तञ्च– "नाणस्स होइ भागी, थिरयरओ दंसणे चरित्ते अ ॥ धण्णा आवकहा ए, गुरुकुलवासं न मुंचंति ॥ १ ॥" अत्र दृष्टान्तमाह–'आसे' इत्यादि–अश्वस्तुरगो, यथा शिक्षितो वल्गनोत्प्लवनधावनादिशिक्षां ग्राहितो, वर्मधारी सन्नाहस्ततो विशेषणकर्मधारयः, अनेन शिक्षकपरतंत्रतया स्वातंत्र्यापोहमाह, ततोयमर्थः–यथाश्वः स्वातंत्र्यं विहाय प्रवर्त-

भानो रणाङ्गणे नो वैरिभिरुपहन्यते, इति तन्मोक्षं प्राप्नोति, स्वतंत्रस्तु पूर्वमशिक्षितो रणस्थानं प्राप्तस्तैरुपहन्यते, अत्र चायं सम्प्रदायः—

तथा ह्येकेन भूपेन, द्वयोः क्षत्रियपुत्रयोः ॥ दत्तावश्वकिशोरौ द्वौ, शिक्षायै पोषणाय च ॥ १ ॥ तत्रैकः कालयोग्यैस्त–माहारैः पोषयन् शुभैः ॥ अशिक्षयद्वाजिकला, वल्गनोत्प्लवनादिकाः ॥ २ ॥ अन्यस्त्वसौ शुभं वस्तु, को ददातीति चिन्तयन् ॥ तुषादिकं ददौ तं च, घरट्टेऽवाहयत्सदा ॥ ३ ॥ राज्ञा दत्तं च तद्योग्यं, बुभुजे स्वयमेव सः ॥ न च वाजिकलां तस्मै, शिक्षयामास काञ्चन ! ॥ ४ ॥ अन्यदोपस्थिते युद्धे, राज्ञोक्ताविति तौ नरौ ॥ आगच्छतं युवां तूर्ण–मारुह्याश्वं निजं निजम् ॥ ५ ॥ ततस्तौ तुरगारूढौ, प्राप्तौ भूभर्तुरन्तिकम् ॥ तदाज्ञया प्राविशतां, मध्येयुद्धमुदायुधौ ॥ ६ ॥ तयोरेकः सादिचित्ता–नुवृत्त्या सञ्चरन् हयः॥ सद्यो जगाम सङ्ग्राम–पारं शिक्षागुणान्वितः ॥ ७ ॥ अन्यस्तु दुष्टशिक्षावान्, शुभशिक्षाविनाकृतः ॥ तत्रापि भ्रमिमारेभे, घरट्टकनियुक्तवत् ॥ ८ ॥ यंत्रभ्रमेण भ्राम्यन्तं, तं च प्रेक्ष्य तुरङ्गमम् ॥ अशिक्षितोयमित्यन्त–र्विदाञ्चक्रुः परे भटाः ॥ ९ ॥ ततस्तत्सादिनं हत्वा, जगृहुस्तमरातयः ॥ विज्ञेया भावना चैवं, दृष्टान्तस्यास्य धीधनैः ॥ १० ॥ आद्यो यथाश्वो निजसादिपार–तंत्र्यात्समित्पारमवाप सद्यः ॥ धर्मार्थिनोप्येवमवाप्नुवन्ति, संसारपारं गुरुपारतंत्र्यात् ॥ ११ ॥ इति वाजिद्वयकथा ॥ अत एव च 'पुव्वाइंति' पूर्वाणि पूर्वोक्तप्रमाणानि वर्षाणि च चर, सततमागमोक्तक्रियां सेवस्व, अप्रमत्तः प्रमादपरिहर्त्ता, 'तम्हत्ति' तस्मात्स्वातंत्र्यविमुक्तादप्रमादाचरणादेव मुनिः क्षिप्रमुपैति मोक्षं, अत्र पूर्वाणि वर्षाणि इति च एतावदायुषामेव चारित्रपरिणामः स्यादिति दर्शनार्थमुक्तमिति सूत्रार्थः ॥ ८ ॥ ननु ? यदि छन्दोनिरोधेन मुक्तिस्तर्ह्यन्तकाले एवायं क्रियतामित्याशङ्कानिरासार्थमाह—

मूलम्— स पुव्वमेवं न लभेज्ज पच्छा, एसोवमा सासयवाइआणं ॥
विसीअई सिढिले आउअम्मि, कालोवणीए सरिरस्स भेए ॥ ९ ॥

व्याख्या—स इति यत्तदोर्नित्याभिसम्बन्धात् यः पूर्वमप्रमत्तो न स्यात् सोऽप्रमादात्मकं छन्दोनिरोधं 'पुव्वमेवंति' एवं शब्दस्य उपमार्थत्वात् पूर्वमिव अन्त्यकालात् प्रागिव न लभेत न प्राप्नुयात् पश्चादन्त्यकालेपि, किञ्च 'एसोवमत्ति' एषोपमा इयं सम्प्रधारणा यद्वयं पश्चाद्धर्मं करिष्याम इति शाश्वतवादिनां निरुपक्रमायुष्कतया शाश्वतमिवात्मानं मन्यमानानां युज्येतापि, न तु जलबुद्बुदसमानायुषामन्येषां, तथा चायमुत्तरकालेपि छन्दोनिरोधमनाप्नुवन् विषीदति, कथमहमकृतधर्मकर्मा परत्र नरकादिवेदना अनुभविष्यामीति वैक्लव्यमनुभवति, शिथिले आत्मप्रदेशान्मुञ्चत्यायुषि कालेन मृत्युना उपनीते ढौकिते शरीरस्य भेदे सर्वशाटात् पृथग्भावे तस्मादादित एव प्रमादः परिहर्तव्य इति सूत्रार्थः ॥ ९ ॥ कथं पुनः पूर्वमिव पश्चादपि छन्दोनिरोधं न लभते ? इत्याह—

मूलम्—खिप्पं न सक्केइ विवेगमेउं, तम्हा समुट्ठाय पहाय कामे ॥
समेच्च लोगं समया महेसी, अप्पाणुरक्खी चरमप्पमत्तो ॥ १० ॥

व्याख्या—क्षिप्रं तत्क्षण एव न शक्नोति विवेकं द्रव्यतो बहिःसङ्गत्यागरूपं, भावतः कषायापोहात्मकं, एतुं गन्तु कर्तुमित्यर्थः । कृतपरिकर्मा हि द्रुतं तत्परित्यागं कर्तुमलं, न तु तदन्यः, अत्रोदाहरणं, ब्राह्मणी—

तथा ह्येको द्विजोऽन्यत्र, गत्वा देशे महामतिः ॥ साङ्गान् वेदानधीत्यागा–त्कृतकृत्यो निजं गृहम् ॥ १ ॥ तस्मै चैकेन विप्रेण, सुरूपा स्वसुता ददे ॥ लोकाश्च दक्षिणाभिस्तं, वेदज्ञं धनिनं व्यधुः ॥ २ ॥ ततः स स्त्रीकृते भूरीनलंकारानकारयत् ॥ सापि तान् परिधायास्था–द्भूषितैव दिवानिशम् ॥ ३ ॥ तां चेत्युवाच तत्कान्तः, कान्ते ! पर्वोत्सवादिषु ॥ परिधेयाः परिष्कारा, न तु प्रतिदिनं त्वया ॥ ४ ॥ तस्करोपद्रवः प्रान्त–ग्रामे ह्यत्र भवेद्भृशम् ॥ न चोत्तारयितुं शक्या, द्रुतमेते तदागमे ॥ ५ ॥ साथ स्माह यदा स्वामि–न्नायास्यन्तीह दस्यवः ॥ एतानुत्तारयिष्यामि, तदाहमविलम्बितम् ॥ ६ ॥ इत्युक्त्वा सा तथैवास्था–न्न तु तानुदतारयत् ॥ सुशिक्षामपि मन्यन्ते, दक्षंमन्या न जन्तवः ॥ ७ ॥ चौराः केचिच्च तां नित्यं, मण्डितां दृष्टपूर्विणः ॥ तस्या एव गृहेऽन्येद्यु–र्विविशुर्जगृहुश्च ताम् ॥ ८ ॥ नित्यं स्निग्धाशनात्पीन–पाणिपादा तदा च सा ॥ कटकाद्यपनेतुं द्राक्, नानभ्यासादभूत् प्रभुः ॥९॥ ततस्तस्याः करौ छित्वा, लात्वा च कटकादिकम् ॥ पाटचरा ययुस्तूर्णं, पापानां हि कुतो दया ? ॥ १० ॥ यथा

च सा प्राक् परिकर्महीना, तदापनेतुं न शशाक भूपाः ॥ कर्तुं विवेकं न तथा परोपि, क्षिप्रं प्रभुः स्यात्परिकर्महीनः ॥ ११ ॥ इति द्विजवधूकथा ॥ न च मरुदेव्युदाहरणमत्र वाच्यमाश्चर्यरूपत्वात्तस्य, यत एवं तस्मात्समुत्थाय पश्चाद्धर्मं करिष्यामीत्यालस्यत्यागेनोद्यमं कृत्वा प्रहाय परित्यज्य कामान् इच्छामदनात्मकान् समेत्य ज्ञात्वा लोकं प्राणिसमूहं 'समयत्ति' समतया समशत्रुमित्रतया महर्षिः सन् यद्वा मह एकान्तोत्सवरूपो मोक्षस्तमिच्छतीत्येवं शीलो महैषी सन्, आत्मानुरक्षी कुगतिगमनादिभ्योऽपायेभ्य आत्मनो रक्षकः चराप्रमत्तः प्रमादरहितः, इह च प्रमादपरिहारापरिहारयोरैहिकमुदाहरणं वणिग् महिला, तत्र चायं सम्प्रदायः, तथा हि—

नैगमः स्वगृहे कोपि, नानाशिल्पविधायिनः ॥ मुक्त्वा कर्मकरान् वाणि—ज्यार्थं देशान्तरे ययौ ॥ १ ॥ तांश्च कर्मकरांस्तस्य, महिला स्वस्वकर्मसु ॥ न प्रायुङ्क्त शुभैर्वाक्यैः, स्वाङ्गसंस्कारतत्परा ॥ २ ॥ न च तेषामदात्काले—पपन्नं भोजनादिकम् ॥ सीदन्तो ययुरन्यत्र, सर्वे कर्मकरास्ततः ॥ ३ ॥ ततस्तत्तत्कृत्यहान्या, व्यनेशत्प्रचुरं धनम् ॥ तत्र स्वरूपमायातो—ऽज्ञासीत्सर्वं गृहप्रभुः ॥ ४ ॥ अलक्ष्मीवत्ततो गेहा—त्प्रमदां तां प्रमद्वराम् ॥ निष्काश्यान्यां निःस्वकन्यां, सोऽवृणोद्बहुभिर्धनैः ॥ ॥ ५ ॥ तद्बन्धूश्चैवमूचे चे—दात्मानं रक्षयत्यसौ ॥ तदा परिणयाम्येना—मन्यथा तु न सर्वथा ॥ ६ ॥ तदाकर्ण्य कनी ज्ञात—परमार्था महामतिः ॥ रक्षिष्याम्यहमात्मान—मित्यूचे स्वजनान्निजान् ॥७॥ ततस्तां परिणीयागा—त्पुनर्देशान्तरे वणिक् ॥ नाङ्गभूपादिकं चक्रे, प्रमादं तद्वशा तु सा ॥ ८ ॥ आलापयन्ती मधुरै—रालापैः श्रवणामृतैः ॥ दासकर्मकरादींश्च, प्रायुङ्क्त स्वस्वकर्मणि ॥ ९ ॥ प्रातराशादिकं तेषां, भोजनं समये ददौ ॥ अकालपरिहीणं त—द्वेतनं च यथोदितम् ॥ १० ॥ एवमावर्जिताः सर्वे, तया कर्मकरादयः ॥ सोद्यमं स्वस्वकर्माणि, चक्रिरे प्रतिवासरम् ॥ ११ ॥ इत्थं प्रमादादात्मानं, रक्षन्ती सा मनस्विनी ॥ नैव व्यनाशयत्किञ्चि—दपि कृत्यं धनं तथा ॥ १२ ॥ गृहेशोथ गृहे प्राप्त—स्तामुदीक्ष्याप्रमादिनीम् ॥ सर्वस्वस्वामिनीं चक्रे, मुदितस्तद्गुणैर्भृशम् ॥ १३ ॥ इत्यप्रमादो महते गुणाय, भवेदिहैवापगुणाय चान्यः ॥ तस्मात्परत्रापि भवेद्गुणाया—ऽप्रमाद एवेति चराप्रमत्तः ॥ १४ ॥ इति वणिक्पत्नीकथेति सूत्रार्थः ॥ १० ॥ प्रमादमूलं च रागद्वेषाविति सोपायं तत्त्यागमाह—

मूलम्—मुहुं मुहुं मोहगुणे जयंतं, अणेगरूवा समणं चरंतं ।
फासा फुसंती असमंजसं च, न तेसु भिक्खु मणसा पउस्से ॥ १ ॥

व्याख्या—मुहुर्मुहुर्वारं वारं मोहोपकारिणो गुणा मोहगुणाः शब्दादयस्तान् जयन्तमभिभवन्तं, अनेकानि कार्कश्यकुरूपत्वादीनि रूपाणि येषां ते अनेकरूपाः श्रमणं मुनिं चरन्तं संयमाध्वनि गच्छन्तं, स्पृशन्ति स्वानि स्वानि इंद्रियाणि गृह्यमाणतया इति स्पर्शाः, शब्दादयस्ते स्पृशन्ति, गृह्यमाणतयैव सम्बध्नन्ति, 'असमंजसं चत्ति' चशब्दस्यावधारणार्थत्वादसमञ्जसमेव अननुकूलमेव यथास्यात्तथा न तेषु भिक्षुः, 'मणसत्ति' अपेर्गम्यत्वान्मनसापि, आस्तां वाचा कायेन च, प्रद्विष्यात्, अयं भावः—अमनोज्ञशब्दादिषु कथञ्चिदिन्द्रियविषयत्वमापन्नेषु अहो एषामनिष्टत्वमिति न चिन्तयेत् न वा तान् परिहरेदिति सूत्रार्थः ॥ ११ ॥ तथा—

मूलम्—मंदा य फासा बहुलोहणिज्जा, तहप्पगारेसु मणं न कुज्जा ।
रक्खिज्ज कोहं विणइज्ज माणं, मायं न सेवे पयहिज्ज लोहं ॥ १२ ॥

व्याख्या—मन्दयन्ति विवेकिनमपि जनमज्ञतां नयन्तीति मन्दाः, च समुच्चये, स्पर्शाः शब्दाद्याः, बहून् लोभयन्ति मोहयन्तीति बहुलोभनीयाः, अनेन तेषामाक्षेपकत्वमुक्तं, 'तहप्पगारेसुत्ति' अपेर्गम्यमानत्वात्तथाप्रकारेष्वपि बहुलोभनीयेष्वपि मृदुस्पर्शमधुररसादिषु मनश्चित्तं न कुर्यान्न निवेशयेत्, एवं च पूर्वसूत्रेण द्वेषस्य परिहार उक्तः, अनेन च रागस्य, स च कथं स्यादित्याह—रक्षेन्निवारयेत्क्रोधं, विनयेदपनयेन्मानमहङ्कारं, मायां परवञ्चनबुद्धिरूपां न सेवेत न कुर्यात्, 'पयहिज्जत्ति' प्रजह्याल्लोभमभिष्वङ्गरूपं, तथा च क्रोधमानयोर्द्वेषात्मकत्वान्मायालोभयोश्च रागरूपत्वात्क्रोधादिनिग्रह एव रागद्वेषपरिहार इति सूत्रार्थः ॥ १२ ॥ अथ यदुक्तं 'तम्हा समुट्ठाय पहाय कामे' इत्यादि—तत्कदाचिच्चरकादिष्वपि स्यादिति शङ्कापोहार्थमाह—

मूलम्—जे संखया तुच्छपरप्पवाई, ते पिज्जदोसाणुगया परज्झा ।
एए अहम्मुत्ति दुगंच्छमाणो, कंखे गुणे जाव सरीरभेओत्ति बेमि ॥ १३ ॥

॥ इइ चउत्थमज्झयणं सम्मत्तं ॥

व्याख्या—ये इत्यनिर्दिष्टस्वरूपाः संस्कृताः कृत्रिमशुद्धिमन्तो न तु तत्त्ववेदिनः, अत एव तुच्छा यदृच्छाभिधायितया निःसाराः, परप्रवादिनः परतीर्थिकास्ते प्रेमद्वेषानुगता ज्ञेया इति शेषस्तथाहि—सर्वथा सूनृते जिनवाक्येऽपि या कदाग्रहादप्रतीतिः सा न रागद्वेषाभ्यां विनेति भावनीयं, अत एव 'परज्झत्ति' देश्यत्वात् परवशा रागद्वेषग्रहग्रस्ततया तद्वशाः, यदि ते ईदृशास्तर्हि किं कार्यमित्याह—एते अधर्महेतुत्वादधर्मा इत्यमुनोल्लेखेन जुगुप्समाना उन्मार्गगामिनोऽमी इति तत्स्वरूपमवधारयन् न तु निन्दन्, निन्दायाः सर्वत्र निषेधात्, एवं विधश्च किं कुर्यादित्याह—कांक्षेदभिलषेद्गुणान् ज्ञानदर्शनचारित्रादीन् जिनागमोक्तान्, कियत्कालमित्याह—यावच्छरीरभेदो देहात् पृथग्भावो मरणमिति यावत्, अनेन च जैनेष्वेव समुत्थानं कामप्रहाणं च तात्त्विकमन्यत्र तु न तादृशमिति सूचितमिति सूत्रार्थः ॥ १३ ॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्यभुजिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ चतुर्थाध्ययनं सम्पूर्णम् ॥ ४ ॥

## ॥ अथ पञ्चमाध्ययनम् ॥

उक्तं चतुर्थाध्ययनमथाकाममरणीयाख्यं पञ्चममारभ्यते । अस्य चायमभिसम्बन्ध इहानन्तराध्ययने कांक्षेद्गुणान् यावच्छरीरभेद इति वदता मरणं यावदप्रमादो विधेय इत्युक्तं, मरणं च कति भेदं ? किं हेयं ? किञ्चोपादेयमित्यनेन सम्बन्धेनायातमिदं, ततोऽस्य प्रारम्भे मरणविभागो निर्युक्तिकृता प्रोक्तः संक्षेपात्तावदुच्यते । तथाहि—"आवीइ १ ओहि २ अंतिअ ३ वलायमरणं ४ वसट्टमरणं च ५ ॥ अंतोसल्लं ६ तब्भव ७ बालं ८ तहपंडिअं ९ मीसं १० ॥१॥ छउमत्थमरण ११ केवलि १२ वेहायस १३ गिद्धपिट्ठमरणं च १४ ॥ मरणं भत्तपरिण्णा १५ इंगिणि १६ पाओवगमणं च १७ ॥ २ ॥" इति सप्तदशविधमरणम्, तत्र वीचिर्विच्छेदः अंतरमित्यर्थस्तदभावादवीचि, नारकतिर्यग्नरामराणामुत्पत्तिसमयात्प्रभृतिनिजनिजायुःकर्मदलिकानामनुसमयमनुभवनाद्विचटनं तत्प्रधानं मरणमवीचिमरणं १ । अवधिर्मर्यादा, ततश्च यानि नारकादिभवनिबन्धनतया आयुःकर्मदलिकान्यनुभूय म्रियते, मृतो वा यदि पुनस्तान्येवानुभूय मरिष्यति तदा तद्द्रव्यावधिमरणं, सम्भवति हि गृहीतोज्झितानामपि कर्मदलिकानां पुनर्ग्रहणं, परिणामवैचित्र्यात् । एवं क्षेत्रादिष्वपि भावनीयं २ । अन्ते भवमन्तिकं, अयं भावः—यानि नारकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियते मृतो वा न पुनस्तान्यनुभूय मरिष्यति तद्द्रव्यतोऽन्तिकमरणं, एवं क्षेत्रादिष्वपि वाच्यं ३ । "वलायमरणंति" वलतां संयमान्निवर्त्तमानानां, दुश्चरं तपश्चरणं कर्तुं व्रतं मोक्तुञ्चाशक्नुवतां कथञ्चिदस्माकमस्मान्मुक्तिरस्तु इति ध्यायतां यन्मरणं तद्वलन्मरणं, एतच्च भग्नव्रतपरिणामानां मुनीनामेव स्यात् ४ । वशेन इंद्रियविषयविषयेण परवशत्वेन आर्त्ता दीपशिखावलोकनाकुलपतङ्गवदाकुलिता वशार्त्तास्तेषां मरणं वशार्त्तमरणं ५ । अन्तः शल्यं लज्जादिवशादनालोचितदुराचाररूपं येषां ते अन्तःशल्यास्तेषां मरणमन्तःशल्यमरणं, इदञ्चातीव दुष्टं यदाहुः—"एअं ससल्लमरणं, मरिऊण महाभए दुरंतंमि ॥ सुचिरं भमंति जीवा, दीहे संसारकंतारे ॥ ६ ॥ "तब्भवत्ति" यस्मिन् भवे साम्प्रतं प्राणी वर्त्तते तद्भवयोग्यमेवायुर्बद्ध्वा पुनस्तत्क्षयेण यदा म्रियते तदा तद्भवमरणं, इदञ्च संख्यातवर्षायुषां नृतिरश्चामेव, न त्वसंख्यातवर्षायुषां नृतिरश्चां, देवनारकाणां च, तेषां पुनरनन्तरं तद्भवाभावात् ७ । बालानां मिथ्यादृशामविरतसम्यग्दृशां वा मरणं बालमरणम् ८ । पण्डितानां सर्वविरतिमभ्युपगतानां मरणं पण्डितमरणम् ९ । मिश्राणां बालपण्डितानां देशविरतानां मरणं मिश्रमरणम् १० । छद्मस्थानां मतिश्रुतावधिमनःपर्यायज्ञानवतां व्रतिनां मरणं छद्मस्थमरणम् ११ । केवलिनां उत्पन्नकेवलानां मरणं केवलिमरणम् १२ । विहायसि आकाशे भवं वैहायसं, अयं भावः—ऊर्द्ध्वं वृक्षशाखादावुद्बन्धनेन भृगुपातकूपपातशस्त्रादिभिर्वा मरणं वैहायसमरणं १३ । गृध्रैरुपलक्षणत्वाच्छकुनिकाशिवादिभिश्च स्पृष्टं स्पर्शनं यत्र तद्गृध्रस्पृष्टं, इदञ्च मृतगजादिशवान्तः प्रविश्य गृध्राद्यैरात्मानं भक्षयतः स्यात् १४ । भक्तं भोजनं तस्य, उपलक्षणत्वात् पानादेश्च । परिज्ञा, इदं मया भूरिशो भुक्तमेतद्धेतुकञ्चावद्यमिति,

ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परित्यागो भक्तपरिज्ञा तया मरणं भक्तपरिज्ञामरणम् १५ । इङ्ग्यते प्रतिनियतदेश एव चेष्ट्यते यत्र तदिङ्गिनीमरणं, इदञ्च चतुर्विधाहारप्रत्याख्यानवतो नियमितप्रदेशे स्वयमेवोद्वर्त्तनादि कुर्वतो मुनेः स्यात् १६ । पादपो वृक्षः, उपशब्दः सादृश्ये, ततः पादपमुपगच्छति सादृश्येन प्राप्नोतीति पादपोपगमनं, अयं भावः—यथा पादपः पतितः समं विषममित्यचिन्तयन्निश्चलमास्ते परप्रयोगात्तु कम्पते, तथायमपि भगवान् यदङ्गं प्रथमतो यत्र समे विषमे वा पतितं तत्तत्रैव स्थापयति न तु स्वतश्चलयतीति १७ । इदञ्चान्त्यमरणत्रयं यद्यपि वैमानिकत्वमुक्तिलक्षणसमानफलदं, यदुक्तं—"एअं पचक्खाणं, अणुपालेऊण सुविहिओ सम्मं । वेमाणिओ य देवो, हविज्ज अहवा वि सिज्झेज्जा ॥ १ ॥" तथापि विशिष्टविशिष्टतरविशिष्टतमधृतिमतामेवोत्तरोत्तरं सम्भवतीति विशेषात् प्रथमं कनीयः, द्वितीयं मध्यं, तृतीयं ज्येष्ठमिति ध्येयं । एषु च साध्वीनामाद्यमेव । यदाहुः—"सव्वावि अ अज्जाओ, सव्वेवि अ पढमसंघयणवज्जा । सव्वे वि देसविरया, पचक्खाणेण उ मरंति ॥" अत्र हि प्रत्याख्यानशब्देन भक्तपरिज्ञैव ज्ञेया । इङ्गिनीमरणं तु विशिष्टतरधृतिसंहननवतामेव स्यादित्यार्यिकानिषेधादेयावसीयते, पादपोपगमनं तु विशिष्टतमधृतिमतां वज्रर्षभनाराचसंहननवतामेव स्यादुक्तञ्च—"पढमंमि अ संघयणे, वट्टंतो सेलकुड्डसामाणो । तेसिंपि अ वुच्छेओ, चउदसपुव्वाण वुच्छेए ॥ १ ॥" इत्युक्तः संक्षेपान्मरणविभागो विस्तरतस्तु बृहट्टीकातो ज्ञेयः । एषाञ्च मध्ये "धीरेण वि मरिअव्वं, काउरिसेण वि अवस्स मरिअव्वं । तम्हा अवस्समरणे, वरं खु धीरत्तणे मरणं ॥ १ ॥ संसाररंगमज्झे, धीवलसन्नद्धवद्धकच्छो उ । हंतूण मोहमल्लं, हरामि आराहणपडागं ॥२॥" इत्यादि ध्यात्वा धीरैः पण्डितमरणमुपादेयमन्यत्तु हेयमित्यलं प्रसङ्गेन । साम्प्रतं सूत्रमनुगम्यते ।

**मूलम्—अण्णवंसि महोहंसी, एगे तिण्णे दुरुत्तरे । तत्थ एगे महापण्णे, इमं पण्हमुदाहरे ॥ १ ॥**

व्याख्या—अर्णव इवार्णवोऽदृष्टपरपारतया भव एव तस्मिन्, महानोघः प्रवाहो भवपरम्परात्मको यत्र स महौघः तस्मिन्, एको रागद्वेषादिसहभावरहितः, तीर्ण इव तीर्णः तीरप्राप्त इत्यर्थः । दुरुत्तरे दुःखेनोत्तरितुं शक्ये भवार्णवे एव, तत्र सदेवमनुजासुरायां पर्षदि, एकस्तीर्थकरनामकर्मोदयादनुत्तरावासविभूतितया अद्वितीयः, स हि एकदा एक एव भवतीत्येवमुक्तं, महती निरावरणतया अपरिमाणा प्रज्ञा केवलज्ञानलक्षणा यस्य स तथा, इममनन्तरवक्ष्यमाणं प्रष्टव्यार्थरूपमुदाहरेदुदाहृतवानिति सूत्रार्थः ॥ १ ॥ तथा हि—

**मूलम्—सन्तिमे अ दुवेठाणा, अक्खाया मारणंतिआ । अकाममरणं चेव, सकाममरणं तहा ॥ २ ॥**

व्याख्या—"संतित्ति" वचनव्यत्ययात् स्तो विद्येते, इमे प्रत्यक्षे, चः पूरणे, द्वे द्विसंख्ये, तिष्ठन्त्यनयोर्जन्तव इति स्थाने, आख्याते, प्राक्तनतीर्थकरैरपिकथिते । मरणमेवान्तो निजायुषः पर्यन्तो मरणान्तस्तस्मिन् भवे मारणान्तिके, ते एव नामतः प्रकाशयति, अकाममरणं वक्ष्यमाणलक्षणं, चः समुच्चये, एवेति पूर्त्तौ, सकाममरणं तथा वक्ष्यमाणमेवेति सूत्रार्थः ॥ २ ॥ केषां पुनरिमे ? कियद्वारं ? चेत्याह—

**मूलम्—बालाणं अकामं तु, मरणं असइं भवे । पंडिआणं सकामं तु, उक्कोसेणं सइं भवे ॥ ३ ॥**

व्याख्या—बाला इव बालाः सदसद्विवेकविकलास्तेषां अकामं, 'तुत्ति' तुशब्दस्य एवकारार्थत्वादकाममेव मरणमसकृद्वारंवारं भवेत्ते हि विषयाभिष्वङ्गान्मरणमनिच्छन्त एव म्रियन्ते, तत एव च भवाटवीमटन्तो भूयो भूयस्तदेव मरणमासादयन्ति, पण्डितानां चारित्रवतां सह कामेनाभिलाषेण वर्त्तते इति सकामं सकाममिव सकामं, सकामत्वञ्च मरणागमे त्रासाभावात्, तदभावश्च तादृशां मरणस्योत्सवभूतत्वात् । यदाहुः—"सञ्चिततपोधनानां, नित्यं व्रतनियमसंयमरतानाम् ॥ उत्सवभूतं मन्ये, मरणमनपराधवृत्तीनाम् ॥ १ ॥" न तु परमार्थतस्तेषां मरणं प्रति सकामत्वं, मरणाभिलाषस्य निषिद्धत्वादुक्तं हि—"मा मा हु विचिंतेज्जा, जीवामि चिरं मरामि अ लहुंति । जइ इच्छसि तरिउं जे, ससारमहोअहिमपारं ॥ १ ॥" तु शब्दः पूर्वापेक्षया विशेषद्योतकः, तच्च मरणं "उक्कोसेणंति" उत्कर्षोपलक्षितं केवलिसम्बन्धीत्यर्थः, अकेवलिनो हि संयमजीवितं दीर्घं स्पृहयेयुरपि, मुक्तिप्राप्तिरितः स्यादिति । केवलिनस्तु कृतकृत्यतया तदपि नेच्छन्ति आस्तां भवजीवितमिति तन्मरणस्यैवोत्कर्षेण सकामता । "सइंति" सकृदेकवारमेव भवेत्, जघन्येन तु शेषचारित्रिणां सप्ताष्ट वा वारान् स्यादित्याकूतमिति सूत्रार्थः ॥ ३ ॥ अथानयोर्द्वयोः स्थानयोराद्यं स्थानमाह—

**मूलम्—तत्थिमं पढमं ठाणं, महावीरेण देसिअं । कामगिद्धे जहा बाले, भिसं कूराइं कुव्वई ॥ ४ ॥**

व्याख्या—तत्रेति तयोरकाममरणसकाममरणाख्ययोः स्थानयोर्मध्ये इदं वक्ष्यमाणं प्रथमं स्थानं महावीरेण चरमतीर्थकृता, तत्रैको महाग्रन्थ इति सामान्योक्तेरभिव्यक्तिनिमित्तमिदं "देसिअं" प्ररूपितं। किं तदित्याह—कामेषु इच्छामदनात्मकेषु गृद्धोऽभिकांक्षावान् कामगृद्धः, यथेत्युपदर्शनार्थं, बाल उक्तरूपो भृशमत्यर्थं क्रूराणि रौद्राणि प्राणिव्यपरोपणादीनि कर्माणीति शेषः, "कुव्वइत्ति" करोति शक्तौ सत्यां, अशक्तौ तु तन्दुलमत्स्यवन्मनसापि करोति। तानि च कृत्वा प्रक्रमादकाम एव म्रियते इति सूत्रार्थः ॥ ४ ॥ इदमेव स्पष्टयति—

मूलम्—जे गिद्धे कामभोएसु, एगे कूडाय गच्छइ। न मे दिट्ठे परे लोए, चक्खुदिट्ठा इमा रई ॥५॥

व्याख्या—य इत्यनिर्दिष्टनामा गृद्धो लम्पटः, कामौ च शब्दरूपाख्यौ, भोगाश्च स्पर्शरसगन्धाख्याः, कामभोगास्तेषु एकः कश्चिदतिक्रूरकर्मा कूटाय गच्छति। तत्र कूटं द्रव्यतो मृगादिबन्धनं, भावतो मिथ्याभाषणादि, तस्मै प्रवर्त्तते इत्यर्थः। स हि मांसादिलुब्धतया मृगादिबन्धनान्यारभते, मिथ्याभाषणादीनि च सेवते, प्रेरितश्च कैश्चिद्वक्ति, "न मे" इति, न मया दृष्टः परलोको भूतभाविजन्मात्मकः, कदाचिद्विषयरतिरपि तादृश्येव स्यादित्याह, चक्षुषा दृष्टा चक्षुर्दृष्टा, इयं रतिः कामजनिता चित्तप्रह्लात्तिः तत्कथं दृष्टत्यागाददृष्टप्रार्थनयात्मानं वञ्चये? इति तस्याशय इति सूत्रार्थः ॥ ५ ॥ पुनस्तदाशयमेव व्यञ्जयति—

---

(१) चित्तप्रसत्तिः

मूलम्—हत्थागया इमे कामा, कालिआ जे अणागया। को जाणइ परे लोए, अत्थि वा नत्थि वा पुणो॥६॥

व्याख्या—हस्तागताः स्वाधीनतया हस्तप्राप्ता इमे प्रत्यक्षाः कामाः शब्दाद्याः, कालिका अनिश्चितकालान्तरप्राप्तयो ये अनागता भाविभवसत्काः, कथं पुनरमी अनिश्चितलाभाः? इत्याह—क इत्यत्र पुनः शब्दस्य व्यवहितस्य सम्बन्धात्कः पुनर्जानाति? नैव कश्चिदित्यर्थः। यथा परलोकोऽस्ति वा? नास्ति वा? ततः सन्दिग्धे परलोके कः प्रत्यक्षान् कामान् विहाय कालिककामार्थं यतेतेति तस्याभिप्राय इति सूत्रार्थः ॥ ६ ॥ कश्चित्तु ज्ञातपरलोकोपि कामांस्त्यक्तुमशक्त इदमाह—

मूलम्—जणेण सद्धिं होक्खामि, इइ बाले पगब्भइ। कामभोगाणुराएणं, केसं संपडिवज्जइ ॥ ७ ॥

व्याख्या—जनेन लोकेन सार्द्धं सह भविष्यामि, अयं भावः, बहुर्जनो भोगासक्तो तदहमपि तद्गतिं गमिष्यामि! न हि इयान् जनो मूढ इत्यमुना प्रकारेण बालोऽज्ञः प्रगल्भते धार्ष्ट्यमवलम्बते। अलीकवाचालतया स्वयं नष्टः परानपि नाशयति। न च किम्बहुनापि जनेनोन्मार्गप्रस्थितेनेति चिन्तयति! स चैवं कामभोगानुरागेण क्लेशमिह परत्र च सम्प्रतिपद्यते प्राप्नोतीति सूत्रार्थः ॥ ७ ॥ यथा चायं क्लेशं प्राप्नोति तथा प्राह—

मूलम्—तओ से दंडं समारभइ, तसेसु थावरेसु अ। अट्ठाए व अणट्ठाए, भूअग्गामं विहिंसइ ॥८॥

व्याख्या—ततः कामभोगानुरागात्स धृष्टो दण्डं मनोदण्डादिकं समारभते प्रवर्त्तयति, त्रसेषु द्वीन्द्रियादिषु, स्थावरेषु च पृथिव्यादिषु, अर्थाय वित्तप्राप्त्यादिकार्याय, अनर्थाय वा यदात्मनो मित्रादेर्वा नोपयुज्यते तस्मै निरर्थकमित्यर्थः। ननु निरर्थकमपि किं कोपि दण्डमारभते? आरभत एव तादृशपशुपालवत् ॥

तथाहि कोप्यजापालः, संनिवेशे क्वचिद्वसन् ॥ अजाश्चारयितुं नित्य—मटतिस्म वनान्तरे ॥ १ ॥ अजाव्रजे च मध्याह्ने, न्यग्रोधद्रुममाश्रिते ॥ तस्य छायामुपाश्रित्य, सोप्युत्तानतयाऽस्वपीत् ॥ २ ॥ लघुना धनुषा मुक्तै—र्बदरास्थिभिरन्वहम् ॥ वटस्य तस्य पत्राणि, छिद्रयामास चासकृत् ॥ ३ ॥ क्रीडापरेण तेनैवं, प्रायो विद्धाखिलच्छदः ॥ न्यग्रोधो निर्ममे नित्या—भ्यासाद्वा किं न साध्यते? ॥ ४ ॥ तत्र चैकोन्यदा भ्राम्य—न्नागतो गोत्रिविद्रुतः ॥ भूपभूत्तं तथाभूतं, वटं वीक्ष्य विसिष्मिये! ॥ ५ ॥ केनैवमस्य पर्णानि, छिद्रितान्यखिलान्यपि? ॥ इत्यपृच्छच्च तमजापालं भूपालनन्दनः ॥ ६ ॥ सोऽवादीत्क्रीडयैतानि, छिद्रितानि मया सखे! ॥ ततस्तस्मै बहु द्रव्यं, दत्वा राजाङ्गजो जगौ ॥ ७ ॥ मदुक्तमर्त्यनेत्रे त्वं, यदि स्फोटयितुं स्फुटम् ॥ प्रभूयसे तदा कार्यं, समग्रं मम सिद्ध्यति ॥ ८ ॥ स प्रोचे चेत्स पुरुषः, पार्श्ववर्ती भवेन्मम ॥ तदाहं भवतः कार्यं, कर्तुं शक्नोमि नान्यथा ॥ ९ ॥ पशुपालं ततो नीत्वा, पुरमध्ये नृपात्मजः ॥ छन्नमस्थापयद्राज—मार्गासन्ने निकेतने ॥ १० ॥ दायादञ्च निजं राज—पाटिकायै विनिर्गतम् ॥ तस्यादर्शयदस्याशु, नेत्रे स्फोट्ये इति ब्रुवन् ॥ ११ ॥ सोपि चापविमुक्ताभ्यां, गोलिकाभ्यां तदीक्षणे ॥ पक्वस्फोटकवत्सद्यो—ऽस्फोटयत्तस्यमस्फुटः ॥ १२ ॥ ततः सम्प्राप्तसाम्राज्य—स्समाहूय स

भूपभूः ॥ पशुपालमुवाचैवं, ब्रूहि कं ते वरं ददे ? ॥ १३ ॥ सोऽब्रवीद्यत्र तिष्ठामि, देहि ग्रामं तमेव मे ॥ ततस्तं दत्तौ राजा, तदिष्टं तुष्टमानसः ॥ १४ ॥ सोऽथ ग्रामे तत्र तुम्बी-रिक्षूंश्चावापयद्वहून् ॥ निष्पन्नं च गुडं तुम्बैः, सार्कं खादन्निदं जगौ ॥ १५ ॥ "अट्टमट्टं पि सिक्खिज्जा, सिक्खिअं न निरत्थयं ॥ अट्टमट्टप्पसाएण, खज्जए गुड-तुंबयं ॥ १६ ॥" इत्थं गायन् प्रतिदिन-ममन्दामोदमेदुरः ॥ पशुपालः सुखं काल-मतिवाहयति स्म सः ॥ १७ ॥ यथायमर्थेन विना वटस्य, पत्राणि विव्याध दशौ तु सार्थम् ॥ अन्योपि जन्तुर्वितनोति दण्डा-रम्भं तथा सार्थमनर्थकश्च ॥ १८ ॥ इति पशुपालकथा ॥ दण्डमारभत इत्युक्तं, न चासौ दण्डारम्भमात्रेणावतिष्ठते, किन्तु "भूअग्गामंति" भूताः प्राणिनस्तेषां ग्रामः समूहस्तं विविधैः प्रकारैर्हिनस्ति व्यापादयति, अनेन दण्डत्रयव्यापार उक्त इति सूत्रार्थः ॥ ८ ॥ किमयमेतावदेव करोतीत्याह—

मूलम्—हिंसे बाले मुसावाई, माइल्ले पिसुणे सढे । भुंजमाणे सुरं मंसं, सेअमेअंति मन्नइ ॥ ९ ॥

व्याख्या—हिंस्रो हिंसनशीलः सन्, बालो मूढो, मृषावादी मिथ्याभाषणशीलः, 'माइल्लेति' माया परवञ्चनोपायचिन्तनं तद्वान्, पिशुनः परदोषप्रकाशकः, शठो वेषविपर्यासादिना आत्मानमन्यथाभूतं दर्शयति, मण्डिकचौरवत् । अत एव च भुञ्जानः, सुरां मद्यं, मांसं च, श्रेयोऽतिप्रशस्यमेतदिति मन्यते, उपलक्षणत्वाद्भाषते च । "न मांसभक्षणे दोषो, न मद्ये न च मैथुने" इत्यादीति सूत्रार्थः ॥ ९ ॥ तथा—

मूलम्—कायसा वयसा मत्ते, वित्ते गिद्धे अ इत्थिसु । दुहओ मल संचिणइ, सिसुणागुव्व मट्टिअं ॥१०॥

व्याख्या—'कायसत्ति' सूत्रत्वात्कायेन, वचसा वचनेन, उपलक्षणत्वान्मनसा च, मत्तो दृप्तः । तत्र कायेन मत्तो मदान्धगजवत् यतस्ततः प्रवृत्तिमान्, यद्वा अहो ! अहं बलवान् रूपवांश्चेति चिन्तयन्, वचसा स्वगुणान् ख्यापयन् अहो ! अहं सुस्वर इति वा ध्यायन्, मनसा च मदाध्मातचेताः, अहो ! अहमवधारणशक्तिमानिति वा मन्यमानो वित्ते धने गृद्धो गृद्धिमान् । चशब्दो भिन्नक्रमः, ततः स्त्रीषु च गृद्धः । तत्र वित्ते गृद्ध इत्यनेन अदत्तादानग्रहणम् तद्भावभावित्वात्तस्य । तथा स्त्रीषु गृद्ध इत्यनेन तु मैथुनासेवित्वमुक्तं, स हि स्त्रियः संसारसारभूता मन्यते वक्ति च । "सत्यं वच्मि हितं वच्मि, सारं वच्मि पुनः पुनः ॥ अस्मिन्नसारे संसारे, सारं सारङ्गलोचना ॥ १ ॥" तदासक्तश्च मैथुनं सेवत एवेति । ततः स किं कुर्यादित्याह-'दुहओत्ति' द्विधा रागद्वेषाभ्यां मलमष्टप्रकारं कर्म सञ्चिनोति बध्नाति, क इव किमित्याह-शिशुनाग इवालस इव मृत्तिकां, स हि स्निग्धतनुतया बहीरजोभिरवगुण्ड्यते, तामेव चाश्नातीति बहिरन्तश्च मलमुपचिनोति, ततश्च खरतरदिनकरकरनिकरस्पर्शतः शुष्यन्निहैव क्लिश्यते । तथायमप्युपचितकर्मवशादिहैव जन्मनि क्लिश्यते विनश्यति चेति सूत्रार्थः ॥ १० ॥ इदमेव स्पष्टयति—

मूलम्—तओ पुट्ठो आयंकेण, गिलाणो परितप्पइ । पभीओ परलोगस्स, कम्माणुप्पेहि अप्पणो ॥११॥

व्याख्या-'तओत्ति' स एवैकः ततो वा दण्डारम्भाद्युपार्जितमलादनुस्पृष्टोऽभिभूतः, केन ? आतङ्केन आशुघातिना शूलविशूचिकादिरोगेण ग्लानो मन्दः परितप्यते, बहिरन्तश्च खिद्यते । प्रभीतः प्रकर्षेण त्रस्तः 'परलोगस्सत्ति' परलोकात्, आर्षत्वात्पञ्चम्यर्थे षष्ठी, कुत एवं ? यतः कर्म क्रियां अनुप्रेक्षते इत्येवंशीलः कर्मानुप्रेक्षी, कस्य ? आत्मनः, स हि हिंसादिकां स्वचेष्टां स्मरन्मया न किञ्चिच्छुभमाचरितं ! किन्तु सदैवाजरामरवच्चेष्टितमिति ध्यायन् मनसि रोगेण वपुषि च खिद्यते । भवति हि विषयलोलुपमनसोपि प्रायः प्राणत्यागसमयेऽनुतापः ! यदुक्तं-"भवित्रीं भावानां परिणतिमनालोच्य नियतां, पुरा यद्यत्किञ्चिद्विहितमशुभं यौवनमदात् ॥ पुनः प्रत्यासन्ने महति परलोकैकगमने, तदेवैकं पुंसां व्यथयति जराजीर्णवपुषाम् ॥ १ ॥" इति सूत्रार्थः ॥ ११ ॥ एतदेव व्यक्तीकरोति—

मूलम्—सुआ मे नरए ठाणा, असीलाणं च जा गई ॥ बालाणं कूरकम्माणं, पगाढा जत्थ वेअणा ॥१२॥

व्याख्या-श्रुतानि 'मे' मया नरके स्थानानि कुम्भीवैतरण्यसिपत्रवनादीनि, तत्किमियतापि परितप्यत इत्याह-अशीलानां च दुराचाराणां या गतिर्नरकादिका सापि श्रुता, कीदृशीत्याह-बालानामज्ञानां क्रूरकर्मणां हिंसादिरौद्रकर्मकारिणां प्रगाढाः प्रकृष्टा यत्र यस्यां गतौ वेदनाः शीतोष्णाद्याः । ततश्च ममाप्येवंविधानुष्ठानस्य तादृश्येव गतिरिति ध्यायन् परितप्यत इति सूत्रार्थः ॥ १२ ॥ किञ्च—

मूलम्—तत्थोववाइअं ठाणं, जहा मे तमणुस्सुअं ॥ अहा कम्मेहिं गच्छंतो, सो पच्छा परितप्पइ ॥१३॥

व्याख्या-तत्र नरकेषु उपपाते भवमौपपातिकं स्थानं स्थितिः यथा येन प्रकारेण स्यादिति शेषः, मे मया तदि-

त्यनन्तरोक्तमनुश्रुतमवधारितं, गुरुभ्य इति शेषः। अयं भावः—गर्भजत्वे हि गर्भावस्थानावस्थां यावच्छेदभेदादिदुःखानामन्तरमपि स्यात्, औपपातिकत्वे त्वन्तर्मुहूर्त्तानन्तरमेव महावेदनोदय इति कुतस्तदन्तरसम्भवः? तथा च 'अहाकम्मेहिंति' यथाकर्मभिर्गमिष्यमाणगत्यनुरूपैः कर्मभिस्तीव्रतीव्रतराद्यनुभावान्वितैर्गच्छन् तदनुरूपमेव स्थानं स इति बालः पश्चादित्यायुषि हीयमाने परितप्यते, यथा धिग्मां दुष्कर्मकारिणं! किमधुना मन्दभाग्यः करोमि? इत्यादि शोचतीति सूत्रार्थः ॥ १३ ॥ अमुमेवार्थं दृष्टान्तद्वारा दृढयन्नाह—

मूलम्—जहा सागडिओ जाणं, समं हेच्चा महापहं। विसमं मग्गमोइण्णो, अक्खे भग्गंमि सोयइ ॥१४॥

व्याख्या—यथा शाकटिको गंत्रीवाहकः 'जाणंति' जानन् सममुपलादिरहितं हित्वा त्यक्त्वा महापथं राजमार्गं विषमं मार्गमवतीर्णो गन्तुं प्रवृत्तोऽक्षे धुरि भग्ने खण्डिते शोचति, धिग्मे ज्ञानं! यदहं जानन्नपायमवापमिति सूत्रार्थः ॥ १४ ॥ अथोपनयमाह—

मूलम्—एवं धम्मं विउक्कम्म, अहम्मं पडिवज्जिआ। बाले मच्चुमुहं पत्ते, अक्खे भग्गेव सोअइ ॥ १५ ॥

व्याख्या—एवमिति शाकटिकवत् धर्मं शुभाचारं व्युत्क्रम्य उल्लंघ्य अधर्मं हिंसादिकं प्रतिपद्य स्वीकृत्य बालो मूढो मृत्युमुखं मरणगोचरं प्राप्तः अक्षे भग्न इव शोचति, अयं भावः— यथाऽक्षभङ्गे शाकटिकः शोचति तथायमपि मरणावस्थायामात्मानं शोचति, हा! किमेतन्मया कृतमिति सूत्रार्थः ॥ १५ ॥ शोचनानन्तरञ्च किमसौ करोतीत्याह—

मूलम्—तओ से मरणंतंमि, बाले संतस्सई भया॥ अकाममरणं मरइ, धुत्ते वा कलिणा जिए ॥ १६ ॥

व्याख्या—तत इत्यातङ्कोत्पत्तौ शोचनानन्तरं 'सेत्ति' स बालः, मरणमेवान्तो मरणान्तस्तस्मिन्नुपस्थिते इति शेषः, बालो रागादिव्यग्रचित्तः संत्रस्यति बिभेतीत्यर्थः। कुतः? भयान्नरकगतिगमनसाध्वसात्, अनेन तस्याकामत्वमुक्तं, स च तथापि मरणान्न मुच्यत इत्याह—अकामस्यानिच्छतो मरणमकाममरणं तेन म्रियते, सूत्रे चार्षत्वात् द्वितीया, नरकञ्चासौ गच्छति, तत्र चासौ शोचतीति शेषः। क इव कीदृशः सन्? धूर्त्त इव द्यूतकार इव, वाशब्दस्योपमार्थत्वात्कलिना एकेन प्रक्रमाद्दायेन जितः, यथा ह्ययमेकेन दायेन जितः सन्नात्मानं शोचति, तथायमप्यतितुच्छैरतुच्छसंक्लेशफलैर्मर्त्यभोगैर्दिव्यसौख्यं हारितो दुःखी सन् शोचतीति सूत्रार्थः ॥ १६ ॥ प्रस्तुतमर्थं निगमयितुमाह—

मूलम्—एअं अकाममरणं, बालाणं, तु पवेइअं। एत्तो सकाममरणं पंडिआणं सुणेह मे ॥ १७ ॥

व्याख्या—एतदनन्तरमेव दुःकृतकर्मणां परलोकाद्बिभ्यतां यन्मरणमुक्तं तदकाममरणं बालानामेव, 'तु' शब्दस्य एवार्थत्वात् प्रवेदितं प्ररूपितं तीर्थकरादिभिरिति शेषः। पण्डितमरणप्रस्तावनामाह—'एत्तोत्ति' इतोऽकाममरणादनु सकाममरणं पण्डितानां सम्बन्धि शृणुताकर्णयत मे मम वदत इति शेष इति सूत्रार्थः ॥१७॥ यथा प्रतिज्ञातमेवाह—

मूलम्—मरणं पि सपुण्णाणं, जहा मे तमणुस्सुअं। विप्पसन्नमणाघायं, संजयाणं वुसीमओ ॥१८॥

व्याख्या—'मरणमपि आस्तां जीवितमित्यपिशब्दार्थः, भवतीति गम्यते सपुण्यानां पुण्यवतां, किं सर्वमपि? नेत्याह—यथा येनप्रकारेण मे मम कथयत इति शेषः। तदिति पूर्वसूत्रोपात्तं, अनुश्रुतमवधारितं भवद्भिरिति गम्यं, कीदृशं? मरणमित्याह—'विप्पसन्नंति' विविधैर्भावनादिभिः प्रकारैः प्रसन्ना मरणेप्यनाकुलचेतसो विप्रसन्नास्तत्सम्बन्धि मरणमपि विप्रसन्नं, तथा न विद्यते आघातः पीडात्मकस्तादृशयतनया परप्राणिनामात्मनश्च विधिवत्संलिखितशरीरतया यस्मिंस्तदनाघातं, केषां? पुनरिदमित्याह—संयतानां चारित्रिणां 'वुसीमओत्ति' आर्षत्वाद्वश्यवन्तः वश्यान्यायत्तानि प्रस्तावादिन्द्रियाणि विद्यन्ते येषां ते वश्यवन्तस्तेषां, एतच्चार्थात्पण्डितमरणमेव, ततोयमर्थः—यथा ह्येतत्संयतानां वश्यवतां विप्रसन्नमनाघातं च भवति तथा नाऽन्यप्राणिनामिति सूत्रार्थः ॥ १८ ॥ किञ्च—

मूलम्—ण इमं सव्वेसु भिक्खुसु, न इमं सव्वेसु गारिसु। नाणासीला अगारत्था, विसमसीला य भिक्खुणो१९

व्याख्या—नेदं पण्डितमरणं 'सव्वेसु भिक्खुसुत्ति' सूत्रत्वात्सर्वेषां भिक्षूणां परदत्तोपजीविनां व्रतिनामिति यावत्, किन्तु केषाञ्चिदेवोपचितपुण्यानां भावभिक्षूणां। तथा च तद्गृहस्थानां दूरापास्तमेव, अत एवाह—नेदं सर्वेषामगारिणां, सर्वचारित्रिणामेव तत्सम्भवात्, सर्वचारित्रपरिणामे तु सति तेषामपि तत्त्वतो यतित्वात्। कुत एवं? यतो नानाशीला अनेकविधव्रता अगारस्था गृहस्था अनेकविधभङ्गकोपेतत्वाद्देशविरतेः। विषमशीलाश्च विसदृशशीलाश्च भिक्षवो, न हि सर्वेजिनमतप्रतिपन्ना अप्यनिदानिनोऽविकलचारित्रिणो वा म्रियन्ते! तर्हि क तीर्थान्तरीयाः? इति सूत्रार्थः ॥ १९ ॥ विषमशीलतामेव भिक्षूणां समर्थयितुमाह—

मूलम्—संति एगेहिं भिक्खूहिं, गारत्था संजमुत्तरा। गारत्थेहि अ सव्वेहिं, साहवो संजमुत्तरा ॥ २० ॥

व्याख्या—सन्ति विद्यन्ते एकेभ्यः कुप्रवचनभिक्षुभ्यः 'गारत्थत्ति' सूत्रत्वादगारस्थाः संयमेन देशविरत्यात्मकेन उत्तराः प्रधानाः संयमोत्तराः, कुतीर्थिकभिक्षवो हि जीवास्तिक्यादिरहिताः सर्वथाऽचारित्रिणश्चेति कथं नेभ्यः सम्यग्दृशो देशचारित्रिणो गृहिणः संयमोत्तरा न स्युः ? किञ्च अगारस्थेभ्यश्च सर्वेभ्य इति, अनुमतिवर्जसर्वोत्तमदेशविरतिं प्राप्तेभ्योऽपि साधवः संयमोत्तराः सम्पूर्णसंयमान्वितत्वात्तेषां। अत्र च वृद्धवादो यथा—कोपि श्राद्धः साधुं पप्रच्छ, श्राद्धसाध्वोः किमन्तरमिति ? साधुरूचे मेरुसर्षपान्तरं। तदाकर्ण्याकुलीभूतः पुनः पप्रच्छ, कुलिङ्गिश्राद्धयोः किमन्तरं ? मुनिः स्माह तदेव, ततः प्रसादमाससादेति। उक्तञ्च—"देमिक्कदेसविरया, समणाणं सावगा सुविहिआणं॥ तेसिं परपासंडा, सइमं पि कलं न अग्घंति ॥ १ ॥" तदेवं भिक्षूणामपि तेषां चारित्राभावात् पण्डितमरणाभाव एवेति सूत्रार्थः ॥ २० ॥ ननु कुतीर्थिकभिक्षवोपि नानालिङ्गधरा एव, तत्कथं तेभ्यो गृहस्थाः संयमोत्तराः ? इति सन्देहापोहायाह—

मूलम्—चीराजिणं नगिणिणं, जडी संघाडि मुंडिणं। एआइं पि न ताइंति, दुःसीलं परिआगयं ॥ २१ ॥

व्याख्या—चीराणि च चीवराणि, अजिनं च मृगादिचर्म, चीराजिनं। 'नगिणिणंति' आर्षत्वान्नाग्न्यं, 'जडित्ति' भावप्रधानत्वान्निर्देशस्य जटित्वं, संघाटी वस्त्रसंहतिजनिता कंथेत्यर्थः, 'मुंडिणंति मुंडत्वं, एतान्यपि निजनिजप्रक्रियाकल्पितानि व्रतिलिङ्गान्यपि, किं ? पुनर्गार्हस्थ्यमित्यपिशब्दार्थः, न नैव त्रायन्ते नरकादिदुर्गतेः, कमित्याह—दुःशीलं दुराचारं 'परिआगयंति' पर्यायागतं प्रव्रज्यापर्यायं प्राप्तं, आर्षत्वाच्च याकारस्यैकस्य लोपः। न हि कषायकलुषचेतसोऽतिकष्टहेतुरपि बहिर्विवेकवृत्तिर्नरकादिकुगतिनिवारणायालं ! ततो न लिङ्गधारणं वैशिष्ट्यहेतुरिति सूत्रार्थः ॥२१॥ ननु ? कथं गृहाद्यभावेपि तेषां दुर्गतिरिति चेदुच्यते—

मूलम्—पिंडोलएव्व दुस्सीले, नरगाओ न मुच्चई। भिक्खाए वा गिहत्थे वा, सुव्वए कमई दिवं ॥ २२ ॥

व्याख्या—'पिंडोलएवत्ति' वा—शब्दोऽपि शब्दार्थस्ततश्च पिण्डावलगकोऽपि[1] स्वीयाहाराभावतो भैक्ष्यसेवकोपि, आस्तां गृहादिमान्, दुःशीलो नरकात्स्वकर्मोपस्थापितात् सीमन्तकादेर्न मुच्यते। तत्र चोदाहरणं तथाविधद्रमकः—

तथाहि द्रमकः कोपि, पुरे राजगृहेऽभवत् ॥ स च भिक्षाकृते नित्यं, बभ्राम सकले पुरे ॥ १ ॥ वैभारगिरिपार्श्वस्थ—मुद्यानं स गतोन्यदा ॥ उद्यानिकार्थमायातं, जनं भुञ्जानमैक्षत ॥ २ ॥ ततः स तत्र भिक्षार्थं, पर्यभ्राम्यन्मुहुर्मुहुः ॥ वदन्नुच्चैः स्वरं दीन—वचांसि रसलोलुपः ॥ ३ ॥ न तु कोपि ददौ तस्मै, भाग्यहीनाय किञ्चन ॥ ततः प्रद्विष्टचित्तः स, दुष्टधीरित्यचिन्तयत् ॥ ४ ॥ अमी हि कुक्षिम्भरयो, भक्षयन्त्यखिलं स्वयम् ॥ दीनाय न तु मे स्वल्पमपि यच्छन्ति निर्दयाः ॥ ५ ॥ तदमूनुपवैभारं, निविष्टान् दुष्टचेतसः ॥ कयाचिच्छिलया तूर्णं, चूर्णयामीति चिन्तयन् ॥ ६ ॥ वैभारगिरिमारुह्य, स क्रोधाध्मातमानसः ॥ सर्वात्मना विलग्यैकां, शिलां गुर्वीमचीचलत् ॥ ७ ॥ [ युग्मम् ] तस्यां विलुण्ठितायां द्राक्, स पृथक् स्थातुमक्षमः ॥ लुण्ठंस्तया समं तस्या, एवाधस्तादुपाययौ ॥ ८ ॥ ततस्तया क्षुण्णतनुः स रौद्र—ध्यानानुबन्धी द्रमको विपद्य ॥ तमस्तमायां भुवि नारकत्वं, मध्येऽप्रतिष्ठानमवाप पापात् ॥ ९ ॥ इति द्रमककथा। ततो न भिक्षुत्वमात्रं कुगतिनिवारकं, ननु ? तर्हि तत्वतः किं सुगतिहेतुरित्याह—'भिक्खाए वत्ति' भिक्षामत्ति भुंक्ते इति भिक्षादः, वा विकल्पे, अनेन व्रती प्रोक्तः, गृहस्थो वा, सुष्ठु शोभनं निरतिचारतया सम्यग्भावानुगतया च व्रतं शीलपालनात्मकं यस्येति सुव्रतः, क्रामति गच्छति दिवं देवलोकं। मुख्यतया व्रतपालनस्य मुक्तिहेतुत्वेऽपि दिवं क्रामतीति कथनं जघन्यतोऽपि देवलोकावासिरितः स्यादिति सूचनार्थं, अनेन च व्रतपालनमेव तत्वतः सुगतिहेतुरिति प्रोक्तमिति सूत्रार्थः ॥ २२ ॥ अथ यैर्व्रतैर्गृहस्थोऽपि दिवं याति तान्याह—

मूलम्—आगारिसामाइअंगाइं, सड्ढी काएण फासए। पोसहं दुहओ पक्खं, एगराइं न हावए ॥ २३ ॥

व्याख्या—आगारिणो गृहिणः सामायिकं सम्यक्त्वश्रुतदेशविरतिरूपं तस्याङ्गानि निःशङ्कताकालाध्ययनाणुव्रतादिरूपाणि अगारिसामायिकांगानि 'सड्ढीत्ति' श्रद्धावान् कायेन उपलक्षणत्वान्मनसा वाचा च 'फासएत्ति' स्पृशति सेवते, तथा पौषधं आहारपौषधादिकं 'दुहओ पक्खंति' प्राकृतत्वात् द्वयोरपि सितेतररूपयोः पक्षयोः चतुर्दशीपूर्णिमादितिथिषु 'एगराइंति' अपेर्गम्यमानत्वादेकरात्रिमपि केवलरात्रिसम्बन्धिनमपीत्यर्थः, उपलक्षणत्वाच्चैकदिनमपि

[1] पिण्ड परदत्तग्रासमवलगते सेवते इति पिण्डावलगः स एव पिण्डावलगकः।

न 'हावएत्ति' न हापयेन्न हानिं प्रापयेत्, रात्रिग्रहणं तु दिवा व्याकुलतया कर्तुमशक्तौ रात्रावपि पौषधं कुर्यादिति सूचनार्थं। इह च सामायिकाङ्गत्वेनैव सिद्धे यदस्य भेदेनोपादानं तदादरख्यापनार्थमिति सूत्रार्थः ॥ २३ ॥ प्रस्तुतमेवार्थमुपसंहरन्नाह—

मूलम्—एवं सिक्खासमावण्णे, गिहंवासे वि सुव्वए। मुच्चई छविपव्वाओ, गच्छे जक्खसलोगयं ॥ २४॥

व्याख्या—एवमुक्तन्यायेन शिक्षया व्रतात्मिकया समापन्नो युक्तः शिक्षासमापन्नः गृहवासेप्यास्तां दीक्षापर्याय इत्यपिशब्दार्थः, सुव्रतः शोभनव्रतो मुच्यते मुक्तिमाप्नोति, कुत इत्याह—'छविपव्वाओत्ति' छविस्त्वक्, पर्वाणि जानुकूर्परादीनि, तयोः समाहारे छविपर्व तद्योगादौदारिकं देहमपि छविपर्व तस्मात्ततश्च गच्छेत् यायात्, यक्षा देवाः, समानो लोकोऽस्येति सलोकः तस्य भावः सलोकता सादृश्यमित्यर्थः, यक्षैः सलोकता यक्षसलोकता तां। इयं च देवगतावेव स्यादित्यर्थाद्देवगतिं। अनेन च पण्डितमरणावसरे प्रसङ्गाद्बालपण्डितमरणमुक्तमिति सूत्रार्थः ॥ २४ ॥ अथ प्रस्तुतं पण्डितमरणमेव फलोपदर्शनद्वारेणाह—

मूलम्—अह जे संवुडे भिक्खू, दुण्हमन्नयरे सिआ। सव्वदुक्खप्पहीणे वा, देवेवावि महिड्ढिए॥ २५ ॥

व्याख्या—अथेत्युपदर्शने, यः कश्चित्संवृतः पिहितसमग्राश्रवद्वारो भिक्षुर्भावसाधुः स च द्वयोरन्यतर एकतरः स्यात्, ययोर्द्वयोरेकतरः स्यात्तावाह—सर्वाणि यानि दुःखानि क्षुत्पिपासाभीष्टवियोगानिष्टसंयोगादीनि तैः प्रकर्षेण पुनरनुत्पादलक्षणेन हीनो रहितः सर्वदुःखप्रहीणो वा स्यादिति सम्बन्धः, स च सिद्ध एव देवो वा स्यात्, अपिः सम्भावने, सम्भवति हि संहननादि वैकल्यान्मुक्तेरप्राप्तौ देवोऽपि स्यादिति, कीदृक्? महर्द्धिक इति सूत्रार्थः ॥ २५ ॥ यत्रासौ देवो भवति तत्र कीदृशा आवासाः कीदृशाश्च देवा इत्याह—

मूलम्—उत्तराइं विमोहाइं, जुइमंताणुपुव्वसो। समाइण्णाइं जक्खेहिं, आवासाइं जसंसिणो ॥ २६ ॥

व्याख्या—उत्तरा उपरिवर्त्तिनोऽनुत्तरविमानाख्या विमोहा इव विमोहा अल्पवेदादिमोहनीयत्वात्, द्युतिमन्तो दीप्तिमन्तः, 'अणुपुव्वसोत्ति' आनुपूर्व्या क्रमेण विमोहादिविशेषणविशिष्टाः, सौधर्मादिषु हि अनुत्तरविमानान्तेषु पूर्वापूर्वापेक्षया प्रकर्षवन्त्येव विमोहत्वादीनि विशेषणानि। तथा समाकीर्णा व्याप्ता यक्षैर्देवैरावासाः, प्राकृतत्वान्नपुंसकलिङ्गत्वं सर्वत्र। देवास्तु तत्र यशस्विनः श्लाघान्विताः ॥ २६ ॥ तथा—

मूलम्—दीहाउआ इड्ढिमंता, समिद्धा कामरूविणो। अहुणोववन्नसंकासा, भुज्जो अच्चिमालिप्पभा ॥२७॥

व्याख्या—दीर्घायुषश्चिरजीविनः, ऋद्धिमन्तो रत्नादिसम्पदुपेताः, 'समिद्धा' अतिदीप्ताः, कामरूपिणः अभिलाषानुरूपरूपविधायिनः, अनुत्तरेष्वपि तच्छक्तियुक्तत्वात्, अधुनोपपन्नसंकाशास्तत्कालोत्पन्नदेवकल्पाः, अनुत्तरेषु हि वर्णद्युत्यादि यावदायुस्तुल्यमेव स्यात्, 'भुज्जोत्ति' भूयांसः प्रभूता ये अर्चिर्मालिनः सूर्यास्तद्वत् भा येषां ते तथा। न त्वेकस्यार्कस्य तादृशी द्युतिरस्तीति सूत्रार्थः ॥ २७ ॥ उपसंहर्तुमाह—

मूलम्—ताणि ठाणाणि गच्छंति, सिक्खित्ता संजमं तवं। भिक्खाए वा गिहत्थे वा, जे संति परिनिव्वुआ २८॥

व्याख्या—तान्युक्तरूपाणि स्थानानि आवासान् गच्छन्ति शिक्षित्वाऽभ्यस्य, संयमं सप्तदशभेदं, तपो द्वादशभेदं, भिक्षादा वा गृहस्था वा, प्राकृतत्वाद्वचनव्यत्ययः, ये शान्त्या उपशमेन परिनिर्वृताः विध्यातकषायानलाः शान्तिपरिनिर्वृता भवन्तीति शेष इति सूत्रार्थः ॥ २८ ॥ एतच्च विज्ञाय मरणेपि महात्मानो यथाभूता भवन्ति तथाह—

मूलम्—तेसिं सुच्चा सपुज्जाणं, संजयाणं वुसीमओ। न संतसंति मरणंते, सीलवंता बहुस्सुआ ॥ २९ ॥

व्याख्या—तेषामनन्तरोक्तस्वरूपाणां यतीनां श्रुत्वा आकर्ण्य पूर्वोक्तस्थानावाप्तिमिति शेषः। कीदृशानामित्याह—सतामिन्द्रादीनां पूज्याः सत्पूज्यास्तेषां संयतानां संयमवतां 'वुसीमओत्ति' प्राग्वत्, न संत्रस्यन्ति नोद्विजन्ते मरणान्ते उपस्थिते शीलवन्तश्चारित्रवन्तो बहुश्रुता आगमवचःश्रवणशुद्धधियः, अयं भावः—अज्ञातधार्मिकगतयोऽनुपार्जितधर्माणश्च मरणादुद्विजन्ते, यथा क्वाऽस्माभिर्गन्तव्यमिति, न तु निश्चितसद्गतिगमना उपार्जितधर्माणः। यदाहुः—

"चरितो निरुपक्लिष्टो, धर्मो हि मयेति निर्वृतः स्वस्थः। मरणादपि नोद्विजते, कृतकृत्योस्मीति धर्मात्मा ॥ १ ॥"

इति सूत्रार्थः ॥ २९ ॥ इत्थं सकाममरणस्वरूपमभिधाय शिष्योपदेशमाह—

---

१ वश्यान्यायत्तानि प्रस्तावादिन्द्रियाणि विद्यन्ते येषां ते वश्यवन्तस्तेषाम्॥

मूलम्—तुलिआ विसेसमादाय, दयाधम्मस्स खंतिए। विप्पसीएज्ज मेहावी, तहाभूएण अप्पणा॥३०॥

व्याख्या—तोलयित्वा परीक्ष्य, बालमरणपण्डितमरणे, विशेषञ्च बालमरणात् पण्डितमरणस्य विशिष्टत्वं, आदाय गृहीत्वा दयाधर्मस्य च, यतिधर्मस्य च, चस्य गम्यत्वात् विशेषमशेषधर्मातिशायित्वलक्षणमादाय क्षान्त्या क्षमया करणभूतया विप्रसीदेत् प्रसन्नतां भजेत , न तु कृतद्वादशवर्षसंलेखनतथाविधतपस्विवन्निजाङ्गुलिभङ्गादिना कषायमवलम्बेत मेधावी मर्यादावर्त्ती, तथाभूतेन यथामरणकालात्पूर्वमनाकुलमना अभूत् मरणकालेऽपि तथास्थितेनात्मनोपलक्षित इति सूत्रार्थः ॥ ३० ॥ विप्रसन्नश्च किं कुर्यादित्याह—

मूलम्—तओ काले अभिप्पेए, सड्ढी तालिसमंतिए। विणइज्ज लोमहरिसं, भेअं देहस्स कंखए ॥३१॥

व्याख्या—ततः कषायोपशान्तेरनन्तरकाले मरणकाले अभिप्रेते अभिरुचिते, कदा च मरणमभिप्रेतं ? यदा योगा नोत्सर्पन्ति, 'सड्ढीत्ति' श्रद्धावान् तादृशं मरणभयोत्थं अन्तिके समीपे गुरूणामिति शेषः विनयेदपनयेद्रोमहर्षं, हा ! अहं मरिष्यामीत्यभिप्रायोद्भवं रोमाञ्चं, किञ्च भेदं विनाशं देहस्य कांक्षेदिव कांक्षेत्त्यक्तपरिकर्मतया, न तु मरणासंशया, हेयत्वात्तस्या इति सूत्रार्थः ॥ ३१ ॥ निगमयितुमाह—

मूलम्—अह कालम्मि संपत्ते,आघायाय समुस्सयं। सकाममरणं मरइ,तिण्हमन्नयरं मुणित्ति बेमि ॥३२॥

व्याख्या—अथ मरणाभिलाषानन्तरं काले मरणकाले सम्प्राप्ते "निप्फाइआ य सीसा, सउणी जह अंडयं पयत्तेणं ॥ बारस संवच्छरिअं, अह संलेहं तो करेइ ॥ १ ॥" इत्यादिना क्रमेण समायाते, आघाताय संलेखनादिक्रमेण विनाशाय 'समुस्सयंति' स्यादिव्यत्ययात्समुच्छ्रयस्यान्तः कार्मणदेहस्य बहिरौदारिकाङ्गस्य, किं कुर्यादित्याह—सकामस्येव साभिलाषस्येव मरणं सकाममरणं तेन म्रियते, त्रयाणां भक्तपरिज्ञेङ्गिनीपादपोपगमनानामन्यतरेण सूत्रत्वाद्विभक्तिव्यत्ययः सर्वत्र मुनिः साधुरिति सूत्रार्थः ॥ ३२ ॥ इति ब्रवीमिति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ पञ्चमाध्ययनं सम्पूर्णम् ॥ ५ ॥

## ॥ अथ षष्ठाध्ययनम् ॥

॥ अर्हन् ॥ उक्तं पञ्चमाध्ययनमथक्षुल्लनिर्ग्रन्थीयाख्यं षष्ठमारभ्यते, अस्य चायं सम्बन्धोऽनन्तराध्ययने मरणविभक्तिरुक्ता तत्र चान्ते पण्डितमरणमुक्तं तच्च विद्याचरणसम्पन्नानां निर्ग्रन्थानामेव स्यात् इति तत्स्वरूपमनेनोच्यते इत्यनेन सम्बन्धेनायातस्यास्यादौ निर्युक्तिकारोक्तं पञ्चनिर्ग्रन्थस्वरूपं बृहट्टीकातो ज्ञेयमत्र तु सूत्रमेवानुस्रियते, तच्चेदं—

मूलम्—जावंतविज्जा पुरिसा, सव्वे ते दुक्खसंभवा। लुप्पंति बहुसो मूढा, संसारंमि अणंतए ॥ १ ॥

व्याख्या—यावन्तो यत्परिमाणाः, न विद्यते विद्या तत्वज्ञानात्मिका येषां ते अविद्याः, पुरुषा नराः, सर्वे ते दुःखस्य सम्भव उत्पत्तिर्येषु ते दुःखसम्भवाः । ईदृशः सन्तो लुप्यन्ते दारिद्र्यादिभिर्बाध्यन्ते, बहुशोऽनेकशः मूढा हिताहितविवेकं प्रत्यसमर्थाः, संसारे भवे अनन्तके अन्तरहिते, अनेन निर्ग्रन्थस्वरूपज्ञापनार्थं तद्विपक्ष उक्त इति भावनीयं। अत्र चायं कथानकसम्प्रदायस्तथाहि—

एकः कोपि पुमान् दौःस्थ्यो—पद्रुतो भाग्यवर्जितः ॥ कृष्यादि कुर्वन्नपि नो, तत्फलं किञ्चिदासदत् ॥ १ ॥ ततो गृहाद्विनिर्गत्य, द्रविणोपार्जनाय सः ॥ उपायान् विविधान् कुर्वन् , भूयो बभ्राम भूतले ॥ २ ॥ न तु किञ्चिदपि प्राप, धनमुद्यमवानपि ॥ अप्युद्यतैः श्रमिरिव, न श्रीः पुण्यं विनाप्यते ॥ ३ ॥ निष्फलभ्रमणेनाथ, निर्विण्णः स

गृहं प्रति ॥ न्यवर्त्तिष्ट विनालाभ–मुद्यमो हि श्लथो भवेत् ॥ ४ ॥ स चान्यदा क्वचिद्ग्रामे, निशि वासार्थमागतः ॥ तस्थौ देवकुले स्थाना–यासितस्तत्रैव तादृशाम् ॥ ५ ॥ तत्र तत्रस्थिते पश्य–त्येव देवकुलात्ततः ॥ विद्यासिद्धः कुम्भपाणिः, पुरुषः कोऽपि निर्ययौ ॥ ६ ॥ सोऽपि तं कुम्भमभ्यर्च्या–वादीदतिमनोरमम् ॥ कुरु वासगृहं शय्या–सनभार्यादिसंयुतम् ॥ ७ ॥ तेनाथ कामकुम्भेन, तदुक्ते निर्मितेऽखिले ॥ तत्र स्थित्वाऽभुक्त भोगान्, सोऽङ्गनाभिः सहाद्भुतान् ॥ ८ ॥ सञ्जहार प्रभाते च, तत्सर्वमपि सत्वरम् ॥ तत्स्वरूपं तदखिलं, दुःस्थमर्त्यो ददर्श सः ॥ ९ ॥ दध्यौ चैवं निष्फलेन, किमायासेन मेऽमुना ॥ एनमेवाथ सेविष्ये, कामितार्थसुरद्रुमम् ॥ १० ॥ ध्यात्वेति सेवनं तस्य, कुर्वन् विनयपूर्वकम् ॥ स तन्मनो वशीचक्रे, विनयाद्वा न किं भवेत् ? ॥ ११ ॥ ततः सिद्धपुमानूचे, ब्रूहि किं ते समीहितम् ? ॥ विना समीहां सेवा हि, न केनापि विधीयते ॥ १२ ॥ स स्माहाहं जन्मतोऽपि, दारिद्र्येणास्मि विद्रुतः ॥ न चाप्नोमि धनं किञ्चित्, प्रयत्नैर्विविधैरपि ॥१३॥ दौःस्थ्यस्यैवापनोदाय, बम्भ्रमीमि महीतले ॥ स्निग्धं मित्रमिवोपान्तं, न तु तन्मे विमुञ्चति ॥ १४ ॥ त्वाञ्चोपकारिणं प्रेक्ष्य, हृद्यविद्यासुधाम्बुदम् ॥ दारिद्र्यग्रीष्मसन्ताप–समुत्तप्तः श्रितोस्म्यहम् ॥ १५ ॥ तत् प्रसद्य महाभाग !, तथा कुरु यथा मम ॥ त्वद्दत्तसुखोपभोगः स्या–त्सन्तो ह्याश्रितवत्सलाः ॥ १६ ॥ तच्छ्रुत्वा ध्यातवान् सिद्ध–पुमानेवमहो ! अयम् ॥ दुरवस्थापराभूतो, जायते भृशमातुरः ॥ १७ ॥ व्रतं सत्पुरुषाणाञ्च, दीनादीनामुपक्रिया ॥ तदस्योपकृतिं कृत्वा, करोमि सफलं जनुः ॥ १८ ॥ ध्यात्वेत्यूचे सिद्धविद्यः, किमु विद्यां ददामि ते ॥ विद्याभिमंत्रितं कुम्भ–मथवेति निगद्यताम् ॥ २० ॥ भोगाभोगोत्सुकः सोथ, विद्यासाधनभीरुकः ॥ विद्याधिवासितं कुम्भ–मेव देहीत्युवाच तम् ॥ २० ॥ विद्यासिद्धस्ततस्तस्मै, सद्यस्तं कलशं ददौ ॥ दक्षः कक्षीकृते ह्यर्थे, विलम्बं नावलम्बते ॥ २१ ॥ दुःस्थमर्त्योपि तं कुम्भ–मादायामोदमेदुरः ॥ ययौ तूर्णं निजग्राम–मिति दध्यौ च चेतसि ॥२२ ॥ देशान्तरप्राप्तया किं, पीनयापि तया श्रिया ॥ यां विद्विषो न पश्यन्ति, या च मित्रैर्न भुज्यते ॥ २३ ॥ इत्यसौ घटमाहात्म्यात्, कृत्वा वेश्मादि कामितं ॥ स्वच्छन्दं बुभुजे भोगान्, बन्धुमित्रादिभिः समम् ॥ २४ ॥ स्वतः सिद्धेषु भोगेषु, किमेभिरिति बुद्धयः ॥ तदा कृष्यादिकर्माणि, मुमुचुस्तस्य बन्धवः ॥ २५ ॥ धेन्वादीनां पशूनाञ्च, रक्षां चक्रुर्न ते जडाः ॥ नश्यन्ति स्म ततस्तेपि, तिष्ठेद्वा किमरक्षितम् ? ॥ २६ ॥ सुखीकृतोऽमुना बन्धु–युक्तोऽहमिति सम्मदात् ॥ पीतासवोऽन्यदा स्कन्धा–हितकुम्भो ननर्त सः ॥ २७ ॥ उन्मत्तस्य करात्तस्य, विच्युतः कलशस्ततः ॥ सद्योऽभूच्छतधा भाग्य–हीनस्येव मनोरथः ॥ २८ ॥ कुम्भप्रभावप्रभवं, भवनं विभवादि च ॥ ततो गन्धर्वनगर–मिव तूर्णं तिरोदधे ॥ २९ ॥ कुम्भोत्थया प्राच्यया च, सम्पदा रहिता भृशम् ॥ ततस्तेऽन्वभवद्दुःखं, सर्वेऽन्यप्रेष्यतादिभिः ॥ ३० ॥ अथ प्रागेव तां विद्यामग्रहीष्यत्स चेत्स्वयम् ॥ एकस्य तस्य भङ्गेऽन्य–मकरिष्यत्तदा घटम् ॥ ३१ ॥ विद्यां विना तु कलशं, तादृशं कर्तुमक्षमः ॥ नित्यं दौर्गत्यसाङ्गत्या–दत्यन्तं व्याकुलोऽभवत् ॥ ३२ ॥ यथा प्रमादादनुपात्तविद्यः, स मन्दधीर्दुःखमिहैव लेभे ॥ तथाङ्गिनोऽन्येपि लभन्ति तत्व–ज्ञानं विना दुःखमनेकभेदम् ॥ ३३ ॥ इति विद्याहीनत्वे दुःस्थकथेति सूत्रार्थः ॥ १ ॥ यतश्चैवं ततो यत्कार्यं तदाह—

मूलम्—समिक्खं पंडिए तम्हा, पास जाइपहे बहू ॥ अप्पणा सच्चमेसिज्जा, मित्तिं भूएसु कप्पए ॥ २ ॥

व्याख्या—समीक्ष्य आलोच्य पण्डितस्तत्त्वातत्त्वविवेकनिष्णः, 'तम्हत्ति' यस्मादेवमविद्यावन्तो लुप्यन्ते तस्मात्, किं समीक्ष्येत्याह–'पासेत्यादि'–पाशा इव पाशा अत्यन्तपारवश्यहेतवो भार्यादिसम्बन्धास्त एव तीव्रमोहोदयादिहेतुतया जातीनामेकेन्द्रियादिजातीनां पन्थानस्तत्प्रापकत्वान्मार्गाः पाशजातिपथास्तान् बहून् प्रभूतान् विद्यारहितानां विलुप्तिहेतून्, किं कुर्यादित्याह–आत्मना स्वयं न तु परोपरोधादिना, सद्भ्यो जीवेभ्यो हितः सत्यः संयमस्तं एषयेद्गवेषयेत्, किञ्च मैत्रीं मित्रभावं भूतेषु पृथिव्यादिप्राणिषु कल्पयेत्कुर्यादिति सूत्रार्थः ॥ २ ॥ अपरञ्च—

मूलम्—माया पिआ ण्हुसा भाया, भज्जा पुत्ता य ओरसा । नालं ते मम ताणाय, लुप्पंतस्स सकम्मुणा ॥३॥

व्याख्या—पूर्वार्धं स्पष्टं, नवरं 'ण्हुसत्ति' स्नुषा पुत्रवधूः, 'ओरसत्ति' उरसि भवा औरसाः स्वयमुत्पादिता इत्यर्थः, नालं न समर्थास्ते मात्रादयो मम त्राणाय रक्षणाय लुप्यमानस्य स्वकर्मणा ज्ञानावरणीयादिनेति ॥ ३ ॥ ततश्च—

मूलम्—एअमट्ठं सपेहाए, पासे समिअ दंसणे । छिंद गेहिं सिणेहं च, न कंखे पुव्वसंथवं ॥ ४ ॥

१ आत्मनेपदस्यानित्यत्वादय प्रयोगः समर्थनीय. ॥

व्याख्या—एवमनन्तरोक्तमर्थं स्वप्रेक्षया स्वबुद्ध्या 'पासेत्ति' पश्येदवधारयेत्, शमितमुपशमितं दर्शनं प्रस्तावान्मिथ्यात्वात्मकं येन स शमितदर्शनः सम्यग्दृष्टिः सन्, 'छिंदत्ति' सूत्रत्वात् छिंद्यात्, गृद्धिं विषयाभिष्वङ्गरूपां, स्नेहञ्च स्वजनादिप्रेम, न नैव कांक्षेदभिलषेत् पूर्वसंस्तवं पूर्वपरिचयं, एकग्रामोषितोऽयमित्यादिकं, यतो न कोपि दुःखोत्पत्तौ अत्रामुत्र वा त्राणाय धर्मं विनेति सूत्रद्वयार्थः ॥ ४ ॥ एनमेवार्थं विशेषतोऽनूद्यास्यैव फलमाह—

**मूलम्—गवासं मणिकुंडलं, पसवो दासपोरुसं । सव्वमेअं चइत्ता णं, कामरूवी भविस्ससि ॥ ५ ॥**

व्याख्या—गावश्च अश्वाश्च गवाश्वं, अत्र गोशब्देन धेनवो वृषभाश्च गृह्यन्ते, पशुत्वेऽप्यनयोः पृथगुपादानमत्यन्तोपयोगित्वेन प्राधान्यात्, मणयश्च चन्द्रकान्ताद्याः, कुण्डलानि च कर्णाभरणानि मणिकुण्डलं, उपलक्षणं चैतत्स्वर्णादीनां सर्वभूषणानाञ्च। पशवोऽजैडकादयः । दासाश्च गृहजातादयः 'पोरुसंति' सूत्रत्वात् पौरुषेयं च पुरुषसमूहो दासपौरुषेयं । सर्वमेवैतत् पूर्वोक्तं त्यक्त्वा हित्वा संयमाङ्गीकारेणेति भावः, कामरूपी भविष्यसि, इहैव विकरणाद्यनेकलब्धियोगात् परत्र च देवभवाप्तेरिति सूत्रार्थः ॥ ६ ॥ पुनर्द्वितीयगाथोक्तसत्यस्वरूपमेव विशेषत आह—

**मूलम्—थावरं जंगमं चेव, धणं धन्नं उवक्खरं । पच्चमाणस्स कम्मेहिं, नालं दुक्खाओ मोअणे ॥६॥**

१ अथवा—सम्यक्प्रकारेण इत प्राप्त दर्शनं सम्यक्त्व येन स समितदर्शन. एतादृश. सयमी ॥ ग. घ

व्याख्या—स्थावरं गृहारामादि, जङ्गमं पत्न्यादि, 'चेवत्ति' समुच्चये, धनधान्ये प्रतीते, उपस्करं गृहोपकरणं, एतानि कर्मभि पच्यमानस्य जीवस्य नालं, न प्रभूणि दुःखाद्विमोचने इति सूत्रार्थः ॥ ६ ॥ ततश्च—

**मूलम्—अज्झत्थं सव्वओ सव्वं, दिस्स पाणे पिआयए । न हणे पाणिणो पाणे, भयवेराओ उवरए ॥७॥**

व्याख्या—'अज्झत्थंति' सूत्रत्वादध्यात्मस्थं, तत्राध्यात्मं मनस्तत्र तिष्ठतीति अध्यात्मस्थं, तच्चेह प्रस्तावात्सुखादि सर्वत इष्टसंयोगानिष्टवियोगादिहेतुभ्यो जातमिति शेषः, सर्वं सकलं 'दिस्सत्ति' दृष्ट्वा प्रियादिस्वरूपेणावधार्य, चस्य गम्यमानत्वात्प्राणांश्च जीवान् "पिआयएत्ति' प्रिय आत्मा येषां ते तथा तान्, बहुहिरण्यकोटिमूल्येनाऽभयकुमाराप्राप्तयवमात्रकालेयदृष्टान्तेन दृष्ट्वा न हन्यात् प्राणिनः प्राणान् इन्द्रियादीन्, प्राणिन इत्यत्र जातित्वादेकवचनं

१ यथा राजगृहे सभास्थितेन श्रेणिकनृपेण प्रोक्त, सम्प्रति नगरे किं वस्तु सुलभ स्वादु चास्ति ? क्षत्रिया' प्रोचुर्मांस समर्घं स्वादु चास्ति । तदा अभयकुमारेण चिन्तित, एते निर्दयाः ! यथा पुनरप्येव न जल्पेयुस्तथा कुर्याम् । ततो रात्रौ सर्वक्षत्रियगृहेषु पृथक् पृथक् गत्वा अभय एवमवादीत् । भो क्षत्रिया ! राजपुत्रशरीरे महाव्याधिरुत्पन्नोस्ति ! यदि मनुष्यसत्कं कालेयमासं टकद्वयमित दीयते तदा स जीवति नान्यथेति वैद्यैरुक्तमस्ति ! ततो यूय राज्ञो ग्रासजीविनो भवद्भिरेवैतत्कार्यं कर्त्तव्य ! । तदा एकेनोक्त दीनारसहस्र गृहाण परं मा मुञ्च अन्यत्र गच्छ ! अभयेन तद्गृहीतम् । एव रात्रौ प्रतिगृह परिभ्रम्य तैर्दत्तानि बहूनि दीनारलक्षाण्यादाय प्रभाते नृपसभाया तद्धन क्षत्रियेभ्यो दर्शित, प्रोक्तञ्च । अहो ! गतदिने यूयमेवमवदत ! यन्मास सुलभमिति, अद्य तु एतावता द्रव्येणापि तन्मास मया न प्राप्त ! । ततो लज्जिता अभयेन हक्किता मासभक्षणनियम प्रापिताश्च । अत्रार्थे श्लोक —"स्वमास दुर्लभ लोके, लक्षेणापि न लभ्यते । अल्पमूल्येन लभ्येत, पल परशरीरजम्"

कीदृशः सन्नित्याह—भयं च भीतिर्वैरं च द्वेषो भयवैरं तस्मादुपरतो निवृत्तः सन्निति सूत्रार्थः ॥ ७ ॥ एवं हिंसाश्रवनिरोधमुक्त्वा शेषाश्रवनिरोधमाह—

**मूलम्—आदाणं नरयं दिस्स, नायइज्ज तणामवि । दोगुंछी अप्पणो पाए, दिण्णं भुंजिज्ज भोअणं ॥८॥**

व्याख्या—आदीयते इत्यादानं, धनधान्यादि, नरकहेतुत्वान्नरकं दृष्ट्वावधार्य नाददीत न गृह्णीयात्तृणमपि, आस्तां हिरण्यादि। कथं तर्हि जीवनमित्याह—'दोगुंछित्ति' जुगुप्सते आत्मानं आहारं विना धर्मधुराधरणाक्षममित्येवं शीलो जुगुप्सी, न तु रसादिलम्पटः, आत्मनः सम्बन्धिनि पात्रे, न तु गृहस्थपात्रे, तत्र भुञ्जानस्य पश्चात्कर्मादिदोषसम्भवात्, दत्तं गृहस्थैरिति शेषः, भुञ्जीत भोजनमाहारं। अनेन परिग्रहाश्रवपरिहार उक्तः, तदेवं तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायान्मृषावादादत्तादानमैथुनलक्षणाश्रवत्रयनिरोध उक्त एवेति सूत्रार्थः ॥ ८ ॥ एवं पञ्चाश्रवविरमणात्मके संयमे प्रोक्ते यथा परे विप्रतिपद्यन्ते तथा दर्शयितुमाह—

**मूलम्—इहमेगे उ मण्णंति, अप्पच्चक्खाय पावगं । आयरिअं विदित्ता णं, सव्वदुक्खा विमुच्चइ ॥ ९ ॥**

व्याख्या—इह जगति एके केचित्परतीर्थिकाः, तुः पुनरर्थे, मन्यन्ते अभ्युपगच्छन्ति उपलक्षणत्वात्प्ररूपयन्ति च, यथा अप्रत्याख्याय अनिवार्य पातकं प्राणातिपातादि 'आयरिअंति' आचारिकं निजनिजाचारभवमनुष्ठानं तदेव विदित्वा यथावदवबुध्य सर्वदुःखात् शारीरमानसाद्विमुच्यते, यदाहुः—"पञ्चविंशतितत्वज्ञो, यत्र तत्राश्रमे रतः ॥ जटी

मुण्डी शिखी वापि, मुच्यते नात्र संशयः ॥ १ ॥ तेषां हि ज्ञानमेव मुक्तिकारणं, न चैतच्चारु, न हि रोगिणामप्यौषधादिज्ञानादेव रोगाभावः, किन्तु तदासेवनादेव, तर्हि भावरोगेभ्यो ज्ञानावरणादिकर्मभ्योपि महाव्रतात्मकपञ्चाज्ञोपलक्षितक्रियां विना कथं मुक्तिरिति ? ते चैवमनालोचयन्तो भवदुःखाकुलिता वाचालतयैव आत्मानं स्वस्थयन्तीति ॥ ९ ॥ तथा चाह—

मूलम्—भणंता अकरिंता य, बंधमोक्खपइण्णिणो । वायावीरिअमेत्तेणं, समासासंति अप्पयं ॥१०॥

व्याख्या—भणन्तः प्रक्रमात् ज्ञानमेव मुक्त्यङ्गमिति ब्रुवन्तः, अकुर्वन्तश्च मुक्त्युपायानुष्ठानं, बन्धमोक्षयोः प्रतिज्ञाभ्युपगमो बन्धमोक्षप्रतिज्ञा तद्वन्तो बन्धमोक्षप्रतिज्ञिनो, विद्येते बन्धमोक्षावित्येवंवादिन एव, न तु तथानुष्ठायिनः । वाग्वीर्यं वचनशक्तिर्वाचालतेति यावत्, तदेवानुष्ठानशून्यं वाग्वीर्यमात्रं तेन समाश्वासयन्ति, ज्ञानादेव वयं मुक्तिं यास्याम इति स्वस्थयन्त्यात्मानमिति सूत्रद्वयार्थः ॥ १० ॥ न च तद्वाग्वीर्यं त्राणाय स्यादित्याह—

मूलम्—ण चित्ता तायए भासा, कओ विज्जाणुसासणं । विसण्णा पावकम्मेहिं, बाला पंडिअमाणिणो॥११॥

व्याख्या—न नैव चित्रा प्राकृतसंस्कृतादिका त्रायते रक्षति भाषा वचनात्मिका पापेभ्य इति शेषः, स्यादेतदचिन्त्यो हि मणिमंत्रौषधीनां प्रभाव इति मंत्राद्यात्मिका भाषा त्राणाय भाविनीत्याशङ्कापोहायाह—कुतो विद्याया विचित्रमंत्रात्मिकाया अनुशासनं शिक्षणं विद्यानुशासनं त्रायते पापान्न कुतोऽपि, तन्मात्रादेव मुक्तौ शेषानुष्ठानवैयर्थ्यप्रसङ्ग इति भावः । ये तु विद्यानुशासनं त्राणायेत्याहुस्ते कीदृशा इत्याह—'विसण्णत्ति' विविधं सन्ना मग्नाः पापकर्मसु हिंसाद्यनुष्ठानेषु सततकारितयेति भावः, कुतश्चैवं ? यतस्ते बाला मूढाः पण्डितमात्मानं मन्यन्त इति पण्डितमानिनः, अयं भावः—ये बालाः पण्डितमानिनश्च न स्युस्ते स्वयं सम्यगजानानाः परं पृच्छेयुस्तदुपदेशाच्च दुष्कर्माणि त्यजेयुर्न तु तेषु विषण्णा एवासीरन् ! ये तु बालाः पण्डितमानिनश्च ते तु स्वयमज्ञा अपि ज्ञत्वगर्वादन्यं ज्ञानिनमनाश्रयन्तो विषण्णा एव स्युरिति सूत्रार्थः ॥ ११ ॥ अथ सामान्यतयैव मुक्तिपथप्रत्यर्थिनां दोषमाह—

मूलम्—जे केइ सरीरे सत्ता, वण्णे रूवे अ सव्वसो । मणसा कायवक्केणं, सव्वे ते दुक्खसंभवा ॥१२॥

व्याख्या—ये केचिच्छरीरे सक्ता लालनाभ्यञ्जनोद्वर्त्तनादिभिर्बद्धाग्रहाः, तथा वर्णे गौरत्वादिके, रूपे सौन्दर्ये, च शब्दात् स्पर्शादिषु च सक्ता आसक्ताः, 'सव्वसोत्ति' सूत्रत्वात्सर्वथा स्वयं करणकारणादिभिः सर्वैः प्रकारैः, मनसा कथं वयं पीनदेहा वर्णादिमन्तश्च भविष्याम इति ध्यानात्, कायेन रसाद्युपभोगेन, वाक्येन रसायनादिप्रश्नरूपेण, सर्वे ते ज्ञानादेव मुक्तिरित्यादिवादिनो दुःखसम्भवा इहामुत्र च दुःखभाजनमिति सूत्रार्थः ॥ १२ ॥ यथा चैते दुःखभाजनं तथा दर्शयन्नुपदेशसर्वस्वमाह—

मूलम्—आवन्ना दीहमद्धाणं, संसारंमि अणंतए । तम्हा सव्वदिसं पस्स, अप्पमत्तो परिव्वए ॥ १३ ॥

व्याख्या—आपन्नाः प्राप्ता दीर्घमनाद्यनन्तं अध्वानमिवाध्वानं, अन्यान्यभवभ्रमणरूपं मार्गं, संसारे अनन्तके अपर्यवसाने दुःखान्यनुभवन्तीति शेषः 'तम्हत्ति' यस्मादेवमेते मुक्तिमार्गवैरिणो दुःखसम्भवास्तस्मात् 'सव्वदिसंति' सर्वदिशः प्रस्तावादशेषभावदिशोऽष्टादशभेदाः "पुढवि १ जल २ जलण ३ वाया ४ मूला ५ खंध ६ ग्ग ७ पोरबीआ य ८ ॥ वि ९ ति १० चउ ११ पणिंदितिरिआ १२ य नारया १३ देवसंघाया १४ ॥ १ ॥ संमुच्छिम १५ कम्मा १६ कम्मभूमिगनरा १७ तहंतरद्दीवा १८ ॥ भावदिसाओ दिस्सति, संसारी निअयमेआहिं ॥ २ ॥" इतिगाथाद्वयोक्ताः पश्यन् अप्रमत्तः प्रमादरहितः, यथा तेषां एकेन्द्रियादीनां विराधना न स्यान्न च तेषु पुनरुत्पत्तिर्भवति तथा परिव्रजेः संयमाध्वनि यायाः सुशिष्येति सूत्रार्थः ॥ १३ ॥ कथं परिव्रजेदित्याह—

मूलम्—बहिआ उड्ढमादाय, नावकंखे कयाइवि । पुव्वकम्मक्खयट्ठाए, इमं देहं समुद्धरे ॥ १४ ॥

व्याख्या—बहिर्भूतं संसारादिति गम्यते, ऊर्ध्वं सर्वोपरिस्थितमर्थान्मोक्षमादाय गृहीत्वा मयैतदर्थं यतितव्यमिति निश्चित्य नावकांक्षेद्विषयादिकं नाभिलषेत् कदाचिदपि उपसर्गपरीषहाकुलिततायामपि आस्तामन्यदा । एवञ्च सत्याकांक्षाकारणं देहधारणमप्ययुक्तमित्याशङ्कापोहार्थमाह—पूर्वं पूर्वकालभावि यत्कर्म तत्क्षयार्थं इमं प्रत्यक्षं देहं समुद्धरेत् उचिताहारादिभिः परिपालयेत्, तद्धारणस्य विशुद्धिहेतुत्वात्तत्पाते हि भवान्तरोत्पत्तावविरतिः स्यादुक्तञ्च—"सव्वत्थ संजमं संजमाओ अप्पाणमेव रक्खिज्जा ॥ मुच्चति अतिवायाओ, पुणो विसोही न याविरई ॥ १ ॥" ततो निरभिष्वङ्गतया शरीरोद्धरणमपि कर्त्तव्यमिति सूत्रार्थः ॥ १४ ॥ देहपालने च निरभिष्वङ्गताविधिमाह—

मूलम्—विगिंच कम्मुणो हेउं, कालकंखी परिव्वए । मायं पिंडस्स पाणस्स, कडं लद्धूण भक्खए॥१५॥

व्याख्या—विविच्य पृथक्कृत्य कर्मणो ज्ञानावरणादेर्हेतुमुपादानकारणं मिथ्यात्वाविरत्यादिकं, कालमनुष्ठानावसरं कांक्षतीत्येवं शीलः कालकांक्षी परिव्रजेदिति प्राग्वत्, मात्रां यावत्या संयमनिर्वाहस्तावतीं ज्ञात्वेति शेषः, पिण्डस्य ओदनादेः, पानस्य च सौवीरादेः, स्वाद्यस्वाद्यानादानं तु यतेः प्रायस्तत्परिभोगासम्भवात्, कृतं स्वार्थमेव विहितं गृहस्थैरिति शेषः, प्रक्रमात् पिण्डादिकमेव लब्ध्वा प्राप्य भक्षयेदिति सूत्रार्थः ॥ १५ ॥ भुक्तशेषञ्च न दिनान्तरभुक्तये स्थाप्यमित्याह—

मूलम्—सन्निहिं च न कुव्विज्जा, लेवमायाइ संजए । पक्खीपत्तं समादाय, निरविक्खो परिव्वए ॥१६॥

व्याख्या—सन्निधिः समयोक्त्या दिनान्तरे भोजनार्थं भक्तादिस्थापनं तं न कुर्वीत, चः पूर्वापेक्षया समुच्चये, लेपमात्रया यावता पात्रं लिप्यते तावन्तमपि सन्निधिं न कुर्यादास्तां बहुं, संयतो मुनिः, किमेवं पात्राद्युपकरणसन्निधिरपि न कर्तव्य इत्याह—'पक्खीत्यादि' पक्षीव पक्षी, पात्रं पतद्ग्रहादिभाजनं, उपलक्षणत्वाच्छेपोपकरणञ्च समादाय गृहीत्वा निरपेक्षो निरभिलाषः परिव्रजेदयं भावः— यथा पक्षी पक्षसञ्चयमादाय याति तथायमपि पात्रादिकमिति, ततश्च प्रत्यहमसंयमपलिमन्थभीरुत्वात् पात्रादिसन्निधिकरणम् न दोषायेति सूत्रार्थः ॥ १६ ॥ कथं पुनर्निरपेक्षः परिव्रजेदित्याह—

मूलम्—एसणासमिओ लज्जू , गामे अणिअओ चरे । अप्पमत्तो पमत्तेहिं, पिंडवायं गवेसए ॥ १७ ॥

व्याख्या—एषणायामुद्गमोत्पादनग्रहणग्रासविषयायां समित उपयुक्त एषणासमितः, अनेन निरपेक्षत्वमुक्तं, 'लज्जूत्ति' लज्जा संयमस्तद्वान्, ग्रामे उपलक्षणत्वान्नगरादौ च अनियतवृत्तिश्चरेत् विहरेत्, अनेनापि निरपेक्षतैवोक्ता, चरंश्च किं कुर्वीतेत्याह—अप्रमत्तः सन् प्रमत्तेभ्यो गृहस्थेभ्यस्ते हि विषयादिसेवनासक्तत्वात्प्रमत्ता उच्यन्ते पिण्डपातं भिक्षां गवेषयदिति सूत्रार्थः ॥ १७ ॥ इत्थं संयमस्वरूपप्ररूपणद्वारा निर्ग्रन्थस्वरूपमुक्तं, न चैतन्निजमतिकल्पितमित्याह—

मूलम्—एवं से उदाहु अणुत्तरनाणी अणुत्तरदंसी अणुत्तरनाणदंसणधरे
अरहा णायपुत्ते भयवं वेसालिए विआहिएत्ति बेमि ॥ १८ ॥

व्याख्या—एवमनेन प्रकारेण 'से' इति, स स्वामी 'उदाहुत्ति' उदाहृतवान् उवाचेत्यर्थः । अनुत्तरज्ञानी सर्वोत्कृष्टज्ञानवान् । तथाऽनुत्तरं सर्वोत्कृष्टं पश्यतीत्यनुत्तरदर्शी । सामान्यविशेषग्राहितया च दर्शनज्ञानयोर्भेदः । यदाहुः— "जं सामण्णग्गहणं, दंसणमेअं विसेसिअं नाणंति" अनुत्तरे ज्ञानदर्शने युगपदुपयोगाभावेपि लब्धिरूपतया धारयतीत्यनुत्तरज्ञानदर्शनधरः । पूर्वविशेषणाभ्यां हि ज्ञानदर्शनयोरुपयोगस्य भिन्नकालतोक्ता, ततश्चोपयोगवल्लब्धिद्वयमपि भिन्नकालं भावीति व्यामोहः कस्यचिन्माभूदत उक्तमनुत्तरज्ञानदर्शनधर इति न पौनरुक्त्यं । अर्हन् तीर्थकरो, ज्ञात उदारक्षत्रियः स चेह सिद्धार्थस्तत्पुत्रो ज्ञातपुत्रः श्रीवर्द्धमानजिनः, भगवान् समग्रैश्वर्यादिमान्, विशालाः शिष्या यशःप्रभृतयो वा गुणा विद्यन्ते यस्य स वैशालिकः, 'विआहिएत्ति' व्याख्याता सदेवमनुजासुरायां पर्षदि धर्मस्य कथयितेति सूत्रार्थः ॥ १८ ॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ षष्ठमध्ययनं सम्पूर्णम् ॥ ६ ॥

## "अथ सप्तमाध्ययनम्"

॥ ॐ॥व्याख्यातं षष्ठमध्ययनं साम्प्रतमौरभ्रीयाभिधं सप्तमं प्रस्तूयते, अस्य चायं सम्बन्धः, इहानन्तराध्ययने निर्ग्रन्थत्वं उक्तं, तच्च रसगृद्धेः परिहारादेव स्यात्, तत्परिहारस्तु विपक्षे दोषदर्शनात्तच्च दृष्टान्तोपदर्शनद्वारा स्फुटं स्यादिति रसगृद्धिदोषदर्शकोरभ्रादिदृष्टान्तप्रतिपादकमिदमारभ्यते, इत्यनेन सम्बन्धेनायातेऽस्मिन्नध्ययने दृष्टान्तपञ्चकं वाच्यं यदाह निर्युक्तिकृत्—"उरब्भे १ कागिणि २ अंबए ३ ववहार ४ सायरे चेव ५ ॥ पंचेए दिट्ठंता, ओरब्भीअंमि अज्झयणे ॥ १ ॥" तत्रादावुरभ्रदृष्टान्ताभिधायकमिदमादिसूत्रम्—

मूलम्—जहा एसं समुद्दिस्स, कोइ पोसिज्ज एलयं । ओअणं जवसं दिज्जा, पोसेज्जावि सयंगणे ॥ १ ॥

व्याख्या—यथेत्युदाहरणोपदर्शने, आदिश्यते विविधकार्येषु आज्ञाप्यते परिजनोऽस्मिन्नागत इत्यादेशः प्राघूर्णकस्तं समुद्दिश्य यथाऽसौ समेष्यति समायातश्चैनं भोक्ष्यत इति विचिन्त्य कश्चित्परलोकनिरपेक्षः पोषयेत् एलकमूरणकं, कथमित्याह—ओदनं भुक्तशेषं तद्योग्यशेषान्नोपलक्षणञ्चैतत् यवसं मुद्गमाषादि च दद्यात्तदग्रतो ढौकयेत्, पोषयेत्, पुनर्वचनमस्यादरख्यापनार्थं, अपिः सम्भावने, संभाव्यते हि कोप्येवंविधो गुरुकर्मेति, स्वकाङ्गणे स्वकीयगृहप्राङ्गणे, अन्यत्र हि नियुक्तः कदाचिन्नौदनादि ददातीति स्वकाङ्गण इत्युक्तमिति सूत्रार्थः ॥१॥ ततोऽसौ कीदृशो भवतीत्याह—

मूलम्—तओ से पुट्ठे परिवूढे, जायमेए महोदरे । पीणिए विउले देहे, आएसं परिकंखए ॥ २ ॥

व्याख्या—तत इत्योदनादिभोजनात्स इत्युरभ्रः, पुष्ट उपचितमांसतया पुष्टिमान्, परिवृढः समर्थः, जातमेदा उपचितचतुर्थधातुः, अत एव महोदरो बृहज्जठरः, प्रीणितस्तर्पितो यथाकालमुपढौकिताहारादिभिरेव, विपुले विशाले देहे सति आदेशं परिकांक्षतीव परिकांक्षति । इह च उरभ्रार्भकस्य प्राघूर्णकाभिकांक्षाभावेऽपि यदेवमुक्तं तदादेशयोग्योऽसौ जात इति जनैरुच्यमानत्वात्, तद्योग्यश्च तमिच्छतीत्युपचारादुच्यते, यथा हि वरार्हा कनी वरमनिच्छन्त्यपि तमिच्छतीत्युच्यते, इति सूत्रार्थः ॥ २ ॥ ततश्च—

मूलम्—जाव न एइ आएसे, ताव जीवइ से दुही । अह पत्तंमि आएसे, सीसं छित्तूण भुज्जइ ॥३॥

व्याख्या—यावन्नेति न समायाति आदेशोऽतिथिस्तावज्जीवति प्राणान् धारयति स उरभ्रो दुःखी, वध्यमण्डनमिवास्यौदनादेरदनस्य दानं । अहेत्यादि—अथानन्तरं प्राप्ते आगते आदेशे शिरो मस्तकं छित्वा द्विधा विधाय भुज्यते तेनैव स्वामिना प्राघूर्णकयुक्तेनेति शेषः । अत्र चायं सम्प्रादायः—

तथा हि नगरे क्वापि, गृहस्थः कोऽपि निष्क्रियः ॥ उरभ्रबालकं कञ्चित्, पुपोषाऽतिथिहेतवे ॥ १ ॥

मुग्धत्वमञ्जुलाकारं, कृतकर्णावचूलकम् ॥ स्नपिताङ्गं हरिद्रादि—रागालङ्कृतभूषनम् ॥ २ ॥ तञ्चातिपीनवपुषं, गृहाधिपतिबालकाः ॥ क्रीडाप्रकारैर्विविधैः, क्रीडयाञ्चक्रुरन्वहम् ॥ ३ ॥ [युग्मम्] तञ्च दृष्ट्वा लाल्यमान—मुत्कोपः कोऽपि तर्णकः ॥ विमुक्तं गोदुहा मात्रा, गोपितं न पपौ पयः ॥ ४ ॥ लिहती तं ततः स्नेहा—द्धेनुः पप्रच्छ वत्सकम् ॥ कुतो हेतोरिदं दुग्धं, न पिबस्यद्य नन्दन ! ॥ ५ ॥ सोऽवादीद्भोजनै रम्यैः, सर्वेऽप्यस्मत्स्वामिनन्दनाः ॥ उरभ्रं पोष्यन्त्येनं, लालयन्ति च पुत्रवत् ॥ ६ ॥ मन्दभाग्याय मह्यं तु, न काले पाययन्त्यपः ॥ न च यच्छन्ति पूर्णानि, शुष्काण्यपि तृणान्यहो ! ॥ ७ ॥ पङ्क्ति भेदेन तन्मात—र्मनो मे दूयते भृशम् ! ॥ अत एव च न क्षीर—मद्य सद्यः पिबाम्यहम् ॥ ८ ॥ तच्छ्रुत्वा गौर्जगौ वत्स !, किमत्रार्थे विषीदसि ? ॥ उरभ्रपोषणं ह्येत—दातुरार्पणसन्निभम् ॥ ९ ॥ रोगिणाऽभ्यर्थ्यमानं हि, निश्चितासन्नमृत्युना ॥ यथा पथ्यमपथ्यं वा, सर्वं तस्मै प्रदीयते ॥ १० ॥ ज्ञेयं वत्स! तथैवेद—मुरभ्रस्यापि पोषणम् ॥ लप्स्यते नियतं मृत्यु—मागतेऽभ्यागते ह्यसौ ॥ ११ ॥ शुष्कस्तोकतृणावाप्ति—रप्यसौ शोभना ततः ॥ उपद्रवविनिर्मुक्तैः, सुचिरं जीव्यते यया ॥ १२ ॥ जनन्येत्युदितः प्रेम्णा, तर्णकः स्तन्यमापिवत् ॥ प्राघूर्णकाः समाजग्मु—स्तत्स्वामिसदनेऽन्यदा ॥ १३ ॥ तमुरभ्रं ततो हत्वा, गृहेशस्तानभोजयत् ॥ निघ्नन्ति हि परान् स्वल्पा—यापि स्वार्थाय निर्दयाः ! ॥ १४ ॥ तञ्च दृष्ट्वा हन्यमान—ममानं भीतमानसः ॥ नापान्मातुः पयः साय—मायातायाः स तर्णकः ॥ १५ ॥ दुग्धापाननिदानं च, पृष्टो मात्राऽब्रवीदिति ॥ मातरद्य कुतोप्यत्रा—ऽऽययुः प्राघूर्णका घनाः ॥ १६ ॥ ततो व्यात्ताननः कृष्ट—जिह्वाग्रो

विह्वलेक्षण ॥ इतोऽस्मत्स्वामिना दीनः, स मेषो विस्वरं रसन् ! ॥ १७ ॥ तां दशां तस्य दृष्ट्वाहं, न पयः पातुमुत्सहे ॥ भवन्ति मृदुचित्ता हि, परदुःखेन दुःखिताः ! ॥ १८ ॥ धेनुर्जगौ सुत ! तदेव मया तवोक्तं—मूर्खोपुषोपमिहातुरदानदेश्यम् ॥ तत्तस्य दुःखमपहाय धृतिं विधाय, मां प्रश्रुतामनुगृहाण गृहाण दुग्धम् ॥ १९ ॥ इत्युरभ्रदृष्टान्त इति सूत्रार्थः ॥ ३ ॥ एवं दृष्टान्तमुक्त्वा तमेवानुवदन् दार्ष्टान्तिकयोजनामाह—

मूलम्—जहा खलु से उरब्भे, आएसाए समीहिए । एवं बाले अहम्मिट्ठे, ईहइ नरयाउअं ॥ ४ ॥

व्याख्या—यथा येन प्रकारेण खलु निश्चये स इति पूर्वोक्तस्वरूप उरभ्र आदेशाय प्राघूर्णकार्थं समीहितोऽसावादेशाय भावीति कल्पितः सन् आदेशं परिकांक्षतीत्यनुवर्तते, एवमनेनैव न्यायेन बालो मूढः, अधर्मः पापमिष्टो यस्यासौ अधर्मेष्टः, यद्वा अतिशयेनाधर्मोऽधर्मिष्टः, ईहते वाञ्छति तदनुकूलाचरणेन नरकायुष्कं नरकजीवितमिति सूत्रार्थः ॥ ४ ॥ उक्तमेवार्थं प्रपञ्चयन् सूत्रत्रयमाह—

मूलम्—हिंसे बाले मुसावाई, अद्धाणंमि विलोवए । अन्न दत्तहरे तेणे, माई कन्नु हरे सढो ॥ ५ ॥

इत्थीविसयगिद्धे अ, महारंभपरिग्गहे । भुंजमाणे सुरं मंसं, परिवूढे परं दमे ॥ ६ ॥

अयकक्करभोई अ, तुंदिल्ले चिअलोहिए । आउअं नरए कंखे, जहा एसंव एलए ॥ ७ ॥

व्याख्या—हिंस्रः स्वभावत एव प्राणिघातकः, बालोऽज्ञः, मृषावादी असत्यभाषकः, अध्वनि मार्गे व्रजतो जनानिति शेषः, विविध सर्वस्वहरणादिना लुम्पतीति विलोपकः, अन्यैरदत्तं हरतीति अन्यादत्तहरः, स्तेनो ग्रामपुरादिषु चौर्येण कल्पितवृत्ति', मायी वञ्चनैकचित्तः, 'कं नु हरेत्ति' कमिति कस्यार्थं नु वितर्के हरिष्यामीत्यध्यवसायी कंनुहरः, शठो वक्राचारः ॥ ५ ॥ स्त्रीषु विषयेषु च गृद्धः, चः समुच्चये, महानपरिमित आरम्भो भूरिजन्तूपमर्दको व्यापारः परिग्रहश्च धनधान्यादिसञ्चयो यस्य स तथा, भुञ्जानः खादन् सुरां मद्यं मांसं, परिवृढः पुष्टमांसशोणिततया नानाक्रियासमर्थः, अत एव परंदमोऽन्येषां दमयिता ॥ ६ ॥ अजस्य छागस्य कर्करं यद्वक्ष्यमाणं कर्करायते तच्चेह प्रस्तावादतिपक्वं मांसं तद्भोजी, अत एव तुन्दिलो बृहज्जठरः, चितलोहितः पुष्टशोणितः, शेषधातूपचयोपलक्षणमेतत्, आयुर्जीवितं नरके सीमन्तकादौ कांक्षतीव कांक्षति, तद्योग्यकर्मारम्भितया कमिव क इवेत्याह—'जहा एसं व एलएत्ति' आदेशमिव यथा एडकः प्रोक्तरूपः । इह च हिंसेत्यादिना सार्धश्लोकद्वयेनारम्भरसगृद्धी प्रोक्ते, आउअमित्यादिना श्लोकार्धेन तु दुर्गतिप्राप्तिरूपोपाय उक्त इति सूत्रत्रयार्थः ॥७॥ अथ साक्षादैहिकापायं सूत्रद्वयेनाह—

मूलम्—आसणं सयणं जाणं, वित्तं कामे अ भुंजिआ । दुस्साहडं धणं हिच्चा, बहु संचिणिआ रयं ॥८॥

तओ कम्मगुरू जंतू, पच्चुप्पन्नपरायणे । अएव्व आगयाएसे, मरणंतंमि सोअई ॥ ९ ॥

व्याख्या—आसनं, शयनं, यानं वाहनं, वित्तं, कामांश्च शब्दादीन्, भुक्त्वोपभुज्य, दुःखेन संह्रियते मील्यते इति दुःसंहृतं धनं हित्वा द्यूताद्यसद्व्ययेन, बहु प्रभूतं सञ्चित्योपार्ज्य रजोऽष्टप्रकारं कर्म ॥ ८ ॥ ततः कर्मसञ्चयानन्तरं कर्मगुरुः कर्मभारितो जन्तुः, प्रत्युत्पन्नं वर्त्तमानं तस्मिन् परायणस्तत्परः प्रत्युत्पन्नपरायणः । "एतावानेव लोकोऽयं यावानिन्द्रियगोचरः" इति नास्तिकमतानुसारितया परलोकनिरपेक्ष इत्यर्थः । 'अएवत्ति' अजः पशुः स चेह प्रक्रमादुरभ्रस्तद्वत् । 'आगयाएसेत्ति' सूत्रत्वात् आदेशे प्राघुर्णके आगते सति, अनेन प्रपञ्चितवेदिविनेयानुग्रहायोक्तमप्युरभ्रदृष्टान्तं स्मारयति, किमित्याह—मरणरूपः अन्तः अवसानं मरणान्तस्तस्मिन् शोचति । अयं भावः—यथाऽऽदेशे समागते उरभ्र' शोचति तथाऽयमपि, धिग्मां ! विषयव्यामोहितमतिमुपार्जितगुरुकर्माणं ! हा ! क्वेदानीं मया गन्तव्यमित्यादि प्रलापतः खिद्यते, नास्तिकस्यापि प्रायस्तदा शोकसम्भवादिति सूत्रद्वयार्थः ॥ ९ ॥ ऐहिकमपायमुक्त्वा पारभविकमाह—

मूलम्—तओ आउपरिक्खिणे, चुआ देहा विहिंसगा । आसुरीअं दिसं बाला, गच्छंति अवसा तमं ॥१०॥

व्याख्या—ततः शोचनान्तरं 'आउत्ति' आयुषि तद्भवसम्बन्धिनि जीविते परिक्षीणे सर्वथा क्षयङ्गते च्युतो भ्रष्टो देहाद्विहिंसको विविधैः प्रकारैः प्राणिघातकः 'आसुरीअंति' असुरा रौद्रकर्मकर्मठास्तेषामियं आसुरी तां दिशं भावदिशं नरकगतिमित्यर्थः, बालो अज्ञो गच्छति अवशः परवशः, सर्वत्र बहुवचननिर्देशस्तु एक एव नैतादृशः किन्तु भूयांस इति सूचनार्थं, 'तमंति' तमोयुक्तां गतिविशेषणञ्चैतत्, यदुक्तं—निच्चंधयारतमसा, ववगयगहचंदसूर-

णक्खत्ता ॥ निरया अणंत विअणा, पणठ्ठसद्दाइविसया य ॥ १ ॥ इति सूत्रार्थः ॥ १० ॥ सम्प्रति काकिण्याम्रदृष्टान्तद्वयमाह—

मूलम्—जहा कागणिए हेउं, सहस्सं हारए नरो ॥ अपत्थं अंबगं भुच्चा, राया रज्जं तु हारए ॥ ११ ॥

व्याख्या—यथेति दृष्टान्तोपदर्शने काकिण्या रूपकाशीतितमभागरूपायाः 'हेउंति' हेतोः कारणात्सहस्रं दशशतात्मकं दीनाराणामिति गम्यते, हारयेन्नरः पुमान् । इहासौ सम्प्रदायः—

तथा हि दुर्गतः कोऽपि, भ्रामं भ्रामं महीतले ॥ उपायैर्विविधैर्निष्क—सहस्रं समुपार्जयत् ॥ १ ॥ ववले सह सार्थेन, तदादाय गृहं प्रति ॥ जन्मभूमिर्जेन्मिनां हि, नान्यदेशेऽपि विस्मरेत् ॥ २ ॥ विधाय काकिणीरेक—रूपकस्य स चाध्वनि ॥ एकैकां काकिणीं नित्यं, व्ययतिस्माऽशनादिना ॥ ३ ॥ अन्यदा काकिणीमेकां, विस्मार्य क्वापि सोऽचलत् ॥ दूरंगतश्चतां स्मृत्वा, चेतसीति व्यचिन्तयत् ॥ ४ ॥ काकिण्येकावशिष्टा मे, विस्मृता भोजनास्पदे ॥ इतस्तृतीयदिवसे, लप्स्ये चाहं गृहं निजम् ॥ ५ ॥ तदेककाकिणीहेतो—रन्यरूपकभेदनम् ॥ प्रातर्भावीति तामेव, व्याघुट्य द्रुतमानये ॥ ६ ॥ ध्यात्वेति क्वापि सङ्गोप्य, स द्रव्यनकुलं द्रुतम् ॥ न्यवर्तिष्ट विमूढा हि, स्वल्पार्थे भूरिहारिणः ! ॥ ७ ॥ गोप्यमानश्च तं द्रव्य—नकुलं कोऽपि दृष्टवान् ॥ तस्मिन् गते तु तं हृत्वा, ततस्तूर्णं स नष्टवान् ॥ ८ ॥ सोऽथ तद्विस्मृतिस्थान—मवाप्तो दुःस्थपूरुषः ॥ तत्रागतेन केनापि, हृतां न प्राप काकिणीम् ॥ ९ ॥ ततोऽसौ द्रव्यनकुल—स्थापनस्थानमागतः ॥ नापश्यत्तत्र तमपि, धूर्तेधाम्नीव सूनृतम् ॥ १० ॥ कृच्छ्राल्लब्धे ततस्तस्मिन्, धने नष्टे स निर्धनः ॥ प्राप्तप्रणष्टनयन, इवोच्चैर्दुःखमासदत् ॥ ११ ॥ ततः स दुःखातिशयाद्विमूढमना निजं धाम जगाम निःस्वः ॥ अल्पस्य हेतोर्बहुहारितं स्वं, निनिन्द चाऽऽपत्तटिनीनिमग्नः ॥ १२ ॥ इति काकिणीदृष्टान्तः ॥

तथा 'अपत्थंति' अपथ्यमाम्रफलं भुक्त्वा राजा राज्यं नृपत्वं तुरवधारणे भिन्नक्रमश्च ततो हारयेदेव, सम्भवत्येव हि तस्यापथ्यभोजिनो राज्यहारणमित्यक्षरार्थः, भावार्थस्तु सम्प्रदायादवसेयः, स चायम्—

तथा हि पार्थिवः कोऽपि, सहकारफलप्रियः ॥ बहूनि बुभुजे तानि, रसनारसलोलुपः ॥ १ ॥ तेभ्योऽजीर्णमभूत्तस्य, ततो जज्ञे विसूचिका ॥ अजीर्णं खलुः सर्वेषां, रोगाणामादिकारणम् ॥ २ ॥ ततस्तं विविधोपायै—रचिकित्संश्चिकित्सकाः, ॥ नीरोगत्वे च जाते ते, प्रोचुरेवं महीपतिम् ॥ ३ ॥ रोगोयमधुनास्माभिः, शमितोपि कथञ्चन ॥ पुनश्चूतफलास्वादे, भावी मृत्युप्रदो द्रुतम् ॥ ४ ॥ तैरित्युक्तो नृपो दध्यौ, सत्सु माकन्दशाखिषु ॥ नाहं शक्ष्यामि हातुं तत्—फलानि रसलम्पटः ॥ ५ ॥ ध्यात्वेत्यच्छेदयत्सर्वा— न्माकन्दान् विषये निजे ॥ आत्महेतोर्विमूढा हि, बहूनामुपघातकाः ! ॥ ६ ॥ अन्यदा प्राभृतायातौ, द्वावश्वौ वक्रशिक्षितौ ॥ आरुह्य भूपसचिवौ, वाहकेल्यां प्रजग्मतुः ॥ ७ ॥ बलाकर्षणतस्तूर्णं, चलन्तौ तौ च वाजिनौ ॥ अरण्यं निन्यतुर्देश—मुल्लंघ्य नृपमंत्रिणौ ॥ ८ ॥ तयोश्च श्रान्तयोस्तत्र, स्वयं संस्थितयोर्नृपः ॥ उत्तीर्य धीसखसखः, प्रविशत्क्वापि कानने ॥ ९ ॥ वार्यमाणोप्यमात्येन, तत्र चूततरोस्तले ॥ निपद्य पक्वपतिता— न्यस्पृशत्तत्फलानि सः ॥ १० ॥ तानि चादाय जिघ्रन्तं, मंत्रीत्यूचे महीधवम् ॥ अपथ्याहारतो जन्तु—र्विनश्यति विषादिव ॥ ११ ॥ तद्दर्शनं स्पर्शनञ्चा—घ्राणञ्चैषां न तेऽर्हति ॥ स्त्रीणामिवैषां स्पर्शादौ, मनःस्थैर्यं हि नो भवेत् ॥ १२ ॥ स्थैर्याभावे च भोगोऽपि, स्यादेषां जीवितापहः ॥ तत्किम्पाकफलानीव, त्याज्यान्येतान्यपि प्रभो ! ॥ १३ ॥ तेनेत्युक्तोऽपि को दोषः ?, स्यादेभिरिति चिन्तयन् ॥ बुभुजे तानि भूपो हि, दुस्त्यजा रसगृद्धता ! ॥ १४ ॥ सुप्तसिंह इव दण्डघट्टना—दुत्थितो लघु ततः फलाशनात् ॥ आमयः स नृपतिं व्यनाशय—न्न ह्यपथ्यनिघसः शुभावहः ॥ १५ ॥ इत्यपथ्याम्रफलाशने नृपदृष्टान्त इति सूत्रार्थः ॥ ११ ॥ एवं दृष्टान्तद्वयमभिधाय दार्ष्टान्तिकयोजनामाह—

मूलम्—एवं माणुस्सगा कामा, देवकामाणमंतिए । सहस्सगुणिआ भुज्जो, आउं कामा य दिविआ ॥१२॥

व्याख्या—एवमिति काकिण्याम्रकसदृशा मनुष्याणाममी मानुष्यकाः कामा विषया देवकामानामन्तिके समीपे किमित्येवमत आह—सहस्रगुणिता' सहस्रलक्षणेन गुणकारेण गुणिता दिव्यकामा इति सवन्धः, भूयो बहून् वारान् मनुष्यायुःकामापेक्षया इति शेष', आयुर्जीवितं कामाश्च शब्दादयो दिविभवा दिव्यास्त एव दिव्यका अनेन चैते-

१ मन्त्रिसहित ॥

षामतिभूयस्त्वं सूचयन् कार्षापणसहस्रराज्यतुल्यतामाह । इह च पूर्वं 'देवकामाणमंतिएत्ति' काममात्रोपादानेऽपि 'आउं कामा य दिव्विआ' इत्यत्र यदायुषोप्यादानं तत्तत्रत्यायुष्कादीनामपि मनुष्यजीवितायपेक्षयातिभूयस्त्वख्यापनार्थमिति सूत्रार्थः ॥ १२ ॥ मनुष्यकामानामेव काकिण्याम्रफलोपमतां भावयितुमाह——

**मूलम्—अणेगवासानउआ, जा सा पण्णवओ ठिई। जाणि जीअंति दुम्मेहा, ऊणे वाससयाऊए ॥ १३ ॥**

व्याख्या—अनेकानि बहूनि तानि चेहासंख्येयानि वर्षाणां वत्सराणां नयुतानि संख्याविशेषा अनेकवर्षनयुतानि, प्राकृतत्वात्सकारस्याकारः । नयुतानयनोपायस्त्वयं—"चतुरशीतिवर्षलक्षा पूर्वाङ्गं, तत्र पूर्वाङ्गेन गुणितं पूर्वं। पूर्वं चतुरशीतिलक्षाहतं नयुताङ्गं, नयुताङ्गमपि चतुरशीतिलक्षाहतं नयुतमिति" । का नामैवमुच्यते इत्याह—'जा सेति' प्रज्ञापकः शिष्यान् प्रत्याह— या सा भवतामस्माकञ्च प्रतीता । 'पण्णवओत्ति' प्रकृष्टं ज्ञानं प्रज्ञा सा विद्यते यस्यासौ प्रज्ञावान्, न च क्रियाविकलं ज्ञानं प्रकृष्टं स्यादिति प्रज्ञाशब्देन क्रियाप्याक्षिप्यते, ततश्च प्रज्ञावतो ज्ञानक्रियावत' स्थितिर्देवभवायुर्लक्षणा अधिकृतत्वाद्दिव्यकामाश्च भवन्तीति शेषः, यान्यनेकवर्षनयुतानि दिव्यस्थितेर्दिव्यकामानां च विषयभूतानि जीयन्ते हारयन्ति तद्धेतुभूतानुष्ठानाकरणेनेति भावः । दुर्मेधसो दुर्मतयो विषयविवशाः प्राणिन इति गम्यते, क्व पुनस्तानि हारयन्तीत्याह—ऊने वर्षशतायुषि, प्रभूते ह्यायुषि प्रमादादेकवारं हारितान्यपि पुनरर्ज्यन्ते, अस्मिंस्तु संक्षिप्तायुष्येकदापि हारितानि हारितान्येव, श्रीवीरस्वामितीर्थे च प्रायो न्यूनवर्षशतायुषः एव प्राणिन इत्येवमुच्यते । अयं चेह समुदायार्थः, गुरुः शिष्यानुद्दिश्योपदिशति, असंख्यवर्षनयुतानि कोऽर्थः पल्योपमसागरोपमाणि ज्ञानक्रियावतो मुनेर्देवलोकेषु स्थितिः प्रक्रमात्कामाश्च सर्वोत्कृष्टा भवन्तीत्यस्माकं जिनवचः श्रद्दधतां प्रतीतमेवास्ति । दुर्मेधसस्तु इहत्ये स्वल्पायुषि तुच्छकामभोगेषु लोलुपा धर्माकरणेन तां स्थितिं तान् कामांश्च हारयन्तीति । दृष्टान्तदार्ष्टान्तिकयोजना त्वेवं, मनुष्याणामायुर्विषयाश्चातिस्वल्पतया काकिण्याम्रफलोपमाः, सुराणामायुःकामाश्चातिप्रचुरतया कार्षापणसहस्रराज्यतुल्यास्ततो यथा द्रमको राजा वा काकिण्याम्रफलकृते कार्षापणसहस्रं राज्यं च हारितवानेवमेतेऽपि दुर्धियोऽल्पतरमनुष्यायुःकामार्थं प्रभूतान् देवायुःकामान् हारयन्तीति सूत्रार्थः ॥ १३ ॥ सम्प्रति व्यवहारोदाहरणमाह——

**मूलम्—जहा य तिण्णि वणिआ, मूलं घित्तूण निग्गया। एगोत्थ लहए लाभं, एगो मूलेण आगओ ॥१४॥**

व्याख्या—यथेति निदर्शनोपनिदर्शने, चशब्दः पूर्वोक्तदृष्टान्तापेक्षया समुच्चये, त्रयो वणिजः मूलं नीवीं गृहीत्वा निर्गताः स्वस्थानात् स्थानान्तरं प्रति प्रस्थिता इष्टस्थानं गताश्च, तत्र च गतानामेको वाणिज्यकलाकलितः, अत्र एतेषु मध्ये लभते लाभं विशिष्टद्रव्योपचयात्मकं, एकस्तेष्वेवाऽन्यतरो यस्तथा नातिनिपुणो नाप्यत्यन्तानिपुणः स मूलधनेन यावद्गृहान्नीतं तावतैवोपलक्षित आगतः स्वस्थानं प्राप इति सूत्रार्थः ॥ १४ ॥ तथा—

**मूलम्—एगो मूलंपि हारित्ता, आगओ तत्थ वाणिओ। ववहारे उवमा एसा, एवं धम्मे विआणह ॥ १५ ॥**

व्याख्या—एकोऽन्यतरः प्रमादपरो द्यूतमद्यादिष्वत्यन्तमासक्तः मूलमपि हारयित्वा नाशयित्वा आगतः प्राप्तः स्वस्थानमिति शेषः, तत्र तेषु मध्ये वणिगेव वाणिजः, अत्र च सम्प्रदायः—

तथा हि पुर्यां क्वाप्येको, बभूवेभ्यो महाधनः ॥ सम्प्राप्तयौवनास्तस्य, जज्ञिरे नन्दनास्त्रयः ॥ १ ॥ तेषां सहस्रं दीनारान्, दत्वा प्रत्येकमेकदा ॥ तद्भाग्यादिपरीक्षार्थ—मित्युवाच स नैगमः ॥ २ ॥ गत्वा पृथक् पुरीर्वित्ते— नेयता व्यवहृत्य च ॥ कालेनैतावताऽऽगम्यं, युष्माभिः सकलैरिह ॥ ३ ॥ ततस्ते तद्धनं लात्वा, गत्वा चान्यान्यनीवृति ॥ पृथक् पृथक् पत्तनेषु, तस्थुः सुस्थितचेतसः ॥ ४ ॥ तेष्वेकोऽचिन्तयत् प्रैषीत्, परीक्षार्थं पिता हि नः ॥ तोषणीयः स तद्भूरि—धनोपार्जनया मया ॥ ५ ॥ चञ्चापुरुषकल्पो हि, पुमर्थासाधकः पुमान् ॥ पुमर्थेषु च सर्वेषु, प्रधानं गृहिणां धनम् ॥६॥ तदुपार्जनयोग्यं च, वयो मे वर्त्ततेऽधुना ॥ द्वितीयमेव हि वयो, द्रविणोपार्जने क्षमम् ॥७॥ यदुक्तं—"प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम् ॥ तृतीये न तपस्तप्तं, चतुर्थे किं करिष्यति ? ॥ ८ ॥" विमृश्येति द्यूतमद्य—वेश्यादि व्यसनोज्झितः ॥ यथोचितं व्ययन् वित्त—मदनाच्छादनादिना ॥ ९ ॥ व्यापारं विविधं कुर्वन्, अनवर्णं स वाणिजः ॥ उपार्जयद्बहु द्रव्यं, व्यापारो हि सुरद्रुमः ॥ १० ॥ द्वितीयोऽचिन्तयद्वित्त—मस्ति भूयस्तरं हि नः ॥ विनार्जनां भुज्यमानं, किन्तु तत्क्षीयते क्षणात् ॥ ११ ॥ तन्मया रक्षता मूलं, भोक्तव्यं धनमर्जितम् ॥ ध्यात्वेति नातिभूयांसं, स

१ उत्तमम् ।

वाणिज्योद्यमं व्यधात् ॥ १२ ॥ विशिष्टाहारवसन–गन्धमाल्यविभूषणैः ॥ व्ययति स्माऽखिलं वित्तं, स च नित्यमुपार्जितम् ॥ १३ ॥ दध्यौ तृतीयो दुर्बुद्धिः, संख्यातुमपि दुःशकम् ॥ पर्याप्तमस्ति नो गेहे, वित्तं वारीव वारिधौ ॥ १४ ॥ तथापि वार्धकाद्वृद्धो, वर्धमानस्पृहाकुलः ॥ सुदूरे प्राहिणोदस्मा–नपस्मारो गुणानिव ॥ १५ ॥ तद्रव्योपार्जनोपायान्, हित्वा संक्लेशकारकान् ॥ भोक्ष्येऽहं नीविकावित्त–मेव वह्निरिवेन्धनम् ॥ १६ ॥ ध्यात्वेति तद्धनं द्यूत–वेश्यामद्यामिषादिभिः ॥ गन्धमाल्याङ्गरागैश्चा–चिरात्सर्वं व्यनाशयत् ॥ १७ ॥ अथो यथोक्तकालान्ते, ते त्रयः स्वगृहं ययुः ॥ तेष्वाद्यं तत्पिता तुष्टः, सर्वस्वस्वामिनं व्यधात् ॥ १८ ॥ द्वितीयं तु सुतं गेह–व्यापारेषु नियुक्तवान् ॥ स चान्नादि सुखं लेभे, न तु श्रीकीर्तिगौरवम् ॥ १९ ॥ छिन्नमूलं तृतीयं तु, स्वसौधान्निरकाशयत् ॥ स च भूयस्तरं दुःखं, लेभेऽन्यप्रेष्यतादिभिः ॥ २० ॥ केप्याहुर्वणिजोऽभूवं–स्त्रयो वाणिज्यतत्पराः ॥ तेष्वेको भाग्यवान् लब्ध–लाभोऽमोदत बन्धुयुक् ॥ २१ ॥ लाभव्ययी मूलयुतोऽपरस्तु, बभूव भूयो व्यवहर्तुमुत्कः ॥ लाभं विना मूलधनोपभोगी, लेभे तृतीयस्तु भुजिष्यभावम् ॥ २२ ॥ इति वणिक्त्रयदृष्टान्तः ॥

अथ दृष्टान्तोपनयप्रस्तावकं सूत्रपश्चार्धमनुस्त्रियते, व्यवहारे व्यापारे उपमा एषाऽनन्तरोक्ता, एवं वक्ष्यमाणन्यायेन धर्मे धर्मविषये एनामेवोपमां विजानीतेति सूत्रार्थः ॥ १५ ॥ कथमित्याह—

मूलम्—माणुसत्तं भवे मूलं, लाभो देवगई भवे। मूलच्छेएण जीवाणं, नरगतिरिक्खत्तणं धुवं ॥ १६ ॥

व्याख्या—मानुषत्वं मनुजजन्म भवेन्मूलमिव मूलं, स्वर्गापवर्गाद्युत्तरोत्तरलाभहेतुत्वात्। तथा लाभ इव लाभो नरजन्मापेक्षया विषयसुखादिभिर्विशिष्टत्वाद्देवगतिर्देवत्वावाप्तिर्भवेत्, मूलच्छेदेन नरगतिहान्यात्मकेन जीवानां नारकत्वं च ध्रुवं निश्चितं इदमिह पारम्पर्यम्–"यथा केपि त्रयः संसारिणो जीवा नरत्वं प्राप्ताः, तेष्वेको मार्दवार्जवादिगुणाढ्यो मध्यमारम्भपरिग्रहवान् मृतो मूलरक्षकवणिग्वत् कार्षापणसहस्रस्थानीयं नृत्वमेव लेभे। द्वितीयस्तु सम्यक्त्वचारित्रादिगुणान्वितः सरागसंयमाल्लब्धलाभवणिग्वल्लाभतुल्यां देवगतिं प्राप्तः। तृतीयस्तु हिंसामृषावादादिसावद्ययोगयुक्तश्छिन्नमूलवणिग्वत् मूलच्छेददेश्यां नरकतिर्यग्गतिमाससादेति सूत्रार्थः ॥ १६ ॥ मूलच्छेदमेव स्पष्टयति–

मूलम्—दुहओ गइ वालस्स, आवई वहमूलिआ। देवत्तं माणुसत्तं च, जं जिए लोलया सढे ॥ १७ ॥

व्याख्या—'दुहओत्ति' द्विधा गतिः प्रक्रमान्नरकगतितिर्यग्गतिरूपा बालस्य रागद्वेषाकुलस्य स्यादिति गम्यते। तत्र च गतस्य 'आवइत्ति' आपत् स्यात्, सा च कीदृशीत्याह–वधस्ताडनं मूलमादिर्यस्याः सा तथा, मूलशब्दाच्च छेदभेदगारारोपणादिपरिग्रहः। लभन्ते हि प्राणिनो नरकतिर्यक्षु त्रिविधा वधाद्यापदः, किमित्येवमत आह–देवत्वं मानुषत्वं च यज्जितोपहारितः 'लोलया सढेत्ति' लोलता मांसादिलाम्पट्यं तद्योगाज्जीवोपि लोलतेत्युक्तः, शठो विश्वस्तजनवञ्चकः, इह लोलताशब्देन पञ्चेन्द्रियवधादिकमुपलक्षते, ततोऽनेन नरकहेतुरुक्तः, यदुक्तं–"महारंभयाए महापरिग्गहियाए कुणिमाहारेणं पंचिंदिअवहेणं जीवा निरयाउअं निअच्छंतित्ति" शठ इत्यनेन तु शाठ्यमुक्तं, तच्च तिर्यग्गतिहेतुः, यदाहुः–"तिरिआउ गूढहिअओ, सढो ससल्लो समज्जिणइत्ति" अयं चात्र भावार्थः–यतोऽयं बालो नरकतिर्यग्गतिहेतुभ्यां लोलताशाठ्याभ्यां देवत्वनरत्वे हारितस्ततोऽस्य द्विविधैव गतिः सम्भवतीति सूत्रार्थः ॥१७॥ पुनर्मूलच्छेदमेव स्पष्टयति—

मूलम्—तओ जिए सइं होइ, दुविहं दुग्गइं गए। दुल्लहा तस्स उम्मग्गा, अद्धाए सुचिरादवि ॥ १८ ॥

व्याख्या—ततो देवत्वनरत्वाभावात् 'जिएत्ति' सर्वं वाक्यं सावधारणमिति न्यायाजित एव हारित एव 'सइंति' सदा भवति द्विविधां नरकतिर्यग्रूपां दुर्गतिं गतः, कुतश्चैवं? यतो दुर्लभा तस्य बालस्य 'उमग्गत्ति' सूत्रत्वादुन्मज्जा नरकतिर्यग्गतिनिर्गमनरूपा अद्धायामनागतकाले सुचिरादपि प्रभूतायामपि बाहुल्यापेक्षया चैवमुक्तं, अन्यथा हि केचिदेकभवेनैव तत उद्धृत्य मुक्तिमपि लभन्त इति सूत्रार्थः ॥ १८ ॥ इत्थं पश्चानुपूर्व्या मूलहारिणि पूर्वमुपनयमुपदर्श्य मूलप्रवेशिनि तदुपदर्शनायाह—

मूलम्—एवं जिअं सपेहाए, तुलिआ वालं च पंडिअं। मूलिअं ते पवेसंति, माणुसं जोणिमिंति जे ॥ १९ ॥

व्याख्या—एवं उक्तनीत्या जितं देवत्वनरत्वे हारितं बालं 'सपेहाएत्ति' सम्प्रेक्ष्य सम्यगालोच्य, तथा तोलयित्वा गुणदोषवत्तया परिभाव्य बालं पण्डितं च मौलिकं मूलधनं ते मूलप्रवेशकवणिक्सदृशाः प्रवेशयन्ति ये मानुषां योनिमायान्ति, बालत्वं त्यक्त्वा तदुचितपांडित्यासेवनादिति सूत्रार्थः ॥ १९ ॥ कथं मनुष्ययोनिमायान्तीत्याह—

मूलम्–वेमायाहिं सिक्खाहिं, जे नरा गिहिसुव्वया। उविंति माणुसं जोणिं, कम्मसच्चा हु पाणिणो ॥ २०॥

व्याख्या—विमात्राभिर्विविधपरिणामाभिः शिक्षाभिः प्रकृतिभद्रकत्वादेरभ्यासरूपाभिः, उक्तञ्च–"चउहिं ठाणेहिं जीवा मणुस्साउअं निबंधंति, तंजहा–पगतिभद्दयाए, पगतिविणीअयाए, साणुक्कोसयाए, अमच्छरिअयाएत्ति" ये नराः गृहिणश्च ते सुव्रताश्च धृतसत्पुरुषव्रता गृहिसुव्रताः, सत्पुरुषव्रतञ्च लौकिका अप्येवमाहुः–"विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् ॥ असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १ ॥" आगमोक्तव्रतधारणं त्वेषां न सम्भवति, देवगतिहेतुत्वात्तस्य। यत्तदोर्नित्याभिसम्बन्धात् ते उपयान्ति प्राप्नुवन्ति मानुषीं योनिं, किमित्येवमत आह–'कम्मेत्यादि' हु यस्मात् सत्यान्यवन्ध्यफलानि कर्माणि ज्ञानावरणीयादीनि येषां ते सत्यकर्माणः, सूत्रत्वाद्व्यत्यये कर्मसत्याः प्राणिनः इति सूत्रार्थः ॥ २० ॥ अथ लब्धलाभोपनयमाह—

मूलम्—जेसिं तु विउला सिक्खा, मूलिअं ते अइत्थिआ। सीलवंता सविसेसा, अदीणा जंति देवयं ॥२१॥

व्याख्या—येषां तु विपुला निःशङ्कितादिरूपदर्शनाचारादिविषयत्वेन विस्तीर्णा शिक्षा ग्रहणासेवनात्मिकास्तीति शेषः, मौलिकं मूलधनरूपं मानुषत्वं ते नराः 'अइत्थिअत्ति' अतिक्रम्योल्लंघ्य शीलवन्तः, अविरतसम्यग्दृष्ट्यपेक्षया सदाचारवन्तः, विरताविरतापेक्षया त्वणुव्रतवन्तो विरतापेक्षया पुनर्महाव्रतादिमन्तः, सह विशेषेण उत्तरोत्तरगुणप्रतिपत्तिरूपेण वर्त्तन्ते इति सविशेषाः, अत एवाऽदीनाः, कथं वयममुत्र भविष्यामः ? इति वैक्लव्यविकलाः, यान्ति देवतां देवत्वं ऐदंयुगीनजनापेक्षया चेत्थमुक्तं, विशिष्टसंहननादिसामग्रीसद्भावे तु मोक्षमपि यान्तीति सूत्रार्थः ॥ २१ ॥ उक्तमर्थं निगमयन्नुपदेशमाह—

मूलम्—एवमदीणवं भिक्खुं, आगारिं च विआणिआ। कहं नु जिच्चमेलिक्खं, जिच्चमाणो न संविदे ॥२२॥

व्याख्या—एवमुक्तन्यायेन लाभान्वितं अदीनवन्तं दैन्यरहितं भिक्षुं मुनिमगारिणं च गृहस्थं विज्ञाय विशेषेण तथाविधशिक्षावशाद्देवनरगतिप्राप्तिरूपेण ज्ञात्वा कथं केन प्रकारेण नु वितर्के 'जिच्चंति' सूत्रत्वात् जीयेत हार्येद्विवेकी विषयकषायादिभिरिति शेषः। 'एलिक्खंति' ईदृशं देवत्वादिलक्षणं लाभं, कथं च जीयमानो हार्यमाणो न 'संविदेत्ति' सूत्रत्वान्न संवित्ते न जानीते ? अपि तु संवित्त एव, संविदानश्च यथा न जीयते तथा यतेतेति भावः इति सूत्रार्थः ॥ २२ ॥ समुद्रदृष्टान्तमाह—

मूलम्—जहा कुसग्गे उदगं, समुद्देण समं मिणे। एवं माणुस्सगा कामा, देवकामाण अंतिए ॥ २३ ॥

व्याख्या—यथेति दृष्टान्तोपन्यासे, कुशाग्रे दर्भकोटौ यदुदकं जलं तत्समुद्रेण समुद्रजलेन समं मिनुयात्, अयं भावः–यथा कोप्यज्ञः कुशाग्रविन्दुमादाय समुद्रजलमियदेवास्ति नाधिकमिति मानं कुर्यात्, न च कुशाग्रजलसमुद्रजलयोस्तुल्यत्वमस्ति। एवं मानुष्यकाः कामा देवकामानामन्तिके समीपे, अयमाशयो यद्यपि कश्चिच्चक्रवर्त्यादिमनुष्यकामान् देवकामोपमान् मन्यत, परं कुशाग्रजलविन्दुसमुद्रवन्मनुष्यदेवकामानां महदेवान्तरमिति सूत्रार्थः॥२३॥ उक्तमेवार्थं निगमयन्नुपदेशमाह—

मूलम्–कुसग्गमित्ता इमे कामा, संनिरुद्धम्मि आउए। कस्स हेउं पुरा काउं, जोगक्खेमं न संविदे ॥ २४ ॥

व्याख्या–कुशाग्रमात्रा दर्भाग्रस्थितजलवदत्यल्पा इमे कामा मनुष्यसम्बन्धिनो भोगास्तेऽपि न पल्योपमादिमाने दीर्घे आयुषि, ततः 'कस्स हेउंति' प्राकृतत्वात् कं हेतुं किं कारणं 'पुराकाउंति' पुरस्कृत्याश्रित्य, अलब्धस्य लाभो योगो लब्धस्य पालनं क्षेमस्तयोः समाहारे योगक्षेमं, अप्राप्तविशिष्टधर्मावाप्तिं प्राप्तस्य च तस्य पालनं न संवित्ते न जानाति जन इति शेषः, अयं भावः–योगक्षेमाज्ञाने हि भोगाभिष्वङ्ग एव हेतुर्मनुष्यभोगाश्च धर्मप्रभावप्रभवदिव्यभोगापेक्षयाऽत्यल्पाः ततस्तत्त्यागतो भोगाभिलाषिणापि धर्म एव यतनीयमिति सूत्रार्थः ॥ २४ ॥ इत्थं दृष्टान्तपञ्चकमुक्तं, तत्र चादौ उरभ्रदृष्टान्तेन भोगानामायतावपायवहुलत्वमुक्तं, अपायवहुलमपि यन्न तुच्छं न तत्परिहर्तुं शक्यत इति काकिण्याम्रफलदृष्टान्ताभ्यां तत्तुच्छत्वं दर्शितं, तुच्छमपि लाभच्छेदात्मकव्यवहाराभिज्ञतया आयव्ययतोलनानिपुण एव त्यक्तुं शक्त इति वणिग्व्यवहारदृष्टान्तः, आयव्ययतोलना च कथं कार्येति समुद्रदृष्टान्तस्तत्र च दिव्यकामानामब्धिजलोपमत्वमुक्तं, तथा च तेषामुपार्जनं महानायोऽनुपार्जनं तु महान् व्यय इति तत्वतो दर्शितमिति ध्येयं। इह च योगक्षेमासंवेदने कामानिवृत्त एव स्यादिति तस्य दोषमाह—

**मूलम्**—इह कामा निअट्टस्स, अत्तट्ठे अवरज्झइ। सोच्चा नेआउअं मग्गं, जं भुज्जो परिभस्सइ ॥ २५ ॥

व्याख्या—इहेति मनुष्यत्वे जिनमते वा प्राप्ते इति शेषः, कामेभ्योऽनिवृत्तोऽनुपरतः कामानिवृत्तस्तस्य आत्मनोऽर्थ आत्मार्थः स्वर्गादिरपराध्यति, अनेकार्थत्वाद्धातूनां भ्रश्यति। कुतश्चैवमित्याह—श्रुत्वा उपलक्षणत्वात्प्रतिपद्य च नैयायिकं न्यायोपपन्नं मार्गं रत्नत्रयरूपं मुक्तिमार्गं, यद्यस्माद्भूयः पुनः परिभ्रश्यति, कामनिवृत्तिं प्रतिपन्नोऽपि गुरुकर्मत्वात्ततः प्रतिपतति। ये तु श्रुत्वापि न प्रतिपन्नाः, श्रवणं वा येषां नास्ति तेऽपि कामानिवृत्ता एवेति भाव इति सूत्रार्थः ॥ २५ ॥ यस्तु कामेभ्यो निवृत्तस्तस्य गुणमाह—

**मूलम्**—इह कामनिअट्टस्स, अत्तट्ठे नावरज्झइ। पूइदेहनिरोहेणं, भवे देवित्ति मे सुअं ॥ २६ ॥

व्याख्या—इह कामेभ्यो निवृत्तः कामनिवृत्तस्तस्यात्मार्थः स्वर्गादिर्नापराध्यति न भ्रश्यति, कुतः पुनरेवं? यतः पूतिः कुथितो देह औदारिकं शरीरं तस्य निरोधोऽभावः पूतिदेहनिरोधस्तेन कामनिवृत्तो भवेद्देवः सौधर्मादिकल्पवासी। उपलक्षणत्वात् सिद्धो वा। इत्येतन्मया श्रुतं परमगुरुभ्य इति शेष इति सूत्रार्थः ॥ २६ ॥ तदनु यदसौ प्राप्नोति तदाह—

**मूलम्**—इड्ढी जुई जसो वण्णो, आउं सुहमणुत्तरं। भुज्जो जत्थ मणुस्सेसु, तत्थ से उववज्जइ ॥ २७ ॥

व्याख्या—ऋद्धिः स्वर्णादिका, द्युतिः शरीरकान्तिः, यशः पराक्रमकृता प्रसिद्धिः, वर्णो गाम्भीर्यादिगुणोत्था श्लाघा, गौरत्वादिर्वा, आयुर्जीवितं, सुखं यथेष्टविषयावाप्तिः, अनुत्तरं सर्वोत्कृष्टमिदञ्च सर्वत्र योज्यते। एतानि यत्र येषु मनुष्येषु भवन्ति प्राच्यस्य भूयःशब्दस्येह योगात् भूयः पुनस्तत्र तेषु स उपपद्यते जायते इति सूत्रार्थः ॥ २७ ॥ एवञ्च कामानिवृत्त्या यस्यात्मार्थो विनश्यति स बालः, इतरस्तु पण्डित इत्यर्थादुक्तं, सम्प्रति सूत्रत्रयेण पुनस्तयोः स्वरूपमुपदर्श्योपदेशमाह—

**मूलम्**—बालस्स पस्स बालत्तं, अहम्मं पडिवज्जिआ। चिच्चा धम्मं अहम्मिट्ठे, नरएसु उववज्जइ ॥ २८ ॥

व्याख्या—बालस्य मूढस्य पश्य बालत्वं, किं तदित्याह—अधर्मं विषयासक्तिरूपं प्रतिपद्याङ्गीकृत्य त्यक्त्वा धर्मं भोगत्यागरूपं 'अहम्मिट्ठेत्ति' प्राग्वन्नरके उपलक्षणत्वादन्यत्र दुर्गतौ उपपद्यते ॥ २८ ॥ तथा—

**मूलम्**—धीरस्स पस्स धीरत्तं, सव्वधम्माणुवत्तिणो। चिच्चा अधम्मं धम्मिट्ठे, देवेसु उववज्जइ ॥ २९ ॥

व्याख्या—धिया राजते इति धीरो बुद्धिमान्, परीषहाद्यजय्यो वा धीरस्तस्य पश्य धीरत्वं, सर्वधर्मं क्षान्त्यादिरूपमनुवर्त्तते तदनुकूलाचरणेन स्वीकरोतीत्येवंशीलो यः स सर्वधर्मानुवर्त्ती तस्य सर्वधर्मानुवर्त्तिनः। धीरत्वमेवाह—त्यक्त्वा अधर्मं भोगाभिष्वङ्गरूपं 'धम्मिट्ठेत्ति' इष्टधर्मा देवेषूपपद्यते ॥ २९ ॥ ततः किं कर्तव्यमित्याह—

**मूलम्**—तुलिआ णं बालभावं, अबालं चेव पंडिए। चइऊण बालभावं, अबालं सेवए मुणित्ति बेमि ॥३०॥

॥ इइ सत्तमज्झयणं सम्मत्तं ॥

व्याख्या—तोलयित्वा बालभावं बालत्वं, 'अबालंति' भावप्रधानत्वान्निर्देशस्य अबालत्वं, चः समुच्चये, 'एवेति' सूत्रत्वादनुस्वारलोपः, ततश्च एवमनन्तरोक्तन्यायेन पण्डितस्तत्त्वज्ञः त्यक्त्वा बालभावं 'अबालंति' अबालत्वं सेवते मुनिरिति सूत्रत्रयार्थः ॥ ३० ॥ इति ब्रवीमीति प्राग्वत् ॥

---

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ सप्तमाध्ययनं सम्पूर्णम् ॥ ७ ॥

# "अथाष्टमाध्ययनम्"

व्याख्यातं सप्तममध्ययनं, अथ कपिलमुनिप्रणीतत्वेन कापिलीयाख्यमष्टममारभ्यते, अस्य चायं सम्बन्धोऽनन्तराध्ययने रसगृद्धित्याग उक्तः, स च निर्लोभस्यैव स्यादित्यत्र निर्लोभत्वमुच्यते, इत्यनेन सम्बन्धेनायातस्याऽस्य प्रस्तावनार्थमादौ कपिलमुनिचरितमुच्यते । तत्रायं सम्प्रदायः—

तथाहि पुर्यां कौशाम्ब्यां, जितशत्रुमहीशितुः ॥ पुरोधाः काश्यपाह्वोऽभू–द्विद्याम्भोनिधिपारगः ॥ १ ॥ यशस्विनी यशा नाम्नी, तस्यासीत्प्राणवल्लभा ॥ अजनिष्ट तयोः सूनुः, क्रमेण कपिलाभिधः ॥ २ ॥ कपिले च शिशावेव, विपेदे काश्यपोऽन्यदा ॥ कालः कालमकालं वा, न हि मृत्योरपेक्षते ॥ ३ ॥ मृते तस्मिन्नृपोऽन्यस्मिन्, पुरोहितपदं न्यधात् ॥ अस्तङ्गते रवौ तेजः, प्रदोष इव दीपके ॥ ४ ॥ हयारूढं धृतच्छत्रं, तं नूतनपुरोहितम् ॥ गच्छन्तमन्यदापश्य–द्यशा भूरिपरिच्छदम् ॥ ५ ॥ तद्दर्शनानिलोद्धूत–भूरिदुःखानलार्दिता ॥ स्मारं स्मारं निजं कान्तं, रुरोद विवशा यशा ॥ ६ ॥ कपिलोऽपि निजामम्बां, रुदतीं वीक्ष्य दुःखितः ॥ रुदन्नित्यवदन्मात–स्त्वं रोदिषि कुतोऽनिशम् ? ॥ ७ ॥ साऽवादीदस्य विप्रस्य, या सम्पत् पुत्र! वर्त्तते ॥ साऽभवत्त्वत्पितुः सर्वा, गता च त्वयि निर्गुणे ॥८॥ सत्यपि त्वयि पुत्रे यत्, क्रमायाताऽप्यऽगाद्रमा ॥ ततोऽहं दुःखिता कुर्वे, रोदनं नन्दनाऽन्वहम् ॥ ९ ॥ सुतः प्रोचे ब्रूहि मात–र्विद्याभ्यासाय पाठकम् ॥ यथा तदन्तिकेऽधीत्य, भवामि गुणवानहम् ॥ १० ॥ यशाऽशंसन्न कोऽप्यत्र, भवन्तं पाठयिष्यति ॥ यो हि त्वां पाठयेत्तस्मै, कुप्येन्नव्यपुरोहितः ॥ ११ ॥ तद्वत्स ! गच्छ श्रावस्तीं, तत्रास्ति त्वत्पितुः सुहृत् ॥ इन्द्रदत्तद्विजः प्राज्ञः, स हि त्वां पाठयिष्यति ॥ १२ ॥ ततः स गत्वा श्रावस्ती–मिन्द्रदत्तं प्रणम्य च ॥ आत्मानं ज्ञापयित्वोचे, ताताऽध्यापय मामिति ॥ १३ ॥ उपाध्यायोऽभ्यधाद्वत्स !, युक्तस्तेऽसौ मनोरथः ॥ विशेषं नह्यहं कञ्चित्, पश्यामि पशुमूढयोः ॥ १४ ॥ किन्तु ते भोजनं दातुं, निःसत्वादक्षमोऽस्म्यहम् ॥ तद्विना च कथं नित्य–मखिन्नस्त्वं पठिष्यसि ? ॥ १५ ॥ भ्रातुष्पुत्राय ते विद्या–र्थिने प्राघुर्णकाय च ॥ भोज्यदानेऽप्यशक्तोऽस्मि, तन्मे दुःखायते भृशम् ! ॥ १६ ॥ अलपत्कपिलस्तात[1] !, कृतं चिन्तनयाऽनया ॥ भिक्षावृत्त्या करिष्येऽहं, प्रत्यहं प्राणधारणम् ॥ १७ ॥ उवाच पाठको भिक्षा–वृत्त्याऽध्येतुं न शक्ष्यते ॥ तदेहि तव भुक्त्यर्थं, प्रार्थये कञ्चिदीश्वरम् ॥ १८ ॥ इत्युक्त्वा स समं तेन, शालिभद्रेभ्यमन्दिरम् ॥ जगाम कुञ्जर इव, कलभेन समं सरः ॥१९॥ ॐभूर्भुवःस्वरित्यादि–गायत्रीमंत्रवादिनम् ॥ दत्ताशिषं तमिभ्योऽपि, किं कार्यमिति पृष्टवान् ॥ २० ॥ ऊचे द्विजोऽमुं मन्मित्र–पुत्रमध्येतुमागतम् ॥ भोजय प्रत्यहं ज्ञानो–पष्टम्भो हि महाफलः ॥ २१ ॥ सहर्षं शालिभद्रेण, तद्वाक्ये स्वीकृतेऽन्वहम् ॥ पपाठ पाठकोपान्ते, भुक्त्वा तद्धाम्नि माणवः ॥ २२ ॥ भोक्तुकामस्य तद्गेहे, कपिलस्यानुवासरम् ॥

[1] अल्पवयस्क. ।

दास्येका तरुणी भोज्यं, शोभनं पर्यवेषयत् ॥ २३ ॥ तस्य विद्याभिरात्मानं, भोज्यैरङ्गञ्च पुष्णतः ॥ उदभूद्यौवनं दाक्ष्या–ङ्कुरोज्जीवनजीवनम् ॥ २४ ॥ हास्यशीलो द्विजः सोऽथ, तस्यां दास्यामरज्यत ॥ यौवनं हि विकाराणां, सर्वेषामादिकारणम् ॥ २५ ॥ तया च रक्तया साकं, कपिलोऽरमताऽनिशम् ॥ तदेकचित्ता तञ्चैव–मूचे दास्यन्यदा रहः ॥ २६ ॥ त्वमेव मे प्रियः किन्तु, निःस्वोऽसीत्यपरं नरम् ॥ सेवे वस्त्रादिहेतोश्चे–न्न ते कोपः प्रजायते ॥२७॥ अन्वमन्यत निर्मन्यु–स्तत्रार्थे कपिलोऽपि ताम् ॥ तस्यां पुर्यांश्चान्यदाऽऽसी–द्दासीनामुत्सवो महान् ॥ २८ ॥ तदा च प्रेक्ष्य तां दासी–मुद्विग्नां कपिलो द्विजः ॥ कुतस्तवारतिरिति, पप्रच्छ स्नेहमोहितः ॥ २९ ॥ साऽवादीदद्य दासीना–मुत्सवः समुपस्थितः ॥ न च मे पत्रपुष्पादे–र्मूल्यं किञ्चन विद्यते! ॥ ३० ॥ तद्विना तु सखीमध्ये, लभिष्येऽहं विगोपनाम् ॥ सश्रियो हि स्त्रियो निःस्वां, हीलयन्ति सखीमपि ॥ ३१ ॥ तच्छ्रुत्वा कपिलोप्यन्त–रधृताऽधृतिमुच्चकैः ॥ याति स्थानान्तरं दुःखं, प्रीत्या वारीव कुल्यया ॥ ३२ ॥ ततस्तमवदद्दासी, सुन्दर ! त्वं विषीद मा ॥ अत्रास्ति श्रेष्ठिषु श्रेष्ठो, धनाख्यो धनदोपमः ॥ ३३ ॥ यस्तं प्रबोधयेत्सुप्तं, स तस्मै स्वर्णमाषकौ ॥ ददातीति निशाशेषे, याहि त्वं तस्य मन्दिरे ॥ ३४ ॥ कल्पकाले च कल्याणिन्, कान्तैः कल्याणभाषितैः ॥ प्रबोधयेस्तं राजीवमिवार्कः कोमलैः करैः ॥ ३५ ॥ इत्युक्त्वा कश्चिदन्यः प्राग्, मा यासीदिति शङ्कया ॥ औत्सुक्याज्ञातकाला सा, निशीथे प्रजिघाय तम् ॥ ३६ ॥ स च राजनरैश्चौर, इति बद्धः पथि व्रजन् ॥ प्रसेनजिन्महीजानेः, पुरः प्रातरनी-

यत ॥ ३७ ॥ राज्ञा पृष्टश्च वृत्तान्तं, सर्वं सत्यं जगौ निजम् ॥ तच्छ्रुत्वेत्यभ्यधाद्भूपः, कृपारसमहोदधिः ॥ ३८ ॥ यन्मार्गयसि तत्तुभ्यं, ददामि वद कामितम् ॥ स्वामिन् विचार्य याचिष्ये, प्रोवाचेति ततो द्विजः ॥ ३९ ॥ सोऽथ राज्ञाभ्यनुज्ञातो, गत्वाऽशोकवनान्तरे ॥ दध्यौ वस्त्रादिकं भावि, न हि माषद्वयेन मे ॥ ४० ॥ तत्सुवर्णशतं याचे, यद्वा तेनापि नो भवेत् ॥ गृहयानादि तन्निष्क–सहस्रं प्रार्थये नृपात्! ॥ ४१ ॥ यद्वा तेनापि नापत्य–विवाहादि भविष्यति ॥ तल्लक्षं प्रार्थये दातुः, सत्त्वे किं स्तोकयाञ्चया ॥ ४२ ॥ उद्धारो बन्धुदीनादे–र्लक्षेणापि न सम्भवी ॥ सम्पदां च फलं बन्धु–दीनादीनामुपक्रिया ॥ ४३ ॥ कोटिं कोटिशतं कोटि–सहस्रं वा तदर्थये ॥ तस्येति ध्यायतः पुण्य–वशादियमभून्मतिः ॥ ४४ ॥ माषद्वितयमूलस्या–प्यहो लोभमहीरुहः ॥ विस्फूर्जितं यत्कोटीनां, लाभेऽप्युच्चैः प्रवर्धते ! ॥ ४५ ॥ लोभः स्वल्पोऽपि लाभेना–ऽम्भोजनालमिवाम्भसा ॥ वृद्धिं यातीत्यलं तेन, सन्तोषसुखदस्युना ॥ ४६ ॥ विदेशं मातृनिर्देशा–द्विद्यार्थमहमागतः ॥ सापि नोपार्जिता किन्तु, व्यसनं महदर्जितम्! ॥ ४७ ॥ मातुर्गुरोश्च वाक्यानि, कुलाचारं च लुम्पता ॥ मया विषयगृद्धेन, कर्मानर्हमिदं कृतम्! ॥ ४८ ॥ विषवद्विषमोदर्कै–र्विषयैस्तदलं मम ॥ ध्यायन्नित्यादिसंवेगा–ज्जातिस्मृतिमवाप सः ॥ ४९ ॥ स्वयंबुद्धः स्वयं कृत्वा, लोचं मूर्धनि शुद्धधीः ॥ देवतादत्तलिङ्गो द्राग्, राज्ञोऽभ्यर्णे जगाम सः ॥ ५० ॥ विमृष्टं किमिति स्पष्टं, पृष्टो राज्ञा विशिष्टधीः ॥ निजां मनोरथश्रेणीं, निवेद्येत्यवदन्मुनिः ॥ ५१ ॥ यथा लाभस्तथा लोभो, लाभाल्लोभः प्रवर्धते ॥ माषद्वयाश्रितं कार्यं, कोट्यापि न हि निष्ठितम्! ॥ ५२ ॥ तन्निशम्य नृपस्तुष्टो–ऽवादीन्मुञ्च व्रतं द्रुतम् ॥ ददामि कोटीमपि ते, भुंक्ष्व भोगान् यथासुखम्! ॥५३॥ मुनिः स्माह कृतं द्रव्यै–रसारैर्निस्पृहस्य मे ॥ जातो निर्ग्रन्थ एवाहं, धर्मलाभोऽस्तु भूपते! ॥ ५४ ॥ इत्युक्त्वा भूभुजोऽभ्यर्णा–न्निर्गत्योग्रं तपश्चरन् ॥ विचरन् भुवि षण्मास्या–केवलज्ञानमाप सः ॥५५॥

इतश्च योजनान्यष्टा–दश सर्वत्र विस्तृता ॥ अटव्येकाऽभवद्राज–गृहाभिधपुराध्वनि ॥ ५६ ॥ तत्र चेत्कटदासाख्या–श्चौराः पञ्चशतीमिताः ॥ बलभद्रादयोऽभूवन्, पाताले पन्नगा इव ॥ ५७ ॥ विज्ञाय प्रतिबोधार्हां–स्तांश्च विज्ञानचक्षुषा ॥ तेषामुपकृतिं कर्तुं, तत्रारण्ये ययौ यतिः ॥ ५८ ॥ तमायान्तं द्रुमारूढो–पश्यदेको मलिम्लुचः ॥ आयाति श्रमणः कोपी–त्यन्येषाञ्च न्यवेदयत् ॥ ५९ ॥ अस्मानवगणय्यैव, समेत्ययमिति क्रुधा ॥ गृहीत्वा ते मुनिं निन्यु–रुपसेनापतिं द्रुतम् ॥ ६० ॥ ऊचे सेनापतिः क्रीडां, कुर्मोऽनेनेति चिन्तयन् ॥ साधो! त्वं नृत्य नृत्येति, ततो यतिरदोऽवदत् ॥ ६१ ॥ वाद्यं नृत्यस्य हेतुस्त–द्वादकश्च न विद्यते ॥ तन्नृत्यं स्यात्कथं? कार्यं, न हि स्यात्कारणं विना ॥ ६२ ॥ वादितेष्वथ तालेषु, चौराणां पञ्चभिः शतैः ॥ ध्रुवकानुच्चकैर्गाय–न्ननर्त कपिलो मुनिः ॥ ६३ ॥ तद्यथा–"अधुवे असासयंमि, संसारंमि उ दुक्खपउराए ॥ किं नाम होज्ज तं कम्मयं, जेणाहं दुग्गइं न गच्छेज्जा ॥ ६४ ॥ प्रतिध्रुवमिमं गायन्, ध्रुवं कपिलकेवली ॥ जगौ सूरीन् ध्रुवान् शान्त–रसपीयूषसागरान् ॥ ६५ ॥ एतदध्ययनं जज्ञे, तैरेव ध्रुवकैर्ध्रुवम् ॥ शाश्वत्वं प्रतिपद्यन्ते, वचांस्यपि हि तादृशाम् ॥ ६६ ॥ तेषु चाद्यं ध्रुवं श्रुत्वा, केप्यबुध्यन्त दस्यवः ॥ केचित्त्वन्यं केचिदन्य–तरं तदपरे परम् ॥ ६७ ॥ इत्थं मुनीन्द्रः प्रतिबोध्य तूर्ण–मदीक्षयत्पञ्चशतानि चौरान् ॥ विहृत्य पृथ्व्यां सुचिरं क्रमाच्च, बभूव निर्वाणपुराधिवासी ॥ ६८ ॥ इत्युक्तः सम्प्रदायः, साम्प्रतं सूत्रं प्रस्तूयते, तच्चेदं—

मूलम्—अधुवे असासयंमि, संसारम्मि उ दुक्खपउराए ।
किं नाम होज्ज तं कम्मयं, जेणाहं दुग्गइं न गच्छेज्जा ॥ १ ॥

व्याख्या—कपिलो हि भगवान् स्वयं बुद्धश्चौरप्रतिबोधार्थं प्रथममम्रुं ध्रुवं जगौ । ध्रुवकलक्षणञ्चेदं–"जं गिज्जइ पुव्वं चिअ, पुणो पुणो सव्वकव्वबंधेसु ॥ ध्रुवयंति तमिह तिविहं, छप्पाय चउप्पयं दुपयं ॥ १ ॥ त्ति" अत्र 'अधुवेत्ति' ध्रुव एकास्पदप्रतिबद्धः स्थिर इत्यर्थः, न तथा अध्रुवस्तस्मिन् संसार इति सम्बन्धः । भ्रमन्ति ह्यत्र सर्वस्थानेषु जन्तवः यदुक्तं–"रङ्गभूमिर्न सा काचि–च्छुद्धा जगति विद्यते ॥ विचित्रैः कर्मनेपथ्यै–र्यत्र जीवैर्न नाटितम् ॥ १ ॥" तथा अशाश्वते कालतोप्यनित्ये, अशाश्वतं हि सर्वमिदं राज्यादि, यदुक्तं–"चलं राज्यैश्वर्यं धनकनकसारः परिजनो, नृपाद्वा वाल्लभ्यं चलममरसौख्यं च विपुलं ॥ चलं रूपारोग्यं बलमिह चलं जीवितमिदं, जनो दृष्टो यो वै जनयति सुखं सोपि हि चलः ॥ १ ॥" संसारे भवे प्रचुरकाणि प्रभूतानि दुःखानि शारीरमानसानि यत्र स तथा, प्राकृतत्वाच्च व्यत्यये 'दुक्खपउराएत्ति' किमिति प्रश्ने, नामेति वाक्यालङ्कारे, भवेत्तत् कर्मैव कर्मकमनुष्ठानं? येन कर्मणा हेतुभूतेन

अहं दुर्गतिं नरकादिकां 'न गच्छेज्जत्ति' न गच्छेयं । अत्र च तस्य भगवतः संशयाभावेऽपि दुर्गतिगमनाभावेपि च यदेवमुक्तं तत्प्रतिबोधनीयपूर्वसङ्गतिकापेक्षमिति सूत्रार्थः ॥ १ ॥ एवञ्च भगवतोद्गीते तालान् कुट्टयद्भिश्चौरैश्च प्रत्युद्गीतेऽस्मिन् ध्रुवके पुनर्भगवानाह—

मूलम्—विजहित्तु पुव्वसंजोगं, न सिणेहं कहिंचि कुव्विज्जा ।
असिणेह सिणेहकरेहिं, दोसपओसेहिं मुच्चए भिक्खु ॥ २ ॥

व्याख्या—विहाय त्यक्त्वा पूर्वसंयोगं, पूर्वपरिचितानां मातापित्रादिस्वजनानामुपलक्षणत्वाद्धनस्य च सम्बन्धं, न स्नेहमभिष्वङ्गं क्वचिद्बाह्येऽभ्यन्तरे वा परिग्रहे कुर्वीत कुर्यात्, तथा च को गुणः ? इत्याह, अस्नेहः प्रतिबन्धरहितः प्राकृतत्वाद्विसर्गलोपः, स्नेहकरेष्वपि पुत्रकलत्रादिषु आस्तामन्येषु, अपिश्चात्र लुप्तो द्रष्टव्यः, दोषाश्च इहैव मनस्तापादयः, प्रदोषाश्च परत्र नरकप्राप्त्यादयो दोषप्रदोषास्तैर्मुच्यते त्यज्यते भिक्षुरिति सूत्रार्थः ॥२॥ पुनर्यदसौ कृतवांस्तदाह—

मूलम्—तो णाणदंसणसमग्गो, हिअनिस्सेअसाए सव्वजीवाणं ।
तेसिं वि मोक्खणट्ठाए, भासई मुणिवरो विगयमोहो ॥ ३ ॥

व्याख्या—'तोत्ति' ततोऽनन्तरं भाषते मुनिवर इति सम्बन्धः, स च कीदृश इत्याह । ज्ञानदर्शनाभ्यां प्रस्तावात्केवलाभ्यां समग्रः समन्वितः, किमर्थं भाषते ? इत्याह । 'हिअनिस्सेअसाएत्ति' सूत्रत्वात् हितो भावारोग्यहेतुत्वात् पथ्यो यो निश्रेयसो मोक्षस्तस्मै तदर्थं, केषां ? सर्वजीवानां, 'तेसिंति' चस्य गम्यत्वात्तेषाञ्च पञ्चशतचौराणां विमोक्षणार्थं भाषते वक्ति वर्त्तमाननिर्देशस्तत्कालापेक्षया मुनिवरो विगतमोहः क्षपितमोहनीयकर्मा । इह च 'हिअनिस्सेअसाए सव्वजीवाणमित्यनेनैव चरितार्थत्वेऽपि 'तेसिं विमोक्खणट्ठाएत्ति' यत् पुनरभिधानं तत्तदा भगवतस्तानेवोद्दिश्य प्रवृत्तिरिति प्राधान्यख्यापनार्थमिति सूत्रार्थः ॥ ३ ॥ यच्चासौ भाषते तदाह—

मूलम्—सव्वं गंथं कलहं च, विप्पजहे तहाविहं भिक्खू । सव्वेसु कामजाएसु, पासमाणो न लिप्पई ताई ॥४॥

व्याख्या—सर्वमशेषं ग्रन्थं बाह्यं धनादिकं आन्तरं मिथ्यात्वादिकं परिग्रहं, कलहहेतुत्वात्कलहः क्रोधस्तं, च शब्दान्मानादींश्च, आन्तरग्रन्थरूपत्वेऽप्येषां पृथक् ग्रहणं बहुदोषताख्यापनार्थं, 'विप्पजहेत्ति' विप्रजह्यात्त्यजेत्, तथाविधं कर्मबन्धहेतुं धर्मोपकरणमपीत्यभिप्रायः । भिक्षुर्मुनिः ततश्च किं स्यादित्याह, सर्वेषु कामजातेषु शब्दादिविषयसमूहेषु 'पासमाणोत्ति' पश्यन् अत्यन्तकटुकं तद्दोषमिति शेषः, न लिप्यते न सज्यते 'ताइत्ति' त्रायते रक्षत्यात्मानं दुर्गतेरिति त्रायीति सूत्रार्थः ॥ ४ ॥ इत्थं ग्रन्थत्यागे गुणमुक्त्वा व्यतिरेके दोषमाह—

मूलम्—भोगामिसदोसविसन्ने, हिअनिस्सेअसबुद्धिविवज्जत्थे ।
बाले अ मंदिए मूढे, बज्झई मच्छिआ व खेलंमि ॥ ५ ॥

व्याख्या—भोगा एव गृद्धिहेतुत्वादामिषं भोगामिषं, तदेवात्मदूषणाद्दोषो भोगामिषदोषस्तस्मिन् विविधं सन्नो निमग्नो भोगामिषदोषविषण्णः, हिते निश्रेयसे मोक्षे बुद्धिस्तल्लाभोपायविषया मतिर्विपर्यस्ता विपर्ययवती यस्य स हितनिश्रेयसबुद्धिविपर्यस्तः, बालश्चाज्ञः, मंदिएत्ति' सूत्रत्वान्मन्दो धर्मकरणम्प्रत्यलसः, मूढो मोहाकुलितचेताः बध्यते श्लिष्यतेऽर्थात् ज्ञानावरणादिकर्मणा मक्षिकेव श्लेष्मणि रजसेति गम्यते । अयं भावः—यथाऽसौ तद्गन्धेनाकृष्यमाणा खेले मज्जति, मग्ना च रेण्वादिना बध्यते, एवं जीवोपि भोगामिषमग्नः कर्मणेति सूत्रार्थः ॥ ५ ॥ ननु यद्येवं कर्मबन्धहेतवो भोगास्तर्हि किं न सर्वेऽपि तांस्त्यजन्तीत्याह—

मूलम्—दुपरिच्चया इमे कामा, नो सुजहा अधीरपुरिसेहिं ।
अह संति सुव्वया साहू, जे तरंति अतरं वणिआ वा ॥ ६ ॥

व्याख्या—दुष्परित्यजा दुःखेन परित्यक्तुं शक्या इमे प्रत्यक्षाः कामा शब्दाद्याः नो नैव 'सुजहत्ति' आर्षत्वात्सुहानाः सुत्यजाः, कैः ? अधीरपुरुषै ! असात्त्विकनरैः, यच्चेह दुःपरित्यजा इत्युक्त्वा पुनर्न सुजहा इत्युक्तं तदत्यन्तदुस्त्यजत्वख्यापकं, अधीरग्रहणात्तु धीरैः सुत्यजा एवेत्युच्यते, अत एवाह 'अहेत्यादि' अथेति वाक्यान्तरोपन्यासे, सन्ति विद्यन्ते, सुव्रता निष्कलङ्कव्रताः साधवो ये तरन्ति अतिक्रामन्ति अतरं तरीतुमशक्यं भवमित्यर्थः । वणिज इव, वाशब्दस्य इवार्थत्वात् । यथा हि वणिजोऽतरं नीरधिं यानपात्रादिना तरन्ति एवमेतेऽपि व्रतादिना भवमिति ।

उक्तं च—विषयगणः कापुरुषं, करोति वशवर्त्तिनं न सत्पुरुषम् ॥ बध्नाति मशकमेव हि, लूतातन्तुर्न मातङ्गम् ॥१॥" इति सूत्रार्थः ॥ ६ ॥ किं सर्वेऽपि साधवोऽतरं तरन्ति ? उत नेत्याह—

मूलम्—समणामु एगे वयमाणा, पाणवहं मिआ अयाणंता ।
मंदा निरयं गच्छंति, बाला पाविआहिं दिट्ठीहिं ॥ ७ ॥

व्याख्या—श्रमणाः स्मो वयमित्येके केचनान्यतीर्थिका वदमानाः स्वाभिप्रायं दीपयन्तः, 'दीप्तिज्ञानयत्नविमत्युपसम्भाषोपमंत्रणे वद इत्यात्मनेपदम्' । प्राणवधं प्राणघातं मृगा इव मृगा मूढत्वात् अजानन्तः ! के प्राणिनः ? के वा तेषां प्राणाः ? कथं वा वधः ? इत्यनवबुध्यमानाः । अनेन प्रथमव्रतमपि न विदन्ति आस्तां शेषाणीति सूचितं, अत एव मन्दा इव मन्दा मिथ्यात्वमहारोगाकुलिताः 'निरयं' नरकं गच्छन्ति, बाला निर्विवेकाः पापिकाभिः पापहेतुभिर्दृष्टिभिर्दर्शनाभिप्रायरूपाभिः "ब्रह्मणे ब्राह्मणमालभेत, इन्द्राय क्षत्रं, मरुद्भ्यो वैश्यं, तपसे शूद्रं" तथा—"यस्य बुद्धिर्न लिप्येत, हत्वा सर्वमिदं जगत् ॥ आकाशमिव पङ्केन, नासौ पापेन लिप्यते ॥ १ ॥" इत्यादिकाभिर्दयादमबाह्याभिः, तेषां च नरकं गच्छतां वेषादिकं न त्राणाय स्याद्यदुक्तं—"चर्मवल्कलचीराणि, कूर्चमुण्डशिखाजटाः ॥ न व्यपोहन्ति पापानि, शोधकौ तु दयादमौ ॥ १ ॥" इति सूत्रार्थः ॥ ७ ॥ अत एवाह—

मूलम्—न हु पाणवहं अणुजाणे, मुच्चिज्ज कयाइ सव्वदुक्खाणं ।
एवं आरिएहिं अक्खायं, जेहिं इमो साहुधम्मो पण्णत्तो ॥ ८ ॥

व्याख्या—न हु नैव प्राणवधं मृषावादादेरुपलक्षणञ्चैतत्, 'अणुजाणेत्ति' अपेर्लुप्तस्य दर्शनादनुजानन्नपि आस्तां कुर्वन् कारयन् वा मुच्येत त्यज्येत कदाचित् क्वापि काले 'सव्वदुक्खाणंति' सुपूव्यत्ययात्सर्वदुःखैः, शारीरमानसैः क्लेशैः, ततो हिंसादिनिवृत्ता एव श्रमणा भवं तरन्तीति तत्वम् । न चैतन्मयैवोच्यत इत्याह, एवमुक्तनीत्या आर्यैस्तीर्थकरादिभिराख्यातं कथितं, यैरार्यैरसौ साधुधर्मो हिंसानिवृत्त्यादिः प्रज्ञप्तः प्ररूपित इति सूत्रार्थः ॥ ८ ॥ साधुधर्ममेवाह—

मूलम्—पाणे अ नाइवाइज्जा, से समिएत्ति वुच्चइ ताई । तओ से पावयं कम्मं, निज्जाइ उदगं व थलाओ९

व्याख्या—प्राणान्नातिपातयेत्, चकारात्कारणानुमत्योर्निषेधमाह । मृषावादादिपरिहारोपलक्षणञ्चैतत् । किमिति प्राणान्नातिपातयेदित्याह, 'सेत्ति' यः प्राणान्नातिपातयति स समितः समितिमान् इत्युच्यते । किं भूतः सन्नित्याह, त्रायी अवश्यं प्राणित्राता, समितत्वेपि को गुणः ? इत्याह, ततः समितात् 'से इति' अथ पापकं अशुभं कर्म निर्याति निर्गच्छति, उदकमिव स्थलादत्युन्नतदृढभूप्रदेशादिति सूत्रार्थः ॥ ९ ॥ यदुक्तं प्राणान्नातिपातयेदिति तदेव स्पष्टयति—

मूलम्—जगनिस्सिएहिं भूएहिं, तसनामेहिं थावरेहिं च ।
नो तेसिमारभे दंडं, मणसा वयसा कायसा चेव ॥ १० ॥

व्याख्या—जगन्निश्रितेषु लोकाश्रितेषु भूतेषु जन्तुषु, त्रसनामसु त्रसनामकर्मोदयवत्सु द्वीन्द्रियादिषु, स्थावरेषु पृथिव्यादिषु, चः समुच्चये, नो नैव तेषु आरभेत कुर्याद्दण्डं वधात्मकं 'मणसा वयसा कायसा चेवत्ति' सूत्रत्वात् मनसा वचसा कायेन 'चेवत्ति' समुच्चये, इदमिह तात्पर्य—"सव्वेवि दुक्खभिरू, सव्वेवि सुहाभिलासिणो सत्ता ॥ सव्वेवि जीवणपिआ, सव्वे मरणाओ वीहंति ॥ १ ॥" इति मत्वा न कस्यापि हिंसां कुर्यादिति सूत्रार्थः ॥ १० ॥ उक्ता मूलगुणा अथोत्तरगुणा वाच्यास्तेषु चैषणासमितिः प्रधानेति तामाह—

मूलम्—सुद्धेसणाओ नच्चा णं, तत्थ ठविज्ज भिक्खू अप्पाणं ।
जायाए घासमेसिज्जा, रसगिद्धे न सिआ भिक्खाए ॥ ११ ॥

व्याख्या—शुद्धा निर्दोषा एषणा उद्गमोत्पादनाद्याः शुद्धैषणास्ता ज्ञात्वा तत्र स्थापयेन्निवेशयेद्भिक्षुर्मुमुक्षुरात्मानं, किमुक्तं भवति ? अनेषणीयत्यागेन शुद्धमेव गृह्णीयात्तदपि किमर्थम् ? इत्याह—'जायाएत्ति' यात्रायै संयमनिर्वाहार्थम्, 'घासंति' ग्रासमेषयेद्गवेषयत् । एषणाशुद्धमप्यादाय कथं भोक्तव्यमिति ग्रासैषणामाह— रसेषु स्निग्धमधुरादिषु

गृद्धो गृद्धिमान न स्यान्न भवेद्भिक्षाद्येऽनेन रागत्याग उक्तो, द्वेषोपलक्षणञ्चैतत्ततश्च रागद्वेषविमुक्तो भुञ्जीतेति सूत्रार्थः ॥ ११ ॥ रसागृद्धश्च यत्कुर्यात्तदाह—

मूलम्—पंताणि चेव सेविज्जा, सीअपिंडं पुराणकुम्मासं। अदु वक्कस पुलागं वा, जवणट्ठाए निसेवए मंथुं॥१२

व्याख्या—प्रान्तान्येव नीरसान्येव सेवेत भुञ्जीत, कानि पुनः प्रान्तानीत्याह—शीतपिण्डं शीताहारं, शीतोऽपि शाल्यादिपिण्डः सरस एव स्यादत आह—पुराणाः प्रभूतवर्षधृता' कुल्माषा राजमाषास्तान्, एते हि पुराणा अत्यन्तपूतयो नीरसा भवन्तीति तद्ग्रहणं, उपलक्षणञ्चैतत् पुराणमुद्गादीनां 'अदु' इत्यथवा 'वक्कसं' मुद्गादिनिर्हिकानिष्पन्नमन्नं, पुलाकमसारं वल्लचनकादि, वा समुच्चये। 'जवणट्ठाएत्ति' यापनार्थं देहनिर्वाहार्थं निषेवेत भुञ्जीत, मन्थुञ्च बदरादिचूर्णं, चस्य गम्यमानत्वात् अतिरूक्षतया चास्य प्रान्तत्वं। इह च यापनार्थमित्यनेनैतत्सूचितं, यदि तेन शरीरयापना स्यात्तदा तदेव सेवेत, यदि तु वातोद्रेकादिना तद्यापनैव न स्यात् तदा गच्छगतो मुनिः सरसमपि सेवेत। जिनकल्पिकादिर्गच्छनिर्गतस्तु प्रान्तादीन्येव सेवेत, तस्य तादृशानामेवादानानुज्ञानात्। पुनः क्रियाभिधानं तु न सकृदेतानि सेवेत, किन्तु सर्वदापीति सूचनार्थमिति सूत्रार्थः ॥ १२ ॥ शुद्धैषणाविपर्यये दोषमाह—

मूलम्—जे लक्खणं च सुविणं च, अंगविज्जं च जे पउंजंति।
न हु ते समणा वुच्चंति, एवं आयरिएहिं अक्खायं ॥ १३ ॥

व्याख्या—ये मुनयो लक्षणं शुभाशुभसूचकं पुरुषादिलक्षणं तत्प्रतिपादकं शास्त्रमपि लक्षणं, "अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु ॥ गतौ यानं स्वरे चाज्ञा, सर्वं सत्वे प्रतिष्ठितम् ॥१॥" इत्यादिकं। स्वप्नं च स्वप्नस्य शुभाशुभसूचकं शास्त्रं, "अलङ्कृतानां द्रव्याणां, वाजिवारणयोस्तथा ॥ वृषभस्य च शुक्लस्य, दर्शने प्राप्नुयाद्यशः ॥१॥" तथा—"मूत्रं वा कुरुते स्वप्ने, पुरीषञ्चापि लोहितम् ॥ प्रतिबुध्येत यः सोऽर्थ—नाशं प्राप्नोति निश्चितम् ॥ १ ॥" इत्यादिकं। अङ्गविद्यां च शिरःप्रभृत्यङ्गस्फुरणतः शुभाशुभसूचिकां, "सिरफुरणे किर रज्जं, पिअमेलो होइ बाहुफुरणम्मि ॥ अच्छिफुरणंमि अ पिअं, अहरे पिअसंगमो होई ॥ १ ॥" इत्यादिकां। प्रणवमायाबीजादिवर्णविन्यासात्मिकां वा। चकारः सर्वत्र वाशब्दार्थः, ये प्रयुञ्जते व्यापारयन्ति, पुनर्ये इति ग्रहणं लक्षणादिभिः पृथक् सम्बन्धसूचनार्थं, ततश्च प्रत्येकमपि लक्षणादीनि ये प्रयुञ्जते, न तु समस्तान्येव, 'न हु' नैव ते श्रमणा उच्यन्ते। इह च पुष्टालम्बनं विना तद्व्यापारणे एवमुच्यते, अन्यथा करवीरलताभ्रमकतपस्विनोऽपि तथात्वापत्तेः, एवं आचार्यैराख्यातं कथितमिति सूत्रार्थः ॥ १३ ॥ तेषां फलमाह—

मूलम्—इह जीविअं अनिअमेत्ता, पब्भट्ठा समाहिजोएहिं।
ते कामभोगा रसगिद्धा, उववज्जंति आसुरे काए ॥ १४ ॥

व्याख्या—इह जन्मनि जीवितमसंयमजीवितं अनियम्य द्वादशविधतपोविधानादिना अनियंत्र्य प्रभ्रष्टाः प्रच्युताः समाधिश्चित्तस्वास्थ्यं तत्प्रधाना योगाः शुभमनोवाक्कायव्यापाराः समाधियोगास्तेभ्यः तेऽनन्तरोक्ताः कामभोगेषु पूर्वोक्तेषु रसेषु मधुरादिषु च गृद्धा लोलुपाः कामभोगरसगृद्धाः, भोगान्तर्गतत्वेपि रसानां पृथग्ग्रहणमतिगृद्धहेतुत्वख्यापकं, उपपद्यन्ते जायन्ते आसुरे असुरसम्बन्धिनि काये निकाये, एवंविधा हि किञ्चित्कष्टानुष्ठानमनुतिष्ठन्तोऽपि विराधकत्वादसुरेष्वेवोत्पद्यन्ते इति सूत्रार्थः ॥ १४ ॥ ततोऽपि च्युतास्ते किं प्राप्नुवन्तीत्याह—

मूलम्—तत्तोवि उवट्टित्ता, संसारं बहुं अणुपरिअडंति। बहुकम्मलेवलित्ताणं, बोही होई सुदुल्लहो तेसिं१५

व्याख्या—ततोपि असुरनिकायादुद्वृत्य निर्गत्य संसारं भवं 'बहु' विस्तीर्णं अनुपर्यटन्ति सातत्येन परिभ्रमन्ति, किञ्च बहुकर्मलेपलिप्तानां बोधिः प्रेत्य जिनधर्मावाप्तिः भवति सुदुर्लभोऽतिशयेन दुष्प्रापः तेषां, ये लक्षणादि प्रयुञ्जते। यतश्चैवमतो नोत्तरगुणविराधना कार्येति सूत्रार्थः ॥ १५ ॥ ननु किमेते जानन्तोऽप्येवं लक्षणादि प्रयुञ्जते? उच्यते—लोभवशादत एव तदाकुलस्यात्मनो दुष्पूरत्वमाह—

मूलम्—कसिणंपि जो इमं लोगं, पडिपुण्णं दलेज्ज इक्कस्स।
तेणावि से न संतुस्से, इइ दुप्पूरए इमे आया ॥ १६ ॥

व्याख्या—कृत्स्नमपि सकलमपि यः सुरेन्द्रादिरिमं प्रत्यक्षं लोकं प्रतिपूर्णं धनधान्यादिभृतं 'दलेज्जत्ति' दद्यात् 'इक्कस्सत्ति' एकस्मै कस्मैचिदाराधकाय तेनापि धनादिपूर्णलोकदायकेनापि स लुब्धो न सन्तुष्येत्, अनेन दायकेन

मम परिपूर्णता कृतेति न सन्तुष्टिमाप्नुयात् । यदुक्तं—"न वह्निस्तृणकाष्ठाद्यै-र्नदीभिर्वा महोदधिः ॥ न चैवात्मार्थसारेण, शक्यस्तर्पयितुं क्वचित् ॥ १ ॥ इत्यमुना प्रकारेण दुःखेन पूरयितुं शक्यो दुष्पूरः सएव दुष्पूरकः 'इमेत्ति' अयं प्रत्यक्ष आत्मा जीवस्तदिच्छायाः पूरयितुमशक्यत्वादिति सूत्रार्थः ॥ १६ ॥ असन्तोषे स्वविदितं हेतुमाह—

मूलम्—जहा लाहो तहा लोहो, लाहा लोहो पवड्ढइ । दोमासकयं कज्जं, कोडीएवि न निट्ठिअं ॥ १७ ॥

व्याख्या—यथा लाभो द्रव्यप्राप्तिः तथा लोभो मूर्च्छा भवतीति शेषः, किमेवमित्याह— यतो लाभाल्लोभः प्रवर्धते, यथा यथा लाभस्तथा तथा लोभः प्रवर्धत इत्यर्थः । कुतश्चैवमित्याह—द्वाभ्यां माषाभ्यां कृतं द्विमाषकृतं कार्यं प्रयोजनं दास्याः पुष्पताम्बूलमूल्यरूपं कोट्यापि दीनाराणां न निष्ठितं न निष्पन्नं, उत्तरोत्तरविशेषाभिलाषादिति सूत्रार्थः ॥ १७ ॥ द्विमाषकृतं च कार्यं स्त्रीमूलमिति तत्परिहारोपदेशमाह—

मूलम्—णो रक्खसीसु गिज्झिज्जा, गंडवच्छासु णेगचित्तासु ।
जाओ पुरिसं पलोभित्ता, खेलंति जहा वा दासे हिं ॥ १८ ॥

व्याख्या—नो नैव, राक्षस्य इव राक्षस्यः स्त्रियस्तासु, यथा हि राक्षस्यो रक्तसर्वस्वमपकर्षन्ति जीवितं च प्राणिनामपहरन्ति, एवमेता अपि तत्त्वतो हि ज्ञानादीन्येव जीवितं, ज्ञानादीनि च ताभिरपह्रियन्त एवेत्येवमुक्तं । 'गिज्झिज्जत्ति' गृध्येदभिकांक्षावान् भवेत्, कीदृशीषु ? 'गंडवच्छासुत्ति' पिशितपिण्डरूपत्वाद्गण्डे इव गण्डे कुचौ वक्षसि यासां तास्तथा तासु, वैराग्योत्पादनार्थश्चेत्थमुक्तं । अनेकान्यनेकसंख्यानि चञ्चलतया चित्तानि यासां तास्तथा तासु, उक्तञ्च—"हृद्यन्यद्वाच्यन्यत्, कर्मण्यन्यत् पुरोऽथ पृष्ठेऽन्यत् ॥ अन्यत्तव मम चान्यत्, स्त्रीणां सर्वं किमप्यन्यत् ॥१॥" याः स्त्रियः पुरुषं कुलीनमपि प्रलोभ्य त्वमेव मे शरणं त्वमेव च मे प्रिय इत्यादिकाभिर्वाग्भिर्विप्रतार्य खेलन्ति क्रीडन्ति 'जहावत्ति' वाशब्दस्यैवकारार्थत्वात् यथैव दासैरेहि याहि मा वायासीरित्यादिभिः क्रीडाभिर्दासमिव पुरुषं प्रवर्त्तयन्त्यो विलसन्तीति सूत्रार्थः ॥ १८ ॥ पुनस्तासामेवातिहेयतां दर्शयन्नाह—

मूलम्—नारीसु नो पगिज्झिज्जा, इत्थी विप्पजहे अणगारे ।
धम्मं च पेसलं णच्चा, तत्थ ठविज्ज भिक्खू अप्पाणं ॥ १९ ॥

व्याख्या—नारीषु नो नैव प्रगृध्येत् प्रशब्दः प्रारम्भे, ततो गृद्धिमारभेतापि न, किं पुनः कुर्यादिति भाव. । 'इत्थियत्ति' स्त्रियो 'विप्पजहेत्ति' विप्रजह्यात् त्यजेत्, पूर्वं नारीग्रहणान्मानुष्य एवोक्ता, इह तु देव तिर्यक्सम्बन्धिन्योपि त्याज्या उक्ता इति न पौनरुक्त्यं । अनगारो मुनिः, किं पुनः कुर्यादित्याह—'धम्मं चत्ति' चशब्दस्यावधारणार्थत्वात् धर्ममेव ब्रह्मचर्यादिरूपं पेशलमत्र परत्र चैकान्तहितत्वेनाऽतिमनोज्ञं ज्ञात्वावबुध्य तत्रेति धर्मे स्थापयेद्भिक्षुर्मुनिरात्मानमिति सूत्रार्थः ॥ १९ ॥ अध्ययनार्थोपसंहारमाह—

मूलम्—इति एस धम्मे, अक्खाए कविलेणं च विसुद्धपण्णेणं ।
तरिहिंति जे काहिंति, तेहिं आराहिअ दुवेलोगत्ति बेमि ॥ २० ॥

व्याख्या—इत्यनेन प्रकारेण एष पूर्वोक्तो धर्मो मुनिधर्म आख्यातः कथितः, केनेत्याह—कपिलेनेति पूर्वसङ्गतिकत्वादमी मद्वचनं प्रतिपद्यन्तामित्यात्मानमेव निर्दिशति, चः पूर्त्तौ, विशुद्धप्रज्ञेन निर्मलज्ञानेन । अथार्थसिद्धिमाह—'तरिहंतित्ति' तरिष्यन्ति भवाब्धिमिति शेषः, के ? इत्याह—ये नराः करिष्यन्ति प्रक्रमादमुं धर्मं, अन्यच्च, तैराराधितौ द्वौ लोकौ इहलोकपरलोकरूपौ, इह महाजनपूज्यतया परत्र च स्वर्गापवर्गादिप्राप्तिरिति सूत्रार्थः ॥ २० ॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ अष्टमाध्ययनं सम्पूर्णम् ॥ ८ ॥

## ॥ अथ नवमाध्ययनम् ॥

॥ अर्हम् ॥ उक्तमष्टमाध्ययनं, अथ नमिप्रव्रज्याख्यं नवममारभ्यते, अस्य चायमभिसम्बन्धोनन्तराध्ययने निर्लोभत्वमुक्तं, निर्लोभश्चेहापि शक्रादिपूज्यः स्यात्तदुपदर्शनायेदमुच्यते, इत्यनेन सम्बन्धेनायातस्यास्य प्रस्तावनार्थं नमिचरितं तावदिहावश्यं वाच्यम्। यथाचायं प्रत्येकबुद्धस्तथान्येपि करकण्ड्वादयस्त्रयः प्रत्येकबुद्धास्तत्समकालस्वर्गच्यवनदीक्षोपादानकेवलज्ञानमहानन्दपदभाजो बभूवुर्यद्वक्ष्यति, "करकंडू कलिंगेसु, पंचालेसु अ दुम्मुहो ॥ नमी राया विदेहेसु, गंधारेसु अ नग्गइ ॥ १ ॥ त्ति" ततः प्रसङ्गात्तचरितान्यपीहोच्यन्ते ।

तत्रादौ वृषभं वीक्ष्य, प्रतिबुद्धस्य धीनिधेः ॥ करकण्डुमहीजाने–श्चरितं वच्मि तद्यथा ॥ १ ॥ अत्रैव भरते चम्पा–नगर्यां गुरुविक्रमः ॥ भूपोभूद्गुणरत्नाना–मुदधिर्दधिवाहनः ॥ २ ॥ पुत्री चेटकभूभर्त्तुः, शीलादिगुणसेवधिः ॥ राज्ञी तस्याभवत्पद्मा–वती पद्मा हरेरिव ॥ ३ ॥ भुञ्जाना भूभुजा साकं, भोगाभोगान् यथासुखम् ॥ बभूव सा क्रमादन्त–र्वत्नी पत्नी महीपतेः ॥ ४ ॥ कृतपार्थिवनेपथ्या, धृतच्छत्रा धराभृता ॥ विहराम्यहमारामे, पट्टेभस्कन्धमाश्रिता ॥ ५ ॥ इत्यभूद्दोहदस्तस्याः, काले गर्भानुभावतः ॥ तस्यापूर्णे च सा कार्श्यं, कृष्णपक्षेन्दुवद्दधौ ॥ ६ ॥ [ युग्मम् ] ततः पृथ्वीभृता पृष्टा, महिषी कार्श्यकारणम् ॥ जगौ तं दोहदं राज्ञः, प्रमोदद्रुमदोहदम् ॥ ७ ॥ ततो भूपस्तया साक–मारुह्य जयकुञ्जरम् ॥ स्वयं तदुपरि छत्रं, दधत्पूर्णेन्दुसुन्दरम् ॥ ८ ॥ सानन्दं पौरपौरीभिः, प्रेक्ष्यमाणो बलान्वितः ॥ प्रावृट्कालप्रवेशेन, रम्यमाराममासदत् ॥ ९ ॥ [ युग्मम् ] तदा च नव्यपाथोद–पाथः सङ्गमसम्भवः ॥ गन्धः प्रादुरभूद्भूमेः, सुरभिर्नासिकन्धयः ॥ १० ॥ तञ्च गन्धं समाघ्राय, ध्यायन् विन्ध्याचलाटवीम् ॥ व्यालः काल इवोत्तालः, कान्तारं प्रत्यधावत ॥ ११ ॥ व्यावर्तमानो विक्रान्तै–र्भूयोभिरपि स द्विपः ॥ कदाग्रहादिव शठो, गमनान्न न्यवर्तत ॥ १२ ॥ कुर्वाणैर्विविधोपायान्, स्खल्यमानोपि मानवैः ॥ न तस्थौ सिन्धुरः सिन्धु–पूरः शरवणैरिव ॥ १३ ॥ विहस्तेषु ततस्तेषु, पश्यत्स्वेव स हस्तिराट् ॥ पश्यतोहरवद्भूप–राज्ञ्यौ हृत्वा वनेऽनयत् ॥ १४ ॥ तत्र प्रेक्ष्य क्षमापालो, दूरादेकं वटद्रुमम् ॥ देवीमूचे गजो ह्येष, गन्ताऽमुष्य तरोरधः ॥ १५ ॥ तत्र चास्मिन् गते सद्यः, शाखां न्यग्रोधशाखिनः ॥ गृह्णीयास्त्वं ग्रहीष्येत–च्छाखामहमपि प्रिये ! ॥ १६ ॥ आवां ततो गमिष्यावो, गजं हित्वा निजं पुरं ॥ अन्यथा त्वावयोर्भावी, वनेस्मिन् कोप्युपद्रवः ॥ १७ ॥ प्रतिपन्नाप्यदो वाक्यं, वटस्याधो गते गजे ॥ तच्छाखाग्रहणायालं, नाभूद्राज्ञी चिरक्रिया ॥ १८ ॥ क्ष्मापस्तु दक्षस्तच्छाखा–मालम्ब्योदतरद्रुतात् ॥ प्राणप्रियामपश्यंश्च, व्यलापीदिति दुःखितः ॥ १९ ॥ अयि कांते ! कदा भावी ?, सङ्गमः पुनरावयोः ॥ अमुना रिपुरूपेण, करिणा वञ्चितोस्मि हा ! ॥ २० ॥ त्वद्वियोगोद्भवं दुःखं, दावाग्नेरपि दुःसहम् ॥ असोढपूर्वं दयिते !, सहिष्येहं कियच्चिरम् ? ॥ २१ ॥ दुःखमेतद् घटेम्भोधि–रिव माति न मे हृदि ॥ तत्किं कुर्वे ? क्व गच्छामि ?, पुरः कस्य ब्रवीमि वा ? ॥ २२ ॥ इत्यादि विलपन् दुःख–भरभङ्गुरमानसः ॥ दन्तिपादानुसारेण, ययौ चम्पापुरीं नृपः ॥ २३ ॥ राज्ञः प्रियां तु तां दन्ती, निन्ये निर्मानुषाटवीम् ॥ पिपासाविवशस्तत्रा–विशच्चैकं महासरः ॥ २४ ॥ पार्श्वो सुरेभवत्तत्र, क्रीडति द्विरदे शनैः ॥ उत्ततार ततो राज्ञी, कुरङ्गीव महागिरेः ॥ २५ ॥ सरस्तीर्त्वा च हंसीव, पुलिनोद्देशमागता ॥ पश्यन्ती परितोपश्य–दरण्यानीं भयप्रदाम् ॥ २६ ॥ यूथच्यूतकुरङ्गीव, ततः सात्यर्थमातुरा ॥ मुक्तकण्ठं रुरोदोच्चै–रोदयन्ती खगानपि ॥ २७ ॥ कथञ्चिद्धैर्यमालम्ब्य, दध्यौ चैवं नृपाङ्गना ॥ दुष्कर्मदोपतो ह्याप–दियमापतिता मम ॥ २८ ॥ न चातिचिक्कणः कर्म–मलो रोदनसम्भवैः ॥ विनेतुं शक्यते नीरै–स्तदलं, रोदनेन मे ! ॥ २९ ॥ किञ्चास्मिन् गहने व्याघ्र–सिंहादिश्वापदाकुले ॥ उपद्रवोपि कोपि स्यात्, तत् प्रमादं जहाम्यहम् ॥ ३० ॥ इति ध्यात्वा कृतचतुः–शरणा सा महाशया ॥ क्षमयित्वाखिलान् सत्त्वान्, निन्दित्वा दुरितं निजम् ॥ ३१ ॥ साकारानशनं कृत्वा–ऽरण्यनिस्तरणावधि ॥ स्मरन्ती प्रकटं पञ्च–परमेष्ठिनमस्क्रियाः ॥ ३२ ॥ अध्वानं निजपुर्याश्च, दिग्मूढत्वादजानती ॥ गन्तुं प्रववृते काञ्चि–द्दिशमुद्दिश्य सत्वरम् ॥ ३३ ॥ [ त्रिभिर्विशेषकम् ] दूरङ्गता च सा प्रेक्ष्य, तत्र कञ्चनतापसम् ॥ पिप्रियेऽन्तः पयः प्राप्य, पिपासुरिव जङ्गले ॥ ३४ ॥ कृताभिवादनां ताञ्च, पप्रच्छेति स तापसः ॥ मातः ! कुत इहायासी–स्त्वं देवीव मनोरमा ॥ ३५ ॥ अहं चेटकराट्पुत्री, दधिवाहनराड्वधूः ॥ इहानीता द्विपेनेति, स्ववृत्तं साप्यवोचत ॥ ३६ ॥ अहं चेटकभूभर्त्तु–र्बान्धवोस्मि महाशये !

तन्मा मैषीर्मा कृथाश्च, शोकं नीचजनोचितम् ॥ ३७ ॥ इत्युक्त्वा तापसश्रेष्ठ–स्तस्यै वनफलान्यदात् ॥ आतिथ्यं ह्यतिथेः प्रीणा–मनुसारेण जायते ॥ ३८ ॥ पारेर्णवं पोत इव, नीत्वा पारेवनं च ताम् ॥ दर्शयन् वसतो ग्रामा-नित्युवाच तपोनिधिः ॥ ३९ ॥ सीरकृष्टां भुवं नैवा–क्रामामो वयमित्यहम् ॥ नायास्यामि पुरस्त्वं तु, निर्भयातः परं व्रजेः ॥ ४० ॥ देशो दन्तपुरस्यायं, दन्तवक्रोऽत्र भूपतिः ॥ गत्वा पुरेत्र चम्पायां, गच्छेः सार्थेन संयुता ॥ ४१ ॥ इत्युदित्वा न्यवर्तिष्ट, शिष्टात्मा तापसाग्रणीः ॥ सापि दन्तपुरे प्राप्ता, साध्वीनामन्तिके ययौ ॥ ४२ ॥ कृतप्रणामां विधिव–त्ताञ्च पार्थिवकामिनीम् ॥ श्राद्धे! त्वं कुत आयासी–रित्यपृच्छत् प्रवर्त्तिनी ॥ ४३ ॥ साप्युवाच निजां वार्तां, विना गर्भं यथास्थिताम् ॥ स्मृतानुभूतदुःखा च, जज्ञेश्रुक्लिन्नलोचना ॥ ४४ ॥ ततः प्रवर्त्तिनी प्रोचे, मा खिद्यस्व महाशये! ॥ कर्मणां हि परीणामो–ऽप्रतिकार्यः सुरैरपि ॥ ४५ ॥ "किञ्च–" वातोद्धूतध्वजप्रान्त–चञ्चलै-श्चर्यशर्मणि ॥ चलेष्टजनसङ्गेस्मिन्, भवे सौख्यं न किञ्चन ॥ ४६ ॥ जन्मरोगजराशोक–मृत्युदौःस्थ्याद्युपद्रवैः ॥ व्याकुलेत्र भवे दुःख–मेव प्रायो भवेद्विशाम् ॥ ४७ ॥ यच्चेह स्यात्सुखं किञ्चि–द्विषयाद्युपभोगजम् ॥ दुःखानुषङ्गा-त्तदपि, दुःख एव निमज्जति ॥ ४८ ॥ यत एव च संसारो, दुःखानामेकमास्पदम् ॥ प्रपद्यन्ते मोक्षमार्ग–मत एव विवेकिनः ॥ ४९ ॥ इति तद्देशनां श्रुत्वा, विरक्ता साददे व्रतम् ॥ पृष्टाप्याचष्ट नो गर्भं, चारित्रादानशङ्कया ॥५०॥ गर्भवृद्धौ च साध्वीभिः, पृष्टा किमिदमित्यसौ ॥ सत्यमूचे ततस्तास्तां, साध्वीं गुप्तमरक्षयन् ॥ ५१ ॥ गर्भकाले च सम्पूर्णे, शय्यान्तरगृहस्थिता ॥ असूत सुतरत्नं सा, मणिं रोहणभूरिव ॥ ५२ ॥ ततो गृहीत्वा तं बालं, गत्वा प्रेत-वनेऽमुचत् ॥ तत्तातनाममुद्राङ्कं, रत्नकम्बलवेष्टितम् ॥ ५३ ॥ द्रष्टुं तद्ग्राहकं साथ, तच्च त्रातुमुपद्रवात् ॥ प्रच्छन्नं संस्थितापाक्षी–दृशा प्रेमामृतार्द्रया ॥ ५४ ॥ तत्रायातस्तदा प्रेत–वनेशोऽपत्यवर्जितः ॥ जगृहे तं निजगृहे, नीत्वा पत्न्यै च दत्तवान् ॥ ५५ ॥ तस्यावकर्णक इति, सानन्दः सोभिधां व्यधात् ॥ आर्यापि तद्गृहं वीक्ष्य, जगामोपाश्रयं निजम् ॥ ५६ ॥ क्व गर्भ इति साध्वीभिः, पृष्टा चेत्यवदन्मृषा ॥ मृतः सुतो मया जातः, स च त्यक्तः क्वचि-त्ततः ॥ ५७ ॥ साध्व्योपि सरलाः सर्वा–स्तत्तथा प्रतिपेदिरे ॥ बालस्तु ववृधे तस्य, सौधे पङ्क इवाम्बुजम् ॥ ५८ ॥ वत्सं गौरिव तं बालं, ध्यायन्ती सा तु संयता ॥ जगाम प्रत्यहं प्रेत–वनपालस्य धामनि ॥ ५९ ॥ तत्पत्न्या च समं प्रेम, चक्रे सम्भाषणादिभिः ॥ अलालयच्च तं बाल–महो! मोहोतिदुर्जयः ॥ ६० ॥ अवाप यच्च भिक्षायां, शोभनं मोदकादिकम् ॥ तद्बालायार्पयत्सोपि, तस्यां रागं दधौ ततः ॥ ६१ ॥ जन्मतस्तस्य देहे च, रूक्षकण्डूर-भृत्भृशम् ॥ स च वृद्धिङ्गतो बालैः, समं क्रीडन्नदोवदत् ॥ ६२ ॥ अहं वो नृपतिस्तस्मा–द्यूयं दत्त करं मम ॥ बालाः प्रोचुः करस्थाने, ब्रूहि किं ते प्रदीयते ? ॥ ६३ ॥ स प्रोचे चण्डकण्डूको, मां कण्डूयध्वमुच्चकैः ॥ करणानेन तुष्टोस्मि, कृतं तदपरैः करैः ॥ ६४ ॥ ततस्तस्याभिधां बालाः, करकण्डूरिति व्यधुः ॥ गुणक्रियादिभिर्नाम, नवीनमपि जायते ॥ ६५ ॥ किञ्चित्प्रौढत्वमापन्नः, श्मशानं च ररक्ष सः ॥ तदेव हि कुले तस्मिन्, गीयते कार्यमुत्तमम् ॥६६॥ हेतोः कुतश्चिदायातौ, श्मशाने तत्र चान्यदा ॥ द्वौ मुनी वंशजालान्त–र्दण्डमेकमपश्यताम् ॥ ६७ ॥ तयो-रेको यतिर्दण्ड–लक्षणज्ञो महामतिः ॥ तं वंशं दर्शयन्नेव–मवादीदपरं मुनिम् ॥ ६८ ॥ यावता वर्धते चत्वा– र्यङ्गु-लान्यपराण्ययम् ॥ तावत्प्रतीक्ष्य यो ह्येन–मादत्ते स भवेन्नृपः ॥ ६९ ॥ तच्च साधुवचो वृक्ष–निकुञ्जान्तरवर्तिना ॥ तेन मातङ्गपुत्रेण, द्विजेनैकेन च श्रुतम् ॥ ७० ॥ ततो वंशस्य तस्याधः, खनित्वा चतुरङ्गुलम् ॥ छित्त्वा प्रच्छन्नवृत्त्या तं, वाडवो दण्डमाददे ॥ ७१ ॥ तच्च प्रेक्ष्य द्विजेनात्तं, करकण्डुः क्रुधा ज्वलन् ॥ आछिद्य जगृहे को वा, राज्य-लक्ष्मीं न कांक्षति ? ॥ ७२ ॥ ततस्तं करणे नीत्वा, दण्डं देहीत्यवग् द्विजः ॥ स प्रोचेऽसौ श्मशाने मे, जात-स्तन्न ददामि ते ॥ ७३ ॥ विप्रोवोचदनेनैव, कार्यं मे वर्त्तते ततः ॥ अस्य स्थानेन्यमादाय, दण्डमेनं प्रदेहि मे ॥ ७४ ॥ तेनेत्युक्तोपि तं दण्डं, करकण्डुरनर्पयन् ॥ कुतोऽमुं न ददासीति, पृष्टः कारणिकैस्तदा ॥ ७५ ॥ बालो-ऽब्रवीत्सुरस्येव, दण्डस्यास्य प्रभावतः ॥ भविष्यामि नृपो नूनं, तदस्यामुं ददे कथम् ? ॥ ७६ ॥ ततो विहस्य तं बाल––मेवं कारणिका जगुः ॥ राज्यावाप्तौ द्विजस्यास्य, ग्राममेकं त्वमर्पयेः ॥ ७७ ॥ तत्प्रपद्य निजं धाम, कर-कण्डुर्ययौ द्रुतम् ॥ द्विजोप्यन्यान् द्विजानेव––मूचे गत्वा स्वमास्पदम् ॥ ७८ ॥ दण्डं ममापि जग्राह, बलाचाण्डाल-बालकः ॥ ततः कथञ्चित्तं हत्वा, दण्डमादद्महे वयम् ॥ ७९ ॥ कथमप्येतदाकर्ण्या–चकर्णकपिता ततः ॥ पत्नी-पुत्रान्वितोनश्य––त्सुतरक्षाकृते क्षणात् ॥ ८० ॥ गत्वा च काञ्चनपुरे, ते त्रयोपि पुराद्बहिः ॥ कुत्रापि सुषुपुः

श्रान्ताः, स्वापो हि श्रमभेषजम् ॥ ८१ ॥ तदा च नगरे तत्रा-पुत्रो राजा व्यपद्यत ॥ ततोधिवासयामासु—स्तु-रङ्गं मंत्रिपुङ्गवाः ॥ ८२ ॥ तुरङ्गोऽपि श्रमंस्तेषां, सुप्तानामन्तिके ययौ ॥ तञ्च प्रदक्षिणी चक्रे, बालं देवमिवास्तिकः ॥ ८३ ॥ तञ्च तेजस्विनं श्रेष्ठ—लक्षणं वीक्ष्य नागराः ॥ तुष्टा जयारवं चक्रु—स्तूर्यनिर्घोषमिश्रितम् ॥ ८४ ॥ ध्वानेन तेन विध्वस्त—प्रमीलः सोथ बालकः ॥ जृम्भायमाण उत्तस्था—वारुरोह च तं हयम् ॥ ८५ ॥ तूर्यध्वनि-प्रतिध्वाना—पूर्णद्यावाक्षमान्तरः ॥ पौरैः परीतः परित—स्तारापतिरिवोडुभिः ॥ ८६ ॥ युक्तः पितृभ्यां नगरे, प्रविशन् स च वाडवैः ॥ अरोधि मातङ्ग इति, मातङ्ग इव शूकरैः ॥ ८७ ॥ [ युग्मम् ] ततो गृहीत्वा तं दण्डं, करकण्डुः पुरोकरोत् ॥ तस्य राज्यप्रदाने हि, स एव प्रतिभूरभूत् ॥ ८८ ॥ निर्मितो ज्वलनेनेवा—ज्वलद्दण्डस्तदा च सः ॥ तञ्च प्रेक्ष्य द्विजा भीता, नेशुः शरमिव द्विकाः ॥ ८९ ॥ पुरे प्रविष्टो राज्ये चा-भिषिक्तो धीसखादिभिः ॥ सोथ राजा सजातीया- न्मातङ्गान्विदधे द्विजान् ॥ ९० ॥ उक्तञ्च—"दधिवाहनपुत्रेण,राज्ञा च करकण्डुना ॥ वाट-धानकवास्तव्या-श्चाण्डाला ब्राह्मणीकृताः ॥ ९१ ॥" तस्यावकर्णक इति, त्यक्त्वाद्यं नाम नीरसम् ॥ बालोक्तमेव तत्प्रोचुः, करकण्डुरिति प्रजाः ॥ ९२ ॥ प्राप्तराज्यञ्च तं श्रुत्वा, दण्डच्छेदी स वाडवः ॥ आगत्योवाच राजन्मे, देहि ग्रामं तदोदितम् ॥ ९३ ॥ कं ग्रामं ते ददामीति, राज्ञोक्तः स पुनर्जगौ ॥ चम्पायां मे गृहं तस्मा-त्तद्देशे ग्राममर्पय ॥ ९४ ॥ ततो लेखं लिलेखैवं, करकण्डुनरेश्वरः ॥ दधिवाहनभूपालं, प्रति निष्प्रतिमो गुणैः ॥ ९५ ॥ "तथाहि—" स्वस्ति श्रीकाञ्चनपुरा-त्करकण्डुर्महीपतिः ॥ सम्भाषते नृपं चम्पा-धिपं श्रीदधिवाहनम् ॥ ९६ ॥ परमात्मप्रभावेण, कल्याणमिह विद्यते ॥ श्रीमद्भिरपि तद्ज्ञाप्यं, स्वशरीरादिगोचरम् ॥ ९७ ॥ किञ्चास्मै ब्राह्मणा-यैको, ग्रामो देयः समीहितः ॥ दास्ये वो रुचितं ग्रामं, नगरं वा तदास्पदे ॥ ९८ ॥ इदं कार्यं ध्रुवं कार्यं, नात्र कार्या विचारणा ॥ मूल्यावाप्तौ विमर्शो हि, व्यर्थ एवेति मङ्गलम् ॥ ९९ ॥ लेखमेनं समादाय, विप्रश्चम्पापुरीं गतः ॥ आस्थानस्थस्य भूपस्य, पाणिपद्मातिथिं व्यधात् ॥ १०० ॥ तद्वाचनहविर्होम—दीप्तक्रोधहुताशनः ॥ तमित्यूचे धराधीशो, भ्रकुटीविकटाननः ॥ १ ॥ रे! मातङ्गस्य किं तस्य, स्वजातिरपि विस्मृता ? ॥ अनात्मज्ञोलिखल्लेखं, यो ममोपरि दुष्टधीः ॥ २ ॥ लेखेनानेन तं नीच—मस्पर्श्यं स्पृष्टपूर्विणा ॥ अहं मलीनतां नीतो-ऽज्ञानाद्वा किं न जायते ? ॥ ३ ॥ रे विप्र ! याहि याहि त्वं, नोचेन्मातङ्गलेखदः ॥ यास्यसि त्वं पतङ्गत्वं, मत्कोपज्वलनेधुना ॥ ४ ॥ तेनेत्युक्तो द्विजो गत्वा, तदूचे करकण्डवे ॥ क्रोधाध्मातस्ततः सोपि, यात्राभेरीमवीवदत् ॥ ५ ॥ चतुरङ्गचमू-चक्रै-र्भुवमाच्छादयन्निव ॥ जगाम चम्पानगरीं, सर्वतस्तां रुरोध च ॥ ६ ॥ वीराणामुत्सव इवा- नन्ददायी ततो-न्वहम् ॥ पुरस्थायिबहिःस्थायि—सैन्ययोरभवद्रणः ॥ ७ ॥ ताञ्च पद्मावती साध्वी, वार्तां श्रुत्वेत्यचिन्तयत् ॥ अज्ञा-नेन पितापुत्रौ, कुरुतः समरं मिथः ॥ ८ ॥ भूयसां प्राणिनां नाशो, दावबह्वाविवाहवे ॥ तयोर्नरकदो भावी, तद्गत्वा शमयामि तम् ॥ ९ ॥ इति ध्यात्वा मुख्यसाध्वी—मापृच्छय च महासती ॥ करकण्डुसमीपेगा—त्सोप्युत्थाय ननाम ताम् ॥ १० ॥ साथ तस्मै रहः प्रोच्य, प्राच्यं वृत्तान्तमात्मनः ॥ इत्याख्यत्तव माताहं, पिता च दधिवाहनः ॥ ११ ॥ तत्तातेन समं युद्धं, न युक्तं ते महामते ! ॥ कुलीना हि न लुम्पन्ति, गुरूणां विनयं क्वचित् ॥ १२ ॥ तच्छ्रुत्वा तेन पृष्टौ ता-वूचतुः पितरावपि ॥ पुत्रो नः पालितोसि त्वं, सम्प्राप्तः प्रेतकानने ॥ १३ ॥ साध्वीवाक्ये ततो जात-प्रत्ययोपि स पार्थिवः ॥ दर्पान्नापासरजन्या-द्राजन्यानां ह्यसौ बहुः ॥ १४ ॥ आर्या ययौ ततो मध्ये-पुरं राज्ञो गृहे द्रुतम् ॥ ताञ्चोपालक्षयंश्चेट्यः, प्रणेमुश्च ससम्भ्रमम् ॥ १५ ॥ दिष्ट्या दृष्टाद्य मातस्त्व-मियत्कालं क्व च स्थिता ॥ चिरात्किं दर्शनं दत्तं, किमिदं स्वीकृतं व्रतम् ? ॥ १६ ॥ इत्याद्युच्चैर्वदन्त्यस्ता, रुरुदुश्च मुहुर्मुहुः ॥ इष्टानां दर्शने जीर्ण-मपि दुःखं नवायते ! ॥ १७ ॥ तं च कोलाहलं श्रुत्वा, तत्रायातो धराधिपः ॥ तां प्रणम्यासनं दत्वा, क्व गर्भ इति पृष्टवान् ॥ १८ ॥ राजन् ! गर्भः स एवायं, येनेयं वेष्टिता पुरी ॥ तयेत्युक्तश्च स प्रापा-नन्दं वाचा-मगोचरम् ॥ १९ ॥ उत्कण्ठोत्कर्षपानीया-पूर्णमानसमानसः ॥ सुतेन तेन सङ्गन्तुं, गन्तुं प्रववृते नृपः ॥ २० ॥ समायान्तं समाकर्ण्य, करकण्डुनृपोपि तम् ॥ अभ्यागात् पादचारेण, पादयोश्चापतत्पितुः ॥ २१ ॥ पितापि तं नतं दोर्भ्या-मादाय परिषस्वजे ॥ तदङ्गसङ्गपीयूषै-र्निजं निर्वापयन् वपुः ॥ २२ ॥ भूपाग्धेः पश्यतस्तस्या-दृष्टपूर्वं सुतो-डुपम् ॥ ललंघे लघु हृत्कूल-मुद्वेलैः प्रमदोदकैः ॥ २३ ॥ तञ्चाभ्यषिञ्चदङ्कस्थं, नृपः प्राक् सम्मदाश्रुभिः ॥ राज्या-भिषेकनीरैश्च, पश्चात्सिंहासनस्थितम् ॥ २४ ॥ इति चावोचदायुष्मन् !, राज्यमेतत्क्रमागतम् ॥ पालनीयं तथा

लोका, यथा नैव स्मरन्ति माम् ॥ २५ ॥ नियोज्येमां राज्यभार–धुरां त्वयि धुरन्धरे ॥ धास्ये धर्मधुरां शुक्ल–मिदं हि समये विदाम् ॥ २६ ॥ इत्युक्त्वा व्रतमादत्त, नृपः सद्गुरुसन्निधौ ॥ करकण्डुधराधीश–कृतनिष्क्रमणोत्सवः ॥ २७ ॥

अथ प्रतापदावाग्नि–ध्वस्तवैरियशोद्रुमः ॥ करकण्डुनृपो राज्य–द्वयं सनयमन्वशात् ॥ २८ ॥ स चोर्वीशः स्वभावेन, भृशं वल्लभगोकुलः ॥ सीचके तानि भूयांसि, यादांसीव पयोनिधिः ॥ २९ ॥ स चान्यदा गतः क्वापि, गोकुले जलदात्यये ॥ सुरभीः सौरभेयांश्च, तर्णकांश्च विलोकयन् ॥ ३० ॥ गौरं गौरीगुरुगिरेः, शृङ्गाद्गङ्गाजलाप्लुतात् ॥ एकं तर्णकमद्राक्षी–न्मुग्धं स्निग्धतनुच्छविम् ॥ ३१ ॥ जातप्रेमा ततस्तस्मिन्, भूमान् गोदुहमूचिवान् ॥ एतन्मातुः पयोऽस्यैव, देयं दोह्या तु नैव सा ॥ ३२ ॥ किञ्च वृद्धिं गतस्यास्य, मच्चित्तानन्ददायिनः ॥ अन्यासामपि धेनूनां, पायनीयं पयोऽन्वहम् ॥३३॥ गोपालोऽपि महीपाल–वचनं प्रतिपद्य तत् ॥ तथैव विदधे को वा, राज्ञामाज्ञां विलुम्पति ? ॥ ३४ ॥ सोथ वत्सो वर्धमानः, स्पर्धमानः शशित्विषा ॥ पलोपचयदुर्लक्ष्य–कीकसः प्राज्यविक्रमः ॥ ३५ ॥ शोभमानोंसकूटेन, कूटेनेवावनीधरः ॥ तीक्ष्णाग्रवर्तुलोत्तुङ्ग–शृङ्गस्तारुण्यमासदत् ॥ ३६ ॥ [ युग्मम् ] तथाभूतं च तं क्ष्मापो, वृषभैरपरैः समम् ॥ क्रीडयायोधयत्तं तु, नाजैषीत्कोपि शाङ्करः ॥ ३७ ॥ कालान्तरे च भूपालो, गतो गोकुलमीक्षितुम् ॥ घट्टयमानं पङ्ककार्यै–र्ददर्शैकं जरद्गवम् ॥ ३८ ॥ महोक्षः स महावीर्यः, क्वेत्यपृच्छच्च गोदु-

१ हिमाद्रेः ।

हम् ॥ सोवादीद्देव ! वृषभः, स एवायं जरातुरः ॥ ३९ ॥ तन्निशम्य नृपोध्यासी–दध्यासीनः शुभाशयम् ॥ अहो ! अनित्यता सर्व–भावानां वचनातिगा ॥ ४० ॥ बलिनोपि बलीवर्दा, नेशुर्देसा अपि द्रुतम् ॥ यस्य हम्भारवेण ज्या–टङ्कारेणेव पक्षिणः ॥ ४१ ॥ चलदोष्ठो गलद्दृष्टि–र्नष्टौजा विश्रसावशात् ॥ सोऽधुना पङ्ककैः क्षुद्रां, सहते परिघट्टनाम् ! ॥ ४२ ॥यद्रूपं पश्यतां नेन्दु–दर्शनेप्यादरोऽभवत् ॥ सोप्यद्य तनुते दृष्टो, जुगुप्सा हा पुरीषवत् !॥४३॥ तद्विक्रमवयोरूप–विभुत्वविभवादिकम् ॥ वीक्ष्यतेध्यक्षमेवैत–त्पताकाञ्चलचञ्चलम् ! ॥ ४४ ॥ सत्यप्येवं जनो मोहा–न्न जानाति यथास्थितम् ॥ तत्तमेव निगृह्णामि, गृह्णामि जनुषः फलम् ॥४५॥ ध्यात्वेति कृत्वा स्वयमेव लोचं, बिभ्रन्मुनेर्वेषममर्त्यदत्तम् ॥ प्रत्येकबुद्धः प्रतिबुद्धजीवी, भुवि व्यहार्षीत्करकण्डुराजः ॥ ४६ ॥ [ इति करकण्डुनृपकथा ॥ १ ॥ ]

अथ प्रत्येकबुद्धस्य, बुद्धस्येन्द्रध्वजेक्षणात् ॥ राज्ञो द्विमुखसंज्ञस्य, कथां वक्ष्यामि तद्यथा ॥ १ ॥ पाञ्चालदेशतिलके, पुरे काम्पिल्यनामनि ॥ यवाभिधोभवद्भूपो, हरिवंशाब्धिचन्द्रमाः ॥ २ ॥ तस्यासीद्गुणमालाढ्या, गुणमालाह्वया प्रिया ॥ तया समं नृपो भोगान्, भुञ्जानः कालमत्यगात् ॥ ३ ॥ अन्यदा च गुणास्थान–मास्थानस्थः स पार्थिवः ॥ देशान्तरागतं दूत–मिति पप्रच्छ कौतुकात् ॥ ४ ॥ राज्येन्येषां विद्यमानं, मद्राज्ये किं न विद्यते ? ॥ दूतोवादीत्तव विभो !, नास्ति चित्रसभा शुभा ॥ ५ ॥ ततः कार्यविदाकार्य, नृपतिः स्थपतीन् जगौ ॥ चित्रसत्रसभा चित्र–सभा मे क्रियतामिति ॥ ६ ॥ प्रमाणमादेश इति, प्रोच्य तेपि शुभे क्षणे ॥ प्रारेभिरे भुवः खातं, सभान्यासविधित्सया ॥ ७ ॥ पञ्चमे च दिने तस्मा–द्भूतलात्तेजसा ज्वलन् ॥ मौलिः प्रादुरभूद्रत्न–मयो रविरिवार्णवात् ॥ ८ ॥ तत स्थपतयस्तुष्टा–स्तमाचख्युः क्ष्माभृते ॥ सोत्साहः सोत्सवं सोपि तत्रागत्य तमाददे ॥ ९ ॥ अपूजयच्च स्थपति–प्रभृतीन् वसनादिभिः ॥ तेपि चित्रसभां स्वल्प–कालेनैव वितेनिरे ॥ १० ॥ भित्तिन्यस्तैर्मणिगणै–र्नित्यालोकां विमानवत् ॥ देवीभिरिव माणिक्य–पुत्रिकाभिरधिष्ठिताम् ॥ ११ ॥ माणिक्यतोरणैः शक्र–चापैरिव विराजिताम् ॥ पञ्चवर्णमणिव्यूह–रचनाञ्चितकुट्टिमाम् ॥ १२ ॥ सभा सुधर्मा मत्तोपि, किं रम्येति समीक्षितुम् ॥ उच्चैः कृतं मौलिमिव, शिखरं गुरु बिभ्रतीम् ॥ १३ ॥ विचित्रचित्ररचना–चित्रीयितजगत्त्रयीम् ॥ आह्वयन्तीमिवामर्त्यान्, स्वप्रेक्षायै चलद्ध्वजैः ॥ १४ ॥ प्रविश्य तां सभां भूमि–वल्लभः शोभने दिने ॥ आरोपयन्निजे मौलौ, तं दिव्यं मौलिमुत्सवैः ॥ १५ ॥ [ पञ्चभिः कुलकम् ] तस्य मौलेर्महिम्नाभू–द्राज्ञस्तस्याननद्वयम् ॥ रावणस्य यथा हार–प्रभावेण दशाननी ॥ १६ ॥ ततो द्विमुख इत्यूचे, तस्य नामाखिलैर्जनैः ॥ क्रमाच्च नृपतेस्तस्य, तनयाः सप्त जज्ञिरे ॥ १७ ॥ गुणमाला ततो दध्यौ, सुतेष्वेतेषु सत्स्वपि ॥ एकां छेकां विना पुत्रीं, मन्ये जन्म निरर्थकम् ॥ १८ ॥ लक्ष्मीरिव सुतापि स्या–त्काचित्पित्रोः शुभावहा ॥ ततस्तत्प्राप्तये कञ्चि–द्देवमाराधयाम्यहम् ॥ १९ ॥ ध्यात्वेति मदनाख्यस्य, सा यक्षस्योपयाचितम् ॥ चक्रे सुतार्थे स्वल्पं हि, सर्वं गौरवमश्नुते ॥ २० ॥ ततस्तस्याः सुताप्येका, जज्ञे सौन्दर्यसेवधिः ॥ मन्दारमञ्जरीप्राप्ति–स्वप्नदर्शनसूचिता ॥ २१ ॥ ततो राज्ञा मुदा चक्रे, तस्या जन्ममहो महान् ॥ दत्तं

महाविमूला च, यक्षस्याप्युपयाचितम् ॥ २२ ॥ दत्ता मदनयक्षेण, मञ्जरीस्वप्नसूचिता ॥ इति तामवदन्नार्त्ती, नाम्ना मदनमञ्जरी ॥ २३ ॥ क्रमाच वर्द्धमाना सा, कल्पवल्लीव नन्दने ॥ जगन्मनोहरं प्राप, यौवनं रूपपावनम् ॥ २४ ॥ आदर्शादिषु संक्रान्तात्, तदीयप्रतिबिम्बतः ॥ अन्यत्र नाभवत्तस्या, रूपस्यानुकृतिः क्वचित् ॥ २५ ॥ इतश्चोज्जयनीभर्तु–श्चण्डप्रद्योतभूभृतः ॥ दूतः केनापि कार्येण, काम्पिल्यनगरं ययौ ॥ २६ ॥ स च प्रत्यागतोऽवन्ती–मिति प्रद्योतमब्रवीत् ॥ स्वामिन्! काम्पिल्यनाथस्य, जातमस्ति मुखद्वयम् ॥ २७ ॥ राज्ञाथ कथमित्युक्ते, सोवादीत्तस्य भूपतेः ॥ मौलिरेकोस्ति तस्मिंश्चा–रोपिते स्यान्मुखद्विकम् ॥२८॥ तच्छ्रुत्वा स नृपो जात–लोभः कोटीरहेतवे ॥ वाग्मिनं प्राहिणोद्दूतं, पार्श्वे द्विमुखभूभुजः ॥ २९ ॥ ततः स गत्वा नत्वा च, पाञ्चालाधीशमब्रवीत् ॥ चण्डप्रतापः श्रीचण्ड–प्रद्योतस्तेऽवदत्त्वदः ॥ ३० ॥ मुखद्वयकरं मौलि–रत्नं मे प्रेषयेर्द्रुतम् ॥ नोचेद्रणाय प्रगुणो, भवेः किं भूरिभाषितैः ? ॥ ३१ ॥ ततोवादीन्नृपो दूत!, यदि प्रद्योतभूधवः ॥ दत्ते मे याचितं किञ्चित्, तदाहमपि तं ददे ॥३२॥ किं च यः प्रार्थ्यमिति प्रोक्ते, दूतेन क्ष्माधवोऽभ्यधात् ॥ रदांशुनिकरोन्मिश्र–स्मितविच्छुरिताधरः ॥३३॥ गन्धद्विपोऽनलगिरि–रग्निभीरू रथोत्तमः ॥ राज्ञी शिवाभिधा लोहै–जंघः संदेशहारकः ॥ ३४ ॥ स्वराज्यसाराण्येतानि, दीयन्ते तेन चेन्मम ॥ तदा मयापि मुकुटो, राज्यसारः प्रदीयते ।॥ ३५ ॥ गत्वा दूतोपि तत्सर्वं, प्रद्योताय न्यवेदयत् ॥ ततो दिदीपे तस्योच्चैः, कोपो वायोरिवानलः ॥ ३६ ॥ ततो भेरीं प्रयाणार्थं, प्रवाद्योज्जयनीपतिः ॥ चचाल प्रति पाञ्चालं, चलयन्नचलां बलैः ॥ ३७ ॥ पूरयन्तो दिशः सर्वा, बृंहितैर्गर्जितैरिव ॥ धारासारैरिव रसां, सिञ्चन्तो मदवारिभिः ॥३८॥ स्वर्णादिभूषणैर्विद्युद्दण्डैरिव विराजिताः ॥ लक्षद्विकं द्विपा रेजु–स्तत्सैन्येऽब्दा इवाम्बरे ॥ ३९ ॥ [ युग्मम् ] पञ्चायुतानि तुरगा–स्त्वराधरितवायवः ॥ तत्सेनां भूषणानीवा–म्बुजनेत्रां व्यभूषयन् ॥ ४० ॥ आयुक्तवाजिनो नाना–विधैः प्रहरणैर्भृताः ॥ शताङ्गा विंशतिशती–मितास्तत्र विरेजिरे ॥ ४१ ॥ तद्बलं प्रबलं चक्रु–र्विक्रमक्रमशालिनाम् ॥ कृतवैरिविपत्तीनां, पत्तीनां सप्त कोटयः ॥ ४२ ॥ सज्जया सज्जयार्थिन्या, संयुतः सेनयाऽनया ॥ पाञ्चालसन्धिमच्छिन्नैः, प्रयाणैः स नृपो ययौ ॥ ४३ ॥ तञ्चायान्तं चरैर्ज्ञात्वा, द्विमुखोपि महाबलः ॥ जयेच्छुराजयेऽगच्छत्, सीम्नि देशस्य संमुखः ॥ ४४ ॥ दुर्भेदं गरुडव्यूहं, चण्डप्रद्योतपार्थिवः ॥ स्वसैन्ये विदधे तार्क्ष्यव्यूहं द्विमुखराट् पुनः ॥ ४५ ॥ उत्साहितेषु धीरेषु, रणनिस्वाननिस्वनैः ॥ अथ प्रववृते युद्धं, सैन्ययोरुभयोर्मिथः ॥ ४६ ॥ तदा च शस्त्रसङ्घोत्थ–स्फुलिङ्गकणवर्षणैः ॥ वीराः केपि दिवाप्युल्का–पातोत्पातमदर्शयन् ॥ ४७ ॥ लघुहस्ता भटाः केपि, मुमुचुर्विशिखांस्तदा ॥ तदादानधनुर्न्यासा–कर्षणादिष्वलक्षिताः ॥ ४८ ॥ निस्त्रिंशैर्निशितैः केपि, कुम्भिकुम्भानभेदयन् ॥ तुङ्गानि शैलशृङ्गाणि, तडिद्दण्डैरिवाम्बुदाः ॥ ४९ ॥ केचिद्भटोत्तमा भिन्न–देहा अप्यभिमानिभिः ॥ घातव्यथां न विविदुः, सम्परायपरायणाः ॥ ५० ॥ दण्डैरखण्डयन् केपि, विपक्षान् केपि मुद्गरैः ॥ सशल्यांश्चक्रिरे शल्यैः, केचित्केचित्तु शक्तिभिः ॥ ५१ ॥ एवं रणे जायमाने, कालरात्रिनिभे विशाम् ॥ मौलेस्तस्य प्रभावेणा–जय्योभूद्द्विमुखो नृपः ॥ ५२ ॥ तत्सैन्येन ततोपास्तं, प्रद्योतस्याखिलं बलम् ॥ विदुद्राव द्रुतं भानु–धाम्ना धाम विधोरिव ॥५३॥ तदा चोज्जयनीनाथं, नश्यन्तं द्विमुखो द्रुतम् ॥ जग्राह शशकग्राहं, क्रौञ्चबन्धं बबन्ध च ॥५४॥ तं गृहीत्वाविशद्भूमा–नुत्पताकं निजं पुरम् ॥ सानन्दं बन्दिभिरिव, पौरैः कृतजयारवः ॥ ५५ ॥ न्यधापयच्च निविडं, निगडं तत्पदाब्जयोः ॥ महानपि जनो लोभात्, कां कां नापदमश्नुते ? ॥ ५६ ॥ प्राप्तोपि दुर्दशां दैवा–न्मा नृपः खिद्यतामयम् ॥ इति तं सुखितं चक्रे, भूपः स्नानादनादिना ॥ ५७ ॥ राज्ञोभ्यर्णे सभास्थस्य, प्रद्योतोप्यन्वहं ययौ ॥ न्यवीविशद्द्विशामीशो–ऽर्धासने तञ्च गौरवात् ॥ ५८ ॥

अन्यदा च सुतां राज्ञो, दृष्ट्वा मदनमञ्जरीम् ॥ प्रद्योतो जातगाढानु–रागोभूद्गाढमाकुलः ॥ ५९ ॥ ध्यायतस्तस्य तां सृष्टेः, सारं सारङ्गलोचनाम् ॥ नागान्निद्रा निशीर्ष्यालुः, कामिनीवापरा रतेः ॥ ६० ॥ स्मरोन्मादसमुद्भूत–चिन्तादाघज्वरार्दितः ॥ पुष्पतल्पेपि सुप्तोसौ, स्वास्थ्यं नाप मनागपि ॥ ६१ ॥ वर्षायितां च तां रात्रिं, कथञ्चिदतिवाह्य सः ॥ प्रातः सभां ययौ तञ्चो–द्वीमं वीक्ष्याब्रवीन्नृपः ॥ ६२ ॥ अद्य ते विद्यते राजन्!, किं पीडा कापि रोगजा ? ॥ हेमन्तेब्जमिव म्लान–मास्यं ते कथमन्यथा! ॥ ६३ ॥ पृष्टोप्येवं प्रतिवचः, प्रद्योतो न ददौ यदा ॥ तदातिव्याकुलो भूपः, सनिर्बन्धमदोवदत् ॥ ६४ ॥ राजन्! प्रतिवचो देहि, निवेदय निजां व्यथाम् ॥ अब्रुवाणे त्वयि कथं, भाविनी तत्प्रतिक्रिया ? ॥ ६५ ॥ ततः स दीर्घं निःश्वस्य, जगौ लज्जां विहाय च ॥ न व्याधिर्बाधते

राजन् !, बाधते किन्तु मां स्मरः ॥ ६६ ॥ तद्यदिच्छसि मे क्षेमं, तदा मदनमञ्जरीम् ॥ देहि पुत्रीं निजां मह्यं, नो चेद्वह्नौ विशाम्यहम् ॥ ६७ ॥ द्विमुखोपि ददौ तस्मै, निजां पुत्रीं महामहैः ॥ ताञ्चावाप्य निजं जन्म, सोपि धन्यममन्यत ॥६८॥ व्यसृजद्द्विमुखस्तं चा–न्यदा दत्वा हयादिकम् ॥ प्रद्योतोपि ततोयासी–त्पुरीमुज्जयनीं मुदा ॥६९॥

उपस्थिते शक्रमहे–ऽन्यदा च द्विमुखो नृपः ॥ नागरानादिशच्छक्र–ध्वजः संस्थाप्यतामिति ॥ ७० ॥ ततः पट्ट ध्वजपटं, किङ्किणीमालभारिणम् ॥ माल्यालिमालिनं रत्न–मौक्तिकावलिशालिनम् ॥ ७१ ॥ वेष्टितं चीवरवरै–र्नान्दीनिर्घोषपूर्वकम् ॥ द्रुतमुत्तम्भयामासुः, पौराः पौरन्दरं ध्वजम् ॥ ७२ ॥ [ युग्मम् ] अपूजयन् यथाशक्ति, तं च पुष्पफलादिभिः ॥ पुरस्तस्य च गीतानि, जगुः केपि शुभस्वराः ॥ ७३ ॥ केचित्तु ननृतुः केचि–द्दुच्चैर्वाद्यान्यवादयन् ॥ अर्थितान्यर्थिनां केपि, ददुः कल्पद्रुमा इव ॥ ७४ ॥ कर्पूरमिश्रघुसृण–जलाच्छोटनपूर्वकम् ॥ मिथः केचित्तु चूर्णानि, सुरभीणि निचिक्षिपुः ॥ ७५ ॥ एवं महोत्सवैरागा–त्पूर्णिमा सप्तमे दिने ॥ तदा चापूजयद्भूरि–विभूत्या भूधवोपि तम् ॥ ७६ ॥ सम्पूर्णे चोत्सवे वस्त्र–भूषणादि निजं निजम् ॥ आदाय काष्ठशेषं तं, पौराः पृथ्व्यामपातयन् ॥ ७७ ॥ परेद्युस्तञ्च विण्मूत्र–लिप्तं कुस्थानसंस्थितम् ॥ आक्रम्यमाणं बालाद्यै–र्भूपोऽपश्यद्बहिर्गतः ॥७८॥ ततः संवेगमापन्नो दध्यौ चैवं धराधिपः ॥ य एवं पूज्यमानोऽभू–त्सर्वैर्लोकैर्गतेऽहनि ॥ ७९ ॥ स एवाद्य महाकेतुः, प्राप्नोत्येतां विडम्बनाम् ॥ दृश्यते क्षणिकत्वं तत्, क्षणिकानामिव श्रियाम् ॥ ८० ॥ आयाति याति च क्षिप्रं, या सम्पत्तिसिन्धुपूरवत् ॥ पांशुलायामिव प्राज्ञ–स्तस्यां को नाम रज्यते ? ॥ ८१ ॥ त्यक्त्वा विडम्बनप्राया, तदेनां राज्यसम्पदम् ॥ श्रये निःश्रेयसकरीं, शमसाम्राज्यसम्पदम् ॥ ८२ ॥ ध्यात्वेति विध्यातममत्ववह्निः, कृत्वा स्वयं लोचमुपात्तदीक्षः ॥ प्रत्येकबुद्धो द्विमुखः सुपर्व–वितीर्णलिङ्गो व्यहरत् पृथिव्याम् ॥८३॥ [ इति श्रीद्विमुखनृपकथा ॥२॥ ]

अथ प्रत्येकबुद्धस्य, नमिनाम्नो महात्मनः ॥ वलयात् प्रतिबुद्धस्य, तृतीयस्य कथां ब्रुवे ॥ १ ॥ तथा ह्यत्रैव भरते, देशे मालवकाभिधे ॥ आसीद्दासीकृतस्वर्गं, सुदर्शनपुरं पुरम् ॥ २ ॥ तत्रासीच्छत्रुवित्रासी, राजा मणिरथाभिधः ॥ युगबाहुस्तदनुजो, युवराजोऽभवत्सुधीः ॥ ३ ॥ सौन्दर्येणातिवर्येण, जयन्ती जयवाहिनीम् ॥ जिनवाणीसुधापान–ध्वस्ताज्ञानहलाहला ॥ ४ ॥ निश्चलं शैलरेखाव–द्दधती शीलमुत्तमम् ॥ युगबाहोश्च मदन–रेखासंज्ञाऽभवत्प्रिया ॥ ५ ॥ [ युग्मम् ] तस्या गुणामृतापूर्ण–श्चन्द्रोज्ज्वलयशोद्युतिः ॥ सुतश्चन्द्रयशाश्चन्द्र, इवानन्दप्रदोऽभवत् ॥ ६ ॥ भ्रातृजायां तां च दृष्ट्वा–ऽन्यदा मणिरथो नृपः ॥ इत्यन्तश्चिन्तयामास, व्यथितो मान्मथैः शरैः ॥ ७ ॥ यदि भोगान्न भुञ्जेह–मनयाङ्गनया समम् ॥ अवकेशिद्रुमस्येव, तदा मे निष्फलं जनुः ॥ ८ ॥ कथं पुनर्विनारागं, स्यादस्याः सङ्गमो मम ॥ नह्येकपक्षया प्रीत्या, कामिनां कामितं भवेत् ! ॥ ९ ॥ तदस्याः प्रणयोत्पत्ते–रुपायान् रचयाम्यहम् ॥ पश्चाद्विज्ञाय तद्भावं, करिष्यामि यथोचितम् ॥ १० ॥ ध्यात्वेति तस्यै ताम्बूल–पुष्पभूषांशुकादिकम् ॥ प्रैषीद्दास्या समं काम–विवशानामहो ! कुधीः ॥ ११ ॥ सा तु ज्येष्ठप्रसादोय–मिति ध्यात्वा तदाददे ॥ अथान्यदा नृपोवादी–द्विजने तामिति स्वयम् ॥ १२ ॥ त्वद्रूपं प्रेक्ष्य रक्तं मां, पुमांसं स्वीकरोषि चेत् ॥ सुन्दरि ! त्वां तदा कुर्वे, स्वामिनीं राज्यसम्पदाम् ॥ १३ ॥ सा प्रोचे क्लीबपण्डत्व–हीनस्य भवतः स्वतः ॥ पुंस्त्वमस्त्येव तत्कस्मा–न्मया न प्रतिपद्यते ॥ १४ ॥ त्वद्भ्रातुर्युवराजस्य, पत्न्या मे राज्यसम्पदः ॥ स्वाधीना एव सन्तीति, शून्यमेतत्प्रलोभनम् ॥ १५ ॥ किञ्च स्वीकुर्वते मृत्यु–मपि सन्तो महाशयाः ॥ लोकद्वयविरुद्धं तु, न चिकीर्षन्ति जातुचित् ! ॥ १६ ॥ अन्योच्छिष्टान्नवच्छिष्टाः, परामपि पराङ्गनाम् ॥ नेच्छन्ति किं पुनः पुत्री–तुल्यां भ्रातुर्लघोः स्त्रियम् ॥ १७ ॥ परनारीरिरंसापि, रावणस्येव दुःखदा ॥ महतामपि जायेत, तन्महाराज ! मुञ्च ताम् ॥ १८ ॥ तच्छ्रुत्वा दुष्टधीकूपो, भूपोन्तर्ध्यातवानिति ॥ युगबाहुर्भवेद्याव–त्तावन्नेच्छति मामसौ ॥ १९ ॥ तद्विस्रम्भेण तं हत्वा, ग्रहीष्येहं बलादमूं ॥ स भ्रातापि रिपुर्नूनं, योऽस्याः सङ्गेन्तरायकृत् ॥ २० ॥ इति ध्यात्वा स पापात्मा, भ्रातुश्छिद्राण्यमार्गयत् ॥ कामभूतातुराणां हि, सुत्यजं स्नेहचीवरम् ॥ २१ ॥ मदना तु न तां वार्तां, जगाद युगबाहवे ॥ निवृत्तो मद्गिरा ज्येष्ठो, दुर्भावादिति जानती ॥ २२ ॥ सा चान्यदा विधुं स्वप्ने, दृष्ट्वा पत्ये न्यवेदयत् ॥ सोप्यूचे चन्द्रवद्विश्वा–नन्दिनं लप्स्यसे सुतम् ॥ २३ ॥ ततः प्रमुदितस्वान्ता, सुतगर्भं बभार सा ॥ पारिजाततरोर्बीज–मिव मेरुवसुन्धरा ॥ २४ ॥ पूजयामि जिनान् साधून्, शृणोमि जिनसत्कथाः ॥ इत्यभूद्दोहदस्तस्याः, काले गर्भानुभावतः ॥ २५ ॥ तस्मिंश्च दोहदे पूर्णे, गर्भः स ववृधे सुखम् ॥ अथान्यदा वसन्तर्तु–रागाद्रागिजनप्रियः ॥ २६ ॥ मलया-

निलशैलूष-प्रयोगारब्धनर्तनाः ॥ दधद्वल्लीनटीर्वेल्ल-त्पल्लवोल्लासिहस्तकाः ॥ २७ ॥ माकन्दमञ्जरीपुञ्ज-मञ्जुगुञ्जदलिव्रजम् ॥ कोकिलध्वनिसंत्रास्त-मानिनीमानकुञ्जरम् ॥ २८ ॥ पुष्पिताशोकतिलक-लवङ्गबकुलाकुलम् ॥ विकीर्णकुसुमस्रस्त-परागक्लिन्नभूतलम् ॥ २९ ॥ क्रीडासक्तप्रियायुक्त-व्यक्तकिन्नरसेवितम् ॥ सञ्चारगौरपौरस्त्री-गीतानीतमृगव्रजम् ॥ ३० ॥ वसन्तसङ्गमाद्रम्य-मुद्यानं रन्तुमुद्यतः ॥ प्रमदात्प्रमदायुक्तो युगबाहुर्ययौ तदा ॥ ३१ ॥ [ पञ्चभिः कुलकम् ] दिनं च नानालीलाभि-रतिवाह्य स निश्यपि ॥ तत्रैवास्थादल्पतंत्रो, रम्भावेश्मनि वासपीत् ॥ ३२ ॥ तदा मणिरथो दध्यौ, स्वल्पतंत्रो ममानुजः ॥ निशाव्याप्ततमोघोरे, पाद्योद्यानेऽद्य तिष्ठति ॥ ३३ ॥ तत्तत्र गत्वा तं हत्वा, पूरयिष्यामि काम्यितम् ॥ ध्यात्वेति खड्गमादाय, ययावुद्यानमुद्यतः ॥ ३४ ॥ यामिकानिति चाप्राक्षी-द्युगबाहुः क विद्यते ? ॥ रम्भागृहेऽत्र सुप्तोस्ती-त्यूचिरे तेपि सम्भ्रमात् ॥ ३५ ॥ मा भूद्भ्रातुर्वनस्थस्यो-पद्रवः कश्चिदित्यहम् ॥ इहागामिति सञ्जल्पन्, सोपि रम्भागृहेऽविशत् ॥ ३६ ॥ ससम्भ्रमं समुत्थाय, नमन्तं स्माह चानुजम् ॥ भ्रातर्नात्र निशि स्थातुं, युक्तमागच्छ तत्पुरे ॥ ३७ ॥ उल्लंघ्या नाग्रजस्याज्ञा, तातस्येवेति चिन्तयन् ॥ युगबाहुस्ततो याव-त्पुरे गन्तुं प्रचक्रमे ॥ ३८ ॥ तावत्पापापकीर्त्यादि-भयमुत्सृज्य दुर्मतिः ॥ ग्रीवायामसिना भूप-स्तं विश्वस्तं जघान सः ! ॥ ३९ ॥ प्रहारवेदनाक्रान्ते, तस्मिंश्च पतिते भुवि ॥ अहो ! अक्षत्रमक्षत्रं, पूत्कारेति तत्प्रिया ॥ ४० ॥ ततो दधाविरे कृष्ट-मण्डलाग्रोद्भटा भटाः । किमेतदस्तीत्यूचाना-नित्यूचे तांश्च भूपतिः ॥ ४१ ॥ मत्करात्पतितः खड्गः, प्रमादात्तदलं भिया ॥ तेनेत्युक्ते च तेऽजानन्, सर्वं तस्य कुचेष्टितम् ॥ ४२ ॥ ततो मणिरथं दूर-मपसार्य बलेन ते ॥ युगबाहोः स्वरूपं तत्, तत्पुत्राय न्यवेदयन् ॥ ४३ ॥ सोपि शोकाकुलो वैद्यान्, समाहूयागमद्वने ॥ व्रणकर्माणि यत्नेन, पितुश्चाकारयत्कृती ॥ ४४ ॥ क्षणान्तरे च निश्चेष्टो, नष्टवाग्मीलितेक्षणः ॥ युगबाहुरभूद्रक्त-निर्गमात्पाण्डुविग्रहः ॥ ४५ ॥ ततो ज्ञात्वा तमासन्न-मृत्युं धीरा मृदुस्वरम् ॥ प्रोचे मदनरेखेति, तत्कर्णाभ्यर्णमाश्रिता ॥ ४६ ॥ धीर ! धीरत्वमालम्ब्य, चेतःस्वास्थ्यमुरीकुरु ॥ कस्याप्युपरि रोषं च, मा कार्षीस्त्वं धियांनिधे ! ॥ ४७ ॥ सहस्व व्यसनं चेद-मागतं निजकर्मणा ॥ अपराध्यति जन्तोर्हि, निजं कर्मैव नापरः ॥ ४८ ॥ उक्तञ्च-"जं जेण कयं कम्मं, अन्नभवे इहभवे अ सत्तेणं ॥ तं तेण वेइअव्वं, निमित्तमित्तं परो होइ ॥ ४९ ॥" किञ्चार्हत्सिद्धनिर्ग्रन्थ-धर्माणां शरणं कुरु ॥ जीवहिंसादीनि पाप-स्थानान्यष्टादश त्यज ॥ ५० ॥ महामते ! गृहाण त्वं, परलोकाध्वशम्बलम् ॥ शल्यवद्दुःसदान्निन्द, दुराचारान् पुराकृतान् ॥ ५१ ॥ क्षमयस्वापराधञ्च, सर्वेषां प्राणिनां प्रभो ! ॥ तत्कृतानपराधांश्च, क्षमस्व त्वमपि स्वयम् ॥ ५२ ॥ नाशयेन्निजमेवार्थं, द्वेषस्तस्मात्त्विमुञ्च तम् ॥ सुहृदो मम सर्वेपि, जीवा इति विभावय ॥५३॥ देवं सर्वज्ञमर्हन्तं, गुरूंश्च गुणिनो मुनीन् ॥ धर्मं जिनप्रणीतं च, यावज्जीवमुरीकुरु ॥ ५४ ॥ जीवहिंसानृतस्तेया-ब्रह्मचर्यपरिग्रहान् ॥ त्रिविधं त्रिविधेन त्वं, प्रत्याख्याहि महामते ! ॥ ५५ ॥ धनस्वजनमित्रादा-वभिष्वङ्गञ्च मा कृथाः ॥ न हि प्राणभृतां तानि, भवेयुः शरणं भवे ॥ ५६ ॥ धर्मो धनं सुहृद्बन्धु-रिति चान्तर्विभावय ॥ दुःखहृत्सुखदाता च, यत्स एवात्र जन्मिनाम् ॥ ५७ ॥ इदानीं मुञ्च सावद्य-माहारञ्च चतुर्विधम् ॥ उच्छ्वासे चरमे देह-मपि व्युत्सृज धीर ! हे ॥ ५८ ॥ स्मृतेन येन पापोपि, जन्तुः स्यान्नियतं सुरः ॥ परमेष्ठिनमस्कार-मंत्रं तं स्मर मानसे ॥ ५९ ॥ इत्यादि तद्वचः सर्वं, स्वमौलिरचिताञ्जलिः ॥ युगबाहुः प्रतिपेदे, विपेदे च क्षणान्तरे ॥ ६० ॥ पञ्चमे सुरलोके च, शक्रतुल्यः सुरोऽभवत् ॥ अहो ! महीयान् महिमा, धर्मस्य द्युमणेरपि ॥ ६१ ॥ ततः प्रववृते चन्द्र-यशाः क्रन्दितुमुन्मनाः ॥ दध्यौ मदनरेखा तु, धीरधीरिति चेतसि ॥ ६२ ॥ धिग् धिग् लोभमिवानर्थ-मूलं रूपमिदं मम ॥ यद्वीक्ष्य क्षुब्धचित्तेन, राज्ञा भ्रातापि मारितः ॥ ६३ ॥ असारस्यास्य रूपस्य, हेतोः क्षणविनाशिनः ॥ धिक् कृतं तेन मूढेन, किमकार्यमिदं हहा ! ॥ ६४ ॥ अथायं पापकृच्छीला-पायं कर्ता बलान्मम ॥ तदर्थमेवानर्थोय-मनेन विहितोऽस्ति यत् ॥ ६५ ॥ सिंहस्य केसराः सत्याः, शीलं फणिपतेर्मणिः ॥ प्राणेषु सत्सु नो हर्तुं, शक्यन्ते किन्तु केनचित् ॥ ६६ ॥ यतिष्ये परलोकार्थं, तद्गत्वा नीवृदन्तरे ॥ नो चेन्मे पुत्रमप्येतं, हनिष्यति स दुष्टधीः ! ॥ ६७ ॥ ध्यात्वेति सा महासत्वा, निशीथे निरगात्ततः ॥ अलक्षिता चन्द्रयशो-मुख्यैः शोकांशुकावृतैः ॥ ६८ ॥ पूर्वामभिव्रजन्ती च, भूरि दुःखभरातुरा ॥ प्रातः प्रापाटवीमेकां, नैकश्वापदसङ्कुलाम् ॥ ६९ ॥ तत्र यान्ती च मध्याह्ने, प्रापदेकं महासरः ॥ मुखादि तत्र प्रक्षाल्य, प्राणवृत्तिं व्यधात्फलैः ॥ ७० ॥ साकारानशनं कृत्वा, साथ मार्गश्रमाकुला ॥

तदपोहाय तत्रैवा–रण्ये रम्भागृहेऽस्वपीत् ॥ ७१ ॥ क्रमाच्च पद्मिनीनाथे, गगवल्लपराङ्कते ॥ तद्दुःखादिव सङ्कोच–माश्रिते पद्मिनीकुले ॥ ७२ ॥ रविकण्ठीरवाभावा–न्निःशङ्कं भुवने वने ॥ विहरत्सु तमःपुञ्ज–कुञ्जरेषु निरन्तरम् ॥ ७३ ॥ उडुषूज्जृम्भमाणेषु, निशावल्लीसुमेष्विव ॥ निशावियुक्ते चक्राङ्ग–चक्रे क्रन्दति दारुणम् ॥ ७४ ॥ तमोभिर्व्याप्तिगहनी–भूते च गहनान्तरे ॥ रात्रिर्जातेत्यवहिता, सा बभूव महासती ॥ ७५ ॥ [ चतुर्भिः कलापकम् ] तदा च व्याघ्रसिंहादि–गुञ्जितैर्घूकघूत्कृतैः ॥ घोणिघोणारवैर्व्याल–फूत्कृतैः फेरुफेत्कृतैः ॥ ७६ ॥ बिभ्यती सा नमस्कार–मंत्रं सस्मार मानसे ॥ स हि सर्वास्ववस्थासु, सहायो हेतुमन्तरा ॥ ७७ ॥ [ युग्मम् ] अर्धरात्रे च तत्कुक्षा–वुत्पेदे भूयसी व्यथा ॥ मार्गश्रमभयोद्भूत–गर्भसञ्चलनोद्भवा ॥ ७८ ॥ सुषुवे साथ कृच्छ्रेण, सुतं लक्षणलक्षितम् ॥ तत्स्पर्धयेव पूर्वापि, बालार्कं सुषुवे तदा ॥ ७९ ॥ तयोरेव तदा जज्ञे, बालयोरुपमा मिथः ॥ सचक्रानन्दिनोस्तेज–स्विनोः कोमलपादयोः ॥ ८० ॥ कन्धरालम्बितयुग–बाहुनामाङ्कमुद्रिकम् ॥ तं बालं तत्र मुक्त्वाथ, रत्नकम्बलवेष्टितम् ॥ ८१ ॥ स्वं मनो रक्षकमिव, तत्समीपे विमुच्य सा ॥ ययौ सरसि वासांसि, क्षालयामास तत्र च ॥ ८२ ॥ [ युग्मम् ] मज्जनाय प्रविष्टां च, तटाके तां जलद्विपः ॥ धावन् करेण जग्राह, बकोटः शफरीमिव ॥ ८३ ॥ उच्चैरुल्लालयामास, तां स कन्दुकलीलया ॥ आयाति दुर्दशायां हि, स्वाजन्यादिव दुर्दशा ॥ ८४ ॥ पतन्तीमम्बरात्तां च, नेत्रकैरवकौमुदीम् ॥ विद्याधरोऽग्रहीन्नन्दी–श्वरद्वीपं व्रजन् युवा ॥ ८५ ॥ वैताढ्ये तेन नीता च, रुदती सा तमब्रवीत् ॥ गतरात्रौ महाभाग !, प्रसूतास्मि सुतं वने ॥८६ ॥ तं च रम्भागृहे मुक्त्वा स्नानार्थं सरसीं गता ॥ जलद्विपेनोत्क्षिप्ताहं, पतंती भवताऽऽददे ॥ ८७ ॥ तत् श्वापदेन केनापि, स बालो मारयिष्यते ॥ आहारविरहाद्यद्वा, स्वयमेव मरिष्यति ! ॥ ८८ ॥ तन्मे पुत्रप्रदानेन, प्रसादं कुरु सुन्दर ! ॥ तमिहानय तत्राशु, नय मां वा नयाश्रय ! ॥ ८९ ॥ उवाच खेचरश्चेन्मां, रमणं प्रतिपद्यसे ॥ तदा सदा दास इवा–ऽऽदेशकारी भवामि ते ॥ ९० ॥ किञ्चात्र शैले गान्धार–देशे रत्नावहे पुरे ॥ श्रेणिद्वयप्रभुरभू–न्मणिचूडाभिधो नृपः ॥ ९१ ॥ तस्य पुत्रोऽस्मि कमला–वतीकुक्षीसमुद्भवः ॥ नाम्ना मणिप्रभो भूरि–महाविद्याबलान्वितः ॥ ९२ ॥ अन्यदा मत्पिता श्रेणि–द्वयराज्यं प्रदाय मे ॥ चारणश्रमणोपान्ते, विरक्तो व्रतमाददे ॥ ९३ ॥ क्रमाच्च विहरन्नत्रा–ऽऽगतः सोऽभूद्गतेऽहनि ॥ चैत्यानि वन्दितुं नन्दी–श्वरे चाद्य गतोऽधुना ॥ ९४ ॥ तञ्च नन्तुं व्रजंस्तत्र, त्वां पतन्तीं विहायसः ॥ कल्पवल्लीमिवानन्द–दायिनीमहमाददे ॥ ९५ ॥ ततो यथा रक्षिता त्वं, पतनोपद्रवान्मया ॥ मदनोपद्रवाद्भद्रे !, तथा त्वमपि रक्ष माम् ॥ ९६ ॥ अन्यच्च त्वत्सुतं वाहा–पहृतो मिथिलापतिः ॥ निरपत्योऽग्रहीत्पद्म–रथगट्ट पर्यटन् वने ॥ ९७ ॥ क्षणान्मिलितसैन्यश्च, गत्वा पुर्यां तमार्पयत् ॥ महिष्याः पुष्पमालायाः, सापि तं पाति पुत्रवत् ॥ ९८ ॥ प्रज्ञप्तीविद्यया ख्यात–न्मयोक्तं तच्च नान्यथा ॥ तत्प्रसीद शुचं मुञ्च, सफलीकुरु यौवनम् ॥ ९९ ॥ मां विधायाधिपं सर्व–खेचरीणां भवेश्वरी ॥ दृशा वाचा च मां रक्तं, सम्भावय सुलोचने ! ॥ १०० ॥ तदाकर्ण्य सती दध्यौ, विपाकः कर्मणामहो ! ॥ अन्यान्यव्यसनाऽङ्कुर–पूर्धात्री भवामि यत् ! ॥ १०१ ॥ विहाय पुत्रसाम्राज्य–परिच्छदधनादिकम् ॥ यत्रातुं निरगा भङ्ग–स्तस्येहाप्युपतिष्ठते ! ॥ १०२ ॥ सत् प्राणिनामपुण्यानां, गरीयानप्युपक्रमः ॥ दुःखायैव भवेत्किं वा, पौरुषं विमुखे विधौ ? ॥ १०३ ॥

यदुक्तं—"छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वाबलाद्वागुरां ॥
पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात् ॥
व्याधानां शरगोचरादपि जवादुत्प्लुत्य धावन्मृगः ।
कूपान्तः पतितः करोतु विधुरे किं वा विधौ पौरुषम् ? ॥ १०४ ॥"

सत्यप्येवं मया शीलं, नैव त्याज्यं कथञ्चन ॥ पीडनव्यसनेपीक्षु–र्माधुर्यं किं विमुञ्चति ? ॥ १०५ ॥ अयञ्च मदनोन्मादो–न्मत्तो वेत्ति न किञ्चन ॥ तदुपायेन केनामुं, दुर्बोधं बोधयाम्यहम् ॥ १०६ ॥ अस्य व्याक्षेपहेतोर्वा, कालक्षेपं करोम्यहम् ॥ स हि प्रशस्यत प्राज्ञै–रशुभे समुपस्थिते ॥ १०७ ॥ ध्यात्वेति साभ्यधाद्दक्ष !, नीत्वा नन्दीश्वरेऽद्य माम् ॥ देवान् वन्दय तत्राहं, करिष्यामि तव प्रियम् ॥ १०८ ॥ ततः स तां विमानस्थां, हृष्टो नन्दीश्वरेऽनयत् ॥ तत्र चार्हद्गृहाः सन्ति, द्वापञ्चाशदनश्वराः ॥ १०९ ॥ दीर्घेषु योजनशतं, तदर्धं पृथुलेषु च ॥ चैत्येषु तेषु

द्वीपेषु, योजनानि त्रिसप्ततिम् ॥ ११० ॥ चतुर्विंशं शतं सन्ति, प्रतिमाः शाश्वतार्हताम् ॥ सर्वरत्नमयाः चक्र—धनुः शतसमुच्छ्रयाः ॥ १११ ॥ [ युग्मम् ] ततो विमानादुत्तीर्य, मदनाम्रेचरो मुदा ॥ पूजापूर्वमवन्देतां, ऋषभाद्यान् जिनोत्तमान् ॥ ११२ ॥ चतुर्ज्ञानधरं तं च, मणिचूडमहामुनिम् ॥ तावुभावपि वन्दित्वा, यथोचितं न्यषीदताम् ॥ ११३ ॥ ततो ज्ञानेन विज्ञाय, मदनाचरितं मुनिः ॥ धर्मे मणिप्रभागेति, समयार्हमुपादिशत् ॥ ११४ ॥ ब्रह्मचर्यं परब्रह्म—निदानं सम्पदां पदम् ॥ पालनीयं यथाशक्ति, सर्वतो देशतोऽथवा ॥ ११५ ॥ सर्वस्त्रीणां परित्यागे, सर्वतो ब्रह्म कथ्यते ॥ परनारीनिषेधे तु, तदुक्तं देशतो जिनैः ॥ ११६ ॥ ततो यः सकला नारी—र्हातुं न प्रभुर्भवेत् ॥ तेनापि पररामा तु, त्याज्या नरकदायिनी ॥ ११७ ॥ नरः परस्त्रियां रक्तः, क्षणिकं सुखमीक्षते ॥ न तु तत्सङ्गमोत्पन्न—मनन्तं दुःखमायतौ ॥ ११८ ॥ परस्त्रीसेवनात्सौख्य—मभिकांक्षति यो जडः ॥ विषवल्लीफलास्वादा—त्स हि वाञ्छति जीवितम् ! ॥ ११९ ॥ तत्कलङ्ककुलस्थानं, कीर्तिवल्लीकुठारिका ॥ हेया पराङ्गनाऽनर्थ, नरकाध्वप्रदीपिका ॥ १२० ॥ श्रुत्वेति खेचरो बुद्धः, क्षमयित्वा स तां जगौ ॥ अथ त्वमसि जामिर्मे, ब्रूहीष्टं किं करोमि ते ॥ १२१ ॥ सापि प्रीताब्रवीद्भ्रातः !, सर्वमिष्टं त्वया कृतम् ॥ इदं दर्शयता तीर्थं, यस्मि तत्किमतः परम् ? ॥ १२२ ॥ अथ मे लघुपुत्रस्य, वृत्तान्तं कथय प्रभो ! ॥ तयेत्युक्तो मुनिः प्रोचे, शृणु भद्रे ! समाहिता ॥ १२३ ॥ इहैव जम्बूद्वीपे प्राग्—विदेहावनिमण्डने ॥ विजये पुष्कलावत्यां, पुरे श्रीमणितोरणे ॥ १२४ ॥ जज्ञेऽमितयशाश्चक्री, तस्य पुष्पवती प्रिया ॥ तयोश्चास्तां सुतौ पुष्प—शिखरत्नशिखाभिधौ ॥ १२५ ॥ [ युग्मम् ] राज्यं चतुरशीतिं स—त्पूर्वलक्षाः प्रपाल्य तौ ॥ प्राव्राजिष्टां भवोद्विग्नौ, चारणश्रमणान्तिके ॥ १२६ ॥ चारित्रं पालयित्वा च, पूर्वलक्षाणि षोडश ॥ अभूतामच्युते कल्पे, शक्रसामानिकौ सुरौ ॥ १२७ ॥ द्वाविंशतिं सागराणि, तत्र जीवितमुत्तमम् ॥ दिव्यैः सुखैर्नवनवै—रतिवाह्य च्युतौ च तौ ॥ १२८ ॥ धातकीखण्डभरते, हरिषेणार्धचक्रिणः ॥ समुद्रदत्तादेवीजा—वभूतां तनयावुभौ ॥ १२९ ॥ [ युग्मम् ] आद्यः सागरदेवाह्वो—ऽपरः सागरदत्तकः ॥ दृढसुव्रतसार्वान्ते, दान्तौ प्राव्रजतां च तौ ॥ १३० ॥ तृतीये चाह्नि सुध्यानौ, तडित्पातेन मारितौ ॥ जातौ शुक्रे सुरौ सप्त—दशसागरजीवितौ ॥ १३१ ॥ द्वाविंशस्यार्हतो नेमे—र्ज्ञानोत्पत्तिमहोत्सवम् ॥ विधातुं तौ गतौ देवा—विति प्रभुमपृच्छताम् ॥ १३२ ॥ इतो भवाच्च्युतावावां, कुत्रोत्पत्स्यावहे प्रभो ! ॥ स्वाम्यूचेत्रैव भरते, मिथिलाख्यास्ति सत्पुरी ॥ १३३ ॥ तत्पतेर्युवयोरेको, जयसेनस्य नन्दनः ॥ भावी सुदर्शनपुरे, युगबाहोः परः पुनः ॥ १३४ ॥ तत्वतस्तु युवां तत्र, पितापुत्रौ भविष्यथः ॥ इत्यर्हद्वाक्यमाकर्ण्य, तौ देवौ जग्मतुर्दिवम् ॥ १३५ ॥ तयोश्चैकश्च्युतः पूर्वं, विदेहाभिधनीवृति ॥ मिथिलायां महापुर्यां, जयसेनस्य भूपतेः ॥ १३६ ॥ महिष्या वनमालायाः, कुक्षौ समवतीर्णवान् ॥ क्रमाज्जातं च तं प्रोचे, नाम्ना पद्मरथं नृपः ॥ १३७ ॥ [ युग्मम् ] यौवनस्थं च तं राजा, राज्ये न्यस्यादद व्रतम् ॥ ततः पद्मरथो राज्यं, शास्ति शस्तपराक्रमः ॥ १३८ ॥ द्वितीयस्तु सुरश्च्युत्वा, भद्रे ! तव सुतोऽभवत् ॥ तश्च रम्भागृहे मुक्त्वा, यावत्त्वं सरसीं गता ॥ १३९ ॥ तावत्तत्रागतः पद्म—रथोश्वापहृतो भ्रमन् ॥ तं प्रेक्ष्य प्राग् भवप्रेम्णा, प्रमोदाद्वैतमासदत् ॥ १४० ॥ दुःस्थो निधिमिव स्नेहा—द्यावद्राजा तमाददे ॥ तावत्तत्सैन्यमप्यागा—त्तत्र वाजिपदानुगम् ॥ १४१ ॥ गजारूढस्ततो राजा, पुर्यां गत्वा तमार्पयत् ॥ महिष्याः पुष्पमालाया—श्चक्रे जन्मोत्सवं तथा ॥ १४२ ॥ पुण्यवांस्ते सुतो भद्रे !, ससुखं तत्र वर्धते ॥ सन्निधिः सन्निधिस्थायी, पुण्यं हि प्राणिनां भवे ॥ १४३ ॥ एवं मुनौ वदत्येव, मणिस्तम्भविभूषितं ॥ किङ्किणीजालमुखरं, रुचिन्यक्कृतभास्करम् ॥ ॥ १४४ ॥ शोभितं तोरणैर्द्वार—मुखपत्रलतोपमैः ॥ लम्बमानोडुमालाभ—मुक्तादामविराजितम् ॥ १४५ ॥ उत्तुङ्गशिखरं तूर्य—ध्वानापूर्णदिगन्तरम् ॥ रम्यं विमानं तत्रैक—मन्तरिक्षादवातरत् ॥ १४६ ॥ [ त्रिभिर्विशेषकम् ] तस्माच्च निरगादेकः, सुरो भासुरभूषणः ॥ अमरीनिकरप्रोक्त—जयशब्दो महामहाः ॥ १४७ ॥ स त्रिः प्रदक्षिणीकृत्य, मदनामादितोऽनमत् ॥ मुनिं तु पश्चादानम्य, यथास्थानमुपाविशत् ॥ १४८ ॥ निरीक्ष्यानुचितं तच्च, दूनचेता मणिप्रभः ॥ इत्युवाचामरं वाचा, न्यायपादपकुल्यया ॥ १४९ ॥ सुरैर्नरवरैश्चात्र, नीतयो हि प्रवर्तिताः ॥ त एव चेत्ता लुम्पन्ति, तदान्येषां किमुच्यते ? ॥ १५० ॥ कलितं सकलैः साधु—गुणैर्दोषैर्विनाकृतम् ॥ मुक्त्वा मुनिममुं देव !, किं त्वया प्राग् नताङ्गना ॥ १५१ ॥ सुरोऽब्रवीदिदं सत्यं, शृणु किं त्विह कारणम् ॥ आसीत्सुदर्शनपुरे, राजा मणिरथाभिधः ॥ १५२ ॥ तेन स्वभ्रातृजायार्थं, युगबाहुर्निजोऽनुजः ॥ शिरोधावसिना जघ्ने, वसन्ते

विपिने स्थितः ॥ १५३ ॥ स च कण्ठगतप्राणो–ऽजया मदनरेखया ॥ निर्यामितः प्रापितश्च, जैनधर्मं विपन्नवान् ॥ १५४ ॥ दशार्णवायुर्देवोऽभू–द्ब्रह्मलोके हरिप्रभः ॥ स चाहं पुण्यनैपुण्या–मेनां द्रष्टुमिहागमम् ॥ १५५ ॥ यच्च सम्यक्त्वमूलं श्री–जिनधर्ममियं सुधीः ॥ प्राग्भवे प्रापयन्मां त–द्धर्माचार्यो ह्यसौ मम ॥ १५६ ॥ यदुक्तं—"जो जेण सुद्धधम्मंमि ठाविओ संजएण गिहिणा वा ॥ सो चेव तस्स जायइ धम्मगुरू धम्मदाणाओ ॥ १५७ ॥" अत एव मया पूर्वं, नतासौ धर्मसेवधिः ॥ निशम्येति मनस्येवं, चिन्तयामास खेचरः ॥ १५८ ॥ अहो ! श्रीजैनधर्मस्य, प्रभावो भुवनाद्भुतः ॥ सौख्यं ददाति निःसंख्यं, क्षणमात्रं श्रितोपि यः ॥ १५९ ॥ सुरोथ मदनामूचे, किं कुर्वेहं तवेहितम् ॥ सावादीत्तत्त्वतोभीष्टं, कर्तुं नो यूयमीश्वराः ॥ १६० ॥ यन्मे जन्मजरामृत्यु–रोगादिरहितं हितम् ॥ मुक्तिसौख्यं प्रियं तच्च, स्वोद्यमेनैव सिध्यति ॥ १६१ ॥ तथापि मां सुरश्रेष्ठ !, मिथिलायां नय द्रुतम् ॥ परलोकहितं कुर्वे, यथा वीक्ष्य सुताननम् ॥ १६२ ॥ ततो देवेन सा निन्ये, मिथिलानगरीं क्षणात् ॥ जन्मदीक्षाकेवलानां, स्थानं मल्लीनमीशयोः ॥ १६३ ॥ तत्र पूर्वं जिनान्नत्वा, जग्मतुर्मदनासुरौ ॥ साध्वीनां सन्निधौ ताश्च, प्रणम्याग्रे न्यषीदताम् ॥ १६४ ॥ ततः साध्व्योऽभ्यधुर्धर्मं, यल्लब्ध्वा मानुषं भवम् ॥ धर्माधर्मविपाकञ्च, ज्ञात्वा धर्मो विधीयताम् ॥ १६५ ॥ विघटन्ते हि जीवानां, धनभूषनबन्धवः ॥ धर्मस्तु नो विघटते, कदापि श्रीजिनोदितः ॥ १६६ ॥ इत्यादिदेशनाप्रान्ते, मदनामवदत्सुरः ॥ एहि यावो राजगेहे, द्रष्टुं सुतमुखाम्बुजम् ॥ १६७ ॥ साब्रवीदथ मे प्रेम्णा, कृतं दुःखौघदायिना ॥ भवे हि भ्राम्यतां कस्को, नाभूद्बन्धुः परोऽथवा ॥ १६८ ॥ तद्व्रहीष्याम्यहं दीक्षां, त्वं तु स्वाभीष्टमाचर ॥ तयेत्युक्ते सुरो नत्वा, साध्वीस्ताश्च ययौ दिवम् ॥ १६९ ॥ साध्वीनामन्तिके तासां, प्राव्राजीत्सापि शुद्धधीः ॥ सुव्रतेत्यभिधां प्राप्ता, दुस्तपं च व्यधात्तपः ॥ १७० ॥

इतश्च तस्य बालस्य, प्रभावेणाखिला द्विपः ॥ नेमुः पद्मरथं देव–महिम्नेव द्रुमा जिनम् ॥ १७१ ॥ ततस्तुष्टो नृपस्तस्य, नमिरित्यभिधां व्यधात् ॥ कृत्वा महोत्सवं तुल्यं, महत्त्वस्योचितं श्रियाम् ॥ १७२ ॥ साधुधर्मः समितिभि–रिव धात्रीभिरन्वहम् ॥ पञ्चभिः संरक्ष्यमाणः, क्रमाद्वृद्धिं बभार सः ॥ १७३ ॥ किञ्चिद्वृद्धिं च सम्प्राप्त–श्चटुलैश्चलनैश्चलन् ॥ ब्रुवंश्च मन्मनालापै–र्विश्वं विश्वममोदयत् ॥ १७४ ॥ अष्टमे वत्सरे तं च, कलाग्रहणहेतवे ॥ निनायोपकलाचार्यं, भूपो भूयोभिरुत्सवैः ॥ १७५ ॥ सोथ प्रज्ञासुराचार्यैः, कलाचार्योन्तिके पठन् ॥ एकशो दर्शिता एव, जग्राह सकलाः कलाः ॥ १७६ ॥ क्रमाच्च यौवनं प्राप्तो, लावण्यजलवारिधिः ॥ अकाम्यत स देवीभि–रपि विश्वमनोहरः ॥ १७७ ॥ यासां रूपं प्रेक्षमाणा, जितदेवाङ्गनागणम् ॥ मन्ये सर्वेपि गीर्वाणा, निर्निमेषदृशोऽभवन् ॥ १७८ ॥ इक्ष्वाकुवंशजा राज–कन्याश्चातुर्यशालिनीः ॥ अष्टोत्तरसहस्रं ताः, क्ष्मापस्तेनोदवाहयत् ॥ १७९ ॥ [ युग्मम् ] मघवानिव देवीभिः, समं ताभिः समं सुखम् ॥ भुञ्जानो गमयामास, कालं कञ्चिन्निमेषवत् ॥ १८० ॥ अन्यदा च नमिं राज्ये, न्यस्य पद्मरथो नृपः ॥ वैराग्याद्व्रतमादाय, क्रमात्प्राप परम्पदम् ॥ १८१ ॥ ततो नमिनृपो राज्यं, न्यायेनापालयत्तथा ॥ अन्यायशब्दो व्यर्थोभू–द्वाच्याभावाद्यथा भुवि ॥ १८२ ॥

इतश्च यस्यां दोषायां, न्यहन्मणिरथोऽनुजम् ॥ तस्यामेवाहिना दष्टो, मृत्वा तुर्यां ययौ भुवम् ॥ १८३ ॥ राज्ये न्यस्य ततश्चन्द्र–यशसं सचिवादयः ॥ द्वयोः सोदरयोर्देहे, समं सञ्चस्करुस्तयोः ॥ १८४ ॥ ततश्चन्द्रयशा भूपो, नीतिवल्लीपयोधरः ॥ पितेव पालयामास, प्रजाः प्राज्यपराक्रमः ॥ १८५ ॥ अन्यदा च नमे राज्ञो, राज्यसारः सितद्विपः ॥ उन्मूल्यालानमुन्मत्तो–ऽचलद्विन्ध्याचलम्प्रति ॥ १८६ ॥ सुदर्शनपुरोपान्ते, व्रजन्तं तञ्च दन्तिनम् ॥ अपश्यंश्चन्द्रयशसो, वाह्यालीस्थस्य सेवकाः ॥ १८७ ॥ श्वेतद्विपोयं यातीति, ते नृपाय न्यवेदयन् ॥ भूपोपि तं चिरात्खिन्नं, पुरे प्रावीविशन्निजे ॥ १८८ ॥ तत्रस्थं कुञ्जरं तञ्च, ज्ञात्वा चरनरैर्नमिः ॥ तन्मार्गणाय तत्रैकं, प्रैषीत्सन्देशहारकम् ॥ १८९ ॥ सोपि गत्वावदच्चन्द्र–यशसं धृतसौष्ठवः ॥ वक्ति त्वां मन्मुखेनेति, राजन्नमिमहीपतिः ॥ १९० ॥ गृहीतोस्ति त्वया श्वेत–हस्ती यः स तु मामकः ॥ तदेनं प्रेषयेः सद्यो, नान्यदीयं हि सुस्थिरम् ॥ १९१ ॥ ऊचे चन्द्रयशा दूत !, जगाद किमिदं नमिः ॥ मार्गितानि हि रत्नानि, दीयन्ते न हि केनचित् ॥ १९२ ॥ भवन्ति न च कस्यापि, नाम्ना तान्यङ्कितानि भोः ! ॥ प्राप्याणि किन्तु बलिभि–र्वीरभोग्या हि भूरियम् ॥ १९३ ॥ तां चन्द्रयशसो वाचं, दूतो गत्वाऽवदन्नमेः ॥ कोपाटोपात्ततः सोपि, यात्रानकमवादयत् ॥ १९४ ॥ प्रत्यवन्तीन् प्रतस्थे च,

कलितः प्रबलैर्बलैः ॥ प्रत्यनीकनृपानीक–मकराकरकुम्भभूः ॥ १९५ ॥ तच्चायान्तं चरैर्ज्ञात्वा, चन्द्रभूपोप्यभिव्र-जन् ॥ विरुद्धविहगैर्ज्ञानि–पुरुषैरिव वारितः ॥ १९६ ॥ ततस्तं सचिवाः प्रोचुः, पुरं पिहितगोपुरम् ॥ कृत्वा तिष्ठ प्रभो ! पश्चा–त्करिष्यामो यथोचितम् ॥ १९७ ॥ चन्द्रोपि तत्तथा चक्रे, नमिश्चागत्य तत्पुरम् ॥ बलेनावेष्टयद्दिप्सुर्, भोगे-नेव निधिं फणी ॥ १९८ ॥ तच्च श्रुत्वा जनश्रुत्या, सुव्रतार्या व्यचिन्तयत् ॥ इमौ जनक्षयं कृत्वा, माऽम्य यातामधो-गतिम् ॥ १९९ ॥ तदेनौ बोधयामीति, ध्यात्वाऽऽपृच्छ्य महत्तराम् ॥ साध्वीभिः संयुता सागा–त्समीपे नमि-भूभुजः ॥ २०० ॥ तां प्रणम्यासनं दत्वा, नमिर्भुवि निविष्टवान् ॥ आर्यापि धर्ममाख्याय, तमेवमवदत्सुधीः ॥ २०१ ॥ राजन्नसारा राज्यश्री–र्भोगाश्चायतिदारुणाः ॥ गतिः पापकृतां च स्या–न्नरके दुःखसङ्कुले ॥ २०२ ॥ तद्विमुञ्चाहवं को हि, ज्येष्ठभ्रात्रा सहाहवः ? ॥ नमिं प्रोचे कथमयं, स्यान्मम ज्येष्ठसोदरः ? ॥ २०३ ॥ ततः साध्वी जगौ तस्मै, स्ववृत्तान्तं यथास्थितम् ॥ नमिस्तथाप्यहङ्कारा–न्नामुचद्विग्रहाग्रहम् ॥ २०४ ॥ साथ मध्ये पुरं चन्द्र–यशः–पार्श्वे ययौ द्रुतम् ॥ सोपि तां प्रत्यभिज्ञाय, ननामाश्रुजलाविलः ॥ २०५ ॥ दत्वाथ विष्टरं तस्यै, क्षितिनाथे क्षितौ स्थिते ॥ तां शुद्धान्तजनोप्येत्या–नमद्वाष्पायितेक्षणः ॥ २०६ ॥ अथ चन्द्रयशाः साध्वी–मित्यूचे गद्गदाक्षरम् ॥ अङ्गीकृतं त्वया मातः !, किमिदं दुर्धरं व्रतम् ? ॥ २०७ ॥ साख्याथ स्वीयवृत्तान्ते, तस्मै तस्मिन्निवेदिते ॥ सहो-दरः स मे क्वास्ती–त्यपृच्छत्तां स पार्थिवः ॥ २०८ ॥ आर्या जगाद येन त्वं, रोधितोसि स तेऽनुजः ॥ तदाकर्ण्य महानन्द–मनिन्दत महीधवः ॥ २०९ ॥ ययौ च सोदरं द्रष्टु–मुत्सुकः सोऽतिसत्वरम् ॥ स्नेहातिरेकपाथोद–शान्तदर्पदवानलः ॥ २१० ॥ तच्चायान्तं निशम्यागा–न्नमिराजोपि संमुखः ॥ भून्यस्तमस्तकः पादा–वग्रजस्य ननाम च ॥ २११ ॥ तच्चानमन्तं चन्द्रोपि, दोर्भ्यामादाय सादरम् ॥ परिरेभे दृढं स्नेहा–देकीकुर्वन्निवात्मना ॥ २१२ ॥ महोत्सवैर्महीयोभि–स्तच्च प्रावीविशत्पुरे ॥ मन्यमानो निजं जन्म, कृतार्थं भ्रातृसङ्गमात् ॥ २१३ ॥ तच्च क्रमागते राज्ये, न्यस्य चन्द्रयशा नृपः ॥ परिव्रज्यामुरीकृत्य, विजहार वसुन्धराम् ॥ २१४ ॥ पाकशासनवच्चण्ड–शासनोथ नमिर्नृपः ॥ न्यायाम्बुजारुणो राज्य–द्वयमन्वशिषच्चिरम् ॥ २१५ ॥

अथान्यदा तस्य देहे, दाहोभूददतिदुःसहः ॥ भूपो नाप रतिं क्वापि, व्याधिना तेन बाधितः ॥ २१६ ॥ चिकित्सा विविधास्तस्य, व्याधेश्चक्रुश्चिकित्सकाः ॥ तास्तु तत्राभवन्मूढे, हितशिक्षा इवाफलाः ॥ २१७ ॥ ततो वैद्यैः परित्य-क्तो–ऽसाध्योयमितिवादिभिः ॥ स्वर्भानुरिव शीतांशुं, स रोगोऽपीडयन्नृपम् ॥ २१८ ॥ तदा च चन्दनरसैः, राज्ञः किञ्चिदभूत्सुखम् ॥ इति तं सकला राज्यो, नित्यं स्वयमघर्षयन् ॥ २१९ ॥ तद्बाहुकङ्कणगण–रणत्कारमहारवः ॥ राज्ञो रोगातुरस्याभू–त्कर्णाघातकरो भृशम् ॥ २२० ॥ शोकार्तस्य मृदङ्गादि–नादवन्मम रोगिणः ॥ दुःखाकरोति शब्दोय–मिति राजा जगौ ततः ॥ २२१ ॥ तच्चाकर्ण्य क्रमाद्राज्यो, राज्ञः सौख्यकृते स्वयम् ॥ एकैकमेकशेषाणि, कङ्कणान्युदतारयन् ॥ २२२ ॥ एकैकं तत्तु कल्याण–हेतवे दधिरे करे ॥ तदा च नाभवत्कोला–हलश्चन्दनघर्षणे ॥ २२३ ॥ नृपोवादीत्ततो यन्न, श्रूयते कङ्कणध्वनिः ॥ तन्मन्ये चन्दनं देव्यो, न घर्षन्ति प्रमद्वराः ॥ २२४ ॥ मंत्री प्रोचे प्रभो ! देव्यः, सर्वा घर्षन्ति चन्दनम् ॥ परमेकाकिभावेन, शब्दायन्ते न कङ्कणाः ॥ २२५ ॥ तदाकर्ण्य नृपो दध्यौ, शान्तमोहो महाशयः ॥ बहूनां सङ्गमे दोषः, स्यादेकस्य तु न क्वचित् ॥ २२६ ॥ वलयानामपि मिथो, घर्षणं[1] वसतामभूत् ॥ एकाकिनां तु तन्नैव, तेषां सम्प्रति जायते ॥ २२७ ॥ सङ्गस्तदखिलो दुःख–कारणं प्राणिनां भवे ॥ एकत्वं तु महानन्द–हेतुः स्यात्सङ्गवर्जनात् ॥ २२८ ॥ तचेच्छाम्येदयं दाह–स्तदाहं व्रतमाददे ॥ ध्यायन्निति प्रसुप्तो द्राग्, निद्रासुखमवाप सः ॥ २२९ ॥ तस्यां कार्तिकराकायां, रात्रौ तस्य महीपतेः ॥ दाहः षाण्मासिकः सद्यो–ऽशाम्यत्पुण्यप्रभावतः ॥ २३० ॥ प्रभाते च तनूभूत–तन्द्रः स्वप्ने ददर्श सः ॥ आत्मानं मेरुमौलिस्थ–सितेभस्कन्धमाश्रितम् ॥ २३१ ॥ तूर्यनादैः प्रबुद्धोथ, हृष्टो नमिरचिन्तयत् ॥ अहो ! मया प्रधानोद्य, दृष्टः स्वप्नो महा-फलः ॥ २३२ ॥ क्विचाहमीदृशं शैलं, दृष्टपूर्वीति भावयन् ॥ जातिस्मरणमासाद्य, सोज्ञासीदिति शुद्धधीः ॥२३३॥ पूर्वं नरभवे दीक्षा–मादाय त्रिदिवं गतः ॥ जिनजन्मोत्सवे मेरु–मद्राक्षमहमीदृशम् ॥ २३४ ॥ ततः स विध्वस्त-विमोहजालो, विधाय लोचं स्वयमात्तदीक्षः ॥ प्रत्येकबुद्धो विबुधप्रदत्त–वेषो व्यहार्षीन्नमिराट् पृथिव्याम् ॥ २३५ ॥ इति श्रीनमिराजर्षिकथा ॥ ३ ॥ कथाशेषं त्वमूष्य सूत्रसिद्धमिति सूत्रमिहैव व्याख्यायते, तच्चेदं—

---

१ घर्षणं भूयसामभूत् । इति ग घ. पुस्तके ॥

मूलम्—चइऊण देवलोगाओ, उववण्णो माणुसंमि लोगंमि ।
उवसंतमोहणिज्जो, सरइ पोराणिअं जाइं ॥ १ ॥

व्याख्या—च्युत्वा देवलोकात् शुक्राभिधस्वर्गात्, उत्पन्नो मानुष्यके लोके मनुष्यभवे, उपशान्त अनुदितं मोहनीयं दर्शनमोहनीयात्मकं यस्य स उपशान्तमोहनीयः, स्मरति पुराणामेव पौराणिकीं चिरन्तनीं जातिं जन्म, वर्त्तमाननिर्देशस्त्वत्र सर्वत्र तत्कालापेक्षया इति सूत्रार्थः ॥ १ ॥ ततः किमित्याह—

मूलम्—जाइं सरित्तु भयवं, सहसंबुद्धो अणुत्तरे धम्मे । पुत्तं ठवित्तु रज्जे, अभिनिक्खमई नमी राया ॥२॥

व्याख्या—जातिं स्मृत्वा, भगशब्दस्य धैर्यसौभाग्यमाहात्म्ययशोवैराग्यैश्वर्यसूर्यपुण्यप्रयत्नस्त्रीचिह्नादिवाचकत्वेनानेकार्थत्वेपि भगशब्दोत्र घटमाने धैर्यादावर्थे वर्त्तते, ततो भगवान् धैर्यादिमान् 'सहत्ति' स्वयमेव सम्बुद्धो न त्वन्येन प्रतिबोधितः, क्वेत्याह–अनुत्तरे सर्वोत्कृष्टे धर्मे चारित्रधर्मे, पुत्रं स्थापयित्वा राज्ये अभिनिष्क्रामति प्रव्रज्यामादत्ते नमिनामा राजेति सूत्रार्थः ॥ २ ॥ किं कृत्वाभिनिष्क्रामतीत्याह—

मूलम्—सो देवलोगसरिसे, अंतेउरवरगओ वरे भोए । भुंजित्तु नमी राया, बुद्धो भोगे परिच्चयइ॥३॥

व्याख्या—स पूर्वोक्तो देवलोकसदृशान्, इह देवलोकशब्देन देवलोकस्था भोगा लक्ष्यन्ते, मञ्चाः क्रोशन्तीत्यादौ मञ्चशब्देन मञ्चस्थपुरुषवत्। ततो देवलोकस्थभोगतुल्यान् 'अंतेउरवरगओत्ति' वरान्तःपुरगतो वरान् प्रधानान् भोगान् मनोज्ञशब्दादीन् भुक्त्वानुभूय नमी राजा बुद्धो विज्ञाततत्त्वो भोगान् परित्यजति, पुनर्भोगग्रहणं विस्मरणशीलविनेयानुग्रहार्थमिति सूत्रार्थः ॥ ३ ॥ किञ्च—

मूलम्—मिहिलं सपुरजणवयं, बलमोरोहं च परिअणं च सव्वं ।
चिच्चा अभिनिक्खंतो, एगंतमहिट्ठिओ भयवं ॥ ४ ॥

व्याख्या—मिथिलां मिथिलाभिधां नगरीं सह पुरैरन्यनगरैर्जनपदेन च वर्त्तते या सा तथा तां, बलं हस्त्यादिचतुरङ्गं, अवरोधश्चान्तःपुरं, परिजनं परिवारं, सर्वं निरवशेषं त्यक्त्वा विहाय अभिनिष्क्रान्तः प्रव्रजितः एकान्तं द्रव्यतो विजनमुद्यानादि, भावतस्तु "एकोहं नास्ति मे कश्चि-न्नाहमन्यस्य कस्यचित् ॥ न तं पश्यामि यस्याहं, नासौ दृश्योस्ति यो मम ॥ १ ॥" इति भावनया एक एवाहमित्यन्तो निश्चय एकांतस्तमधिष्ठित आश्रितो भगवान् इति सूत्रार्थः ॥ ४ ॥ तदा च यदभूत्तदाह—

मूलम्—कोलाहलगब्भूअं, आसी मिहिलाइ पव्वयंतंमि ।
तइआ रायरिसिम्मि, नमिम्मि अभिनिक्खमंतंमि ॥ ५ ॥

व्याख्या—कोलाहलो विलापादिकलकलः, स एव कोलाहलकः, स भूतो जातो यस्मिंस्तत्कोलाहलकभूतं, आसीदभून्मिथिलायां सर्वं गृहारामदेवकुलादीति गम्यते । प्रव्रजति प्रव्रज्यामाददाने तदा तस्मिन्काले, राजा चासौ राज्यावस्थापेक्षया, ऋषिश्च तत्कालापेक्षया राजर्षिस्तस्मिन्नमौ अभिनिष्क्रामति गृहान्निर्गच्छति सतीति सूत्रार्थः ॥५॥ अत्रान्तरे च यदभूत्तदाह—

मूलम्—अब्भुट्ठिअं रायरिसिं, पव्वज्जाठाणमुत्तमं । सक्को माहणरूवेण, इमं वयणमब्बवी ॥ ६ ॥

व्याख्या—अभ्युत्थितमभ्युद्यतं राजर्षिं प्रव्रज्यैव स्थानमाश्रयो ज्ञानादिगुणानां प्रव्रज्यास्थानं तस्मिन्नुत्तमे श्रेष्ठे, सुप्त्वाद्विभक्तिव्यत्ययः, शक्र इन्द्रो माहनरूपेण द्विजवेषेणाऽऽगत्येति शेषः, तदाहि तदाशयं परीक्षितुकामः शक्रः स्वयमागादिति । ततः स इदं वक्ष्यमाणं वचनमब्रवीदिति सूत्रार्थः ॥ ६ ॥ यदब्रवीत्तदाह—

मूलम्—किं नु भो अज्ज मिहिलाए, कोलाहलगसंकुला। सुव्वंति दारुणा सद्दा, पासाएसु गिहेसु अ ॥७॥

व्याख्या—किमिति प्रश्ने, नु इति वितर्के, भो! इत्यामंत्रणे, अद्य मिथिलायां पुर्यां कोलाहलकेन बहलकलकलरूपेण सङ्कुला व्याप्ताः कोलाहलकसङ्कुलाः श्रूयन्ते ? दारुणा हृदयोद्वेगकराः, शब्दा विलापाक्रन्दादयः, प्रासादेषु, गृहेषु तदितरेषु, च शब्दात्रिकचतुष्कचत्वरादिषु चेति सूत्रार्थः ॥ ७ ॥ ततश्च—

मूलम्—एअमट्ठं निसामित्ता, हेऊकारणचोइओ । तओ नमिरायरिसी, देविंदं इणमब्बवी ॥ ८ ॥

व्याख्या—एतमनन्तरोक्तमर्थं निशम्य, हेतुः पञ्चावयववाक्यरूपः, कारणञ्चान्यथानुपपत्तिमात्रं, ताभ्यां चोदितः प्रेरितो हेतुकारणचोदितः, इह च हेतुकारणे कोलाहलकमङ्कुलाः शब्दाः श्रूयन्ते इत्यनेनैव सूचिते, तथा हि—अयुक्तमिदं तव निष्क्रमणमिति प्रतिज्ञा १। आक्रन्दादिदारुणशब्दहेतुत्वादिति हेतुः २। यद्यदाक्रन्दादिदारुणशब्दहेतुस्तत्तद्धर्मार्थिनामयुक्तं, यथा प्राणातिपातादिरिति दृष्टान्तः ३। आक्रन्दादिदारुणशब्दहेतुश्चेदं तव निष्क्रमणमित्युपनयः ४। तस्मादयुक्तमेवेदं तव निष्क्रमणमिति निगमनमिति ५। पञ्चावयवमनुमानवाक्यमिह हेतुः। आक्रन्दादिदारुणशब्दहेतुत्वं त्वन्निष्क्रमणस्यायुक्तत्वं विना नोपपद्यते इत्येतावन्मात्रं तु शेषावयवविवक्षारहितं कारणं, अनयोः पृथगुपादानं तु साधनवाक्यवैचित्र्यरचनार्थमिति ध्येयं। 'तओत्ति' ततः प्रेरणानन्तरं नमिराजर्षिर्देवेन्द्रमिदमब्रवीदिति सूत्रार्थः ॥ ८ ॥ यदवादीत्तदाह—

मूलम्—मिहिलाए चेइए वच्छे, सीअच्छाए मणोरमे। पत्तपुप्फफलोवेए, बहूणं बहुगुणे सया ॥९॥

व्याख्या—मिथिलायां पुरि, चितिरिह प्रस्तावात् पत्रपुष्पाद्युपचयस्तत्र साधु चित्यं चित्यमेव चैत्यमुद्यानं तस्मिन् 'वच्छेत्ति' सूत्रत्वाद्वृक्षो विद्यत इति शेषः। कीदृशः? इत्याह—शीतच्छायः शीतलच्छायो मनोरमो मनोरमाभिधः पत्रपुष्पफलोपेतो बहूनां प्रक्रमात् खगादीनां बहुगुणः फलादिभिर्भृशमुपकारी सदा सर्वकालं, एकारश्चात्र सूत्रे सर्वत्र मागधभाषानुसरणात् ज्ञेय इति सूत्रार्थः ॥ ९ ॥ तत्र किमित्याह—

मूलम्—वाएण हीरमाणंमि, चेइअंमि मणोरमे। दुहिआ असरणा अत्ता, एए कंदंति भो! खगा ॥१०॥

व्याख्या—वातेन वायुना ह्रियमाणे इतस्ततः क्षिप्यमाणे 'चेइअंमित्ति' चितिरिहेष्टकादिचयस्तत्र साधुर्योग्यो वा चित्यः स एव चैत्यस्तस्मिन् कोऽर्थोऽधोबद्धपीठिके उपरि चोच्छ्रितपताके मनोरमे मनोहरे तस्मिन् वृक्ष इति शेषः। दुःखं जातं येषां ते दुःखिताः, अशरणास्त्राणरहिता अत एवार्त्ताः पीडिता एते प्रत्यक्षा क्रन्दन्ति आक्रन्दान् कुर्वन्ति भो! इत्यामंत्रणे खगाः पक्षिणः। इह च किमद्य मिथिलायां दारुणाः शब्दाः श्रूयन्त इति यत्स्वजनाक्रन्दनमुक्तं तत्खगाक्रन्दनप्रायमात्मा च वृक्षकल्पस्तत्वतो हि स्वल्पकालमेव सहावस्थानेन उत्तरकालं च स्वगतिगामितया द्रुमाश्रितखगोपमा एवामी स्वजनादयः। उक्तञ्च—"यद्वद्द्रुमे महति पक्षिगणा विचित्राः, कृत्वाश्रयं हि निशि यान्ति पुनः प्रभाते। तद्वज्जगत्यसकृदेव कुटुम्बजीवाः, सर्वे समेत्य पुनरेव दिशो भजन्ते ॥ १ ॥ इति" ततश्चाक्रन्दादिदारुणशब्दानां मन्निष्क्रमणहेतुकत्वमसिद्धं, स्वस्वकार्यहेतुकत्वात्तेषां। आह च—"आत्मार्थं सीदमानं स्वजनपरिजनो रौति हाहारवार्त्तो, भार्या चात्मीयभोगं गृहविभवसुखं स्वं वयस्याश्च कार्यम्। क्रन्दन्त्यन्योन्यमन्यस्त्विह हि बहुजनो लोकयात्रानिमित्तं, यो वा यस्माच्च किञ्चिन्मृगयति हि गुणं रोदितीष्टः स तस्मै ॥ १ ॥" तथा च सति भवदुक्ते हेतुकारणे असिद्धे एवेति सूत्रार्थः ॥ १० ॥

मूलम्—एअमट्ठं निसामित्ता, हेऊकारणचोइओ। तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ ११ ॥

व्याख्या—एनमर्थं निशम्य हेतुकारणयोः पूर्वोक्तयोश्चोदितोऽसिद्धे भवदुक्ते हेतुकारणे इत्युपपत्त्या प्रेरितो हेतुकारणचोदितः, ततो नमिं राजर्षिं देवेन्द्र इदमब्रवीदिति सूत्रार्थः ॥ ११ ॥

मूलम्—एस अग्गी अ वाऊ अ, एअं डज्झइ मंदिरं। भयवं अंतेउरं तेणं, कीस णं नाव पिक्खह १२

व्याख्या—एष प्रत्यक्षोऽग्निश्च वायुश्च एतत्प्रत्यक्षं दह्यते मन्दिरं गृहं तवेति शेषः, अग्निवायू च तदा शक्र एवादर्शयदिति वृद्धाः, हे भगवन्! 'अंतेउरंतेणंति' अन्तःपुराभिमुखं 'कीसत्ति' कस्मात् 'णं' वाक्यालंकारे नावप्रेक्षसे नावलोकसे? यद्यदात्मीयं तत्तत्रातव्यं, आत्मीयञ्चेदं तवान्तःपुरादीति सूत्रार्थः ॥ १२ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ। तओ नमी रायरिसी, देविंदं इणमब्बवी ॥ १३ ॥

व्याख्या—स्पष्टं नवरं हेतुकारणचर्चा इहोत्तरत्र च बृहट्टीकातोवसेयेति ॥ १३ ॥

मूलम्—सुहं वसामो जीवामो, जेसिं मो नत्थि किंच णं।
मिहिलाए डज्झमाणीए, न मे डज्झइ किंच णं ॥ १४ ॥

व्याख्या—सुखं यथा स्यादेवं वसामस्तिष्ठामः जीवामः प्राणान् धारयामः येषां 'मोत्ति' अस्माकं नास्ति किंचन वस्तुजातं यतः—"एकोऽहं न च मे कश्चित्, स्वः परो वापि विद्यते। यदेको जायते जन्तु—र्म्रियते चैक एव हि॥१॥

इति" न किञ्चिदन्तःपुरादि मदीयमस्ति यत्रातव्यं स्यात्, अत एव मिथिलायां दह्यमानायां न मे दह्यते किञ्चन स्वल्पमपीति सूत्रार्थः ॥ १४ ॥ इदमेव भावयितुमाह—

मूलम्—चत्तपुत्तकलत्तस्स, निव्वावारस्स भिक्खुणो । पिअं न विज्जए किंचि, अप्पिअं पि न विज्जए ॥१५॥

व्याख्या—त्यक्तपुत्रकलत्रस्य निर्व्यापारस्य मुक्तकृष्यादिक्रियस्य भिक्षोः प्रियमिष्टं न विद्यते किञ्चिदल्पमपि, अप्रियमपि अनिष्टमपि न विद्यते । एतेन यदुक्तं नास्ति मे किञ्चनेति तत्समर्थितमिति सूत्रार्थः ॥ १५ ॥ एवमपि सुखेन वसनं जीवनं कथं स्यादित्याह—

मूलम्—बहुं खु मुणिणो भद्दं, अणगारस्स भिक्खुणो । सव्वओ विप्पमुक्कस्स, एगंतमणुपस्सओ ॥१६॥

व्याख्या—बहु भूरि खु निश्चये मुनेर्भद्रं सुखं अनगारस्य भिक्षोरपि सत इति शेषः । कीदृशस्य मुनेरित्याह—सर्वतो बाह्याभ्यन्तरपरिग्रहादिप्रमुक्तस्य । एक एवाहमित्यन्तो निश्चय एकान्तस्तं अनुपश्यतः पर्यालोचयत इति सूत्रार्थः ॥१६॥

मूलम्—एअमट्ठं निसामित्ता, हेऊकारणचोइओ । तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ १७॥

मूलम्—पागारं कारइत्ता णं, गोपुरट्टालगाणि अ । ओसूलगसयग्घीओ, तओ गच्छसि खत्तिआ ॥१८॥

व्याख्या—प्राकारं वप्रं कारयित्वा गोपुराट्टालकानि च । तत्र गोपुराणि प्रतोलीद्वाराणि, गोपुरग्रहणमर्गलाकपाटोपलक्षणं, अट्टालकानि च वप्रकोष्ठकोपरिवर्त्तीनि रणकरणस्थानानि । 'ओसूलगत्ति' खातिकाः, 'सयग्घीओत्ति-शतघ्न्यो यंत्ररूपाः, तत एवं सर्वं निराकुलीकृत्य 'गच्छसित्ति' विभक्तिव्यत्ययाद्गच्छ हे क्षत्रिय !। हेतूपलक्षणञ्चेदं, यो यः क्षत्रियः स्यात् स स पुररक्षां कुर्वीत, यथा भरतादिः, क्षत्रियश्च भवानिति सूत्रार्थः ॥ १८ ॥

मूलम्—एअमट्ठं निसामित्ता, हेऊकारणचोइओ । तओ नमी रायरिसी, देविंदं इणमब्बवी ॥ १९ ॥

मूलम्—सद्धं च नगरं किच्चा, तव संवरमग्गलं । खंतीनिऊणपागारं, तिगुत्तं दुप्पधंसगं ॥ २० ॥

व्याख्या—श्रद्धां तत्वरुचिरूपां सर्वगुणाधारतया नगरं पुरं कृत्वा विधाय, अनेन च प्रशमसंवेगादीनि गोपुराणि कृत्वेत्युपलक्ष्यते । तपोऽनशनादि बाह्यमेवेह ग्राह्यं, तत्प्रधानः संवरस्तपःसंवरस्तं, अर्गलामित्युपलक्षणत्वादर्गलाकपाटं कृत्वा क्षान्तिं क्षमां, निपुणं श्रद्धाप्रत्यनीकस्यानन्तानुबन्धिकोपस्य रोधकत्वेन वैरनिवारणं प्रति कुशलं प्राकारं कृत्वा, उपलक्षणञ्चैषा मानादिरोधकानां मार्दवादीनां । 'तिगुत्तंति' तिसृभिरट्टालकोत्सूलकशतघ्नीस्थानीयाभिर्मनोगुप्त्यादि-गुप्तिभिर्गुप्तं दुष्प्रधर्षकं परैर्दुरभिभवं, वप्रविशेषणान्येतानि । अनेन प्राकारं कारयित्वेत्यादेः प्रतिवचनमुक्तं ॥ २० ॥ सम्प्रति तु सत्सु प्राकाराट्टालकेष्ववश्यं योद्धव्यं तच्चायुधेषु वैरिषु च सत्स्वेव स्यादत आह—

मूलम्—धणुं परक्कमं किच्चा, जीवं च इरिअं सया । धिइं च केअणं किच्चा, सच्चेणं पलिमंथए ॥ २१ ॥

व्याख्या—धनुः कोदण्डं पराक्रमं जीववीर्योल्लासरूपं उत्साहं कृत्वा, जीवां च प्रत्यंचां च ईर्यामीर्यासमितिं, उपलक्षणत्वाच्छेषसमितीश्च कृत्वा सदा । धृतिं च धर्माभिरतिरूपां केतनं शृङ्गमयधनुर्मध्ये काष्ठमयमुष्ट्यात्मकं कृत्वा, तत्केतनं सत्येन मनःसत्यादिना स्नायुस्थानीयेन 'पलिमंथएत्ति' बध्नीयात् ॥ २१ ॥ ततः किमित्याह—

मूलम्—तवनारायजुत्तेणं, भित्तूणं कम्मकंचुअं । मुणिविगयसंगामो, भवाओ परिमुच्चई ॥ २२ ॥

व्याख्या—तपः षड्विधमाभ्यन्तरं तदेव नाराचो लोहमयो बाणस्तद्युक्तेन प्रक्रमाद्धनुषा भित्त्वा विदार्य कर्मकञ्चुकं कर्मग्रहणेन चात्मैवोद्धतो वैरी भवतीत्युक्तं भवति, वक्ष्यति च "अप्पा मित्तममित्तं च, दुपट्ठिअसुपट्ठिएत्ति" मुनिः साधुः कर्मभेदे जेयस्य जितत्वात् विगतसंग्रामो यस्य स विगतसंग्रामः भवात् संसारात् परिमुच्यते । अनेन सूत्रत्रयेण प्राकारं कारयित्वेत्यादिसूत्रस्य सिद्धसाधनतोक्तेति सूत्रत्रयार्थः ॥ २२ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ । तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ २३ ॥

मूलम्—पासाए कारइत्ता णं, वद्धमाणगिहाणि अ । वालग्गपोइआओअ, तओ गच्छसि खत्तिआ ! ॥२४॥

व्याख्या—प्रासादान् कारयित्वा वर्धमानगृहाणि चानेकधा वास्तुशास्त्रोक्तानि 'वालग्गपोईआओत्ति' देशीभाषया वलभीश्च कारयित्वा, अशेषरचनाविशेषोपलक्षणञ्चैतत्, ततो गच्छ क्षत्रिय !। अनेन यः प्रेक्षावान् स सति सामर्थ्ये गृहादि कारयति, प्रेक्षावांश्च भवानिति सूचितमिति सूत्रार्थः ॥ २४ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ । तओ नमी रायरिसी, देविंदं इणमब्बवी ॥२५॥

मूलम्—संसयं खलु सो कुणइ, जो मग्गे कुणइ घरं । जत्थेव गंतुमिच्छिज्जा, तत्थ कुविज्ज सासयं ॥२६॥

व्याख्या–संशयं सन्देहं खलु निश्चये स कुरुते यथा कदाचिन्मे गमनं न भवेदपीति यो मार्गे कुरुते गृहं, गमननिश्चये हि तत्करणायोगात् । ननु गमननिश्चये कुतो मार्गे गृहं न क्रियते ? इत्याह–यत्रैव वाञ्छितप्रदेशे गन्तुमिच्छेत् 'तत्थेति' सावधारणत्वाद्वाक्यस्य तत्रैव कुर्वीत स्वस्यात्मना आश्रयः स्वाश्रयस्तं, ततोऽयमर्थः–इदं तावदिहावस्थानं मार्गावस्थानप्रायं तदिह गृहादि न क्रियते, यत्तु जिगमिषितमस्माभिर्मुक्तिपदं तदाश्रयविधाने च प्रवृत्ता एव वयमिति सिद्धसाधनमेतदपीति सूत्रार्थः ॥ २६ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ । तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ २७ ॥

मूलम्—आमोसे लोमहारे अ, गंठिभेए अ तक्करे । नगरस्स खेमं काऊणं, तओ गच्छसि खत्तिआ ! २८

व्याख्या—आसमन्तात् मुष्णन्तीत्यामोषाश्चौरास्तान्, लोमहारा ये निर्दयतया स्वविघातशङ्कया च जन्तून् हत्वैव सर्वस्वं हरन्ति तांश्च, ग्रन्थिभेदा ये घुर्घुरककर्तिकादिना ग्रन्थिं भिन्दन्ति तांश्च, तथा तस्करान् सर्वदा चौर्यकारिणो निवार्येति शेषः । नगरस्य क्षेमं कृत्वा ततो गच्छ क्षत्रिय ! अनेन च यो न्यायी नृपः स चौरादीन्निगृह्णाति, न्यायी नृपश्च त्वमिति सूचितमिति सूत्रार्थः ॥ २८ ॥

मूलम्—एअमट्ठं निसामित्ता, हेऊकारणचोइओ । तओ नमी रायरिसी, देविंदं इणमब्बवी ॥ २९ ॥

मूलम्—असई तु मणुस्सेहिं, मिच्छादंडो पजुज्जए । अकारिणोत्थ वज्झंति, मुच्चइ कारगो जणो ॥३०॥

व्याख्या—असकृदनेकधा तुरेवकारार्थे, ततोऽसकृदेव मनुष्यैर्नरैर्मिथ्या व्यलीकोऽनपराधिष्वपि अज्ञानाभिनिवेशादिभिर्दण्डो देशत्यागविग्रहनिग्रहादिः प्रयुज्यते व्यापार्यते, कथमित्याह–अकारिण आमोषणादेरविधायिनोऽत्रेत्यस्मिन् लोके बध्यन्ते निगडादिभिः, मुच्यते कारको विधायकः प्रक्रमादामोषणादेरेव जनो लोकः । अनेन च यदुक्तं प्रागामोषकादीन्निवार्य नगरस्य क्षेमं कृत्वा गच्छेति तत्र तेषां ज्ञातुमशक्यतया क्षेमकरणमप्यशक्यमुक्तमिति सूत्रार्थः

मूलम्—एअमट्ठं निसामित्ता, हेऊकारणचोइओ । तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ ३१ ॥

व्याख्या—प्राग्यन्नवरमियद्भिः प्रश्नैः स्वजनान्तःपुरपुरप्रासादनृपधर्मविषयः किमस्य रागोस्ति नवेति परीक्ष्य सम्प्रति द्वेषाभावपरीक्षार्थं विजिगीषुतामूलत्वाद्द्वेषस्य तामेव परीक्षितुमनाः शक्र इदमवदत् ॥ ३१ ॥

मूलम्—जे केइ पत्थिवा तुब्भं, न नमंति नराहिवा । वसे ते ठावइत्ता णं, तओ गच्छसि खत्तिआ ! ॥३२॥

व्याख्या—ये केचित् पार्थिवा नृपास्तुभ्यं न नमन्ति हे नराधिप ! हे राजन् ! वशे आत्मायत्तौ तान् नृपान् स्थापयित्वा वशीकृत्येत्यर्थः, ततो गच्छ क्षत्रिय ! । अनेन च यः समर्थो राजा सोऽनमन्नृपान् नमयति, समर्थपार्थिवश्च त्वमिति सूचितमिति सूत्रार्थः ॥ ३२ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ । तओ नमी रायरिसी, देविंदं इणमब्बवी ॥ ३३ ॥

मूलम्—जो सहस्सं सहस्साणं, संगामे दुज्जए जिणे । एगं जिणिज्ज अप्पाणं, एस से परमो जओ॥३४॥

व्याख्या—यः सहस्रं सहस्राणां दशलक्षात्मकं प्रक्रमात् सुभटसम्बन्धि संग्रामे दुर्जये जयेदभिभवेत्, स चेदेकं जयेदात्मानमनाचारप्रवृत्तमिति गम्यते । एषोनन्तरोक्तः 'से इति' तस्य जेतुः सुभटदशलक्षजयात् परमः प्रकृष्टो जयः, अनेन चात्मन एवातिदुर्जयत्वमुक्तम् ॥ ३४ ॥ ततश्च—

मूलम्—अप्पाणमेव जुज्झा हि, किं ते जुज्झेण वज्झओ । अप्पाणमेव अप्पाणं, जइत्ता सुहमेहए ॥३५॥

व्याख्या—'अप्पाणमेवत्ति' द्वितीयायास्तृतीयार्थत्वादात्मनैव सह युध्यस्व, किं ? न किंचिदित्यर्थः, ते तव युद्धेन बाह्यत इति बाह्यपार्थिवानाश्रित्य, एवञ्च 'अप्पाणमेवत्ति' आत्मानं 'जइत्तत्ति' जित्वा सुखं ऐकान्तिकं मुक्तिसुखरूपमेधते प्राप्नोति ॥ ३५ ॥ कथमात्मन्येव जिते सुखावाप्तिरित्याह—

मूलम्—पंचिंदिआणि कोहं, माणं मायं तहेव लोभं च । दुज्जयं चेव अप्पाणं, सव्वमप्पे जिए जिअं ॥३६॥

व्याख्या—पञ्चेन्द्रियाणि श्रोत्रादीनि क्रोधो मानो माया तथैव लोभश्च 'दुज्जयं चेवत्ति' दुर्जयं इति विशेषणं सर्वत्र सम्बध्यते, चः समुच्चये, एवः पूर्त्तौ, अतति गच्छति अनेकान्यध्यवसायान्तराणीति आत्मा मनः, नपुंसकनि-

देशस्तु सर्वत्र सूत्रत्वात्, सर्वमेतदिन्द्रियादि उपलक्षणत्वान्मिथ्यात्वादि च आत्मनि जीवे जिते जितं, ततो बाह्यारिजयमुपेक्ष्यात्मन एव जये प्रवृत्तोस्म्यहमिति सूत्रत्रयार्थः ॥ ३६ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ । तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ ३७॥

व्याख्या—स्पष्टं, नवरमेतावता तस्य रागद्वेषाभावं निश्चित्याधुना जिनधर्मस्थैर्यं परीक्षितुमिन्द्र इदमवादीत् ॥३७॥

मूलम्—जइत्ता विउले जण्णे, भोइत्ता समणमाहणे। दच्चा भुच्चा य जट्टाय, तओ गच्छसि खत्तिआ ! ३८

व्याख्या—'जइत्तत्ति' याजयित्वा विपुलान् विस्तीर्णान् यज्ञान्, भोजयित्वा श्रमणब्राह्मणान्, दत्वा द्विजादिभ्यो गोभूमिस्वर्णादि, भुक्त्वा च मनोज्ञशब्दादीन्, इष्ट्वा च स्वयं यागान्, ततो गच्छ क्षत्रिय! अनेन यद्यत् प्राणिप्रीतिकरं तत्तद्धर्माय, विप्रादिप्राणिप्रीतिकरश्च यागादि इति सूचितमिति सूत्रार्थः ॥ ३८ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारण चोईओ । तओ नमी रायरिसी, देविंदं इणमब्बवी ॥ ३९॥

मूलम्—जो सहस्सं सहस्साणं,मासे मासे गवं दए। तस्सावि संजमो सेओ,अदिंतस्सावि किंचणं॥४०॥

व्याख्या—यः सहस्रं सहस्राणां दशलक्षाणीत्यर्थः, मासे मासे गवां दद्यात्, तस्याप्येवंविधदातुरपि संयमो हिंसाद्याश्रवविरमणात्मकः श्रेयानतिप्रशस्यः, अददतोपि किञ्चन स्वल्पमपि वस्तु। एवञ्च संयमस्य प्रशस्यतरत्वं वदता यज्ञादीनां सावद्यत्वमर्थात् ज्ञापितं। यदुक्तं याज्ञिकैः—"षट् शतानि नियुज्यन्ते, पशूनां मध्यमेहनि ॥ अश्वमेधस्य वचना—न्न्यूनानि पशुभिस्त्रिभिः ॥ १ ॥" ततः पशुहिंसात्मकत्वात्सावद्या एव यागाः। तथा दानान्यपि अशनादीनां धर्मोपकरणानाञ्च धर्माय भवन्ति, स्वर्णगोभूम्यादीनां तु दानानि प्राण्युपमर्दहेतुत्वात्सावद्यान्येव सावद्यत्वाच्च यागादीनि न प्राणिप्रीतिकराणीतिभाव इति सूत्रार्थः ॥ ४० ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ । तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ ४१ ॥

व्याख्या—प्राग्वन्नवरं जिनधर्मस्थैर्यमवधार्य व्रतं प्रति दार्ढ्यं परीक्षितुमिदमाचचक्षे हर्यश्वः ॥ ४१ ॥

मूलम्—घोरासमं चइत्ता णं, अन्नं पत्थेसि आसमं। इहेव पोसहरओ, भवाहि मणुआहिवा ! ॥ ४२ ॥

व्याख्या—घोरोत्यन्तदुरनुचरः सचासावाश्रमश्च घोराश्रमो गार्हस्थ्यं, तस्यैवाल्पसत्वैर्दुष्करत्वात्। उक्तञ्च—"गृहाश्रमपरो धर्मो, न भूतो न भविष्यति ॥ पालयन्ति नराः शूराः, क्लीवाः पाषण्डमाश्रिताः ॥ १ ॥" तं त्यक्त्वा अन्यं प्रार्थयसे ? आश्रमं दीक्षालक्षणं, नेदं हीनसत्वोचितं भवादृशां युक्तं। तर्हि किं युक्तमित्याह—इहास्मिन्नेव गृहाश्रमे स्थित इति गम्यते, पोषधोऽष्टम्यादितिथिषु व्रतविशेषस्तत्र रतः पौषधरतो भव हे मनुजाधिप ! अणुव्रताद्युपलक्षणञ्चैतत्, अस्यैवोपादानं तु पौषधदिनेष्ववश्यम्भावात्तपोनुष्ठानख्यापकं। इह च यद्यद्घोरं तत्तद्धर्मार्थिनाऽनुष्ठेयं, घोरश्चायं गृहाश्रम इति घोरपदेन सूचितमिति सूत्रार्थः ॥ ४२ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारण चोइओ । तओ नमी रायरिसी, देविंदं इणमब्बवी ॥ ४३॥

मूलम्—मासे मासे उ जो बालो,कुसग्गेणं तु भुंजए।न सो सुअक्खायधम्मस्स,कलं अग्घइ सोलसिं।४४।

व्याख्या—मासे मासे एव तुशब्दस्यैवकारार्थत्वान्नत्वर्धमासादौ यः कश्चिद्बालो निर्विवेकः कुशाग्रेणैव दर्भाग्रेणैव भुंक्ते, न तु कराङ्गुल्यादिभिः। न नैव स तादृशतपोनुष्ठायी, सुष्ठु शोभनः सर्वसावद्यविरतिरूपत्वादाख्यातस्तीर्थकरैः कथितः स्वाख्यातो धर्मो यस्य स स्वाख्यातधर्मो मुनिः तस्य कलां भागमर्घति अर्हति षोडशीं षोडशांशसमोपि न स्यादितिभावः। ततो यत्स्वाख्यातं न स्यात् तद्घोरमपि धर्मार्थिना नानुष्ठेयं, आत्मघातादिवत्। स्वाख्यातश्च मुख्यतया मुनिधर्म एव, न तु गृहाश्रमस्ततो गृहाश्रमादयमेव श्रेयानिति। ननु ? पूर्वसूत्रे इहैव 'पोसहरओ भवाहीति' वाक्येन देशविरतेः कर्तव्यता शक्रेणोक्ता, देशविरतश्च बालपण्डित उच्यते, 'समणोवासया बालपंडिआ' इति वचनात्, तत्कथमिह बालशब्देन देशविरतो व्यपदिष्ट इतिचेदुच्यते—देशविरतस्य बालपण्डितत्वे सत्यपि एकादशाविरतिमत्तापेक्षया बाल्यांशस्य प्राधान्यविवक्षयैवमुक्तं सम्भाव्यते। दृश्यते हि समये सास्वादनवतां ज्ञानांशवत्त्वेऽपि तत्प्राधान्यविवक्षया ज्ञानित्वव्यपदेश इति सूत्रार्थः ॥ ४४ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ । तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ ४५॥

व्याख्या—पुनर्नीरागतामेव परीक्षितुमदोऽवददिन्द्रः ॥ ४५ ॥

मूलम्—हिरण्णं सुवण्णं मणिमुत्तं, कंसं दूसं च वाहणं।
कोसं वड्ढावइत्ता णं, तओ गच्छसि खत्तिआ ! ॥ ४६ ॥

व्याख्या—हिरण्यं घटितस्वर्णं, सुवर्णं ततोऽन्यत्, मणयश्चन्द्रनीलाद्या मुक्ताश्च मौक्तिकानि मणिमुक्तं, कांसं कांसभाजनादि, दूष्यं वस्त्रं, चकारः स्वगतानेकभेदसूचकः, वाहनं रथाश्वादि, कोशं भाण्डागारं, वर्धयित्वा वृद्धिं नीत्वा ततो गच्छ क्षत्रिय ! अयं भावः—यो यः साकांक्षः स स धर्मानुष्ठानायोग्यः, साकांक्षश्च भवान्, आकांक्षणीयस्वर्णादिवस्तूनां सम्पूर्णत्वाभावादिति सूत्रार्थः ॥ ४६ ॥

मूलम्—एयमट्ठं निसामित्ता, हेउकारणचोइओ। तओ नमी रायरिसी, देविंदं इणमब्बवी ॥ ४७ ॥

मूलम्—सुवण्णरुप्पस्स उ पव्वया भवे, सिआ हु केलाससमा असंखया।
नरस्स लुद्धस्स न ते हिं किंचि, इच्छा हु आगास समा अणंतिआ ॥ ४८ ॥

व्याख्या—सुवर्णं च रूप्यं च सुवर्णरूप्यं तस्य, तुः पूर्त्तौ, पर्वताः पर्वतप्रमाणा राशयः 'भवेत्ति' भवेयुः स्यात्कदाचित्, हुरवधारणे भिन्नक्रमश्च, ततः कैलाससमा एव, न तु लघुगिरिप्रमाणाः, कैलासश्चात्र मेरुरिति वृद्धाः, तेप्यसंख्यकाः संख्यारहिता न तु द्वित्राः, नरस्य लुब्धस्य न तैः तादृशैरपि स्वर्णरूप्यपर्वतैः किञ्चिदपि स्वल्पमपि परितोषकारणं स्यादिति गम्यं। कुत इत्याह—इच्छा अभिलाषो हुरिति यस्मात् आकाशेन समा आकाशसमा अनन्तिका अन्तरहिता। उक्तञ्च—"न सहस्राद्भवेत् तुष्टि-र्न लक्षान्न च कोटितः ॥ न राज्यान्नैव देवत्वा-न्नेन्द्रत्वादपि देहिनाम् ॥ १ ॥" इति ॥ ४८ ॥ तथा—

मूलम्—पुढवी साली जवा चेव, हिरण्णं पसुभिस्सह। पडिपुण्णं नालमेगस्स, इइ विज्जा तवं चरे॥४९॥

व्याख्या—पृथ्वी भूमिः, शालयो लोहितशाल्यादयः, यवाः प्रतीताः, चः शेषधान्यसमुच्चयार्थः, एवोऽवधारणे भिन्नक्रमोऽग्रे योक्ष्यते, हिरण्यं, सुवर्णं, रूप्याद्युपलक्षणमेतत्, पशुभिर्गवादिभिः सह प्रतिपूर्णं समस्तं नैव अलं समर्थं प्रक्रमादिच्छापूर्तये एकस्य जन्तोरिति शेषः। इत्येतत्पूर्वोक्तं 'विज्जत्ति' विदित्वा तपो द्वादशविधं चरेत्तत एव निःस्पृहतयेच्छापूर्तिं सम्भवादनेन च सन्तोष एवाकांक्षापोहे क्षमो न तु स्वर्णादीत्युक्तं। ततः सन्तुष्टस्य मे स्वर्णादौ साकांक्षत्वमेव नास्तीति तद्वर्धनोद्यमो दूरापास्त एवेति सूत्रद्वयार्थः ॥ ४९ ॥

मूलम्—एयमट्ठं निसामित्ता, हेउकारणचोइओ। तओ नमिं रायरिसिं, देविंदो इणमब्बवी ॥ ५० ॥

मूलम्—अच्छेरगमब्भुदए, भोए चयसि पत्थिवा ! । असंते कामे पत्थेसि, संकप्पेण विहण्णसि !॥५१॥

व्याख्या—आश्चर्यमिदं वर्त्तते यत् त्वमेवंविधोपि 'अब्भुदएत्ति' अद्भुतकानाश्चर्यरूपान् भोगान् त्यजसि हे पार्थिव ! तथाऽसतोऽविद्यमानान् कामान् प्रार्थयसे ! तदप्याश्चर्यमिति सम्बन्धः। अथवा कस्तवात्र दोषः ? सङ्कल्पेनोत्तरोत्तरभोगाभिलाषरूपेण विकल्पेन विहन्यसे बाध्यसे, अनन्तत्वादेवंविधसङ्कल्पस्य। परं यो विवेकी स प्राप्तान् कामानप्राप्तकामाकांक्षया न त्यजेद्विवेकी च भवानिति सूत्रार्थः ॥ ५१ ॥

मूलम्—एअमट्ठं निसामित्ता, हेउकारणचोइओ। तओ नमी रायरिसी, देविंदं इणमब्बवी ॥ ५२ ॥

मूलम्—सल्लं कामा विसं कामा, कामा आसी विसोवमा। कामे पत्थेमाणा, अकामा जंति दुग्गइं ॥ ५३ ॥

व्याख्या—शल्यमिव शल्यं कामाः शब्दादयः, विषमिव विषं कामाः, कामा आशीविषोपमाः, आशीविषः सर्पस्तदुपमाः। किञ्च कामान् प्रार्थयमाना अपेर्गम्यत्वात् प्रार्थयमाना अपि अकामा इष्यमाणकामाभावाद्यान्ति दुर्गतिं, ततः कथं तत्परिहार आश्चर्यं ? असद्भोगप्रार्थनमपि यद्भवता सम्भावितं तदप्ययुक्तं, मुमुक्षूणां क्वचिदपि कांक्षाया अभावात्। उक्तं हि—"मोक्षे भवे च सर्वत्र, निःस्पृहो मुनिसत्तमः" इति ॥ ५३ ॥ कथं पुनः कामान् प्रार्थयमाना दुर्गतिं यान्तीत्याह—

मूलम्—अहे वयइ कोहेणं, माणेणं अहमा गई। माया गइपडिग्घाओ, लोहाओ दुहओ भयं ॥ ५४ ॥

व्याख्या—अधो नरकगतौ व्रजति क्रोधेन, मानेन अधमा गतिः, 'मायत्ति' सुव्यत्ययान्मायया गतेः प्रस्तावात्सुगतेः प्रतिघातो विनाशो गतिप्रतिघातो, लोभात् 'दुहओत्ति' द्विप्रकारमैहिकं पारत्रिकं च भयं, स्यादिति सर्वत्र

गम्यं । कामेषु च प्रार्थ्यमानेष्ववश्यं भाविनः क्रोधादयस्ते चेदृशा इति कथं न तत् प्रार्थनया दुर्गतिरिति सूत्रद्वयार्थः ॥ ५४ ॥ इत्थमनेकैरप्युपायैस्तं क्षोभयितुमशक्तः शक्रः किमकरोदित्याह—

मूलम्—अवउज्झिऊण माहणरूवं विउरूविऊण इंदत्तं ।
वंदइ अभित्थुणंतो इमाहिं महुराहिं वग्गूहिं ॥ ५५ ॥

व्याख्या—अपोह्य त्यक्त्वा ब्राह्मणरूपं 'विउरूविऊणत्ति' विकृत्य इन्द्रत्वं उत्तरवैक्रियमिन्द्ररूपं वन्दते नमति अभिष्टुवन् स्तुतिं कुर्वन् इमाभिर्वक्ष्यमाणाभिर्मधुराभिर्मनोहराभिर्वाग्भिर्वाणीभिरिति सूत्रार्थः ॥ ५५ ॥ तथा हि—

मूलम्—अहो ते निज्जिओ कोहो, अहो ते माणो पराजिओ ।
अहो ते निरक्किआ माया, अहो ते लोहो वसीकओ ॥ ५६ ॥

व्याख्या—अहो ! इति विस्मये ते त्वया निर्जितः क्रोधः, यतस्त्वमनमन्नृपवशीकरणाय प्रेरितोपि न क्षुभितः ! तथा अहो ! ते मानः पराजितो यस्त्वं मन्दिरं दह्यत इत्याद्युक्तोपि कथं मयि जीवतीदं स्यादिति नाहङ्कृतिं कृतवान् ! अहो ! ते निराकृता माया, यस्त्वं पुररक्षाहेतुषु मायाजन्येषु प्राकाराट्टालकोत्सूलकादिषु मनो न विन्यस्तवान् ! तथाऽहो ! ते लोभो वशीकृता यस्त्वं हिरण्यादिवर्द्धनाय नोदितोपि इच्छाया आकाशसमत्वमेवाभिहितवान् ! ॥ ५६ ॥ तथा—

मूलम्—अहो ते अज्जवं साहु, अहो ते साहु मद्दवं । अहो ते उत्तमा खंती, अहो ते मुत्ति उत्तमा ॥५७॥

व्याख्या—स्पष्टं, नवरमार्जवं मायाभावः, साधु शोभनं, मार्दवं मानाभावः, क्षान्तिः क्रोधाभावः, मुक्तिर्निर्लोभतेति सूत्रद्वयार्थः ॥ ५७ ॥ इत्थं गुणैः स्तुत्वा फलोपदर्शनद्वारेण स्तुतिमाह—

मूलम्—इहंसि उत्तमो भंते, पेच्चा होहिसि उत्तमो । लोगुत्तमुत्तमं ठाणं, सिद्धिं गच्छसि नीरओ ॥५८॥

व्याख्या—इहास्मिन् लोके असि वर्त्तसे उत्तमः उत्तमगुणान्वितत्वात्, हे भदंत ! हे पूज्य ! 'पेचत्ति' प्रेत्य परलोके भविष्यसि उत्तमः, कथमित्याह—'लोगुत्तमुत्तमंति' लोकस्य उत्तमोत्तमं अतिशयप्रधानं लोकोत्तमोत्तमं स्थानं, किं तदित्याह—सिद्धिं मुक्तिं 'गच्छसित्ति' सूत्रत्वाद्गमिष्यसि, नीरजा निष्कर्मेति सूत्रार्थः ॥ ५८ ॥ उपसंहरति—

मूलम्—एवं अभित्थुणंतो, रायरिसिं उत्तिमाइ सद्धाए । पायाहिणं कुणंतो, पुणो पुणो वंदए सक्को ॥५९॥

व्याख्या—एवमुक्तन्यायेन अभिष्टुवन् राजर्षिं उत्तमया श्रद्धया प्रदक्षिणां कुर्वन् पुनः पुनर्वन्दते प्रणमति शक्रः ॥५९॥

मूलम्—तो वंदिऊण पाए, चक्कंकुसलक्खणे मुणिवरस्स ।
आगासेणुप्पइओ, ललिअचवलकुंडलतिरीडी ॥ ६० ॥

व्याख्या—ततस्तदनन्तरं वन्दित्वा पादौ चक्राङ्कुशलक्षणौ मुनिवरस्य आकाशेन उत्पतितः स्वर्गाभिमुखं गतः ललिते च ते सविलासतया चपले चञ्चलतया ललितचपले तादृशे कुण्डले यस्य स ललितचपलकुण्डलः सचासौ किरीटी च मुकुटवान् ललितचपलकुण्डलकिरीटीति सूत्रार्थः ॥ ६० ॥ शक्रेणैवं स्तूयमानः स मुनिः किमुत्कर्षं व्यधादुत नेत्याह—

मूलम्—नमी नमेइ अप्पाणं, सक्खं सक्केण चोइओ । चइऊण गेहं वइदेही, सामण्णे पज्जुवट्ठिओ ॥६१॥

व्याख्या—नमिर्नमयति स्वतत्त्वभावनया प्रह्वं करोत्यात्मानं स्वं नतूत्सेकं नयति । उक्तञ्च—"संतगुणकित्तणेणवि पुरिसा लज्जंति जे महासत्ता ॥ इअरा पुण अलिअपसंसणेवि हिअए न मायंति ॥ १ ॥" किम्भूतो नमिः ? साक्षात्प्रत्यक्षीभूय शक्रेण चोदितः प्रेरितः त्यक्त्वा गेहं 'वइदेहित्ति' सूत्रत्वाद्विदेही विदेहदेशाधीशः श्रामण्ये पर्युपस्थितः उद्यतो न तु तत्प्रेरणयापि धर्माद्विच्युतोऽभूदिति भाव इति सूत्रार्थः ॥६१॥ अथामुष्य मुनिमुख्यस्य दृष्टान्तेनोपदेशमाह—

मूलम्—एवं करिंति संबुद्धा, पंडिआ पविअक्खणा ।
विणिअट्टंति भोगेसु, जहा से नमी रायरिसित्ति बेमि ॥ ६२ ॥

व्याख्या—एवमिति यथामुना नमिनाम्ना मुनिना निश्चलत्वं कृतं तथाऽन्येपि कुर्वन्ति, कीदृशाः ? संबुद्धा अवगततत्वाः, पण्डिता निश्चितशास्त्रार्थाः, प्रविचक्षणा अभ्यासातिशयात्क्रियाम्प्रति प्रवीणाः, तादृशाश्च सन्तो विनिवर्त्तन्ते

उपरमन्ते 'भोगेसुत्ति' भोगेभ्यो यथा स नमी राजर्षिस्तेभ्यो निवृत्त इति ब्रवीमीति पूर्ववदिति सूत्रार्थः ॥ ६२ ॥ इति समासोऽध्ययनसूत्रार्थः, अथ प्रक्रान्तशेषं प्रस्तूयते, तच्चेदं—

अथ नग्गतिसंज्ञस्य, सम्बुद्धस्याम्रपादपात् ॥ तुर्यप्रत्येकबुद्धस्य, कथां वक्ष्यामि तद्यथा ॥ १ ॥ अत्रैव भरतक्षेत्रे, देशे गान्धारसंज्ञके ॥ श्रीपाण्डुवर्धनपुरे, राजा सिंहरथोऽभवत् ॥ २ ॥ अन्यदा तस्य भूभर्त्तु-र्द्वावश्वावुत्तरापथात् ॥ उपायने समायातौ, शक्रवाजिविजित्वरौ ॥ ३ ॥ तयोर्मध्ये बभूवैक-स्तुरङ्गो वक्रशिक्षितः ॥ तमारोहन्नृपो देवा-द्वितीयं तु तदङ्गजः ॥ ४ ॥ ततः सैन्यान्वितो राजा, निर्गत्य नगराद्बहिः ॥ वाहकेलीगतो वाह-वाहनार्थं प्रचक्रमे ॥ ५ ॥ प्रकृष्टां तद्गतिं द्रष्टुं, कशया प्राहरच्च तम् ॥ ततः स तुरगः सिन्धु-पूरादप्यचलद्द्रुतम् ॥ ६ ॥ तं रक्षितुं नृपो वल्गा-माचकर्ष यथा यथा ॥ तथा तथा हयो जज्ञे, जवनः पवनादपि ॥ ७ ॥ गच्छन्नेवं योजनानि, द्वादशातिगतो हयः ॥ तमरण्येऽनयन्नद्याः, पूरस्तरुमिवोदधौ ॥ ८ ॥ आकृष्याकृष्य निर्विण्णो, वल्गां तत्रामुचन्नृपः ॥ तुरङ्गमोपि तत्रैव, तस्थौ तत्क्षणमात्मना ॥ ९ ॥ ततस्तं वाजिनं ज्ञात्वा, भूशक्रो वक्रशिक्षितम् ॥ बद्ध्वा क्वापि द्रुमे भ्राम्यन्, प्राणवृत्तिं व्यधात्फलैः ॥ १० ॥ रात्रिवासाय चारूढो, गिरिमेकं महीपतिः ॥ ददर्शैकं दर्शनीयं, प्रासादं सप्तभूमिकम् ॥ ११ ॥ तस्य मध्ये प्रविष्टश्चा-द्राक्षीदेकां मृगेक्षणाम् ॥ रूपलावण्यतारुण्य-तिरस्कृतरतिश्रियम् ॥ १२ ॥ ससम्भ्रमं समुत्थाय, प्रमोदभरमेदुरा ॥ ददौ साप्यासनं तस्मै, सोऽपि तस्मिन्नुपाविशत् ॥ १३ ॥ मिथस्तावन्यरज्येतां, क्षणाद्दूतीकृतेक्षणौ ॥ अन्योन्यदर्शनोद्भूत-स्नेहावेशहतत्रपौ ॥ १४ ॥ कासि त्वं ? सुभगे ! किञ्च, तिष्ठस्येकाकिनी वने ? ॥ अथेति भूभुजा पृष्टा, सोत्कण्ठं सैवमब्रवीत् ॥ १५ ॥ भवनेस्मिन्वेदिकायां, पूर्वमुद्वह मां प्रभो ! ॥ पश्चात्स्वस्थमनाः सर्वं, वक्ष्ये वृत्तान्तमात्मनः ॥ १६ ॥ तत्कर्णामृतमाकर्ण्य, वाक्यं तस्या धराधिपः ॥ सरसं भोजनं प्राप्य, बुभुक्षुरिव पिप्रिये ॥ १७ ॥ भवने तत्र सानन्दं, प्रविष्टश्च जिनालयम् ॥ सोऽपश्यत्तस्य तु पुरो, वेदिकां शुभवेदिकाम् ॥ १८ ॥ ततो नत्वा जिनं सन्ध्या-समये वेदिकां गतः ॥ गान्धर्वेण विवाहेनो-र्वीशस्तामुदुवाह सः ॥१९॥ ततो वासगृहे गत्वा, विलासैर्विविधैः सुखम् ॥ अतिवाह्य निशां प्रात-स्तौ जिनेन्द्रं प्रणेमतुः ॥ २० ॥ राज्ञः सिंहासनस्थस्यो-पविष्टार्धासने मुदा ॥ साथ राज्ञी जगौ राजन् !, वार्ता मे श्रूयतामिति ॥ २१ ॥

अत्रैव भरतक्षेत्रे, शालिलक्ष्मीविभूषिते ॥ क्षितिप्रतिष्ठितपुरे-ऽभवद्विजितशत्रुराट् ॥२२॥ स चान्यदा सभामेकां, कारयित्वा मनोहराम् ॥ सर्वां चित्रकरश्रेणी-माहूयैवमवोचत ॥ २३ ॥ यावन्ति वो गृहाणि स्यु-र्भागैस्तावन्मितैरियम् ॥ चित्रणीया सभा चित्रै-श्चित्रैश्चित्रैकहेतुभिः ॥ २४ ॥ प्रमाणमाज्ञेत्युक्त्वाथ, नैके चित्रकृतोपि ताम् ॥ आरेभिरे चित्रयितुं, करस्तेषां स एव हि ॥ २५ ॥ तत्र चैको जरी चित्र-करश्चित्राङ्गदाभिधः ॥ अचित्रयत्सभां नित्य-मसहायः सुतोज्झितः ॥ २६ ॥तस्य चैकाभवत्पुत्री, नाम्ना कनकमंजरी ॥ रूपयौवनचातुर्य-कलासर्वस्वसेवधिः ॥ २७ ॥ सा प्रत्यहं सभास्थस्य, गत्वा भक्तमदात् पितुः ॥ स तु तस्यामागताया-मगान्नित्यं बहिर्भुवि ॥ २८ ॥ अन्येद्युर्भक्तमादाय, प्रस्थिता सा जनाकुले ॥ राज्यमार्गे ययौ याव-त्कनी मन्थरगामिनी ॥ २९ ॥ तावत्तत्र जवेनाद्रि-वाहिनीपूरजिष्णुना ॥ वाहयन्तं हयं भूप-मश्ववारं ददर्श सा ॥ ३० ॥ ततो भीता प्रणष्टा सा, गते तत्र सभामगात् ॥ सभक्तामागतां तां च, वीक्ष्य वृद्धो बहिर्ययौ ॥ ३१ ॥ तस्य पुत्री तु तत्रस्था, कौतुकात्कुट्टिमेऽलिखत् ॥ विविधैर्वर्णकैरेकं, केकिपिच्छं यथास्थितम् ॥ ३२ ॥ अत्रान्तरे सभां द्रष्टुं, तत्रायातो महीपतिः ॥ तत्केकिपिच्छमादातुं, चिक्षेप करमञ्जसा ॥ ३३ ॥ तत्पिच्छं तत्करे नागा-न्नखभङ्गस्त्वजायत ॥ प्रवृत्तिर्हि विना तत्त्व-ज्ञानं स्यान्निष्फला नृणाम् ॥ ३४ ॥ ततो विलक्षं क्ष्मापालं, वीक्षमाणमितस्ततः ॥ सविलासं विहस्येति, प्रोचे कनकमञ्जरी ॥ ३५ ॥ मञ्चको हि त्रिभिः पादैः, सुस्थितो न भवेदिति ॥ पश्यन्त्यास्तुर्यपादं मे, तुर्यमूर्खोऽमिलद्भवान् ॥ ३६ ॥ केऽन्ये त्रयः कथञ्चाहं, तुर्यः ? इत्यवनीभृता ॥ पृष्टा सा पुनरित्यूचे, तं राजानमजानती ॥ ३७ ॥ अहं चित्राङ्गदाह्वस्य, वृद्धचित्रकृतः सुता ॥ इहस्थस्य पितुर्हेतो-रायान्त्यादाय भोजनम् ॥ ३८ ॥ रंहसा भूयसा वाहं, वाहयन्तं चतुष्पथे ॥ अद्यैकं मर्त्यमद्राक्षं, स मूर्खः प्रथमो मतः ॥ ३९ ॥ [ युग्मम् ] राजमार्गो हि बालस्त्री-वृद्धाद्यैः सङ्कुलो भवेत् ॥ इति तत्र जवेनाश्वान्, वाहयन्ति न धीधनाः ॥ ४० ॥ निर्दयः स तु तत्रापि, रंहसा वाहयन् हयम् ॥ सद्वायामादिमः पादः, कथ्यते बालिशाग्रणीः ! ॥ ४१ ॥ द्वितीयस्तु महीपालो-ऽविज्ञातपरवेदनः ॥ शिल्पिनां वेश्मतुल्यांशै-र्योऽदाच्चित्रयितुं सभाम् ॥ ४२ ॥ सन्ति चित्रकृतोऽनेके-ऽन्येषु सर्वेषु वेश्मसु ॥ मम तातस्तु निष्पुत्रो, दुःस्थो वृद्धश्च विद्यते ॥ ४३ ॥

तस्याप्यन्यैः सह समं, भूपो भागं प्रकल्पयन् ॥ द्वितीयः प्रोच्यते मूढ–स्तृतीयस्तु पिता मम ! ॥ ४४ ॥ स हि पूर्वार्जितं सर्वं, बुभुजे चित्रयन् सभाम् ॥ विनार्जनां भुज्यमानं, वित्तं हि स्यात्कियच्चिरम् ? ॥ ४५ ॥ अथ यत्किञ्चिदादाया–गतायां मयि भोजनम् ॥ स याति देहचिन्तार्थं, न तु पूर्वं करोति ताम् ॥ ४६ ॥ ततश्च शीतलीभूतं, तद्भोज्यं विरसं भवेत् ॥ सदन्नेपि हि शीते स्या–द्वैरस्यं किं पुनः परे ? ॥ ४७ ॥ तादृशं च विधायान्नं, भुञ्जानो मत्पिताऽनिशम् ॥ तृतीयः प्रोच्यते जाल्म–श्चतुर्थस्तु भवान्मतः ! ॥ ४८ ॥ आगमो हि कदाप्यत्र, न सम्भवति केकिनाम् ॥ तत्स्यात्कौतस्कुतः पात–स्तत्पिच्छस्येह कुट्टिमे ? ॥ ४९ ॥ अथात्रापि तदानीतं, स्यात्केनापीति चेत्तदा ॥ तस्य प्राग् निर्णयः कार्य–स्तद्रोमस्फुरणादिना ॥ ५० ॥ तं विना तु क्षिपन् पाणि–मस्मिंस्त्वं मूढ एव हि ! ॥ ततोवादीन्नृपः सत्य–महं पादस्तुरीयकः ॥ ५१ ॥ दध्यौ च भूपतिरहो !, अस्या वचनचातुरी ॥ अहो बुद्धिरहोरूप–महो लावण्यमद्भुतम् ॥ ५२ ॥ पाणौकृत्य तदेनां स्वं, करोमि सफलं जनुः ॥ ध्यायन्निति निजं धाम, ययौ नृपतिरुत्सुकः ॥ ५३ ॥ तातं प्रभोज्य तस्याश्च, गतायां स्वगृहे नृपः ॥ प्रैषीच्चित्राङ्गदाभ्यर्णे, श्रीगुप्ताभिधधीसखम् ॥५४॥ तेनार्थितः पार्थिवार्थं, कनीं कनकमञ्जरीम् ॥ चित्राङ्गदोवदद्युक्त–मदः किन्त्वस्मि निर्धनः ॥ ५५ ॥ तद्विवाहोत्सवं राज्ञः, पूजाञ्च विदधे कथम् ? ॥ दुःस्थानां ह्युदरापूर्ति–रपि कृच्छ्रेण जायते ! ॥ ५६ ॥ सचिवेनाथ तद्वाक्ये, राज्ञः प्रोक्ते नृपोपि हि ॥ धनधान्यहिरण्याद्यै–स्तस्य गेहमपूरयत् ॥ ५७ ॥ शुभे चाह्नि महीशस्ता–मुपयेमे महामहैः ॥ ददौ च तस्यै प्रासादं, दासाद्यं च परिच्छदम् ॥ ५८ ॥ तस्य राज्ञोऽभवन् राज्यो, बहुलास्तासु चान्वहम् ॥ भूपतेर्वाससौधेगा–देकैका स्वस्ववारके ॥ ५९ ॥ तस्मिन्दिने तु भूपेना–दिष्टा कनकमंजरी ॥ ययौ दास्या समं राज्ञो, गेहं भूषणभूषिता ॥ ६० ॥ तत्रागमयमाना सा, नृपं तस्थौ तु विष्टरे ॥ राज्यागते च विनय–मभ्युत्थानादिकं व्यधात् ॥ ६१ ॥ भूपेऽथ सुप्ते शय्याया–मेवं मदनिकाभिधा ॥ पूर्वसङ्केतिता दासी, जगौ कनकमंजरीम् ॥ ६२ ॥ स्वामिनि ! त्वं कथां ब्रूहि, काञ्चित्कौतुककारिणीम् ॥ सा प्रोचे राज्ञि निद्राणे, कथयिष्यामि तामहम् ॥ ६३ ॥ तच्छ्रुत्वा भूधवो दध्या–वस्याश्चातुर्यपेशले ॥ वचने श्रूयमाणे हि, शर्करा कर्करायते ॥ ६४ ॥ ततोऽनया वक्ष्यमाण–माख्यानमहमप्यहो ! ॥ शृणोमीति नृपो ध्यायन्, सुष्वापालीकनिद्रया ॥ ६५ ॥ अथोचे मदना देवि !, सुप्तो राट् कथ्यतां कथा ॥ साऽवदत्सावधाना त्वं, शृणु तां वच्मि तद्यथा ॥ ६६ ॥ श्रीवसंतपुरे श्रेष्ठी, वरुणाख्यो दृषन्मयम् ॥ अचीकरद्देवकुल–मेकमेककरोच्छ्रयम् ॥ ६७ ॥ तत्र देवकुले देवं, चतुर्हस्तं न्यधत्त सः ॥ तदाकर्ण्य जगौ जात–कौतुका मदनेति ताम् ॥ ६८ ॥ एकहस्ते सुरगृहे, चतुर्हस्तः सुरः कथम् ? ॥ मातीति संशयं छिन्धि, स हि खाट्कुरुते हृदि ॥ ६९ ॥ देवी स्माहाधुनायाति, निद्रा मे तत्परेद्यवि ॥ इदं वक्ष्यामि ते को हि, निद्रासुखमुपेक्षते ? ॥ ७० ॥ एवमस्त्विति जल्पन्ती, ततोऽगान्मदना गृहम् ॥ अथो यथोचितस्थाने–ऽस्वपीत्कनकमंजरी ॥ ७१ ॥ भूपस्त्वचिन्तयदियं, वार्ता सङ्गच्छते कथम् ? ॥ तस्या रहस्यं पृच्छामि, तदेनामधुनैव हि ॥ ७२ ॥ यद्वा वक्ष्यत्यसौ जाल्म–मस्मिन् प्रश्ने कृते हि माम् ॥ अर्धोदिता च वार्ता स्या–द्वल्लभातोपि वल्लभा ॥ ७३ ॥ श्वस्तनेपि दिने दास्ये, तदस्या एव वारकम् ॥ यथार्थकथिता वार्त्ता, श्रूयते स्वयमेव सा ॥ ७४ ॥ ध्यात्वेत्यदान्नृपस्तस्यै, द्वितीयेप्यह्नि वारकम् ! । तथैव राज्ञि सुप्ते ता–मदो मदनिकाऽवदत् ! ॥ ७५ ॥ तामर्धोक्तां कथां ब्रूहि, तयेत्युक्ते च साऽब्रवीत् ॥ देवश्चतुर्भुजः सोऽभू–न्न तु तन्मानभूघनः ॥ ७६ ॥ अथाख्याहि कथामन्या–मेवं मदनयोदिता ॥ राज्ञी जगौ वने क्वापि, रक्ताशोकद्रुमोऽभवत् ॥ ७७ ॥ शाखाशताकुलस्यापि, तस्य छाया तु नाभवत् ॥ जगाद मदना तस्य, छाया न स्यात्तरोः कथम् ? ॥ ७८ ॥ साख्यत्तन्द्राकुलास्मीति, कल्ये वक्ष्याम्यदस्तव ॥ ततस्तस्यै ददौ भूप–स्तृतीयेप्यह्नि वारकम् ॥ ७९ ॥ प्राग्वन्मदनया पृष्टा, साथ प्रोचे महाशया ॥ तरोस्तस्याभवच्छाया–ऽधस्तादूर्ध्वन्तु नाऽभवत् ॥८०॥ आख्यानमन्यदाख्याही–त्युक्ता मदनया पुनः ॥ सावादीत् काप्यभूद्ग्रामे, कोपि दासेरपालकः ॥ ८१ ॥ तस्य चैको महाकायो, रवणोन्तर्वणं चरन् ॥ एकं बब्बूलमद्राक्षीत्, फलपुष्पभराकुलम् ॥ ८२ ॥ ततः स तं द्रुममभि–ग्रीवां प्रासारयन्मुहुः ॥ पत्रमात्रमपि प्राप, न तु तस्य महातरोः ॥ ८३ ॥ जातकोपस्ततस्तस्य, द्रुमस्योर्ध्वं क्रमेलकः ॥ विण्मूत्रे व्यसृजत्को वा, कदर्येभ्यो न कुप्यति ? ॥ ८४ ॥ मदनाख्यन्मुखेनापि, यं न प्राप महाद्रुमम् ॥ तस्योपरि शकृन्मूत्रे, स दासेरो व्यधात्कथम् ? ॥ ८५ ॥ राज्ञी जगाविदं कल्ये, वक्ष्ये निद्रामि साम्प्रतम् ॥ तुर्येप्यह्नि ततो राजा, तस्यै वारकमार्पयत् ॥ ८६ ॥ ततो दास्या तया पृष्टा, प्रोचे कनकमंजरी ॥ बब्बूलः स हि कूपेभू–त्तत्तं प्सातुं

स नाशकत् ॥ ८७ ॥ प्राग्वत्कथान्तरं पृष्टा, तथा सा चैवमब्रवीत् ॥ भूपेन क्वापि केनापि, गृहीतौ द्वौ मलिम्लुचौ ॥ ८८ ॥ मञ्जूषा निहितौ तौ च, नृपो नद्यामवाहयत् ॥ दयार्द्रचेता न पुन–र्मारयामास तौ स्वयम् ॥ ८९ ॥ यान्तीं नदीजले वीक्ष्य, तां पेटां केप्यकर्षयन् ॥ तां समुद्घाट्य ते चैव–मपृच्छंस्तौ विनिर्गतौ ॥ ९० ॥ युवयोः क्षिप्तयोरत्र, जज्ञिरे कति वासराः ? ॥ अद्य तुर्यं दिनमिति, तयोरेकोब्रवीत्तदा ॥ ९१ ॥ कथं तुर्यमहर्ज्ञात–मिति पृष्टा भुजिष्यया ॥ देव्यूचे श्व इदं वक्ष्ये, निद्राकालो ह्युपस्थितः ॥ ९२ ॥ पञ्चमेपि दिने राज्ञा, कौतुकाद्दत्तवारका ॥ तथैव दास्या पृष्टा चे–त्यूचे कनकमंजरी ॥ ९३ ॥ तृतीयज्वरवानासी–दित्यज्ञासीत्स तं दिनम् ॥ इत्युक्त्वा सा कथामन्यां, दास्या पृष्टैवमब्रवीत् ॥ ९४ ॥ जज्ञिरे बहुला राज्यो, राज्ञः कस्यापि कुत्रचित् ॥ तासु चैकाभवत्तस्य, स्वप्राणेभ्योपि वल्लभा ॥ ९५ ॥ राज्ञीनां शङ्कयान्यासां, कलादैर्भूगृहस्थितैः ॥ स च तस्याः कृते छन्न–मलङ्कारानकारयत् ॥ ९६ ॥ को हि कालोधुनास्तीति, कलादांस्तांश्च कौतुकात् ॥ कोप्यपृच्छत्तदा चैको, रात्रिरस्तीत्यभाषत ॥ ९७ ॥ तत्र रात्रिः कथं ज्ञाते–त्युक्ता राज्ञी भुजिष्यया ॥ प्रोचे प्रमीलाभ्येतीति, वक्ष्येऽनेद्युरिदं तव ॥९८॥ षष्ठेप्यह्नि नृपप्राप्त–वारका साथ तां जगौ ॥ भूगृहेपि निशान्धत्वा–त्स क्षपां ज्ञातवानिति ॥९९॥ कथान्तरञ्च पृष्टैवं, साख्यत्कस्यापि भूपतेः ॥ पेटां भूषणसम्पूर्णां, निश्छिद्रां कोप्यढौकयत् ॥१००॥ तस्यां चानुद्घाटिताया–मेवापश्यन्नृपोऽखिलान् ॥ तन्मध्यस्थानलंकारा–न्दास्याख्यत्स्यादिदं कथम् ? ॥ १०१ ॥ राज्ञी स्माह तवेदं श्वो, वदिष्यामि शयेऽधुना ॥ प्राप्ता च वारकं प्राग्व–च्चेट्या पृष्टैवमभ्यधात् ॥ १०२ ॥ बभूव पेटिका सा हि, स्वच्छस्फटिकनिर्मिता ॥ तत्तस्यां पिहितायामपि भूपा ददर्श राट् ॥१०३॥ आख्यानैरीदृशैर्यावत्, षण्मासान् सा नरेश्वरम् ॥ व्यमोहयत्ततः सोभू–त्तस्यामेव रतो भृशम् ॥१०४॥ नृपाङ्गजा अप्यन्यास्तु, राज्ञीर्नाजल्पयन्नृपः ॥ ततस्ताः कुपिता नित्यं, तस्याश्छिद्राण्यमार्गयन् ॥ १०५ ॥ ऊचुश्चैवमयं भूपो–ऽनया नूनं वशीकृतः ॥ कुलीना अपि नस्त्यक्त्वा, यदस्यामेव रज्यते ॥ १०६ ॥ चित्रकृत्तनया सा तु, सुधीर्मध्यंदिनेन्वहम् ॥ स्थित्वा गर्भगृहे हित्वा, वस्त्रभूषा नृपार्पिताः ॥ १०७ ॥ आमुच्य पितृसत्कानि, वस्त्राण्याभरणानि च ॥ एकाकिनी स्वमात्मान–मेवमुच्चैरबोधयत् ॥ १०८ ॥ [ युग्मम् ] रे जीव ! मा मदं कार्षी– र्मा विधा ऋद्धिगौरवम् ॥ मा विस्मार्षीर्निजां पूर्वा–वस्थां प्राप्तोपि सम्पदम् ॥ १०९ ॥ अलङ्कारास्त्रपुमया, जीर्णानि वसनानि च ॥ निजानीमानि जानीहि, सर्वमन्यत्तु भूपतेः ॥ ११० ॥ तद्दर्पमपहाय त्व–मात्मन् ! शान्तमना भव ॥ यथा सुचिरमेतासां, पदं भवसि सम्पदाम् ॥ १११ ॥ अन्यथा तु नरेन्द्रस्त्वां, गृहीत्वा गलकन्दले ॥ निष्काशयिष्यति गृहात्, कुथिताङ्गीं शुनीमिव ॥ ११२ ॥ तच्च तच्चेष्टितं दृष्ट्वा, दुष्टास्तुष्टाश्छलान्विषः ॥ इत्यूचिरेऽपरा राज्यो, जनेशं विजने स्थितम् ॥ ११३ ॥ यद्यपि त्वं प्रभोऽस्मासु, निःस्नेहोसि तथापि हि ॥ रक्षामस्त्वां वयं विघ्नात्, स्त्रियो हि पतिदेवताः ॥ ११४ ॥ त्वत्प्रिया सा हि कुरुते, कार्मणं किञ्चिदन्वहम् ॥ तया वशीकृतस्त्वं तु, न जानासि तदप्यहो ! ॥ ११५ ॥ अथ राज्ञा कथमिद–मित्युक्तास्ताः पुनर्जगुः ॥ यदि प्रत्येषि न तदा, त्वं निरूपय केनचित् ॥ ११६ ॥ सा हि स्थित्वापवरके, पिधाय द्वारमन्वहम् ॥ कृत्वा कुवेषं मध्याह्ने, किञ्चिन्मुणमुणायते ! ॥ ११७ ॥ तन्निशम्य नृपस्तत्र, गतस्तद्वीक्षितुं स्वयम् ॥ प्राग्वत्स्वनिन्दां कुर्वत्या–स्तस्याः शुश्राव तां गिरम् ॥ ११८ ॥ ततस्तुष्टो नृपोभ्यासी–दहो ! अस्याः शुभा मतिः ॥ अहो विवेकच्छेकत्व–महो मानापमाननम् ! ॥ ११९ ॥ मदोन्मत्ता भवन्त्यन्ये, स्वल्पायामपि सम्पदि ॥ असौ तु सम्पदुत्कर्षे, सम्प्राप्तापि न माद्यति ! ॥ १२० ॥ तदस्याः सन्ति सर्वेपि, गुणा एवेति निश्चितम् ॥ राज्यस्त्वेता गुणमपि, दोषं पश्यन्ति मत्सरात् ! ॥ १२१ ॥ उक्तञ्च—"जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवम् ॥ शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि ॥ तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे ॥ तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः ? ॥ १२२ ॥ ध्यात्वेति भूपतिस्तुष्टः, पट्टराज्ञीं चकार ताम् ॥ गुणैर्महत्वमाप्नोति, जनो न तु कुलादिभिः ॥ १२३ ॥ नृपो विमलचन्द्राख्य–सूरिपार्श्वे स चान्यदा ॥ समं कनकमञ्जर्या, श्राद्धधर्ममुपाददे ! ॥१२४॥ साथ चित्रकृतः पुत्री, क्रमान्मृत्वा दिवं ययौ ॥ अविराधितधर्माणः, सुरेष्वेव व्रजन्ति हि ॥ १२५ ॥ वैताढ्ये तोरणपुरे, दृढशक्तिमहीपतेः ॥ सुता कनकमालाख्या, जज्ञे स्वर्गाच्च्युता तु सा ॥ १२६ ॥ तां प्राप्तयौवनां प्रेक्ष्य, रूपाढ्यां मोहितोन्यदा ॥ हृत्वानैषीदिह गिरौ, खेचरो वासवाभिधः ॥ १२७ ॥ विद्यया विहिते सद्यः, प्रासादेस्मिन् विमुच्य ताम् ॥ स व्यधाद्वेदिकामेनां, यावदुद्वोढुमुद्यतः ॥ १२८ ॥ तावदत्रागतस्तस्या, अग्रजस्तां गवेषयन् ॥ योद्धुमाह्वास्त कनक–तेजास्तं खेचरं क्रुधा ॥ १२९ ॥ विद्या-

बलोर्जितौ युद्धं, कुर्वन्तौ तुल्यविक्रमौ ॥ तावन्योन्यप्रहारेण, सद्योभूतां यमातिथी ॥ १३० ॥ स्वं तद्विनाशकीनाशं, निन्दन्ती वीक्ष्य तौ मृतौ ॥ चिरं रुरोद कनक–माला भ्रातृशुचाकुला ॥ १३१ ॥ तदा चात्रागतो वान–मन्तराख्यः सुरोत्तमः ॥ वत्से ! त्वं मम पुत्रीति, प्रेम्णा यावदुवाच ताम् ॥ १३२ ॥ सुतामन्वेषयंस्ताव–द्दृढशक्तिरिहाययौ ॥ ततः कनकमालां द्राक्, शवरूपां सुरोकरोत् ॥ १३३ ॥ अथ तान् पतितान् पृथ्व्यां, स्वपुत्रीपुत्रवासवान् ॥ विपन्नान् वीक्ष्य संविग्नो, दृढशक्तिरचिन्तयत् ॥ १३४ ॥ वासवेन सुतो नूनं, जघ्ने तेन च वासवः ॥ सुता तु वासवेनैव, मार्यमाणेन मारिता ॥ १३५ ॥ तत्संसारेत्र दुःखाढ्ये, कृती को नाम रज्यते ? ॥ ध्यात्वेति प्राव्रजद्विद्या–धरराजस्तदैव सः ॥ १३६ ॥ मायां हृत्वा ततो देवः, समं कनकमालया ॥ ननाम श्रमणं सोऽपि, किमेतदिति पृष्टवान् ? ॥ १३७ ॥ अथोक्ते भ्रातृपञ्चत्वो–दन्ते कनकमालया ॥ मया शवत्रयं दृष्टं, कथमित्यवदन्मुनिः ? ॥ १३८ ॥ सुरोथाचीकथन्माया, मयासौ तव दर्शिता ! ॥ मुनिः स्माह कुतो हेतो–र्माया मे दर्शिता त्वया ? ॥ १३९ ॥ देवोवादीत्तत्र हेतुं, दृढशक्तिमुने ! शृणु ॥ क्षितिप्रतिष्ठितपुरे, जज्ञे विजितशत्रुराट् ॥१४०॥ स च चित्रकृतः पुत्रीं, नाम्ना कनकमंजरीम् ॥ उपयेमेन्यदा सा च, परमश्राविकाभवत् ॥ १४१ ॥ तया पञ्चनमस्कारा–दिना नियामितो मृतः ॥ तत्पिता चित्रकृद्वान–मन्तराख्यः सुरोभवत् ॥ १४२ ॥ सोहमत्राधुनायातो–ऽपश्यं शोकाकुलामिमाम् ॥ उत्पन्नभूरिप्रेमा चो–पयोगमवधेरदाम् ॥१४३॥ असौ मे प्राग्भवसुते–त्यज्ञासिषमहं ततः ॥ त्वाञ्च तत्क्षणमायान्तं, निरीक्ष्यैवमचिन्तयम् ॥१४४॥ पित्रा सहासौ गंत्रीति, भावी मे विरहोनया ॥ ध्यात्वेत्यदर्शयमिमां, मायया ते शवोपमाम् ॥ १४५ ॥ त्वां च प्रव्रजितं प्रेक्ष्य, माया द्राक् संहृता मया ॥ तन्मे दुश्चेष्टितमिदं, सोढव्यं सुमुने ! त्वया ॥ १४६ ॥ धर्महेतुतया मे त्व–मुपकर्तासि तत्कुतः ? ॥ इत्यमात्थेति सञ्जल्पन्नु–त्पपात मुनिस्ततः ॥ १४७ ॥ तदा कनकमालापि, श्रुत्वा वृत्तान्तमात्मनः ॥ प्राप्ता जातिस्मृतिं सद्यो, ददर्श प्राग्भवं निजम् ॥ १४८ ॥ मत्पितायमिति प्रेम, सुरे सा तत्र बिभ्रती ॥ तात ! को मे वरो भावी–त्यप्राक्षीत्तं दिवौकसम् ॥ १४९ ॥ सुरोथावधिना ज्ञात्वा, प्रोचे प्राच्यस्तव प्रियः ॥ राजा विजितशत्रुः स, देवीभूय च्युतो दिवः ॥ १५० ॥ दृढसिंह महीनेतुः, सुतः सिंहरथाह्वयः ॥ जातोस्ति मेदिनीभर्ता, भर्त्ता भावी स ते सुते ! ॥ १५१ ॥ [ युग्मम् ] तत्सङ्गो मे कथमिह, भावीत्युक्तस्तया पुनः ? ॥ सुरोवादीदिहागन्ता, वाजिनापहृतो हि सः ॥ १५२ ॥ तदुद्वेगं विहाय त्व–मिह तिष्ठ यथासुखम् ॥ अहं त्वदादेशकारी, स्थास्यामि तव सन्निधौ ॥ १५३ ॥ इत्युक्त्वा सपरीवारः, प्रासादेऽस्थादिहामरः ॥ तस्थौ कनकमालापि, तदभ्यर्णे सुनिर्वृता ॥ १५४ ॥ स्वामिन् ! कनकमालां तां, मामवेहि गुणोदधे ! ॥ स देवस्तु ययौ मेरुं, चैत्यनत्यै गतेऽहनि ॥ १५५ ॥ ततस्त्वमपराह्णे म–त्पुण्याकृष्ट इहागमः ॥ मन्मनोनयनाम्भोज–विभासनविभाकरः ॥ १५६ ॥ मया तूत्कण्ठया ताता–गमं यावत्प्रतीक्षितुम् ॥ अशक्तया त्वया सार्कं, स्वयमात्मा विवाहितः ॥ १५७ ॥ एष स्वामिन् स्ववृत्तान्तो, मया तुभ्यं निवेदितः ॥ इति तद्वाक्यमाकर्ण्य, जातिं सस्मार पार्थिवः ॥ १५८ ॥ अत्रान्तरे सुरवधू–युतस्तत्रागतः सुरः ॥ प्रणेमे भूभुजा सोपि, तमुच्चैरभ्यनन्दयत् ॥ १५९ ॥ ततो विवाहवृत्तान्ते, प्रोक्ते कनकमालया ॥ अत्यर्थं मुदितो देव–श्चिरं भूपमवार्तयत् ॥ १६० ॥ दिव्यं भोज्यं च मध्याह्ने, सभार्यो बुभुजे नृपः ॥ इत्थं स्थित्वा मासमेकं, सोन्यदेत्यवदत्प्रियाम् ॥ १६१ ॥ अरक्षकं भोज्यमिव, द्विका राज्यं मम द्विपः ॥ उपद्रोष्यन्ति तद्गन्तु–मनुमन्यस्व मां प्रिये ! ॥ १६२ ॥ सावदत्त्वत्पुरं दूरे, पादचारेण तत्कथम् ॥ इतो यास्यसि तत्र त्वं, ततो वात्रागमिष्यसि ? ॥ १६३ ॥ तत्प्रज्ञप्तीं महाविद्यां, गृहाण त्वं मदन्तिकात् ॥ ततो राजा गृहीत्वा तां, विधिपूर्वमसाधयत् ॥ १६४ ॥ अगाच्च व्योममार्गेण, प्रियां पृष्ट्वा निजं पुरम् ॥ लोकैः पृष्टश्च सकलं, यथावृत्तमचीकथत् ॥ १६५ ॥ ततः कृतोत्सवाः पौराः, प्रोचुरेवं सविस्मयाः ॥ अहो ! भूमीविभोर्भाग्या–भ्युदयो भुवनाद्भुतः ॥ १६६ ॥ सम्पदामास्पदेप्यन्ये, विन्दन्ति विपदं विशः ॥ असौ तु भाग्यवान् व्याप–दास्पदेप्याप सम्पदम् ॥ १६७ ॥ भूप्रियस्तु प्रियां ध्यायन्, पञ्चमेह्नि ययौ नगम् ॥ दिनानि कतिचित्तत्र, स्थित्वायासीत्पुनः पुरे ॥ १६८ ॥ एवं मुहुर्मुहुः शैले, व्रजन्तं तं नृपं प्रजाः ॥ नगेस्मिन् गतिरस्येति, नाम्ना नग्गतिमूचिरे ॥ १६९ ॥ तं चान्यदा गतं तस्मि–न्नद्रावित्यवदत्सुरः ॥ आदेशं स्वप्रभोः कर्तुं, यास्याम्यहमितोधुना ॥ १७० ॥ यद्यप्येनां विहायाहं, क्वापि नो गन्तुमुत्सहे ॥ अनुलंघ्यां प्रभोराज्ञां, तथाप्युल्लंघये कथम् ॥ १७१ ॥ कालक्षेपश्च मे भूयान्, भविता तत्र भूपते ! ॥ इतः स्थानाच्च नान्यत्र, सुता मे लप्स्यते रतिम् ॥ १७२ ॥ तद्यथैकाकिनी न स्या–दसौ

कार्यं तथा त्वया ॥ मद्वियोगेन्यथा दुःख–मस्या भूरि भविष्यति ॥ १७३ ॥ इत्युदीर्य गते देवे, तस्या धृतिकृते नृपः ॥ अकारयन्नगे तत्र, नगरं नव्यमुत्तमम् ॥ १७४ ॥ प्रलोभ्य लोकांश्चानेकान्, पुरे तत्र न्यवासयत् ॥ चैत्यान्यचीकरत्तेषु, जिनार्चाश्च न्यवीविशत् ॥ १७५ ॥ ग्रामान् सहस्रशस्तत्रा–रण्ये चावासयन्नृपः ॥ तच राज्यद्वयं सम्यक्, शशासोदग्रशासनः ॥ १७६ ॥ न्यायेन पालयन् राज्यं, क्रीडन् कनकमालया ॥ जिनांश्च पूजयन्नित्यं, स त्रिवर्गमसाधयत् ॥ १७७ ॥ सोथ कार्तिकराकाया–मन्यदा सैन्यसंयुतः ॥ नरेन्द्रो नगराद्राज–पाटिकायै विनिर्ययौ ॥ १७८ ॥ तदा च पल्लवाताम्रं, मञ्जरीपुञ्जपिञ्जरम् ॥ माकन्दमेकमद्राक्षी–च्छत्राकारं सदाफलम् ॥ १७९ ॥ चूतस्य तस्य कान्तस्य. मङ्गलार्थमिलापतिः ॥ आददे मञ्जरीमेकां, शेषामिव सुधाभुजः ॥ १८० ॥ सैन्यलोकास्ततः सर्वे, पत्रपल्लवमञ्जरीः ॥ आदाय दारुशेषं तं, सहकारं वितेनिरे ॥ १८१ ॥ गत्वारामं निवृत्तोथ, तत्रायातः क्षणान्तरे ॥ आम्रः कम्रः स कुत्रेति, राजा पप्रच्छ मंत्रिणम् ॥ १८२ ॥ मंत्रिणा च तरौ तस्मिन्, काष्ठशेषे प्रदर्शिते ॥ ईदृशोसौ कथमभू–दित्यपृच्छत् पुनर्नृपः ॥ १८३ ॥ उवाच सचिवो वाचं, स्वामिन्नस्य महातरोः ॥ जगृहे मञ्जरी पूर्व–मेका युष्माभिरुत्तमा ॥ १८४ ॥ इत्यमुं सैनिकाः सर्वे, पत्रपुष्पफलादिकम् ॥ गृहीत्वा चक्रुरश्रीकं, धनिनं तस्करा इव ॥ १८५ ॥ तदाकर्ण्य नृपो दध्यौ, चञ्चलत्वमहो ! श्रियाम् ॥ यत्तादृशोप्यसौ चूतः, क्षणान्निःश्रीकतां ययौ ! ॥ १८६ ॥ यदेव तुष्टिकृत्पूर्वं, स्यात्तदेव क्षणान्तरे ॥ जायतेऽनीदृशं वान्ति–समये भोजनं यथा ! ॥ १८७ ॥ यथा हि बुद्बुदाटोप', सन्ध्यारागश्च न स्थिरः ॥ सम्पदोपि तथा सर्वा, न स्थिरा इति निश्चितम् ॥ १८८ ॥ यस्तु मोहेन जानाति, बालिशः सम्पदं स्थिराम् ॥ शाश्वती मन्यते मन्दः, स हि सौदामिनीमपि ॥ १८९ ॥ ततो दुष्कर्मतामिस्र–तमिस्राकल्पयानया ॥ आयतौ दुःखदायिन्या, कृतं मे राज्यसम्पदा ॥ १९० ॥ एवं विमृश्याहृतसाधुधर्मः, प्रत्येकबुद्धश्चतुरश्चतुर्थः ॥ गान्धारराड् नग्गतिनामधेयः, पृथ्व्यां व्यहार्षीत्सुरदत्तवेषः ॥ १९१ ॥ इति नग्गतिनृपकथा ॥ ४ ॥ ततश्च—

राज्येषु न्यस्य पुत्रांस्ते, चत्वारोप्यात्तव्रताः ॥ क्षितिप्रतिष्ठितपुरे, विहरन्तोन्यदा ययुः ॥ १ ॥ तत्र चाभूच्चतुर्द्वार–मेकं यक्षनिकेतनम् ॥ तस्मिंश्च व्यन्तरो मूर्त्ति–स्थितः पूर्वामुखोभवत् ॥ २ ॥ करकण्डुमुनिस्तत्र, पूर्वद्वारा प्रविष्टवान् ॥ अपाचीसंमुखद्वारा, द्विमुखश्च महामुनिः ॥ ३ ॥ पराङ्मुखः कथं साधो–स्तिष्ठामीति विचिन्तयन् ॥ तदापरं व्यधाद्यक्षो, दक्षिणाभिमुखं मुखम् ॥ ४ ॥ नमिस्तु पश्चिमद्वारा, प्राविशद्यक्षमन्दिरे ॥ ततोपि वदनं प्राग्व–त्तृतीयमकरोत्सुरः ॥ ५ ॥ नग्गतिस्त्वविशत्तत्रो–त्तरद्वारा गुणोत्तरः ॥ यक्षश्चक्रे ततोप्यास्यं, ततश्चाभूच्चतुर्मुखः ॥ ६ ॥ करकण्डोस्तु सा रूक्ष–कण्डूर्देहे तदाऽभ्यभूत् ॥ ततः स कण्डूयनकं, लात्वाऽकण्डूयत श्रुतिम् ॥ ७ ॥ तेन सङ्गोप्यमानं च, तद्वीक्ष्य द्विमुखोऽब्रवीत् ॥ त्यक्तं राज्यादि चेत्सर्वं, तदादः सञ्चिनोपि किम् ? ॥ ८ ॥ तेनेत्युक्तोपि नो किञ्चित्, करकण्डुर्यदावदत् ॥ तदा द्विमुखराजर्षि, नमिसाधुरदोभ्यधात् ॥ ९ ॥ त्यक्तराज्यादिकार्योपि, निर्ग्रन्थोपि भवान् स्वयम् ॥ करोति कार्यं चेदन्य–दोषप्रेक्षणलक्षणम् ॥ १० ॥ किमर्थं तर्हि राज्यस्थो–धिकृतान् कृतवान् भवान् ॥ परापराधवीक्षायै, क्रियन्ते हि नियोगिनः ॥ ११ ॥ इदानीं तु नियोगित्वं, निःसङ्गस्योचितं न ते ॥ तच्छ्रुत्वा नमिमित्यूचे, नग्गतिर्गतदुर्गतिः ॥ १२ ॥ यदि सर्वं विहाय त्वं, मोक्षायोद्यच्छसे मुने ! ॥ तदा किमर्थमन्यस्य, निन्दां वितनुषे वृथा ? ॥ १३ ॥ करकण्डुरथाचख्यौ, मोक्षाकांक्षिषु भिक्षुषु ॥ वारयन्नहितं साधु–र्निन्दकः कथ्यते कथम् ? ॥ १४ ॥ या रोषात्परदोषोक्तिः, सा निन्दा खलु कथ्यते ॥ सा तु कस्यापि नो कार्या, मोक्षमार्गानुसारिभिः ॥ १५ ॥ हितबुद्ध्या तु या शिक्षा, सा निन्दा नाभिधीयते ॥ अत एव च सान्यस्य, कुप्यतोपि प्रदीयते ॥ १६ ॥ यदार्षे–"रूसऊ वा परो मा वा विसं वा परिअत्तउ ॥ भासिअव्वा हिआ भासा सपक्खगुणकारिआ ॥ १७ ॥" अनुशिष्टिमिमां शिष्टा–मुदितां करकण्डुना ॥ ते त्रयोप्युररीचक्रु–र्विजहुश्च यथारुचि ॥ १८ ॥ पुष्पोत्तरविमानात्ते, चत्वारोपि सहच्युताः ॥ सहोपात्तव्रता मोक्षं, सहैवासादयन् क्रमात् ॥ १९ ॥ इति प्रत्येकबुद्धानां, चतुर्णां शमशालिनाम् ॥ सम्प्रदायानुसारेण, चरितं परिकीर्तितम् ॥ २० ॥ कल्याणकारि नरकारि विकारहारि, प्रत्येकबुद्धचरितं दुरितापहारि ॥ इत्थं निशम्य शमशाखिघनानुकारि, भव्या भजन्तु सुकृतं भुवनोपकारि ॥ २१ ॥ इति समाप्ता प्रसङ्गागता प्रत्येकबुद्धवक्तव्यता ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ नवमाध्ययनं सम्पूर्णम् ॥ ९ ॥

## ॥ अथ दशमाध्ययनम् ॥

॥ अर्हम् ॥ व्याख्यातं नवमाध्ययनं, सम्प्रति द्रुमपत्रकाख्यं दशममारभ्यते, अस्य चायं सम्बन्धः, इहानन्तराध्ययने धर्मं प्रति निष्कम्पत्वमुक्तं, तच्चानुशासनादेव स्यादिति अनुशासनाभिधायकमिदमारभ्यते, अनेन सम्बन्धेनायातस्यास्याध्ययनस्य प्रस्तावनार्थं गौतमं प्रति श्रीमहावीरेणेदमुक्तमिति इहोपयोगिनी गौतमवक्तव्यता तावत्काचिदुच्यते। तथा हि—

अत्राभूद्भरतक्षेत्रे, स्वर्लक्ष्मीनिर्जितालका ॥ समग्रनगरीप्रष्ठा, पृष्ठचम्पाभिधा पुरी ॥ १ ॥ तस्यां सालमहासाल—नामानौ सोदरावुभौ ॥ राजराजिगुणौ राज—युवराजौ बभूवतुः ॥ २ ॥ जामिर्यशोमती संज्ञा, पिठरो भगिनीपतिः ॥ गागिलिर्भागिनेयश्चा—मेयबुद्धिस्तयोरभूत् ॥ ३ ॥ तस्याञ्च पुर्यामन्येद्यु—र्विहरन् जगदीश्वरः ॥ श्रीवीरः समवासार्षी—द्भव्याम्भोजनभोमणिः ॥ ४ ॥ ततः सालमहासालौ, सार्वं वन्दितुमुद्यतौ ॥ महर्द्ध्या जग्मतुः प्राज्य—प्रमोदभरमेदुरौ ॥ ५ ॥ जिनं नत्वा च सद्भक्त्या यथास्थानं न्यषीदताम् ॥ सर्वज्ञोपि जगौ धर्मं, संसाराम्भोधितारकम् ॥ ६ ॥ तमाकर्ण्य विरक्तात्मा, जिनं नत्वा गृहं गतः ॥ राज्यमेतद्गृहाणेति, सालः सोदरमब्रवीत् ॥ ७ ॥ सोप्यवादीन्मम राज्येन, कृतं दुर्गतिदायिना ॥ प्रव्रजिष्याम्यहमपि, भवोद्विग्नस्त्वया समम् ॥ ८ ॥ जामेयं गागिलिं राज्ये स्थापयित्वा महोत्सवैः ॥ ततः सालमहासालौ, प्राव्राजिष्टां जिनान्तिके ॥ ९ ॥ विहरन्तौ च तौ नित्यं, श्रीवीरस्वामिना समम् ॥ एकादशाङ्गीमन्यूनां, पेठतुः शुद्धधीनिधी ॥ १० ॥ अन्यदा प्रस्थितं चम्पां, प्रति राजगृहात् पुरात् ॥ प्रभुं सालमहासालौ, प्रणिपत्येत्यवोचताम् ॥ ११ ॥ नगर्यां पृष्ठचम्पायां, प्रतिबोधयितुं निजान् ॥ स्वामिन्नावां यियासावो, यद्यनुज्ञां प्रयच्छसि ॥ १२ ॥ अमूढलक्ष्यो भगवां—स्ततस्तौ गौतमान्वितौ ॥ आदिशत्तां पुरीं गन्तुं, तेपि तत्र ययुः क्रमात् ॥ १३ ॥ तत्र काञ्चनपाथोजे, निविष्टो नाकिनिर्मिते ॥ श्रीगौतमश्चतुर्ज्ञानी, प्रारेभे धर्मदेशनाम् ॥ १४ ॥ श्रुत्वा गागलिभूपोपि, तमायातं समातुलं ॥ यशोमतीपिठरयुग्, ययौ वन्दितुमुत्सुकः ॥ १५ ॥ हर्षोत्कर्षोल्लसद्रोम—हर्षो नत्वाथ तान्नृपः ॥ उपविश्य यथास्थान—मश्रौषीद्धर्मदेशनाम् ॥ १६ ॥ संसारासारतामारां, ताञ्चाकर्ण्य विरक्तधीः ॥ गागलिर्नगरीं गत्वा—ऽऽत्मजं राज्ये न्यवीविशत् ॥ १७ ॥ पितृभ्यां सहितः प्राज्य—रुत्सवैश्चाददे व्रतम् ॥ गौतमस्वामिपादान्ते, दान्तात्मा मेदिनीपतिः ॥ १८ ॥ ततः सालमहासाल—गागल्यादिभिरन्वितः ॥ गणी गन्तुं जिनाभ्यर्णे—ऽचलच्चम्पापुरीं प्रति ॥ १९ ॥ तदा सालमहासाला—वित्यचिन्तयतां मुदा ॥ यद्भवात्तारितान्येता— न्येतद्भव्यमभूद्भृशम् ॥ २० ॥ तदा च दध्युरित्यन्त—र्गागल्याद्या अपि त्रयः ॥ अहो! सालमहासाला—वस्माकमुपकारिणौ ॥ २१ ॥ एताभ्यां हि वयं पूर्वं, राज्यश्रीभाजनीकृताः ॥ इदानीं तु महानन्द—प्रापकं प्रापितुं व्रतम् ॥ २२ ॥ इत्यादिध्यानदावाग्नि—ध्वस्तकल्मषभूरुहः ॥ मुक्तिमन्दिरनिश्रेणिं, क्षपकश्रेणिमाश्रिताः ॥ २३ ॥ मोहमत्तेभपञ्चत्व—पञ्चास्या मार्ग एव ते ॥ चञ्चत्प्रपञ्चं पञ्चापि, पञ्चमज्ञानमासदन्! ॥ २४ ॥ [ युग्मम् ] जिनाभ्यर्णं गतास्तेथ, गौतमस्वामिना समम् ॥ प्रदक्षिणीकृत्य जिनं, जग्मुः केवलिपर्षदि ॥ २५ ॥ ततस्तान् गौतमः प्रोचे—ऽनभिज्ञा इव भोः! कथम्? ॥ यूयं यात समायात, वन्दध्वं भुवनप्रभुम् ॥ २६ ॥ जिनान्माऽऽशातयेत्युक्तः, श्रीवीरेणाथ गौतमः ॥ तत्क्षणं क्षमयित्वा ता—निति दध्यौ निजे हृदि ॥ २७ ॥ दुर्भगं हरिणाक्षीव, भजतेद्यापि मां न हि ॥ केवलज्ञानलक्ष्मीस्त—त्किं सेत्स्यामि नवाथवा? ॥ २८ ॥ इति चिन्तयतः श्रीम—दिन्द्रभूतिगणेशितुः ॥ असौ सुराणां संलापः, कर्णजाहमगाहत ॥ २९ ॥ जिनेनाद्योदितं यो हि, जिनान्नमति भूचरः ॥ स्वलब्ध्याष्टापदं गत्वा, स हि तद्भवसिद्धिकः ॥ ३० ॥ इति देववचः श्रुत्वा—ऽष्टापदं गन्तुमुद्यतः ॥ पप्रच्छ गौतमः सार्व—सार्वभौमं कृताञ्जलिः ॥ ३१ ॥ ततस्तापसबोधाय, तस्य स्थैर्याय च प्रभुः ॥ तत्र गन्तुं तमादिक्ष—दमोघाज्ञा हि पारगाः ॥ ३२ ॥ निधानं सर्वलब्धीनां, ततः श्रीगौतमप्रभुः ॥ भक्त्याभिवन्द्य तीर्थेशं, प्रतस्थेष्टापदं प्रति ॥ ३३ ॥

इतश्च कोडिन्नदिन्न—सेवालास्तापसास्त्रयः ॥ तापसानां पञ्चशत्या, प्रत्येकं परिवारिताः ॥ ३४ ॥ मुक्तिरष्टापदारोहा—द्भिशामीति विभोर्वचः ॥ श्रुत्वा जनाननात्पूर्वं, प्रस्थिताः सन्ति तं प्रति ॥ ३५ ॥ [ युग्मम् ] उपवासानन्तरमेषु, प्रथमः सपरिच्छदः ॥ कन्दादिभोजनो भेजे, तस्याद्रेरादिमेखलाम् ॥ ३६ ॥ षष्ठकारी द्वितीयस्तु, पक्वपत्रादि-

भोजनः ॥ द्वितीयां मेखलां प्राप, सतंत्रस्तस्य भूभृतः ॥ ३७ ॥ तृतीयस्त्वष्टमतपाः, शुष्कशेवालपारणः ॥ तस्याग्रे सपरीवार-स्तृतीयां प्राप मेखलाम् ॥ ३८ ॥ न तु कोपि गिरेस्तस्य, क्लिश्यमानोप्यगाच्छिरः ॥ गम्यं गरुत्मतो मेरु-शृङ्गं किं यान्ति केकिनः ? ॥ ३९ ॥ अथ ते तापसाः सर्वे, स्वतेजोविजितारुणम् ॥ आयान्तं गौतमं प्रेक्ष्या-चिन्तयन्निति विस्मिताः ! ॥ ४० ॥ तपःकृशाङ्गा अपि नो, यत्रारोढुं क्षमा वयम् ॥ गरिष्ठकायस्तत्राय-मारोक्ष्यति कथं यतिः ? ॥ ४१ ॥ उच्चैर्मुखेषु तेष्वेवं, चिन्तयत्स्वेव गौतमः ॥ जङ्घाचारणलब्ध्यार्क-रश्मीनालम्ब्य सञ्चरन् ॥ ४२ ॥ तूर्णं तेषामुपर्यागा-त्क्षणाच्चागादहश्यताम् ॥ जवनैः पवनैः प्रेर्य-माणो मेघ इवोच्चकैः ॥ ४३ ॥ [ युग्मम् ] तापसास्ते तु तं प्रोच्चैः, प्रशंसन्तो व्यचिन्तयन् ॥ अस्य शिष्या भविष्यामो-ऽमुष्मादुत्तरतो गिरेः ॥ ४४ ॥ गौतमस्तु गतः शैल-मौलौ भरतकारितम् ॥ हृतावसादं प्रासादं, दर्शनीयं ददर्श तम् ॥ ४५ ॥ मानवर्णान्वितानादि-जिनादीन् स्थापनाजिनान् ॥ ननाम नित्यप्रतिमा-प्रतिमांस्तत्र च प्रभुः ॥ ४६ ॥ साक्षादिव जिनांस्तांश्च, दर्शं दर्शं प्रमोदभाक् ॥ सन्तुष्टावातिसन्तुष्ट-चेता इति गणाधिपः ॥ ४७ ॥ "जगचिंतामणि जगनाह जगगुरु जगरक्खण, जगबंधव जगसत्थवाह जगभावविअक्खण ॥ अट्ठावयसंठविअरूव कम्मट्ठ विणासण, चउवीसं वि जिणवर जयंतु अप्पडिहयसासण ॥ ४८ ॥ इति स्तुत्वा च नत्वा च, चैत्यान्निर्गत्य गौतमः ॥ उवास रात्रिवासाया-ऽशोकोऽशोकतरोस्तले ॥ ४९ ॥

१ शाश्वतप्रतिमातुल्यान् ॥

इतश्च धनदः शक्र-दिक्पालो नन्तुमर्हतः ॥ तत्रायातो जिनान्नत्वा, ववन्दे गणिनं मुदा ॥ ५० ॥ देशनायां गणेशोपि, तत्वत्रयनिरूपणे ॥ इति साधुगुणानूचे, गुरुतत्वं प्ररूपयन् ॥ ५१ ॥ "महाव्रतधरास्तीव्र-तपः शोषितविग्रहाः ॥ अन्तप्रान्ताशनास्तुल्य-शत्रुमित्रा जितेन्द्रियाः ॥ ५२ ॥ निष्कषाया महात्मानः, साधवो गुरवः स्मृताः ॥ तारयन्ति परं ये हि, तरन्तः पोतवत्स्वयम् ! ॥ ५३ ॥ [ युग्मम् ]" तच्छ्रुत्वा गणिगात्रं च, वीक्ष्यातिमृदु पीवरम् ॥ श्रीदो दध्यौ विसंवादि, वचोस्य स्ववपुष्यपि ॥ ५४ ॥ अन्तप्रान्ताशनत्वे हि, नेदृक् स्यादङ्गसौष्ठवम् ॥ इति वैश्रमणः किञ्चि-ज्जहास विकसन्मुखः ! ॥ ५५ ॥ ततो ज्ञात्वा तदाकूतं, चतुर्ज्ञानी जगौ प्रभुः ॥ ध्यानमेव प्रमाणं स्यात्, तनुत्वं न तनो पुनः ॥ ५६ ॥ अस्य संशयपङ्कस्य, क्षालनाय जलोपमम् ॥ श्रीपुण्डरीकाध्ययनं, शृणु वित्तेश ! तद्यथा ॥ ५७ ॥ विजये पुष्कलावत्यां, विदेहावनिमण्डने ॥ नगर्यां पुण्डरीकिण्यां, महापद्मनृपोभवत् ॥ ५८ ॥ तस्य पद्मावतीराज्ञी-कुक्षिजौ सुन्दराकृती ॥ पुण्डरीककण्डरीका-भिधौ पुत्रौ बभूवतुः ॥ ५९ ॥ तस्यां नगर्यामन्येद्युः, स्थविराः समवासरन् ॥ उद्याने नलिनवने, त्रिदशा इव नन्दने ॥ ६० ॥ तान् प्रणम्य महापद्मः, श्रुत्वा धर्मं विरक्तधी. ॥ गत्वा पुर्यां पुण्डरीकं, न्यधाद्राज्ये महामहैः ॥ ६१ ॥ कण्डरीकञ्च संस्थाप्य, यौवराज्येग्रहीद्व्रतम् ॥ पुण्डरीकमहाराज-कृतदीक्षामहो नृपः ॥ ६२ ॥ अधीत्य सर्वपूर्वाणि, क्रमात्सम्प्राप्तकेवलः ॥ मासिकानशनेनागा-त्स राजर्षिः पर पदम् ॥ ६३ ॥ अथान्येद्यु पावयन्तो, धरां चरणरेणुभिः ॥ त एव स्थविरास्तत्र, भूयोपि समवासरन् ॥६४॥ तांश्च श्रुत्वाऽऽगतान् हृष्टः, पुण्डरीकः प्रणम्य च ॥ निशम्य देशनां सम्यक्, श्राद्धधर्ममुपाददे ॥ ६५ ॥ कण्डरीकोपि तान्नत्वा, श्रुत्वा धर्ममदोवदत् ॥ आदास्येहं भवोद्विग्नः, प्रव्रज्यां युष्मदन्तिके ॥ ६६ ॥ तद्यावद्भूपमापृच्छया-गच्छाम्यहमिह प्रभो ! ॥ तावत्पूज्यैरिह स्थेयं, कुर्वाणैर्मय्यनुग्रहम् ॥ ६७ ॥ प्रतिबन्धं मा कृथास्त्व-मित्युक्तो गुरुभिस्ततः ॥ कण्डरीको द्रुतं गत्वा, पुर्यामित्यग्रजं जगौ ॥ ६८ ॥ मया गुरोर्जिनवचो, लब्धमब्धेरिवामृतम् ॥ आरोग्यमिव वैराग्यं, तत्प्रभावान्ममाभवत् ॥ ६९ ॥ तद्युष्माभिरनुज्ञातो, व्रतमादातुमुत्सहे ॥ नृजन्म हारयेत्को हि, प्रमादेन द्युरत्नवत् ? ॥ ७० ॥ पुण्डरीकोऽब्रवीन्मास्मा-धुनाकार्षीर्व्रतग्रहम् ॥ राज्यं ददामि ते भुंक्ष्व, भोगान् गृह्णाम्यहं व्रतम् ॥ ७१ ॥ कण्डरीकोभ्यधाद्भोगै, राज्येन च कृतं मम ॥ व्रतमेव हि मेभीष्टं, बुभुक्षोरिव भोजनम् ॥७२॥ पुण्डरीकोवदद्वत्स !, साधुधर्मोतिदुष्करः ॥ त्याज्यानि व्रतिनां पाप-स्थानान्यष्टादश ध्रुवम् ॥ ७३ ॥ ब्रह्मव्रतं च धर्तव्यं, दुर्धरं सुरशैलवत् ॥ मनो नियेयं सन्तोषे, विधेयं च गुरोर्वचः ॥ ७४ ॥ बाहुभ्यां वार्द्धितरण-मिव तद्दुष्करं व्रतम् ॥ त्वञ्चातिसुकुमारोसि, शीतोष्णादिव्यथासहः ॥ ७५ ॥ दीक्षादानं ततो वत्स !, साम्प्रतं साम्प्रतं न ते ॥ भुक्तभोगो व्रताभोग-मङ्गीकुर्या यथासुखम् ॥ ७६ ॥ कण्डरीकोलपत् क्लीव-नराणां दुष्करं व्रतम् ॥ परलोकार्थिनां धीर-पुंसां तन्नैव दुष्करम् ॥ ७७ ॥ तन्मे दत्त व्रतानुज्ञां, द्रुतमित्यनुजो वदन् ॥ भूभुजा व्रतमादातुं, कथमप्यन्वमन्यत ॥ ७८ ॥ कण्डकरीकस्ततः प्राज्यै-रुत्सवैर्व्रतमाददे ॥ अधीत्यैकादशाङ्गानि, तपस्तेपे च दुस्तपम् ॥ ७९ ॥

अथान्यदा तस्य तना–वन्तप्रान्ताशनादिभिः ॥ दाहज्वरादयो रोगा, बभूवुरतिदुःसहाः ॥ ८० ॥ अनाचारैर्यश इवा–मयैः पीडामयैश्च तैः ॥ तत्तनुस्तनुतां भेजे, वैवर्ण्यं चाह्नि चन्द्रवत् ॥ ८१ ॥ पुनरप्यन्यदा तत्र, कण्डरीकेण संयुताः ॥ त एवाब्दसहस्रेण, स्थविराः समवासरन् ॥ ८२ ॥ तान्निशम्यागतो भूपो, नत्वा शुश्राव देशनाम् ॥ कण्डरीकं नमन् भूरि–रोगं तद्वपुरैक्षत ॥ ८३ ॥ राजाथ स्थविरानूचे, प्रासुकैर्भेषजादिभिः ॥ चिकित्सां कारयिष्यामि, कण्डरीकमहामुनेः ॥ ८४ ॥ तद्यूयं मे यानशाला–मलङ्कुरुत सूरयः ! ॥ इत्युक्ता भूभृता तेपि, तत्र गत्वावतस्थिरे ॥ ८५ ॥ चिकित्सका नृपादिष्टा, विविधैरौषधादिभिः ॥ कण्डरीकं क्रमाच्चक्रु–र्निरामयकलेवरम् ॥ ८६ ॥ ततो भूजानिमापृच्छ्य, स्थविरा व्यहरंस्ततः ॥ श्रमणानां हि नैकत्र, स्थितिरायतिशोभना ॥ ८७ ॥ कण्डरीकस्तु नाचाली–द्राजभोज्येषु गृद्धिमान् ॥ जिह्वेन्द्रियं हि जीवानां, मनोवद्दुर्जयं स्मृतम् ॥ ८८ ॥ तच्च ज्ञात्वा पुण्डरीक–स्तत्रागत्यानमच्छिराः ॥ तं त्रिःप्रदक्षिणीकृत्या–वादीदेवं कृताञ्जलिः ॥ ८९ ॥ धन्यस्त्वं कृतकृत्यस्त्वं, त्वया सफलितं जनुः ॥ सन्त्यज्य राज्यभार्यादि, सर्वं यत्स्वीकृतं व्रतम् ! ॥ ९० ॥ अहं त्वधन्यो निःसारं, भूरिदुःखजलार्णवम् ॥ रिपुतस्करदायादा–धीनं विद्युल्लताचलम् ॥ ९१ ॥ विपाककटुकानित्यं, विषयास्वादसुन्दरम् ॥ अप्यवश्यं परित्याज्यं, राज्यं न त्यक्तुमीश्वरः ॥ ९२ ॥ [ युग्मम् ] इत्येकशो नृपेणोक्तः, स मुनिर्मौनमाश्रयत् ॥ द्विस्त्रिरुक्तस्तु मन्दाक्ष–विलक्षो व्यहरत्ततः ॥ ९३ ॥ किञ्चित्कालं व्यहार्षीच्च, गुरुभिः सममुन्मनाः ॥ दुरावेश इवासाध्यः, प्राणिनां हि दुराशयः ॥ ९४ ॥ अन्यदा तु व्रतोद्विग्नः, परिभ्रष्टशुभाशयः ॥ कण्डरीको गुरून् मुक्त्वा, जगाम नगरीं निजाम् ॥ ९५ ॥ तत्र भूपगृहोपान्त–स्थितोशोकतरोरधः ॥ न्यपीदद्धृतसर्वस्व, इव चिन्ताशताकुलः ॥ ९६ ॥ तदा च पुण्डरीकस्य, धात्री तत्र समागता ॥ शोकाम्भोनिधिमग्नं तं, दृष्ट्वा राज्ञे न्यवेदयत् ॥९७॥ ततो गुणोपि दोषाय, जात इत्यवधारयन् ॥ सान्तःपुरपरीवारो, भूपस्तत्राययौ द्रुतम् ॥ ९८ ॥ तं त्रिःप्रदक्षिणीकृत्य, नत्वा चोवाच पूर्ववत् ॥ सत्वधान्मौनमेवैकं, दुष्टग्रहगृहीतवत् ॥ ९९ ॥ भूयो भूयोभ्यधात्को हि, हित्वा स्वर्नरकं श्रयेत् ॥ काचखण्डमुपादत्ते, को वा त्यक्त्वा मरुन्मणिम् ? ॥ १०० ॥ प्राज्यं साम्राज्यमुत्सृज्य, को वा वाञ्छति निःस्वताम् ॥ को वा मुक्त्वा व्रतं भोगान्, कांक्षति क्षणभङ्गुरान् ॥ १०१ ॥ सत्यप्येवं यदि स्यात्ते, भोगेच्छा तर्हि कथ्यताम् ॥ ददात्यनुचितं वस्तु, प्रार्थनामन्तरा हि कः ? ॥ १०२ ॥ भोगवाञ्छा ममास्तीति, हित्वा व्रीडां व्रती जगौ ॥ ततस्तस्मै नृपो राज्यं, पापभारमिवार्पयत् ॥ १०३ ॥ लोचं कृत्वा चतुर्यामं, धर्मं च प्रतिपद्य सः ॥ कण्डरीकात्साधु लिङ्गं, सुखपिण्डमिवाददे ॥ १०४ ॥ गुरूपान्ते परिव्रज्य, भोक्ष्येहमिति निश्चयी ॥ सोचालीद्दिशमुद्दिश्य, तत्पादाम्भोजपाविताम् ॥ १०५ ॥ कण्डरीकस्तु तत्रैव, दिने सुबहुभोजनम् ॥ चखादादृष्टकल्याण, इवोच्चैर्गृद्धिमुद्वहन् ॥ १०६ ॥ प्रणीतमतिमात्रं त–न्मन्दाग्नेस्तस्य भोजनम् ॥ अजीर्यमाणं विदधे, वेदनामतिदारुणाम् ॥ १०७ ॥ पापोयमिति नीरागैः, सचिवाद्यैरुपेक्षितः ॥ सोथ व्यथानदीपूरे, प्लवमानो व्यचिन्तयत् ॥ १०८ ॥ सम्प्राप्तव्यसनं नाथ–मुपेक्षन्तेत्र ये जडाः ॥ विपक्षेभ्योतिरिच्यन्ते, सेवका अपि ते ध्रुवम् ॥ १०९ ॥ ततोहं यदि जीवामि, तदोपेक्षाविधायिनः ॥ सपुत्रपौत्रान् मंत्र्यादीन्, घातयाम्यखिलानपि ! ॥ ११० ॥ रौद्रध्यानमिति ध्यायन्, क्रूरस्तन्दुलमत्स्यवत् ॥ राज्यादौ मूर्च्छितो बाढ, जम्बाल इव शूकरः ॥ १११ ॥ सोभूद्विपद्य ज्येष्ठायु–र्नारकः सप्तमावनौ ॥ अन्ते हि यादृशी बुद्धि–स्तादृश्येव गतिर्भवेत् ॥ ११२ ॥

पुण्डरीकोथ सम्प्राप्य, गुरून् धर्मं प्रपद्य च ॥ शीतरूक्षाद्यसाहारै–श्चकाराष्टमपारणम् ॥ ११३ ॥ तैश्चाहारैरभुक्तस्य, देहसन्देहकृद्व्यथा ॥ तथापि स्थैर्यमास्थाय, स राजर्षिरदोवदत् ॥ ११४ ॥ नमोर्हद्भ्यो भगवद्भ्यः, सम्प्राप्तेभ्यः परम्पदम् ॥ सिद्धेभ्यः स्थविरेभ्यश्च, साधुभ्यश्च नमो नमः ॥ ११५ ॥ गुरूपान्ते मया पूर्व–मुपात्तास्ति चतुर्व्रती ॥ इदानीमपि संसारा–र्णवनावं श्रयामि ताम् ॥ ११६ ॥ जिनादीनामदीनोहं, शरणं स्वीकरोमि च ॥ प्रान्ते चाभीष्टमप्येत–द्व्युत्सृजामि निजं वपुः ॥ ११७ ॥ कृतकृत्य इति प्राप्य, पञ्चत्वं स महामुनिः ॥ त्रयस्त्रिंशत्सागरायुः, सर्वार्थे त्रिदशोभवत् ॥ ११८ ॥ ततश्च्युत्वा विदेहेषु, प्राप्य नृत्व स सेत्स्यति ॥ स्वयंवरा भवेत्सिद्धिः, प्राणिनां हि सधर्मणाम् ॥ ११९ ॥ तस्मात्कृशत्वपीनत्वे, नो हेतू पुण्यपापयोः ॥ कारणे तु तयोः श्रीद !, ध्याने एव शुभाशुभे ॥ १२० ॥ कृशोपि पश्य दुर्ध्याना–त्कण्डरीको ययावधः ॥ पुष्टोपि पुण्डरीकस्तु, शुभध्यानात्सुरोभवत् ॥ १२१ ॥ अहो ! स्वामी ममाकूत–मज्ञासीदिति विस्मितः ॥ धनदो जातसंवेग–स्तं नत्वा स्वाश्रयं ययौ ॥ १२२ ॥ श्रीदसा-

मानिको वज्र-स्वामिजीवस्तदा मुदा ॥ सम्यक्त्वं प्राप तं चान्ये, भापन्ते जृम्भकामरम् ॥ १२३ ॥ स च पञ्चशती-मानं, तदध्ययनमग्रहीत् ॥ नत्वा च गणिनं पुण्या-शयः स्वाश्रयमाश्रयत् ॥ १२४ ॥ प्रभाते च गणी नत्वा, जिनेन्द्रानुत्तरन् गिरेः ॥ प्रोचे तैस्तापसैस्त्वं नो, गुरुः शिष्याश्च ते वयम् ॥ १२५ ॥ गौतमः स्माह युष्माक-मस्माकं च गुरुर्जिनः ॥ ते प्रोचुः किमु युष्माक-मप्यन्यो विद्यते गुरुः ? ॥ १२६ ॥ गणी जगाद सर्वज्ञ', सुरासुरनमस्कृतः ॥ जितरागो जयति मे, गुरुर्वीरो जगद्गुरुः ॥ १२७ ॥ तदाकर्ण्य प्रमुदिता-स्ते सर्वे तापसोत्तमाः ॥ देवार्पितयतिवेषाः, प्राव्रजन् गौतमान्तिके ॥ १२८ ॥ तैश्च सार्धं चलन् भिक्षा-काले जातेथ तान् गणी ॥ किं भोजनं युष्मदर्थमानयामीति पृष्टवान् ? ॥ १२९ ॥ प्राज्यैः पुण्यैर्गुरुरसौ, प्राप्तो वाञ्छितदायकः ॥ तदद्य हृद्यैरशनै-स्तर्पयामः क्षुधानलम् ! ॥१३०॥ इति ते मुदिताः सर्वे-प्यूचिरे त्वत्प्रसादतः ॥ परमात्मन् ! भवतु नः, परमान्नेन पारणम् ॥१३१॥ ततो गतो गणी पार्श्व-ग्रामे केनापि भक्तितः ॥ खण्डाज्यपायसैः प्राज्यैः, प्रासुकैः प्रत्यलम्भ्यत ॥ १३२ ॥ पतद्ग्रहस्तदापूर्ण-स्तत्पाणौ दिद्युते तदा ॥ पूर्णेन्दुरिव तद्वक्त्र-लीलां शिक्षितुमागतः ! ॥ १३३ ॥ अथायान्तं करस्थैकपात्रं तं प्रेक्ष्य साधवः ॥ इति ते चिन्तयन्नूनं, पश्चादेष्यति पायसम् ॥ १३४ ॥ इयता त्वमुना नो नो, भावीनि तिलकान्यपि ॥ यद्वाचिन्त्यप्रभावेस्मिन् , कृतं चिन्तनयानया ॥ १३५ ॥ प्रभुस्त्वागत्य त्रिधिव-त्परिपाट्या निवेश्य तान् ॥ अभोजयद्यथाकामं, पायसं परिवेषयन् ! ॥ १३६ ॥ अक्षीणमहानसया, लब्ध्या तत्पात्रसंस्थितम् ॥ नाक्षयत्पायसं ताव-दपि वार्द्धेरिवोदकम् ॥ १३७ ॥ एकोत्तरा पञ्चशती, तदा शैवालभक्षिणाम् ॥ इति दध्यावहो भाग्यमस्माक मुदितोदितम् ! ॥१३८॥ आश्चर्यं सर्वलब्धीना-मोषधीनामिवाद्रिराट् ॥ प्रवर्तकः सन्मार्गाणां, तटिनीनामिवाम्बुदः ॥ १३९ ॥ प्रशास्ता शस्त्रशास्त्राणां, दिग्देशानामिवार्यमा ॥ यशोभिश्च महोभिश्च, न्यक्कर्यंश्चन्द्रभास्करौ ॥ १४० ॥ सिद्धिपुर्याः सार्थवाहो, लोकोत्तरगुणाकरः ॥ यदयं मिलितः स्वामी, कृपारसमहोदधिः ॥ १४१ ॥ [ त्रिभिर्विशेषकम् ] किञ्च प्रसादादस्यैव, लब्धो बोधिः सुदुर्लभः ॥ जगच्चिन्तामणिः श्रीमान् , वीरस्वामी च नंस्यते ॥ १४२ ॥ तदिदानी भवाम्भोधि-रस्माभिस्तीर्ण एव हि ॥ व्याप्तो जन्मजरारोग-मरणादिजलोर्मिभिः ॥ १४३ ॥ इत्यादिध्यानमाहात्म्या-द्भुञ्जाना एव ते क्षणात् ॥ सौहित्यमिव सम्प्रापुः, केवलज्ञानमुज्ज्वलम् ॥ १४४ ॥ अथ सर्वेषु तृप्तेषु, गणेशो बुभुजे स्वयम् ॥ तान् विस्मितान् सहादाय, भूयोपि प्राचलत्पुरः ॥ १४५ ॥ क्रमात्समवसरण-समीपभुवमीयुषाम् ॥ दिन्नादीनां प्रातिहार्य-लक्ष्मीमास्य पश्यताम् ॥ १४६ ॥ एकोत्तरपञ्चशती-मितानां पष्ठकारिणाम् ॥ उत्पेदे केवलज्ञानं, पूर्वोक्तध्यानयोगतः ॥ १४७ ॥ [ युग्मम् ] तावतामेव कोडिन्न-प्रमुखानां तु तत्क्षणम् ॥ सर्वज्ञं पश्यतां जज्ञे, पञ्चमज्ञानसङ्गमः ॥ १४८ ॥ अथ प्रदक्षिणीचक्रे, तैर्वृतो गणभृज्जिनम् ॥ ग्रहव्रजैः परिवृतः, सुमेरुमिव चन्द्रमाः ॥ १४९ ॥ तांश्चैवमब्रवीद्वीक्ष्य, व्रजतो जिनपर्षदि ॥ भो भो ! यूयमिहायात, नमत त्रिजगद्गुरुम् ॥ १५० ॥ जिनान्माऽऽशातयेत्युक्त-स्ततो भगवता गणी ॥ मिथ्यादुष्कृतपूर्वं तान् , क्षमयित्वेत्यचिन्तयत् ॥ १५१ ॥ गुरुकर्मा ह्यहं नास्मिन् , भवे प्राप्स्यामि निर्वृतिम् ॥ अमी मद्दीक्षिता धन्या-स्तत्कालोत्पन्नकेवलाः ॥ १५२ ॥ कुर्वाणमेवमधृति-मिन्द्रभूतिगणाधिपम् ॥ इति स्माह महावीर-स्वामी विश्वैकवत्सलः ॥ १५३ ॥ अष्टापदात्सिद्धिरिति, किं ग्राह्यं दैवतं वच. ॥ यद्वा जिनानामायुष्मन् !, जिनानामिति सोप्यवक् ॥ १५४ ॥ प्रभुः स्माहाधृतिं तन्मा-कार्षीः स्नेहा यदङ्गिनाम् ॥ भवन्ति शुण्ठद्विदल-चर्मोर्णाकटसन्निभाः ॥ १५५ ॥ चिरन्तनात्परिचयात् , तवोर्णाकटसन्निभः ॥ प्रणयो वर्त्ततेस्मासु, प्राप्यते तन्न केवलम् ॥ १५६ ॥ यो हि वित्तवधूज्ञाति-रागत्यागनिबन्धनम् ॥ रागोर्हद्गुरुधर्मादौ, प्रशस्तः कथितो जिनैः ॥ १५७ ॥ सोप्यायुष्मन् ! यथाख्यातं, प्रतिबध्नाति संयमम् ॥ रविं विना दिनमिव, तं विना नहि केवलम् ॥ १५८ ॥ गते त्वसद्भूते रागे, ध्रुवं ते भावि केवलम् ॥ आवामितश्च्युतौ तुल्यौ, भविष्यावो धृतिं कुरु ॥ १५९ ॥ इत्थमुदीर्य तदा हितशिक्षां, तस्य मुनिप्रकरस्य च दातुं ॥ अध्ययनं द्रुमपत्रकसंज्ञं, स्माह जिनो जगतीहितमेतत् ॥ १६० ॥ इत्युक्ता प्रस्तावना, साम्प्रतं सूत्रमनुस्रियते, तच्चेदम्—

मूलम्—दुमपत्तए पंडुअए जहा, निवडइ राइगणाणमच्चए ।
एवं मणुआण जीविअं, समयं गोअम ! मा पमायए ॥ १ ॥

व्याख्या—द्रुमो वृक्षस्तस्य पत्रं पर्णं द्रुमपत्रं तदेव द्रुमपत्रकं, 'पंडुअएत्ति' आर्पत्वात् पाण्डुरकं कालपरिणामात्तथाविधरोगादेर्वा जातश्वेतभावं, यथा येन प्रकारेण निपतति शिथिलवृन्तबन्धनत्वाद्भ्रश्यति । 'राइगणाणंति' रात्रि-

गतानां दिनगणाविनाभावित्वाद्रात्रिंदिवसमूहानां, अत्यये अतिक्रमे 'एवंति' एवंप्रकारं मनुष्याणामुपलक्षणत्वात्सर्वजीवानां जीवितमायुः, तदपि हि रात्रिदिनगणानामतिक्रमे यथास्थित्या अध्यवसायादिकृतोपक्रमेण वा प्रश्यतीत्येवमुच्यते । यतश्चैवमतः समयमपि आस्तामावलिकादि, अपेर्गम्यमानत्वात्, हे गौतम ! हे इन्द्रभूते ! मा प्रमादीर्मा प्रमादं कृथाः, शेषशिष्योपलक्षणञ्चेह गौतमग्रहणं, सर्वेषामनुशासनार्थत्वादस्य । अत्र च पाण्डुरकपत्रदाक्षिप्तं यौवनस्याप्यनित्यत्वं प्रकटयितुं निर्युक्तिकारो गाथात्रयमाह—"परिअट्टिअलायण्णं, चलंतसंधि मुअंतविंटागं ॥ पत्तं वसणप्पत्तं, कालप्पत्तं भणति गाहं ॥ १ ॥" परिवर्त्तितं कालपरिणामादन्यथाकृतं लावण्यं सौकुमार्यादिरूपमस्येति परिवर्त्तितलावण्यं, तथा चलत्सन्धि, अत एव 'मुअंतविंटागंति' मुञ्चद्वृन्तं त्यजद्वृन्तं यस्य तत्तथा पतदित्यर्थः । पत्रं पर्णं, व्यसनमापदं प्राप्तं व्यसनप्राप्तं, कालं प्रक्रमात्पतनप्रस्तावं प्राप्तं कालप्राप्तं, भणति गाथां पल्लवान् प्रतीति शेषः ॥ १ ॥ तामेवाह—"जह तुम्हे तह अम्हे, तुब्भे वि अ होहिआ जहा अम्हे ॥ अप्पाहेइ पडंतं, पंडुअपत्तं किसलयाणं ॥ २ ॥" यथेति सादृश्ये ततो यथा यूयं सम्प्रति किसलयभावं प्राप्ताः स्निग्धत्वादिगुणैर्गर्वमुद्वहथ अस्मांश्चोपहसथ तथा वयमप्यतीतदशायामभवाम, तथा यूयमपि भविष्यथ यथा वयं विवर्णविच्छायतयोपसहनीयानीति भावः । 'अप्पाहेइत्ति' पुत्रस्य पितेव हितमुपदिशति, पतत्पाण्डुपत्रं किसलयानां ॥ २ ॥ ननु किमेवं पाण्डुपत्रपल्लवानामुल्लापः सम्भवति ? येनैवमुच्यत इत्याह—"नवि अत्थि नवि अ होही उल्लावो किसलपंडुपत्ताणं ॥ उवमा खलु एस कया, भविअजणविबोहणट्ठाए ॥ ३ ॥" स्पष्टा । यथा चेह किसलयानि पाण्डुपत्रेणानुशिष्यन्ते तथान्योपि यौवनगर्वितोऽनुशासनीयः । "तथा चोक्तं वाचकमुख्यैः—"परिभवसि किमिति लोकं, जरसा परिजर्जरीकृतशरीरम् ॥ अचिरात्त्वमपि भविष्यसि, यौवनगर्वं किमुद्वहसि ? ॥ १ ॥" तदेवं जीवितयौवनयोरनित्यतां ज्ञात्वा प्रमादो न विधेय इति सूत्रार्थः ॥ १ ॥ भूयोप्यायुष एवानित्यत्वमाह—

मूलम्—कुसग्गे जह ओसबिंदुए, थोवं चिट्ठइ लंबमाणए ।
एव मणुआण जीविअं, समयं गोयम मा पमायए ॥ २ ॥

व्याख्या—कुशाग्रे यथा अवश्यायबिन्दुकः शरत्कालभाविश्लक्षणवर्षबिन्दुः, स्वार्थे कप्रत्ययः, स्तोकमल्पं कालमिति शेषः, तिष्ठति लम्बमानको मनाग् निपतन् । बद्धास्पदो हि कालान्तरमपि क्षमेतेत्येवं विशिष्यते, एवमनुजानामीत्यादि प्राग्वदिति सूत्रार्थः ॥ २ ॥ उक्तार्थमुपसंहरन्नुपदेशमाह—

मू०—इइ इत्तरिअंमि आउए, जीविअए बहुपच्चवायए । विहुणाहि रयं पुरेकडं, समयं गोयम मा पमायए ३

व्याख्या—इत्युक्तन्यायेन इत्वरे स्वल्पकालभाविनि "एति उपक्रमहेतुभिरनपवर्त्यतया यथाबद्धं तथैवानुभवनीयतां गच्छतीति आयुः" तच्चैवं निरुपक्रममेव तस्मिन्, तथा अनुकम्पितं जीवितं जीवितकं, च शब्दस्य गम्यत्वात्तस्मिंश्च, अर्थात् सोपक्रमायुषि, बहवः प्रभूताः प्रत्यपाया नाशहेतवोऽध्यवसायादयो यस्मिंस्तत्तथा तस्मिन् । अनेन चानुकम्प्यत्वे हेतुः सूचितः, एवञ्चोक्तरूपद्रुमपत्रदृष्टान्तजलबिन्दुदृष्टान्ताभ्यां मनुजायुर्निरुपक्रमं सोपक्रमं च तुच्छमित्यतोस्यानित्यतां ज्ञात्वा 'विहुणाहित्ति' विधुनीहि जीवात् पृथक्कुरु, रजः कर्म, 'पुरेकडंति' पुरा तत्कालापेक्षया पूर्वं कृतं विहितं तत् विधुननोपायमाह—समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ ३ ॥ न च पुनर्नृत्वावासौ धर्मोद्यमः करिष्यत इति ध्येयं, यतः—

मूलम्—दुलहे खलु माणुसे भवे, चिरकालेणवि सव्वपाणिणं ।
गाढा य विवाग कम्मुणो, समयं गोयम मा पमायए ॥ ४ ॥

व्याख्या—दुर्लभो दुष्प्रापः खलुर्विशेषणे, अपुण्यानामिति विशेषयति, मानुषो मनुष्यसम्बन्धीभवो जन्म, चिरकालेनापि प्रभूतकालेनापि, आस्तां स्वल्पकालेनेत्यपिशब्दार्थः, सर्वप्राणिनां सर्वजीवानां । कुत इत्याह—गाढा विनाशयितुमशक्याः, च इति यस्मात्, विपाका उदयाः कर्मणां नरगतिविघातिप्रकृतिरूपाणां, यत एवमतः समयमपीत्यादि प्राग्वदिति सूत्रार्थः ॥ ४ ॥ कथं पुनर्मनुजत्वं दुर्लभमिति सूत्रदशकेनाह—

मूलम्—पुढविक्कायमइगओ, उक्कोसं जीवो उ संवसे । कालं संखाईयं, समयं गोयम मा पमायए ॥५॥

व्याख्या—पृथिवीकायमतिगतः प्राप्तः 'उक्कोसंति' उत्कर्षतो जीवः, तुः पूरणे, संवसेत्तद्रूपतयैवावतिष्ठते, कालं संख्यातीतं असंख्येयोत्सर्पिण्यवसर्पिणीरूपं, अतः समयमपीत्यादि प्राग्वत् ॥ ५ ॥

मूलम्—आउक्कायमइगओ, उक्कोसं जीवो उ संवसे। कालं संखाईयं, समयं गोयम मा पमायए ॥ ६॥
मूलम्—तेउक्कायमइगओ, उक्कोसं जीवो उ संवसे। कालं संखाईअं, समयं गोअम मा पमायए ॥ ७ ॥
मूलम्—वाउक्कायमइगओ, उक्कोसं जीवो उ संवसे। कालं संखाईअं, समयं गोयम मा पमायए ॥ ८ ॥

व्याख्या—इदं सूत्रत्रयं पृथ्वीसूत्रवद्याख्येयम् ॥ ६ ॥ ७ ॥ ८ ॥

मूलम्—वणस्सइकायमइगओ, उक्कोसं जीवो उ संवसे। कालमणंतं दुरंतं, समयं गोयम मा पमायए ॥९॥

व्याख्या—इदमपि प्रागवत्, नवरं-अनन्तं अनन्तोत्सर्पिण्यवसर्पिणीरूपं, साधारणापेक्षञ्चैतत्। दुष्टः अन्तोऽस्येति दुरन्तस्तं, एतदपि साधारणापेक्षमेव। ते ह्यत्यन्तालपबोधत्वेन तत उद्वृत्ता अपि न प्रायो विशिष्टं मानुषादिभवमाप्नुवन्ति ९॥

मू०—बेइंदिअकायमइगओ, उक्कोसं जीवो उ संवसे। कालं संखिज्जसण्णिअं, समयं गोयम मा पमायए १०
तेइंदियकायमइगओ, उक्कोसं जीवो उ संवसे। कालं संखिज्जसण्णिअं, समयं गोयम मा पमायए ११
चउरिंदियकायमइगओ, उक्कोसं जीवो उ संवसे। कालं संखिज्जसण्णिअं, समयं गोयम मा पमायए १२

व्याख्या—इदमपि सूत्रत्रयं स्पष्टं, नवरं—कालं 'संखिज्जसण्णिअंति' संख्येयसंज्ञितं संख्यातवर्षसहस्रात्मकम् ।१०।११।१२।

मूलम्—पंचिंदियकायमइगओ, उक्कोसं जीवो उ संवसे। सत्तट्ठभवग्गहणे, समयं गोयम मा पमायए १३

व्याख्या—पञ्चेन्द्रिया उत्तरत्र देवनारकयोरभिधास्यमानत्वान्मनुष्यत्वस्य च दुर्लभतया प्रक्रान्तत्वात्तिर्यञ्च एवेह गृह्यन्ते, 'सत्तट्ठत्ति' सप्त वा अष्ट वा सप्ताष्टानि भवग्रहणानि जन्मोपादानानि, तत्र सप्त भवाः संख्यातायुषि, अष्टमस्त्वसंख्यातायुषीति ॥ १३ ॥

मूलम्—देवे नेरइए अइगओ, उक्कोसं जीवो उ संवसे। इक्किक्कभवग्गहणे, समयं गोयम मा पमायए १४

व्याख्या—देवान्नैरयिकांश्चातिगत उत्कर्षतो जीवः संवसेत् एकैकभवग्रहणं, अतः समयमपि गौतम ! मा प्रमादीरिति सूत्रदशकार्थः ॥ १४ ॥ उक्तमेवार्थमुपसंहरन्नाह—

मूलम्—एवं भवसंसारे, संसरइ सुभासुभेहिं कम्मेहिं। जीवो पमायबहुलो, समयं गोयम मा पमायए १५

व्याख्या—एवमुक्तन्यायेन भवास्तिर्यगादिजन्मान्येव संसारो भवसंसारस्तस्मिन्, संसरति पर्यटति, शुभाशुभैः कर्मभिः पृथ्वीकायादिभवहेतुभिः, जीवः प्रमादबहुलोऽतः समयमपीत्यादि प्राग्वदिति सूत्रार्थः ॥ १५ ॥ इत्थं नृत्वदौर्लभ्यमुक्तमथ तदवाप्तावपि उत्तरोत्तरगुणा दुर्लभा एवेति सूत्रपञ्चकेनाह—

मू०—लद्धूणवि माणुसत्तणं, आरिअत्तं पुणरवि दुल्लहं। बहवे दसुआ मिलक्खुआ, समयं गोयम मा पमायए १६

व्याख्या—लब्ध्वापि कथंचिन्मानुषत्वं, आर्यत्वं, मगधाद्यार्यदेशोत्पत्तिरूपं पुनरपि भूयोपि दुर्लभं। कुत एवमित्याह—यतो बहवो दस्यवो देशप्रत्यन्तवासिनश्चौराः, 'मिलक्खुअत्ति' म्लेच्छा अव्यक्तवाचो यदुक्तं आर्यैर्नावधार्यते, ते च शकयवनादिदेशोद्भवाः। येषु धर्माधर्मगम्यागम्यभक्ष्याभक्ष्यादिज्ञानविकलेषु पशुप्रायेष्ववाप्यापि मानुष्यं जन्तुर्न कश्चिदप्यर्थं साधयतीति। अतः समयमपीत्यादि प्राग्वत् ॥ १६ ॥

मूलम्—लद्धूणवि आरिअत्तणं, अहीणपंचिंदिअया हु दुल्लहा।
विगलिंदिअया हु दीसइ, समयं गोयम मा पमायए ॥ १७ ॥

व्याख्या—इत्थमतिदुर्लभमप्यार्यत्वं लब्ध्वा अहीनपञ्चेन्द्रियता हुरवधारणे भिन्नक्रमश्च ततो दुर्लभैव, कुतः ? इत्याह—विकलानि रोगादिभिरुपहतानीन्द्रियाणि येषां ते तथा तद्भावो विकलेन्द्रियता, हुरितिनिपातो निपातानामनेकार्थत्वाद्बाहुल्यवाचकस्ततश्च यतो बाहुल्येन विकलेन्द्रियता दृश्यते, इत्यहीनपञ्चेन्द्रियता दुर्लभैवेति। समयमित्यादि प्राग्वत् ॥ १७ ॥

मूलम्—अहीणपंचंदिअत्तंपि से लहे, उत्तमधम्मसुई हु दुल्लहा।
कुतित्थिनिसेवए जणे, समयं गोयम मा पमायए ॥ १८ ॥

व्याख्या—कथमप्यहीनपञ्चेन्द्रियत्वमपि स जन्तुर्लभेत,तथाप्युत्तमधर्मश्रुतिस्तत्वश्रवणात्मिका, तुरवधारणे भिन्नक्रमश्च, ततो दुर्लभैव । किमिति? यतः कुतीर्थिनिषेवकः शाक्यादिपाखण्डिपर्युपासको जनो लोकः,कुतीर्थिनो हि लाभार्थिनो यदेव प्राणिनां प्रियं तदेवोपदिशन्ति, तत्तीर्थकराणामप्येवंविधत्वात् । उक्तञ्च—"सत्कारयशोलाभा-र्थिभिश्च मूढैरिहान्यतीर्थकरैः ॥ अवसादितं जगदिदं, प्रियाण्यपथ्यान्युपदिशद्भिः । १ ।" इति सुकरैव तेषां सेवा, तत्सेविनां च कुत उत्तमधर्मश्रुतिः? ततः समयमित्यादि प्राग्वत् ॥ १८ ॥

मूलम्—लद्धूणवि उत्तमं सुई, सद्दहणा पुणरवि दुल्लहा ।
मिच्छत्तनिसेवए जणे, समयं गोअम मा पमायए ॥ १९ ॥

व्याख्या—लब्ध्वापि उत्तमां श्रुतिं जिनप्रणीतधर्मश्रवणरूपां, श्रद्धानं तत्त्वरुचिरूपं पुनरपि दुर्लभं। तत्र हेतुमाह—मिथ्यात्वमतत्वे तत्वमिति प्रत्ययः तन्निषेवते यः स मिथ्यात्वनिषेवको जनोऽनादिभवाभ्यासाद्गुरुकर्मत्वाच्च प्रायस्तत्रैव प्रवृत्तेरतः समयमित्यादि प्राग्वत् ॥ १९ ॥

मूलम्—धम्मंपि हु सद्दहंतया, दुल्लहया काएण फासया ।
इह कामगुणेसु मुच्छिआ, समयं गोअम मा पमायए ॥ २० ॥

व्याख्या—धर्मं प्रस्तावात्सर्वज्ञोक्तं, अपिर्भिन्नक्रमः, हुर्वाक्यालङ्कारे, ततः 'सद्दहंतयत्ति' श्रद्धतोपि कर्तुमभिलषतोपि दुर्लभकाः कायेन अङ्गेन स्पर्शकाः कर्त्तारः, हेतुमाह—इह जगति कामगुणेषु शब्दादिषु मूर्च्छिता गृद्धा जन्तव इति शेषः, प्रायेण हि रोगिणामपथ्यमिवाहितकारिणोप्यनुकूला विषयाः प्राणिनां प्रियाः स्युरित्यतो दुरापां धर्मसामग्रीमवाप्य समयमपि गौतम ! मा प्रमादीरिति सूत्रपञ्चकार्थः ॥ २० ॥ किञ्च सति देहसामर्थ्ये धर्मस्पर्शनेति तदनित्यताकथनेनाप्रमादोपदेशं सूत्रषट्केनाह—

मूलम्—परिजूरइ ते सरीरयं,केसा पंडुरया हवंति ते।से सोअबले अ हायइ, समयं गोअम मा पमायए २१

व्याख्या—परिजीर्यति सर्वप्रकारैर्वयोहानिमनुभवति ते तव शरीरमेव जरादिभिरभिभूयमानतया अनुकम्प्यमिति शरीरकं। केशाः पाण्डुरकाः, पूर्वं जनमनोनयनहारिणोत्यन्तं श्यामा अपि भूत्वा साम्प्रतं वयःपरिणामात् शुक्ला भवन्ति ते तव पुनस्ते शब्दोपादानं भिन्नवाक्यत्वाददुष्टं । तथा 'से इति' तत् यत् पूर्वमभूत् श्रोत्रबलं कर्णबलं दूरादपि शब्दोपादानरूपं,चः समुच्चये,हीयते जरातः स्वयमपैति। अतः शारीरसामर्थ्यस्यास्थिरत्वात्समयमित्यादि प्राग्वत् २१

मूलम्—परिजूरइ ते सरीरयं,केसा पंडुरया हवंति ते।से चक्खुबले अ हायई,समयं गोअम मा पमायए २२

मूलम्—परिजूरइ ते सरीरयं,केसा पंडुरया हवंति ते। से घाणबले अ हायई,समयं गोअम मा पमायए २३

मूलम्—परिजूरइ ते सरीरयं,केसा पंडुरया हवंति ते। से जिब्भबले अ हायई,समयं गोअम मा पमायए२४

मूलम्—परिजूरइ ते सरीरयं,केसा पंडुरया हवंति ते। से फासबले अ हायई,समयं गोअम मा पमायए२५

मूलम्—परिजूरइ ते सरीरयं,केसा पंडुरया हवंति ते। से सव्वबले अ हायई,समयं गोअम ! मा पमायए२६

व्याख्या—इदमपि सूत्रपञ्चकं प्राग्वन्नेयं, नवरं 'सव्वबलेत्ति' सर्वेषां करचरणाद्यवयवानां बलं स्वस्वव्यापारसामर्थ्यं इह च प्रथमं श्रोत्रोपादानं तद्भावे शेषेन्द्रियाणां सद्भावेन पटुतरत्वेन च प्राधान्यादिति सूत्रषट्कार्थः ॥ २६ ॥ जरातः शरीराशक्तिरुक्ता, अथ रोगेभ्यस्तामाह—

मूलम्—अरई गंडं विसूईआ, आयंका विविहा फुसंति ते ।
विवडइ विद्धंसइ ते सरीरयं, समयं गोयम मा पमायए ॥ २७ ॥

व्याख्या—अरतिर्वातादिजनितश्चित्तोद्वेगः, गंडं गडुः, विसूचिका अजीर्णविशेषः, आतङ्काः सद्योघातिनो रोगविशेषाः, विविधा बहुप्रकाराः स्पृशन्ति ते तव शरीरमिति शेषः । ततश्च 'विवडइत्ति' विशेषेण पतति बलोपचयादपैति, विध्वस्यति जीवमुक्तमधः पतति ते शरीरकमतो यावज्जरा रोगाश्च गात्रं न जर्जरयन्ति तावत्समयमित्यादि

प्राग्वत् । केशपाण्डुरत्वादि जराचिह्नं, रोगाश्च, यद्यपि गौतमे न सम्भवन्ति, तथापि तन्निश्रयाशेषशिष्यप्रतिबोधार्थत्वाददुष्टमिदमिति सूत्रार्थः ॥ २७ ॥ अथ यथा अप्रमादो विधेयस्तथाह–

मूलम्—वुच्छिंद सिणेहमप्पणो, कुमुअं सारइअं वा पाणिअं ।
से सव्वसिणेहवज्जिए, समयं गोअम मा पमायए ॥ २८ ॥

व्याख्या—व्युच्छिन्द्धि अपनय स्नेहं मद्विषयमभिष्वङ्गं, आत्मनः स्वस्य, किमिव किं ? कुमुदमिव चन्द्रविकासिकमलमिव 'सारइअंति' सूत्रत्वाच्छरदिभवं शारदं, वाशब्द उपमार्थो भिन्नक्रमश्च प्राग् योजितः, पानीयं जलं, ततश्च कुमुदं यथा प्रथमं जलमग्नमपि जलं विहाय वर्त्तते, तथा त्वमपि विरसं सृष्टमपि मद्विषयं स्नेहं छिन्द्धि, छित्वा 'से' इति ततः सर्वस्नेहवर्जितः सन् समयमपि गौतम मा प्रमादीः । इह च शारदपदोपादानं शारदजलस्येव स्नेहस्याप्यतिमनोरमत्वसूचनार्थमिति सूत्रार्थः ॥ २८ ॥ किञ्च–

मूलम्—चिच्चा धणं च भारिअं, पव्वइओ हि सि अणगारिअं ।
मा वंतं पुणोवि आविए, समयं गोयम मा पमायए ॥ २९ ॥

व्याख्या—त्यक्त्वा परिहृत्य धनं चतुष्पदादि, च शब्दो भिन्नक्रमस्ततो भार्यां च त्यक्त्वा, प्रव्रजितः प्रतिपन्नो हिर्यस्मात् 'सित्ति' सूत्रत्वादकार लोपे असि वर्त्तसे अनगारितां मुनित्वं, अतो मा वान्तं उद्गीर्णं पुनरपि भूयोपि 'आविएत्ति' आपिबेः । किन्तु समयमित्यादि प्राग्वदिति सूत्रार्थः ॥ २९ ॥ कथं वान्तापानं न स्यादित्याह–

मूलम्—अवउज्झिअ मित्तबंधवं, विउलं चेव धणोहसंचयं ।
मा तं बिइअं गवेसए, समयं गोअम मा पमायए ॥ ३० ॥

व्याख्या—अपोह्य मुक्त्वा मित्राणि च बान्धवाश्च मित्रबान्धवं, विपुलं विस्तीर्णं, चः समुच्चये, एवः पूर्त्तौ, धनस्य कनकादिद्रव्यस्य ओघः समूहः तस्य सञ्चयः कोशो धनौघसञ्चयस्तं, मा तत् मित्रादिकं द्वितीयं पुनः स्वीकारार्थमिति शेषः, गवेषय अन्वेषय । श्रामण्याश्रयणे हि तत्त्यक्तमिति वान्तोपमं, भूयोपि तद्गवेषणे च वान्तापानमेव स्यादित्यभिप्रायः, किन्तु समयमित्यादि प्राग्वदिति सूत्रार्थः ॥ ३० ॥ इत्थं ममत्वोच्छेदार्थमुक्त्वा दर्शनशुद्ध्यर्थमाह–

मूलम्—नहु जिणे अज्ज दीसई, बहुमए दीसई मग्गदेसिए ।
संपइ नेआउए पहे, समयं गोअम मा पमायए ॥ ३१ ॥

व्याख्या—नहु नैव जिनोऽर्हन् अद्यास्मिन् काले दृश्यते, यद्यपीति गम्यं, तथापि 'बहुमएत्ति' बहुमतः पन्थाः स च द्रव्यतो नगरादिमार्गो भावतस्तु ज्ञानादिरूपो मुक्तिमार्गः, इह च भावमार्ग एव गृह्यते, ततश्च मुक्तिमार्गो दृश्यते । कीदृशः ? इत्याह–'मग्गदेसिएत्ति' मार्ग्यमाणत्वान्मार्गो मोक्षस्तस्य 'देसिएत्ति' सूत्रत्वाद्देशकः प्रापको मार्गदेशकः । अयं भावः–यद्यप्यधुनार्हन्नास्ति परं तदुपदिष्टो मार्गस्तु दृश्यते । न चेदृशोयमतीन्द्रियार्थदर्शिनं जिनं विना सम्भवतीत्यसन्दिग्धचेतसो भाविनोपि भव्या न प्रमादं विधास्यन्ति, ततः सम्प्रति अधुना सत्यपि मयीति भावः । नैयायिके निश्चितमुक्त्याख्यलाभप्रयोजने पथि मार्गे केवलानुत्पत्तिसंशयेन समयमपि गौतम ! मा प्रमादीरित्यर्थः व्याख्या सूत्रस्य सूचकत्वादीति सूत्रार्थः ॥ ३१ ॥ तथा–

मूलम्—अवसोहिआ कंटगापहं, उइण्णोसि पहं महालयं ।
गच्छसि मग्गं विसोहिआ, समयं गोयम मा पमायए ॥ ३२ ॥

व्याख्या—अवशोध्य परिहृत्य 'कण्टगापहंति' आकारोऽलाक्षणिकः, कण्टकाश्च द्रव्यतो बुबूलकण्टकाद्याः, भावतश्चरकादिदर्शनानि, इह च भावकण्टकैरेवाधिकारः, तैराकुलः पन्थाः कण्टकपथस्तं, ततश्च अवतीर्णोसि अनुप्रविष्टोसि पन्थानं सम्यग्दर्शनादिकं भावमार्गं 'महालयंति' महान्तं, कश्चिदवतीर्णोपि मार्गं न गच्छेदत आह–गच्छसि यासि मार्गं, न पुनः स्थित एवासि, सम्यग्दर्शनादेरुत्सर्पणेन मार्गगमनप्रवृत्तत्वाद्भवतः । किं कृत्वा ? विशोध्य निश्चित्य मार्गमेवेति प्रक्रमः, तदेवं प्रवृत्तः सन् समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ ३२ ॥ उक्ता मार्गप्रतिपत्तिस्तत्प्रतिपत्तौ च कस्याप्यनुतापोपि स्यादिति तं निराकर्तुमाह–

मूलम्—अबले जह भारवाहए, मा मग्गे विसमेऽवगाहिआ ।
पच्छा पच्छाणुतावए, समयं गोअम मा पमायए ॥ ३३ ॥

व्याख्या—अबलो देहसामर्थ्यहीनो यथेत्यौपम्ये भारवाहकः, मा निषेधे 'मग्गेत्ति' मार्गे 'विसमेत्ति' विषमं, अवगाह्य प्रविश्य, त्यक्ताङ्गीकृतभारः सन्निति गम्यं, पश्चात्तत्कालानन्तरं, पश्चादनुतापकः पश्चात्तापकरोभूदिति शेषः। अयं भावः-यथा कश्चिद्दुःस्थो देशान्तरं गतो बहुभिरुपायैः स्वर्णादिकमुपार्ज्य स्वगृहमागच्छन्नतिभीरुतया वस्त्वन्तरान्तर्हितं स्वर्णादिकं स्वशिरस्यारोप्य कतिचिद्दिनानि समुत्पाट्य क्वचिदुपलादिसङ्कुले पथि अहो अहमनेन भारेणाक्रान्त इति तमुत्सृज्य गृहमागतोत्यन्तनिर्धनतयानुतप्यते, किं मया निर्भाग्येन त्यक्तमिति । एवं त्वमपि प्रमादेन त्यक्तसंयमभारः सन्नेवंविधो मा भूः, किन्तु समयमित्यादि प्राग्वदिति सूत्रार्थः ॥ ३३ ॥ अथाल्पं तीर्णं बहु च तरणीयमित्यभिप्रायेणोत्साहभङ्गो मा भूदित्याह–

मूलम्—तिण्णोहुसि अण्णवं महं, किं पुण चिट्ठसि तीरमागओ ।
अभितुर पारं गमित्तए, समयं गोयम मा पमायए ॥ ३४ ॥

व्याख्या—'तिण्णोहुसित्ति' तीर्ण एवासि, अर्णवमिवार्णवं संसारं, महान्तं गुरुं, किमिति प्रश्ने, पुनरिति वाक्योपन्यासे, ततः किं पुनस्तिष्ठसि ? तीरमागतः प्राप्तः । भावतो हि अर्णवो भवः कर्म वा, स च द्विविधोपि त्वया तीर्णप्राय एवेति कथं तीरं प्राप्तोपि औदासीन्यं भजसे ? नैवेदं तवोचितमिति भावः । किन्तु 'अभितुरत्ति' आभिमुख्येन त्वरस्व शीघ्रो भव, पारं परतीरं, भावतो मुक्तिपदं 'गमित्तएत्ति' गन्तुं। ततश्च समयमित्यादि प्राग्वदिति सूत्रार्थः ॥३४॥ न च मम पारप्राप्तियोग्यता नास्तीत्यपि ध्येयं, यतः–

मूलम्—अकलेवरसेणिमूसिआ, सिद्धिं गोअम लोअं गच्छसि ।
खेमं च सिवं अणुत्तरं, समयं गोअम मा पमायए ॥ ३५ ॥

व्याख्या—न विद्यते कलेवरं वपुर्येषां ते अकलेवराः सिद्धास्तेषां श्रेणिं उत्तरोत्तरशुभाध्यवसायरूपां क्षपकश्रेणिं 'ऊसिअत्ति' उच्छ्रित्य उत्तरोत्तरसंयमस्थानावाप्त्या उच्छ्रितामिव कृत्वा हे गौतम ! त्वं सिद्धिं सिद्धिसंज्ञं लोकं 'गच्छसित्ति' विभक्तिव्यत्ययाद्गमिष्यसि, कीदृशं ? सिद्धिलोकमित्याह–क्षेमं परचक्रादिभयहीनं, चः समुच्चये, शिवमशेषदुरितोपशान्तिकलितं, अनुत्तरं सर्वोत्कृष्टं, ततः समयमित्यादि प्राग्वदिति सूत्रार्थः ॥३५॥ अथ निगमयन्नुपदेशसर्वस्वमाह–

मूलम्—बुद्धे परिनिव्वुडे चरे, गाम गए नगरे व संजए ।
संतिमग्गं च वूहए, समयं गोअम मा पमायए ॥ ३६ ॥

॥ अथैकादशमध्ययनम् ॥

---

॥ अर्हम् ॥ उक्तं दशममध्ययनं, अथ बहुश्रुतपूजाख्यमेकादशमारभ्यते । अस्य चायं सम्बन्धः, इहानन्तराध्ययनेऽप्रमादार्थमनुशिष्टिरुक्ता, सा च विवेकिनैव सम्यगवधार्यते, विवेकश्च बहुश्रुतपूजातो भवतीत्यत्र बहुश्रुतपूजोच्यते, इत्यनेन सम्बन्धेनायातस्य अस्येदमादिमं सूत्रम्–

मूलम्—संजोगा विप्पमुक्कस्स, अणगारस्स भिक्खुणो। आयारं पाउकरिस्सामि, आणुपुव्विं सुणेह मे ॥१॥

व्याख्या—संयोगाद्विप्रमुक्तस्यानगारस्य भिक्षोः, आचारमुचितविधिं बहुश्रुतपूजारूपं, प्रादुष्करिष्यामि आनुपूर्व्या क्रमेण शृणुत मे मम वदत इति शेष इति सूत्रार्थः ॥ १ ॥ इह हि बहुश्रुतपूजा प्रक्रान्ता, बहुश्रुतस्वरूपञ्चाबहुश्रुतस्वरूपे प्ररूपिते सुखेनैव ज्ञायत इति तत्स्वरूपं तावदाह–

मूलम्—जे आवि होइ निविज्जे, थद्धे लुद्धे अणिग्गहे। अभिक्खणं उल्लवई, अविणीए अबहुस्सुए ॥२॥

व्याख्या—यः कश्चित् ; चापिशब्दौ भिन्नक्रमावग्रे योक्ष्येते, भवति निर्विद्यः सम्यक्शास्त्रावगमविनाकृतः, अपिशब्दस्येह सम्बन्धात्सविद्योपि यः स्तब्धोऽहङ्कारी, लुब्धो रसादिषु गृद्धः, न विद्यते निग्रह इन्द्रियमनोनिरोधात्म-

कोऽसेत्यनिग्रहः, अभीक्ष्णं पुनः पुनः उत् प्राबल्येनासम्बद्धभाषितादिरूपेण लपति वक्ति उल्लपति, अविनीतश्च विनयरहितः, 'अबहुस्सुएत्ति' यत्तदोर्नित्याभिसम्बन्धात्सोऽबहुश्रुत उच्यते इति शेषः। इह च सत्यपि श्रुतेऽस्याप्यबहुश्रुतत्वं बहुश्रुतत्वफलाभावादिति ध्येयं, एतद्विपरीतस्तु बहुश्रुत इति सूत्रार्थः ॥ २ ॥ अथेदृशमबहुश्रुतत्वं बहुश्रुतत्वञ्च कथं स्यादित्याह—

**मूलम्—अह पंचहि ठाणेहिं, जेहिं सिक्खा न लब्भई। थंभा कोहा पमाएणं, रोगेणालस्सएण य ॥३॥**

व्याख्या—अथेत्युपन्यासे, पञ्चभिः स्थानैः प्रकारैर्वक्ष्यमाणैः शिक्षा ग्रहणासेवनात्मिका न लभ्यते तैरीदृशमबहुश्रुतत्वं प्राप्यत इति शेषः। कैः पुनः सा न लभ्यते? इत्याह—स्तम्भात् मानात्, क्रोधात् कोपात्, प्रमादेन मद्यादिना, रोगेण गलत्कुष्टादिना, आलस्येनानुत्साहात्मना, शिक्षा न लभ्यत इति प्रक्रमः। चशब्दः समस्तानां व्यस्तानाञ्चैषां हेतुत्वं द्योतयति ॥ ३ ॥ एवमबहुश्रुतत्वहेतूनुक्त्वा बहुश्रुतत्वहेतूनाह—

**मूलम्—अह अट्ठहिं ठाणेहिं, सिक्खासीलेत्ति वुच्चइ। अहस्सिरे सया दंते, न य मम्ममुदाहरे ॥ ४ ॥**

व्याख्या—अथाष्टभिः स्थानैः शिक्षां शीलयत्यभ्यस्यतीति शिक्षाशील इति उच्यते, जिनादिभिरिति शेषः। तान्येवाह—'अहस्सिरेत्ति' अहसनशीलो न सहेतुकमहेतुकं वा हसन्नेवास्ते, सदा सर्वकालं दान्त इन्द्रियनोइन्द्रियदमवान्, न च मर्म परापभ्राजनकारि उदाहरेत् उच्चारयेत् ॥ ४ ॥

**मूलम्—नासीले न विसीले अ, न सिआ अइलोलुए। अक्कोहणे सच्चरए, सिक्खासीलेत्ति वुच्चइ ॥ ५ ॥**

व्याख्या—न नैव अशीलः सर्वथाशीलविकलः, न विशीलो न विरूपशीलोऽतीचारकलुषितव्रतः, न स्यान्न भवेदतिलोलुपोऽत्यन्तं रसलम्पटः, अक्रोधनः क्षमावान्, सत्यरतस्तथ्यवचनासक्तः, 'सिक्खासीलेत्ति' इत्येवमनन्तरोक्तगुणवान् शिक्षाशील इत्युच्यत इति सूत्रत्रयार्थः ॥ ५ ॥ किञ्चाबहुश्रुतत्वबहुश्रुतत्वयोरविनयविनयावेव मूलहेतू ततो यैः स्थानैरविनीतो यैश्च विनीतस्तानि दर्शयितुमाह—

**मूलम्—अह चउदसहिं ठाणेहिं, वट्टमाणे उ संजए। अविणीए वुच्चई सो उ, निव्वाणं च न गच्छइ ॥६॥**

व्याख्या—अथेति प्राग्वत्, चतुर्दशसु स्थानेषु, सूत्रे सप्तम्यर्थे तृतीया सूत्रत्वात्, वर्त्तमानस्तिष्ठन्, तुः पूरणे, संयतो मुनिरविनीत इत्युच्यते, 'सो उत्ति' स पुनरविनीतो निर्वाणं मोक्षं न गच्छति ॥ ६ ॥ चतुर्दशस्थानान्याह—

**मूलम्—अभिक्खणं कोही हवइ, पबंधं च पकुव्वई। मिज्जिमाणो वमइ, सुअं लद्धूण मज्जइ ॥ ७ ॥**

व्याख्या—अभीक्ष्णं पुनः पुनः क्रोधी भवति, सहेतुकमहेतुकं वा कुप्यन्नेवास्ते १। प्रबन्धं च कोपस्यैवाविच्छेदरूपं 'पकुव्वइत्ति' प्रकर्षेण करोति, कुपितः सन्ननेकैरपि सान्त्वनैर्नोपशाम्यति २। 'मित्तिज्जमाणोत्ति' मित्रीयमाणोपि मित्रं ममायमस्त्वितीष्यमाणोपि अपरैस्तस्य दर्शनाद्वमति त्यजति, प्रस्तावान्मैत्रीं, अयं भावः—यदि कोपि साधुर्धार्मिकतया वक्ति, यथाहं तव पात्रलेपादि कार्यं कुर्वे इति, ततोसौ प्रत्युपकारभीरुतया प्रतिवक्ति, ममालमनेनेति। यद्वा कृतमपि कृतघ्नतया न मन्यते इति वमतीत्युच्यते ३। तथा 'सुअंति' अपेर्गम्यत्वात् श्रुतमप्यागममपि लब्ध्वा माद्यति, दर्पं याति। श्रुतं हि मदापहं, स तु तेनापि दृप्यतीति भावः ४ ॥ ७ ॥

**मूलम्—अवि पावपरिक्खेवी, अवि मित्तेसु कुप्पइ। सुप्पिअस्सावि मित्तस्स, रहे भासइ पावगं ॥८॥**

व्याख्या—अपिः सम्भावने, पापैः कथञ्चित्समित्यादिषु स्खलितलक्षणैः परिक्षिपति निन्दतीत्येवंशीलः पापपरिक्षेपी, आचार्यादीनामिति शेषः। गुरूणां समित्यादौ स्खलितलक्षणं पापं पुरस्कृत्य तान्निंदतीत्यर्थः ५। अपिर्भिन्नक्रमस्ततो मित्रेभ्योपि सुहृद्भ्योपि कुप्यति क्रुध्यति, सूत्रे सप्तमी चतुर्थ्यर्थे ६। तथा सुप्रियस्याप्यतिवल्लभस्यापि मित्रस्य रहसि एकान्ते भाषते, पापमेव पापकं, अग्रतः प्रियं वक्ति पृष्ठतस्तु प्रतिसेवकोयमित्यादिकं तद्दोषमेवाविष्करोतीति भावः ७ ॥ ८ ॥

**मूलम्—पइण्णवाई दुहिले, थद्धे लुद्धे अणिग्गहे। असंविभागी अविअत्ते, अविणीएत्ति वुच्चई ॥ ९ ॥**

व्याख्या—प्रतिज्ञया इदमित्थमेवेत्येकान्तवादरूपया वदनशीलः प्रतिज्ञावादी, यद्वा प्रकीर्णमसम्बद्धं वदतीति प्रकीर्णवादी ८। 'दुहिलेत्ति' द्रोहणशीलो द्रोग्धा, मित्रस्यापीति शेषः ९। स्तब्धस्तपस्व्यहमित्याद्यहङ्कृतिमान् १०। लुब्धो भोज्यादिष्वभिकांक्षावान् ११। अनिग्रहः प्राग्वत् १२। असंविभागी आहारादिकं प्राप्यातिगर्द्धनो नान्यस्मै

स्वल्पमपि यच्छति, किन्त्वात्मानमेव पोषयति १३ । 'अवियत्तेत्ति' अप्रीतिकरो दृश्यमानो भाष्यमाणो वा सर्वस्याप्यप्रीतिमेवोत्पादयति १४ । एवंविधदोषान्वितोऽविनीत इत्युच्यते इतिनिगमनम् ॥ ९ ॥ इत्थमविनीतस्थानान्युक्त्वा विनीतस्थानान्याह—

मूलम्—अह पण्णरसहिं ठाणेहिं, सुविणीएत्ति वुच्चई । नीआवित्ती अचवले, अमाई अकुऊहले ॥ १०॥

व्याख्या—अथ पंचदशभिः स्थानैः सुष्ठु शोभनो विनीतो विनयान्वितः सुविनीत इत्युच्यते, तान्येवाह—'नीआवित्तीत्ति' नीचमनुद्धतं यथास्यादेवं वर्त्तत इत्येवंशीलो नीचवर्त्ती, गुरुषु न्यग्वृत्तिमान् । यदुक्तं—"नीअं सिज्जं गई ठाणं, नीयं च आसणाणि अ ॥ नीअं च पाए वंदिज्जा, नीअं कुज्जा य अंजलिं ॥ १ ॥" तथा न चपलोऽचपलस्तत्र चपलो गतिस्थानभाषाभावभेदाच्चतुर्धा । तत्र गतिचपलो द्रुतद्रुतचारी, स्थानचपलो यस्तिष्ठन्नपि हस्तादिभिश्चलन्नेवास्ते, भाषाचपलोऽसदसभ्यासमीक्ष्यादेशकालप्रलापिभेदाच्चतुर्धा । तत्रासदविद्यमानमस्ति खपुष्पमित्यादि, असभ्यं खरपरुषादि, असमीक्ष्यानालोच्य प्रलपन्तीत्येवंशीला असदसभ्यासमीक्ष्यप्रलापिनस्त्रयः, अदेशकालप्रलापी तु चतुर्थो योऽतीते कार्ये वक्ति, यदीदं तत्र देशे काले वाऽकरिष्यत्तदा सुन्दरमभविष्यदिति । भावचपलस्तु सः, यः प्रस्तुते सूत्रेऽर्थे वाऽसमाप्त एवान्यद् गृह्णाति २ । अमायी, न मनोज्ञमाहारादिकमवाप्य गुर्वादिवञ्चकः ३ । अकुतूहलो नेन्द्रजालादिकौतुकविलोकनतत्परः ४ ॥ १० ॥

मूलम्—अप्पं चाहिक्खिवइ, पबंधं च न कुव्वई । मित्तिज्जमाणो भयइ, सुअं लद्धुं न मज्जइ ॥ ११ ॥

व्याख्या—अत्राल्पशब्दोऽभाववाची, ततश्चाल्पमिति नैव कञ्चनाधिक्षिपति तिरस्करोति ५ । प्रबन्धश्च कोपाविच्छेदरूपं न करोति ६ । मित्रीयमाणः पूर्वोक्तन्यायेन भजते, मित्रीयितारमुपकुरुते, प्रत्युपकारम्प्रत्यशक्तो वा कृतघ्नो न स्यात् ७ । श्रुतं लब्ध्वा न माद्यति, किन्तु मददोषपरिज्ञानात्सुतरामेव नमति ८ ॥ ११ ॥

मूलम्—न य पावपरिक्खेवी, न य मित्तेसु कुप्पई । अप्पिअस्साचि मित्तस्स, रहे कल्लाण भासई ॥ १२॥

व्याख्या—न च पापपरिक्षेपी, पूर्वोक्तरूपः ९ । न च कथञ्चित्सापराधेभ्योपि मित्रेभ्यः कुप्यति १० । अप्रियस्यापि मित्रस्य रहसि कल्याणं भाषते, अयं भावः मित्रमितिय प्रतिपन्नः स यद्यप्यपकृतिशतानि कुरुते तथाप्येकमपि तत्कृतमुपकारमनुस्मरन् न रहस्यपि तद्दोषं वक्ति । आह च—"एकसुकृतेन दुष्कृत-शतानि ये नाशयन्ति ते धन्याः, न त्वेकदोषजनितो, येषां रोषः शतकृतघ्नः ॥ १ ॥" इति ॥ ११ ॥ १२ ॥

मूलम्—कलहडमरवज्जए, बुद्धे अभिजाइगे । हिरिमं पडिसंलीणे, सुविणीएत्ति वुच्चई ॥ १३ ॥

व्याख्या—कलहश्च वाचिको विग्रहः, डमरश्च पाणिघातादिजं तद्वर्जकः कलहडमरवर्जकः १२ । बुद्धो बुद्धिमानेतच्च सर्वत्रानुगम्यत एवेति न प्रकृतसंख्याविरोधः । अभिजातिं कुलीनतां गच्छति जात्यवृषभ इवोत्क्षिप्तभारनिर्वहणादित्यभिजातिगः १३ । ह्रीमान् लज्जावान् , स हि कलुषाशयत्वेप्यकार्यमाचरन् लज्जते १४ । प्रतिसंलीनो गुरुपार्श्वेऽन्यत्र वा स्थितो न हि कार्यं विना यतस्ततश्चेष्टते १५ । प्रस्तुतमुपसंहरति, 'सुविणीएत्ति' स एवंविधगुणान्वितः सुविनीत इत्युच्यते इति सूत्राष्टकार्थः ॥ १३ ॥ यश्चैवं विनीतः स कीदृक् स्यादित्याह—

मूलम्—वसे गुरुकुले णिच्चं, जोगवं उवहाणवं । पिअंकरे पिअंवाई, से सिक्खं लद्धुमरिहई ॥ १४ ॥

व्याख्या—वसेत्तिष्ठेद्गुरुकुले गच्छे नित्यं सदा गुर्वाज्ञोपलक्षणञ्चैतत्ततो यावज्जीवमपि गुर्वाज्ञायामेव तिष्ठेदित्यर्थः । योगो व्यापारो धर्मस्य तद्वान् , उपधानमङ्गोपाङ्गाध्ययनादौ यथायोगमाचाम्लादिस्तपोविशेषस्तद्वान् , प्रियङ्करः कथञ्चित्केनचिदपकृतोपि न तत्प्रतिकूलं करोति, किन्तु ममैव कर्मणोऽसौ दोष इति ध्यायन् अप्रियकारिण्यपि प्रियमेव चेष्टत इत्यर्थः । अत एव 'पिअंवाइत्ति' केनचिदप्रियमुक्तोपि प्रियमेव वदतीत्येवंशीलः प्रियंवादी । आह च—"करयलमलिअस्सवि दमणयस्स महमहइ पेसलो गंधो । तविअस्सवि सज्जणमाणुसस्स महुरा समुल्लावा ॥ १ ॥" तथा चास्य को गुणः ? इत्याह—स एवंविधगुणवान् शिक्षां शास्त्रार्थग्रहणतदासेवनादिरूपां लब्धुमवाप्तुमर्हति योग्यो भवति, न तु तद्विपरीतोऽविनीतः । यश्च शिक्षां लभते स बहुश्रुतोऽपरस्त्वबहुश्रुत इति भाव इति सूत्रार्थः ॥ १४ ॥

एवं सविपक्षं बहुश्रुतं सप्रपञ्चमभिधाय तस्यैव स्तुतिद्वारेण पूर्वप्रतिज्ञातं तत्प्रतिपत्तिरूपमाचारमाह—

मूलम्—जहा संखंमि पयं निहित्तं, दुहओवि विरायइ । एवं बहुस्सुए भिक्खू, धम्मो कित्ती तहा सुयं १५

व्याख्या—यथेति दृष्टान्ते, शंखे पयो दुग्धं निहितं न्यस्तं 'दुहओवित्ति' स्वसम्बन्ध्याश्रयसम्बन्धिगुणद्वयलक्षणेन

प्रकारद्वयेनापीत्यपिशब्दार्थः, विराजते शोभते, तत्र हि तन्न कलुषीभवति, न चाम्लतां भजते, नापि च परिश्रवति, एवमनेन प्रकारेण बहुश्रुते 'भिक्खूत्ति' भिक्षौ मुनौ, धर्मो मुनिधर्मः, कीर्त्तिः श्लाघा, तथा श्रुतमागमो विराजते इति सम्बन्धः । अयं भावः—यद्यपि धर्मकीर्त्तिश्रुतानि निरुपलेपतादिगुणेन स्वयं शोभावन्ति तथापि मिथ्यात्वादिकालुष्याप-गमान्नैर्मल्यादिगुणैः शंखसदृशे बहुश्रुते स्थितान्याश्रयगुणेन विशेषात् शोभन्ते, न च तत्र तानि मालिन्यमन्यथाभावं हानिश्च कदाचित् प्रयान्तीति सूत्रार्थः ॥ १५ ॥ पुनर्बहुश्रुतस्तवमेवाह—

मूलम्—जहा से कंबोआणं, आइण्णे कंथए सिआ । आसे जवेण पवरे, एवं भवइ बहुस्सुए ॥ १६ ॥

व्याख्या—यथा स इति प्रसिद्धः, काम्बोजानां कम्बोजदेशोद्भवानां अश्वानां मध्ये आकीर्णो गुणैरिति शेषः, कन्थकः प्रधानोऽश्वो यः किल दृषच्छकलभृतकुतपनिपातध्वनेर्न संत्रस्यति, स्यात् भवेदश्वो जवेन वेगेन प्रवरः प्रधानः, एवमित्युपनये, तत ईदृशो भवति बहुश्रुतः, जैना हि मुनयः परतीर्थिकेभ्यः सकलगुणैः काम्बोजा इवान्याश्वेभ्यो विशिष्यन्ते, अयं त्वाकीर्णकन्थकाश्ववत्तेभ्योप्यधिकः शीलादिगुणैः प्रवर इति सूत्रार्थः ॥ १६ ॥

मूलम्—जहाइण्णसमारूढे, सूरे दढपरक्कमे । उभओ नंदिघोसेणं, एवं भवति बहुस्सुए ॥ १७ ॥

व्याख्या—यथा आकीर्णं जात्यादिगुणोपेतमश्वं समारूढोऽध्यासितः आकीर्णसमारूढः शूरश्चारभटो दृढपराक्रमो गाढबलः 'उभओत्ति' उभयतो वामतो दक्षिणतश्च नान्दीघोषेण द्वादशतूर्यनिनादेन उपलक्षितो भाति, एवं भवति बहुश्रुतः । अयं भावः—यथैवंविधः शूरो न केनाप्यभिभूयते, न चान्यस्तदाश्रितस्तथायमपि जिनागमाश्वमाश्रितो दृप्त-परवादिदर्शनेपि चात्रस्तस्तज्जयम्प्रति समर्थ उभयतश्च दिनरात्र्योः स्वाध्यायघोषात्मकेन नान्दीघोषेणोपलक्षितो दृप्तैरपि परैर्न पराभूयते, न च तदाश्रितोन्योपीति सूत्रार्थः ॥ १७ ॥

मूलम्—जहा करेणुपरिकिण्णे, कुंजरे सट्ठिहायणे । बलवंते अप्पडिहए, एवं भवति बहुस्सुए ॥ १८ ॥

व्याख्या—यथा करेणुपरिकीर्णो हस्तिनीभिः परिवृत्तः कुञ्जरो हस्ती षष्टिहायनः षष्टिवर्षप्रमाणः तस्य ह्येतावत्कालं यावत्प्रतिवर्षं बलोपचयस्ततस्तदपचय इत्येवमुक्तं, अत एव च 'बलवंतेति' बलं वपुःसामर्थ्यमस्यास्तीति बलवान्, अप्रतिहतो न मदोत्कटैरपि परगजैः पराङ्मुखीक्रियते, एवं भवति बहुश्रुतः, सोपि हि करेणुभिरिव औत्पत्तिक्यादि-बुद्धिभिर्विविधविद्याभिश्च वृतः षष्टिहायनतया स्थिरमतिरत एव च बलवत्तया अप्रतिहतो भवति, न हि दर्शनोप-हन्तृभिः प्रतिहन्तुं शक्यत इति सूत्रार्थः ॥ १८ ॥

मूलम्—जहा से तिक्खसिंगे, जायखंधे विरायई । वसहे जूहाहिवई, एवं भवइ बहुस्सुए ॥ १९ ॥

व्याख्या—यथा स तीक्ष्णश्रृङ्गो निशितविषाणः जातोऽत्यन्तमुपचितः स्कन्धोस्येति जातस्कन्धः, समस्ताङ्गोपाङ्गो-पचयोपलक्षणञ्चैतत्, विराजते वृषभो यूथाधिपतिर्गोसमूहस्वामी सन्, एवं भवति बहुश्रुतः । सोपि परपक्षक्षोद-कतया तीक्ष्णाभ्यां स्वशास्त्रपरशास्त्ररूपाभ्यां श्रृङ्गाभ्यां शोभितो गच्छादिगुरुकार्यधुराधरणधुरीणतया च जातस्कन्ध इव जातस्कन्धः । अत एव यूथस्य साध्वादिसमूहस्याधिपतिराचार्यत्वं गतः सन् विराजते इति सूत्रार्थः ॥ १९ ॥

मूलम्—जहा से तिक्खदाढे, उदग्गे दुप्पहंसए । सीहे मिआण पवरे, एवं भवइ बहुस्सुए ॥ २० ॥

व्याख्या—यथा स तीक्ष्णदंष्ट्र उदग्र उत्कट अत एव 'दुप्पहंसएत्ति' दुष्प्रधर्षकोऽन्यैः पराभवितुमशक्यः सिंहः केसरी मृगाणामारण्यजन्तूनां प्रवरो भवति, एवं भवति बहुश्रुतः । अयमपि हि परपक्षभेदकत्वात्तीक्ष्णदंष्ट्रादेश्यैर्नै-गमादिनयैः प्रतिभादिगुणोदग्रतया च दुरभिभव इत्यन्यतीर्थ्यानां मृगतुल्यानां प्रवर एवेति सूत्रार्थः ॥ २० ॥

मूलम्—जहा से वासुदेवे, संखचक्कगदाधरे । अप्पडिहयबले जोहे, एवं भवइ बहुस्सुए ॥ २१ ॥

व्याख्या—यथा स वासुदेवः, शंखं पाञ्चजन्यं, चक्रं सुदर्शनं, गदां च कौमोदकीं, धरतीति शङ्खचक्रगदाधरः । अप्रतिहतबलः अस्खलितसामर्थ्यः, अयं भावः—एकं सहजसामर्थ्यवानन्यच तथाविधायुधान्वित इति योधः सुभटः, एव भवति बहुश्रुतः । सोपि ह्येकं सहजप्रतिभाप्रागल्भ्यवानपरञ्च शंखचक्रगदातुल्यैः सम्यग्ज्ञानदर्शनचारित्रैरुपेत इति योधः कर्मवैरी पराभवं प्रतीतीति सूत्रार्थः ॥ २१ ॥

मूलम्—जहा से चाउरंते, चक्कवट्टी महिड्ढिए । चउदसरयणाहिवई, एवं भवइ बहुस्सुए ॥ २२ ॥

व्याख्या—यथा स चतुर्भिर्हयगजरथनरात्मकैः सैन्यैरन्तः शत्रुविनाशरूपो यस्य स तथा, चक्रवर्त्ती षट्खण्डभराधिपो महर्द्धिको दिव्यलक्ष्मीवान्, चतुर्दश च तानि रत्नानि च चतुर्दशरत्नानि, तानि चामूनि—"सेणावइ १ गाहावई २, पुरोहि ३ गय ४ तुरय ५ वड्ढई ६ इत्थी ७। चक्कं ८ छत्तं ९ चम्मं १०, मणि ११ कागिणि १२ खग्ग १३ दंडो १४ अ। १। त्ति" तेषामधिपतिः स्वामी चतुर्दशरत्नाधिपतिः। एवं भवति बहुश्रुत, सोपि हि दानादिभिश्चतुर्भिर्धर्मैरन्तः कर्मवैरिणामस्येति चतुरन्तः, ऋद्धयश्चामर्षौषध्याद्या महत्य एवास्य भवन्ति, सम्भवन्ति च चतुर्दशरत्नोपमानि पूर्वाणि तस्येति सूत्रार्थः ॥ २२ ॥

मूलम्—जहा से सहस्सक्खे, वज्जपाणी पुरंदरे। सक्के देवाहिवई, एवं भवई बहुस्सुए ॥ २३ ॥

व्याख्या—यथा सहस्राक्षः सहस्रलोचनः, कथमिति चेदुच्यते, इन्द्रस्य हि पंच मंत्रिशतानि तन्नेत्राणां च सहस्रं इन्द्रकार्य एव व्याप्रियते इति, यद्वा यदन्ये नेत्राणां सहस्रेण पश्यन्ति तदसौ द्वाभ्यां नेत्राभ्यां साधिकं पश्यतीति सहस्राक्ष इत्युच्यते, इति सम्प्रदायः। तथा वज्रं प्रहरणविशेषः पाणावस्येति वज्रपाणिः, लोकोक्त्या च असुराणां पूर्दारणात् पुरन्दरः, शक्रो देवाधिपतिरेवं भवति बहुश्रुतः। सोपि श्रुतज्ञानेन सकलातिशयनिधानेन लोचनसहस्रेणेव जानीते, ईदृशस्य च प्रशस्तलक्षणतया वज्रलक्षणमपि पाणौ सम्भवतीति वज्रपाणिः, पूः शरीरमप्युच्यते तच्च दुस्तपतपोनुष्ठानेन दारयति कृशीकरोतीति पुरन्दरः, दृढधर्मतया चायं सुरैरपि पूज्यत इति तत्पतिरप्युच्यत इति सूत्रार्थः ॥ २३ ॥

मूलम्—जहा से तिमिरविद्धंसे, उत्तिट्ठंते दिवायरे। जलंते इव तेएणं, एवं भवइ बहुस्सुए ॥ २४ ॥

व्याख्या—यथा स तिमिरविध्वंसस्तमःस्तोमविनाशकः उत्तिष्ठन्नुद्गच्छन् दिवाकरः सूर्यः, स हि ऊर्द्ध्वं नभोभागमाक्रामन् भृशं तेजस्वितां भजते न त्ववतरन्नित्येवं विशिष्यते, ज्वलन्निव ज्वालां मुञ्चन्निव तेजसा महसा, एवं भवति बहुश्रुतः। सोपि हि अज्ञानध्वान्तविध्वंसी संयमस्थानेषु शुद्धशुद्धतमाद्यध्यवसायत उत्सर्पंस्तपस्तेजसा ज्वलन्निव भवतीति सूत्रार्थः ॥ २४ ॥

मूलम्—जहा से उडुवइ चंदे, नक्खत्तपरिवारिए। पडिपुण्णे पुण्णमासीए, एवं भवइ बहुस्सुए ॥२५॥

व्याख्या—यथा स पौर्णमास्याः पूर्णिमायाः उडुपतिर्नक्षत्राधिपश्चन्द्रो नक्षत्रैरश्विन्यादिभिरुपलक्षणत्वाद्ग्रहतारकाभिश्च परिवारितः, पतिरपि कश्चिदेकाक्येव स्यान्मृगपतिवदिति उडुपतिरित्युक्तेऽपि नक्षत्रपरिवारित इत्युक्तं, प्रतिपूर्णः सकलकलाकलितः, एवं भवति बहुश्रुतः। सोपि नक्षत्रकल्पानां साधूनां पतिस्तत्परिवारितः सकलकलाकलितत्वेन प्रतिपूर्णश्च स्यादिति सूत्रार्थः ॥ २५ ॥

मूलम्—जहा से सामाइआणं, कोट्ठागारे सुरक्खिए। नाणाधन्नपडिपुण्णे, एवं भवइ बहुस्सुए ॥ २६ ॥

व्याख्या—यथा स 'सामाइआणंति' समाजं समूहं समवयन्तीति सामाजिकाः समूहवृत्तयो लोकास्तेषां कोष्ठागारो धान्याश्रयः सुष्ठु प्राहरिकपुरुषादिव्यापारणद्वारेण रक्षितश्चौरमूषकादिभ्य इति सुरक्षितः, नाना अनेकप्रकाराणि धान्यानि शाल्यादीनि तैः प्रतिपूर्णो भृतो नानाधान्यप्रतिपूर्णः, एवं भवति बहुश्रुतः। सोपि सामाजिकानामिव गच्छवासिनामुपयोगिभिर्नानाधान्योपमैरङ्गोपाङ्गप्रकीर्णकादिभेदैः श्रुतज्ञानविशेषैः प्रतिपूर्णः प्रवचनाधारतया सुरक्षितश्च परवादिरोगादिभ्यो भवति। उक्तं हि—"जेण कुलं आयत्तं, तं पुरिसं आयरेण रक्खेह ॥ न हु तुंबंमि विणट्ठे, अरया साहारया हुंति। १। त्ति" सूत्रार्थः ॥ २६ ॥

मूलम्—जहा सा दुमाण पवरा, जंबू नाम सुदंसणा। अणाढिअस्स देवस्स, एवं भवइ बहुस्सुए ॥२७॥

व्याख्या—यथा सा द्रुमाणां प्रवरा जम्बूर्नाम्नाभिधानेन सुदर्शना, न हि यथेयममृतफला देवाद्याश्रयश्च तथान्यः कोपि द्रुमोस्ति, द्रुमत्वं फलव्यवहारश्चास्यास्तत्प्रतिरूपतयैव, वस्तुतस्तु पार्थिवतयोक्तत्वात्, सा च कस्येत्याह—अनादृतस्य अनादृतनाम्नो देवस्य जम्बूद्वीपाधिपतेर्व्यन्तरसुरस्य आश्रयतया सम्बन्धिनी, एवं भवति बहुश्रुतः। सोपि हि अमृतफलोपमश्रुतान्वितो देवानामपि पूज्यतयाभिगम्यः शेषद्रुमोपमसर्वसाधुषु च प्रवर इति सूत्रार्थः ॥ २७ ॥

मूलम्—जहा सा नईण पवरा, सलिला सागरंगमा। सीआ नीलवंतप्पवहा, एवं भवइ बहुस्सुए ॥२८॥

व्याख्या—यथा सा नदीनां प्रवरा सलिला नदी सागरं समुद्रं गच्छतीति सागरङ्गमा समुद्रपातिनी, न तु क्षुद्रनदीवदन्तरा विशीर्यते इत्यर्थः। शीता नाम्नी नीलवान्मेरोरुत्तरदिशि वर्षधरस्ततः प्रवहतीति नीलवत्प्रवहा, एवं भवति बहुश्रुतः। सोपि हि सरित्समानामन्यमुनीनां वरेण्यो निर्मलजलकल्पश्रुतज्ञानान्वितः सागरदेश्यां मुक्तिमेव

गच्छति, तदर्हानुष्ठान एव तस्य प्रवृत्तेः। न हि तस्य विवेकिनो देवत्वादिवाञ्छा, तथा च कथमस्यान्तरावस्थानं स्यात् ? तस्य च महाभागस्य नीलवत्कल्पादुच्छ्रितोच्छ्रितकुलादेव प्रसूतिरिति सूत्रार्थः ॥ २८ ॥

मूलम्—जहा से नगाण पवरे, सुमहं मंदरे गिरी। नाणोसहिपज्जलिए, एवं भवइ बहुस्सुए ॥ २९ ॥

व्याख्या—यथा स नगानां प्रवरः सुमहानत्यन्तं गुरुर्मन्दरो गिरिर्मेरुपर्वतः नानौषधिभिरनेकसमहिमवनस्पतिभिः प्रकर्षेण ज्वलितो दीप्तो नानौषधिप्रज्वलितः, औषधयो ह्यतिशायिन्यो दीपिका इव प्रज्वलन्त्य एव स्युस्ततो गिरिरपि प्रज्वलन्निव स्यात्, एवं भवति बहुश्रुतः। सोपि श्रुतमहिम्नात्यन्तं स्थिरोऽपरशैलकल्पान्यसाध्वपेक्षया प्रवरोऽन्धकारेऽपि प्रकाशनिदानामर्पौषध्यादिलब्धिसहितश्च स्यादिति सूत्रार्थः ॥ २९ ॥ किं बहुना ?—

मूलम्—जहा से सयंभुरमणे, उदही अक्खओदए। नाणारयणपडिपुण्णे, एवं भवइ बहुस्सुए ॥ ३० ॥

व्याख्या—यथा स स्वयम्भूरमण उदधिः समुद्रः, अक्षयमविनाशी उदकं जलं यत्र स, तथा नानारत्नैर्मरकतादिभिः प्रतिपूर्णो नानारत्नप्रतिपूर्णः, एवं भवति बहुश्रुतः। सोपि ह्यक्षयसम्यग्ज्ञानोदको नानातिशयरत्नाढ्यश्च भवतीति सूत्रार्थः ॥ ३० ॥ अथोक्तगुणानुवादेन फलोपदर्शनेन च तस्यैव माहात्म्यमाह—

मूलम्—समुद्दगंभीरसमा दुरासया, अचक्किआ केणई दुप्पधंसया।
सुअस्स पुण्णा विउलस्स ताइणो, खवित्तु कम्मं गइमुत्तमं गया ॥ ३१ ॥

व्याख्या—'समुद्दगंभीरसमत्ति' आर्षत्वाद्गाम्भीर्येणालब्धमध्यात्मकेन गुणेन समा गाम्भीर्यसमाः, समुद्रस्य गाम्भीर्यसमाः समुद्रगाम्भीर्यसमाः, समुद्रवद्गम्भीरा इत्यर्थः। 'दुरासयत्ति' दुःखेनाश्रीयन्ते पराभवबुद्ध्या केनापीति दुराश्रयाः, अत एवाचकिता अत्रस्ताः केनचित् परीषहपरवाद्यादिना, तथा दुःखेन प्रधर्ष्यन्ते केनापीति दुष्प्रधर्षकाः, 'सुअस्स पुण्णा विउलस्सत्ति' सुप्व्यत्ययात् श्रुतेनागमेन पूर्णा भृता विपुलेन अङ्गानङ्गप्रविष्टादिभेदैर्विस्तीर्णेन बहुश्रुता इत्यर्थः। त्रायिण' त्रातारः, स्वस्य परस्य दुर्गतिपातााद्यपायेभ्यः। क्षपयित्वा विनाश्य कर्म ज्ञानावरणादि गतिमुत्तमां मुक्तिरूपां गताः प्राप्ता उपलक्षणत्वाद्गच्छन्ति गमिष्यन्ति च। इहैकवचनप्रक्रमेपि बहुवचननिर्देशो व्याप्तिप्रदर्शनार्थेति सूत्रार्थः ॥ ३१ ॥ इत्थं बहुश्रुतगुणवर्णनरूपां पूजामुक्त्वा शिष्योपदेशमाह—

मूलम्—तम्हा सुअमहिट्ठिज्जा, उत्तिमट्ठगवेसए। जेणप्पाणं परं चेव, सिद्धिं संपाउणिज्जासित्ति बेमि ॥३२॥

व्याख्या—'तम्हत्ति' यस्मादमी मुक्तिगमनावसाना बहुश्रुतस्य गुणास्तस्मात् श्रुतमागममधितिष्ठेत्, अध्ययनश्रवणचिन्तनादिना श्रयेत, उत्तमः प्रधानोऽर्थो मोक्ष एव तं गवेषयत्यन्वेषयतीत्युत्तमार्थगवेषकः, येन श्रुताश्रयणेनात्मानं परञ्चैव सिद्धिं मुक्तिं सम्प्रापयेदिति सूत्रार्थः ॥ ३२ ॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ एकादशमध्ययनं सम्पूर्णम् ॥ ११ ॥

## ॥ अथ द्वादशमध्ययनम् ॥

॥ अर्हम् ॥ उक्तमेकादशमध्ययनमधुना हरिकेशबलमुनिवक्तव्यतानिबद्धं हरिकेशीयाख्यं द्वादशमारभ्यते। अस्य चायमभिसम्बन्धः, इहानन्तराध्ययने बहुश्रुतपूजोक्ता, इह तु बहुश्रुतेनापि तपसि यतनीयमिति ख्यापनार्थं तपःसमृद्धिर्वर्ण्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य प्रस्तावनार्थं हरिकेशबलचरितं तावदुच्यते। तथा हि—

मथुरायां महापुर्यां, शंखनामा महीधवः ॥ भुक्त्वा राज्यं विरक्तात्मा, परिव्रज्यामुपाददे ॥ १ ॥ क्रमाद्गीतार्थतां प्राप्तो, विहरन् वसुधातले ॥ सोगाद्गजपुरं भिक्षा-निमित्तं तत्र चाविशत् ॥ २ ॥ एका रथ्या हुतवह- रथाह्वा तत्र चाभवत् ॥ सा हि ग्रीष्मार्कसन्तप्ता, तप्तायस्पात्रतां दधौ ॥ ३ ॥ ताञ्चातिगन्तुं पादाभ्यां, मुर्मुरोपमवालुकाम् ॥ नाभूत्कोपि प्रभुर्वज्र-वालुकामिव निम्नगाम् ॥ ४ ॥ यश्चाज्ञानाज्जनस्तस्यां, रथ्यायां प्रविशेत्तदा ॥ स द्राक् म्रियेत चनको, भृज्यमान इवोच्छलन् ॥ ५ ॥ ताञ्च प्राप्तो भ्रमन् साधुर-सञ्चारां समीक्ष्य सः ॥ पप्रच्छासन्नसौधस्थं, सोमदेवपुरोधसम् ॥ ६ ॥ मार्गेणानेन गच्छामि, न वेति वद सन्मते ! ॥ न ह्यज्ञातस्वरूपेणा-ध्वना गच्छन्ति धीधनाः ॥ ७ ॥ दन्दह्यमानं मार्गेऽस्मिन्, विलुठन्तमितस्ततः ॥ पश्याम्येनमिति द्विष्टः, सोप्यूचे गम्यतामिति ॥ ८ ॥ ततस्तेनैव मार्गेण, गन्तुं प्रववृते व्रती ॥ तन्महिम्ना स मार्गोऽभू-त्सलिलादपि शीतलः ॥ ९ ॥ पुरोहितोपि तं द्रष्टु-मारोह-

द्गेहकुट्टिमम् ॥ तच्चोपयुक्तं तत्रापि, यान्तमद्भुतमैक्षत ॥ १० ॥ ततः स विस्मितो विप्र–स्तस्मिन्मार्गे ययौ स्वयम् ॥ तुषारशीतलस्पर्शं, तच्च वीक्ष्येत्यचिन्तयत् ॥ ११ ॥ पापेन पापकर्मेदं, किमहो विहितं मया ! ॥ करीषाग्निसमस्पर्शे, मार्गेसौ यत्प्रवेशितः ॥ १२ ॥ अहो ! अस्य तपः शक्ति–र्यद्ध्वा तादृशोप्यसौ ॥ सुधारसैः सिक्त इव, प्राप शैत्यं वचोतिगम् ! ॥ १३ ॥ तस्मान्महाप्रभावोयं, महात्मा श्रमणाग्रणीः ॥ वन्दनीयो जगद्वन्द्यः, शमामृतमहोदधिः ॥ १४ ॥ इति ध्यात्वा नवाम्भोद–सिक्तस्तापमिवाचलः ॥ उद्गिरन् स्वमनाचार–मनमत्तं मुनिं द्विजः ॥ १५ ॥ ततस्तस्मै शंखसाधुः, साधुधर्ममुपादिशत् ॥ तदाकर्ण्योरुवैराग्यः, पर्यव्राजीत्पुरोहितः ॥ १६ ॥ जातिरूपमदौ चक्रे, स व्रतं पालयन्नपि ॥ मदो हि प्राणिनां मत्त– गजेन्द्र इव दुर्जयः ॥ १७ ॥ तौ च प्रान्तेप्यनालोच्य, मदौ मृत्वा दिवङ्गतः ॥ समं सुरीभिर्बुभुजे, भोगान् पुण्यद्रुपल्लवान् ॥ १८ ॥ [ इतश्च ]

मृतगङ्गातीरवासी, श्वपचानामधीश्वरः ॥ बलकोट्टाख्यजातीनां, बलकोट्टाभिधोऽभवत् ॥ १९ ॥ तस्याभूतामुभे गौरी–गान्धारीसंज्ञके प्रिये ॥ सोथ देवश्च्युतः स्वर्गा–द्गौर्याः कुक्षाववातरत् ॥ २० ॥ वसन्तसङ्गसम्भूत–प्रभूतनवपल्लवम् ॥ स्वप्ने गौरी तदाऽपश्य–त्सहकारमहीरुहम् ॥ २१ ॥ तथा पृष्टः स्वप्नफल–मित्यूचे स्वप्नपाठकः ॥ स्वप्नेनानेन भद्रे ! त्वं, सुतं श्रेष्ठमवाप्स्यसि ॥ २२ ॥ साथ तुष्टा दधौ गर्भ–मर्भञ्च सुषुवे क्रमात् ॥ बलकोट्टस्ततस्तस्य, बल इत्यभिधां व्यधात् ॥ २३ ॥ स हि जातिमदात्प्राच्या–ल्लेभे जन्माधमे कुले ॥ रूपदर्पाच्च वैरूप्यं, स्वेषामपि विषादकृत् ! ॥ २४ ॥ स च भण्डनशीलोऽन्या–सहनः कटुवाक्पटुः ॥ उद्वेजकोऽभूत्सर्वेषां, वर्धमानो विषद्रुवत् ॥ २५ ॥ स्वजनेष्वन्यदाऽऽपान–गोष्ठीस्थेषु मधूत्सवे ॥ डिम्भरूपैः समं भण्ड–चेष्टां चक्रे मुहुर्बलः ॥ २६ ॥ ततः स सर्वैरापाना–द्भोजनादिव कुन्तलः ॥ बहिष्कृतो बलो बालो, बाढं दुरमनायत ॥ २७ ॥ तदा च निर्गतस्तत्रा–ञ्जनपुञ्जद्युतिः फणी ॥ जघ्ने द्राक् श्वपचैर्दुष्ट–विषोऽयमिति भाषिभिः ॥ २८ ॥ क्षणान्तरे च तत्रागा–न्नागो दीपकजातिजः ॥ मुमुचे स तु चाण्डालै–र्निर्विषोयमिति स्वयम् ॥ २९ ॥ तन्निरीक्ष्य बलो दध्यौ, स्वदोषैरेव जन्तवः ॥ लभन्ते विपदं स्वीय–गुणैरेव च सम्पदम् ॥ ३० ॥ सदोषत्वादेव सर्वे, बाधन्ते बन्धवोपि माम् ॥ त्यज्यते मलवत्प्राज्ञै–र्दोषवानङ्गजोपि हि ॥ ३१ ॥ मारितः सविषः सर्पो, निर्विषस्तु न मारितः ॥ तद्दोषविषमुत्सृज्य, निर्विषत्वं श्रयाम्यहम् ॥ ३२ ॥ ध्यायन्नित्यादि तत्कालं, प्राप्तो जातिस्मृतिं बलः ॥ नरदेवभवौ प्राच्यौ, स्मृत्वा संवेगमासदत् ॥ ३३ ॥ अहो ! मदस्य दुष्टत्व–मिति चान्तर्विभावयन् ॥ मुनीनामन्तिके धर्मं, श्रुत्वा व्रतमुपाददे ॥ ३४ ॥ तप्यमानस्तपस्तीव्रं, विहरन् सोन्यदा ययौ ॥ वाराणसीं पुरीं धर्म–विहङ्गममहाद्रुमः ॥ ३५ ॥ तत्राभूत्तिन्दुकोद्याने, गण्डीतिन्दुकयक्षराट् ॥ तमनुज्ञाप्य तच्चैत्ये, तस्थौ स्वस्थमना मुनिः ॥ ३६ ॥ तञ्च प्रेक्ष्य गुणाम्भोधिं, यक्षस्तत्रान्वरज्यत ॥ परोपि भ्रियते हार, इव चारुगुणो हृदि ॥ ३७ ॥ सेवमानो मुनिं तञ्चा–निशं हंस इवाम्बुजम् ॥ कदाचिदपि नान्यत्र, यक्षराजो जगाम सः ॥ ३८ ॥ तत्रायातोन्यदा यक्षः, कश्चिदन्यवनस्थितः ॥ नाधुना दृश्यसे किं त्व–मिति पप्रच्छ तिन्दुकम् ॥ ३९ ॥ महात्मानममुं साधुं, सेवे मित्राहमन्वहम् ॥ इति सम्प्रति तेऽभ्यर्णं, नागच्छामीति सोप्यवक् ॥ ४० ॥ सोथ तच्चरितं वीक्ष्य, सम्बुद्धस्तिन्दुकं जगौ ॥ कृतार्थस्त्वं यदुद्याने, वसत्येष महामुनिः ॥ ४१ ॥ ममोद्यानेपि यतयः, सन्ति भूयांस ईदृशाः ॥ तदेहि तत्र गच्छावो, भजावस्तानपि क्षणम् ॥ ४२ ॥ तिन्दुकोथ ययौ तेन, यक्षेण सह तद्वनम् ॥ विकथानिरतांस्तांश्च, निरीक्ष्यैवमभाषत ॥ ४३ ॥ स्त्रीभक्तराजदेशानां, जायन्त इह सत्कथाः ॥ रम्यं महर्षिणा तेन, याममस्तिन्दुकमेव तत् ॥ ४४ ॥ सुकरं मुण्डमौलित्वं, सुकरं वेषधारणम् ॥ बाह्या क्रियापि सुकरा, समाधानं तु दुष्करम् ! ॥ ४५ ॥ इत्युक्त्वा स प्रतिगत–स्तत्रैवारज्यताधिकम् ॥ आम्रमिष्टतरं निम्बे, ह्यनुभूते भवेद्भृशम् ॥ ४६ ॥ अहो ! धर्मस्य माहात्म्यं, यदाराध्योपि भूस्पृशाम् ॥ यक्षः सिषेवे तं साधु–मपि श्वपचवंशजम् ! ॥ ४७ ॥ राज्ञः कौशलिकाख्यस्य, सुता भद्राभिधाऽन्यदा ॥ ययौ पूजयितुं यक्षं, तच्चैत्ये सपरिच्छदा ॥ ४८ ॥ सा प्रदक्षिणयन्ती च, यक्षं तं मुनिमैक्षत ॥ मलाप्लुतवपुर्वस्त्रं, कुरूपं शुष्कभूषनम् ॥ ४९ ॥ अहो ! निन्द्यस्वरूपोसौ, सर्वथापीति सा ततः ॥ थूचकार विमूढा हि, तत्वं पश्यन्ति नान्तरम् ॥ ५० ॥ ततो रुष्टेन यक्षेण, सा कनी विवशीकृता ॥ असमञ्जसमाख्यातु–मारेभे दुष्टचेष्टिता ॥ ५१ ॥ सा विषण्णेन तंत्रेण, निन्ये नृपनिकेतनम् ॥ नृपोपि तां तथा वीक्ष्य, विषादाद्वैतमासदत् ॥ ५२ ॥ राज्ञाथ कारिता वैद्य–मांत्रिकादिप्रतिक्रियाः ॥ मोघास्तत्राभवन् सर्वाः, सत्क्रिया इव दुर्जने ॥ ५३ ॥ किङ्कर्तव्यवि-

मूढेऽथ, जाते राज्ञि सधीसखे ॥ पात्रमेकमधिष्ठाय, यक्षोऽप्यक्षमदोवदत् ॥ ५४ ॥ निन्दा निदानं दुःखानां, यन्मुने-र्निर्मितानया ॥ तद्यदीयं दीयतेऽस्मै, तदा मुञ्चामि नान्यथा ॥ ५५ ॥ जीवत्वसाविति क्ष्मापः, प्रत्यपद्यत तद्वचः ॥ ततः सा सुस्थतां प्राप, तमोमुक्तेव चन्द्रिका ॥ ५६ ॥ साथ राज्ञाभ्यनुज्ञाता, सतंत्रागात्सुरालयम् ॥ महत्तरीभि-श्चादिष्टा, निश्यगान्मुनिसन्निधौ ॥ ५७ ॥ तत्र साधुं प्रणम्योचे, स्वामिन्! पाणिं गृहाण मे ॥ स्माह व्रती कृतं भद्रे!, वार्त्तयाप्यनया मया! ॥ ५८ ॥ न ये स्त्रीभिः सहेच्छन्ति, वासमप्येकसद्मनि ॥ कुर्वन्ति पाणिग्रहणं, तासां ते श्रमणाः कथम्? ॥ ५९ ॥ नारीष्वशुचिपूर्णासु, मुक्तिस्त्रीसङ्गमोत्सुकाः ॥ ग्रैवेयकादिसुख-द्रज्यन्ते नो महर्षयः! ॥ ६० ॥ श्रुत्वेति वलमाना सा, व्यूढा यक्षेण सक्रुधा ॥ आच्छाद्य शमिनो रूपं, रूपान्तरविधायिना ॥६१॥ मुहुर्मुहुर्मुने रूपं, दिव्यं रूपञ्च दर्शयन् ॥ यक्षो विडम्बयामास, तां कनीमखिलां निशाम् ॥ ६२ ॥ प्रभाते च मुनिर्न त्वा-मिच्छतीत्यामरं वचः ॥ श्रुत्वा सा विमनास्तात-गेहेऽगात्सपरिच्छदा ॥ ६३ ॥ ताञ्चायान्तीं वीक्ष्य रक्तो, रुद्रदेवपुरोहितः ॥ ज्ञाततत्पूर्ववृत्तान्तः, पृथ्वीकान्तमदोऽवदत् ॥ ६४ ॥ स्वामिन्नसौ मुनिवधू-स्त्यक्ता तेनेति साम्प्रतम् ॥ द्विजानां कल्पते देवा-र्चकानामिव तद्बलिः ॥६५॥ युज्यतेऽथैवमेवेति, ध्यात्वा भूपोपि तां कनीम् ॥ तस्मायेव ददौ गौरी-मिवेशाय हिमाचलः ॥ ६६ ॥ मुनिवान्तामपि प्राप्य, तां जहर्ष पुरोहितः ॥ क्षुद्रो ह्यसारम-प्याप्य, वस्तु श्वेवास्थि मोदते! ॥ ६७ ॥ अथ भोगसुखं तया समं, बुभुजे भूरि मुदा पुरोहितः ॥ स च यज्ञवधूं विधाय तां, नृपपुत्रीं मखमन्यदा व्यधात् ॥ ६८ ॥ इत्युक्तः सम्प्रदायः । सम्प्रदायशेषं तु सूत्रसिद्धमिति सम्प्रति सूत्रमेवानुस्रियते । तच्चेदम्—

मूलम्—सोवागकुलसंभूओ, गुणुत्तरधरो मुणी । हरिएसबलो नामं, आसि भिक्खू जिइंदिओ ॥ १ ॥

व्याख्या—श्वपाककुलं चाण्डालवंशस्तत्र सम्भूत उत्पन्नः श्वपाककुलसम्भूतः, उत्तरान् प्रकृष्टान् गुणान् ज्ञानादीन् धरतीति उत्तरगुणधरः, सूत्रे तु पूर्वापरनिपातः प्राकृतत्वात्, मुनिः साधुः, श्वपाककुलोत्पन्नोपि कश्चित्संवासादिना पूर्वं मेतार्य इवान्यथापि प्रतीतः स्यादत आह—हरिकेशो हरिकेश इति चाण्डाल इति सर्वत्र प्रतीतो बलो नाम बलाभिधः, आसीद्भिक्षुर्जितेन्द्रिय इति सूत्रार्थः ॥ १ ॥ स कीदृशः किञ्च चकारेत्याह—

मूलम्—इरिएसणभासाए, उच्चारेसमिईसु अ । जओ आयाणनिक्खेवे, संजओ सुसमाहिओ ॥ २ ॥

व्याख्या—ईर्या च एषणा च भाषा च उच्चारश्च ईर्येषणाभाषोच्चाराः, एकारस्तूभयत्रापि सूत्रेऽलाक्षणिकः । तत्रोच्चारः पुरीषं, तत् परिष्ठापनमपीहोच्चार उक्तः, उपलक्षणश्चैतत् प्रश्रवणादिपरिष्ठापनस्य, तद्विषयाः समितयः सम्यक्प्रवर्तनरूपा ईर्येषणाभाषोच्चारसमितयस्तासु यतो यत्नवान् । प्राग्वच्चशब्दस्य भिन्नक्रमत्वादादाननिक्षेपे च पीठफलकादिग्रहणस्थापने च यतः । किम्भूतः सन्नित्याह— संयतः संयमयुक्तः, सुसमाहितः सुष्ठु समाधि-मानिति सूत्रार्थः ॥ २ ॥

मूलम्—मणगुत्तो वयगुत्तो, कायगुत्तो जिइंदिओ । भिक्खट्ठा बंभइज्जंमि, जण्णवाडमुवट्ठिओ ॥ ३ ॥

व्याख्या—मनो गुप्तमशुभाध्यवसायेभ्यो निवृत्तमस्येति मनोगुप्तः, एवं वाग्गुप्तः, कायगुप्तश्च, जितेन्द्रियः पुन-रस्योपादानमतिशयख्यापकं, 'भिक्खट्ठत्ति' भिक्षार्थं 'बंभइज्जंमित्ति' ब्रह्मणां ब्राह्मणानां इज्या यजनं यस्मिन् स ब्रह्मेज्यस्तस्मिन्, 'जण्णवाडंति' यज्ञपाटे उपस्थितः प्राप्त इति सूत्रार्थः ॥ ३ ॥ तदा च—

मूलम्—तं पासिऊणमेज्जंतं, तवेण परिसोसिअं । पंतोवहिउवगरणं, उवहसंति अणारिआ ॥ ४ ॥

व्याख्या—तं बलमुनिं 'पासिऊणंति' दृष्ट्वा 'एज्जंतंति' आयान्तं, तपसा षष्ठाष्टमादिना परिशोषितं कृशीकृतं, तथा प्रान्तो जीर्णत्वमालिन्यादिना असार उपधिर्वर्षाकल्पादिरौघिकः, उपकरणञ्च दण्डकादि औपग्रहिकं यस्य स प्रान्तोपध्युपकरणस्तं, उपहसन्त्यनार्या अशिष्टा इति सूत्रार्थः ॥ ४ ॥ कथं पुनरनार्याः कथञ्चोपाहसन्नित्याह—

मूलम्—जाईमयपडिथद्धा, हिंसगा अजिइंदिआ । अबंभचारिणा बाला, इमं वयणमब्बवी ॥ ५ ॥

व्याख्या—जातिमदेन ब्राह्मणा वयमित्यादिरूपेण प्रतिस्तब्धाः जातिमदप्रतिस्तब्धाः, हिंसकाः प्राणिप्राणापहारिणः, अजितेन्द्रियाः, अत एव अब्रह्मचारिणो मैथुनसेविनः । वर्ण्यते हि तन्मते मैथुनमपि धर्माय—"धर्मार्थं पुत्रकामस्य, स्वदारे-ष्वधिकारिणः ॥ ऋतुकाले विधानेन, तत्र दोषो न विद्यते ॥ १ ॥" तथा "अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च ॥

तस्मात्पुत्रमुखं दृष्ट्वा, पश्चात्स्वर्गं गमिष्यति ॥ २ ॥" इत्यादिकथनादत एव बाला बालक्रीडाकल्पेष्वग्निहोत्रादिषु प्रवृत्तत्वात्, इदं वक्ष्यमाणं वचनं 'अब्बविंत्ति' अब्रुवन्निति सूत्रार्थः ॥ ५ ॥ किं तदित्याह–

मूलम्—कयरे आगच्छइ दित्तरूवे, काले विकराले फोक्कनासे ।
ओमचेलए पंसुपिसायभूए, संकरदूसं परिहरिअ कंठे ॥ ६ ॥

व्याख्या—'कयरेत्ति' कतरः, एकारः प्राकृतत्वात्, आगच्छति, दीप्तरूपो बीभत्साकारः, कालो वर्णतः, विकरालो दन्तुरत्वादिना भीषणः, 'फोकत्ति' देशीपदं, ततश्च फोका अग्रे स्थूला उन्नता च नासाऽस्येति फोक्कनासः। अवमचेलो निकृष्टचीवरः, पांशुना रेणुना पिशाच इव भूतो जातः पांशुपिशाचभूतः, पिशाचो हि लोके दीर्घश्मश्रुनखरोमा, पांशुगुण्डितश्च रूढस्ततः सोपि निष्प्रतिकर्मतया रजोदिग्धतया चैवमुच्यते। तथा 'संकरदूसंति' संकरस्तृणभस्मगोमयादिराशिरुत्कुरुडिकेतियावत्, तस्य दूष्यं वस्त्रं संकरदूष्यं, तत्र हि यदतीवनिकृष्टं निरुपयोगि स्यात्तदेव लोकैरुत्सृज्यते, ततस्तत्प्रायं वस्त्रं परिधृत्य निक्षिप्य कण्ठे गले। स हि अनिक्षिप्तोपधितया स्वमुपकरणमादायैव भ्रमतीत्येवमुक्तमिति सूत्रार्थः ॥ ६ ॥ इत्थं दूरादागच्छन्नुक्तः, आसन्नं चैनं किमूचुरित्याह–

मूलम्—कयरे तुमं इअ अदंसणिज्जे, का एव आसा इह मागओसि ।
ओमचेलगा पंसुपिसायभूआ, गच्छ खलाहि किमिह ट्ठिओसि ? ॥ ७ ॥

व्याख्या—कतरस्त्वं [ पाठान्तरे च 'को रे !' त्वं ? तत्राधिक्षेपे 'रे' शब्दः ] 'इअत्ति' इति अमुना प्रकारेणादर्शनीयोऽद्रष्टव्यः, 'का एवत्ति' कया वा 'आसाइहमागओसित्ति' प्राकृतत्वादेकारलोपो मकारश्चागमिकस्तत आशया वाञ्छया इह यज्ञपाटे आगतः प्राप्तोसि वर्त्तसे ? अवमचेलक ! पांशुपिशाचभूत ! पुनरनयोर्ग्रहणमत्यन्तनिन्दासूचकं, गच्छ व्रज 'खलाहित्ति' देशीभाषया अपसर अस्मद्दृष्टिपथादिति शेषः। किमिह स्थितोसि त्वं ? नैवेह त्वया स्थेयमिति सूत्रार्थः ॥ ७ ॥ एवमधिक्षिप्ते साधौ शान्ततया किञ्चिदजल्पति तत्सान्निध्यकारी गण्डीतिन्दुकयक्षो यच्चक्रे तदाह–

मूलम्—जक्खो तहिं तिंदुअरुक्खवासी, अणुकंपओ तस्स महामुणिस्स ।
पच्छायइत्ता निअयं सरीरं, इमाइं वयणाइं उदाहरित्था ॥ ८ ॥

व्याख्या—यक्षः 'तहिंति' तस्मिन्नवसरे इति शेषः, तिन्दुकवृक्षवासी, तिन्दुकवनमध्ये हि महांस्तिन्दुकवृक्षस्तत्रासौ वसति, तस्यैव च तरोरधस्ताच्चैत्यं, तत्र स यतिस्तिष्ठतीति वृद्धाः। अनुकम्पकोऽनुकूलप्रवृत्तिः, कस्येत्याह– तस्य हरिकेशबलस्य महामुनेः, प्रच्छाद्य आवृत्य निजकं स्वकीयं शरीरं मुनिदेह एव प्रविश्य स्वयमनुपलक्ष्यः सन्नित्यर्थः, इमानि वक्ष्यमाणानि वचनानि 'उदाहरित्थत्ति' उदाहृतवानिति सूत्रार्थः ॥ ८ ॥ तान्येवाह–

मूलम्—समणो अहं संजओ बंभयारी, विरओ धणपयणपरिग्गहाओ ।
परप्पवित्तस्स उ भिक्खकाले, अन्नस्स अट्ठा इह मागओम्हि ॥ ९ ॥

व्याख्या—श्रमणः साधुरहं, संयतः सम्यगुपरतः पापव्यापारेभ्य इति शेषः, अत एव ब्रह्मचारी, तथा विरतो निवृत्तो धनपचनपरिग्रहात्, तत्र धनं चतुष्पदादि, पचनमाहारपाकः, परिग्रहो द्रव्यादिमूर्च्छा, अत एव परस्मै परार्थं प्रवृत्तं निष्पन्नं परप्रवृत्तं, तुशब्दोऽवधारणे, ततः परप्रवृत्तस्यैव, न तु मदर्थं निष्पन्नस्य, भिक्षाकाले अन्नस्य अशनस्य 'अट्ठत्ति' अर्थाय इह यज्ञपाटे आगतोस्मीति सूत्रार्थः ॥ ९ ॥ अथ ते कदाचिदित्थं ब्रूयुर्यन्नात्र किञ्चित्कस्मैचिद्दीयत इत्याह–

मूलम्—विअरिज्जइ खज्जइ भुज्जइ अ, अन्नं पभूअं भवयाणमेअं ।
जाणाह मे जायणजीविणोत्ति, सेसावसेसं लहऊ तवस्सी ॥ १० ॥

व्याख्या—वितीर्यते दीयते दीनादिभ्यः, खाद्यते खण्डखाद्यादि, भुज्यते च भक्तसूपादि, अन्नमशनं, प्रभूतं भूरि, भवतां युष्माकं सम्बन्धि, एतत्प्रत्यक्षं। तथा जानीतावगच्छत 'मेत्ति' मां 'जायणजीविणोत्ति' याचनजीवितं याचनेन जीवनशीलं, सूत्रे च द्वितीयार्थे षष्ठी, इत्यतो हेतोः शेषावशेषमुद्धरितादप्युद्धरितं, अन्तप्रान्तमित्यर्थः,

क्षमता तपस्वी यतिरिति सूत्रार्थः ॥ १० ॥ इति यक्षेणोक्ते द्विजा एवं स्माहुः—

मूलम्—उवक्खडं भोअण माहणाणं, अत्तट्ठिअं सिद्धमिहेगपक्खं ।
न हु वयं एरिसमन्नपाणं, दाहामु तुब्भं किमिहं ठिओसि ? ॥ ११ ॥

व्याख्या—उपस्कृतं संस्कृतं भोजनं माहनानां ब्राह्मणानां 'अत्तट्ठिअंति' आत्मार्थे भवं आत्मार्थिकं, ब्राह्मणैरपि स्वयमेव भोज्यं न त्वन्यस्मै देयं, किमिति ? यतः सिद्धं निष्पन्नं इह यज्ञे एकः पक्षो ब्राह्मणरूपो यस्य तदेकपक्षं, अयं भावः—यदत्रोपस्क्रियते न तद्ब्राह्मणव्यतिरिक्ताय दीयते, विशेषतस्तु शूद्राय । यत उक्तं—"न शूद्राय मतिं दद्या-न्नोच्छिष्टं न हविःकृतम् ॥ न चास्योपदिशेद्धर्मं, न चास्य व्रतमादिशेत् ॥ १ ॥" यतश्चैवमतो न तु नैव वयमीदृशं उक्तरूपं अन्नपानं दास्यामस्तुभ्यं किमिह स्थितोसीति सूत्रार्थः ॥ ११ ॥ यक्षः प्राह—

मूलम्—थलेसु बीआइं ववंति कासगा, तहेव निन्नेसु अ आससाए ।
एआइ सद्धाइ दलाहि मज्झं, आराहए पुण्णमिणं खु खित्तं ॥ १२ ॥

व्याख्या—स्थलेषूच्चभागेषु बीजानि मुद्गादीनि वपन्ति 'कासगत्ति' कर्षकाः कृषीवलाः, तथैव स्थलवदेव निम्नेषु च नीचभूभागेषु 'आससाएत्ति' आसंशया यदि भूयसी वृष्टिस्तदा स्थलेषु फलप्राप्तिरथ स्तोका तदा निम्नेषु इत्येवंरूपया वाञ्छया एतया कर्षकाशंसाकल्पया श्रद्धया 'दलाहित्ति' ददध्वं मह्यं, अयं भावः—यद्यपि यूयं निम्नक्षेत्रतुल्यमात्मानं मन्यध्वे, माञ्च स्थलतुल्यं, तथापि मह्यमपि दातुमुचितं, न चैवं दत्तेपि न फलावाप्तिरिति ध्येयमित्याह—'आराहए पुण्णमिणं खुत्ति' खुशब्दस्य एवकारार्थस्य भिन्नक्रमत्वादाराधयेदेव साधयेदेव, नात्रान्यथाभावः, पुण्यं शुभमिदं दृश्यमानं क्षेत्रं दानस्थानं, पुण्यसस्यप्ररोहहेतुतया आत्मानमेव एवं स्माहेति सूत्रार्थः ॥ १२ ॥ इति यक्षेणोक्ते ते स्माहुः—

मूलम्—खेत्ताणि अम्हं विइआणि लोए, जहिं पकिण्णा विरुहंति पुण्णा ।
जे माहणा जाइविज्जोववेआ, ताइं तु खित्ताइं सुपेसलाइं ॥ १३ ॥

व्याख्या—क्षेत्राणि अस्माकं विदितानि ज्ञातानि, सन्तीति शेषः, लोके जगति 'जहिंति' वचनव्यत्ययाद्येषु क्षेत्रेषु प्रकीर्णानि दत्तानि, अशनादीनीति शेषः, विरोहन्ति जन्मान्तरे प्रादुर्भवन्ति पूर्णानि समस्तानि, न चाहमपि तन्मध्यवर्त्येवेति त्वया ध्येयं, यतो ये ब्राह्मणाः, जातिश्च ब्राह्मणजातिरूपा, विद्या च चतुर्दशविद्यास्थानात्मिका, ताभ्यां 'उववेअत्ति' उपपेताः अन्विताः जातिविद्योपपेताः, 'ताइं तुत्ति' तान्येव क्षेत्राणि सुपेशलानि शोभनानि. न तु भवादृशानि शूद्रजातीनि विद्याविकलानि । यदुक्तं—"सममश्रोत्रिये दानं, द्विगुणं ब्राह्मणब्रुवे ॥ सहस्रगुणमाचार्ये, अनन्तं वेदपारगे ॥ १ ॥" इति सूत्रार्थः ॥ १३ ॥ यक्षः स्माह—

मूलम्—कोहो अ माणो अ वहो अ जेसिं, मोसं अदत्तं च परिग्गहो अ ।
ते माहणा जातिविज्जाविहीणा, ताइं तु खित्ताइं सुपावगाइं ॥ १४ ॥

व्याख्या—क्रोधश्च, मानश्च, च शब्दान्मायालोभौ च, वधश्च येषामिति प्रक्रमाद्भवतां ब्राह्मणानां 'मोसंति' मृषा अलीकभाषणं, अदत्तं अदत्तादानं, चशब्दान्मैथुनं च, परिग्रहश्च गोभूम्यादि स्वीकारोस्तीति सर्वत्र गम्यते, ते इति क्रोधाद्युपेता यूयं जातिविद्याविहीनाः । कथमिति चेदुच्यते—क्रियाकर्मविभागेन हि चातुर्वर्ण्यव्यवस्था । यदुक्तं—"एकवर्णमिदं सर्वं, पूर्वमासीद्युधिष्ठिर ! ॥ क्रियाकर्मविभागेन, चातुर्वर्ण्यं व्यवस्थितम् ॥ १ ॥ ब्राह्मणो ब्रह्मचर्येण, यथा शिल्पेन शिल्पिकः ॥ अन्यथा नाममात्रं स्या—दिन्द्रगोपककीटवत् ॥" न चेदृशी क्रिया ब्रह्मचर्यात्मिका कोपाद्युपेतेषु युष्मासु तत्वतः सम्भवत्यतो न तावज्जातिसम्भवः, तथा विद्यापि सम्यग्ज्ञानात्मिका न सम्भवत्येव भवत्सु, अज्ञानज्ञापकेषु बालक्रीडाप्रायेष्वग्निहोत्रादिषु प्रवृत्तिदर्शनात्, किञ्च सम्यग्ज्ञानस्य फलं विरतिरेव, ज्ञानस्य फलं विरतिरिति वचनात्, न च युष्मासु विरतिसम्भवोस्ति, तदभावे च ज्ञानं सदप्यसदेवेति स्थितं । 'ताइं तुत्ति' तुरवधारणे भिन्नक्रमश्च ततस्तानि भवद्विदितानि द्विजरूपाणि क्षेत्राणि सुपापकान्येव, न तु सुपेशलानि, कोपादिपापस्थानकलितत्वेनातिशयपापहेतुत्वादिति सूत्रार्थः ॥ १४ ॥ अथ कदाचित्ते ब्रूयुर्वेदविद्याविदो वयं ब्राह्मणजातयश्च तत्कथं जातिविद्याविहीना इत्यत्रवीरित्याह—

मूलम्—तुब्भेत्थ भो भारधरा गिराणं, अट्ठं न याणाह अहिज्ज वेए ।
उच्चावयाइं मुणिणो चरंति, ताइं तु खित्ताइं सुपेसलाइं ॥ १५ ॥

व्याख्या—यूयं 'इत्थत्ति' अत्र लोके भो इत्यामंत्रणे, भारधरा भारवहा गिरां वाचां प्रक्रमाद्वेदसम्बन्धिनीनां भारश्चेह तासां भूयस्त्वमेव, कुतो भारधराः ? इति चेदुच्यते—यतः अर्थमभिधेयं न जानीथ, 'अहिज्जत्ति' अपेर्गम्य-मानत्वादधीत्यापि वेदान्, अथ चेदर्थं जानीथ तदा "न हिंस्यात्सर्वभूतानि" इत्यादिवेदवाचामर्थं विदन्तोपि किमर्थं पशुहिंसात्मकान् यागान् कुरुथ ? तत्करणे तु तत्त्वतो वेदविद्याविदोपि भवन्तो न स्युः, तत्कथं जातिविद्यासम्प-न्नत्वेन क्षेत्रभूताः स्युः ? कानि तर्हि क्षेत्राणि ? इत्याह—'उच्चावयाइंति' उच्चान्युत्तमानि अवचान्यधमानि उच्चा-वचानि, गृहाणीति शेषः, मुनयश्चरन्ति भिक्षार्थं पर्यटन्ति, न तु युष्मद्वत्पचनाद्यारम्भप्रवृत्ताः ! त एव तत्त्वतो वेदार्थं विदन्ति, तत्रापि भिक्षावृत्तेरेव समर्थितत्त्वात्, तथा च वेदान्तानुवादिनः—"चरेन्माधुकरीं वृत्ति-मपि म्लेच्छ-कुलादपि ॥ एकान्नं नैव भुञ्जीत, बृहस्पतिसमादपि ॥ १ ॥" ततस्तान्येव मुनिलक्षणानि क्षेत्राणि सुपेशलानीति सूत्रार्थः ॥ १५ ॥ इत्थमध्यापकं यक्षेणाधिक्षिप्तं वीक्ष्य तच्छात्राः स्माहुः—

मूलम्—अज्झावयाणं पडिकूलभासी, पभाससे किं नु सगासि अम्हं ।
अवि एअं विणस्सउ अन्नपाणं, न य णं दाहामु तुमं निअंठा ॥ १६ ॥

व्याख्या—अध्यापकानां उपाध्यायानां प्रतिकूलभाषी सन् त्वं प्रभाषसे प्रकर्षेण ब्रूषे, किमिति क्षेपे, नुरित्य-क्षमायां, ततश्च धिग् भवन्तं, न वयं क्षमामहे यदेवं भवान् ब्रूते सकाशे पार्श्वेऽस्माकं । अपिः सम्भावने, एतत्प्रत्यक्षं विनश्यतु कुथितादिभावं प्राप्नोतु अन्नपानं, न च नैव 'णं' वाक्यालङ्कारे 'दाहामुत्ति' दास्यामस्तव निर्ग्रन्थ ! निष्कि-ञ्चन ! गुरुप्रत्यनीको हि भवानिति भाव इति सूत्रार्थः ॥ १६ ॥ यक्षः स्माह—

मूलम्—समईहिं मज्झं सुसमाहिअस्स, गुत्तीहिं गुत्तस्स जिइंदिअस्स ।
जइ मे न दाहित्थ अहेसणिज्जं, किमज्ज जण्णाण लहित्थ लाभं ॥ १७ ॥

व्याख्या—समितिभिरीर्यासमित्यादिभिर्मह्यं सुसमाहिताय सुष्ठुसमाधिमते, गुप्तिभिर्मनोगुप्त्यादिभिर्गुप्ताय, जितेन्द्रियाय, यदि मे मह्यं, पूर्वोक्त 'मज्झंति'पदस्य व्यवहितत्वात्पुनर्मे इति ग्रहणमदुष्टं, न दास्यथ, अथेत्युपन्यासे, एषणीयं एषणाविशुद्धमन्नादि तर्हि किं ? न किंचिदित्यर्थोऽद्य यज्ञानां 'लहित्थत्ति' सूत्रत्वाल्लप्स्यध्वे प्राप्स्यथ ? लाभं पुण्य-प्राप्तिरूपं । पात्रदानादेव हि विशिष्टपुण्यप्राप्तिरन्यत्र तु तादृशफलाभावाद्दीयमानस्य हानिरेव । यदुक्तं—"दधिमधुघृ-तान्यपात्रे, क्षिप्तानि यथाशु नाशमुपयान्ति ॥ एवमपात्रे दत्तानि, केवलं नाशमुपयान्ति ॥१॥" इति सूत्रार्थः ॥१७॥ एवं तेनोक्ते यदध्यापकः स्माह तदाह—

मूलम्—के इत्थ खत्ता उवजोइआ वा, अज्झावया वा सह खंडिएहिं ।
एअं तु दंडेण फलेण हंता, कंठंमि घित्तूण खलेज्ज जो णं ॥ १८ ॥

व्याख्या—के 'इत्थत्ति' अत्रास्मिन् स्थाने क्षत्राः क्षत्रियजातयः, 'उवजोइअत्ति' उपज्योतिषोऽग्निपार्श्ववर्त्तिनो महानसिका इत्यर्थः, अध्यापकाः पाठकाः, सर्वत्र वा विकल्पे, 'सहेति' युक्ताः खण्डिकैः छात्रैः सन्तीति शेषः, ये किमित्याह—एतं मुनिं दण्डेन यष्ट्यादिना, फलेन बिल्वादिना, यद्वा दण्डेन कूर्पराभिघातेन, फलेन मुष्टिप्रहारेणेति वृद्धाः, 'हंतत्ति' हत्वा ताडयित्वा, ततश्च कण्ठे गले गृहीत्वा 'खलेज्जत्ति' स्खलयेयुर्निष्काशयेयुः, 'जोत्ति' वचनव्यत्य-यात् ये 'णमिति' वाक्यालङ्कार इति सूत्रार्थः ॥ १८ ॥ तदा च तत्र यदभूत्तदाह—

मूलम्—अज्झावयाणं वयणं सुणित्ता, उद्धाइआ तत्थ बहू कुमारा ।
दंडेहिं वेत्तेहिं कसेहिं चेव, समागया तं इसिं तालयंति ॥ १९ ॥

व्याख्या—अध्यापकानां पाठकानां वचनं श्रुत्वा उद्धाविता वेगेन धावितास्तत्र बहवः कुमाराश्छात्रादयः, ते हि अहो ! क्रीडनकमागतमिति रभसतो दण्डैर्वंशदण्डाद्यैर्वेत्रैर्जलवंशरूपैः कशैश्चैव वध्रविकारैः समागता मिलितास्तं ऋषिं मुनिं ताडयन्तीति सूत्रार्थः ॥ १९ ॥ तदा च—

मूलम्— रण्णो तहिं कोसलिअस्स धूआ, भद्दत्ति नामेण अणिंदिअंगी ।
तं पासिआ संजयं हम्ममाणं, कुद्धे कुमारे परिनिव्ववेइ ॥ २० ॥

व्याख्या—राज्ञो नृपतेस्तत्र यज्ञपाटे कोशलायां भवः कौशलिकस्तस्य 'धूअत्ति' सुता भद्रेति नाम्ना अनिन्दिताङ्गी मनोज्ञदेहा तं हरिकेशबलं 'पासिअत्ति' दृष्ट्वा संयतं तस्यामप्यवस्थायां हिंसादेर्निवृत्तं, हन्यमानं क्रुद्धान् कुमारान् परिनिर्वापयति क्रोधाग्निविध्यापनेन शीतीकरोतीति सूत्रार्थः॥२०॥सा च तान्निर्वापयन्ती तस्य प्रभावमतिनिःस्पृहताञ्चाह—

मूलम्—देवाभिओगेण निओइएणं, दिण्णासु रण्णा मणसा न झाया ।
नरिंददेविंदभिवंदिएणं, जेणामि वंता इसिणा स एसो ॥ २१ ॥

व्याख्या—देवस्याभियोगो बलात्कारो देवाभियोगस्तेन नियोजितेन व्यापारितेन 'दिण्णासुत्ति' दत्तास्मि अहं राज्ञा प्रक्रमात्कौशलिकेन तथापि 'मणसत्ति' अपेगम्यमानत्वान्मनसापि चित्तेनापि न ध्याता न कामिता येनेति सम्बध्यते, नरेन्द्रदेवेन्द्राभिवन्दितेन येनाम्म्यहं वान्ता त्यक्ता ऋषिणा साधुना स एष युष्माभिः कदर्थयितुमारब्धस्ततोऽनुचितमेतदिति सूत्रार्थः ॥ २१ ॥ इममेवार्थं समर्थयितुमाह—

मूलम्—एसो हु सो उग्गतवो महप्पा, जिइंदिओ संजओ बंभयारी ।
जो मे तया निच्छइ दिज्जमाणिं, पिउणा सयं कोसलिएण रण्णा ॥ २२ ॥

व्याख्या—'एसो हु सोत्ति 'एष एव स उग्रतपा अत एव महात्मा जितेन्द्रियः संयतो ब्रह्मचारी च, यो 'मेत्ति' मां तदा नेच्छति दीयमानां पित्रा जनकेन स्वयं आत्मना न त्वन्यप्रेषणादिना कौशलिकेन राज्ञेति सूत्रार्थः ॥ २२ ॥ इत्थं निःस्पृहतामुक्त्वा पुनर्माहात्म्यमाह—

मूलम्—महाजसो एस महाणुभागो, घोरव्वओ घोरपरक्कमो अ ।
मा एअं हीलह अहीलणिज्जं, मा सव्वे तेएण भे निद्दहिज्जा ॥ २३ ॥

व्याख्या—महायशा एष मुनिर्महानुभागोऽतिशयाचिन्त्यशक्तिः, घोरव्रतो धृतदुर्धरमहाव्रतः, घोरपराक्रमश्च कषायादिवैरिजयम्प्रति रौद्रसामर्थ्यः, यतश्चायमीदृशस्ततो मा एनं मुनिं हीलयत अहीलनीयं, किमिति ? यतो मा सर्वांस्तेजसा तपोमाहात्म्येन भवतो निर्धाक्षीत् भस्मसात्कार्षीत् , अयं हि रुष्टो भस्मसादेवकुर्यादिति भाव इति सूत्रार्थः ॥ २३ ॥ तदा च मा भूदस्या वचो विफलमिति यक्षो यचक्रे तदाह—

मूलम्—एताइं तीसे वयणाइं सुच्चा, पत्तीइ भद्दाइ सुभासिआइं ।
इसिस्स वेआवडिअट्ठयाए, जक्खा कुमारे विनिवारयंति ॥ २४ ॥

व्याख्या—एतानि पूर्वोक्तानि वचनानि तस्याः श्रुत्वा पत्न्या भार्याया रुद्रदेवपुरोहितस्येति शेषः, भद्रायाः सुभाषितानि सूक्तानि वचनानीति योज्यते, ऋषेर्वैयावृत्त्यार्थं यक्षा यक्षपरिवारस्य बहुत्वाद्बहुवचनं, कुमारान् विनिवारयन्ति, उपद्रवान् कुर्वतो निराकुर्वन्तीति सूत्रार्थः ॥ २४ ॥ कथं निवारयन्तीत्याह—

मूलम्—ते घोररूवा ठिअ अंतलिक्खे, असुरा तहिं तं जणं तालयंति ।
ते भिन्नदेहे रुहिरं वमंते, पासित्तु भद्दा इणमाहु भुज्जो ॥ २५ ॥

व्याख्या—ते यक्षा घोररूपा रौद्राकारधारिणः 'ठिअत्ति' स्थिता अन्तरिक्षे नभसि असुरा आसुरभावान्वितत्वात् तस्मिन् यज्ञपाटे तं उपद्रवकरं जनं ताडयन्ति, ततश्च तान् कुमारान् भिन्नदेहान् विदारिताङ्गान् यक्षप्रहारैरिति गम्यं, तथा रुधिरं वमतो दृष्ट्वा भद्रा इदं वक्ष्यमाणं 'आहुत्ति'वचनव्यत्ययादाह ब्रूते, भूयः पुनरिति सूत्रार्थः॥ २५॥ तद्यथा—

मू०—गिरिं नहेहिं खणह, अयं दंतेहिं खायह । जायतेअं पाएहिं हणह, जे भिक्खुं अवमन्नह ॥ २६॥

व्याख्या—गिरिं नखैः खनथ, इह सर्वत्रेवार्थो द्रष्टव्यस्ततः खनथेव खनथ, तथा अयो लोहं दन्तैः खादथ, जाततेजसं अग्निं पादैर्हन्यथ ताडयथ, ये यूयं भिक्षुं प्रक्रमादेनं अवमन्यध्वे अवधीरयथ, अनर्थफलत्वाद्भिक्षवपमानस्येति सूत्रार्थः ॥ २६ ॥ कथमिदमित्याह—

मूलम्—आसीविसो उग्गतवो महेसी, घोरव्वओ घोरपरक्कमो अ ।
अगणिं व पक्खंद पयंगसेणा, जे भिक्खुअं भत्तकाले वहेह ॥ २७ ॥

व्याख्या—आशीविष आशीर्विषलब्धिमान् शापानुग्रहसमर्थः, कुत इत्याह—यतोसौ उग्रतपा महर्षिर्घोरव्रतो घोरपराक्रमश्च, ततश्च 'अगणिंवत्ति' अग्निं वह्निं वाशब्द इवार्थो भिन्नक्रमश्च, ततः प्रस्कन्दथेव आक्रामथेव, केव ? 'पयंगसेणत्ति' इवशब्दस्य गम्यत्वात् पतङ्गसेनेव शलभश्रेणिरिव, यथा हि सा तमाक्रामन्ती सद्यो नाशमश्नुते तथा यूयमपीति भावः, ये यूयं भिक्षुकं भक्तकाले भोजनावसरे, तत्र हि दीनादीनामवश्यं देयमिति शिष्टाचारः, यूयं तु केवलं न दत्तेति न, किन्तु तत्रापि 'वहेहत्ति' विध्यथ ताडयथेति सूत्रार्थः ॥२७॥ इत्थं तन्माहात्म्यमावेद्य कृतोपदेशमाह—

मूलम्—सीसेण एअं सरणं उवेह, समागया सव्वजणेण तुब्भे ।
जइ इच्छह जीविअं वा धणं वा, लोअंपि एसो कुविओ डहेज्जा ॥ २८ ॥

व्याख्या—शीर्षेण मूर्द्ध्ना एतं मुनिं शरणं त्राणमुपेताभ्युपगच्छत, शिरोनमनपूर्वं त्वमेव नः शरणमिति प्रतिपद्यध्वमिति भावः। समागताः मिलिताः सर्वजनेन सह यूयं यदीच्छत जीवितं वा धनं वा, अस्मिन् हि कुपिते नापरं जीवितादिरक्षाक्षमं शरणमस्ति, कुत इत्याह—यतो लोकमपि जगदप्येष कुपितो दहेदिति सूत्रार्थः ॥ २८ ॥ अथोपाध्यायस्तान् यादृशान् दृष्ट्वा यदकरोत्तदाह—

मूलम्—अवहेडिअपिट्ठसउत्तमंगे, पसारिआबाहुअकम्मचिट्ठे।
निब्भेरितच्छे रुहिरं वमंते, उड्ढंमुहे निग्गयजीहनेत्ते ॥ २९ ॥

ते पासिआ खंडिअ कट्ठभूए, विमणो विसण्णो अह माहणो सो ।
इसिं पसादेति सभारिआओ, हीलं च निंदं च खमाह भंते ! ॥ ३० ॥

व्याख्या—अवहेठितानि अधोनमितानि 'पिट्ठत्ति' पृष्ठं यावत्सन्ति शोभनानि उत्तमाङ्गानि शिरांसि येषां ते अवहेठितपृष्ठसदुत्तमाङ्गाः, मध्यमपदलोपी समासस्तान्, प्रसारिता बाहवो येषां ते तथा, कर्माण्यग्नौ समित्क्षेपादीनि तद्विषया चेष्टा कर्मचेष्टा, न विद्यते कर्मचेष्टा येषां ते तथा, ततः कर्मधारये प्रसारितबाहुकर्मचेष्टास्तान्, 'निब्भेरियत्ति' प्रसारितान्यक्षीणि नयनानि येषां ते तथा तान्, रुधिरं वमतः, 'उड्ढंमुहेत्ति' उर्द्धमुखान् निर्गतजिह्वानेत्रान् ॥ २९ ॥ 'ते पासिआ इति' तान् दृष्ट्वा 'खंडिअत्ति' खण्डिकान् छात्रान् काष्ठभूतान् अत्यन्तनिश्चेष्टतया काष्ठकल्पान्, विमना विचित्तो विषण्णः कथममी सज्जा भविष्यन्तीति विषादं प्राप्तः, अथेति दर्शनानन्तरं ब्राह्मणः स इति रुद्रदेवाख्यः ऋषिं प्रसादयति सभार्याको भार्यायुक्तः कथमित्याह—हीलां चावज्ञां, निंदां च दोषोद्भावनरूपां, क्षमध्वं भदन्तेति सूत्रार्थः ॥ ३० ॥ पुनः प्रसादनामेवाह—

मूलम्—बालेहिं मूढेहिं अयाणएहिं, जं हीलीआ तस्स खमाह भंते ! ।
महप्पसाया इसिणो हवंति, न हु मुणी कोवपरा हवंति ॥ ३१ ॥

व्याख्या—बालैः शिशुभिर्मूढैः कषायोदयाद्विचित्ततां गतैरत एवाज्ञैर्हिताहितविवेकविकलैर्यत् हीलिताः 'तस्सत्ति' सुप्रत्वात् तत् क्षमध्वं भदन्त ! न ह्यमी शिशवो मूढाः सतां कोपार्हाः, किन्त्वनुकम्पार्हा एव। यदुक्तं—"आत्मद्रुहममर्यादं, मूढमुज्झितसत्पथम् ॥ सुतरामनुकम्पेत, नरकार्चिष्मदिन्धनम् ॥ १ ॥" किञ्च महाप्रसादा ऋषयो भवन्ति, 'न हुत्ति' न पुनर्मुनयः कोपपरा भवन्तीति सूत्रार्थः ॥ ३१ ॥ मुनिराह—

मूलम्—पुव्विं च इण्हिं च अणागयं च, मणप्पओसो न मे अत्थि कोई ।
जक्खा हु वेआवडिअं करेन्ति, तम्हा हु एए निहया कुमारा ॥ ३२ ॥

व्याख्या—पूर्वं च पुरा, इदानीञ्चाधुना, अनागते च भविष्यति काले, मनःप्रद्वेषो न मे अस्ति, उपलक्षणत्वादासीद्भविष्यति च, कोपीत्यल्पोपि। तर्हि कथममी ईदृशा जाताः ? इत्याह—यक्षाः 'हुरिति' यस्माद्वैयावृत्त्यं कुर्वन्ति, तस्मात् हुरवधारणे, ततस्तस्मादेव हेतोरेते प्रत्यक्षा निहताः कुमाराः, न तु मम प्रद्वेषोऽत्र हेतुरिति सूत्रार्थः ॥ ३२ ॥ ततस्तद्गुणाकृष्टचित्ता उपाध्यायादय इदमाहुः—

मूलम्—अत्थं च धम्मं च विआणमाणा, तुब्भे णवि कुप्पह भूइपण्णा ।
तुब्भं तु पाए सरणं उवेमो, समागया सव्वजणेण अम्हे ॥ ३३ ॥

व्याख्या—अर्थं च शास्त्राणामभिधेयं, धर्मं च यतिधर्मं क्षान्त्यादिकं विजानन्तो विशेषेणावगच्छन्तो यूयं नापि नैव कुप्यथ, 'भूइपण्णत्ति' भूतिर्मङ्गलं १ वृद्धिः २ रक्षा ३ वेति वृद्धाः, ततो भूतिर्मङ्गलं सर्वमङ्गलोत्तमत्वेन, वृद्धिर्वा वृद्धिविशिष्टत्वेन, रक्षा वा सर्वप्राणिरक्षकत्वेन, प्रज्ञा बुद्धिर्येषां ते भूतिप्रज्ञाः, अत एव 'तुब्भं तुत्ति' युष्माकमेव पादौ शरणं उपेमः स्वीकुर्मः समागताः सर्वजनेन वयमिति सूत्रार्थः ॥ ३३ ॥ तथा—

मूलम्—अच्चेमु ते महाभाग !, न ते किंचि न अच्चिमो। भुंजाहि सालिमं कूरं, नाणावंजणसंजुअं ॥ ३४ ॥

व्याख्या—अर्चयामः पूजयामः 'ते' इति सुब्व्यत्ययात्त्वां हे महाभाग ! न नैव ते तव किञ्चिच्चरणरेण्वादिकमपि नार्चयामः, तथा भुंक्ष्व इतो गृहीत्वा 'सालिमंति' शालिमयं शालिनिष्पन्नं कूरं ओदनं नानाव्यञ्जनैर्दध्यादिभिः संयुतमिति सूत्रार्थः ॥ ३४ ॥ अन्यच्च—

मूलम्—इमं च मे अत्थि पभूअमन्नं, तं भुंजसू अम्हमणुग्गहट्ठा ।
बाढंति पडिच्छइ भत्तपाणं, मासस्स उ पारणए महप्पा ! ॥ ३५ ॥

व्याख्या—इदं च प्रत्यक्षत एव दृश्यमानं मे मम अस्ति प्रभूतं भूरि अन्नं मण्डकखण्डखाद्यादि भोजनं तद्भुंक्ष्व अस्माकमनुग्रहार्थं, एवं तेनोक्ते मुनिराह—बाढमेवं कुर्म इतीत्येवं ब्रुवाण इति शेषः, प्रतीच्छति द्रव्यादिभिः शुद्ध-मिति गृह्णाति भक्तपानं 'मासस्स उत्ति' मासस्यैव मासक्षपणस्यैवान्ते इति गम्यं, पार्यते पर्यन्तः क्रियते नियमस्यानेनेति पारणं, तदेव पारणकं, भोजनमित्यर्थः, तस्मिन्महात्मेति सूत्रार्थः ॥ ३५ ॥ तदा च तत्र यदभूत्तदाह—

मूलम्—तहिअं गंधोदयपुप्फवासं, दिव्वा तहिं वसुहारा य वुट्ठा ।
पहयाओ दुंदुहीओ सुरेहिं, आगासे अहो दाणं च घुट्ठं ॥ ३६ ॥

व्याख्या—'तहिअंति' तत्र यज्ञपाटे गन्धोदकं च पुष्पाणि च गन्धोदकपुष्पाणि तेषां वर्षं वर्षणं गन्धोदक-पुष्पवर्षं सुरैरिति सम्बन्धात्कृतमिति गम्यते, नपुंसकलिङ्गनिर्देशश्चेह वर्षशब्दस्य पुंनपुंसकलिङ्गत्वात् । दिव्या श्रेष्ठा 'तहिंति' तत्र वसु द्रव्यं तस्य धारा सततनिपातजनितासंततिर्वसुधारा, सा च वृष्टा पातिता सुरैरिति इहापि योज्यते । तथा प्रहता दुन्दुभयो देवानकाः सुरैः । तथा तैरेवाकाशे अहो ! इत्याश्चर्ये कोन्यः किलैवं दानं दातुं शक्तः ? इत्यहोदानं च घुष्टं संशब्दितमिति सूत्रार्थः ॥ ३६ ॥ तच्च प्रेक्ष्य विस्मिता विप्रा अप्येवमाहुः—

मूलम्—सक्खं खु दीसइ तवोविसेसो, न दीसई जाइविसेसु कोई ।
सोवागपुत्तं हरिएससाहुं, जस्सेरिसा इड्ढि महाणुभागा ॥ ३७ ॥

व्याख्या—'सक्खं खुत्ति' खुशब्दोऽवधारणे, ततः साक्षादेव दृश्यते तपसो विशेषो माहात्म्यं तपोविशेषः, न नैव दृश्यते जातिविशेषो जातिमाहात्म्यरूपः कोपि स्वल्पोपि । कुतः ? इत्याह—यतः श्वपाकपुत्रं हरिकेशसाधुं पश्यतेति शेषः, यस्येदृशी दृश्यमानरूपा ऋद्धिर्देवसान्निध्यलक्षणा संपन्महानुभागा सातिशयमाहात्म्या ! जाति-विशेषे हि सति द्विजातीनामस्माकमेव देवाः सान्निध्यं विदध्युरिति सूत्रार्थः ॥ ३७ ॥ अथ स एव मुनिस्तानु-पशान्तमिथ्यात्वानिव पश्यन्निदमाह—

मूलम्—किं माहणा जोईसमारभंता, उदएण सोहिं बहिआ विमग्गह ।
जं मग्गहा बाहिरिअं विसोहिं, न तं सुदिट्ठं कुसला वयंति ॥ ३८ ॥

व्याख्या—किमिति क्षेपे, ततो न युक्तमिदं हे माहनाः ब्राह्मणाः ! ज्योतिरग्निस्तं समारभमाणाः प्रस्तावाद्यागं कुर्वन्त इत्यर्थः, उदकेन जलेन शोधिं विशुद्धिं 'बहिअत्ति' बाह्यां विमार्गयथान्वेषयथ । किमेवमुपदिश्यते ? इत्याह—यद्यूयं मार्गयथ बाह्यां स्नानादिबाह्यहेतुजां विशुद्धिं निर्मलतां न तत् सुदृष्टं सुष्ठु प्रेक्षितं कुशलास्तत्त्वविदो वद-न्तीति सूत्रार्थः ॥ ३८ ॥ एतदेव स्पष्टयति—

मूलम्—कुसं च जूवं तणकट्ठमग्गिं, सायं च पायं उदयं फुसंता ।
पाणाइं भूआइं विहेडयंता, भुज्जोवि मंदा पकरेह पावं ॥ ३९ ॥

व्याख्या—कुशं च दर्भं, यूपं यज्ञस्तम्भं, तृणं च वीरणादि–काष्ठं च इन्धनादि, तृणकाष्ठं । अग्निं वह्निं, सर्वत्र प्रतिगृह्णन्त इति शेषः । सायं सन्ध्यायां, चशब्दो भिन्नक्रमस्ततः 'पायंति' प्रातश्च प्रभाते उदकं जलं स्पृशन्त आचमनादिषु परामृशन्तः 'पाणाइंति' प्राणिनो द्वीन्द्रियादीनुदकादौ भूतान् तरून् पृथिव्याद्युपलक्षणञ्चैतत् विहेठमानाः विविधं बाधमानाः भूयोपि पुनरपि न केवलं पुरा किन्तु शुद्धिकालेपि जलानलादिजीवोपमर्देनेन मन्दा जडाः सन्तः प्रकुरुथ प्रकर्षेण उपचिनुथ पापमशुभकर्म । अयं भावः–कुशला हि कर्ममलविगमात्मिकां तात्त्विकीमेव शुद्धिं मन्यन्ते, भवदभिमते यागस्नाने च यूपादिपरिग्रहजलस्पर्शादिभिर्जन्तूपमर्दहेतुतया प्रत्युत कर्ममलोपचयनिबन्धने एव, तत्कथं तद्धेतुकशुद्धिमार्गेणं सुदृष्टं विदो वदेयुः ? आह च वाचकमुख्यः–"शौचमाध्यात्मिकं त्यक्त्वा, भावशुद्ध्यात्मकं शुभम् ॥ जलादिशौचं यत्रेदं, मूढविस्मापनं हि तत् ॥ १ ॥" इति सूत्रार्थः ॥ ३९ ॥ इत्थं तद्वाचा जातसन्देहास्ते यागमाश्रित्यैवमप्राक्षुः—

मूलम्—कहं चरे भिक्खु वयं जयामो, पावाइं कम्माइं पणोल्लयामो ।
अक्खाहि णो संजय जक्खपूइआ, कहं सुइट्ठं कुसला वयंति ॥ ४० ॥

व्याख्या—कथं केन प्रकारेण 'चरेत्ति' सूत्रत्वाच्चरामो यागार्थं प्रवर्त्तामहे वयं, हे भिक्षो ! तथा यजामो यागं कुर्मः ? कथमिति योगः, पापान्यशुभानि कर्माणि 'पणुल्लयामोत्ति' प्रणुदामः प्रेरयामो येनेति गम्यते, आख्याहि कथय नोऽस्माकं संयत यक्षपूजित ! । यो ह्यस्मद्विदितः कर्मप्रणोदनोपायो यागः स तु युष्माभिर्दूषित इति भवन्त एवापरं यागमुपदिशन्त्विति भावः । ततः कथं स्विष्टं शोभनयजनं कुशला वदन्तीति सूत्रार्थः ॥ ४० ॥ मुनिराह—

मूलम्—छज्जीवकाए असमारभंता, मोसं अदत्तं च असेवमाणा ।
परिग्गहं इत्थिओ माण मायं, एअं परिण्णाय चरंति दंता ॥ ४१ ॥

व्याख्या—षड्जीवकायान् पृथिव्यादीन् असमारभमाणा अनुपमर्दयन्तः, 'मोसंति' मृषां अलीकं, अदत्तं च अदत्तादानमसेवमानाः, 'परिग्गहं' मूर्च्छा, स्त्रियो मानं माया तत्सहचरात्कोपलोभौ च एतदनन्तरोक्तं परिज्ञाय ज्ञपरिज्ञया दुष्कर्मनिबन्धनमिति ज्ञात्वा प्रत्याख्यानपरिज्ञया च प्रत्याख्याय चरन्ति यागे प्रवर्तन्ते दान्ताः । यतश्च दान्ता एवं चरन्ति ततो भवद्भिरप्येवं चरितव्यमिति सूत्रार्थः ॥ ४१ ॥ अनेन कथं चरामो यागायेति प्रश्नस्योत्तरमुक्तं, अथ कथं यजाम इति द्वितीयप्रश्नस्योत्तरमाह—

मूलम्—सुसंवुडा पंचहिं संवरेहिं, इह जीविअं अणवकंखमाणा ।
वोसट्ठकाया सुइचत्तदेहा, महाजयं जयइ जण्णसिट्ठं ॥ ४२ ॥

व्याख्या—सुसंवृताः स्थगिताश्रवद्वाराः पञ्चभिः संवरैः प्राणातिपातविरमणादिव्रतैः, इहेत्यस्मिन्मनुष्यजन्मनि, उपलक्षणत्वात्परलोके च जीवितं प्रस्तावादसंयमजीवितमनवकांक्षन्तोऽनिच्छन्तः, अत एव व्युत्सृष्टकायाः परीषहोपसर्गसहिष्णुतया त्यक्तकायाः, शुचयोऽकलुषव्रतास्ते च ते त्यक्तदेहाश्चात्यन्तनिष्प्रतिकर्मतया शुचित्यक्तदेहाः, महान् जयः कर्मारिपराजयरूपो यत्र स महाजयस्तं 'जयइत्ति' वचनव्यत्ययाद्यजन्ति यतय इति गम्यं । ततो भवन्तोप्येवं यजन्तां 'जण्णसिट्ठंति' प्राकृतत्वात् श्रेष्ठयज्ञं श्रेष्ठशब्देन च एतद्यजनं स्विष्टं कुशला वदन्ति, एष एव च कर्मप्रणोदनोपाय इति सूचितमिति सूत्रार्थः ॥ ४२ ॥ अथ यद्ययं यज्ञः श्रेष्ठस्तदामुं यजमानस्य कान्युपकरणानि ? को वा यजनविधिः ? इति ते प्रश्नयामासुः—

मूलम्—के ते जोई किं व ते जोइठाणं, का ते सुआ किं व ते कारिसंगं ।
एहा य ते कयरा संति भिक्खू, कयरेण होमेण हुणासि जोइं ॥ ४३ ॥

व्याख्या—'के इति' किं ते तव ज्योतिरग्निः ? किं वा ते तव ज्योतिःस्थानं ? यत्राग्निर्निधीयते, कास्ते स्रुचो घृतादिक्षेपिका दर्व्यः ? किं वा ते करीष एवाङ्गं अनलोद्दीपनहेतुः करीषाङ्गं ? येनाग्निः सन्धुक्ष्यते, एधाश्च समिधो याभिरग्निः प्रज्वाल्यते ते तव कतराः काः ? 'संतित्ति' चस्य गम्यत्वाच्छान्तिश्च दुरितोपशमहेतुरध्ययनपद्धतिः ? कतरेति प्रक्रमः, हे भिक्षो ! कतरेण होमेन हवनविधिना जुहोषि ? आहुतिभिस्तर्पयसि ? ज्योतिरग्निं । षड्जीवकायारम्भनिषेधे ह्यस्मदिष्टो होमस्तदुपकरणानि च पूर्वं निषिद्धानि तत्कथं तव यज्ञसम्भवः ? इति सूत्रार्थः ॥ ४३ ॥ मुनिराह—

मूलम्—तवो जोई जीवो जोइठाणं, जोगा सुआ सरीरं कारिसंगं ।
कम्मे एहा संजमजोगसंती, होमं हुणामि इसिणं पसत्थं ॥ ४४ ॥

व्याख्या—तपो बाह्याभ्यन्तरभेदभिन्नं ज्योतिरग्निस्तस्यैव कर्मलक्षणभावेन्धनदाहकत्वात्, जीवो ज्योतिःस्थानं तपोज्योतिषस्तदाश्रितत्वात्, योगा मनोवाक्कायाः स्रुचस्तैर्हि शुभव्यापाराः स्नेहस्थानीयास्तपोज्वलनप्रज्वलनहेतवस्तत्र संस्थाप्यन्त इति, शरीरं करीषांगं तेनैव हि तपोज्योतिरुद्दीप्यते तद्भावभावित्वात्तपसः, कर्म एधास्तस्यैव तपसा भस्मीभवनात्, संयमयोगाः संयमव्यापाराः शान्तिः, सर्वजीवोपद्रवापहारित्वात्तेषां, तथा 'होमंति' होमेन जुहोमि तपोज्योतिरिति शेषः, ऋषीणां मुनीनां सम्बन्धिना 'पसत्थंति' प्रशस्तेन जीवघातरहिततया विवेकिभिः श्लाघितेन सम्यक् चारित्ररूपेणेति भावः । अनेन च कतरेण होमेन जुहोपि ज्योतिरिति प्रत्युक्तमिति सूत्रार्थः ॥ ४४ ॥ इत्थं यज्ञस्वरूपं ज्ञात्वा स्नानस्वरूपं पृच्छन्तस्ते इदं स्माहुः—

मूलम्—के ते हरए के अ ते संतितित्थे, कहिंसि ण्हाओ व रयं जहासि ।
अक्खाहि णो संजयजक्खपूइआ, इच्छामु नाउं भवओ सगासे ॥ ४५ ॥

व्याख्या—कस्ते तव ह्रदो नदः ? 'के अ तेत्ति' किं च ते शान्त्यै पापोपशमार्थं तीर्थं ? 'कहिंसि ण्हाओ वत्ति' वाशब्दस्य भिन्नक्रमत्वात्कस्मिन्वा स्नातः शुचीभूतो रज इव रजः कर्म जहासि त्यजसि ? गम्भीराशयो हि त्वं, ततिकमस्माकमिव तवापि ह्रदतीर्थमेव शुद्धिस्थानमन्यद्वेति न विद्म इति भावः । आचक्ष्व वद नोऽस्माकं संयतयक्षपूजित ! इच्छामो ज्ञातुं भवतः सकाशे समीपे इति सूत्रार्थः ॥ ४५ ॥ मुनिराह—

मूलम्—धम्मे हरए बंभे संतितित्थे, अणाइले अत्तपसन्नलेसे ।
जहिंसि ण्हाओ विमलो विसुद्धो, सुसीतिभूओ पजहामि दोसं ॥ ४६ ॥

व्याख्या—धर्मः अहिंसादिरूपो ह्रदस्तस्यैव कर्मरजोपहारित्वात्, ब्रह्मेति ब्रह्मचर्यं शान्तितीर्थं, तदासेवने हि सकलमलमूलं रागद्वेषावुन्मूलितावेव, तदुन्मूलने च न पुनर्मलसम्भव इति, सत्याद्युपलक्षणं चैतत्तथा चाह— "ब्रह्मचर्येण सत्येन, तपसा संयमेन च ॥ मातङ्गर्षिर्गतः शुद्धिं, न शुद्धिस्तीर्थयात्रया ॥ १ ॥" किं च भवदिष्टतीर्थानि प्राणिपीडाहेतुतया प्रत्युत मलोपचयनिमित्तानीति कुतस्तेषां शुद्धिहेतुता ? यदुक्तं—"कुर्याद्वर्षसहस्रं तु, अहन्यहनि मज्जनम् ॥ सागरेणापि कृच्छ्रेण, वधको नैव शुद्ध्यति ॥ १ ॥" ह्रदशान्तितीर्थे एव विशिनष्टि, अनाविले मिथ्यात्वगुप्तिविराधनादिभिरकलुषे, अत एवात्मनो जीवस्य प्रसन्ना मनागप्यकलुषा लेश्या पीताद्यन्यतरा यस्मिंस्तदात्मप्रसन्नलेश्यं तस्मिन् धर्मह्रदे ब्रह्माख्यशान्तितीर्थे च 'जहिंसित्ति' यस्मिन् स्नात इव स्नातो विमलो भावमलरहितः, अत एव विशुद्धो गतकलङ्कः, सुशीतीभूतो रागाद्युत्तसिमुक्तः प्रजहामि प्रकर्षेण त्यजामि दूषयति आत्मानं विकृतिं नयतीति दोषः कर्म। तदेवं ममापि ह्रदतीर्थे एव शुद्धिस्थानं, परमीदृशे एवेति सूत्रार्थः ॥ ४६ ॥ निगमयितुमाह—

मूलम्—एअं सिणाणं कुसलेहिं दिट्ठं, महासिणाणं इसिणं पसत्थं ।
जहिंसि णाया विमला विसुद्धा, महारिसी उत्तमठाणं पत्तत्ति बेमि ॥ ४७॥

व्याख्या—एतदनन्तरोक्तं स्नानं कुशलैर्दृष्टं, इदमेव च महास्नानं, न तु युष्मत्प्रतीतमस्यैव सकलमलापहारित्वात्, अत एव ऋषीणां प्रशस्तं प्रशंसास्पदं न तु जलस्नानवत् सदोषतया निंद्यं, अस्यैव फलमाह—'जहिंसित्ति' सुपव्यत्ययात् येन स्नाता विमला विशुद्धा इति प्राग्वत्, महर्षय उत्तमस्थानं मुक्तिरूपं प्राप्ता गता इति ब्रवीमीति प्राग्वदिति सूत्रार्थः ॥ ४७ ॥ एवं द्विजेषु मुनिसुपसम्पन्नेषु यक्षेण प्रगुणीकृताश्छात्राः ततस्तत्कालोचितधर्मदेशनया विप्रान् प्रतिबोध्य साधुः स्वस्थानमाययौ ययौ च क्रमान्मुक्तिम् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्याश्रयोपाध्याय-श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ द्वादशमध्ययनं सम्पूर्णम् ॥ १२ ॥

## ॥ अथ त्रयोदशमध्ययनम् ॥

॥ अर्हम् ॥ व्याख्यातं द्वादशमध्ययनं, अथ त्रयोदशमारभ्यते । अस्य चायमभिसम्बन्धः, इहानन्तराध्ययने तपसि यत्नो विधेय इत्युक्तं, तपः कुर्वता च निदानं त्याज्यमिति निदानदोषं चित्रसम्भूतोदाहरणेन दर्शयितुं चित्रसम्भूतीयाख्यमिदमुच्यते, इत्यनेन सम्बन्धेनायातस्यास्येदमादौ सूत्रत्रयम्—

मूलम्—जाई पराजिओ खलु, कासि निआणं तु हत्थिणपुरंमि ।
चुलणीइ बंभदत्तो, उववन्नो पउमगुम्माओ ॥ १ ॥

व्याख्या—जात्या प्रक्रमाच्चाण्डालाख्यजात्या पराजितः पूर्वभवे पराभूतो जातिपराजितः, खलुर्वाक्यालङ्कारे 'कासित्ति' अकार्षीन्निदानं चक्रवर्त्तिपदप्राप्तिर्मे भूयादित्येवं रूपं, तुः पूर्त्तौ, हस्तिनापुरे नगरे। तदनु च चुलन्यां ब्रह्मदत्त उपपन्न उत्पन्नः पद्मगुल्मान्नलिनीगुल्मविमानाच्च्युत्वेति शेषः। चुलन्यां ब्रह्मदत्त उत्पन्न इत्युक्तं, स च केत्याह—

मूलम्—कंपिल्ले संभूओ चित्तो, पुण जाओ पुरिमतालंमि ।
सिट्ठिकुलंमि विसाले, धम्मं सोऊण पव्वईओ ॥ २ ॥

व्याख्या—काम्पील्ये काम्पील्यनाम्नि नगरे सम्भूतः प्राग्भवे सम्भूताभिधः, चित्रस्य का वार्तेत्याह—चित्रः पुनर्जातः पुरिमताले पुरिमतालपुरे श्रेष्ठिकुले विशाले पुत्रपौत्रादिभिर्विस्तीर्णे, प्राप्तयौवनश्च तथाविधाचार्यसमीपे धर्मं श्रुत्वा प्रव्रजितः ॥ २ ॥ ततः किमित्याह—

मूलम्—कंपिल्लंमि अ णयरे, समागया दोवि चित्तसंभूआ ।
सुहदुक्खफलविवागं, कहंति ते इक्कमिक्कस्स ॥ ३ ॥

व्याख्या—काम्पील्ये च नगरे समागतौ मिलितौ द्वावपि चित्रसम्भूतौ पूर्वभवनाम्ना सुखदुःखफलविपाकं सुकृतदुष्कृतकर्मानुभवरूपं कथयतस्तौ 'एक्कमेक्कस्सत्ति' एकैकस्य अन्योन्यं, सर्वत्र वर्त्तमाननिर्देशस्तत्कालापेक्षयेति सूत्रत्रयाक्षरार्थो भावार्थस्तु कथानकादवसेयस्तत्र चायं सम्प्रदायः । तथाहि—

अस्ति पुरं साकेतं, सङ्केतनिकेतनं शुभश्रीणाम् । तत्र मुनिचन्द्रोऽभू—द्भूपश्चन्द्रावतंससुतः ॥१॥ स च सागरचन्द्रगुरोः, पार्श्वे प्रव्रज्य भवविरक्तमनाः ॥ देशान्तरे विहर्तुं, गुरुणा सममन्यदाचालीत् ॥ २ ॥ भिक्षार्थमथ क्वापि, ग्रामे गतवति महामुनौ तस्मिन् ॥ सार्थेन समं चेलु—र्गुरवः स तु सार्थवियुतोऽभूत् ॥ ३ ॥ तमटन्तमटव्यन्तः, क्षुत्तृष्णाबाधितं तृतीयदिने ॥ प्रतिचेरुर्बान्धवा इव, चत्वारो वल्लवाश्चतुराः ॥ ४ ॥ प्रत्युपकर्तुमिवोचे, तेभ्यो वाचंयमोपि जिनधर्मम् ॥ तं श्रुत्वा सम्बुद्धाः, प्रवव्रजुस्तेपि भवभीताः ॥ ५ ॥ तेषु च धर्मजुगुप्सा—मुभौ व्यधत्तां व्रतप्रभावाच्च ॥ दिवि देवत्वं प्राप्तौ, ततश्च्युतौ चायुषि क्षीणे ॥ ६ ॥ दशपुरनगरे शाण्डिल्य—विप्रदास्याः सुतौ युगलजातौ ॥ जातौ तौ जयवत्याः, प्राक्तननिन्दाविपाकवशात् ॥ ७ ॥ तौ सम्प्राप्तौ तारुण्य—मन्यदा क्षेत्ररक्षणाय गतौ ॥ सुषुपतुरधो वटतरो—र्निरगात्तत्कोटराच्च फणी ॥ ८ ॥ तेन च दष्टे दुष्टे—नैकस्मिंस्तं गवेषयन् भुजगम् ॥ अपरोप्यदंशि तेनैव, भोगिना पूर्ववैरिणेव ॥ ९ ॥ तौ चाप्राप्तचिकित्सौ, विपद्य कालिञ्जराचलोपान्ते ॥ हरिणीकुक्षिप्रभवौ, सञ्जातौ युग्मजौ हरिणौ ॥ १० ॥ स्नेहात् सह विहरन्तौ, मुक्तैकशरेण मृगयुणा तौ च ॥ व्यापादितौ वराकौ, क्षिप्ताशनिना घनेनेव ॥ ११ ॥ अथ मृतगङ्गातटिनी—तटस्थहंसीसुतावभूतां तौ ॥ बाल्यादपि भ्रमन्तौ, सममेव दृढानुरागेण ॥ १२ ॥ जालेन तौ निबध्या—न्यदाऽवधीज्जालिको गलं भंक्त्वा ॥ विषवल्लेरिव दारुण—महो ! फलं धर्मनिन्दायाः ॥ १३ ॥ अथ तौ वाणारस्यां, प्रभूतवित्तस्य भूतदत्तस्य ॥ तनयावुभावभूतां, श्वपचपतेश्चित्रसम्भूतौ ॥ १४ ॥ वाणारस्यां च तदा, बभूव शंखाभिधो धराधिपतिः ॥ तस्य च दुर्मतिसचिवः, सचिवोऽभून्नमुचिरिति नाम्ना ॥ १५ ॥ अपराधे स च महति, प्रच्छन्नवधाय भूतदत्ताय ॥ दत्तोऽन्यदा नृपतिना, तं चेत्यूचे श्वपचनाथः ॥ १६ ॥ त्वां जीवयामि यदि मे, पुत्रौ पाठयसि भूमिगेहस्थः ॥ नमुचिरपि प्रतिपेदे, तदपि वचो जीवितव्यकृते ॥ १७ ॥ अध्यापयच्च सततं, कला विचित्राः स चित्रसम्भूतौ ॥ मातङ्गपतेः पत्नी—मनुरक्तामरमयच्च कुधीः ॥ १८ ॥ तच्चावबुध्य रुष्टे, श्वपचपतौ

हन्तुमुद्यते नमुचिम् ॥ त्वरितमनाशयतामुप–कारित्वाच्चित्रसम्भूतौ ॥ १९ ॥ निर्गत्य ततो नमुचि–र्द्रुतं ययौ हस्तिनापुरे नगरे ॥ तत्र च सनत्कुमार–श्चक्री तं धीसखं चक्रे ॥ २० ॥

इतश्च रूपमनिन्द्यं, लावण्यमद्भुतं यौवनं च तौ नव्यम् ॥ प्राप्तौ श्वपचसुतौ स्मर–मधुसमयाविव युतौ श्रमतुः ॥ २१ ॥ वीणावेणुकलक्कण–सम्बन्धसुबन्धुरं च तौ गीतम् ॥ गायन्तौ नृत्यन्तौ, जगतोपि मनो व्यपाहरताम् ॥ २२ ॥ अन्येद्युः पुरि तस्यां, मधूत्सवः प्रववृते महः प्रवरः ॥ तत्राविगीतगीता, विनिर्ययुः पौरचर्चर्यः ॥ २३ ॥ निरगाच्च चर्चरी तत्र, चित्रसम्भूतयोरपि प्रवरा ॥ तत्र च जगतुर्गीतं, किन्नरमदहारि तौ स्फीतम् ॥ २४ ॥ आकर्णं कर्णमधुरं, तद्गीतं विश्वकार्मणममन्त्रम् ॥ त्यक्तान्यचर्चरीकाः, पौराः पौर्यश्च तत्र ययुः ॥ २५ ॥ सर्वस्मिन्नपि लोके, तद्गीतगुणेन मृगवदाकृष्टे ॥ गातारोन्ये भूपं, व्यजिज्ञपन्निल्लमर्षवशात् ॥ २६ ॥ मातंगाभ्यां स्वामिन् !, गीतेनाकृष्य पौरलोकोयम् ॥ सकलोपि कृतो मलिन–स्तत इत्यलपन्नृपः कोपात् ॥ २७ ॥ पुर्यां प्रवेष्टुमनयो–र्नो देयं वेश्मनीव कुर्कुरयोः ॥-तत आरभ्य वृकाविव, तौ दूरमतिष्ठतां पुर्याः ॥ २८ ॥ तस्यां च पुरि प्रवरे, प्रवृत्तवति कौमुदीमहेऽन्येद्युः ॥ उल्लंघ्य नृपतिवचनं, प्राविशतामजितकरणौ तौ ॥ २९ ॥ विहितावगुण्ठनौ तौ, छन्नमटन्तौ महं च पश्यन्तौ ॥ क्रोष्टुरवैः क्रोष्टारा–विव गानोत्कौ प्रजागीतैः ॥ ३० ॥ अवगणितभूपभीती, अगायतामतिमनोहर गीतम् ॥ तच्च निशम्य जनास्तौ, परिवव्रुर्मक्षिका मधुवत् ॥ ३१ ॥ [ युग्मम् ] कावेताविति लोकै–र्द्राङ् कृष्टावगुण्ठनावथ तौ ॥ उपलक्षितौ नृपाज्ञा–विलोपकत्वाद्भृशं निहतौ ॥ ३२ ॥ नश्यन्तौ पश्यन्तौ, दीनं भयविह्वलौ स्खलत्पादौ ॥ लोकैश्च हन्यमानौ, कथमपि तौ निर्गतौ पुर्याः ॥ ३३ ॥ गम्भीरोद्यानं च, प्राप्तौ ताविति मिथो व्यचिन्तयताम् ॥ धिग् नौ कुलदोषहतान्, रूपकलाकौशलादिगुणान् ॥ ३४ ॥ धातव इव क्षयरुजा, दोषेणानेन दूषिता हि गुणाः ॥ जाता विपत्तये नौ, पत्तय इव भेदिता द्विषता ॥ ३५ ॥ व्यसनैरिव नौ व्यसनं, जज्ञे कुलदोषदूषितैर्हि गुणैः ॥ स च सहचारी वपुष–स्तत्त्याज्यं रज इवेदमपि ॥ ३६ ॥ ध्यात्वेति मर्तुकामौ, यान्तौ प्रति दक्षिणामुभावपि तौ ॥ दूरं गतौ महीधर–मपश्यतामेकमतितुङ्गम् ॥ ३७ ॥ तं चारोहन्तौ तौ, भृगुपातचिकीर्षया श्रमणमेकम् ॥ ध्यानस्थममानगुणं, प्रेक्ष्य प्रोच्चैर्मुदमधत्ताम् ॥ ३८ ॥ छायातरुमिव पथिकौ, तं प्राप्यापगतसकलसन्तापौ ॥ तावनमतां वमन्तौ, प्राग् दुःखमिवाश्रुजलदम्भात् ॥ ३९ ॥ ध्यानं समाप्य मुनिना, कुत आयातौ युवामितकि पृष्टौ ॥ प्राकाशयतां स्वाशय–मुक्त्वा निजवृत्तमखिलं तौ ॥ ४० ॥ तत इत्यूचे श्रमणो, विलीयते देह एव भृगुपातात् ॥ न तु पातकं ततोऽसौ, न युज्यते दक्षयोर्युवयोः ॥ ४१ ॥ दुःखानां बीजमघं, तपसैव क्षीयते न मरणेन ॥ तदिदं हेयं देहं, सफलीक्रियतां तपश्चरणैः ॥ ४२ ॥ ग्लानाविव वैद्यवच–स्तत्साधुवचः प्रपद्य तौ सद्यः ॥ प्राव्रजतां तत्पार्श्वे, क्रमादभूतां च गीतार्थौ ॥ ४३ ॥ षष्ठाष्टमादितपसा, कृशयन्तौ विग्रहं समं पापैः ॥ मूर्तौ तपःशमाविव, सममेव विजहतुर्भुवि तौ ॥ ४४ ॥ विहरन्तौ तौ जग्मतु–रन्येद्युर्हस्तिनापुरे नगरे ॥ बहिरुद्यानस्थौ तत्र, चेरतुर्दुश्चरं च तपः ॥ ४५ ॥ सम्भूतमुनिर्नगरे, मासक्षपणस्य पारणेऽन्येद्युः ॥ भिक्षार्थमटन् ददृशे, दुरात्मना नमुचिसचिवेन ॥ ४६ ॥ मातङ्गसुतः सोयं, मम वृत्तं वक्ष्यतीति साशङ्कः ॥ निष्काश्यतां पुरादय–मित्यूचे निजभटान्नमुचिः ॥ ४७ ॥ यमदूतैरिव चण्डै–स्तैर्लकुटादिप्रहारदानपरैः ॥ विधुरीकृतोथ साधु–र्द्रुतं न्यवर्तत ततः स्थानात् ॥ ४८ ॥ निर्गच्छन्नपि स मुनि–र्नमुचिभटैर्न मुमुचे यदाऽपदयैः ॥ शान्तोपि चुकोप तदा, स्यादुष्णं जलमपि ह्यनलात् ॥४९॥ तद्वदनान्निरगादथ, धूमस्तोमः समन्ततः प्रसरन् ॥ तदनु च तेजोलेश्या, ज्वालापटलैर्नभःस्पृशती ॥ ५० ॥ तद्वीक्ष्य सभयकौतुक–मेयुः पौरा मुनिं प्रसादयितुम् ॥ आयासीत्पुरनाथः, सनत्कुमारश्च चक्रिवरः ॥ ५१ ॥ नत्वा चैवमवोचत, भगवन्नेतन्न युज्यते भवतः ॥ दग्धः कृशानुनापि हि, नागुरुरुद्गिरति दुर्गन्धम् ॥ ५२ ॥ क्रियतामस्मासु कृपा, संह्रियतामाशु कोपफलमेतत् ॥ व्यभिचरति सतां कोपः, फले खलानामिव स्नेहः ॥ ५३ ॥ उक्तं च—

"न भवति भवति च न चिरं, भवति चिरं चेत् फले विसंवदति ॥ कोपः सत्पुरुषाणां, तुल्यः स्नेहेन नीचानाम् ॥५४॥"

तन्मुंच मुंच कोपं, नीचजनोचितमनंचितं मुनिभिः ॥ इत्युक्तोपि न यावत्, प्रससाद स साधुरतिकुपितः ॥ ५५ ॥ तावत्तत्रायातः, चित्रस्तं व्यतिकरं जनात् श्रुत्वा ॥ इत्यूचे भ्रातस्त्यज, रोषमिमं चरणवनदहनम् ॥ ५६ ॥ देशोनपूर्वकोट्या, यदर्जितं भवति विमलचारित्रम् ॥ तदपि हि कषायकलुषो, हारयति यतिर्मुहूर्तेन ॥ ५७ ॥ सुलभा हि बालसंज्ञा–दाक्रोशाघातमरणधर्मगमाः ॥ एषु च यथोत्तरस्या–भावे मनुते मुनिर्लाभम् ॥ ५८ ॥ अपकृतिकारिषु

कोपः, क्रियते चेत्कोप एव स क्रियताम् ॥ यो हरति धर्मवित्तं, दत्ते चानन्तदुःखभरम् ॥ ५९ ॥ इत्यादिचित्रवाक्यैः, श्रुतानुगामिभिरशामि तत्कोपः ॥ पाथोधरपाथोभि-र्गिरिदावानल इव प्रबलः ॥ ६० ॥ तं चोपशान्तमनसं, प्रणम्य लोका ययुर्निजं स्थानम् ॥ तौ च श्रमणौ जग्मतु-रुद्यानं दध्यतुश्चैवम् ॥ ६१ ॥ आहारार्थं प्रतिगृह-मटद्भिरासादिते व्यसनमुखैः ॥ गात्रं चैतद्भूतवर-माहारेणापि कृतपोषम् ॥ ६२ ॥ तत्कृतसंलेखनयो-राहारैरावयोः कृतमिदानीम् ॥ इति तौ चतुर्विधाहा-रमनशर्म चक्रतुः कृतिनौ ॥ ६३ ॥ कः पर्यभून्मयि नृपे, सति यतिमिति पृच्छतो जनान् राज्ञः ॥ केनाप्यूचे नमुचि-स्तमथ नृपोऽबन्धयत्कुपितः ॥ ६४ ॥ पुनरप्येवं माऽन्यो, मान्यानपमानयत्विति महीमान् ॥ पुरमध्येनानैषी-दुपमुनि तं दस्युमिव बद्धम् ॥ ६५ ॥ तौ चावन्दत भूपो-ऽङ्कुरयन्निव मेदिनीं मुकुटकिरणैः ॥ तं चानन्दयतां चारु-धर्मलाभाशिषा श्रमणौ ॥ ६६ ॥ लभतामपराधी वः, स्वकर्मफलमयमिति ब्रुवन्नृपतिः ॥ श्रमिनोरदर्शयदयो-पस्थितमरणं नमुचिसचिवम् ॥ ६७ ॥ मोक्तव्य एव राज-न्नयमित्युदितस्ततो नृपस्ताभ्याम् ॥ निर्वास्य पुरादमुच-द्गुरुवचनाद्वध्यमपि तं द्राक् ॥ ६८ ॥ तौ नन्तुमथायासी-त्स्त्रीरत्नं चक्रिणः सुनन्दाख्या ॥ देवीभिरिवेन्द्राणी, वृता सपत्नीभिरखिलाभिः ॥ ६९ ॥ तस्याश्च प्रणताया, वेणिलतास्पर्शमनुभवन् सद्यः ॥ सम्भूतोभूद्रक्तो-ऽनङ्गस्यापि प्रबलताहो ! ॥ ७० ॥ दध्यौ चैवं यस्या, वेणिस्पर्शोपि सृजति सुखमतुलम् ॥ तस्या नलिनाक्षयाः, कायस्पर्शस्य का वार्ता ? ॥ ७१ ॥ अन्तःपुरमन्तःपुरयुक्ते, राजनि गतेथ तौ नत्वा ॥ सम्भूतमुनिर्विदधे, निदानमिति कामरागान्धः ॥ ७२ ॥ अतिदुष्करस्य यदि मे, तपसः स्यात्फलममुष्य किमपि तदा ॥ स्त्रीरत्नस्य स्वामी, भूयासं भाविनि भवेऽहम् ॥ ७३ ॥ तच्च श्रुत्वा चित्रो, दध्यौ मोहस्य दुर्जयत्वमहो ! ॥ विदितागमोपि निपतति, यदयं संसारखारिनिधौ ॥ ७४ ॥ तद्बोधयाम्यमुमिति, प्रोचे चित्रः करोषि किं ? भ्रातः ! ॥ तपसोमुष्मात्किमिदं, कामयसे तृणमिव द्युमणेः ? ॥ ७५ ॥ क्षणिकाक्षणिकान् कांक्षति, भोगानपहाय निर्वृतिसुखं यः ॥ स हि काचसकलमुररी-करोति सुररत्नमपहाय ! ॥ ७६ ॥ तद्दुःखनिदानमिदं, मुंच निदानं विमुह्यसि कृतिन् ! किम् ?॥ इत्युक्तोपि स मुमुचे, न निदानं धिग् विषयतृष्णाम् ॥ ७७ ॥ तावथ पूर्णायुष्कौ, सौधर्मे निर्जरावजायेताम् ॥ चित्रस्ततश्च्युतोभू-दिभ्यसुतः पुरिमतालपुरे ॥ ७८ ॥ सम्भूतोपि च्युत्वा, काम्पील्यपुरे महर्द्धिभररुचिरे ॥ चुलनीकुक्षिप्रभवो, ब्रह्मनृपस्याभवत्तनयः ॥ ७९ ॥ तस्य चतुर्दशसुस्वप्न-सूचितागामिसम्पदो मुदितः ॥ विदधे सोतस्वमभिधां, ब्रह्मनृपो ब्रह्मदत्त इति ॥ ८० ॥ ववृधे सोथ कुमारः, सितपक्षशशीव शुभकलाशाली ॥ जगदानन्दं जनयन्, वचोमृतेनातिमधुरेण ॥ ८१ ॥ अभवन् वयस्य भूपा-श्चत्वारो ब्रह्मणोथ तेष्वाद्यः ॥ कटकः काशीशोऽन्यः, कणेरुदत्तो गजपुरेशः ॥ ८२ ॥ दीर्घश्च कोशलेश-श्चम्पानाथश्च पुष्पचूलनृपः ॥ सामान्यमिव व्यक्तिषु, तेषु स्नेहोमवयापी ॥ ८३ ॥ पञ्चापि ब्रह्माद्या-स्तेन्योन्यं विरहमक्षमाः सोढुम् ॥ एकैकपुरे न्यवसन् , प्रतिवर्षं संयुतः क्रमशः ॥ ८४ ॥ काम्पील्यपुरेऽन्येद्युः, सममायातेषु तेषु परिपाट्या ॥ ब्रह्मनृपस्य कदाचि-च्छिरोव्यथा दुस्सहा जज्ञे ॥८५॥ जातद्वादशवर्षं, न्यस्यांके ब्रह्मदत्तमथ सुहृदाम् ॥ सोचे कारयितव्यं, राज्यमिदमनेन युष्माभिः ॥ ८६ ॥ इत्युक्त्वा राज्ञि मृते, कृत्वा तत्प्रेतकर्म तत्सुहृदः ॥ दध्युर्मित्रस्य सुतः, शैशवमवगाहते यावत् ॥ ८७ ॥ तावद्राज्यमिदं रक्षणीयमारक्षकैरिवास्माभिः ॥ इति दीर्घं रक्षार्थं, मुक्त्वाऽन्ये स्वस्वनगरमगुः ॥ ८८ ॥ दीर्घोथ राज्यमखिलं, बुभुजेऽरक्षकमिवौदनं काकः ॥ मार्जारो दुग्धमिवा-न्वैपीत्कोशं च चिरगूढम् ॥ ८९ ॥ मध्ये शुद्धान्तमगा-दनर्गलः पूर्वपरिचयादनिशम् ॥ रहसि च चुलनीदेवी-मवार्त्तयन्नर्मनिपुणगिरा ॥ ९० ॥ सोथावमत्य लोकं, ब्रह्मनृपतिसौहृदं कुलाचारम् ॥ अरमयदनिशं चुलनी-महो ! अजय्यत्वमक्षाणाम् ॥ ९१ ॥ अहिलापटमिव मुमुचे, चुलन्यपि प्रेम रमणविषयं द्राक् ॥ तौ च सुखं भुञ्जानौ, नाज्ञासिष्टां दिनान् व्रजतः ॥ ९२ ॥ तच्च तयोर्दुश्चरितं, ब्रह्मनृपस्य द्वितीयमिव हृदयम् ॥ ज्ञात्वा सचिवो धनुरिति, दध्यौ सद्बुद्धिजलजलधिः ॥ ९३ ॥ कुरुतामकार्यमेत-च्चुलनी जातिस्वभावचपलमतिः ॥ न्यासेर्पितमपि सकलं, दीर्घो विद्रवति तदयुक्तम् ॥ ९४ ॥ तदसौ किमपि विदध्या-द्भूपसुतोपि व्यलीकमतिदुष्टः ॥ नीचो हि पोषकस्या-प्यात्मीयः स्यान्न भुजग इव ॥ ९५ ॥ ध्यात्वेति ज्ञापयितुं, तत्सकलं सेवितुं कुमारं तम् ॥ वरधनुसंज्ञं निजसुत-मादिशदतिनिपुणमतिविभवम् ॥ ९६ ॥ तेनाथ तयोश्चरिते, निवेदिते ब्रह्मसुतस्तदसहिष्णुः ॥ अन्तःपुरान्तरगम-द्वद्धा द्विकको किले कुपितः ॥ ९७ ॥ वध्याविमौ यथा वर्ण-सङ्करादीदृशः परोपि तथा ॥ हन्तव्यो मे निश्चित-मित्युच्चैस्तत्र चावादीत् ॥ ९८ ॥ काकोहं त्वं च पिकी-त्यावां खलु हन्तुमिच्छति

सुतस्ते ॥ तत इति दीर्घेणोक्ते, देव्यूचे शिशुगिरा का भीः ? ॥ ९९ ॥ भद्रकरेणुमृगेभौ, नीत्वा तत्रान्यदा तथैव पुनः ॥ नृपभूः प्रोचे तच्च, श्रुत्वा दीर्घोऽवदच्चुलनीम् ॥१००॥ शृणु सुभगे सुतवाणीं, साभिप्रायां हलाहलप्रायाम् ॥ देव्यवदद्भवतु तथा–प्यनेन किं जायते शिशुना ? ॥१०१॥ हंस्या सममन्येद्यु–र्बकमादायावरोधमायातः ॥ नृपभूरुवाच नैवं, कस्याप्यनयं सहिष्येऽहम् ॥ १०२ ॥ तत इत्यवदद्दीर्घः, शृणु देवि ! शिशोः सुतस्य वचनमिदम् ॥ अनुमापयति मनःस्थं, कोपं यद्धूम इव वह्निम् ॥ १०३ ॥ वृद्धिं गतो हि भावी, सुखविघ्नायावयोरसौ नियतम् ॥ तदयमुदयन्निवामय, उच्छेद्यः शिशुरपि दुरात्मा ! ॥ १०४ ॥ देव्यूचे राज्यधरं, हन्मि कथं तनयमौरसं स्वामिन् ! ॥ पशवोपि प्राणानिव, निजान्यपत्यानि रक्षन्ति ॥ १०५ ॥ भूयोप्यूचे दीर्घो, रिपुमेवावेहि सुतममुं सुतनो ! ॥ तत्किं मुह्यसि मयि सति, बहवस्तव भाविनस्तनयाः ॥ १०६ ॥ तदथ प्रतिपद्योचे, चुलनी रतरागलुप्तसुतमोहा ॥ केनोपायेनास्मि–न्निहते वचनीयता न स्यात् ॥ १०७ ॥ दीर्घोऽब्रवीत्कुमारो, विवाहतां तस्य वासगृहदम्भात् ॥ गूढप्रवेशनिर्गम–मेकं लाक्षागृहं कार्यम् ॥ १०८ ॥ तत्र च सवधूकेऽस्मिन्, सुप्ते रात्रौ हुताशनो ज्वाल्यः ॥ इति तौ विमृश्य जतुगृह–मारम्भयतामसारमती ॥ १०९ ॥ वृत्वा ब्रह्मसुतार्थं, पुष्पवतीं पुष्पचूलनृपतिसुताम् ॥ सामग्रीं च समग्रां, विवाहसक्तामकारयताम् ॥ ११० ॥ जतुगृहरचनादथ धनु–सचिवो दुष्टं तयोर्विदन् भावम् ॥ ब्रह्मभुवो हितमिच्छु–र्गत्वाख्यद्दीर्घनृपमेवम् ॥ १११ ॥ अस्ति सुतो मे वरधनु–नामा युष्मन्निदेशकरणचणः ॥ तदहं जरी चिकीर्षे, परलोकहितं क्वचिद्गत्वा ॥ ११२ ॥ कुर्यात्कमप्यनर्थं, गतः परत्रायमिति धृताशङ्कः ॥ दीर्घः कृतायहित्थ–स्तमित्यवोचत्ततो दम्भात् ॥ ११३ ॥ त्वामन्तरा हि राज्यं, न भाति नभ इव विना निशानाथम् ॥ तदलं परत्र गमनैः, कुरु धर्ममिहैव दानाद्यम् ॥ ११४ ॥ गङ्गातटेथ कृत्वा, सद्बुद्धिः सत्रमण्डपं मंत्री ॥ दीनादीनां दानं, ददौ यथाकाममन्नादेः ॥ ११५ ॥ प्रत्ययितनरैर्दानो–पकारमानैर्वशीकृतैः सचिवः ॥ द्विक्रोशां च सुरङ्गा–मचीखनज्जतुगृहं यावत् ॥ ११६ ॥ वार्त्तां तां च छन्नं, न्यवेदयत् पुष्पचूलभूपतये ॥ सोपि ततो दासेरीं, प्रैषीद्दुहितुः पदे रुचिराम् ॥११७॥ भूषणभृतेति सुपरि–च्छदेति तां नृपसुतां जनो मेने ॥ उत्तेजिता मणियुता, कनकमिवाभाति रीतिरपि[1] ॥ ११८ ॥ गणिकाप्रेमेव मनो, बाह्यं कृत्वा महोत्सवं चुलनी ॥ तामथ पुरे प्रविष्टां, व्यवाहयद्ब्रह्मदत्तेन ॥ ११९ ॥ लोकं विसृज्य तनयं, प्रैषीदथ ससुपं जतुगृहे सा ॥ सोपि वधूवरधनुयुग्, विसृष्टतंत्रो ययौ तस्मिन् ॥ १२० ॥ तस्य च गतेऽर्द्धरात्रे, वार्त्ताभिः सचिवसूनुरचिताभिः ॥ तत्राज्वलयज्ज्वलनं, जतुवेश्मनि निजनरैश्चुलनी ॥ १२१ ॥ दीर्घचुलन्योरपयश, इव धूमो व्यानशेऽथ भूवलयम् ॥ तत्स्पर्द्धयेव परित–स्तत्सदनं व्यापदनलोपि ॥ १२२ ॥ सम्भ्रान्तोथ कुमारः, किमेतदिति मंत्रिनन्दनमपृच्छत् ॥ सोप्यब्रवीदिदं खलु, चुलनीदुश्चेष्टितं निखिलम् ॥ १२३ ॥ तत्रं यावत्पित्रा, तदिह सुरङ्गा कृतास्ति पातुं त्वाम् ॥ तद्द्वारमितः प्रविश, प्रकाश्य पार्ष्णिप्रहारेण ॥१२४॥ छन्नमुदन्तममुं मम,

[1] पित्तलम् ।

पिता न्यवेदयदतस्तव श्वशुरः ॥ प्रैषीद्दासीमेनां, तत् प्रतिबन्धं विमुंचास्याः ॥ १२५ ॥ तेनेत्युक्तो नृपभू–र्भूपुटमास्फोट्य पार्ष्णिघातेन ॥ सुहृदा समं सुरंगां, विवेश योगीव भूविवरम् ॥ १२६ ॥ प्राप्तौ च सुरंगान्ते, तुरगावारुह्य मंत्रिणा दत्तौ ॥ तौ जग्मतुः कुमारौ, पंचाशद्योजनानि द्राक् ॥ १२७ ॥ तत्र च विहाय वाहौ, गुरुमार्गातिक्रमश्रमेण मृतौ ॥ क्रोष्टुकसंज्ञमगातां, ग्रामं तौ पादचारेण ॥ १२८ ॥ स्माहाथ भूपभूरिति, मां पीडयतः सखे ! क्षुधोदन्ये ॥ क्षणमिह तिष्ठ स्वामि–न्नित्यूचे तं च सचिवसुतः ॥ १२९ ॥ किंचिच्च विचार्य दिवा–कीर्तिं ग्रामात्ततः समाकार्य ॥ तौ वपनमकारयतां, चूडामात्रं त्वधारयताम् ॥ १३० ॥ सन्ध्याभ्राणीव रवि–श्वेतरुची धातुरक्तवसनानि ॥ परिधाय न्यक्षिपता, स्वकण्ठयोर्ब्रह्मसूत्रं तौ ॥ १३१ ॥ वरधनुरथभूपभुवः, श्रीवत्सालङ्कृतं हृदयपट्टम् ॥ चतुरङ्गुलपट्टेन, प्यधादहो ! रिपुभयं प्रबलम् ॥ १३२ ॥ वेषान्तरमिति कृत्वा, ग्रामान्तस्तौ गतौ द्विजः कश्चित् ॥ भोजनकृते न्यमंत्रय–दभोजयच्चातिगौरवतः ॥ १३३ ॥ अथ मूर्ध्नि ब्रह्मभुवो–ऽक्षतान् क्षिपन्ती द्विजप्रिया प्रमदात् ॥ सितवसनयुगं कन्यां, चोपानिन्येऽप्सरःकल्पाम् ॥ १३४ ॥ ऊचेऽथ वरधनुः किं, ददास्यमूमस्य निष्कलस्य बटोः ? ॥ नक्षति नक्षतिरुचिरां, हारलतां कोपि करभगले ! ॥ १३५ ॥ तत इत्यवदद्विप्रो, 'बन्धुमती' संज्ञका मम सुतासौ ॥ अस्याश्च वरश्चक्री, भावीत्युक्तं निमित्तज्ञैः ॥ १३६ ॥ पट्टाच्छादितहृदयो, भुंक्ते यस्तव गृहे समित्रस्तम् ॥ जानीया दुहितुर्वर–मिति तैरेव च मम प्रोक्तम् ॥ १३७ ॥ योग्याय सुविद्यामिव, ददे तदेनां कनीमहममुष्मै ॥ प्राणप्रियां

सुतां खलु, यच्छामि यथातथा न सखे ! ॥ १३८ ॥ तामथ परिणीय कनीं, नृपभूः स्थित्वा च तत्र तां रजनीम् ॥ सद्भावं भार्यायै, प्रोच्य समित्रोचलत्प्रातः ॥ १३९ ॥ दूरग्रामं च गतौ, शुश्रुवतुस्ताविदं जनश्रुत्या ॥ सर्वेऽध्वानो रुद्धा, दीर्घेण ब्रह्मदत्तकृते ॥ १४० ॥ प्राणत्राणकृते तौ, गच्छन्तावुत्पथेन तच्छ्रुत्वा ॥ प्रापतुरटवीमेका, तत्र च नृपभूस्तृषितः ॥ १४१ ॥ तमथ वटाधो मुक्त्वा, द्रुतं गतो वरधनुः कृते पयसः ॥ उपलक्ष्य दीर्घपुरुषैः, सायं रुरुधे च जगृहे च ॥ १४२ ॥ सोथ पलायनसंज्ञां, ब्रह्मभुवो व्यधित हन्यमानस्तैः ॥ तूर्णं ततः कुमारो, ननाश पारद इवाघ्रातः ॥ १४३ ॥ वेगाद्व्रजंश्च पतितः, कान्तारे धूर्त्तचित्त इव गहने ॥ विरसफलानि स बुभुजे, दुरवस्थायां हि किमभक्ष्यम् ॥ १४४ ॥ भ्राम्यंश्चैकं तापस-मह्नि तृतीये ददर्श नृपतिसुतः ॥ प्रवहणमिवाब्धिपतित-स्तं च प्राप्याधिकं मुमुदे ॥ १४५ ॥ कुत्रास्ति भदन्ताना-माश्रम इति तं वदन्तमथ स मुनिः ॥ नीत्वाश्रममुपकुलपति, निन्ये व्रतलिप्सुमिव सद्यः ॥ १४६ ॥ तं च प्रणतं प्रणया-दित्यलपत्कुलपतिः कृपाजलधिः ॥ कस्त्वं किमिहायासी-र्वायोरपि दुर्गमे गहने ? ॥ १४७ ॥ नृपभूस्ततः स्ववृत्तं, स्माह यथावृत्तमखिलमपि तस्मै ॥ तच्च श्रुत्वा कुलपति-रित्यवदत्प्रमदगद्गदगीः ॥ १४८ ॥ ब्रह्मनृपस्य भ्राता, लघुरहमस्मि त्वदीयतातस्य ॥ तत्प्राप्तोसि स्वगृहं, तिष्ठ सुखं वत्स ! मा भैषीः ॥ १४९ ॥ तेनेति बाढमुदितो, मुदितस्तत्राश्रमे कुमारोऽस्थात् ॥ आगाच्च जलदकालः, काल इव निदाघदाहस्य ॥ १५० ॥ तमथ पितृव्यः प्रेम्णा, सविशेषमपाठयत्कलाः सकलाः ॥ पात्रे दत्ता श्रीरिव, विद्या हि स्यादनन्तफला ॥ १५१ ॥ जातेथ शरत्काले, कन्दादिकृते वनं ययुर्मुनयः ॥ ब्रह्मसुतोपि समं तै-र्ययौ निषिद्धोपि कुलपतिना ॥ १५२ ॥ तत्र च फलकुसुमभरै-र्नमितानमितान् स भूरुहः पश्यन् ॥ वनगजमेकमपश्य-द्युवराजमिवाद्रिराजस्य ॥ १५३ ॥ तस्यानुपदमयासी-न्निवार्यमाणोपि तापसैर्नृपभूः ॥ तेनाहृतः सद्यो, ववले व्यालोपि रोषान्धः ॥ १५४ ॥ तटिनीपूरमिव द्रुत-मायान्तं तं च वञ्चयितुं मनसा ॥ प्रक्षिप्तमुत्तरीयं, क्रीडारसिकेन भूपभुवा ॥ १५५ ॥ तत्तु करेण गृहीत्वा, प्राक्षिपदन्तर्नभः क्रुधा कुम्भी ॥ निपतच्च ततो नृपभू-स्तदाददे वञ्चितद्विरदः ॥ १५६ ॥ क्रीडाभिरिति क्रीडति, तस्मिन् करिणा समं कृताटोपः ॥ जलधाराभिर्जलदः, शरैरिवोपाद्रवत्तमिभम् ॥ १५७ ॥ तस्मिंस्ततः प्रणष्टे, द्विपे कुमारोपि जातदिग्मोहः ॥ भ्राम्यन्नितस्ततः शैल-निम्नगामुत्ततारैकाम् ॥ १५८ ॥ तस्याश्च तटे नगरं, पुराणमुद्वसमुदीक्ष्य पतितगृहम् ॥ तत्र प्रविशन्नेकं, वंशकुडंगं ददर्श घनम् ॥ १५९ ॥ तत्पार्श्वे फलकासी, दृष्ट्वा शस्त्रप्रियोऽगृहीन्नृपभूः ॥ तं वंशकुडंगं चा-सिनाच्छिनत्तत्परीक्षायै ॥ १६० ॥ तस्माद्विनिर्गतमथ, स्फुरदधरपुटं स्फुटं समीक्ष्य शिरः ॥ सम्भ्रान्तो ब्रह्मसुतः, सम्यगवालोकयद्यावत् ॥ १६१ ॥ उद्बद्धांघ्रेर्धूमं, पिबतः कस्यापि तावदतिपीनम् ॥ दृष्ट्वा कवन्धमुच्चै-रवापदनुतापसन्तापम् ॥ १६२ ॥ निर्मन्तुरपि हतोयं, हा ! विद्यासाधको मया कश्चित् ॥ तन्मां क्रीडारसिकं, धिगिति निनिन्दायमात्मानम् ॥ १६३ ॥ पुरतो गच्छंश्चैकं, प्रासादं सप्तभूमिकमपश्यत् ॥ अतिनन्दनेन परितः, परीतमुद्यानवलयेन ॥ १६४ ॥ साक्षाद्दिवीव तस्मि-न्नारूढो निर्जरीमिव सुरूपाम् ॥ कुवलयदलविपुलाक्षी-मद्राक्षीत्कन्यकामेकाम् ॥ १६५ ॥ सोथ शुभे ! कासि त्वं, तिष्ठसि वा कथमिहेत्यपृच्छत्ताम् ? ॥ धृतसाध्वसा ततः सा-ऽप्यवदोऽवदद्गद्गदैर्वचनैः ॥ १६६ ॥ वृत्तान्तोस्ति महान्मे, तद्वद कोसि त्वमिह किमायासीः ? ॥ इति तद्गिरा स मुदितो, वचनेनायोजयद्वदनम् ॥ १६७ ॥ पाञ्चालपतेर्ब्रह्म-प्रभोः सुतो ब्रह्मदत्तनामाहम् ॥ इति सोवादीद्याव-न्मुदिता सा तावदुत्तस्थौ ॥ १६८ ॥ नयनाञ्जलितो गलितैः, सा प्रमदा प्रमदबाष्पसलिलभरैः ॥ रचयन्ती पाद्यमिव, न्यपतच्च तदङ्घ्रिनलिनयुगे ॥ १६९ ॥ अत्राणयात्र मयका, दिष्ट्या शरणं शरण्य ! लब्धस्त्वम् ॥ इति च वदन्ती रुदन्ती, सुदती साश्वासी भूपभुवा ॥ १७० ॥ पृष्टा च का ? त्वमिति सा, प्रोचेऽहं पुष्पचूलभूजानेः ॥ त्वन्मातुलस्य तनया, तुभ्यं दत्तासि पुष्पवती ॥ १७१ ॥ परिणयदिनोत्सुकां रम-माणामारामदीर्घिकापुलिने ॥ हृत्वाऽन्येद्युर्विद्या-धराधमो मामिहानैषीत् ! ॥ १७२ ॥ कालमियन्तं बन्धुजन-विरहदावाग्नितप्तगात्राहम् ॥ त्वद्दृष्ट्याऽमृतवृष्ट्या, क्लिन्ना निर्वापिताद्य विभो ! ॥ १७३ ॥ क्व गतोस्ति ? स मे रिपुरिति, पृष्टा सा नृपसुतेन पुनरवदत् ॥ तेन किल पठितसिद्धा-ऽर्पितास्ति मे शाङ्करी विद्या ॥ १७४ ॥ सा हि स्मृता विधत्ते, परिच्छदीभूय कृत्यमखिलमपि ॥ विनयत्युपद्रवं मे, पृष्टा चाख्याति तद्वार्त्ताम् ॥ १७५ ॥ तां पृष्ट्वेदं वच्मी-त्युक्त्वा स्मृत्वा च तां पुनः साख्यत् ॥ येनाहृतास्मि नाट्यो-न्मत्तः स हि खेचरो नाम्ना ॥ १७६ ॥ मम तेजोऽसहमानो, मुक्त्वा विद्याकृतेत्र धामनि माम् ॥ विद्यां साधयितुमगा-द्वंशकुडङ्गे स्वयं गहने ॥ १७७ ॥ तस्योर्द्ध्वपदो धूमं, पिबतो

निर्विघ्नं सेत्स्यति स्वामिन्! ॥ विद्यावलोर्जितबलः, परिणेष्यति मा ततः स कुधीः ॥ १७८ ॥ अथ तद्व्यतिकरे, तेनोक्ते साधु कृतमिति ब्रुवती ॥ मुमुदे भृशं कनी सा, प्रियलाभादप्रियोच्छेदात् ॥ १७९ ॥ अथ तामुदुह्य कन्यां, गान्धर्वविवाहरचनया नृपभूः ॥ रमयन् विविधैः सुरतै–स्तां क्षणदां क्षणमिवाक्षपयत् ॥ १८० ॥ प्रातश्च खेचरीणां, ध्वनिमवनिधवाङ्गजोऽम्बरे श्रुत्वा ॥ वियति भवति कस्यायं, ध्वनिरिति पप्रच्छ पुष्पवतीम् ? ॥ १८१ ॥ सा प्रोचे प्रिय! नाट्यो–न्मत्ताख्यत्वद्रिपोरिमे जामी ॥ भ्रातुः कृते विवाहो–पस्करमादाय सकलमपि ॥ १८२ ॥ 'खण्डा' 'विशाखिका' ऽऽख्ये, खेचरकन्ये मुधा समायातः ॥ कार्यं ध्यातमितरथा, दैवेन त्वन्यथा घटितम्! ॥ १८३ ॥ [युग्मम्] तत्तावदपसर त्वं, यावत्सङ्कीर्त्ये तव गुणान् प्रगुणान् ॥ जानाम्यनयोर्भावं, त्वयि रागविरागयोः स्वामिन्! ॥ १८४ ॥ रागे चलयिष्यामि, ध्वजमरुणं वीक्ष्य तं त्वमागच्छेः ॥ रागाभावे तु सितं, त च प्रेक्ष्यान्यतो गच्छेः ॥ १८५ ॥ अभयोपि ततो नृपभू–स्तस्थौ गत्वान्यतस्तदनुवृत्त्या ॥ अथ पुष्पवती श्वेतं, चलयामास क्षणात् केतुम् ॥ १८६ ॥ तं च प्रेक्ष्य कुमारः, शनैः शनैः प्रस्थितोऽन्यतो गन्तुम् ॥ उल्लंघ्य वनं दुर्गम–मेकमविन्दत सरः सायम् ॥ १८७ ॥ तत्र स्नात्वा सलिलं, निपीय पीयूषसरसमथसरसः ॥ निर्गत्य ब्रह्मसुत–स्तटमुत्तरपश्चिमं भेजे ॥ १८८ ॥ तत्र च कन्यां काञ्चि–त्समीक्ष्य जलदेवतामिवाध्यक्षाम् ॥ सफलं जन्म ममाभू–दद्येति नृपाङ्गजो दध्यौ ॥ १८९ ॥ तद्दर्शनामृतरसं, पायं पायं व्यपायविकलं सः ॥ ग्रीष्मे पयः पिबन्मरु–पान्थ इव प्राप नो तृप्तिम् ॥ १९० ॥ सापि च तं पश्यन्ती, कटाक्षविक्षेपदक्षचक्षुर्भ्याम् ॥ दास्या समं च किञ्चि–द्वदन्त्यगादन्यतः कन्या ॥ १९१ ॥ तन्मार्गदत्तदृष्टिः, प्रास्थित यावत्ततोन्यतो नृपभूः ॥ सा दास्याऽऽगात्तावत्, पटयुगताम्बूलकुसुमधरा ॥ १९२ ॥ तत्र प्रदाय तस्मै, जगौ त्वया या सरस्तटे दृष्टा ॥ निजचित्तमिव तयेदं, प्रेषितमस्ति प्रभो! तुभ्यम् ॥ १९३ ॥ प्रोक्तं च तया यदसौ, सुभगः पितृमंत्रिमन्दिरे नेयः ॥ स हि वेत्ति सकलमुचितं, तत्रागच्छ प्रभो! तत्त्वम् ॥ १९४ ॥ सोथागमत्सह तया, सदनं सचिवस्य नागदत्तस्य ॥ अभ्युत्तस्थौ सोपि, तमतिथिं चिरमिलितमिष्टमिव ॥ १९५ ॥ प्रहितोस्ति वो गृहेसौ, सुभगः श्रीकान्तया नृपतिपुत्र्या ॥ प्रोच्येति ययौ दासी, भेजे सचिवोपि तं प्रभुवत् ॥ १९६ ॥ दोषात्यये च निन्ये, राजकुले धीसखः कुमारं तम् ॥ भूपोपि तमर्घादिभि–रुपतस्थे तरणिमिव बालम् ॥ १९७ ॥ आतिथ्यमिदं क्रियते, तवातिथेरिति वदन्नथ क्ष्मापः ॥ तस्मै ददौ सुतां ता–मुदुवाह मुदा कुमारोपि ॥ १९८ ॥ अज्ञातकुलस्यैका–किनोपि दत्तासि मे कथं पित्रा? ॥ इत्यन्यदा रहसि तां, रमयन् पप्रच्छ नृपतिसुतः ॥ १९९ ॥ सावादीज्जनको मे, वसन्तपुरराजशबरसेनसुतः ॥ उन्मीलितः स्वराज्या–द्गोत्रिभिरागादिमां पल्लीम् ॥ २०० ॥ भिल्लान् विधाय वशगा–नत्रत्यान् सबलवाहनस्तिष्ठन् ॥ ग्रामादिलुण्टनैः स्वं, पुष्णाति परिच्छदं तातः ॥ २०१ ॥ तनयचतुष्कस्योपरि, पितु-

१ विघ्नरहितम् ॥

रिह वसतः सुतास्म्यहं जाता ॥ देव्यां श्रीमत्यां सुर–वल्लीव सुमेरुवसुधायाम् ॥ २०२ ॥ मां प्राप्तयौवनां चा–वदत् पिता मम नृपा द्विषो निखिलाः ॥ तदिहस्था वीक्ष्य वरं, निवेदयेर्मे मनोभीष्टम् ॥ २०३ ॥ पश्याम्यखिलान् पान्थां–स्ततोन्वहमिह स्थिता सरस्तीरे ॥ त्वां च प्रापं सुरतरु–मिव दुष्प्रापं प्रचुरपुण्यैः ॥ २०४ ॥ इति किंचिद–नापृच्छ्या–ऽर्पितास्म्यहं तुभ्यमीश! तातेन ॥ उदितस्तयेति मुदित–श्चिक्रीड तया समं नृपभूः ॥ २०५ ॥ पल्लीशः सोन्येद्यु–र्ग्रामं हन्तुं जगाम सैन्ययुतः ॥ तेन सह भूपभूरपि, गत्वाब्जसरस्तटे तस्थौ ॥ २०६ ॥ ग्रामेथ लुण्ट्यमाने, पपात वरधनुरुपेत्य तत्क्रमयोः ॥ आलम्ब्य च तत्कण्ठं, विमुक्तकण्ठं रुरोदोच्चैः ॥ २०७ ॥ ब्रह्मात्मजेन वचनै–रमृतद्रवसोदरैरथाश्वास्य ॥ पृष्टो वरधनुरूचे, स्ववृत्तमिति गद्गदैर्वचनैः ॥ २०८ ॥ मुक्त्वा तदा वटाध–स्त्वामम्भोर्थं गतोहमब्जसरः ॥ किञ्चिदपश्यं तज्जल–मब्जदलपुटेन जगृहे च ॥ २०९ ॥ वलितश्च दीर्घपुरुषै–रुदायुधैर्हतहतेति जल्पद्भिः ॥ सन्नद्धै रुद्धोहं, हंसः काकैरिव कठोरैः ॥ २१० ॥ क? ब्रह्मदत्त इति तैः, पृष्टश्चाब्रवमहं न वेद्मीति ॥ गाढमथ ताडितस्तै–रवदं व्याघ्रेण जग्ध इति ॥ २११ ॥ दर्शय तं देशमथे–त्युक्तो भ्राम्यन्नितस्ततो दम्भात् ॥ त्व-द्दर्शनपथमेत्य, व्यधां पलायनकृते संज्ञाम् ॥ २१२ ॥ स्वमुखे तु परिव्राजक–दत्तां गुटिकां ततोऽक्षिपं क्षिप्रम् ॥ तस्याः प्रभावतो गत–चेष्टस्त्यक्तोस्मि मृत इति तैः ॥ २१३ ॥ तेषु च गतेषु दूरं, कृष्ट्वा गुटिकां मुखात्त्वदर्थमटन् ॥ ग्रामं कमपि गतोहं, कञ्चिदपश्यं परिव्राजम् ॥ २१४ ॥ सोप्यवददचनतं मां, वसुभागाह्वोस्मि तव पितुर्मित्रम् ॥

तद्ब्रूहि वरधनो ! त्वं, कुत्रास्ति ब्रह्मदत्त इति ? ॥ २१५ ॥ विश्वस्य तस्य विश्वां, त्वद्वार्त्तां सूनृतामहमवोचम् ॥ दुःखाविष्टः स ततः, पाश्चात्यं वृत्तमित्यूचे ॥ २१६ ॥ दग्धे तदा जतुगृहे, दीर्घः प्रातर्ददर्श शवमेकम् ॥ तां सप्तर्गां सुरंगां, तुरगपदानि च पुरस्तस्याः ॥ २१७ ॥ नष्टौ युवां धनुधिया, ज्ञात्वा कुपितस्ततो नृपस्तस्मै ॥ प्रत्याशमश्ववारान्, युष्मन्निग्रहकृते प्रैषीत् ॥ २१८ ॥ नष्टो धनुरिति जननीं, तवाक्षिपत् श्वपचपाटके दीर्घः ॥ सा नरकावास इवा–नुभवति तत्र व्यथाः प्रचुराः ॥ २१९ ॥ तेनोदन्तेनोच्चै–र्दुःखोपरिजायमानदुःखार्त्तः ॥ उद्धर्त्तुं व्यसनाब्धे–र्जननीं काम्पील्यनगरमगाम् ॥ २२० ॥ तत्र च कपालिरूपं, कृत्वाटं श्वपचपाटके कपटात् ॥ तस्मिन् भ्रमणनिदानं, लोकैः पृष्टोऽब्रवं चैवम् ॥ २२१ ॥ मातङ्गीविद्यायाः, साधनविधिरयमिति भ्रमाम्यत्र ॥ तत्रैवमटन मैत्री–मकार्षमारक्षकेण समम् ॥ २२२ ॥ कुरुतेऽभिवादनमसौ, कौण्डीन्यमहाव्रतीसुतसुहृत्ते ॥ इत्यन्यदा च जननी–मवोचमारक्षकमुखेन ॥ २२३ ॥ गुटिकायुतमपरदिने, मातुरदां मातुलिङ्गमभिगम्य ॥ तद्भक्षणेन साजनि, निश्चेष्टा काष्ठमूर्त्तिरिव ॥ २२४ ॥ आरक्षकोथ राज्ञे, गत्वोचे तां मृतां ततो नृपतिः ॥ तां संस्कर्त्तुं प्रैषी–द्भृत्यानथ तेपि तत्रागुः ॥ २२५ ॥ सम्प्रति संस्कारेऽस्याः, कृते महान् भाव्युपद्रवो भवताम् ॥ नृपतेश्चेत्युदितास्ते, मया यथागतमगुर्भीताः ॥ २२६ ॥ आरक्षकं चावोचं, साहाय्यं चेत्करोपि तदमुष्याः ॥ कुणपेन लक्षणवता, मंत्रमहं साधयाम्येकम् ॥ २२७ ॥ तत्प्रतिपन्नेन समं, तेन समादाय सायमहमम्बाम् ॥ गत्वा दूरं पितृवन–गुरुमण्डलमालिखं दम्भात् ॥ २२८ ॥ शून्यं विधिं च कञ्चि–द्विधाय दातुं बलिं पुरसुरीणाम् ॥ प्रेष्यारक्षं गुटिका–मार्पयमपरामहं मातुः ॥ २२९ ॥ अथ तत्क्षणमुत्तस्था–वपगतनिद्रेव लब्धसंज्ञा सा ॥ आवेद्य स्वं तामथ, निवार्य रुदतीं ततोचलयम् ॥ २३० ॥ मुक्त्वा कच्छग्रामे, तातसुहृद्देवशर्मवेश्मनि ताम् ॥ त्वामन्वेष्टुं भ्राम्य–न्निहागमं भाग्ययोगेन ॥ २३१ ॥ नाथ ! त्वयानुभूतं, सुखदुःखं यत्ततःपरं वद तत् ॥ तेनेत्युक्तोवादी–त्स्वं वृत्तं ब्रह्मदत्तोपि ॥ २३२ ॥ अथ कोप्यागत्योचे, ताविति भो ! दीर्घनृपभटा ग्रामे ॥ युष्मत्समरूपाङ्कित–पटयुगदर्शनपरा ब्रुवते ॥ २३३ ॥ ईदृशरूपौ पुरुषौ, दृष्टौ कापीति तन्निशम्याहम् ॥ कथयामि वामथ युवां, यथोचितं तनुतमात्महितम् ॥ २३४ ॥ प्रोच्येति गते तस्मि–न्नश्यन्तौ तावरण्यमध्येन ॥ क्रमयोगात्कौशाम्बी–पुर्या उपवनमुपागाताम् ॥ २३५ ॥ तत्र पणीकृतलक्षं, चरणायुधरणमपश्यतां धनिनोः ॥ बुद्धिलसागरदत्ता–भिधयोः शस्त्रायितांघ्रिनखम् ॥ २३६ ॥ तत्र च बुद्धिलचरणा–युधेन जात्येपि कुक्कुटेऽन्यस्मिन् ॥ भग्ने वरधनुरसम–असाऽसहः सागरमदोऽवक् ॥ २३७ ॥ जात्योपि कुक्कुटोसौ, भग्नस्तव सागरामुनापि कथम् ? ॥ तद्यदि वदसि तदाहं, विलोकयाम्येनमादाय ॥ २३८ ॥ सोथ जगौ भ्रातस्त्वं, प्रसद्य मयि सद्य एव पश्येदम् ॥ मानापगमो व्यथयति, मामन्तर्न तु धनापगमः ॥ २३९ ॥ वरधनुरथ तं पश्यन् , ददर्श तच्चरणयोरयःसूचीः ॥ तच ज्ञात्वा तं द्रुत–मुपेत्य बुद्धिल इति प्रोचे ॥ २४० ॥ यदि मे छद्म न वक्ष्यसि, लक्षार्द्धं तव तदा प्रदास्येहम् ॥ तेनेत्युक्तो वरधनु–रूचे तद्रहसि भूपभुवे ॥ २४१ ॥ सूचीः कृष्ट्वा स तन–त्वं सागरकुक्कुटेन योजितवान् ॥ अपसूचिकं च बुद्धिल–कुक्कुटमपरो द्रुतमजैषीत् ॥ २४२ ॥ तुष्टोथ सागरस्ता–वारोप्य रथं स्वमन्दिरमनैषीत् ॥ स्वगृह इव तद्गृहे ता–वपि तस्थतुरुचितलीलाभिः ॥ २४३ ॥ बुद्धिलदासस्तत्रा–गतोन्यदा वरधनुं रहसि नीत्वा ॥ प्रोचे यत्तव कथितं, लक्षार्द्धं बुद्धिलेन तदा ॥ २४४ ॥ तत्स्थाने तेनासौ, हारः प्रहितोस्ति चतुरयुतमूल्यः ॥ इत्थं प्रोच्य करण्डं, दत्वा च यथागतः सोगात् ॥ २४५ ॥ वरधनुरपि गत्वा तन्निवेद्य निखिलं करण्डमुद्घाट्य ॥ मौक्तिकरुचिजितसितरुचि–मदीदृशन्नृपभुवे हारम् ॥ २४६ ॥ हारे हारिणि तत्राव–लम्बितं लेखमात्मनामाङ्कम् ॥ दृष्ट्वा नृपभूः सुहृदं, कस्यासौ लेख इत्यूचे ॥ २४७ ॥ को वेत्ति कस्यचिदयं, त्वत्समनाम्नस्तवाथवा भावी ॥ तेनेत्युदितो गाढो–त्सुकोभवद्भूपभूर्ज्ञातुम् ॥ २४८ ॥ लेखं तमथो वरधनु–रुन्मुद्रयति स्म नलिनमिव तरणिः ॥ आर्यामेकां लिखितां, तत्र ददर्शालिपंक्तिमिव ॥ २४९ ॥ सा चेयं–"यद्यपि जनोर्थ्यतेसौ, जनेन संयोगजनितयत्नेन ॥ त्वामेव हि रत्नवती, तथापि मानयितुमभिलषति ॥ २५० ॥" भावार्थोऽस्या ज्ञेयः, कथमित्यथ वरधनौ विचिन्तयति ॥ आगाद्द्वितीयदिवसे, तदन्तिके तापसी वत्सा ॥ २५१ ॥ आशीर्वादं दत्वा, क्षिप्त्वा कुसुमाक्षतानि शिरसि तयोः ॥ नीत्वान्यतो वरधनुं, निगद्य किञ्चित्र सापि ययौ ॥ २५२ ॥ आगतमथ सुहृदं नृप–पुत्रः प्रोचेनया किमुक्तमिति ? ॥ सोऽवददयाचदेषा, प्रतिलेखं प्राच्यलेखस्य ॥ २५३ ॥ श्रीब्रह्मदत्त-

१–४०००० ॥

नामा–ङ्कितो ह्यसौ लेख इति वद त्वं मा॥ को ब्रह्मदत्त इति ? सा, मयानुयुक्तेति पुनरवदत् ॥ २५४ ॥ अत्रास्ति श्रेष्ठिसुता, 'रत्नवती'नाम सुन्दरीरत्नम् ॥ आबाल्यादपि सा म–य्यनुरक्ता प्राप तारुण्यम् ॥ २५५ ॥ तामन्यदा विमनस्कं, दृष्ट्वा गत्वा तदन्तिकमवोचम् ॥ का ते चिन्तेति ? ततो, मामिति तत्परिजनोवादीत् ॥ २५६ ॥ अस्या हि दौर्मनस्ये, भूयांसि दिनानि जज्ञिरे मातः !॥ अथ पृष्टा सा पुनरपि, जगौ न किमपि ह्रिया यावत् ॥ २५७ ॥ अवदत्तावत्तस्या', प्रियङ्गुलतिकाह्वया प्रियवयस्या ॥ न हि वक्ति लज्जयासौ, तदहं ते वच्मि मातरिदम् ॥ २५८ ॥ भ्रातुर्बुद्धिलनाम्नः, सागरनाम्नश्च ताम्रचूडरणे ॥ इयमुपवनं गतैकं, कुमारमुत्तमतममपश्यत् ॥ २५९ ॥ ईदृश्यभूत्ततोसौ, तयेति कथिते स्मरव्यथाक्रान्ताम् ॥ निश्चित्य तामवोचं, सद्भावं ब्रूहि मे वत्से ! ॥ २६० ॥ अथ कथमपि साप्यूचे, मातर्यस्ते प्रियङ्गुलतयोक्तः ॥ स ब्रह्मदत्तनामा, पतिर्न चेन्मे तदा मरणम् ॥ २६१ ॥ घटयिष्ये तव कामितमित्यधृतिं मा कृथा वृथा वत्से ! ॥ तत इति मयोदिता सा, किंचित्स्वस्थेति पुनरूचे ॥ २६२ ॥ भाव्यखिलमीहितं मे, मातर्देव्या इव प्रसादात्ते ॥ तस्मै ज्ञापयितुमद–स्तदपि क्रियतामुपायोयम् ॥ २६३ ॥ क्षिप्त्वा करण्डमध्ये, हारममुं युतमनेन लेखेन ॥ प्रेषय तस्मै क्षिप्रं, व्यपदेशाद्बुद्धिलभ्रातुः ॥ २६४ ॥ तन्नाम्ना दत्तममुं, लास्यति सद्योन्यथा तु लाति न वा ॥ लक्षार्द्धं ह्युक्तमभू–त्तत्सुहृदो बुद्धिलेन तदा ॥ २६५ ॥ प्रोच्येति तया दत्तौ, हारो लेखश्च दासहस्तेन ॥ प्रहितौ मया गतेहनि, तत्प्रतिलेखोर्प्यतामधुना ॥ २६६ ॥ उक्त्वेति तस्थुषी सा, त्वत्प्रतिलेखे मयार्पिते तु ययौ ॥ आर्या तत्र च लेखे, लिखितासौ वर्त्तते स्वामिन् ! ॥ २६७ ॥ "उचितत्वाद्वरधनुना, सुहृदोक्तो ब्रह्मदत्तनामापि ॥ स्त्रीरत्नं रत्नवती–मिच्छति गोविन्द इव कमलाम् ॥ २६८ ॥" श्रुत्वेति मित्रवचनं, तां द्रष्टुं भूपभूरभूदुत्कः ॥ अन्येद्युराकुलतया, वरधनुरागत्य तं प्रोचे ॥ २६९ ॥ अत्रावामन्वेष्टुं, प्रहिता दीर्घेण सन्ति निजपुरुषाः ॥ तद्वचनादत्रत्यो, नृपोपि तदुपक्रम कुरुते ॥ २७० ॥ तत्किं कर्तव्यमिति, ध्यायन्तौ सागरोऽर्वनिगृहे तौ ॥ क्षिप्त्वा जुगोप निधिव–द्रविरप्यपराम्बुधावविशत् ॥ २७१ ॥ निशि निर्गममिच्छन्तौ, तौ रथमारोप्य कमपि पन्थानम् ॥ नीत्वा सागरदत्तो, ववले बाष्पायिताक्षियुगः ॥ २७२ ॥ तावथ पुरः प्रयान्तौ, शस्त्राढ्यरथस्थितां वने वनिताम् ॥ ददृशतुरियती वेला, किं वां लग्नेति जल्पन्तीम् ॥ २७३ ॥ कावावां वेत्सि च कथ–मिति पृष्टा नृपभुवाथ सावादीत् ॥ धनसञ्चयाधिनाथः, श्रेष्ठ्यासीदिह धनप्रवरः ॥ २७४ ॥ अष्टानां तनयाना–मुपर्यहं तस्य नन्दनाभूवम् ॥ प्राप्ता च यौवनं ना–पश्यं कंचिद्वरं प्रवरम् ॥ २७५ ॥ स्थितमस्मिन्नुद्याने, तदर्थमाराधयं ततो यक्षम् ॥ सोपि हि भक्त्या तुष्टः, प्रत्यक्षीभूय मामवदत् ॥ २७६ ॥ श्रीब्रह्मदत्तनामा, चक्री वत्से ! तव प्रियो भावी ॥ स्वामिन् ! स कथं ज्ञेयो, मयेति पृष्टः स पुनरूचे ॥ २७७ ॥ यः सागरबुद्धिलयो–रायास्यति कुक्कुटाहवे स सखा ॥ विश्वमनोहररूपः, श्रीवत्सी स त्वया ज्ञेयः ॥ २७८ ॥ स च मच्चैत्यसमीपे, प्रथमं ते मेलितान्यतो गच्छन् ॥ इति यक्षगिरा

१ भूमिगृहे ॥

स्वामिन् !, जानामि त्वामहं नियतम् ॥ २७९ ॥ तन्मे मन इव रथममु–मारोह विभो ! द्रुतं तयेत्युदितः ॥ रथमारुह्य समित्रः, क्व ? गम्यमिति तां जगौ नृपभूः ॥ २८० ॥ साख्यन्मगधपुरे मम, वसति पितृव्यो धनावहःश्रेष्ठी ॥ स हि कर्त्ता प्रतिपत्तिं, प्रचुरां तत्तत्र गम्यमितः ॥ २८१ ॥ इति रत्नवतीवचना–त्सुहृदा सूतेन वाहयन् वाहान् ॥ प्रापाटवीं कुमारः, कौशांबीविषयमुल्लंघ्य ॥ २८२ ॥ तत्र सुकण्टककण्टक–संज्ञौ चौराधिपौ प्रबलसैन्यौ ॥ तं रुरुधतुरपहर्तुं, रथादि विशिखान् प्रवर्षन्तौ ॥ २८३ ॥ चापमुपादाय ततः, प्रहरन्नृपनन्दनः शरप्रकरैः ॥ तद्दस्युबलमनाशय–दहर्पतिस्तम इवांशुभरैः ॥ २८४ ॥ तमथोचे सचीवसुतः, श्रान्तोसि रणेन तद्रथेत्रैव ॥ स्वपिहि क्षणं ततः सो–ऽप्यशेत सह रत्नवत्या द्राग् ॥ २८५ ॥ प्रातश्चैकां तटिनीं, प्राप्यातिष्ठन् हयाः स्वयं श्रान्ताः ॥ तत्र च जागरितो ना–पश्यत्सुहृदं रथे नृपभूः ॥ २८६ ॥ भावी जलाय गत इति, मुहुर्मुहुरशब्दयत्कुमारस्तम् ॥ न त्वाप प्रतिवचनं, सद्वचनं नीचवदन इव ॥ २८७ ॥ व्याकुलचेताः स ततो, बाष्पजलाविलदृशा दिशः पश्यन् ॥ रक्ताभ्यक्तमपश्यत्, स्यन्दनवदनं नरेन्द्रसुतः ॥ २८८ ॥ हाऽहं हत इति जल्पं–स्ततोऽपतन्मूर्च्छितो रथोत्सङ्गे ॥ अधिगतसंज्ञस्तु भृशं, व्यलपत्क्वासि ? मित्रेति ॥ २८९ ॥ तमथाख्यद्रत्नवती, प्रभो ! सखा ज्ञायते न हि मृतस्ते ॥ तत्तस्येदममङ्गल–मुचितं वाचापि नो कर्तुम् ॥ २९० ॥ नूनमपृष्ट्वापि त्वां, त्वत्कार्यायैव स हि गतो भावी ॥ स्थाने गतास्तु शुद्धिं, तस्य नरैः कारयिष्यामः ॥ २९१ ॥ परमिह गहने स्थातुं, नो चिरमुचितं यमोपवनकल्पे ॥ इति तद्गिरा स तुरगा–न्नुद-

ब्रगादग्रतो व्यग्रः ॥ २९२ ॥ उल्लंघ्यानुलंघ्या–मपि तामटवीं ययौ स मगधानाम् ॥ सीमग्रामं भवतति–मतीत्य मोक्षं मुमुक्षुरिव ॥ २९३ ॥ तत्र ग्रामसभास्थो, ग्रामपतिः प्रेक्ष्य तं रुचिररूपम् ॥ पुरुषोत्तमोयमिति हृदि, निरणैषी-द्गेहमनैषीच ॥ २९४ ॥ किं भृशमुद्विग्न इवा–सीत्यथ तेनोदितो वदन्नृपभूः ॥ चौरैः सह कुर्वन् रण–मगाद्वयस्यो मम क्वापि ॥ २९५ ॥ तस्य प्रवृत्तिमधुना, नेष्ये तन्मा कृथास्त्वमुद्वेगम् ॥ तत इत्युक्त्वा ग्रामा–धिपोऽटवीं ताम-वजगाहे ॥ २९६ ॥ आगत्य चैवमवद–द्वनेत्र मनुजो न कोप्यदर्शि मया ॥ किन्तु शरोसौ प्राप्तः, प्रहारपतितो रुधिरलिप्तः ॥ २९७ ॥ श्रुत्वेति हतो वरधनु–रवश्यमिति सोभवद्भृशं व्यग्रः ॥ रविरप्यस्ताद्रिमगा–त्तद्दुःखं द्रष्टुम-सह इव ॥ २९८ ॥ यामे तुर्येथ निशो, ग्रामे न्यपतन् मलिम्लुचो बहवः ॥ तांस्तु बभञ्ज कुमार–स्ततोऽस्तुवंस्तं जनास्तुष्टाः ॥ २९९ ॥ पृष्ट्वाथ ग्रामपतिं, चलितः सोगात्क्रमेण राजगृहम् ॥ रत्नवतीं च व्यमुच–त्तद्बाह्ये तापसाव-सथे ॥ ३०० ॥ प्रविशन् स्वयं च नगरं, सदनगवाक्षस्थिते युवत्यौ द्वे ॥ नृपभूर्ददर्श ते अपि, सविलासमवोचतामिति तम् ॥ ३०१ ॥ सस्नेहमपि जनं य–त्त्यक्त्वागास्त्वं तदा तदुचितं किम् ? ॥ सोवादीत्कः स्निग्धो, जनः कदा चात्य-जमहं तम् ? ॥ ३०२ ॥ एहि प्रसीद विष्टर–माश्रय विश्राम्य विभ्रमदशा नः ॥ ताभ्यामथेति कथिते, विवेश तद्वे-श्मनि कुमारः ॥ ३०३ ॥ स्नानाशनादिभक्तिं, कृत्वा ते तस्य विष्टरगतस्य ॥ इत्यूचतुरिह भरते, वैताढ्याह्वोस्ति रजतगिरिः ॥ ३०४ ॥ शिवमन्दिरमिति नगरं, विराजते तस्य दक्षिणश्रेण्याम् ॥ तत्र नृपो ज्वलनशिखः, प्रिया च विद्युच्छिखा तस्य ॥ ३०५ ॥ नाट्योन्मत्ताख्यसुता–नुजे तयोः प्राणवल्लभे पुत्र्यौ ॥ अभवाव वल्लेभावां, क्रमेण खंडाविशाखाख्ये ॥ ३०६ ॥ निजसौधकुट्टिमस्थः, सुहृदाग्निशिखेन सह सृजन् गोष्ठीम् ॥ व्रजतोऽष्टापदममरान्, ददर्श गगनेऽन्यदा तातः ॥ ३०७ ॥ नन्तुं ततो जिनेन्द्रा– नावां सुहृदं च तं सहादाय ॥ अष्टापदमौलिस्थं, चैत्यं सोगाद्विमानस्थः ॥ ३०८ ॥ तत्र च जैनीः प्रतिमाः, प्रदक्षिणीकृत्य विधिवदभ्यर्च्य ॥ अनमाम मानवर्णा–न्विता वयं मणिमयाः सर्वाः ॥ ३०९ ॥ चैत्याच्च निर्गता द्वौ, चारणशमिनावशोकवृक्षाधः ॥ प्रेक्ष्य प्रणम्य शुश्रुम, धर्मकथां वयममृतकल्पाम् ॥ ३१० ॥ अथ पप्रच्छाग्निशिखः, को ह्यनयोः कन्ययोः प्रियो भावी ? ॥ तौ ज्ञानिनावववदतां, सोदरमनयोर्हनिष्यति यः ॥ ३११ ॥ वचनेन तेन तातो, म्लानिमगाद्दुर्दिनेन दिनकरवत् ॥ आवामपि वैराग्या–त्तदैवमवदाव निजतातम् ॥ ३१२ ॥ अधुनैव देशनायां, संसारासारता श्रुताऽस्माभिः ॥ तद्विषयसुखेनैवं–विधेन पर्याप्तमस्माकम् ॥ ३१३ ॥ प्रावर्त्तावहि सोदर–रक्षायै तत्प्रभृत्यनिशमावाम् ॥ स त्वन्यदैक्षताटन्, पुष्पवतीं पुष्प-चूलसुताम् ॥ ३१४ ॥ तद्रूपापहृतमना–स्ततः स द्रुतमपाहरज्जडधीः ! ॥ तत्तेजोऽसहमानो, विद्यां साधयितुमगमच ॥ ३१५ ॥ यदभूत्ततः परं त–द्यूयं स्वयमेव वित्थ सकलमपि ॥ अथ चाख्यत्पुष्पवती, तदावयोः सोदरविनाशम् ॥ ३१६ ॥ शोकं च व्यपनिन्ये–ऽस्माकं धर्मानुगैर्मधुरवाक्यैः ॥ शङ्करविद्याशक्त्या, ज्ञात्वासद्वृत्तमिति च जगौ॥३१७॥

१ हे वल्लभ ! आवामिति छेदः ॥

स्मरतं युवां गुरुगिरा–मिहागतं ब्रह्मदत्तमथ वृणुतम् ॥ न हि जातुचिद्विघटते, ज्ञानिवचो ग्रावरेखेव ॥३१८॥ तत्स्वी-कृतमावाभ्यां, राभस्यवशेन सा तु सितकेतुम् ॥ प्राचीचलत्ततस्त्वं, हित्वा वामन्यतो गतवान् ॥ ३१९ ॥ नागा-स्त्वं तत्र यदा, त्वामन्वेष्टुं ततो वनानीं ताम् ॥ चिरमावां सम्भ्रान्ते, श्रान्ते न तु ललित ! मिलितस्त्वम् ॥ ३२० ॥ तदनु दनुजमनुजामर–जेता नेता क्व नौ समेतासौ ? ॥ इति पृष्टाया विद्या–देव्या वचनादिहैवावाम् ॥ ३२१ ॥ अस्मत्पुण्याकृष्टो, दृष्टस्त्वं चेह तद्विभो ! त्वरितम् ॥ पुष्पवतीवत्पाणौ–कृत्य कृतार्थय जनुरिदं नौ ॥ ३२२ ॥ गान्ध-र्वविवाहेनो– दुवाह ते अपि ततो नरेन्द्रसुतः ॥ रममाणः सह ताभ्यां, निमेषमिव तां निशां व्यनयत् ॥ ३२३ ॥ स्थातव्यं पुष्पवती–पार्श्वे तावत्सुखं खलु युवाभ्याम् ॥ यावन्मे राज्याप्तिः, स्यादित्युक्त्वा च ते व्यसृजत् ॥ ३२४ ॥ ओमित्युक्त्वा गतयो–स्तयोस्तिरोभूद्गृहादि तत्सकलम् ॥ रत्नवतीमन्वेष्टुं, ततो ययावाश्रमे नृपभूः ॥ ३२५ ॥ तत्र च तां सोऽपश्यन्, नरमेकमपृच्छदिति शुभाकारम् ॥ दृष्टा कापीह वशा, त्वया गतदिनेऽद्य वा प्रवरा ॥३२६॥ तेन च किं रत्नवती–कान्तस्त्वमसीति सादरं पृष्टः ? ॥ ओमित्यवदन्नृपभू–स्ततः स मुदितः पुनः प्रोचे ॥ ३२७ ॥ सा रुदती ह्यो दृष्टा, का त्वं किं रोदिषीति च मयोक्ता ॥ किञ्चिदवोचत याव–त्तावद् ज्ञाता स्वदौहित्री ॥ ३२८ ॥ गत्वा च पितृव्याया–ऽर्पयं तस्यास्ततः स मुदितस्ताम् ॥ स्वगृहेनयद्भवन्तं, त्वविन्दतान्वेषयन्नपि नो ॥ ३२९ ॥ अद्यापि

१ वचनात् इह एव आवामितिच्छेदः ॥

शुभमभूद्य–न्मिलितस्त्वमिति ब्रुवन्नृपसुतं सः ॥ निन्ये धनावहगृहे, तं दृष्ट्वा सोपि बहु मुमुदे ॥ ३३० ॥ सोत्सवमथ रत्नवतीं, व्यवाहयन्नृपभुवा सह श्रेष्ठी ॥ मृतकार्यमन्यदा वर–धनोरुपाक्रंस्त नृपतिसुतः ॥ ३३१ ॥ लुब्धत्वावेशव-शा–द्विजेषु कुर्वत्सु भोजनमतृप्त्या ॥ तत्रागत्यावादी–द्वरधनुरिति विप्रवेषधरः ॥ ३३२ ॥ यदि मे दत्तादनमिह, साक्षाद्वरधनोर्भवति नूनम् ॥ तच्चाकर्ण्य कुमार–स्ससम्भ्रममगाद्बहिर्गेहात् ॥ ३३३ ॥ तं च प्रविलोक्य दृढं, परिर-भ्यानन्दबाष्पजलपूरैः ॥ स्नपयन्निव गेहान्त–र्नीत्वा पप्रच्छ तद्वार्त्ताम् ॥ ३३४ ॥ सोवादीस्त्वयि सुप्ते, द्रुमान्तरस्थेन तस्करेण तदा ॥ इषुणा हतोहमपतं,मुव्यन्तरधां च गहनान्तः ॥३३५॥ तेषु च गतेषु दस्युषु, मीन इवान्तर्जलं तरुग-णान्तः ॥ अन्तर्हितश्चरन्नह–माप ग्रामं तमतिकृच्छ्रात् ॥ ३३६ ॥ ग्रामपतेस्त्वद्वार्त्तां, ज्ञात्वा चागममिह क्रमेणा-हम् ॥ त्वां चाद्राक्षं दिष्ट्या, सुखप्रमिवेहितार्थकरम् ॥३३७॥ अथ भूपसुतोऽवादी–द्विना पुरुषकारमेवमावाभ्याम् ॥ स्थातव्यं नश्यद्भ्यां, दस्युभ्यामिव कियत्कालम् ! ॥ ३३८ ॥ प्रादुर्भवनोपायं, चिन्तयतोरिति तयोरथान्येद्युः ॥ रम-माणाखिललोको, मधूत्सवः प्रववृते त्वत्र ॥ ३३९ ॥ द्विरदस्तदा च मत्तः, स्तम्भं भंक्त्वापश्रृंखलो नृपतेः ॥ निरगात्त्रा-सितलोक–स्ततश्च भूयानभूत्तुमलः ॥३४०॥ व्यालस्तु कनीं कांचि–न्नितम्बवक्षोजभारमन्दगतिम् ॥ भयवेपमानवपुषं, वीक्ष्याधावद्ग्रहीतुं द्राक् ॥ ३४१ ॥ धीरः कोपि धरायां, यद्यस्ति तदा स पातु मां सद्यः ॥ मृत्योरिव मत्तेभा–दस्मादिति सा तदाक्रन्दत् ॥ ३४२ ॥ तस्यां शरणार्थिन्यां, विलपन्त्यामितकि दीनवदनायाम् ॥ हाहारवं प्रकुर्वति, जने च तत्परिजने च भृशम् ॥ ३४३ ॥ तत्क्षणमेत्य ब्रह्मा–ङ्गजो गजं हक्कयाम्बभूवोच्चैः ॥ सोपि ततस्तां त्यक्त्वा, दधाव तं प्रति रुषा परुषः ॥ ३४४ ॥ [ युग्मम् ] प्राक्षिपदथोत्तरीयं, तस्य पुरो ब्रह्मनन्दनस्तं च ॥ तत्र प्रहर्तुमव-नत–मारोहद्दन्तदत्तांघ्रिः ॥ ३४५ ॥ वचनक्रमाङ्कुशकरै–स्तं च वशीकृत्य हस्तिनं सद्यः ॥ स्तम्भे ववन्ध नीत्वा, कृत-स्तुतिर्जयजयेति जनैः ॥ ३४६ ॥ तत्रागतोथ भूप–स्तं तत्तेजश्च वीक्ष्य विस्मितवान् ॥ कोयं छन्नो रविरुत, हरिः शशी वेति चापृच्छत् ? ॥ ३४७ ॥ तद्वृत्तेथ पितृव्येन, रत्नवत्या निवेदिते नृपतिः ॥ सोत्सवमष्टौ स्वसुता, दिक्श्रिय इव दत्तवांस्तस्मै ॥ ३४८ ॥ ताः परिणीय मुहूर्त्ते, शुभेऽवसत्तत्र भूपभूः ससुखम् ॥ तं चान्येद्युर्जरती, समेत्य काचि-ज्जगादैवम् ॥ ३४९ ॥ वैश्रवणाख्यो वैश्रवण–देश्यसंपत्पुरेत्र वसतीभ्यः ॥ वार्द्धे श्रीरिव तस्य, श्रीमत्याह्वास्ति वरतनया ॥ ३५० ॥ सा च यदा मत्तेभा–दमोचि भवता तदा समीक्ष्य त्वाम् ॥ चित्रलिखितेव दृष–दुल्लिखितेवाभूत्त्वदेक-मनाः ॥३५१॥ कथमपि च परिजनेना–नीता सद्मनि न भोजनं कुरुते ॥ न स्वपिति न च क्रीडति, पश्यति च त्वन्मयं विश्वम् ॥३५२॥ पृष्टाथ मया धात्र्या, सा प्रोचे येन रक्षितास्मि गजात् ॥ स हि नरमणिर्न रमणो, यदि मे स्यात्स्या-त्तदा मरणम् ॥ ३५३ ॥ तद् ज्ञापितोथ तस्या–स्तातो मां प्राहिणोत्तव समीपे ॥ तदरक्षि यथा व्याला–द्रक्ष तथा मन्मथादपि ताम् ॥ ३५४ ॥ तामपि ततः कुमारः, परिणिन्ये सोत्सवं शुभे दिवसे ॥ वरधनुरपि नन्दाह्वा–मुदुवाह सुबुद्धिसचिवसुताम् ॥ ३५५ ॥ अथ तौ तत्र वसन्तौ, प्रथितौ पृथ्व्यां गुणैरजायेताम् ॥ वाणारसीं प्रति ततः, सोत्साहौ प्रास्थिषातां च ॥३५६॥ आयान्तं ब्रह्मसुतं, ज्ञात्वा वाणारसीपतिः कटकः ॥ अभ्येत्य सोत्सवं निज–गृहम-नयद्ब्रह्मराजमिव ॥३५७॥ निजतनयां कटकवतीं, चतुरंगं कटकमुत्कटं कटकः ॥ प्रकटं विसङ्कटमदा–द्धनं च तस्मै मुदि-तचेताः ॥ ३५८ ॥ अथ तद्दुताहूता, धनुसचिवकणेरुदत्तचम्पेशाः ॥ भगदत्तचन्द्रसिंहा–दयः परेप्यायवुर्भूपाः ॥३५९॥ वरधनुमथ सेनान्यं, कृत्वा तैः परिवृतो नृपैर्नृपभूः ॥ प्रति काम्पील्यं प्रास्थित, दीर्घं दीर्घायने नेतुम् ॥ ३६० ॥ दीर्घ-प्रहितो दूतो–ऽथागत्यैवं जगाद कटकादीन् ॥ दीर्घेण समं सख्यं, त्यक्तुं युक्तं न वः प्राच्यम् ॥ ३६१ ॥ ते प्रोचुर्न-ह्मयुताः, पञ्चवयस्याः पुरा भवाम वयम् । ब्रह्मणि तु गते स्वर्गे, मैत्रीं प्राग् दीर्घ एव जहौ ॥ ३६२ ॥ यद्ब्रह्मणोपि पुत्रे, राज्ये च त्रातुमर्पिते दीर्घः ॥ चिरमकृत कर्म वैशस–मनुतिष्ठति नान्त्यजोपि हि तत् ! ॥ ३६३ ॥ तद्गत्वा वद दीर्घं, यदेत्यसौ ब्रह्मसूस्ततो नश्य ॥ यदि वा भवाजिसज्जो, दूतं प्रोच्येति ते व्यसृजन् ॥ ३६४ ॥ काम्पील्यमथ प्राप्य, ब्रह्मसुतोऽनवरतप्रयाणैर्द्राग् ॥ सैन्यै रुरोध परितो, नीरैर्नीरधिरिव द्वीपम् ॥ ३६५ ॥ चुलनी तदा विरक्ता, गत्वा पूर्णाप्रवर्तिनीपार्श्वे ॥ प्रव्रज्य तपस्तीव्रं, विधाय निर्वृत्तिमगात्क्रमतः ॥ ३६६ ॥ दीर्घोपि पुरान्निरगा–द्रणार्थमवल-म्ब्य साहसं सबलः ॥ युद्धं ततः प्रववृते, परस्परं सैन्ययोरुभयोः ॥ ३६७ ॥ भग्नमथ ब्रह्मभुवो, बलेन निजबलमुदीक्ष्य दीर्घनृपः ॥ योद्धुमढौकत गर्जन् , घन इव मुञ्चन् शरासारम् ॥ ३६८ ॥ तं च प्रेक्ष्य कुमारः, स्वयमागाद् योद्धुमु-द्दीपितरोषः, ॥ प्राज्यबलौ तौ च मिथः, शस्त्रैः शस्त्राणि चिच्छिदतुः ॥ ३६९ ॥ ब्रह्मसुतस्याथ करे, तदाययौ चक्रमर्क

इव नमसः ॥ स तु तेन द्रुमफलमिव, दीर्घशिरोऽपातयत् पृथिव्याम् ॥ ३७० ॥ जयतादयमुदयदयो, द्वादशचक्रीति वादिनो देवाः ॥ तच्छिरसि कुसुमवृष्टिं, तदा व्यधुः समवसरण इव ॥ ३७१ ॥ पौरैः पितेव दृष्टो, वन्दिभिरिव जयजयेति वचनपरैः ॥ सोत्सवमविशच्चक्री, काम्पील्यं त्रिदिवमिव मघवा ॥ ३७२ ॥ नृपतिः प्राक् परिणीताः, पत्नी-रानाययत्ततः सकलाः ॥ भरतक्षेत्रं चाखिल-मसाधयत्प्रबलबलकलितः ॥ ३७३ ॥ तस्याथ नृपैर्निखिलै-रभिषेको द्वादशाब्दिको विदधे ॥ सोथागमयत्समयं, समयमिव समं सुखं विलसन् ॥ ३७४ ॥ अन्येद्युर्वरगीतं, सङ्गीतं तस्य पश्यतः शस्तम् ॥ कृतचित्रपुष्पचित्रं, ददौ कुसुमकन्दुकं दासी ॥ ३७५ ॥ तं प्रेक्ष्य चक्रवर्ती, दृष्टः क्वापीदृशो मये-त्यन्तः ॥ कुर्वन्नूहं स्मृत्वा, पञ्चभवान्मूर्च्छितो न्यपतत् ॥ ३७६ ॥ सम्भ्रान्तैः सामन्तैः, सिक्तश्चन्दनरसैर्गतः स्वा-स्थ्यम् ॥ सौधर्मेऽद्राक्षमहं, कन्दुकमीदृशमिति स बुबुधे ॥ ३७७ ॥ पूर्वभवभ्राता मे, कथमथ मिलतीति चिन्तयं-श्चक्री ॥ तं ज्ञातुममुं चक्रे, सार्धश्लोकं शुचिश्लोकः ॥ ३७८ ॥ "तथाहि—["दासा दसण्णे आसी, मिआ कालिं-जरे नगे । हंसा मयंगतीराए, सोवागा कासिभूमीए ॥ १ ॥ देवा य देवलोगंमि, आसि अम्हे महिड्ढिआ" ] पूर-यति यो द्वितीयं, श्लोकं तस्मै ददामि राज्यार्धम् ॥ इति चाघोपयदुच्चैः, पुरेऽखिले प्रतिदिनं चक्री ॥३७९॥ राज्यार्थी चक्रे तं, श्लोकं सार्धं जनोऽखिलः कण्ठे ॥ [१]पूरितवान्न तु कश्चि-द्विपश्चिदपि पश्चिमश्लोकम् ॥ ३८० ॥ इतश्च—

१ पूरितवान्न तु कश्चि-त्पश्चिममर्द्धं द्वितीयस्य ॥ इति "घ" संज्ञकपुस्तके ॥

जीवश्चित्रस्य महेभ्य-नन्दनः पुरिमतालसंज्ञपुरे ॥ जातिस्मरणाद् ज्ञात्वा, पूर्वभवानाददे दीक्षाम् ॥ ३८१ ॥ ग्रामा-दिषु विहरंस्तं, सदलं श्लोकं निशम्य लोकेभ्यः ॥ प्राग्भवबान्धवबोधन-कृते स काम्पील्यनगरमगात् ॥ ३८२ ॥ तत्रारामे नाम्ना, मनोरमे संस्थितः स साधुस्तम् ॥ सार्धं श्लोकं श्रुत्वा-रघट्टिकमुखाददोऽवादीत् ॥ ३८३ ॥ [ "इमा णो छट्ठिआ जाई, अन्नमन्नेण जा विणा" ] इति तेनोक्तमधीत्वा-रघट्टिकः श्लोकपश्चिमदलं तत् ॥ गत्वा सपदि नृपाग्रे, श्लोकयुगलमब्रवीत् सकलम् ॥ ३८४ ॥ स्नेहावेशान्मूर्छां, गतस्ततोऽपतदिलापतिरिलायाम् ॥ तच्च प्रेक्ष्या-नभ्रा-ऽशनिपातमिवाक्षुभत् परिषत् ॥ ३८५ ॥ जातेदृशी दशा ~, प्रभोर्गिरास्येति परिजनः कोपात् ॥ तमथार-घट्टिकं मुहु-रताडयत् पार्ष्णिघाताद्यैः ॥ ३८६ ॥ न मयायमपूरि ततो, मा मां ताडयत यूयमिति विलपन् ॥ मुक्तः स कोस्य पूरक, इति पृष्टश्चाब्रवीदेवम् ॥ ३८७ ॥ श्लोकमपूरयदपरं, मुनिर्मदरघट्टनिकटभूमिष्ठः ॥ प्रापमहं तु व्यसनं, मुधैव राज्यस्पृहाग्रहिलः ॥ ॥ ३८८ ॥ अथ चन्दनरसपूरैः, संसिक्तो व्यक्तचेतनश्चक्री ॥ विज्ञातमुनिवरागम-वृत्तः कल्लोलसच्चित्तः ॥ ३८९ ॥ दत्वारघट्टिकाय, द्युम्नं बहु पारितोषिकं सद्यः ॥ सान्तःपुरपरिवारः, सोत्कण्ठोऽगात्तदु-द्यानम् ॥ ३९० ॥ [ युग्मम् ] नत्वा च तं मुनिवरं, वाष्पजलाप्लुतविलोचनश्चक्री ॥ निषसाद यथास्थानं, प्राच्यस्ने-हाधिकस्नेहः ॥ ३९१ ॥ [ इह ब्रह्मदत्तहिण्डिमाश्रित्य श्रीउत्तराध्ययनसूत्रनिर्युक्तौ कश्चिद्विशेषो दृश्यते, स तु तत एवावधार्यः ] इत्युक्तश्चित्रसम्भूतयोः पूर्ववृत्तान्ताख्यानेन सूत्रत्रयभावार्थः ॥३॥ तयोर्मिथः सम्भाषणं तु सूत्रसिद्धमि-त्यधुनाऽवशिष्यमाणं तदेव व्याख्यायते । तत्र चक्री यदूचे तत्सबन्धपुरस्सरं सूत्रचतुष्केनाह—

**मूलम्—चक्कवट्टी महिड्ढीओ, बंभदत्तो महायसो । भायरं बहुमाणेणं, इमं वयणमब्बवी ॥ ४ ॥**

व्याख्या—चक्रवर्त्ती महर्द्धिको ब्रह्मदत्तो महायशाः भ्रातरं पूर्वभवसोदरं बहुमानेन मानसप्रतिबन्धेन इदं वक्ष्य-माणवचनमब्रवीत् ॥ ४ ॥ तद्यथा—

**मूलम्—आसिमो भायरा दोवि, अन्नमन्नवसाणुगा । अन्नमन्नमणुरत्ता, अन्नमन्नहिएसिणो ॥ ५ ॥**

व्याख्या—'आसिमोत्ति' अभूवाऽऽवां भ्रातरौ द्वावपि अन्योन्यपरस्परं 'वसाणुगत्ति' वशं आयत्ततां अनुगच्छतो यौ तावन्योन्यवशानुगौ, अन्योन्यवशवर्त्तिनावित्यर्थः । तथा अन्योन्यमनुरक्तौ अतीव स्नेहवन्तौ, अन्योन्यं हितैषिणौ मिथः शुभाभिलाषिणौ, पुनःपुनरन्योन्यग्रहणं तु तुल्यचित्ततातिशयख्यापनार्थं, मकारश्च सर्वत्रालाक्षणिकः ॥ ५ ॥ केषु पुनर्भवेष्वित्थमावामभूवेत्याह—

**मूलम्—दासा दसण्णे आसि, मिआ कालिंजरे नगे । हंसा मयंगतीराए, सोवागा कासिभूमिए ॥६॥**

व्याख्या—दासौ दशार्णे दशार्णदेशे 'आसित्ति' अभूव, मृगौ कालिंजरे कालिंजरनाम्नि नगे, हंसौ मृतगङ्गातीरे, श्वपाकौ चाण्डालौ काशीभूमौ काश्यभिधाने जनपदे ॥ ६ ॥

मूलम्—देवा य देवलोगम्मि, आसि अम्हे महिड्ढिया। इमा णो छट्टिआ जाई, अन्नमन्नेण जा विणा ॥७॥

व्याख्या—देवौ च देवलोके सौधर्माह्वे 'आसित्ति' अभूव 'अम्हेत्ति' आवां महर्द्धिकौ, न तु किल्बिषकत्वादिना निन्द्यौ, 'इमा णोत्ति' इयं आवयोः षष्टिका जातिः, कीदृशी येत्याह—'अन्नमन्नेणत्ति' अन्योन्येन परस्परेण या बिना, या परस्परसाहित्यरहितेति भाव इति सूत्रचतुष्कार्थः ॥ ७ ॥ इत्थं चक्रिणोक्ते मुनिराह—

मूलम्—कम्मा निआणप्पगडा, तुमे राय! विचिंतिआ। तेसिं फलविवागेणं, विप्पओगमुवागया ॥८॥

व्याख्या—कर्माणि ज्ञानावरणादीनि निदानं साभिष्वङ्गप्रार्थनारूपं तेन प्रकृतानि प्रकर्षेण रचितानि निदानप्रकृतानि निदानवशनिबद्धानीत्यर्थः, त्वया राजन्! विचिन्तितानि, तद्धेतुभूतार्त्तध्यानाभिध्यानेन कर्माण्यपि तथोच्यन्ते। तेषां कर्मणां फलं चासौ विपाकश्च शुभाशुभजनकत्वलक्षणः फलविपाकस्तेन विप्रयोगं विरहमुपागतौ प्राप्तौ । अयं भावः—यत्तदा त्वया मन्निषिद्धेनापि निदानं कृतं, तस्य फलमेतद्यदावयोस्तथाभूतयोरपि वियोग इति सूत्रार्थः ॥८॥ एवं वियोगहेतुं ज्ञात्वा चक्री पुनः प्रश्नयितुमाह—

मूलम्—सच्चसोअप्पगडा, कम्मा मए पुरा कडा। ते अज्ज परिभुंजामो, किं नु चित्तोवि से तहा ॥९॥

व्याख्या—सत्यं मृषाभाषात्यागरूपं, शौचं च निर्मायमनुष्ठानं, ताभ्यां प्रकटानि ख्यातानि सत्यशौचप्रकटानि कर्माणि प्रक्रमाच्छुभानुष्ठानानि मया पुराकृतानि यानीति शेषः, तान्यद्य अस्मिन्दिने शेषतद्भवकालोपलक्षणञ्चैतत् 'परिभुञ्जामोत्ति' परिभुंजे तद्विपाकोपनतस्त्रीरत्नादिभोगद्वारेण वेदये यथाहमिति गम्यते, किमिति प्रश्ने, नु इति वितर्के, चित्रोपि चित्रनामापि? कोर्थो? भवानपि 'से' इति तानि तथा परिभुंक्ते? अपि तु न परिभुंक्ते, भिक्षुकत्वाद्भवतः। तथा च किं तव तानि मया सहोपार्जितानि शुभकर्माणि विफलानि जातानीत्याशय इति सूत्रार्थः ॥ ९ ॥ इत्थं चक्रिणोक्ते सस्वरूपं मुनिराह—

मूलम्—सव्वं सुचिण्णं सफलं नराणं, कडाणकम्माण न मुक्खु अत्थि ।
अत्थेहिं कामेहि अ उत्तमेहिं, आया ममं पुण्ण फलोववेए ॥ १० ॥

व्याख्या—सर्वं सुचीर्णं शोभनमनुष्ठितं तपःप्रभृतीति गम्यते, सफलं नराणामुपलक्षणत्वात् शेषप्राणिनां च, किमिति यत' कृतेभ्योऽर्थादवश्यवेद्यतया रचितेभ्यः कर्मभ्यो न मोक्षो मुक्तिरस्ति, ददति हि तानि निजं फलमवश्यमिति भावः। प्राकृतत्वाच्चेह विभक्तिव्यत्ययः, न च वाच्यं त्वयैवात्र व्यभिचार इत्याह—अर्थैर्द्रव्यैः कामैश्च शब्दादिभिः, उत्तमै' प्रधानैरुपलक्षितः सन्नात्मा "ममंति" ममापि "पुण्णफलोववेएत्ति" अत्र 'उप' 'अप' 'इत' इतिशब्दत्रयस्थापने पृषोदरादित्वादपशब्दस्याकारलोपे 'उपपेत' इति द्रष्टव्यं, ततश्च पुण्यस्य शुभकर्मणः फलं पुण्यफलं तेनोपपेतो युक्तः, पुण्यफलोपपेतोऽभूदिति शेषः ॥ १० ॥ ततश्च—

मूलम्—जाणासि संभूअ महाणुभागं, महिड्ढिअं पुण्णफलोववेअं ।
चित्तंपि जाणाहि तहेव रायं, इड्ढी जुई तस्सवि अ प्पभूआ ॥ ११ ॥

व्याख्या—जानासि अवबुध्यसे यथा त्वमात्मानमिति शेषः, हे सम्भूत! पूर्वभवे सम्भूताभिधानमहानुभागं बृहन्माहात्म्यं महर्धिकं चक्रवर्त्तिपदावाप्त्या सातिशयसम्पद्युक्तं, अत एव पुण्यफलोपपेतं चित्रमपि जानीहि, तथैव तादृशमेव हे राजन्! किमित्येवमत आह—ऋद्धिः सम्पत्, द्युतिर्दीप्तिस्तस्यापि जन्मान्तरनाम्ना चित्राभिधानस्य ममापीति भावः, चशब्दो यस्मादर्थे, ततो यस्मात्प्रभूता बह्वी बभूवेति शेषः, गृहस्थभावे ममाप्येवंविधत्वादेवेति भावः ॥ ११ ॥ यदि तवाप्येवंविधा सम्पदभूत्तदा कथं प्रव्रजितः? इत्याह—

मूलम्—महत्थरूवा वयणप्पभूआ, गाहाणुगीआ नरसंगमज्झे ।
जं भिक्खुणो सीलगुणोववेआ, इहज्जयंते समणोम्हि जाओ ॥ १२ ॥

व्याख्या—महार्थरूपा अनन्तद्रव्यपर्यायात्मकतया बह्वर्थस्वरूपा, वचनेनाप्रभूता वचनाप्रभूता, स्वल्पाक्षरेत्यर्थः । कासौ? गीयते इति गाथा, सा चेहार्थाद्धर्माभिधायिनी सूत्रपद्धतिः, अनुलोमं श्रोतुरनुकूलं गीता कथिता अनुगीता। अनेन श्रोत्रनुकूलैव देशना कार्येति ख्यापितं भवति। केत्याह— नरसङ्घमध्ये, न तु कोणके प्रविश्येति भावः,

इमां गाथां श्रुत्वेति शेषः, भिक्षवो मुनयः शीलं चारित्रं, गुणो ज्ञानं, ताभ्यामुपपेताः शीलगुणोपपेता इह जिनप्रवचने वतन्ते यत्नवन्तो भवन्ति, सोपस्कारत्वात्सूत्रस्य, सा मयापि श्रुता, ततः श्रमणोऽस्मि अहं जातो न तु दुःखदग्धत्वादिति भाव इति सूत्रत्रयार्थः ॥ १२ ॥ एवं मुनिनोक्ते चक्री स्वसम्पदा निमंत्रयितुमाह–

मूलम्—उच्चोदए महु कक्के अ बंभे, पवेइआ आवसहा य रम्मा।
इमं गिहं चित्तधणप्पभूअं, पसाहि पंचालगुणोववेअं ॥ १३ ॥

व्याख्या—उच्चोदयो मधुः कर्कः चशब्दान्मध्यो ब्रह्मा चेति पञ्च प्रधानाः प्रासादाः प्रवेदिता मम वर्द्धकिपुरःसरैरुपनीता इत्यर्थः, आवसथाश्च शेषा भवनप्रकारा रम्या रमणीयाः, एते तु यत्रैव चक्रिणे रोचते तत्र भवन्तीति वृद्धाः। किञ्च इदं प्रत्यक्षं गृहमवस्थितिप्रासादरूपं प्रभूतं वहु, चित्रं विविधमाश्चर्यकारि वा, धनमस्मिन्निति प्रभूतचित्रधनं, प्राकृतत्वात्पूर्वापरनिपातः, प्रशाधि पालय उपभुंक्ष्वेति भावः। पाञ्चाला नाम देशस्तस्मिन् गुणा इन्द्रियोपकारिणो रूपादयस्तैरुपेतमन्वितं पाञ्चालगुणोपपेतं, अयं भावः—पाञ्चालेषु यानि श्रेष्ठवस्तूनि तानि सर्वाण्यस्मिन् गृहे सन्ति, पाञ्चालानां तदातिसमृद्धत्वात्पाञ्चालग्रहणं, अन्यथा हि भरतेपि यद्विशिष्टं वस्तु तत्तदा तद्गृह एव आसीत् ॥ १३ ॥ किञ्च—

मूलम्— नट्टेहिं गीएहि अ वाइएहिं, नारीजणाइं परिवारयंतो।
भुंजाहि भोगाइं इमाइं भिक्खू, मम रोअइ पवज्जा हु दुक्खं ॥ १४ ॥

व्याख्या—"नट्टेहिंति" नृत्यैर्गीतैश्चस्य भिन्नक्रमत्वाद्वादित्रैश्च नारीजनान् परिवारयन् परिवारिकुर्वन् भुंक्ष्व भोगानिमान् प्रत्यक्षान् सूत्रत्वात्सर्वत्र लिङ्गव्यत्ययः, हे भिक्षो!। इह च यद्गजतुरङ्गादीन् विहाय स्त्रीणामेवाभिधानं तत् स्त्रीलोलुपत्वात्तस्य, तासामेव चात्यन्ताक्षेपकत्वज्ञापनार्थं, किमित्येवमत आह—मह्यं रोचते प्रतिभाति प्रव्रज्या हुरवधारणे भिन्नक्रमश्च ततो दुःखमेव, न मनागपि सुखमिति भाव इति सूत्रद्वयार्थः ॥ १४ ॥ एवं चक्रिणोक्ते मुनिः किं व्यधादित्याह—

मूलम्— तं पुव्वनेहेण कयाणुरागं, नराहिवं कामगुणेसु गिद्धं।
धम्मस्सिओ तस्स हि आणुपेहि, चित्तो इमं वयणमुदाहरित्था ॥ १५ ॥

व्याख्या—तं ब्रह्मदत्तं पूर्वस्नेहेन कृतानुरागं नराधिपं कामगुणेषु विषयेषु गृद्धं, धर्माश्रितो धर्मस्थितस्तस्येति चक्रिणो हितानुप्रेक्षी हिताकांक्षी चित्रश्चित्रजीवमुनिरिदं वचनं वाक्यमुदाहृतवानिति सूत्रार्थः ॥ १५ ॥ तदेव दर्शयति–

मूलम्—सव्वं विलविअं गीअं, सव्वं नट्टं विडंबिअं। सव्वे आहारणा भारा, सव्वे कामा दुहावहा ॥१६॥

व्याख्या—सर्वं विलपितं विलपितकल्पं निरर्थकतया रुदितयोनितया च गीतं! मत्तबालादिगीतवत्, सर्वं नृत्यं विडम्बितं विडम्बनाप्रायं! यक्षाविष्टपीतोन्मत्ताद्यङ्गविक्षेपवत्, सर्वाण्याभरणानि भारास्तत्त्वतो भाररूपत्वात्तेषाम्।

तथा हि कस्यचित् श्रेष्ठि–सुतस्य श्रेष्ठिसम्पदः ॥ वयःसौन्दर्यचातुर्या, प्रिया प्राणप्रियाभवत् ॥ १ ॥ हे स्नुषे! सौधमध्यात्त्वं, शिलापुत्रकमानय ॥ तामित्यूचेऽन्यदा श्वश्रूः, स्वयं कृत्यपरायणा ॥ २ ॥ महाभारमहं मात–स्तमुद्वोढुं न हीश्वरी ॥ इति सा स्माह तच्छ्रुत्वा, विममर्शेति तत्पतिः ॥ ३ ॥ देहरक्षापराऽलीको–त्तरमेषा ददौ शठा ॥ तत्तथा शिक्षयाम्येनां, नैवं कुर्याद्यथा पुनः ॥ ४ ॥ ध्यात्वेति तं दृषद्गोलं, स्वर्णेनावेष्ट्य सर्वतः ॥ तत्स्वरूपमजानन्त्यास्तस्याः सोऽन्येद्युरार्पयत् ॥ ५ ॥ सापि तुष्टा तमादाय, विदधे कण्ठभूषणम् ॥ विमुह्यन्ति स्वरूपेण, बाह्येनैवाल्पमेधसः ॥ ६ ॥ ततोऽन्यदा तत्पतिस्ता–मित्यप्राक्षीदयि प्रिये! ॥ इदं भूषणमुद्वोढुं, भवत्या शक्यते न वा? ॥७॥ साऽवादीत्किमियन्मात्र–मियतोपि चतुर्गुणान् ॥ सुखं सुवर्णालङ्कारा–नुद्वहेहं प्रदत्त चेत्! ॥ ८ ॥ स्मित्वा स्माह ततः कान्तो, यं शिलापुत्रकं तदा ॥ न त्वमुद्वोढुमीशाभूः, करेण क्षणमप्यरे! ॥ ९ ॥ स्वर्णाश्रितः स एवासौ, कण्ठेन ध्रियते सुखम् ॥ स्वपुत्र इव वात्सल्या–जातु नोत्तार्यते हृदः ॥ १० ॥ स्वल्पस्यापि सुवर्णस्य, तदहो महिमा महान् ॥ गिरिवद्गुरुरप्येष, येनासीत्तूलवल्लघुः ॥ ११ ॥ तेनेत्युक्ता शठत्वं मे, भर्त्रा ज्ञातमिति ह्रिया ॥ वीक्षामास विलक्षा सा, क्ष्मां प्रत्युत्तराक्षमा ॥ १२ ॥ स भाररूपोपि चिरं यथाऽश्मा, मोहात्तयालोठ्यत कण्ठपीठे ॥ भूषास्तथान्या

अपि भारभूता, वहन्ति लोका विगलद्विवेकाः ॥ १३ ॥ इति श्रेष्ठिसुतवधूकथा ॥ तथा सर्वे कामा दुःखावहा मृगादीनामिवायतौ दुःखदायित्वान्नरकहेतुत्वाच्चेति ॥ १६ ॥ तथा—

मूलम्—बालाभिरामेसु दुहावहेसु, न तं सुहं कामगुणेसु रायं ! ।
विरत्तकामाण तवोधणाणं, जं भिक्खुणं, सीलगुणे रयाणं ॥ १७ ॥

व्याख्या—बालानां मूढानां अभिरामा मनोहरा बालाभिरामास्तेषु दुःखावहेषु दुःखप्रापकेषु न तत्सुखं कामगुणेषु मनोज्ञशब्दादिषु सेव्यमानेष्वपि हे राजन् ! किं तदित्याह—यत्सुखं "विरत्तकामाणंति" कामविरक्तानां तपोधनानां भिक्षूणां शीलगुणे रतानां स्यादिति शेष इति सूत्रद्वयार्थः ॥ १७ ॥ अथ धर्मफलोपदर्शनेनोपदेष्टुमाह—

मूलम्—नरिंद जाई अहमा नराणं, सोवागजाई दुहओ गयाणं ।
जहिं वयं सव्व जणस्स वेसा, वसीअ सोवागनिवेसणेसु ॥ १८ ॥

व्याख्या—हे नरेंद्र ! चक्रवर्त्तिन् ! जातिरधमा निकृष्टा नराणां मध्येऽभूदिति शेषः, श्वपाकजातिं "दुहओत्ति" द्वयोरप्यावयोर्गतयोः, अयं भावः—यदाऽऽवां श्वपाकजातावुत्पन्नौ तदावयोः सर्वजनगर्हिता जातिरासीत्, कदाचित्तां प्राप्यापि अन्यत्रोषितौ स्यातामित्याह—यस्यां वयमित्यावां,प्राकृतत्वाद्बहुवचनं,सर्वजनस्य द्वेष्यावप्रीतिकरौ "वसीअत्ति" अवसाव उषिताविति यावत् , श्वपाकनिवेशनेषु चाण्डालगृहेषु ॥१८॥ कदाचित्तत्रापि कलाविशेषादिना अहीलनीयौ स्यातामित्याह—

मूलम्—तीसे अ जाईइ उ पाविआए, वुच्छा मु सोवागनिवेसणेसु ।
सव्वस्स लोगस्स दुगुंछणिज्जा, इहं तु कम्माइं पुरेकडाइं ॥ १९ ॥

व्याख्या—तस्यां च जातौ श्वपचसम्बन्धिन्यां, तुर्विशेषणे, ततश्च शेषजातिभ्यः कुत्सितत्वं विशिनष्टि, पापैव पापिका कुत्सिता तस्यां 'वुच्छत्ति' उषितौ 'मु' इत्यावां श्वपाकनिवेशनेषु सर्वस्य लोकस्य जुगुप्सनीयौ हीलनीयौ 'इहंति' अस्मिन् जन्मनि, तुः पुनरर्थः, तत इह पुनः कर्माणि शुभानुष्ठानानि 'पुरे कडाइंति' पुराकृतानि शुभजात्यादेर्निबन्धनमिति शेषः, ततो ज्ञातप्रत्ययैः पुनरपि तदर्जनायैव यत्नः कार्यो न तु विषयाभिष्वङ्गव्याकुलैरेव स्थेयमित्याशयः ॥ १९ ॥ एतदेव दर्शयति—

मूलम्—सो दाणिसिं राय महाणुभागो, महिड्ढिओ पुण्णफलोववेओ ।
चइत्तु भोगाइं असासयाइं, आयाणहेऊ अभिनिक्खमाहि ॥ २० ॥

व्याख्या—'स' इति यः सम्भूतमुनिः पूर्वमासीत् स त्वं 'दाणिसिंति' इदानीं राजा महानुभागो महर्द्धिकः पुण्यफलोपपेतश्च सन् दृष्टफलत्वेनाभिनिष्क्रामेति सम्बन्धः, किं कृत्वेत्याह—त्यक्त्वा भोगानशाश्वतान् , आदीयते गृह्यते सद्विवेकैरित्यादानश्चारित्रधर्मस्तद्धेतोरभिनिष्क्राम आभिमुख्येन प्रव्रज, न हि गृहस्थतायां सर्वचारित्रसम्भव इति सूत्रत्रयार्थः ॥ २० ॥ इत्थमकरणे को दोषः ? इत्याह—

मूलम्—इह जीविए राय असासयंमि, धणिअं तु पुण्णाइं अकुव्वमाणो ।
से सोअई मच्चुमुहोवणीए, धम्मं अकाऊण परम्मि लोए ॥ २१ ॥

व्याख्या—इह जीविते मनुष्यसम्बन्धिन्यायुषि राजन्नशाश्वते अस्थिरे 'धणिअंतुत्ति' अतिशयेनैव न तु केतुप्रान्तवस्त्रस्खलतामात्रेण, पुण्यानि शुभानुष्ठानान्यकुर्वाणः 'सेत्ति' स पुण्यानुपार्जको जन्तुः शोचति पश्चात्तापं विधत्ते, मृत्युमुखं मरणावसरमुपनीतस्तथाविधकर्मभिरुपढौकितो मृत्युमुखोपनीतः सन् धर्ममकृत्वा 'परम्मित्ति' चस्य गम्यत्वात् परस्मिंश्च लोके जन्मान्तररूपे गत इति शेषः, नरकादौ हि असद्यासातवेदनार्दितः शशिनृपवत्किं मया तदेव पुण्यं न कृतमिति खिद्यत एवाधर्मकारीति सूत्रार्थः ॥ २१ ॥ न च मृत्युमुखोपनीतस्य परत्र वा दुःखार्दितस्य स्वजनादयस्त्राणाय भाविन इत्याह—

मूलम्—जहेह सीहो व मिअं गहाय, मच्चू नरं नेइ हु अंतकाले ।
न तस्स माया व पिआ व भाया, कालंमि तम्मि सहरा भवंति ॥ २२ ॥

व्याख्या—यथेत्यौपम्ये इहलोके सिंहो मृगारिर्वेति पूरणे मृगं हरिणं गृहीत्वा प्रक्रमात्परलोकं नयतीति सम्बन्धः, एवं मृत्युर्यमो नरं मानवं 'नेइ हुत्ति' नयत्येव, अन्तकाले आयुःक्षयावसरे, न च तस्य मृत्युना नीयमानस्य माता

वा पिता वा भ्राता वा काले तस्मिन् जीवितान्तरूपे, अंशं प्रक्रमाज्जीवितस्य भागं धारयन्ति, मृत्युना नीयमानं रक्षन्तीत्यंशधरा भवन्ति, यथा हि नृपादौ स्वजनसर्वस्वं हरति स्वधनदानात्स्वजनैस्तद्रक्ष्यते, नैवं स्वजीवितांशदानेन तज्जीवितं धार्यते इति भावः, ॥ २२ ॥ न च जीवितारक्षणेपि दुःखांशहारिणो भाविन इत्यपि ध्येयमित्याह—

मूलम्—न तस्स दुक्खं विभयंति नाइओ, न मित्तवग्गा न सुआ न बंधवा ।

इक्को सयं पच्चणु होइ दुक्खं, कत्तारमेवं अणुजाइ कम्मं ॥ २३ ॥

व्याख्या—न तस्य मृत्युना नीयमानस्य दुःखं शारीरं मानसं वा विभजन्ते विभागीकुर्वन्ति ज्ञातयो दूरवर्त्तिनः स्वजनाः, न मित्रवर्गाः सुहृत्समूहाः, न सुताः पुत्राः, न बान्धवा निकटवर्त्तिनः स्वजनाः, किन्तु एकः स्वयं प्रत्यनुभवति वेदयते दुःखं, किमिति ? यतः कर्तारमेव अनुयाति कर्म ॥ २३ ॥ इत्थमशरणभावनामुक्त्वा एकत्वभावनामाह—

मूलम्—चिच्चा दुपयं च चउप्पयं च, खित्तं गिहं धण्ण धन्नं च सव्वं ।

सकम्मप्पबीओ अवसो पयाइ, परं भवं सुंदर पावगं वा ॥ २४ ॥

व्याख्या—त्यक्त्वा द्विपदं च भार्यादि, चतुष्पदं च हस्त्यादि, क्षेत्रमिक्षुक्षेत्रादि, गृहं धवलगृहादि, धनं कनकादि, धान्यं च शाल्यादि सर्वं, स्वकर्मैवात्मनो द्वितीयं यस्य स स्वकर्मात्मद्वितीयः, अवशोऽस्वतंत्रः, प्रयाति परमन्यं भवं जन्म सुन्दरं स्वर्गादिकं, पापकं वा नरकादिकं स्वकृतकर्मानुरूपमिति भावः ॥ २४ ॥ अथ जीवत्यक्तशरीरस्य का वार्त्तेत्याह—

मूलम्—तं इक्कगं तुच्छसरीरगं से, चिईगयं दहिअ उ पावगेणं ।

भज्जा य पुत्तोवि अ नायओ वा, दायारमन्नं अणुसंकसंति ॥ २५ ॥

व्याख्या—तदिति यत्तेन त्यक्तं एककं अद्वितीयं तुच्छमसारं शरीरकं तुच्छशरीरकं से तस्य सम्बन्धि चितिगतं चिताप्राप्तं दग्ध्वा तुः पूरणे पावकेनाग्निना भार्या च पुत्रोपि च ज्ञातयश्च दातारमन्यं अनुसंक्रामन्ति उपसर्पन्ति, ते हि गृहमनेनापावनमिति तद्बहिर्निष्काश्य, ज्वलनादिना च भस्मसात्कृत्वा, कृत्वा च लौकिककृत्यानि, आक्रंद्य च कतिचिद्दिनानि पुनः स्वार्थसिद्ध्यै अन्यमनुवर्त्तन्ते, न तु तद्वार्त्तामपि पृच्छतीत्याशय इति सूत्रचतुष्कार्थः ॥ २५ ॥ किञ्च—

मूलम्—उवनिज्जइ जीविअमप्पमायं, वण्णं जरा हरइ नरस्स रायं ।

पंचालराया वयणं सुणाहि, मा कासि कम्माइं महालयाइं ॥ २६ ॥

व्याख्या—उपनीयते ढौक्यते प्रक्रमान्मृत्यवे तथाविधकर्मभिर्जीवितं अप्रमादं प्रमादं विनैव अवीचिमरणेनेति भावः, वर्णं सुस्निग्धच्छायात्मकं जरा हरति नरस्य हे राजन्! यतश्चैवमतः पाञ्चालराज! वचनं शृणु, किन्तदित्याह—मा कार्षीः कर्माणि महालयानि अतिशयमहान्ति पञ्चेन्द्रियवधादीनीति सूत्रार्थः ॥ २६ ॥ एवं मुनिनोक्ते चक्री स्माह—

मूलम्—अहंपि जाणामि जहेह साहू, जं मे तुमं साहसि वक्कमेअं ।

भोगा इमे संगकरा हवंति, जे दुच्चया अज्जो ! अम्हारिसेहिं ॥ २७ ॥

व्याख्या—अहमपि जानामि तथेति शेषः, यथा येन प्रकारेण इह जगति साधो! यन्मे मम त्वं साधयसि कथयसि वाक्यमुपदेशरूपं वचः एतदनन्तरोक्तं, तत्किं भोगान्न जहासीत्याह—भोगा इमे प्रत्यक्षाः सङ्गकराः प्रतिबन्धोत्पादका भवन्ति, ये दुस्त्यजा आर्य ! अस्मादृशैर्गुरुकर्मभिरिति सूत्रार्थः ॥ २७ ॥ किञ्च—

मूलम्—हत्थिणपुरंमि चित्ता, दट्ठूणं नरवइं महिड्ढिअं । कामभोगेसु गिद्धेणं, निआणमसुहं कडं ॥ २८ ॥

तस्स मे अप्पडिकंतस्स, इमं एआरिसं फलं । जाणमाणेवि जं धम्मं, कामभोगेसु मुच्छिओ ॥ २९ ॥ [जुयलं]

व्याख्या—हस्तिनापुरे हे चित्र ! प्राग्भवे चित्राह्वमुने ! दृष्ट्वा नरपतिं सनत्कुमारसंज्ञं तुर्यचक्रिणं महर्द्धिकं कामभोगेषु गृद्धेन मयेति शेषः, निदानमशुभमशुभानुबन्धि कृतम् ॥ २८ ॥ 'तस्सत्ति' सुब्व्यत्ययात्तस्मान्निदानान्मे ममाप्रतिक्रान्तस्याऽप्रतिनिवृत्तस्य तदा हि त्वया बहूक्तेपि न मन्मनसो निवृत्तिरभूदितीदं एतादृशं अनन्तरवक्ष्यमाणरूपं फलं कार्यं जातमिति शेषः, यत्कीदृशमित्याह—जानन्नपि यदहं धर्मं श्रुतधर्मादिकं कामभोगेषु मूर्च्छितो गृद्धः तदेतत्कामभोगेषु मूर्च्छनं मम निदानस्य फलमिति सूत्रद्वयार्थः ॥ २९ ॥ पुनर्निदानफलमेवोदाहरणेन दर्शयितुमाह—

मूलम्—नागो जहा पंकजलावसण्णो, दट्ठुं थलं नाभिसमेइ तीरं ।

एवं वयं कामगुणेसु गिद्धा, न भिक्खुणो मग्गमणुव्वयामो ॥ ३० ॥

व्याख्या—नागो हस्ती यथेत्यौपम्ये, पङ्कप्रधानं जलं पङ्कजलं तत्रावसन्नो निमग्नः सन् दृष्ट्वा स्थलं न नैवाभिसमेति प्राप्नोति तीरं पारं, अपगम्यत्वात्तीरमपि आस्तां स्थलमिति भावः। एवं वयं कामगुणेषु गृद्धा न भिक्षोः साधोर्मार्गं सदाचाररूपं अनुव्रजामोऽनुसराम इति सूत्रार्थः ॥ ३० ॥ पुनरनित्यतां दर्शयितुं मुनिराह—

मूलम्—अच्चेइ कालो त्तरंति राईओ, नयावि भोगा पुरिसाण निच्चा।
उविच्च भोगा पुरिसं चयंति, दुमं जहा खीणफलं व पक्खी ॥ ३१ ॥

व्याख्या—अत्येति अतिक्रामति कालो यथायुष्ककालः, किमिति ? यतस्त्वरन्ते शीघ्रं गच्छन्ति रात्रयो रजन्यो दिनोपलक्षणश्चैतत्ततोऽनेनायुषोऽस्थिरत्वमुक्तं, उक्तञ्च—"क्षणयामदिवसमास—च्छलेन गच्छन्ति जीवितदलानि ॥ इति विद्वानपि कथमिह, गच्छसि निद्रावशं रात्रौ ॥ १ ॥" न च भोगा अपि अपरत्र सम्बन्धात् पुरुषाणां नित्याः शाश्वताः, यत उपेत्य स्वप्रवृत्त्या न तु पुरुषाभिप्रायेण भोगाः पुरुषं त्यजन्ति, कमिव क इवेत्याह— द्रुमं यथा क्षीणफलं, वेत्यौपम्ये भिन्नक्रमश्च, ततः पक्षिण इव विहगा इव फलोपमानि हि पुण्यानि ततस्तदपगमे क्षीणफलं वृक्षमिव पुरुषं पक्षिण इव भोगा मुञ्चन्तीति सूत्रार्थः ॥ ३१ ॥ यत एवमतः—

मूलम्—जइ तंसि भोगे चइउं असत्तो, अज्जाइं कम्माइं करेहि रायं।
धम्मठिओ सव्वपयाणुकंपी, तो होहिसि देवो इओ विउव्वी ॥ ३२ ॥

व्याख्या—यदि त्वमसि भोगांस्त्यक्तुमशक्तः ततः किमित्याह—आर्याणि शिष्टजनोचितानि कर्माणि कार्याणि कुरु हे राजन् ! धर्मे प्रक्रमाद्गृहस्थधर्मे सम्यग्दृष्ट्याद्याचारलक्षणे स्थितः सन् सर्वप्रजानुकम्पी समस्तप्राणीदयापरः, ततः किं फलमित्याह—तत आर्यकर्मकरणाद्भविष्यसि देवो वैमानिक इतोऽस्मान्मनुष्यभवादनन्तरं 'विउविवत्ति' वैक्रियशरीरवानिति सूत्रार्थः ॥ ३२ ॥ एवमुक्तोपि यदासौ न किञ्चित्प्रत्यपद्यत तदा मुनिः स्माह—

मूलम्—न तुज्झ भोगे चइऊण बुद्धी, गिद्धोसि आरंभपरिग्गहेसु।
मोहं कओ इत्तिओ विप्पलावो, गच्छामि रायं आमंतिओसि ॥ ३३ ॥

व्याख्या—न नैव तव भोगानुपलक्षणत्वादनार्यकर्माणि च त्यक्तुं बुद्धिः, गृद्धः प्रसक्तोसि वर्त्तसे आरम्भपरिग्रहेषु सावद्य व्यापारेषु सचित्ताचित्तादिवस्तुस्वीकारेषु च, मोघं निष्फलं यथा भवति तथा कृत एतावान् विप्रलापो विविधव्यर्थवचनविन्यासलक्षणः, सम्प्रति तु गच्छामि राजन् ! आमंत्रितोसि धातूनामनेकार्थत्वात् पृष्टोसि गन्तुमिति शेषः। तव हि जीवितानित्यतादर्शनादिभिर्बहुभिः प्रकारैरनुशिष्यमाणस्यापि न मनागपि वैराग्यमभूदित्यविनेयत्वादुपेक्षैव वरीयसीति भाव इति सूत्रार्थः ॥ ३३ ॥ इत्थमुक्त्वा गते मुनौ ब्रह्मदत्तस्य यदभूत्तदाह—

मूलम्—पंचालरायावि अ बंभदत्तो, साहुस्स तस्सा वयणं अकाउं।
अणुत्तरे भुंजिअ कामभोगे, अणुत्तरे सो नरए पविट्ठो ॥ ३४ ॥

'पंचालरायाविअत्ति' अपि· पुनरर्थे, चः पूरणे, ततः पाञ्चालराजः पुनर्ब्रह्मदत्तः साधोस्तस्य वचनमकृत्वा गुरुकर्मतया वज्रतन्दुलवदत्यन्तदुर्भेदत्वात्, अनुत्तरान् सर्वोत्तमान् भुक्त्वा कामभोगान्, अनुत्तरे सकलनरकज्येष्ठे अप्रतिष्ठाने इत्यर्थः, स ब्रह्मदत्तो नरके प्रविष्टः। तदनेन निदानस्य नरकान्तं फलमुपदर्शितं भवतीति सूत्रार्थः ॥ ३४ ॥ यथा चायं नरके प्रविष्टस्तथा तत्कथावशिष्टा इहोच्यते। तथाहि—

तमबोध्यतमं हित्वा, सद्वैद्य इवापटुं निकटमरणम् ॥ विजहार यतिर्भूमी—पतिरपि राज्यं चिरं बुभुजे ॥ ३९२ ॥ तं चान्यदा द्विजः पूर्व—संस्तुतोऽभ्येत्य कोप्यदोवादीत् ॥ भुंक्षे यदात्मना त—त्प्रदेहि मे भोजनं चक्रिन् ! ॥ ३९३ ॥ ऊचे नृपो मदन्नं, दुर्जरमन्यस्य सृजति चोन्मादम् ॥ विप्रो जगाद धिक् त्वां, कदर्यमन्नप्रदानेपि ॥ ३९४ ॥ सकुटुम्बमथ नरेन्द्र—स्तं निजभोजनमभोजयत्कोपात् ॥ अथ तस्याविरभून्निशि, मदनोन्मादो भृशं तस्मात् ॥ ३९५ ॥ अनपेक्षितनिजजननी—जामिजनीव्यतिकरस्ततो विप्रः। ससुतोपि प्रावर्त्तत, रते सुरामत्त इव विकलः ! ॥ ३९६ ॥ प्रातस्तु लज्जया स, द्विजो गृहजनश्च तस्य नान्योन्यम् ॥ दर्शयितुमास्यमशकन्, मशकपटलमलिनमवसादात् ॥ ३९७ ॥ अनिमित्तारातिर्मां, सकुटुम्बमहीलयन्महीशोऽसौ ॥ इति चिन्तयन्नमर्षा—न्नगरान्निरगात्ततो विप्रः ॥ ३९८ ॥ तेन भ्रमताथ बहिः, पशुपालोऽदर्शि दर्शिताश्चर्यः ॥ कर्करिकाभिः पिप्पल—दलपटलं छिद्रयन् दूरात् ॥ ३९९ ॥ मत्कार्यं कर्तुमसौ, क्षम इति निश्चित्य धाडवः स ततः ॥ इत्यूचे तं सन्मान—दानवचनैर्वशीकृत्य ॥ ४०० ॥ राजपथे यो

द्विरदे, स्थितः सितछत्रचामरो व्रजति ॥ प्रक्षिप्य गोलिके त्वं, तस्य दृशौ स्फोटयेः क्षिप्रम् ॥ ४०१ ॥ तत्प्रतिपद्य जडत्वात्, स्थित्वा कुड्यान्तरे दृशौ नृपतेः ॥ सह मुक्तगोलिकाभ्यां, सोपि समं स्फोटयामास ॥ ४०२ ॥ पशुवत्प-शुपालः सोथ, हन्यमानोङ्गरक्षकैर्धृत्वा ॥ राज्ञेऽपकारिणं तं, द्विजमाख्यत्कुमतिदानरिपुम् ॥ ४०३ ॥ तदवेत्य नृपः कुपित-स्तं विप्रं पुत्रमित्रबन्धुयुतम् ॥ व्यापादितवान् सद्यः, कोपो महतां हि नो विफलः ॥ ४०४ ॥ अपरान् पुरो-हितादी-नपि निखिलान्नगरवासिनो विप्रान् ॥ सोऽघातयन्नृपा क्व नु, रोषान्धानां विवेकमतिः ? ॥ ४०५ ॥ सचिवं चैवमोचत, भृत्वा स्थालं द्विजन्मनां नयनैः ॥ स्थापय मम पुरतोन्वह-महं यथा तानि मृद्नामि ! ॥ ४०६ ॥ राज्ञ-स्तस्य तमाशय-मवेत्य सचिवोपि शुभमतिः क्रूरम् ॥ आपूर्य श्लेष्मातक-फलैः पुरोऽस्थापयत्स्थालम् ॥ ४०७ ॥ तदथ स्थालं नृपतिः, पस्पर्श मुहुर्मुहुः स्वपाणिभ्याम् ॥ रमणीरत्नस्पर्शा-दपि तत्स्पर्शेऽधिकं मुमुदे ॥ ४०८ ॥ द्विजनेत्र-धिया तानि च, फलानि निर्दयममर्दयन्मुदितः ॥ न च तत्स्थालं पुरतो-ऽपासारयदनिशमपलज्जः ॥ ४०९ ॥ इत्थं प्रवर्द्धमाना-ऽशुभपरिणामो दिनं दिनं प्रति सः ॥ अतिगमयति स्म षोडश, वर्षाण्यविरतविषयतर्षः ॥ ४१० ॥ सर्वा-युषाथ नृपतिः शरदां शतानि, सप्तातिवाह्य विषयामिषलोलुपात्मा ॥ उत्कृष्टजीवितमुपार्ज्य तमस्तमायां, रौद्राशयाद-जनि नैरयिकः क्षमायाम् ॥ ४११ ॥ इत्युक्तो ब्रह्मदत्तकथावशिष्टांशः, सम्प्रति प्रसङ्गतश्चित्रवक्तव्यतामाह-

मूलम्—चित्तोवि कामेहिं विरत्तकामो, उदत्तचारित्ततवो महेसी ।
अणुत्तरं संजमपालइत्ता, अणुत्तरं सिद्धिगइं गयत्ति बेमि ॥ ३५ ॥

व्याख्या—चित्रोपि चित्र• पुनः कामेभ्यो विरक्तकामो निवृत्ताभिलाषः उदात्तं प्रधानं चारित्रं सर्वविरतिरूपं तपश्च द्वादशविधं यस्य स तथा, महर्षिः अनुत्तरं संयमं सप्तदशभेदं पालयित्वा अनुत्तरां सर्वलोकाकाशोपरिवर्त्तिनीं सिद्धिं गतिं गतः प्राप्त इति सूत्रार्थ• ॥ ३५ ॥ इति ब्रवीमीति प्राग्वत् ॥ १३ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्यभुजिष्योपा-ध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ त्रयोदशमध्ययनं सम्पूर्णम् ॥ १३ ॥

## ॥ अथ चतुर्दशमध्ययनम् ॥

॥ ऐं नमः ॥ व्याख्यातं त्रयोदशमध्ययनं, अधुनेषुकारीयाख्यं चतुर्दशमारभ्यते । अस्य चायमभिसम्बन्धः, इहा-नन्तराध्ययने मुख्यतया निदानदोष उक्तः, प्रसङ्गान्निर्निदानतागुणश्च, अत्र पुनर्मुख्यतया स एवोच्यते, इत्यनेन सम्ब-न्धेनायातस्यास्येदमादौ सूत्रत्रयम्—

मूलम्—देवा भवित्ताण पुरे भवंमि, केई चुआ एगविमाणवासी ।
पुरे पुराणे उसुआरनामे, खाए समिद्धे सुरलोअरम्मे ॥ १ ॥
सकम्मसेसेण पुराकएणं, कुलेसुदग्गेसु अ ते पसूआ ।
निव्विण्णसंसारभया जहाय, जिणिंदमग्गं सरणं पवण्णा ॥ २ ॥
पुमत्तमागम्म कुमार दोवि, पुरोहिओ तस्स जसा य पत्ती ।
विसालकित्ती अ तहेसुआरो, राईत्थ देवी कमलावई अ ॥ ३ ॥

व्याख्या— देवा भूत्वा पूर्वभवे केचिदनिर्दिष्टनामानश्च्युताः स्वर्गादिति शेषः, एकस्मिन् पद्मगुलमनाम्नि विमाने

वसन्तीत्येवंशीला एकविमानवासिनः, पुरे नगरे पुराणे चिरन्तने 'इषुकार' नाम्नि ख्याते प्रसिद्धे समृद्धे सुरलोकरम्ये ॥ १ ॥ स्वमात्मीयं कर्म पुण्यप्रकृतिरूपं तस्य शेष उद्धरितं स्वकर्मशेषस्तेन पुराकृतेन कुलेषु उदग्रेषु उच्चेषु, चः पूरणे, ते इति ये देवा भूत्वा च्युतास्ते प्रसूता उत्पन्नाः । 'निविणत्ति' आर्षत्वान्निर्विण्णा उद्विग्नाः संसारभयात् 'जहायत्ति' त्यक्त्वा भोगादीति शेषः, जिनेन्द्रमार्गं तीर्थङ्करोक्तं मुक्तिपथं शरणं अपायरक्षाक्षमं आश्रयं प्रपन्नाः अभ्युपगताः ॥२॥ तेषु कः किंरूपो जिनेन्द्रमार्गं प्रपन्न इत्याह—पुंस्त्वं पुरुषत्वमागम्य 'कुमारत्ति' कुमारौ अकृतपाणिग्रहणौ द्वौ, अपिः पूरणे, सुलभबोधिकतयाऽन्येषां च बोधिलाभहेतुतया प्राधान्यख्यापनार्थमनयोः पूर्वमुपादानं । पुरोहितो 'भृगु'नामा तृतीयः, तस्य 'यशा' च नाम्ना पत्नी चतुर्थः, विशालकीर्तिश्च विस्तीर्णयशाश्च तथा'इषुकारो' नाम राजा पंचमः 'इत्यपि' अत्रैव भवे देवीति प्रधानभार्या, प्रक्रमात्तस्यैव राज्ञः 'कमलावती' च नाम्ना षष्ठ इति सूत्रत्रयार्थः ॥ ३ ॥ अथैतेषु कुमारयोर्यथा जैनमार्गावासिर्जाता तथा दर्शयितुमाह—

मूलम्—जाईजरामच्चुभयाभिभूआ, बहिंविहाराभिणिविट्ठचित्ता ।
संसारचक्कस्स विमोक्खणट्ठा, दट्ठुण ते कामगुणे विरत्ता ॥ ४ ॥
पिअपुत्तगा दोण्णिवि माहणस्स, सकम्मसीलस्स पुरोहिअस्स ।
सरित्तु पोराणिअ तत्थ जाइं, तहा सुचिण्णं तवसंजमं च ॥ ५ ॥

व्याख्या—जातिजरामृत्युभयाभिभूतौ बहिः संसाराद्विहारः स्थानं बहिर्विहारः स चार्थान्मोक्ष एव, तस्मिन्नभिनिविष्टं बद्धाग्रहं चित्तं ययोस्तौ तथा, संसारश्चक्रमिव संसारचक्रं, तस्यविमोक्षणार्थं त्यागार्थं दृष्ट्वा साधूनिति शेषः । तावनन्तरोक्तौ कामगुणे कामगुणविषये विरक्तौ ॥ ४ ॥ 'पिअपुत्तगत्ति' प्रियौ वल्लभौ पुत्रावेव पुत्रकौ, प्रियौ च तौ पुत्रकौ च प्रियपुत्रकौ द्वावपि माहनस्य द्विजस्य स्वकर्मशीलस्य यजनाद्यनुष्ठानरतस्य पुरोहितस्य शान्तिकर्तुः 'सरित्तुत्ति' स्मृत्वा पौराणिकीं चिरन्तनीं तत्रेति सन्निवेशे जातिं जन्म जातिस्मरणं प्राप्येत्यर्थः ॥ तथा सुचीर्णं निदानादिनानुपहतत्वेन सम्यक् सेवितं तपः संयमं च स्मृत्वा कामगुणे विरक्ताविति योग इति सूत्रद्वयार्थः ॥ ५ ॥ ततस्तौ यदकार्ष्टां तदाह—

मूलम्—ते कामभोगेसु असज्जमाणा, माणुस्सएसुं जे आवि दिव्वा ।
मोक्खाभिकंखी अभिजायसड्ढा, तायं उवागम्म इमे उदाहु ॥ ६ ॥

व्याख्या—तौ पुरोहितसुतौ कामभोगेषु 'असज्जमाणत्ति' असजन्तौ सङ्गमकुर्वन्तौ मानुष्यकेषु मनुष्यसम्बन्धिषु ये चापि दिव्या देवसम्बन्धिनस्तेषु चेति प्रक्रमः, मोक्षाभिकांक्षिणौ अभिजातश्रद्धौ उत्पन्नतत्त्वरुची तातं पितरमुपागम्येदं वक्ष्यमाणं 'उदाहुत्ति' उदाहरतां उक्तवन्ताविति सूत्राक्षरार्थः ॥ ६ ॥ भावार्थस्त्वेषां सूत्राणां कथानकादवसेयस्तत्सम्प्रदायश्चायं, तथाहि—

चित्रसम्भूतयोः पूर्व—भवे यौ सुहृदावुभौ ॥ अभूतां वल्लवौ साधु—सेवाध्वस्तविपल्लवौ ॥ १ ॥ तावपि व्रतमाराध्या—भवतां भासुरौ सुरौ ॥ व्रतं हि चेन्न मोक्षाय, तर्हि स्वर्गाय जायते ॥ २ ॥ क्षितिप्रतिष्ठितपुरे, तावभूतां ततश्च्युतौ ॥ सोदराविभ्यतनयौ, सुन्दरावश्विनाविव ॥ ३ ॥ इभ्यपुत्रास्तयोस्तत्र, चत्वारोऽन्यमहर्द्धिकाः ॥ जज्ञिरे सुहृदः पुण्य—शालिनां सुलभा हि ते ॥ ४ ॥ उपभुज्य चिरं भोगां—स्ते षडप्यन्यदा मुदा ॥ श्रुत्वा धर्मं गुरूपान्ते, प्राव्रजन् विजितेन्द्रियाः ॥ ५ ॥ पालयित्वा चिरं दीक्षा—मधीत्य विविधं श्रुतम् ॥ विधायानशनं प्रान्ते, ते विपद्य महर्षयः ॥ ६ ॥ विमाने पद्मगुल्माह्वे, प्रथमत्रिदिवस्थिते ॥ जज्ञिरे त्रिदशश्रेष्ठा—श्चतुःपल्योपमायुषः ॥ [ युग्मम् ] तत्रापि विविधैर्भोगै—रतिवाह्यायुरात्मनः ॥ गोपजीवामरौ मुक्त्वा—ऽच्यवन्त प्राक्सुराः परे ॥ ८ ॥ तेष्वेकः कुरुदेशोर्वी—ललनामौलिभूषणे ॥ इषुकारपुरे भूमा—निषुकाराभिधोऽभवत् ॥ ९ ॥ अन्यस्तु तस्य राज्ञोऽभू—न्महिषी कमलावती ॥ सर्वाङ्गसुभगा भूमीं—गतेव जयवाहिनी ॥ १० ॥ तस्यैवासीत्तृतीयस्तु, पुरोधा भृगुसंज्ञकः ॥ पुरोधसोऽभवद्भार्या, तुरीयस्तु यशाभिधा ॥ ११ ॥ पुरोहितस्य तस्याभू—त्कालेपि न यदाङ्गजः ॥ तदा तच्चिन्तयात्यन्त—मन्तः स व्याकुलोऽभवत् ॥ १२ ॥ दध्यौ चेत्यनिशं चित्ता—नन्दनान्नन्दनान् विना ॥ सौधं शून्यमिवाभाति, विना वृक्षान् वनं यथा ॥ १३ ॥ दैवज्ञपृच्छां देवोप—याचितानि च सोन्वहम् ॥ व्यधात् पुत्रार्थमार्त्तो हि, देवादीन् बहु सेवते ॥ १४ ॥

१ गोपौ । २ इन्द्राणी ।

इतश्च तौ गोपजीव–देवाववधिनान्यदा ॥ भृगोः पुत्रौ भविष्याव, इति ज्ञात्वा महाशयौ ॥ १५ ॥ निर्ग्रन्थरूपं निर्माय, भृगोः सौधे समेयतुः ॥ तौ प्रेक्ष्य मुदितः सोपि, प्राणमद्रमणीयुतः ॥ १६ ॥ [ युग्मम् ] श्रुत्वा तद्देशनां श्राद्ध–धर्मं च प्रतिपद्य सः ॥ इति पप्रच्छ हे पूज्यौ !, पुत्रा मे भाविनो न वा ? ॥ १७ ॥ तावूचतुः सुतौ द्वौ ते, भाविनौ तौ च मन्मती ॥ शिशुत्व एव प्रव्रज्यां, विश्वपूज्यां ग्रहीष्यतः ॥ १८ ॥ नान्तरायस्तदा कार्यः, प्रव्रज्यां गृह्णतोस्तयोः ॥ तौ हि प्रव्रजितौ लोकं, प्रभूतं बोधयिष्यतः ॥ १९ ॥ इत्युक्त्वा तौ गतौ देवा–वन्यदा च ततश्च्युतौ ॥ गर्भे पुरोधसः पत्न्या, यशाया अवतेरतुः ॥ २० ॥ ततः सभार्यो गत्वाऽस्था–द्ग्रामे क्वापि पुरोहितः ॥ आजन्मापि मुनीन्मास्म–पश्यतां मत्सुताविति ॥ २१ ॥ अथ क्रमाद्यशाऽसूत, सुतयुग्मं मनोरमम् ॥ ववृधाते च तौ बालौ, तत्र पद्माविव ह्रदे ॥२२॥ दैवादिहागतान्साधू–न्मास्म सङ्गच्छतां सुतौ ॥ तत्सङ्गमे हि चारित्रं, द्रुतमेतौ ग्रहीष्यतः ॥ २३॥ ध्यात्वेति मोहतिमिरा–पास्तविज्ञानलोचनौ ॥ इत्यशिक्षयतां पुत्रौ, यशाभृगुपुरोहितौ ॥ २४ ॥ "हे पुत्रौ ! ये हि यतयो, मुण्डा दण्डादिधारिणः ॥ शनैर्नीचैर्दृशो दम्भा–द्विचरन्ति बका इव ॥ २५ ॥ गृहीत्वा डिम्भरूपाणि, ते विनिघ्नन्ति सत्वरम् ॥ राक्षसा इव तन्मांसं, भक्षयन्ति च निर्दयाः ॥ २६ ॥ तद्युवाभ्यां न गन्तव्यं, तेषां पार्श्वे कदाचन ॥ विस्रम्भश्च न कर्तव्य–स्तेषां विस्रब्धघातिनाम् ॥ २७ ॥" पितृभ्यां मोहमूढाभ्यां, शावौ ताविति शिक्षितौ ॥ क्रीडन्तौ जग्मतुः स्वैरं, बहिर्ग्रामात्ततोन्यदा ॥ २८ ॥ समीक्ष्यागच्छतो मार्ग–प्रतिपन्नान्मुनींश्च तौ ॥ वटमारोहतां नंष्ट्वा, वित्रस्तौ विहगाविव ॥ २९ ॥ दैवाद्वटस्य तस्याधः, साधवोपि समागताः ॥ उपचक्रमिरे भोक्तुं, पूर्वोपात्ताशनादिकम् ॥ ३० ॥ तच्च स्वाभाविकं वीक्ष्य, वटस्थौ तौ कुमारकौ ॥ दध्यतुर्भक्तमेवामी, भुञ्जते न पुनः पलम् ॥ ३१ ॥ ततपित्रोर्वचनं तस्मा–देषु सङ्गच्छते कथम् ? ॥ दोषश्चायमसंस्ताभ्या–मुक्तोऽमीषां किमावयोः ? ॥ ३२ ॥ किञ्चावामीदृशान् क्वापि, श्रमणान् दृष्टपूर्विणौ ॥ ध्यायन्ताविति तौ प्राच्यां, जातिं सस्मरतुर्निजाम् ॥३३॥ श्रामण्यं प्राकृतं स्मृत्वा, सम्बुद्धौ दध्यतुश्च तौ ॥ पितृभ्यां वञ्चितावावा–महो ! मोहान्मृषोक्तिभिः ॥३४॥ ध्यायन्तौ तावेवमुत्तीर्य तस्मा–न्न्यग्रोधद्रोस्तान्मुनीन्द्रांश्च नत्वा ॥ गत्वा स्वीयं सौधमभ्येत्य ताता–ऽभ्यर्णं चञ्चद्वर्णमित्यभ्यधत्ताम् ॥ ३५ ॥ इत्युक्तः सम्प्रदायः, सम्प्रदायशेषं तु सूत्रसिद्धमिति तदेवाथ व्याख्यायते । तत्र यथा तौ तातमूचतुस्तथाह–

मूलम्—असासयं दट्ठुमिमं विहारं, बहुअंतरायं न य दीहमाउं ।
तम्हा गिहंसी न रइं लभामो, आमंतयामो चरिसामु मोणं ॥ ७ ॥

व्याख्या—अशाश्वतमनित्यं दृष्ट्वा इमं प्रत्यक्षं विहारं मनुष्यत्वेनावस्थानं, बहवः अन्तराया रोगादयो यत्र तद्बहन्तरायं, न च नैव दीर्घमायुर्जीवितं सम्प्रति पल्योपमाद्यायुषोऽभावात् , यत एवं तस्माद्गृहे न रतिं लभावहे, अत एवामंत्रयावः पृच्छाव आवां चरिष्यावो मौनं संयममिति सूत्रार्थः ॥ ७ ॥ एवं ताभ्यामुक्ते–

मूलम्—अह तायओ तत्थ मुणीण तेसिं, तवस्स वाघायकरं वयासि ।
इमं वयं वेदविदो वयंति, जहा न होई असुआण लोगो ॥ ८ ॥

व्याख्या—अथानन्तरं तात एव तातकः तत्र तस्मिन्नवसरे मुन्योर्भावतः प्रतिपन्नमुनिभावयोस्तयोः कुमारयोः तपस उपलक्षणत्वादशेषधर्मानुष्ठानस्य च व्याघातकरं वचनमिति शेषः 'वयासित्ति' अवादीत् , तदेव दर्शयति । इमां वाचं वेदविदो वदन्ति, यथा न भवति असुतानामपुत्राणां लोकः परलोकः, तं विना पिण्डदानाद्यभावे गत्याद्यभावात् । तथा च वेदवचः–"अनपत्यस्य लोका न सन्तीति" अन्यैरप्युक्तं–"पुत्रेण जायते लोक, इत्येषा वैदिकी श्रुतिः ॥ अथ पुत्रस्य पुत्रेण, स्वर्गलोके महीयते ॥ १ ॥" इति ॥ ८ ॥ यत एवं तस्मात्–

मूलम्—अहिज्ज वेए परिविस्स विप्पे, पुत्ते परिट्ठप्प गिहंसि जाया ।
भुच्चाण भोए सह इत्थिआहिं, आरण्णगा होह मुणी पसत्था ॥ ९ ॥

व्याख्या—अधीत्य वेदान् , परिवेष्य भोजयित्वा विप्रान् , पुत्रान् परिष्ठाप्य निवेश्य गृहे, हे जातौ पुत्रौ ! तथा भुक्त्वा 'ण' इति वाक्यालङ्कारे, भोगान् सह स्त्रीभिः, आरण्यकौ अरण्यवासितापसव्रतधारिणौ 'होहत्ति' भवतं युवां मुनी प्रशस्ताविति सूत्रद्वयार्थः ॥ इत्थं तेनोक्ते कुमारौ यदकार्ष्टां तदाह–

मूलम्—सोअग्गिणा आयगुणिंधणेणं, मोहानिला पज्जलणाहिएणं ।
संतत्तभावं परितप्पमाणं, लालप्पमाणं बहुहा बहुं च ॥ १० ॥
पुरोहिअं तं कमसोऽणुणिंतं, निमंतयंतं च सुए धणेणं ।
जहक्कमं कामगुणेहिं चेव, कुमारगा ते पसमिक्ख वक्कं ॥ ११ ॥

व्याख्या—शोकाग्निना पुत्रविरहसम्भावनोद्भवशोकवह्निना, किंभूतेन ? आत्मनो गुणा आत्मगुणा अनादिकालसहचरितत्वाद्रागादयस्ते इन्धनमुद्दीपकतया यस्य स तथा तेन, मोहानिलादज्ञानवायोः 'पज्जलणाहिएणंति' सूत्रत्वादधिकं प्रज्वलनं यस्य स तथा तेन, सन्तप्तः भावः अन्तःकरणमस्येति सन्तप्तभावस्तं, अत एव परितप्यमानं समन्ताद्दह्यमानं, लालप्यमानं पुनः पुनर्दीनवचांसि लपन्तं, बहुधाऽनेकप्रकारं बहु च प्रभूतं यथा स्यात्तथा ॥ १० ॥ पुरोहितं तमिति प्रक्रान्तं 'कमसोत्ति' क्रमेणानुनयन्तं स्वाभिप्रायेण प्रज्ञापयन्तं निमंत्रयन्तं च, सुतौ धनेन यथाक्रमं कामगुणैश्चैव मनोज्ञशब्दाद्यैः कुमारकौ तौ प्रसमीक्ष्य प्रकर्षेण मोहाच्छादितमतिमालोक्य वाक्यं वक्ष्यमाणं उक्तवन्ताविति शेषः ॥ ११ ॥ किं तदित्याह—

मूलम्—वेआ अहीआ न हवंति ताणं, भुत्ता दिआ निंति तमंतमेणं ।
जाया य पुत्ता न हवंति ताणं, को नाम ते अणुमन्निज्ज एअं ॥ १२ ॥

व्याख्या—वेदा अधीता न भवन्ति त्राणं शरणं, तत्पठनमात्राद्दुर्गतिपातरक्षणासिद्धेः । उक्तं हि—"अकारणमधीयानो, ब्राह्मणस्तु युधिष्ठिर ! ॥ दुष्कुलेनाप्यधीयन्ते, शीलं तु मम रोचते ॥ १ ॥ शिल्पमध्ययनं नाम, वृत्तं ब्राह्मणलक्षणम् ॥ वृत्तस्थं ब्राह्मणं प्राहु—र्नेतरान् वेदजीवकान् ॥ २ ॥" तथा 'भुत्तत्ति' अन्तर्भूतणिगर्थत्वाद्भोजिता द्विजा नयन्ति तमसोपि यत्तमस्तमस्तमस्तस्मिन् अतिरौद्रे रौरवादिके नरके इत्यर्थः, णमिति वाक्यालङ्कारे, ते हि भोजिता कुमार्गप्ररूपणपशुवधादावेव प्रवर्त्तन्ते, ततः पात्रबुद्ध्या तेषां भोजनं नरकहेतुरेवेति कुतस्तेषां निस्तारकत्वं ? तथा जाताश्च पुत्रा न भवन्ति त्राणं नरकादौ पततामिति शेषः । उक्तञ्च वेदानुगैरपि—"यदि पुत्राद्भवेत्स्वर्गो, दानधर्मो न विद्यते ॥ मुषितस्तत्र लोकोयं, दानधर्मो निरर्थकः ॥ १ ॥ बहुपुत्रा दुली गोधा, ताम्रचूडस्तथैव च ॥ तेषां च प्रथमं स्वर्गः, पश्चाल्लोको गमिष्यति ॥ २ ॥" यतश्चैवं ततः को नाम ? न कोपीत्यर्थः, ते तव अनुमन्येत अनुजानीयात्सविवेक इति गम्यते एतत्पूर्वोक्तं वेदाध्ययनादीति ॥ १२ ॥ तथा—

मूलम्—खणमित्तसुक्खा बहुकालदुक्खा, पगामदुक्खा अनिगामसुक्खा ।
संसारमोक्खस्स विपक्खभूआ, खाणी अणत्थाण उ कामभोगा ॥ १३ ॥

व्याख्या—क्षणमात्रसौख्या बहुकालं दुःखं नरकादिविषयं येभ्यस्ते बहुकालदुःखाः, प्रकामदुःखा अतिशयितदुःखा अनिकामसौख्या अप्रकृष्टसुखाः, संसारमोक्षस्य विपक्षभूताः, खानिराकरोऽनर्थानां, तुरेवकारार्थो भिन्नक्रमश्च, ततः खानिरेव कामभोगाः ॥ १३ ॥ अनर्थखनित्वमेव स्पष्टयितुमाह—

मूलम्—परिव्वयंते अनिअत्तकामे, अहो अ राओ परितप्पमाणे ।
अन्नप्पमत्ते धणमेसमाणे, पप्पोति मच्चुं पुरिसे जरं ज ॥ १४ ॥

व्याख्या—परिव्रजन् विषयसुखलाभार्थमितस्ततो भ्राम्यन् अनिवृत्तकामोऽनुपरताभिलाषः सन् 'अहो अ राओत्ति' आर्षत्वाच्चस्य च भिन्नक्रमत्वादहि रात्रौ च परितप्यमानस्तत्प्राप्त्यै समन्ताच्चिन्ताग्निना दह्यमानः, अन्ये स्वजनास्तदर्थं प्रमत्तस्तत्कृत्यासक्तचेता अन्यप्रमत्तो धनं एषयन् विविधोपायैर्गवेषयमाणः, 'पप्पोतित्ति' प्राप्नोति मृत्युं पुरुषो जरां च ॥ १४ ॥ तथा—

मूलम्—इमं च मे अत्थि इमं च नत्थि, इमं च मे किच्चमिमं अकिच्चं ।
तं एवमेवं लालप्पमाणं, हरा हरंतित्ति कहं पमाओ ? ॥ १५ ॥

व्याख्या—इमं च मे अस्ति धान्यादि, इदं च नास्ति रूप्यादि, इदं च मे कृत्यं गृहवरण्डकादि, इदमकृत्यं प्रारब्धमपि वाणिज्यादि न कर्त्तुमुचितं, तं पुरुषं एवमेव वृथैव लालप्यमानं अत्यर्थं वदन्तं हरन्त्यायुरिति हराः, दिन-

रजन्यादयो हरन्ति भवान्तरं नयन्ति इत्यतो हेतोः कथं प्रमादो धर्मे कर्तुं युक्त इति सूत्रपट्कार्थः ॥ १५ ॥ अथ तौ धनादिना लोभयितुं पुरोधाः प्राह—

मूलम्—धणं पभूअं सह इत्थिआहिं, सयणा तहा कामगुणा पगामा ।
तवं कए तप्पति जस्स लोओ, तं सव्वसाहीणमिहेव तुब्भं ॥ १६ ॥

व्याख्या—धनं प्रभूतं सह स्त्रीभिः, स्वजनाः पितृपितृव्यादयः, तथा कामगुणाः शब्दादयः प्रकामा अतिशायिनो वर्त्तन्त इति गम्यं, तपः कष्टानुष्ठानं कृते निमित्तं तप्यतेऽनुतिष्ठति यस्य धनादेर्लोकः तत्सर्वं स्वाधीनमिहैवास्मिन्नेव गृहे 'तुब्भंति' युवयोरिति सूत्रार्थः ॥ १६ ॥ तावाहतुः—

मूलम्—धणेण किं धम्मधुराहिगारे, सयणेण वा कामगुणेहिं चेव ।
समणा भविस्सामु गुणोहधारी, बहिंविहारा अभिगम्म भिक्खं ॥ १७ ॥

व्याख्या—धनेन किं ? न किंचिदित्यर्थः, धर्म एव सात्विकधुरन्धरैरुह्यमानतया धूरिव धर्मधुरा तदधिकारे तत्प्रस्तावे स्वजनेन वा कामगुणैश्चैव, ततः श्रमणौ भविष्यावो गुणौघधारिणौ क्षमादिगुणसमूहधारकौ, बहिर्ग्रामादिभ्यो विहारो ययोस्तौ बहिर्विहारौ अप्रतिबद्धविहारावित्यर्थः, अभिगम्याश्रित्य भिक्षामिति सूत्रार्थः ॥ १७ ॥ आत्मास्तित्वमूलत्वाद्धर्मानुष्ठानस्य तन्निराकर्त्तुं भृगुराह—

मूलम्—जहा य अग्गी अरणी असंतो, खीरे घयं तिल्लमहा तिलेसु ।
एमेव जाया सरिरंमि सत्ता, संमुच्छई नासइ नावचिट्ठे ॥ १८ ॥

व्याख्या—यथैव चकारस्यैवकारार्थत्वात् अग्निः 'अरणित्ति' अरणितोऽग्निर्मन्थनकाष्ठादसन् अविद्यमान एव सम्मूर्च्छति, तथा क्षीरे घृतं, तैलमथ तिलेषु, एवमेव हे जातौ ! शरीरे सत्वाः 'संमुच्छइत्ति' सम्मूर्च्छन्ति, पूर्वमसन्त एवोत्पद्यन्ते । तथा 'नासइत्ति' नश्यन्ति, अभ्रपटलवद्विलयमुपयान्ति । 'नावचिट्ठेत्ति' न पुनरवतिष्ठन्ते, शरीरनाशे सति तन्नाशादिति सूत्रार्थः ॥ १८ ॥ कुमारावाहतुः—

मूलम्—नो इंदिअगिज्झो अमुत्तभावा, अमुत्तभावाविअ होइ निच्चो ।
अज्झत्थहेउं निअओऽस्स बंधो, संसारहेउं च वयंति बंधं ॥ १९ ॥

व्याख्या—नो इंद्रियग्राह्यः सत्व इति प्रक्रमः, अमूर्त्तभावादिन्द्रियग्राह्यरूपाद्यभावात् । तथा अमूर्त्तभावादपि च भवति नित्यस्तथा हि-यद्द्रव्यत्वे सत्यमूर्त्तं तन्नित्यं, आकाशवत् । न चैवममूर्त्तत्वादेव बन्धासम्भवः इति वाच्यं ? यतः 'अज्झत्थहेउंति' इहाध्यात्मशब्देनात्मस्थाः मिथ्यात्वादय उच्यन्ते, ततस्तद्धेतुस्तन्निमित्तो नियतो निश्चितोऽस्य जन्तोर्बन्धः कर्मभिः संश्लेषः. यथाऽमूर्त्तस्यापि नभसो मूर्त्तैरपि घटादिभिः सम्बन्धः एवमस्यापि मर्त्तैरपि कर्मभिर्न विरुध्यते। तथा संसारहेतुं च वदन्ति बन्धमिति, ततश्चास्त्येवात्मा चेतनाश्रयः, तदभावे हि प्रतिदेहिनमुपलभ्यमानस्य चैतन्यस्य निरास्पदत्वप्रसङ्गात् । न च वाच्यं पृथिव्यादिभूतानि चैतन्यस्याश्रय इति न तस्य निरास्पदत्वमिति ? पृथक्स्थितेषु तिलेषु स्नेहस्येव पृथग्भूतेषु भूतेषु चैतन्यांशस्याप्यनुपलब्धेः, यच्च येषु पार्थक्यावस्थायां स्वल्पमपि नास्ति न तत्तेषु संहितेष्वपि भवितुमर्हति, रेणुकणेषु तैलमिव । स्यादेतन्मद्याङ्गेषु मदशक्तिः पूर्वमनुपलभ्यमानापि संहितेषु तेषु दृश्यत इति चेन्मैवं, तेषु पूर्वमपि मदशक्तेः किञ्चिदुपलभ्यमानत्वात्, दृश्यते हि धातकीपुष्पेषु मनाग् वैकल्यजनकत्वं, गुडे बलवर्धकत्वं चेति, एवमन्येष्वपि तदङ्गेषु द्रष्टव्यं, न चैवं पार्थक्यावस्थायां पृथ्व्यादिषु किञ्चिदस्पष्टमपि चैतन्यमुपलभ्यते, तत एभ्योऽतिरिक्त एव तस्याश्रय एष्टव्यः, स चात्मैवेति स्थितं । स च नित्यो भवान्तरयायी, तस्य च मिथ्यात्वादिभिर्बन्धो बन्धादेव च संसार इति सूत्रार्थः ॥ १९ ॥ ततश्च—

मूलम्—जहा वयं धम्ममयाणमाणा, पावं पुरा कम्ममकासि मोहा ।
उरब्भमाणा परिरक्खिअंता, तं नेव भुज्जोवि समायरामो ॥ २० ॥

व्याख्या—यथा वयं इत्यावां धर्मं सम्यग्दर्शनादिकं अजानन्तौ पापं पापहेतुः पुरा पूर्वं कर्मानुष्ठानं 'अकासित्ति' अकार्ष्व, मोहात्तत्वाज्ञानात् अपरुद्ध्यमाना गृहान्निर्गममलभमानाः परिरक्ष्यमाणा अनुजीविभिरनुपाल्यमानास्तत्पापकर्म नैव भूयोपि पुनरपि समाचरामो यथावद्विदितवस्तुस्वरूपत्वादिति सूत्रार्थः ॥ २० ॥ अन्यच्च—

मूलम्—अब्भाहयंमि लोगंमि, सव्वओ परिवारिए। अमोहाहिं पडंतीहिं, गिहंसि न रइं लभे ॥२१॥

व्याख्या—अभ्याहते पीडिते लोके सर्वतः सर्वासु दिक्षु परिवारिते परिवेष्टिते अमोघाभिरवन्ध्यप्रहरणोपमाभिः पतन्तीभिः गृहे गृहवासे न रतिं लभावहे, यथा वागुरावेष्टितो मृगो अमोघैश्च प्रहरणैर्व्याधेनाऽभ्याहतो न रतिं लभते एवमावामपीति सूत्रार्थः ॥ २१ ॥ भृगुराह—

मूलम्—केण अब्भाहओ लोओ, केण वा परिवारितो। का वा अमोहा वुत्ता, जाया चिंतापरो हुमि २२

व्याख्या—केन व्याधकल्पेनाभ्याहतो लोकः ? केन वा वागुरारूपेण परिवारितः ? का वा अमोघा अमोघप्रहरणोपमा उक्ताः ? हे जातौ ! चिन्तापरः 'हुमित्ति' भवामि, ततो ममावेद्यतामयमर्थ इति सूत्रार्थः ॥२२॥ तावाहतुः—

मूलम्—मच्चुणब्भाहओ लोओ, जराए परिवारिओ। अमोहा रयणीवुत्ता, एवं ताय नियाणह ॥ २३॥

व्याख्या—मृत्युनाभ्याहतो लोकस्तस्य सर्वत्राप्रतिहतप्रसरत्वात्, जरया परिवारितस्तस्या एव मरणाभिधानयोग्यतापादने प्रवणत्वात्, अमोघा रजन्य उक्ताः दिनाविनाभावित्वात्तासां दिनाश्च, तत्पतने ह्यवश्यम्भावी जनाभिघातः, एवं तात ! विजानीतेति सूत्रार्थः ॥ २३ ॥ किञ्च—

मूलम्—जा जा वच्चइ रयणी, न सा पडिनिअत्तइ। अहम्मं कुणमाणस्स, अहला जंति राइओ २४

व्याख्या—या या व्रजति रजनी उपलक्षणत्वाद्दिनं च न सा प्रतिनिवर्त्तते पुनरागच्छति, ताश्चाधर्मं कुर्वतो जन्तोरिति शेषः, अफला यान्ति रात्रयः, अधर्मनिबन्धनं गार्हस्थमिति तत्त्याग एव श्रेयान् ॥ २४ ॥ तथा—

मूलम्—जा जा वच्चइ रयणी, न सा पडिनिअत्तइ। धम्मं च कुणमाणस्स, सहला जंति राइओ ॥२५॥

व्याख्या—प्राग्वन्नवरं 'धम्मं चत्ति' धर्मं पुनः कुर्वाणस्य सफला धर्मफलत्वाज्जन्मनो न च व्रतं विना धर्म इत्यतस्तदेव प्रतिपत्स्यावहे इति सूत्रद्वयार्थः ॥ २५ ॥ अथ तद्वचनेन प्रतिबुद्धो भृगुराह—

मूलम्—एगओ संवसित्ताणं, दुहओ सम्मत्तसंजुआ। पच्छा जाया गमिस्सामो, भिक्खमाणा कुले कुले २६

व्याख्या—एकत एकस्मिन् स्थाने समुष्य सहैव उषित्वा 'दुहओत्ति' द्वयं च द्वयं च द्वये आवां युवां च सम्यक्त्वसंयुता उपलक्षणत्वाद्देशविरत्या च संयुताः पश्चाद्यौवनोत्तरकालं हे जातौ ! गमिष्यामो वयं प्रव्रज्य मासकल्पादिक्रमेणेति शेषः, भिक्षमाणाः कुले कुले गृहे गृहे अज्ञातोञ्छवृत्त्येति सूत्रार्थः ॥ २६ ॥ कुमारावाहतुः—

मूलम्—जस्सत्थि मच्चुणा सक्खं, जस्स वऽत्थि पलायणं।
जो जाणे न मरिस्सामि, सो हु कंक्खे सुएसिआ ॥ २७ ॥

व्याख्या—यस्यास्ति मृत्युना सह सख्यं मैत्री, यस्य वास्ति पलायनं नशनं मृत्योरिति प्रक्रमः, तथा यो जानाति यथाहं न मरिष्यामि, 'सो हुत्ति' स एव कांक्षति वाञ्छति, श्व आगामिदिने स्यादिदं कार्यमिति शेषः ॥२७॥ ततश्च—

मूलम्—अज्जेव धम्मं पडिवज्जयामो, जहिं पवण्णा न पुणब्भवासो।
अणागयं नेव य अत्थि किंचि, सद्धा खमं णे विणइत्तु रागं ॥ २८ ॥

व्याख्या—अद्यैव धर्मं प्रतिपद्यामहे 'जहिंति' आर्षत्वाद्यं धर्मं प्रपन्ना आश्रिता न पुनः 'भवामोत्ति' भविष्यामः, न पुनर्जन्मजरामरणाद्यनुभविष्यामस्तदभावहेतुत्वाद्धर्मस्य। किञ्च अनागतमप्राप्तं नैव नास्ति किञ्चित्सुन्दरमपि वस्तु विषयसौख्यादि, सर्वभावानामनन्तशः प्राप्तत्वात्, अतः श्रद्धा अभिलाषः, क्षमं युक्तो धर्मानुष्ठानं कर्तुमिति शेषः, 'णेत्ति' नोऽस्माकं 'विणइत्तुत्ति' व्यपनीय रागं स्वजनाभिष्वङ्गलक्षणमिति सूत्रद्वयार्थः ॥ २८ ॥ इदञ्चाकर्ण्य जातव्रताशयो भृगुर्ब्राह्मणीं धर्मविघ्नकरीं मत्वेदमाह—

मूलम्—पहीणपुत्तस्स हु नत्थि वासो, वासिट्ठि भिक्खायरिआइ कालो।
साहाहिं रुक्खो लहई समाहिं, छिन्नाहिं साहाहिं तमेव खाणुं ॥ २९ ॥

व्याख्या—'पहीणपुत्तस्सत्ति' पुत्राभ्यां प्रहीणस्त्यक्तः पुत्रप्रहीणस्तस्य प्राकृतत्वात् पूर्वापरनिपातः, हुः पूरणे नास्ति वासोऽवस्थानं मम गृह इति शेषः, हेवाशिष्ठि ! वशिष्ठगोत्रोद्भवे ! भिक्षाचर्याया व्रतस्य कालः प्रस्तावो वर्त्तते इति गम्यं। किमित्येवमत आह—शाखाभिर्वृक्षो लभते समाधिं स्वास्थ्यं, छिन्नाभिः शाखाभिस्तमेव वृक्षं स्थाणुं जनो

वदतीति शेषः, यथा हि शाखा द्रुमस्य शोभा संरक्षणादिना समाधिहेतव एवं ममाप्येतौ सुतौ तद्रहितश्चाहमपि स्थाणुकल्प एवेति भावः ॥ २९ ॥ किञ्च—

मूलम्—पंखाविहूणोव्व जहेह पक्खी, भिच्चविहूणोव्व रणे नरिंदो ।
विवन्नसारो वणिओव्व पोए, पहीणपुत्तोम्हि तहा अहंपि ॥ ३० ॥

व्याख्या—पक्षविहीनो वा दृष्टान्तान्तरसमुच्चये यथेहलोके पक्षी, भृत्यविहीनो वा रणे नरेन्द्रो, विपन्नसारो विनष्टहिरण्यादिद्रव्यो वणिगिव पोते प्रवहणे भिन्ने इति शेषः, एते यथा व्यसनभागितया विषीदन्ति पुत्रप्रहीणस्तथाहमप्यस्मीति सूत्रद्वयार्थः ॥ ३० ॥ वाशिष्ठ्याह—

मूलम्—सुसंभिआ कामगुणा इमे ते, संपिंडिआ अग्गरसप्पभूआ ।
भुंजामु ता कामगुणे पगामं, पच्छा गमिस्सामि पहाणमग्गं ॥ ३१ ॥

व्याख्या—सुसम्भृताः सुष्ठु संस्कृताः कामगुणा इमे स्वगृहवर्त्तिनस्ते तव, तथा सम्पिण्डिताः पुञ्जीकृताः 'अग्गरसत्ति' चस्य गम्यत्वादग्र्याः प्रधानास्ते च ते रसाश्च मधुरादयो अग्र्यरसाः प्रभूताः, कामगुणान्तर्गतत्वेपि रसानां पृथगुपादानमतिगृद्धिहेतुत्वात् भुञ्जीवहि तत्तस्मात्कामगुणान् प्रकाममत्यर्थं पश्चाद्वृद्धावस्थायां गमिष्यावः प्रधानमार्गं प्रव्रज्यारूपं मुक्तिमार्गमिति सूत्रार्थः ॥ ३१ ॥ भृगुः प्राह—

मूलम्—भुत्ता रसा भोइ ! जहाइ णे वओ, न जीविअट्ठाए जहामि भोए ।
लाभं अलाभं च सुहं च दुक्खं, संविक्खमाणो चरिस्सामि मोणं ॥ ३२ ॥

व्याख्या—भुक्ताः सेविता रसा उपलक्षणत्वाच्छेषकामगुणाश्च 'भोइत्ति' हे भवति ! ब्राह्मण्या आमंत्रणमेतत् , जहाति त्यजति नोऽस्मान् वयः, प्रक्रमादिष्टक्रियाकरणक्षमं, उपलक्षणत्वाज्जीवितं च, ततो यावत्तन्न त्यजति तावत्प्रव्रजाम इति भावः । दीक्षां हि भवान्तरभाविभोगार्थं गृह्णासि ते चाधुनापि सन्त्येव तत्किं तयेति प्रेरणायामाह—न जीवितार्थमसंयमजीवितहेतोः प्रजहामि भोगान् किन्तु लाभमलाभं सुखं चस्य भिन्नक्रमादुःखं च 'संविक्खमाणोत्ति' समतया ईक्षमाणः, लाभालाभसुखदुःखजीवितमरणादिषु समतामेव भावयन्निति भावः, चरिष्यामि मौनं मुनिभावं, ततो मुक्त्यर्थमेव मे दीक्षाप्रतिपत्तिरिति सूत्रार्थः ॥ ३२ ॥ यशा प्राह—

मूलम्—मा हु तुमं सोअरिआण संभरे, जुण्णोव्व हंसो पडिसोअगामी ।
भुंजाहि भोगाइं मए समाणं, दुक्खं खु भिक्खायरिआ विहारो ॥ ३३ ॥

व्याख्या—मा निषेधे, हुर्वाक्यालङ्कारे, त्वं सौदर्याणां भ्रातॄणामुपलक्षणत्वाच्छेषस्वजनानां भोगानां च 'संभरेत्ति' स्मार्षीः 'जुण्णोव्व हंसोत्ति' जीर्णो हंस इव प्रतिश्रोतोगामी सन् , अयं भावः—यथासौ नदीस्रोतसि प्रतिकूलगमनमतिकष्टमारभ्यापि तत्राशक्तः पुनरनुस्रोत एव धावति, तथा त्वमपि व्रतभारं वोढुमक्षमः स्वजनान् भोगांश्च स्मरिष्यसि, ततो भुंक्ष्व भोगान् मया समानं सार्द्धं । 'दुक्खं खुत्ति' दुःखमेव भिक्षाचर्या भिक्षाटनं, विहारो ग्रामादिष्वप्रतिबद्धविहारः, उपलक्षणञ्चैतच्छिरोलोचादीनामिति सूत्रार्थः ॥ ३३ ॥ भृगुः प्राह—

मूलम्—जहा य भोइ ! तणुअं भुअंगमो, निम्मोअणिं हेच्च पलेइ मुत्तो ।
एमेए जाया पयहंति भोए, तेऽहं कहं नाणुगमिस्समिक्को ॥ ३४ ॥

व्याख्या—यथा चः पूर्त्तौ 'भोइत्ति' हे भवति ! तनुजां देहोद्भवां भुजङ्गमो निर्मोचनीं कञ्चुलिकां हित्वा पर्येति समन्ताद्गच्छति मुक्तो निरपेक्षः, 'एमेएत्ति' एवमेतौ जातौ प्रजहीतस्त्यजतो भोगान् तौ जातौ अहं कथं नाऽनुगमिष्यामि ? प्रव्रज्याग्रहणेनानुसरिष्यामि ? एकोऽद्वितीयः, किं ? ममासहायस्य गृहवासेनेति भावः ॥ ३४ ॥ तथा—

मूलम्—छिंदित्तु जालं अवलं व रोहिआ, मच्छा जहा कामगुणे पहाय ।
धोरेज्जसीला तवसा उदारा, धीरा हु भिक्खायरिअं चरंति ॥ ३५ ॥

व्याख्या—छित्वा जालमवलमिव दुर्बलमिव बलीयोऽपीति शेषः, रोहिता रोहितजातीया मत्स्याश्चरन्तीति सम्बन्धः, यथेति दृष्टान्तोपन्यासे, तथेति गम्यते, ततश्च तथा जालरूपान् कामगुणान् प्रहाय त्यक्त्वा धुरि वहन्ति धौरेयास्तेषामिव शीलमुत्क्षिप्तभारनिर्वाहलक्षणं येषां ते तथा, तपसाऽनशनादिनोदाराः प्रधानाः, धीराः सात्विकाः 'हुरिति'

पश्चाद्भिक्षाचर्यां व्रतं चरन्त्यतोऽहमपीत्थं व्रतमेव ग्रहीष्यामीति सूत्रद्वयार्थः ॥ ३५ ॥ इत्थं प्रतिबोधिता ब्राह्मण्याह–

मूलम्—नभे व कोंचा समइक्कमंता, तताणि जालाणि दलित्तु हंसा ।
पलिंति पुत्ता य पईअ मज्झं, तेऽहं कहं नाणुगमिस्समिक्का ॥ ३६ ॥

व्याख्या—नभसीव क्रौञ्चाः समतिक्रामन्तस्तान् तानुद्देशानुल्लङ्घयन्तः,ततानि दीर्घाणि जालानि बन्धनानि दलित्वा भित्त्वा 'हंसत्ति' चस्य गम्यत्वात् हंसाश्च 'पलिंतित्ति' परियन्ति समन्ताद्गच्छन्ति, एवं पुत्रौ च पतिश्च 'मज्झंति' मम सम्बन्धिनो ये ततजालोपमं विषयाभिष्वङ्गं हित्वा नभःकल्पे निरुपलेपे संयमाध्वनि तानि तानि संयमस्थानान्यतिक्रामन्तो यान्ति तानहं कथं नानुगमिष्याम्येका सतीति सूत्रार्थः ॥ ३६ ॥ इत्थं चतुर्णामपि व्रतप्रतिपत्तौ यदभूत्तद्द्वादशभिः सूत्रैराह—

मूलम्—पुरोहिअं तं ससुअं सदारं, सुच्चाऽभिणिक्खम्म पहाय भोए ।
कुडुंबसारं विउलुत्तमं तं, रायं अभिक्खं समुवाय देवी ॥ ३७ ॥

व्याख्या—पुरोहितं तं ससुतं सदारं श्रुत्वाऽभिनिष्क्रम्य गृहान्निर्गत्य प्रहाय भोगान् प्रव्रजितमिति शेषः, कुटुम्बसारं धनधान्यादि, विपुलं च तदुत्तमं च विपुलोत्तमं तत्पुरोहितत्यक्तं गृह्णन्तमिति शेषः, 'रायंति' राजानं, अभीक्ष्णं पुनः पुनः समुवाच सम्यगुक्तवती देवी कमलावती नाम्नी ॥ ३७ ॥ किं तदित्याह–

मूलम्—वंतासी पुरिसो रायं, न सो होइ पसंसिओ। माहणेण परिच्चत्तं, धणं आयाउमिच्छसि ॥३८॥

व्याख्या—वान्ताशी वान्तभोजी पुरुषो य इति शेषः, हे राजन् ! न स भवति प्रशंसितो धीधनैरिति शेषः, कथमहं वान्ताशीत्याह– यतो ब्राह्मणेन परित्यक्तं धनमादातुमिच्छसि ! त्यक्तधनं हि गृहीतोज्झितत्वेन वान्तकल्पं, तथादित्सुर्भवानपि वान्ताश्येव, न चैतद्भवादृशामुचितमित्याशयः ॥ ३८ ॥ किञ्च–

मूलम्—सव्वं जगं जइ तुहं, सव्वं वाऽवि धणं भवे । सव्वंपि ते अपज्जत्तं, नेव ताणाय तं तव ॥३९॥

व्याख्या—सर्वं जगद्यदि 'तुहंति' तव आयत्तमिति शेषः, सर्वं वापि धनं भवेत् सर्वमपि तत्ते तवापर्याप्तमशक्तमिच्छां पूरयितुमिति शेषः, अपर्यवसितत्वात्तस्याः । तथा नैव त्राणाय जरामरणाद्यपनोदाय तदिति सर्वं जगद्धनं वा तवेति ॥ ३९ ॥ किञ्च—

मूलम्—मरिहिसि राय जया तया वा, मणोरमे कामगुणे पहाय ।
इक्को हु धम्मो नरदेवताणं, न विज्जइ अन्नमिहेह किंची ॥ ४० ॥

व्याख्या—मरिष्यसि राजन् ! यदा तदा वा काले, जातस्य ध्रुवं मृत्युर्यदुक्तं–"क्वचित्सखे ! त्वया दृष्टः, श्रुतः सम्भावितोऽथवा ॥ क्षितौ वा यदि वा स्वर्गे, यो जातो न मरिष्यति ? ॥ १ ॥" मनोरमान् कामभोगान् प्रजहाय त्यक्त्वा न तु किञ्चित्त्वया सहाऽऽयास्यतीति भावः । ततः 'एगो हुत्ति' एक एव धर्मो नरदेवत्राणं शरणं, न विद्यते अन्यत् 'इहेहत्ति' इहलोके इह च मरणे किञ्चित्त्राणमिति सम्बन्धः, ततो धर्म एव विधेयो विद्वद्भिरिति भावः ॥ ४० ॥ यतो धर्माद्विना न त्राणं ततः–

मूलम्—नाऽहं रमे पक्खिणि पंजरे वा, संताणछिन्ना चरिस्सामि मोणं ।
अकिंचणा उज्जुकडा निरामिसा, परिग्गहारंभनिअत्तदोसा ॥ ४१ ॥

व्याख्या—नाऽहं रमे रतिमवाप्नोमि 'पक्खिणि पंजरे वत्ति' पक्षिणीव पञ्जरे, अयं भावः–यथाऽसौ दुःखदायिनि पञ्जरे रतिं न प्राप्नोति एवमहमपि जरामरणाद्युपद्रवविद्रुते भवपञ्जरे । अत एव 'संताणछिन्नत्ति' छिन्नसन्ताना प्रक्रमाद्विनाशितस्नेहसन्ततिः चरिष्यामि मौनं मुनिभावं, अकिञ्चना हिरण्यादिकिञ्चनरहिता, ऋजु मायारहितं कृतमनुष्ठानं यस्याः सा ऋजुकृता, निष्क्रान्ता आमिषाद्विषयादेर्निरामिषा, परिग्रहारम्भावेव जीवदूषणाद्दोषौ ताभ्यां निवृत्ता परिग्रहारम्भदोषनिवृत्ता, सूत्रे चैवमुपन्यासः प्राकृतत्वात् ॥ ४१ ॥ तथा–

मूलम्—दवग्गिणा जहारण्णे, डज्झमाणेसु जंतुसु । अन्ने सत्ता पमोअंति, रागद्दोसवसंगया ॥ ४२ ॥

व्याख्या—दवाग्निना यथाऽरण्ये दह्यमानेषु जन्तुषु अन्ये सत्त्वा अविवेकिनः प्रमोदन्ते रागद्वेषवशङ्गताः ॥ ४२ ॥

मूलम्—एवमेव वयं मूढा, कामभोगेसु मुच्छिआ। डज्झमाणं न बुज्झामो, रागदोसग्गिणा जगं ॥४३॥

व्याख्या—एवमेव वयं मूढा मोहवशगाः कामभोगेषु मूर्च्छिताः दह्यमानं न बुध्यामहे रागद्वेषाग्निना जगत् प्राणि-

समूहं, यो हि सविवेको रागादिरहितश्च स्यात् स दावाग्निना दह्यमानानन्यसत्वान् दृष्ट्वा स्वरक्षणोपायपर एव स्यान्न तु मोदते, यस्तु मूर्खो रागादिमांश्च स आयतिमचिन्तयन्मोदते, ततो वयमपि भोगात्यागादज्ञानिन एवेति भावः ॥ ४३ ॥ ये त्वेवंविधा न स्युस्ते किं कुर्युरित्याह––

मूलम्––भोगे भुच्चा वमित्ता य, लहुभूयविहारिणो। आमोदमाणा गच्छंति, दिया कामकमा इव ४४

व्याख्या––भोगान् भुक्त्वा पुनरुत्तरकालं वान्त्वा च लघुर्वायुस्तद्भूताः सन्तो विहरन्तीत्येवं शीला लघुभूतविहारिणोऽप्रतिबद्धविहारिण इत्यर्थः, आमोदमानाः प्रमोदं यान्तस्तथाविधानुष्ठानेनेति शेषः, गच्छन्ति विवक्षितस्थानमिति शेषः, क इव ? भिन्नक्रमस्य इवशब्दस्येह योगात् द्विजा इव पक्षिण इव कामक्रमाः स्वेच्छाचारिणः, यथा हि द्विजा यत्र यत्र रोचते तत्र तत्र मोदमाना भ्राम्यन्ति, एवं मुनयोप्यभिष्वङ्गाभावाद्यत्र यत्र संयमनिर्वाहस्तत्र तत्र यान्तीति भावः ॥ ४४ ॥ पुनरर्थादिषु रागं निराकर्तुमाह––

मूलम्––इमे अ बद्धा फंदंति, मम हत्थज्जमागया। वयं च सत्ता कामेसु, भविस्सामो जहा इमे ॥४५॥

व्याख्या––इमे प्रत्यक्षाः शब्दादयो विषयाश्चोप्यर्थे भिन्नक्रमश्च, ततो बद्धा अपि नियंत्रिता अपि बहूपायै रक्षिता अपीत्यर्थः, स्पन्दन्ते इव स्पन्दन्ते अस्थितिधर्मतया कम्पन्ते, ये कीदृशा इत्याह–मम उपलक्षणत्वात्तव च हस्तं हे आर्य ! आगताः स्ववशा इत्यर्थः, वयं च वयं पुनः सक्ताः कामेष्वेवंविधेष्वपि तदहो मोहविलसितमेति भावः ! यतः एवं ततो भविष्यामो यथेमे पुरोहितादयः, अयं भावः–यथामीभिश्चञ्चलत्वं वीक्ष्यामी त्यक्तास्तथा वयमपि त्यक्षामः इति ॥ ४५ ॥ नन्वस्थिरा अपि कामाः सुखहेतवस्तत्किं त्यज्यन्ते ? इत्याह––

मूलम्––सामिसं कुललं दिस्स, वज्झमाणं निरामिसं। आमिसं सव्वमुज्झित्ता, विहरिस्सामो निरामिसा ४६

व्याख्या––सामिषं पिशितरूपामिषयुक्तं कुललं गृध्रं शकुनिकां वा दृष्ट्वा बाध्यमानं पीड्यमानं विहगान्तरैरिति गम्यते, निरामिषं च तमेव निर्भयं वीक्ष्येति शेषः, आमिषं धनधान्यादिसङ्गहेतुं सर्वमुज्झित्वा विहरिष्याम्यप्रतिबद्धविहारेण निरामिषा निःसङ्गा ॥ ४६ ॥ उक्तानुवादेनोपदेष्टुमाह–

मूलम्––गिद्धोवमे उ नच्चा णं, कामे संसारवड्ढणे। उरगो सुवण्णपासे वा, संकमाणो तणुं चरे ॥४७॥

व्याख्या––गृध्रोपमान् सामिषगृध्रसमान् , तुः पूर्त्तौ, ज्ञात्वा, णं वाक्यालंकारे, कामयन्ते शब्दादीन् वाञ्छन्तीति कामा विषयाभिलाषिणस्तान् संसारवर्द्धनान् , 'उरगो सुवण्णपासेवत्ति' उरग इव सुपर्णपार्श्वे गरुडाभ्यर्णे शङ्कमानो भयत्रस्तस्तनु स्तोकं यतनयेत्यर्थः चरेः क्रियासु प्रवर्त्तेथाः, यथा गरुडोपमैर्विषयैर्न बाध्यसे तथा यतस्वेति भावः ॥४७॥ ततश्च–

मूलम्––नागोव्व बंधणं छित्ता, अप्पणो वसइं वए। एअं पत्थं महारायं, इसुआरेत्ति मे सुयं ॥ ४८॥

व्याख्या––नाग इव बन्धनं छित्त्वा आत्मनो वसतिं व्रज, अयं भावः–यथा हस्ती बन्धनवरत्रां छित्त्वात्मनो वसति विन्ध्याटवी व्रजत्येवं त्वमपि कर्मबन्धनं छित्वा आत्मनः शुद्धजीवस्य वसतिमाश्रयं मुक्तिं व्रजेः, अनेन दीक्षायाः फलमुक्तं, एवमुपदिश्योपसंहरति। एतद्यन्मयोक्तं पथ्यं हितं महाराज ! इषुकार ! इत्येतन्मया श्रुतं साधुभ्यो न तु स्वधियैवोच्यत इति सूत्रद्वादशकार्थः ॥ ४८ ॥ एवं च तद्गिरा प्रतिबुद्धो नृपस्ततो यत्तौ द्वावपि चक्रतुस्तदाह–

मूलम्––चइत्ता विउलं रज्जं, कामभोगे अ दुच्चए। निव्विसया निरामिसा, निन्नेहा निप्परिग्गहा ॥४९॥

व्याख्या––त्यक्त्वा विपुलं राज्यं कामभोगांश्च दुस्त्यजान् निर्विषयौ विषयरहितावत एव निरामिषौ अभिष्वङ्गहेतुरहितौ, निःस्नेहौ निःप्रतिबन्धौ, निःपरिग्रहौ मूर्च्छारहितौ ॥ ४९ ॥

मूलम्––सम्मं धम्मं विआणित्ता, चिच्चा कामगुणे वरे। तवं पगिज्झ जहक्खायं, घोरं घोरपरक्कमा ५०

व्याख्या––सम्यग्धर्मं श्रुतचारित्रात्मकं विज्ञाय त्यक्त्वा कामगुणान् वरान् , पुनः कामगुणत्यागाभिधानमतिशयख्यापकं, तपोऽनशनादि प्रगृह्याङ्गीकृत्य यथाख्यातं यथा येन प्रकारेण जिनैराख्यातं कथितं घोरमतिदुष्करं, घोरः पराक्रमः कर्मारिजयं प्रति ययोस्तौ घोरपराक्रमौ प्रवव्रजतुरिति शेष इति सूत्रद्वयार्थः ॥ ५० ॥ सम्प्रति समस्ताध्ययनार्थोपसंहारमाह––

मूलम्––एवं ते कमसो बुद्धा, सव्वे धम्मपरायणा। जम्ममच्चुभओविग्गा, दुक्खस्संतगवेसिणो ॥५१॥

व्याख्या––एवममुना प्रकारेण तानि पूर्वोक्तानि षडपि क्रमशो यथोक्तक्रमेण बुद्धानि सर्वाणि धर्मपरायणानि जन्ममृत्युभयोद्विग्नानि दुःखस्यान्तगवेषकानि ॥ ५१ ॥

मूलम्---शासणे विगयमोहाणं, पुव्विं भावणभाविआ। अचिरेणेव कालेणं, दुक्खस्संतमुवागया॥५२॥

व्याख्या---शासने विगतमोहानामर्हतां पूर्वमन्यजन्मनि भावनया धर्माभ्यासरूपया भावितानि वासितानि भावनाभावितानि, अचिरेणैव कालेन स्वल्पकालेनैव दुःखस्यान्तं मोक्षमुपागतानि प्राप्तानि सर्वत्र प्राकृतत्वात् पुल्लिङ्गनिर्देश ॥ ५२ ॥ मन्दमतिस्मरणाय पुनरध्ययनार्थमुपसंहरन्नाह--

मूलम्---राया य सह देवीए, माहणो अ पुरोहिओ। माहणी दारगा चेव, सव्वे ते परिनिव्वुडत्ति बेमि॥५३॥

व्याख्या---राजा इषुकारः सह देव्या कमलावत्या, ब्राह्मणश्च पुरोहितो भृगुः, ब्राह्मणी यशा, दारकौ तत्पुत्रौ चैव पूर्त्तौ, सर्वाणि तानि परिनिर्वृतानि मुक्तिं गतानीति सूत्रार्थः ॥ ५३ ॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिशिष्यमहोपाध्यायश्रीमुनिविमलगणिभुजिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ चतुर्दशमध्ययनं सम्पूर्णम् ॥ १४ ॥

## ॥ अथ पञ्चदशमध्ययनम् ॥

॥ अर्हम् ॥ व्याख्यातं चतुर्दशमध्ययनं सम्प्रति सभिक्षुनामकं पञ्चदशमारभ्यते, अस्य चायं सम्बन्धः, इहानन्तराध्ययने निर्निदानतागुण उक्तः, स च मुख्यतया भिक्षोरेवेति तद्गुणा इहोच्यन्ते, इत्यनेन सम्बन्धेनायातस्यास्येदमादिसूत्रम्--

मूलम्---मोणं चरिस्सामि समेच्च धम्मं, सहिए उज्जुकडे निआणच्छिन्ने।
संथवं जहिज्ज अकामकामे, अण्णाएसी परिव्वए स भिक्खू ॥ १ ॥

व्याख्या--- मौनं श्रामण्यं चरिष्यामीत्यभिप्रायेणेति शेषः, समेत्य प्राप्य धर्मं श्रुतचारित्रभेदं, सहितो युक्तोऽन्यसाधुभिरिति गम्यं, न त्वेकाकी, एकाकिभावस्यागमे निषिद्धत्वात्, यदुक्तं--"इक्कस्स कओ धम्मो, सच्छंदगई मइप्पयारस्स ॥ किं वा करेइ इक्को, परिहरउ कहमकज्जं वा ? ॥ १ ॥" तथा ऋजुकृतोऽशठानुष्ठानः, 'निआणछिन्नेत्ति' छिन्नमपनीतं निदानं विषयाद्यभिष्वङ्गरूपं येन स छिन्ननिदानः, व्यत्ययस्त्विहोत्तरत्र च प्राकृतत्वात्, संस्तवं मात्रादिभिः परिचयं जह्यात्त्यजेत्, अकामकामः न कामाभिलाषी, अज्ञातस्तपस्वितादिगुणैरेषयते ग्रासादिकमित्येवंशीलोऽज्ञातैषी, परिव्रजेदनियतविहारेण विहरेत् 'स भिक्खुत्ति'य एवंविधः स भिक्षुरनेन सिंहतया निष्क्रम्य सिंहतयैव विहरणं भिक्षुतानिमित्तमिति सूचितमिति सूत्रार्थः ॥ १ ॥ सिंहतया विहारमेव विशेषत आह--

मूलम्---राओवरयं चरिज्ज लाढे, विरए वेअवि आयरक्खिए।
पण्णे अभिभूय सव्वदंसी, जे कम्हिवि न मुच्छिए स भिक्खू ॥ २ ॥

व्याख्या---'राओवरयंति' उपरतरागं यथा स्यात्तथा चरेद्विहरेत् 'लाढेत्ति' सदनुष्ठानतया प्रधानः, विरतोऽसंयमान्निवृत्तो, वेदविदागमवेदी 'आयरक्खिएत्ति' आत्मा रक्षितो दुर्गतेर्येन स आत्मरक्षितः, यद्वा आयाः सम्यक्त्वादिलाभा रक्षिता येन स आयरक्षितः, प्राज्ञो हेयोपादेयबुद्धिमान्, अभिभूय परीषहोपसर्गानिति शेषः, सर्वं प्राणिवर्गमात्मवत्पश्यतीति सर्वदर्शी, यः कस्मिंश्चित्सचित्तादिवस्तुनि न मूर्च्छितः स भिक्षुरिति सूत्रार्थः ॥ २ ॥ तथा--

मूलम्---अक्कोसवहं विइत्तु धीरे, मुणी चरे लाढे निच्चमायगुत्ते।
अव्वग्गमणे असंपहिट्ठे, जो कसिणं अहिआसए स भिक्खू ॥ ३ ॥

व्याख्या---आक्रोशश्च वधश्च आक्रोशवधं तद्विदित्वा स्वकृतकर्मफलमेतदिति मत्वा धीरोऽक्षोभ्यः मुनिश्चरेदप्रतिबद्धविहारेण 'लाढेत्ति' प्राग्वत्, नित्यं सदा आत्मा रक्षितोऽसंयमस्थानेभ्यो येन स तथा, अव्यग्रमसमञ्जसचिन्तोपरतं मनो यस्य स तथा, असम्प्रहृष्टः आक्रोशदानादिषु न सम्प्रहर्षवान्, अमून्याक्रोशवाक्यानि कर्मक्षयहेतुतया ममानन्दाय जायन्ते परमयं वराको मुनीनाशात्य कथं भविष्यतीत्यादिकमप्यजल्पन्नित्यर्थः, यः कृत्स्नं समस्तमाक्रोशवधमध्यास्ते सहते स भिक्षुरिति सूत्रार्थः ॥ ३ ॥ किञ्च--

मूलम्— पंतं सयणासणं भइत्ता, सीउण्हं विविहं च दंसमसगं ।
अव्वग्गमणे असंपहिट्ठे, जो कसिणं अहिआसए स भिक्खू ॥ ४ ॥

व्याख्या—प्रान्तमवमं शयनासनं उपलक्षणत्वाद्भोजनाच्छादनादि च भक्त्वा सेवित्वा शीतोष्णं विविधं च दंशमशकं प्राप्येति शेषः, सर्वत्रापि समाहारद्वंद्वः, शेषं प्राग्वदिति सूत्रार्थः ॥ ४ ॥ अन्यच्च—

मूलम्—णो सक्किअमिच्छई न पूअं, नो विअ वंदणगं कओ पसंसं ।
से संजए सुव्वए तवस्सी, सहिए आयगवेसए स भिक्खू ॥ ५ ॥

व्याख्या—नो नैव सत्कृतं सत्कारमभ्युत्थानानुगमनादिकमिच्छति,न पूजां वस्त्रादिसपर्यां, नो पि च नैव च वन्दनकं द्वादशावर्त्तादिकं, कुतः प्रशंसां निजगुणोत्कीर्त्तनरूपां ? नैवेच्छतीति भावः । स एवं विधः सम्यग् यतते सदनुष्ठानं प्रतीति संयतः,सुव्रतः शोभनव्रतस्तपस्वी प्रशस्ततपाः, सहितः सम्यग्ज्ञानक्रियाभ्यां, यद्वा सह हितेनायति पथ्येनानुष्ठानेन वर्त्तते इति सहितः, आत्मानं कर्ममलापगमाच्छुद्धं गवेषयतीत्यात्मगवेषको यः स भिक्षुरितिसूत्रार्थः ॥ ५ ॥ तथा—

मूलम्—जेण पुण जहाइ जीविअं, मोहं वा कसिणं निअच्छइ नरनारिं ।
पजहे सया तवस्सी न य कोऊहलं उवेइ स भिक्खू ॥ ६ ॥

व्याख्या— येन हेतुभूतेन पुनःशब्दोऽस्य सर्वथा संयमघातित्वविशेषद्योतको जहाति त्यजति जीवितं संयमजीवितं, मोहं वा मोहनीयं कषायनोकषायादिरूपं कृत्स्नं सकलं नियच्छति बध्नाति तदेवंविधं नरश्च नारी च नरनारि प्रजह्यात्त्यजेत्सदा, यस्तपस्वी, न च कुतूहलं अभुक्तभोगत्वे स्त्र्यादिविषयं, उपलक्षणात्वाद्भुक्तभोगत्वे स्मृतिं चोपैति स भिक्षुरिति सूत्रार्थः ॥ ६ ॥ अथ पिण्डविशुद्धिद्वारेण भिक्षुत्वमाह—

मूलम्—छिन्नं सरं भोममंतलिक्खं, सुविणं लक्खणदंडवत्थुविज्जं ।
अंगविआरं सरस्स विजयं, जो विज्जाहिं न जीवई स भिक्खू ॥ ७ ॥

व्याख्या—छेदनं छिन्नं वस्त्रदन्तकाष्ठादीनां तद्विषयशुभाशुभनिरूपिका विद्यापि छिन्नमित्युक्ता, एवं सर्वत्र । "देवेसु उत्तमो लाहो, माणुसेसु अ मज्झिमो ॥ आसुरेसु अ गेलन्नं, मरणं जाण रक्खसे ॥ १ ॥" इत्यादि छिन्नं । 'सरंति' स्वरस्वरूपाभिधानं "सज्जं रवइ मयूरो" इत्यादिकं । "सज्जेण लहइ वित्तिं, कयं च न विणस्सइ ॥ गावो पुत्ता य मित्ता य, नारीणं होति वल्लहो ॥१॥" इत्यादिकं च । तथा भूमौ भवं भौमं भूकम्पादिलक्षणं, "शब्देन महता भूमि–र्यदा रसति कम्पते ॥ सेनापतिरमात्यश्च, राजा राष्ट्रं च पीड्यते ॥ १ ॥" इत्यादि । अन्तरिक्षमाकाशं तत्र भवमान्तरिक्षं गन्धर्वनगरादिकं, यथा–"कपिलं सस्य घाताय, माञ्जिष्ठं हरणं गवाम् ॥ अव्यक्तवर्णं कुरुते, बलक्षोभं न संशयः ॥१॥ गन्धर्वनगरं स्निग्धं, सप्राकारं सतोरणम् ॥ सौम्यादिशं समाश्रित्य, राज्ञस्तद्विजयङ्करम् ॥ २ ॥" इत्यादि । स्वप्नं स्वप्नगतशुभाशुभकथनं, यथा–"गायने रोदनं विद्या–न्नर्तने वधबन्धनम् ॥ हसने शोचनं ब्रूया–त्पठने कलहं तथा ॥१॥" इत्यादि । तथा लक्षणं स्त्रीपुरुषादीनां, यथा–"चक्खुसिणेहे सुभगो, दंतसिणेहे अ भोअणं मिट्ठं ॥ तयनेहेण य सोक्खं, नहनेहे होति परमधणं ॥ १ ॥" इत्यादि । तथा दण्डो यष्टिस्तत्स्वरूपकथनम्, "एगपव्वं पसंसंति, दुपव्वा कलहकारिआ" इत्यादि । तथा वास्तुविद्यां प्रासादादिलक्षणाभिधायकं शास्त्रं, तथा अङ्गविकारः शिरःस्फुरणादिना शुभाशुभस्वरूपकथनम्, "सिरफुरणे किर रज्जं, पिअमेलो होइ बाहुफुरणंमि" इत्यादि । स्वरस्य दुर्गाशिवादिरुतरूपस्य विजयः शुभाशुभनिरूपणाभ्यासः स्वरविजयः, "गतिस्तारा स्वरो वामो, दुर्गायाः शुभदः स्मृतः ॥ विपरीतः प्रवेशे तु, स एवाभीष्टदायकः ॥ १ ॥" इत्यादि । ततो य एताभिर्विद्याभिर्न जीवति, नैता एव जीविकाः प्रकल्प्यप्राणान् धारयति स भिक्षुरिति सूत्रार्थः ॥ ७ ॥ तथा—

मूलम्—मंतं मूलं विविहं विज्जचिंतं, वमणविरेअणधूमनित्तसिणाणं ।
आउरे सरणं तिगिच्छत्तं च, तं परिण्णाय परिव्वए स भिक्खू ॥ ८ ॥

व्याख्या—मंत्रं ॐकारादिस्वाहापर्यन्तं, 'मूलंति' सहदेव्यादिमूलिकाकल्पशास्त्रं, विविधां नानाप्रकारां वैद्यचिन्तां वैद्यसम्बन्धिनीं पथ्यौषधादिव्यापारात्मिकां चिन्तां "वर्जयेद् द्विदलं शूली, कुष्ठी मांसं ज्वरी घृतम् ॥ नवमन्त्रमतीसारी, नेत्ररोगी च मैथुनम् ॥ १ ॥" इत्यादिकां । वमनमुद्गिरणं, विरेचनं कोष्ठशुद्धिरूपं, धूमं मनःशिलादिसम्ब-

ध्वनं, 'नेत्तत्ति' नेत्रशब्देनात्र नेत्रसंस्कारकं समीराञ्जनादि परिगृह्यते, स्नानमपत्याद्यर्थं मंत्रौषधसंस्कृतजलैरभिषेकः, वमनादीनां स्नानान्तानां समाहारद्वंद्वः, 'आउरे सरणंति' सुपूव्यत्ययादातुरस्य सतः स्मरणं, हा तात ! हा मातरित्यादिरूपं, चिकित्सितमात्मनो रोगप्रतिकाररूपं, तदिति सर्वं पूर्वोक्तं 'परिण्णायत्ति' ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया च प्रत्याख्याय परिव्रजेत् संयमाध्वनि गच्छेद्यः स भिक्षुरिति सूत्रार्थः ॥ ८ ॥ तथा—

मूलम्—खत्तियगणउग्गरायपुत्ता, माहण भोइ अ विविहा य सिप्पिणो ।
नो तेसिं वयइ सलोगपूअं, तं परिण्णाय परिव्वए स भिक्खू ॥ ९ ॥

व्याख्या—क्षत्रिया राजानः, गणा मल्लादिसमूहाः, उग्रा आरक्षकादयः, राजपुत्रा नृपसुतादयः, एतेषां द्वंद्वः । माहना ब्राह्मणाः, भोगिका विशिष्टनेपथ्यादिभोगवन्तो नृपामात्यादयः, उभयत्र सुपो लुक्, विविधाश्च शिल्पिनः स्थपत्यादयः, ये भवन्तीति शेषः, नो तेषां वदति श्लोकपूजे, तत्र श्लोको यथा शोभना एते, पूजा यथैतान् पूजयतेति, उभयत्रापि पापानुमत्यादिदोषसम्भवात् । किन्तु तत् श्लोकपूजादिकं द्विविधयापि परिज्ञया परिज्ञाय परिव्रजेद्यः स भिक्षुरिति सूत्रार्थः ॥ ९ ॥ किञ्च—

मूलम्—गिहिणो जे पव्वइएण दिट्ठा, अपव्वइएण व संथुआ हविज्जा ।
तेसिं इहलोइअफलट्ठा, जो संथवं न करेइ स भिक्खू ॥ १० ॥

व्याख्या—गृहिणो ये प्रव्रजितेन दृष्टा उपलक्षणत्वात्परिचिताश्च, अप्रव्रजितेन वा गृहस्थावस्थेन वा सह संस्तुताः परिचिता भवेयुः 'तेसिंति' सुब्व्यत्ययात्तैः सह ऐहलौकिकफलार्थं वस्त्रादिलाभनिमित्तं यः संस्तवं परिचयं न करोति स भिक्षुरिति सूत्रार्थः ॥ १० ॥ तथा—

मूलम्—सयणासणपाणभोअणं, विविहं खाइमसाइमं परेसिं ।
अदए पडिसेहिए निअंठे, जे तत्थ न पदूसई स भिक्खू ॥ ११ ॥

व्याख्या—शयनासनपानभोजनं विविधं खादिमस्वादिमं 'परेसिंति' परैर्गृहस्थैः 'अदएत्ति' अददद्भिः प्रतिषिद्धः कश्चित्कारणान्तरे याचमानोपि निराकृतो निर्ग्रन्थो बाह्याभ्यन्तरग्रन्थरहितो यस्तत्रादाने न प्रदुष्यति न प्रद्वेषं याति, त्वमेव मे घृतपूरान् दास्यसीतिवाचकक्षपकवत् ! स भिक्षुरिति सूत्रार्थः ॥ ११ ॥

मूलम्—जं किंचि आहारपाणं, विविहं खाइमसाइमं परेसिं लद्धुं ।
जो तं तिविहेण नाणुकंपे, मणवयकायसुसंवुडे स भिक्खू ॥ १२ ॥

व्याख्या—यत्किञ्चिदल्पमप्याहारपानं अशनपानीयं विविधं खादिमस्वादिमं 'परेसिंति' परेभ्यो गृहस्थेभ्यो लब्ध्वा प्राप्य यः साधुः 'तंति' सुपूव्यत्ययात्तेन आहारादिना त्रिविधेन मनोवाक्कायरूपप्रकारत्रयेण नानुकम्पते बालग्लानादीन्नोपकुरुते न स भिक्षुरिति शेषः । यस्तु सुसंवृतमनोवाक्कायः सन्, तेन बालादीननुकम्पते इति गम्यते, स भिक्षुरिति

वृद्धव्याख्या। यथादृष्टसूत्रव्याख्याने त्वेवमप्यर्थः सम्भवति, यत्किञ्चिदाहारादिकं पूर्वोक्तं परेभ्यो गृहस्थेभ्यो लब्ध्वा यः 'तंति' वचनव्यत्ययात्तान् दातॄन् त्रिविधेन नानुकम्पते, मुधाजीवित्वान्नोपकर्त्तुमिच्छति स मनोवाक्कायसुसंवृतो भिक्षुरिति सूत्रार्थः ॥ १२ ॥ तथा—

मूलम्—आयामगं चेव जवोदणं च, सीअं सोवीर जवोदगं च ।
नो हीलए पिंडं नीरसं तु, पंतकुलाणि परिव्वए स भिक्खू ॥ १३ ॥

व्याख्या—आयामकं अवश्रावणं, 'चेवत्ति' समुच्चये, यवौदनं च यवभक्तं, शीतं शीतलभक्तं, सौवीरं च काञ्जिकं, यवोदकं च यवधावनं सौवीरयवोदकं, तच नो हीलयेत्, धिगिदं किमनेनानिष्टेनेति न निन्देत्, पिण्डं आयामकादिकमेव नीरसमपि तुशब्दस्याप्यर्थत्वात् अत एव प्रान्तकुलानि तुच्छाशयकुलानि दरिद्रगृहाणि वा यः परिव्रजेत् स भिक्षुरिति सूत्रार्थः ॥ १३ ॥ किञ्च—

मूलम्—सद्दा विविहा भवंति लोए, दिव्वा माणुस्सा तहा तिरिच्छा ।
भीमा भयभेरवा उराला, जो सोच्चा न विहिज्जइ स भिक्खू ॥ १४ ॥

व्याख्या—शब्दा विविधाः परीक्षाप्रद्वेषादिना क्रियमाणतयानेकप्रकारा भवन्ति लोके. दिव्या देवसम्बन्धिनो मानुष्यका मनुष्यसम्बन्धिनस्तथा तैरश्चा तिर्यक्सम्बन्धिनः, भीमा रौद्राः, भयेन भैरवा महाभयोत्पादका भयभैरवाः, उदारा महान्तः, यस्तान् शब्दान् श्रुत्वा न बिभेति धर्मध्यानान्न चलति स भिक्षुरिति सूत्रार्थः ॥ १४ ॥ इत्येतावता सिंहविहारिताया निमित्तमुक्तमथ सकलधर्ममूलं सम्यक्त्वस्थैर्यमाह—

मूलम्—वायं विविहं समिच्च लोए, सहिए खेदाणुगए अ कोविअप्पा ।
पण्णे अभिभूअ सव्वदंसी, उवसंते अविहेडए स भिक्खू ॥ १५ ॥

व्याख्या—वादं विविधं "मुण्डस्य भवति धर्म—स्तथा जटाभिः सवाससां धर्मः ॥ गृहवासेपि च धर्मो, वनेपि च सतां भवति धर्मः ॥ १ ॥" इत्यादिकदर्शनान्तराभिप्रायरूपं समेत्य ज्ञात्वा लोके, सहितः[१] प्राग्वत्, स्वस्मै हितः स्वहित इति वा, खेदयति कर्मानेनेति खेदः संयमस्तेनानुगतः खेदानुगतः, चः पूरणे, कोविदो लब्धसमयरहस्य आत्मा यस्य स कोविदात्मा, 'पण्णे अभिभूअ सव्वदंसीति'[२] प्राग्वत्, उपशान्तो निष्कषायः, अविहेठको न कस्यापि बाधको यः स भिक्षुरिति सूत्रार्थः ॥ १५ ॥ तथा—

---

१ सहित ज्ञानक्रियाभ्याम्, यद्वा सह हितेन आयतिपथ्येन अनुष्ठानेन वर्त्तते इति सहित. । २ प्राज्ञो हेयोपादेयबुद्धिमान्, अभिभूय परीषहोपसर्गान्, सर्वं प्राणिवर्गं आत्मवत् पश्यतीति सर्वदर्शी ॥

मूलम्—असिप्पजीवि अगिहे अमित्ते, जिइंदिए सव्वओ विप्पमुक्के ।
अणुक्कसाई लहुअप्पभक्खी, चिच्चा गिहं एगचरे स भिक्खू ॥ १६ ॥

व्याख्या—अशिल्पजीवी चित्रादिविज्ञानजीविकारहितः, अगृहो गृहरहितः, 'अमित्तेत्ति' उपलक्षणत्वादमित्रशत्रुः, जितेन्द्रियस्तथा सर्वतो बाह्यादाभ्यन्तराच, ग्रन्थादिति गम्यते, विप्रमुक्तः । तथा अणवः स्वल्पाः कषाया अस्येति अणुकषायी, लघूनि निःसाराणि निष्पावादीनि अल्पानि च स्तोकानि भक्षितुं शीलमस्येति लघ्वल्पभक्षी । त्यक्त्वा गृहं द्रव्यभावभेदभिन्नं, एको रागद्वेषरहितश्चरतीत्येकचरो यः स भिक्षुः । इति ब्रवीमीति प्राग्वदिति सूत्रार्थः ॥१६॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिशिष्यमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ पञ्चदशमध्ययनं सम्पूर्णम् ॥ १५ ॥

## ॥ अथ षोडशमध्ययनम् ॥

॥ ॐ ॥ व्याख्यातं पञ्चदशमध्ययनमथषोडशमारभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तराध्ययने भिक्षुगुणा उक्तास्ते च तत्वतो ब्रह्मचर्यस्थितस्य भवन्ति, तदपि ब्रह्मगुप्तिज्ञानेनेति ता इहाभिधीयन्ते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्येदमादिसूत्रम्—

मूलम्—सुअं मे आउसंतेणं भगवया एवमक्खायं, इह खलु थेरेहिं भगवंतेहिं दस बंभचेरसमाहिट्ठाणा पण्णत्ता, जे भिक्खू सोच्चा निसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंभयारी सया अप्पमत्ते विहरिज्जा ॥ १ ॥

व्याख्या—सुधर्मा स्वामी जम्बूनामानमाह—श्रुतं मया हे आयुष्मन्! तेन भगवता ज्ञातकुलजलधिचन्द्रेण श्रीवर्द्धमानजिनेन्द्रेण एवमाख्यातं कथितं, कथमित्याह—सोपस्कारत्वात्सूत्रस्यात्र यथेति गम्यते, ततो यथेह प्रवचने खलु निश्चये स्थविरैर्गणधरादिभिर्भगवद्भिर्दश ब्रह्मचर्यसमाधिस्थानानि प्रज्ञप्तानि, अयं भावः—नैषां स्थविराणामियं स्वमनीषिका किन्तु भगवताप्येतदेवमेवाख्यातं मया श्रुतं, ततोऽत्र माऽनास्थां कृथाः। ब्रह्मचर्यसमाधिस्थानान्येव विशिनष्टि, 'ये' इति यानि भिक्षुः श्रुत्वाऽऽकर्ण्य निशम्यार्थतोवधार्य 'संजमबहुलेत्ति' प्राकृतत्वाद्बहुलः प्रचुर उत्तरोत्तरस्थानावाप्त्या संयमोऽस्येति बहुलसंयमः, अत एव बहुलः संवर आश्रवद्वारनिरोधरूपोऽस्येति बहुलसंवरः, अत एव बहुलसमाधिः तत्र समाधिर्मनःस्वास्थ्यं, गुप्तो मनोवाक्कायैस्तत एव च गुप्तेन्द्रियः, तत एव च गुप्तं नवगुप्तिसेवनाद् ब्रह्मेति ब्रह्मचर्यं चरितुं शीलमस्येति गुप्तब्रह्मचारी, सदा अप्रमत्तो विहरेदिति सूत्रार्थः ॥ १ ॥

मूलम्—कयरे खलु ते थेरेहिं भगवंतेहिं दस बंभचेरसमाहिट्ठाणा पण्णत्ता? जे भिक्खू सोच्चा निसम्म संजम बहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंभयारी सया अप्पमत्ते विहरिज्जा ॥२॥ इमे खलु ते थेरेहिं भगवंतेहिं दस बंभचेरसमाहिट्ठाणा पण्णत्ता, जे भिक्खू सोच्चा निसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंभयारी सया अप्पमत्ते विहरिज्जा ॥ ३ ॥

व्याख्या—इमे प्रश्ननिर्वचनसूत्रे प्राग्वत्, तान्येवाह—

मूलम्—तंजहा। विवित्ताइं सयणासणाइं सेविज्जा से निग्गंथे, नो इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवित्ता हवइ से निग्गंथे, तं कहमितिचे आयरिआह—निग्गंथस्स खलु इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेअं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालिअं वा रोगायंकं हविज्जा, केवलिपण्णत्ताओ वा धम्माओ भंसिज्जा, तम्हा नो इत्थिपसुपंडगसंसत्ताइं सयणासणाइं सेवित्ता हवइ से निग्गंथे ॥ ४ ॥

व्याख्या—तद्यथेत्युपन्यासे विविक्तानि स्त्रीपशुपण्डकैरनाकीर्णानि शयनासनानि उपलक्षणत्वात् स्थानानि च सेवेत यः स निर्ग्रन्थो भवतीति शेषः। इत्थमन्वयेनोक्त्वा अल्पमतिविनेयानुग्रहार्थमसुमेवार्थं व्यतिरेकत आह—नैव स्त्रीपशुपण्डकसंसक्तानि शयनासनानि सेविता उपभोक्ता भवति, तदित्यनन्तरोक्तं कथं? कुतो हेतोरिति चेदेवं यदि मन्यसे आचार्य आह—अत्रोच्यते, निर्ग्रन्थस्य खलु निश्चितं स्त्रीपशुपण्डकसंसक्तानि शयनासनानि सेवमानस्य 'बंभयारिस्सत्ति' अपेर्गम्यत्वाद्ब्रह्मचारिणोपि सतो ब्रह्मचर्ये शङ्का वा इहान्येषामिति गम्यते, ततश्च किमयमेवंविधशयनासनसेवी ब्रह्मचारी? उत नेति शङ्काऽन्येषां स्यात्। अथवा ब्रह्मचारिण एव शङ्का स्त्र्यादिदर्शनादुत्पन्नगाढानुरागस्य विस्मृतसकलाप्तोपदेशस्य "सत्यं वच्मि हितं वच्मि, सारं वच्मि पुनः पुनः ॥ अस्मिन्नसारे संसारे, सारं सारङ्गलोचना! ॥ १ ॥" इत्यादि रागातुरवचः परिभावयतो मिथ्यात्वोदयात्कदाचित्तदासेवने यो दोषस्तीर्थकरैरुक्तः स नैव भवतीत्येवं संशय उत्पद्यते। कांक्षा वा स्त्र्यादिवाञ्छारूपा "प्रियादर्शनमेवास्तु, किमन्यैर्दर्शनान्तरैः ॥ निर्वाणं प्राप्यते येन, सरागेणापि चेतसा? ॥ १ ॥ इत्यादिवादिदर्शनाभिलापरूपा वा। विचिकित्सा किमेतावतः कष्टानुष्ठानस्य फलं भावि न वा? तद्वरमेतदासेवनमेवास्तु! इत्येवंरूपा समुत्पद्येत। भेदं वा विनाशं चारित्रस्येति शेषः, लभेत।

उन्मादं वा कामग्रहात्मकं प्राप्नुयात्, योषिद्विषयाभिलाषविशेषात्मनो विप्लवसम्भवात्। दीर्घकालिकं वा दीर्घकालभावि रोगश्च दाहज्वरादिः आतङ्कश्चाशुघाती शूलादिः रोगातंकं भवेत्, सम्भवति हि रमणीयरमणीरमणाभिलाषातिरेकादरोचकित्वं, ततश्च दाहज्वरादीति। केवलिप्रज्ञप्ताद्वा धर्मात् श्रुतचारित्ररूपात्समस्ताद्भ्रंश्येत्, कस्यचित् क्लिष्टकर्मोदयाद्धर्मभ्रंशस्यापि सम्भवात्, यत एवं तस्मादित्यादि निगमनवाक्यं सुगममिति सूत्रार्थः ॥ ४ ॥ १ ॥ उक्तं समाधिस्थानं प्रथमं, द्वितीयमाह–

मूलम्—णो इत्थीणं कहं कहित्ता हवइ से निग्गंथे, तं कहमितिचे ? आयरियाह–निग्गंथस्स खलु इत्थीणं कहं कहेमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेअं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालिअं वा रोगायंकं हविज्जा, केवलिपण्णत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु निग्गंथे नो इत्थीणं कहं कहिज्जा ॥ ५ ॥

व्याख्या—नो नैव स्त्रीणां एकाकिनीनामिति गम्यते, कथां वाक्यप्रबन्धरूपां, यद्वा स्त्रीणां सम्बन्धिनी कथा रूपनेपथ्यचातुर्यादिविषया तां, कथयिता भवति यः स निर्ग्रन्थो नतवन्य इति भावः। तत्कथमित्यादि प्राग्वदिति सूत्रार्थः ॥ २ ॥ ५ ॥ तृतीयमाह–

मूलम्—णो इत्थीहिं सद्धिं सन्निसिज्जागए विहरित्ता हवइ से निग्गंथे, तं कहमितिचे ? आयरिआह–निग्गंथस्स खलु इत्थीहिं सद्धिं सन्निसिज्जागयस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेअं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपण्णत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे इत्थीहिं सद्धिं सन्निसिज्जागए विहरिज्जा ॥ ६ ॥

व्याख्या—नो स्त्रीभिः सार्धं संनिषद्या आसनं तद्गतः सन् विहर्त्ता अवस्थाता भवति, कोऽर्थः ? स्त्रीभिः सममेकासने नोपविशेत्, उत्थितास्वपि तासु मुहूर्तं यावत्तत्र नोपवेष्टव्यमिति सम्प्रदायो, य एवंविधः स निर्ग्रन्थः, शेषं प्राग्वदिति सूत्रार्थः ॥ ३ ॥ ६ ॥ चतुर्थमाह–

मूलम्—णो इत्थीणं इंदिआइं मणोहराइं मणोरमाइं आलोएत्ता निज्झाएत्ता भवति से निग्गंथे, तं कहमितिचे ? आयरिआह–निग्गंथस्स खलु इत्थीणं इंदिआइं मणोहराइं मणोरमाइं आलोएमाणस्स निज्झाएमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा जाव केवलिपण्णत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे इत्थीणं इंदिआइं जाव–निज्झाएज्जा ॥ ७ ॥

व्याख्या—नो स्त्रीणामिन्द्रियाणि नयनादीनि, मनश्चित्तं हरन्ति दृष्टमात्राणि आक्षिपन्तीति मनोहराणि, मनो रमयन्ति दर्शनानन्तरमनुचिन्त्यमानान्याह्लादयन्तीति मनोरमाणि, आलोकिता ईषद्द्रष्टा, निर्ध्याता गाढं निरीक्षिता, यद्वा निध्याता दर्शनानन्तरमहो ! नेत्रयोः सलवणत्वं, नाशायाः सरलत्वमित्यादि चिन्तयिता भवति यः स निर्ग्रन्थः, शेषं प्राग्वदिति सूत्रार्थः ॥ ४ ॥ ७ ॥ पञ्चममाह–

मूलम्—नो निग्गंथे इत्थीणं कुड्डुंतरंसि वा, दूसंतरंसि वा, भित्तिंतरंसि वा, कुइअसद्दं वा, रुइअसद्दं वा, गीअसद्दं वा, हसिअसद्दं वा, थणिअसद्दं वा, कंदिअसद्दं वा, विलविअसद्दं वा, सुणित्ता हवइ से निग्गंथे। तं कहमितिचे ? आयरिआह–निग्गंथस्स खलु इत्थीणं कुड्डुंतरंसि वा जाव–विलविअसद्दं वा सुणमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा जाव–केवलिपण्णत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु निग्गंथे नो इत्थीणं कुड्डुंतरंसि वा जाव–सुणमाणो विहरेज्जा ॥ ८ ॥

व्याख्या—नो निर्ग्रन्थः स्त्रीणां कुड्यं लेष्टुकादिरचितं तेनान्तरं व्यवधानं कुड्यान्तरं तस्मिन्वा, दूष्यं वस्त्रं यवनिकादिरूपं तदन्तरे वा, भित्तिः पक्वेष्टकादिरचिता तदन्तरे वा, स्थित्वेति शेषः। कूजितशब्दं वा रतसमये कोकिलादिपक्षिभाषारूपं, रुदितशब्दं वा रतिकलहादिषु, गीतशब्दं वा पञ्चमादिरूपं, हसितशब्दं वा कहकहादिकं, स्तनित-

शब्दं वा रतिसमयकृतं, क्रन्दितशब्दं वा प्रोषितभर्तृकादिकृताक्रन्दरूपं, विलपितशब्दं वा विलापरूपं, श्रोता भवति य स निर्ग्रन्थः, शेषं प्राग्वदिति सूत्रार्थः ॥ ५ ॥ ८ ॥ षष्ठमाह–

मूलम्—नो निग्गंथे पुव्वरयं पुव्वकीलिअं अणुसरित्ता भवइ, तं कहमितिचे ? आयरिआह–निग्गंथस्स खलु इत्थीणं पुव्वरयं पुव्वकीलिअं अणुसरेमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा जाव–धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे इत्थीणं पुव्वरयं पुव्वकीलिअं अणुसरेज्जा ॥ ९ ॥

व्याख्या—नो निर्ग्रन्थः पूर्वरतं गृहस्थावस्थानुभूतसम्भोगं, पूर्वक्रीडितं पूर्वकालभावि स्त्रीभिः सह द्यूतादिक्रीडारूपं, अनुसर्त्ता अनुचिन्तयिता भवति, शेषं प्राग्वदिति सूत्रार्थः ॥ ६ ॥ ९ ॥ सप्तममाह–

मूलम्—णो पणिअं आहारमाहारित्ता हवइ से निग्गंथे, तं कहमितिचे ? आयरिआह–निग्गंथस्स खलु पणिअं पाणभोअणं आहारमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा जावकेवलिपण्णत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे पणीअं आहारमाहरेज्जा॥ १० ॥

व्याख्या—नो प्रणीतं गलत्स्नेहविन्दुकमुपलक्षणत्वादन्यमपि अत्यन्तधातूद्रेककारकमाहारमाहारयिता भवति यः स निर्ग्रन्थः, शेषं प्राग्वदिति सूत्रार्थः ॥ ७ ॥ १० ॥ अष्टममाह–

शब्दं वा रतिसमयकृतं, क्रन्दितशब्दं वा प्रोषितभर्तृकादिकृताक्रन्दरूपं, विलपितशब्दं वा विलापरूपं, श्रोता भवति य स निर्ग्रन्थः, शेषं प्राग्वदिति सूत्रार्थः ॥ ५ ॥ ८ ॥ षष्ठमाह–

मूलम्—नो निग्गंथे पुव्वरयं पुव्वकीलिअं अणुसरित्ता भवइ, तं कहमितिचे ? आयरिआह–निग्गंथस्स खलु इत्थीणं पुव्वरयं पुव्वकीलिअं अणुसरेमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा जाव–धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे इत्थीणं पुव्वरयं पुव्वकीलिअं अणुसरेज्जा ॥ ९ ॥

व्याख्या—नो निर्ग्रन्थः पूर्वरतं गृहस्थावस्थानुभूतसम्भोगं, पूर्वक्रीडितं पूर्वकालभावि स्त्रीभिः सह द्यूतादिक्रीडारूपं, अनुसर्त्ता अनुचिन्तयिता भवति, शेषं प्राग्वदिति सूत्रार्थः ॥ ६ ॥ ९ ॥ सप्तममाह–

मूलम्—णो पणिअं आहारमाहारित्ता हवइ से निग्गंथे, तं कहमितिचे ? आयरिआह–निग्गंथस्स खलु पणिअं पाणभोअणं आहारमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा जावकेवलिपण्णत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे पणीअं आहारमाहरेज्जा॥ १० ॥

व्याख्या—नो प्रणीतं गलत्स्नेहविन्दुकमुपलक्षणत्वादन्यमपि अत्यन्तधातूद्रेककारकमाहारमाहारयिता भवति यः स निर्ग्रन्थः, शेषं प्राग्वदिति सूत्रार्थः ॥ ७ ॥ १० ॥ अष्टममाह–

मूलम्—नो सद्दरूवरसगंधफासाणुवाई हवइ से निग्गंथे, तं कहमितिचे ? आयरिआह–निग्गंथस्स खलु सद्दरूवरसगंधफासाणुवाइस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पजिज्जा, भेअं वा लभेज्जा, उम्मादं वा पाउणिज्जा, दीहकालिअं वा रोगायंकं हविज्जा, केवलिपण्णत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे सद्दरूवरसगंधफासाणुवाई हवइ से निग्गंथे, दसमे बंभचेरसमाहिट्ठाणे हवइ ॥ १३ ॥

व्याख्या—नो नैव शब्दरूपरसगन्धस्पर्शानभिष्वङ्गहेतूननुपतति अनुयातीत्येवंशीलः शब्दरूपरसगन्धस्पर्शानुपाती भवति यः स निर्ग्रन्थः, तत्कथमितिचेदित्यादि प्राग्वत्, दशमं ब्रह्मचर्यसमाधिस्थानं भवतीनि निगमनमिति सूत्रार्थः ॥ १० ॥ १३ ॥

मूलम्—भवंति इत्थसिलोगा तंजहा–

व्याख्या—भवन्ति विद्यन्ते अत्र पूर्वोक्तार्थे श्लोकाः पद्यरूपास्तद्यथा—

मूलम्—जं विवित्तमणाइण्णं, रहिअं थीजणेण य । बंभचेरस्स रक्खट्ठा, आलयं तु निसेवए ॥ १ ॥

व्याख्या—'जंति' प्राकृतत्वात् यो विविक्तो रहस्यभूतस्तत्रैव वास्तव्यस्याद्यभावादनाकीर्णस्तत्तत्प्रयोजनागतस्त्र्या·

धनाकुलः, रहितो अकालचारिणा वन्दनश्रवणादिनिमित्तागतेन स्त्रीजनेन चशब्दात्पण्डकादिभिश्च, कालाकालचारित्वविभागस्तु श्रमणीराश्रित्यायं—"अट्ठमी पक्खिए मोत्तुं, वायणाकालमेव य ॥ सेसकालमयंतीओ, नेआओ अकालचारीओ ॥ १ ॥ त्ति" ब्रह्मचर्यस्य रक्षार्थं रक्षणार्थं आलयं तमिति शेषः, तुः पूर्त्तौ, निषेवते ॥ १ ॥

**मूलम्—मणपल्हायजणणी, कामरागविवड्ढणी । बंभचेररओ भिक्खू , थीकहं तु विवज्जए ॥ २ ॥**

व्याख्या—मनः प्रह्लादजननीं कामरागस्य विषयाभिष्वङ्गस्य विवर्द्धनीं कामरागविवर्द्धनीं ब्रह्मचर्यरतो भिक्षुः स्त्रीकथां तु विवर्जयेत् ॥ २ ॥

**मूलम्—समं च संथवं थीहिं, संकहं च अभिक्खणं । बंभचेररओ भिक्खू , निच्चसो परिवज्जए ॥३॥**

व्याख्या—सम च सह संस्तवं परिचयं स्त्रीभिर्निपद्याप्रस्तावादेकासनभोगेनेति गम्यते, सङ्कथां च ताभिरेव सह सततभाषणरूपां, अभीक्ष्णं वारंवारं 'निच्चसोत्ति' नित्यं शेषं स्पष्टम् ॥ ३ ॥

**मूलम्—अंगपच्चंगसंठाणं, चारुल्लविअपेहिअं । बंभचेररओ थीणं, चक्खुगिज्झं विवज्जए ॥ ४ ॥**

व्याख्या—अङ्गानां शिरः प्रभृतीनां प्रत्यङ्गानां च कुचकक्षादीनां संस्थानमाकारं, चारु पेशलं उल्लपितं मन्मनभाषितादि, प्रेक्षितं कटाक्षादि, ब्रह्मचर्यरतः स्त्रीणां सम्बन्धि चक्षुर्ग्राह्यं सद्विवर्जयेत् । अयं भावः—चक्षुषि सति रूपग्रहणमवश्यम्भावि परं तद्दर्शने तत्त्याग एव कार्यो न तु रागवशात्पुनः पुनस्तदेव वीक्षितव्यं । यदुक्तं—"अशक्यं रूपमद्रष्टुं, चक्षुर्गोचरमागतम् ॥ रागद्वेषौ तु यौ तत्र, तौ बुधः परिवर्जयेत् ॥ १ ॥ इति ॥ ४ ॥

**मूलम्—कुइअं रुइअं गीअं, हसिअं थणिअकंदिअं । बंभचेररओ थीणं, सोअगिज्झं विवज्जए ॥ ५ ॥**

व्याख्या—कूजितादि प्राग् व्याख्यातं, कुड्यान्तरादौ जायमानं श्रोत्रग्राह्यं सत्तत्र मनसोऽकरणेन विवर्जयेत् शेषं स्पष्टम् ॥ ५ ॥

**मूलम्—हासं किड्डं रइं दप्पं, सहसावत्तासिआणि अ । बंभचेररओ थीणं, नाणुचिंते कयाइवि ॥ ६ ॥**

व्याख्या—हास्यं प्रतीतं, क्रीडां द्यूतरमणादिरूपां, रतिं कान्ताङ्गसङ्गजनितां प्रीतिं, दर्पं मानिनीमानदलनोत्थं गर्वं, सहसाऽपत्रासितानि च पराङ्मुखदयितादेः सपदि त्रासोत्पादकान्यक्षिस्थगनादीनि प्राकृतानीति शेषः, शेषं व्यक्तं ६

**मूलम्—पणिअं भत्तपाणं च, खिप्पं मयविवड्ढणं । बंभचेररओ भिक्खू , निच्चसो परिजए ॥ ७ ॥**

व्याख्या—स्पष्टं, नवरं—मदः कामोद्रेकः ॥ ७ ॥

**मूलम्—धम्मलद्धं मिअं काले, जतत्थं पणिहाणवं । नाइमत्तं तु भुंजिज्जा, बंभचेररओ सया ॥ ८ ॥**

व्याख्या—धर्मेण हेतुना न तु कुटिलादिकरणेन लब्धं धर्मलब्धं, मितं "अद्धमसणस्स सवंजणस्स कुज्जा दवस्स दो भाए ॥ वाऊ परिआरणट्ठा छब्भागं ऊणगं कुज्जा ॥ १ ॥" इत्यागमोक्तमानान्वितमाहारमिति शेषः, काले प्रस्तावे, यात्रार्थं संयमनिर्वाहार्थं न तु रूपाद्यर्थं, प्रणिधानवान् मनःस्वास्थ्योपेतो न तु रागद्वेषवशगो भुञ्जीतेति योगः । तु शब्दस्योत्तरस्येह सम्बन्धान्न तु न पुनरतिमात्रं मात्रातिक्रान्तं भुञ्जीत ब्रह्मचर्यरतः सदा, कदाचित्तु कारणादतिमात्राहारोप्यदुष्टः ॥ ८ ॥

**मूलम्—विभूसं परिवज्जिज्जा, सरीरपरिमंडणं । बंभचेररओ भिक्खू , सिंगारत्थं न धारए ॥ ९ ॥**

व्याख्या—विभूषामुपकरणगतां परिवर्जयेत्, शरीरपरिमण्डनं च केशश्मश्रुसमारचनादिकं, ब्रह्मचर्यरतो भिक्षुः शृङ्गारार्थं न धारयेन्न कुर्यात् ॥ ९ ॥

**मूलम्—सद्दे रूवे अ गंधे अ, रसे फासे तहेवय । पंचविहे कामगुणे, निच्चसो परिवज्जए ॥ १० ॥**

व्याख्या—व्यक्तं, नवरं—कामस्य इच्छामदनरूपस्य गुणा उपकारकाः कामगुणास्तानिति सूत्रदशकार्थः ॥ १० ॥

अथ यत्पूर्वं प्रत्येकमुक्तं शङ्का वा स्यादित्यादि तदेव दृष्टान्तेन स्पष्टयितुमाह—

**मूलम्—आलओ थीजणाइण्णो, थीकहा य मणोरमा । संथवो चेव नारीणं, तासिं इंदिअदरिसणं ॥११॥**

व्याख्या—सुगमं, नवरं—'संथवोत्ति' संस्तव एकासनभोगादिना परिचयः ॥ ११ ॥

**मूलम्—कुइअं रुइअं गीअं, सहसा भुत्तासिआणि अ । पणिअं भत्तपाणं च, अइमायं पाणभोअणं ॥१२॥**

व्याख्या—स्पष्टमेव, नवरं 'भुत्तासिआणित्ति' भुक्तासितानि च स्मृतानीति शेषः, तत्र भुक्तानि भोगरूपाणि, आसितानि स्त्र्यादिभिरेव सहावस्थानानि, हास्याद्युपलक्षणञ्चैतत् ॥ १२ ॥

मूलम्—गत्तभूसणमिट्ठं च, कामभोगा य दुज्जया । नरस्सत्तगवेसिस्स, विसं तालउडं जहा ॥ १३ ॥

व्याख्या—गात्रभूषणमिष्टं चेति चशब्दोऽप्यर्थः, तत इष्टमपि वाञ्छितमपि, आस्तां कृतं, कामौ रूपशब्दौ, भोगाश्च गन्धाद्याः कामभोगाश्च दुर्जयाः, नरस्योपलक्षणत्वात् स्त्र्यादेश्च, आत्मगवेषिणो विषं तालपुटं यथा । यथा हि तालपुटविषं सद्योघातित्वेन दारुणविपाकं तथा मोक्षार्थिनां स्त्रीजनाकीर्णालयाद्यपि, शङ्काकांक्षादिदोषहेतुत्वेन तस्यापि संयमरूपभावजीवितापहारहेतुत्वादिति सूत्रत्रयार्थः ॥ १३ ॥ अथ निगमयितुमाह—

मूलम्—दुज्जए कामभोगे अ, निच्चसो परिवज्जए । संकट्ठाणाणि सव्वाणि, वज्जिज्जा पणिहाणवं ॥१४॥

व्याख्या—दुर्जयान् कामभोगान् नित्यं परिवर्जयेत्, प्राच्यचशब्दस्य भिन्नक्रमस्येह योगाच्छङ्कास्थानानि च सर्वाणि पूर्वोक्तानि दशापि वर्जयेत्, प्रणिधानवानेकाग्रमनाः ॥ १४ ॥ एतद्वर्जकश्च किं कुर्यादित्याह—

मूलम्—धम्मारामे चरे भिक्खू, धितिमं धम्मसारही । धम्मारामरए दंते, बंभचेर समाहिए ॥१५॥

व्याख्या—धर्म एव दुःखसन्तापतप्तानां निर्वृत्तिहेतुत्वादिष्टफलदानाच्च आराम इव धर्मारामस्तत्र चरेत् प्रवर्त्तेत भिक्षुर्मुनिः, धृतिर्मनःस्वास्थ्यं तद्वान्, धर्मसारथिरन्येषामपि धर्मे प्रवर्त्तयिता, धर्मे आरमन्ते इति धर्मारामाः सुसाधवस्तेषु रतो न त्वेकाकित्वे धर्मारामरतो दान्त उपशान्तः, ब्रह्मचर्ये समाहितः समाधानवान् ब्रह्मचर्यसमाहित इति सूत्रार्थः ॥ १५ ॥ अथ ब्रह्मचर्यमाहात्म्यमाह—

मूलम्—देवदाणव गंधव्वा, जक्खरक्खसकिन्नरा । बंभयारिं नमंसंति, दुक्करं जे करंति ते ॥ १६ ॥

व्याख्या—देवदानवगन्धर्वा यक्षराक्षसकिन्नराः, सकलदेवजात्युपलक्षणमेतत्, एते सर्वेपि ब्रह्मचारिणं मुनिं नमस्यन्ति दुष्करं दुरनुचरं प्रक्रमाद्ब्रह्मचर्यं 'जेकरंति तेत्ति' सूत्रत्वाद्यः करोति पालयति तमिति सूत्रार्थः ॥१६॥ अध्ययनार्थोपसंहारमाह—

मूलम्—एस धम्मे धुवे निइतिए, सासए जिणदेसिए ।
सिद्धा सिज्झंति चाणेणं, सिज्झिस्संति तहावरेत्ति बेमि ॥ १७ ॥

व्याख्या—एष पूर्वोक्तो धर्मो ब्रह्मचर्यरूपो ध्रुवः स्थिरः परवादिभिरप्रकम्प्यतया प्रमाणप्रतिष्ठित इत्यर्थः, नित्यस्त्रिकालभावित्वात्, शाश्वतोऽनवरतभवनात्, एकार्थिकानि वा एतानि, जिनैर्देशितः प्रोक्तो जिनदेशितः, अस्य त्रैकालिकं फलमाह—सिद्धाः पूर्वमनन्ताः, सिध्यन्ति विदेहेषु अत्र वा तत्कालापेक्षया, चः समुच्चये, अनेन ब्रह्मचर्यरूपेण धर्मेण सेत्स्यन्ति तथाऽपरे अनन्तायामनागताद्धायामिति सूत्रार्थः, इति ब्रवीमीति प्राग्वत् ॥ १७ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय-
श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ षोडशमध्ययनं सम्पूर्णम् ॥ १६ ॥

## ॥ अथ सप्तदशमध्ययनम् ॥

॥ ॐ ॥ व्याख्यातं षोडशमध्ययनं, अथ पापश्रमणीयाख्यं सप्तदशमारभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तराध्ययने ब्रह्मचर्यसमाधिस्थानान्युक्तानि तानि च पापश्रमणैः सेवितुं दुःशकानीति तत्स्वरूपमनेनोच्यते, इत्यनेन सम्बन्धेनायातस्यास्येदमादौ सूत्रद्वयम्—

मूलम्—जे केइ उ पव्वईए निअंठे, धम्मं सुणित्ता विणओववण्णे ।
सुदुल्लहं लहिउं बोहिलाभं, विहरिज्ज पच्छा य जहासुहं तु ॥ १ ॥

व्याख्या—यः कश्चित्तुः पूरणे प्रव्रजितो निर्ग्रन्थः, कथं पुनः प्रव्रजितः ? इत्याह—धर्मं शुभचारित्ररूपं श्रुत्वा विनयेन ज्ञानविनयादिना उपपन्नो युक्तो विनयोपपन्नः सन् सुदुर्लभमतिशयदुःप्रापं लब्ध्वा बोधिलाभं जिनधर्मावाप्तिरूपं, अनेन भावप्रतिपत्त्याऽसौ प्रव्रजित इत्युक्तं भवति । विहरेत्पश्चाद्दीक्षादानोत्तरकालं चः पुनरर्थे ततश्च प्रथमं सिंहतया प्रव्रज्य पश्चात्पुनः 'जहासुहं तुत्ति' तुशब्दस्यैवकारार्थत्वात् यथासुखमेव निद्रादिप्रमादपरतया शृगालवृत्त्यैव विहरेदित्यर्थः ॥ १ ॥ स च गुर्वादिनाऽध्येतुं प्रेरितो यद्वक्ति तदाह—

मूलम्—सिज्जा दढा पाउरणं मे अत्थि, उपज्जइ भोत्तुं तहेव पाउं।
जाणामि जं वट्टइ आउसोत्ति, किं नाम काहामि सुएण भंते ॥ २ ॥

व्याख्या—शय्या वसतिर्दृढा वातातपजलाद्युपद्रवरहिता, तथा प्रावरणं वर्षाकल्पादि मे मम अस्ति, किञ्चोत्पद्यते भोक्तुं भोजनाय, तथैव पातुं पानाय, यथाक्रममशनं पानञ्चेति शेषः। तथा जानामि यद्वर्त्तते यदिदानीमस्ति तदिति शेषः, आयुष्मन्निति प्रेरयितुमामंत्रणं, इति एतस्माद्धेतोः किं नाम न किंचिदित्यर्थः, 'काहामित्ति' करिष्यामि? श्रुतेनागमेनाधीतेनेति गम्यं,भदन्त! इति पूज्यामंत्रणं। अयं हि तस्याशयः, ये हि भवन्तोऽधीयन्ते तेपि नातीतादि किंचिज्जानन्ति, किन्तु वर्त्तमानमेव तच्च वयमपि विद्मो वसतिवसनाशनपानादीनि च सुखं युष्मद्वद्वयमपि प्राप्नुमस्तत्किं? हृद्गलतालुशोषकारिणाधीतेनेति यो वक्ति स पापश्रमण इतीहापि सिंहावलोकितन्यायेन सम्बध्यते इति सूत्रद्वयार्थः ॥२॥ किञ्च—

मूलम्—जे केइ पव्वइए, निद्दासीले पगामसो। भोच्चा पेच्चा सुहं सुअइ, पावसमणेत्ति वुच्चइ ॥ ३ ॥

व्याख्या—यः कश्चित् प्रव्रजितो निद्राशीलः प्रकामशो भृशं भुक्त्वा दध्योदनादि, पीत्वा तक्रादि, सुखं यथा स्यात्तथा सकलक्रियानिरपेक्ष एव शेते स पापश्रमण इत्युच्यते इति ॥ ३ ॥

मूलम्—आयरिअउवज्झाएहिं, सुअं विणयं च गाहए। ते चेव खिंसई बाले, पावसमणेत्ति वुच्चइ ॥४॥

व्याख्या—आचार्योपाध्यायैः श्रुतं विनयं च ग्राहितः शिक्षितो यैरिति शेषः, तानेवाचार्यादीन् खिंसति निन्दति बालो विवेकविकलो यः स पापश्रमणः ॥ ४ ॥

मूलम्—आयरियउवज्झायाणं, सम्मं नो परितप्पई। अप्पडिपूअए थद्धे, पावसमणेत्ति वुच्चइ ॥ ५ ॥

व्याख्या—आचार्योपाध्यायानां सम्यग् अवैपरीत्येन न परितप्यते न तत्तप्तिं विधत्ते तेषां वैयावृत्त्यादिचिन्तां न सम्यक्करोतीत्यर्थः, अप्रतिपूजको जिनादीनां यथोचितप्रतिपत्तिपराङ्मुखो, यद्वा केनचिन्मुनिनोपकृतोपि न प्रत्युपकारकारी, स्तब्धो गर्वाध्मातो यः स पापश्रमणः ॥ ५ ॥ इत्थमविनीतं पापश्रमणमुक्त्वा चरणविकलं तमेवाह—

मूलम्—समद्दमाणे पाणाणि, बीआणि हरिआणि अ। असंजए संजयमन्नमाणे, पावसमणेत्ति वुच्चइ ६

व्याख्या—संमर्दयन् प्राणान् प्राणिनो द्वीन्द्रियादीन्, बीजानि शाल्यादीनि, हरितानि च दूर्वादीनि, सर्वैकेन्द्रियोपलक्षणमेतत्, अत एवासंयतः 'संजयमन्नमाणेत्ति' संयतमात्मानं मन्यमानोऽनेन च संविग्नपाक्षिकत्वमपि तस्य नास्तीत्युक्तं, शेषं प्राग्वत् ॥ ६ ॥

मूलम्—संथारं फलगं पीठं, निसिज्जं पायकंबलं। अपमज्जिअ आरुहइ, पावसमणेत्ति वुच्चइ ॥ ७ ॥

व्याख्या—संस्तारकं कम्बलादिकं, फलकं दारुमयं, पीठमासनं, निषद्यां स्वाध्यायभूमिं, पादकम्बलं पादपुञ्छनं, अप्रमृज्य रजोहरणादिना उपलक्षणत्वादप्रत्युपेक्ष्य च आरोहति यः स पापश्रमणः ॥ ७ ॥

मूलम्—दवदवस्स चरई, पमत्ते अ अभिक्खणं। उल्लंघणे अ चंडे अ, पावसमणेत्ति वुच्चइ ॥ ८ ॥

व्याख्या—'दवदवस्सत्ति' द्रुतं द्रुतं तथाविधालम्बनं विनापि सत्वरं चरति भिक्षाचर्यादौ पर्यटति, प्रमत्तश्च अभीक्ष्णं पुनः पुनर्भवतीति शेषः, उल्लङ्घनश्च वत्सडिम्भादीनामधः कर्त्ता, चण्डः क्रोधनश्चारभटवृत्तिश्रयणाद्वा शेषं प्राग्वत् ॥ ८ ॥

मूलम्—पडिलेहेइ पमत्ते, अवउज्झइ पायकंबलं। पडिलेहणा अणाउत्ते, पावसमणेत्ति वुच्चइ ॥ ९ ॥

व्याख्या—प्रतिलेखयति प्रमत्तः सन्, अपोज्झति यत्र तत्र निक्षिपति पादकम्बलं पादपुञ्छनं, समस्तोपधेरुपलक्षणमेतत्, स एवं प्रतिलेखनायामनायुक्तोऽनुपयुक्तः प्रतिलेखनाऽनायुक्तः ॥ ९ ॥

मूलम्—पडिलेहेइ पमत्ते, जं किंचि हु णिसामिआ। गुरुपरिभावए निच्चं, पावसमणेत्ति वुच्चइ ॥१०॥

व्याख्या—प्रतिलेखयति प्रमत्तः सन्, यत्किञ्चिद्विकथादि निशम्य श्रुत्वा तदाक्षिप्तचित्ततयेति भावः, गुरून् परिभवतीति गुरुपरिभावको नित्यं, अयं भावः—प्रतिलेखनादौ वितथं कुर्वन् गुरुभिर्नोदितस्तानेव वक्ति यथा स्वयमेवेदं कुरुत युष्माभिरेव वा वयमेवं शिक्षिताः ततो युष्माकमेवासौ दोष इत्यादि ॥ १० ॥

मूलम्—बहुमायी पमुहरी, थद्धे लुद्धे अणिग्गहे। असंविभागी अचिअत्ते, पावसमणेत्ति वुच्चइ ॥ ११ ॥

व्याख्या—बहुमायी प्रभूतवञ्चनाप्रयोगवान्, प्रमुखरः प्रकर्षेण मुखरोऽसम्बद्धः, स्तब्धो लुब्धः, अनिग्रहः अनि-

धमानेन्द्रियमनोनिग्रहः, असंविभागी कुक्षिम्भरित्वेन गुरुग्लानादीनां योग्यमशनादि न यच्छति, 'अचिअत्तेत्ति' गुर्वादिष्वपि अप्रीतिमान् ॥ ११ ॥

मूलम्—विवायं च उदीरेइ, अधम्मे अत्तपण्णहा। वुग्गहे कलहे रत्ते, पावसमणेत्ति वुच्चइ ॥ १२ ॥

व्याख्या—विवादं वाक्कलहं, चः पूरणे, उदीरयति उपशान्तमपि मर्मभाषणादिना वर्द्धयति, अधर्मो निर्धर्मः, आप्तां सद्बोधरूपतया इहपरलोकयोर्हितां प्रज्ञामात्मनोऽन्येषाञ्च सुबुद्धिं कुतर्कव्याकुलीकरणेन हन्ति यः स आप्तप्रज्ञाहा, व्युद्ग्रहे दण्डादिघातजनिते विरोधे, कलहे वाचिके विरोधे, रक्तः सक्तः ॥ १२ ॥

मूलम्—अथिरासणे कुक्कुइए, जत्थतत्थ निसीअइ। आसणंमि अणाउत्ते, पावसमणेत्ति वुच्चइ ॥१३॥

व्याख्या—अस्थिरासनः, कुक्कुचो हास्यविकथादिचापल्यवान्, यत्र तत्र संसक्तसरजस्कादावपीत्यर्थः, निषीदति पीठादौ, अत एवाऽऽसनेऽनायुक्तोऽनुपयुक्तः ॥ १३ ॥

मूलम्—ससरक्खपाओ सुअइ, सिज्जं न पडिलेहइ। संथारए अणाउत्ते, पावसमणेत्ति वुच्चइ ॥१४॥

व्याख्या—सरजस्कपादः स्वपिति, कोऽर्थः ? संयमविराधनाभीरुताया अभावात् पादावप्रमृज्यैव शेते, शय्यां वसतिं न प्रतिलेखयति न प्रमार्जयति, संस्तारके कम्बलादौ सुप्त इति शेषः, अनायुक्तः "कुक्कुडिपायपसारण" इत्याद्यागमार्थानुपयुक्तः ॥ १४ ॥ अथ तपोविषयं पापश्रमणमाह—

मूलम्—दुद्धदही विगईओ, आहारेइ अभिक्खणं। अरए अ तवो कम्मे, पावसमणेत्ति वुच्चइ ॥१५॥

व्याख्या—'दुद्धदहित्ति' दधिदुग्धे विकृतिहेतुत्वाद्विकृती, उपलक्षणञ्चैतद् घृताद्यशेषविकृतीनां, आहारयति अभीक्ष्णं वारं वारं तथाविधकारणं विनापीति भावः, अत एवारतश्च तपःकर्मणि अनशनादौ ॥ १५ ॥

मूलम्—अत्थंतंमि अ सूरंमि, आहारेइ अभिक्खणं। चोइओ पडिचोएइ, पावसमणेत्ति वुच्चइ ॥१६॥

व्याख्या—अस्तमयति चः पूरणे सूर्ये आहारयत्यभीक्ष्णं प्रतिदिनमित्यर्थः, यदि चायं केनचिद्गीतार्थेन प्रेर्यते यथाऽऽयुष्मन् ? किमेवमाहारतत्पर एव तिष्ठसि ? दुर्लभा खल्वियं धर्मसामग्री ! ताञ्च प्राप्य तपस्युद्यन्तुमुचितमिति, ततः किमित्याह—चोदितः प्रेरितः प्रतिचोदयति, यथा दक्षस्त्वमुपदेशं दातुं न तु स्वयं विधातुं ! नो चेदेवं विदन्नपि किं न विकृष्टं तपोऽनुतिष्ठसीति ॥ १६ ॥

मूलम्—आयरिअ परिच्चाई, परपासंडसेवए। गाणंगणिए दुब्भूए, पावसमणेत्ति वुच्चइ ॥ १७ ॥

व्याख्या—आचार्यपरित्यागी, ते हि तपः कारयन्ति आनीतमपि चान्नादि ग्लानादिभ्यो दापयन्त्यतोऽत्यन्तमाहारलौल्यात्तत्परित्यागशीलः, परपाषण्डान् "मृद्वी शय्या प्रातरुत्थाय पेया" इत्याद्युपदिशतः सौगतादीन् अत्यन्ताहारप्रसक्तान् सेवते परपाषण्डसेवकः, तथा स्वच्छन्दतया गणाद्गणं षण्मासाभ्यन्तर एव संक्रामतीति गाणंगणिकोऽत एव दुष्टु भूतो जातो दुर्भूतो दुराचारतया निन्द्यत्वं प्राप्त इत्यर्थः ॥ १७ ॥

मूलम्—सयं गेहं परिच्चज्ज, परगेहंसि वावरे। निमित्तेण य ववहरइ, पावसमणेत्ति वुच्चइ ॥ १८ ॥

व्याख्या— स्वकं गेहं निजगृहं परित्यज्य परगेहे 'वावरेत्ति' व्याप्रियते पिण्डादिलोभात्स्वयं तत्कृत्यानि विधत्ते, निमित्तेन च शुभाशुभकथनादिना व्यवहरति द्रव्याद्यर्जयति ॥ १८ ॥

मूलम्—सण्णाइपिंडं जेमेइ, नेच्छइ सामुदाणिअं। गिहिनिसिज्जं च वाहेइ, पावसमणेत्ति वुच्चइ १९

व्याख्या—स्वजातिभिर्निजबन्धुभिर्यः स्नेहाद्दीयते पिण्डः स्वजातिपिण्डस्तं जेमति भुंक्ते, नेच्छति सामुदानिकं भैक्ष्यं, गृहिनिषद्यां पर्यङ्किकादिकां वाहयति सुखशीलतया रोहति यः स पापश्रमण उच्यते इति सूत्रसप्तदशकार्थः ॥ १९ ॥ अथाध्ययनार्थमुपसंहरन्नुक्तदोषासेवनत्यागयोः फलमाह—

मूलम्—एआरिसे पंचकुसीलसंवुडे, रूवंधरे मुणिपवराण हिट्ठिमे।
अयंसि लोए विसमेव गरहिए, न से इहं नेव परत्थलोए ॥ २० ॥

व्याख्या—एतादृशो यादृश उक्तः, पञ्चकुशीलाः पार्श्वस्थादयस्तद्वदसंवृतः पञ्चकुशीलासंवृतः रूपधरो रजोहरणादिवेषधरः, बिन्दुश्चेह प्राकृतत्वात्, मुनिप्रवराणां प्रवरयतीनां 'हेट्ठिमेत्ति' अधोवर्त्ती अतिजघन्यसंयमस्थानवर्त्तितया निकृष्टः 'अयंसित्ति' अस्मिन् लोके विषमिव गर्हितो भ्रष्टप्रतिज्ञतया प्राकृतजनैरपि निन्दितोऽत एव न स 'इहंति' इहलोके नैव नापि परलोके अर्च्यत इति शेषः ॥ २० ॥

मूलम्—जो वजए एए सया उ दोसे, से सुवए होई मुणीण मज्झे ।
अयंसि लोए अमयंव पूईए, आराहए लोगमिणं तहा परंति बेमि ॥ २१ ॥

व्याख्या—यो वर्जयत्येतान् उक्तरूपान् 'सया उत्ति' सदैव दोषान् स सुव्रतः प्रशस्यव्रतो भवति मुनीनां मध्ये भावमुनित्वेनासौ तन्मध्ये गण्यत इत्यर्थः, तथा चास्मिन् लोके अमृतमिव पूजित आराधयति लोकमिमं तथा 'परंति' परलोकमिति सूत्रद्वयार्थः, इति ब्रवीमीति प्राग्वत् ॥ २१ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिशिष्यमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ सप्तदशमध्ययनं सम्पूर्णम् ॥ १५ ॥

## ॥ अथ अष्टादशमध्ययनम् ॥

॥ अर्हम् ॥ उक्तं सप्तदशमध्ययनमथाष्टादशं संयतीयाख्यमारभ्यते, अस्य चायं सम्बन्धः, इहानन्तराध्ययने पापस्थानवर्जनमुक्तं, तच्च भोगर्द्धित्यागेन संजयनृपवद्विधेयमिति सम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—कंपिल्ले नयरे राया, उदिण्णबलवाहणे । नामेणं संजए नामं, मिगवं उवनिग्गए ॥ १ ॥

व्याख्या—काम्पील्ये काम्पील्यनाम्नि नगरे राजा उदीर्णमुदयप्राप्तं बलं चतुरङ्गं वाहनं च शिबिकादिरूपं यस्य स तथा, स च नाम्ना संजयो 'नामेति' प्राकाश्ये, ततः संजय इति प्रसिद्धो मृगव्यां मृगयां प्रतीति शेषः, उपनिर्गतो निर्यातः पुरादिति गम्यते, इति सूत्रार्थः ॥ १ ॥ स च कथं निर्गतः ? किं चकारेत्याह—

मूलम्—हयाणीए गयाणीए, रहाणीए तहेव य । पायत्ताणीए महया, सवओ परिवारिए ॥ २ ॥

व्याख्या—सर्वत्र सुव्व्यत्ययात् हयानीकेन गजानीकेन रथानीकेन तथैव च पदातीनां समूहः पादातं तदनीकेन च महता सर्वतः परिवारितः ॥ २ ॥

मूलम्—मिए छुभित्ता हयगओ, कंपिल्लुजाणकेसरे । भीए संते मिए तत्थ, वहेइ रसमुच्छिए ॥ ३ ॥

व्याख्या—मृगान् क्षिप्त्वा प्रेर्य हयगतोऽश्वारूढः काम्पील्यस्य सम्बन्धिनि केसरनाम्नि उद्याने भीतान् त्रस्तान् श्रान्तानितस्ततः प्रेरणेन खिन्नान् मितान् परिमितान् तत्र तेषु मृगेषु मध्ये 'वहेइत्ति' हन्ति, रसमूर्छितस्तन्मांसास्वादलुब्ध इति सूत्रद्वयार्थः ॥ ३ ॥ तदा च यदभूत्तदाह—

मूलम्—अह केसरंमि उज्जाणे, अणगारे तवोधणे । सज्झायज्झाणसंजुत्ते, धम्मज्झाणं झियायइ ॥४॥

व्याख्या—अथानन्तरं केसरोद्याने अनगारस्तपोधनः स्वाध्यायध्यानसंयुक्तो यथावसरं तदासेवनात् अत एव धर्मध्यानं ध्यायति ॥ ४ ॥

मूलम्—अफोवमंडवंसि, झायइ झविआसवे । तस्सागए मिए पासं, वहेइ से नराहिवे ॥ ५ ॥

व्याख्या—'अफोव' इति वृक्षाद्याकीर्णः स चासौ मण्डपश्च नागवल्यादिसम्बन्धी अफोवमण्डपस्तस्मिन् ध्यायति धर्मध्यानमिति शेषः, पुनरस्याभिधानमतिशयद्योतकं, 'झविअत्ति' क्षपिता आश्रवा हिंसादयो येन स तथा, तस्य मुनेरागतान् मृगान् पार्श्वे समीपं 'वहेइत्ति' हन्ति स नराधिपः इति सूत्रद्वयार्थः ॥ ५ ॥

मूलम्—अह आसगओ राया, खिप्पमागम्म सो तहिं । हए मिए उ पासित्ता, अणगारं तत्थ पासई ॥ ६ ॥

व्याख्या—अथानन्तरमश्वगतो राजा क्षिप्रमागम्य स तस्मिन् मण्डपे हतान् 'मिए उत्ति' मृगानेव न पुनर्मुनिमित्यर्थः, दृष्ट्वा अनगारं तत्र पश्यति इति सूत्रार्थः ॥ ६ ॥ ततोऽसौ किं ? चकारेत्याह—

मूलम्—अह राया तत्थ संभंतो, अणगारो मणाहओ । मए उ मंदपुण्णेणं, रसगिद्धेण घण्णुणा ॥७॥

व्याख्या—अथ राजा तत्र मुनिदर्शने जाते सति सम्भ्रान्तो भीतो यथाऽनगारो मनाक् स्तोकेनैवाऽहतो न मारितः तदासन्नमृगहननादिति भावः, मया 'तुः' पूर्तौ, मन्दपुण्येन रसगृद्धेन 'घण्णुणत्ति' घातुकेन हननशीलेन ॥७॥

मूलम्—आसं विसज्जइत्ता णं, अणगारस्स सो निवो। विणएणं वंदए पाए, भगवं एत्थ मे खमे ॥८॥

व्याख्या—अश्वं विसृज्य विमुच्य अनगारस्य स नृपः विनयेन वन्दते पादौ, वक्ति च यथा भगवन्! अत्र मृगवधे मे ममापराधमिति शेषः, क्षमस्व ॥ ८ ॥

मूलम्—अह मोणेण सो भयवं, अणगारो झाणमस्सिओ। रायाणं न पडिमंतेइ, तओ राया भयद्दुओ ९

व्याख्या—अथ मौनेन स भगवान् अनगारो ध्यानमाश्रितः राजानं न प्रतिमंत्रयति न प्रतिवक्ति यथाऽहं क्षमिष्ये न वेति, ततो हेतो राजा भयद्रुतो भयत्रस्तोऽभूत्, यथा न ज्ञायते किमयं क्रुद्धः करिष्यतीति ॥ ९ ॥ प्रोचे च यथा—

मूलम्—संजओ अहमस्सीति, भयवं वाहराहि मे। कुद्धो तेएण अणगारे, दहिज्ज नरकोडिओ ॥१०॥

व्याख्या—संजयनामा राजाहमस्मि न तु नीच इति भावः, इत्येतस्माद्धेतोर्हे भगवन्! व्याहर सम्भाषय 'मे' इति मां, किमेवं भवान् भयद्रुत इत्याह—क्रुद्धस्तेजसाऽनगारो दहेन्नरकोटीरास्तां शतं सहस्रं चेत्यतो भयद्रुतोऽहमिति सूत्रचतुष्कार्थः ॥ १० ॥ इत्थं तेनोक्ते मुनिराह—

मूलम्—अभओ पत्थिवा तुब्भं, अभयदाया भवाहि अ। अणिच्चे जीवलोगंमि, किं हिंसाए पसज्जसि? ॥११॥

व्याख्या—अभयं पार्थिव! तव न तु कोऽपि त्वां दहतीति भावः, इत्थं समाश्वास्योपदिशति, अभयदाता च प्राणिनां प्राणत्राणकर्त्ता 'भवाहिअत्ति' भव, यथा तव मृत्युभयं तथाऽन्येषामपीति भावः, अनित्ये जीवलोके किं हिंसायां प्रसज्जसि? नरकहेतुरियं कर्त्तुं नोचितेति भावः ॥ ११ ॥ किञ्च—

मूलम्—जया सव्वं परिच्चज्ज, गंतव्वमवसस्स ते। अनिच्चे जीवलोगंमि, किं रज्जंमि पसज्जसि? ॥१२॥

व्याख्या—यदा सर्वं कोशान्तःपुरादि परित्यज्य गन्तव्यं भवान्तरमिति शेषः, अवशस्य अस्वतंत्रस्य ते तव ततोऽनित्ये जीवलोके किं राज्ये प्रसज्जसि? ॥ १२ ॥ अनित्यतामेव भावयति—

मूलम्—जीविअं चेव रूवं च, विज्जुसंपायचंचलं। जत्थ तं मुज्झसी रायं, पेच्चत्थं नावबुज्झसे ॥१३॥

व्याख्या—जीवितं चैव रूपं च विद्युत्सम्पातो विद्युचलनं तद्वच्चञ्चलं विद्युत्सम्पातचञ्चलं यत्र जीविते रूपे च त्वं मुह्यसि हे राजन्! प्रेत्यार्थं परलोककार्यं नावबुध्यसे ॥ १३ ॥ तथा—

मूलम्—दाराणि अ सुआ चेव, मित्ता य तह बंधवा। जीवंतमणुजीवंति, मयं नाणुव्वयंति अ ॥१४॥

व्याख्या—दाराश्च सुताश्चैव मित्राणि च तथा बान्धवाः जीवन्तं अनुजीवन्ति तदर्जितवित्ताद्युपभोगेन, मृतं नानुव्रजन्त्यपि चशब्दस्याऽप्यर्थत्वात्, कथं पुनः सहायाः स्युरित्यतः कृतघ्नेषु तेषु नास्था कार्येति भावः ॥ १४ ॥

मूलम्—निहरंति मयं पुत्ता, पिअरं परमदुक्खिआ। पिअरोऽवि तहा पुत्ते, बंधू रायं तवं चरे ॥१५॥

व्याख्या—'निहरंति' निस्सारयन्ति मृतं पुत्राः पितरं परमदुःखिता अपि, पितरोऽपि तथा पुत्रान् 'बंधूत्ति' बन्धवश्च बन्धूनिति शेषः, ततो राजंस्तपश्चरेरासेवेथाः ॥ १५ ॥

मूलम्—तओ तेणऽज्जिए दव्वे, दारे अ परिरक्खिए। कीलंतन्ने नरा रायं, हट्ठतुट्ठा अलंकिआ ॥ १६ ॥

व्याख्या—ततो निस्सारणानन्तरं तेन पित्रादिनाऽर्जिते द्रव्ये सति दारेषु च परिरक्षितेषु क्रीडन्ति तेनैव वित्तेन तैर्दारैश्चेति गम्यं, अन्ये नरा राजन्! हृष्टतुष्टा अलङ्कृतास्तत्र हृष्टा बहिः पुलकादिमन्तः, तुष्टा आन्तरप्रेमभाजः, अलङ्कृताः विभूषिताः, यतः ईदृशी भवस्थितिस्ततो राजंस्तपश्चरेरिति सम्बन्धः ॥ १६ ॥ मृतस्य का वार्त्तेत्याह—

मूलम्—तेणावि जं कयं कम्मं, सुहं वा जइवा ऽसुहं। कम्मुणा तेण संजुत्तो, गच्छइ उ परं भवं ॥१७॥

व्याख्या—तेनाऽपि यत्कृतं कर्म शुभं वा यदिवा अशुभं कर्मणा तेन 'उत्तरतुशब्दस्यैवकारार्थस्येह योगात्तेनैव' न तु धनादिना संयुक्तो गच्छति परमन्यं भवं, यत एवं शुभाशुभयोरेवानुयायित्वं ततः शुभहेतुं तप एव चरेरिति सूत्रसप्तकार्थः ॥ १७ ॥ ततश्च—

मूलम्—सोऊण तस्स सो धम्मं, अणगारस्स अंतिए। महया संवेगनिव्वेअं, समावण्णो नराहिवो ॥ १८॥

व्याख्या—स्पष्टं, नवरं 'महयत्ति' महत् संवेगनिर्वेदं, तत्र संवेगो मोक्षाऽभिलाषः, निर्वेदः संसारोद्वेगः ॥ १८ ॥

मूलम्—संजओ चइउं रज्जं, निक्खंतो जिणसासणे। गद्दभालिस्स भगवओ, अणगारस्स अंतिए ॥१९॥

व्याख्या—संजयस्त्यक्त्वा राज्यं निष्क्रान्तः प्रव्रजितो जिनशासने न त्वन्यत्र, गर्द्दभालेर्भगवतोऽनगारस्याऽन्तिके, स चैवं प्रव्रज्याधिगतश्रुतः सामाचारीरतोऽप्रतिबद्धतया विहरन् कश्चित्सन्निवेशमगात्तत्र च यदभूत्तदाह ॥ १९ ॥

मूलम्—चिच्चा रट्ठं पव्वइए, खत्तिए परिभासई। जहा ते दीसइ रूवं, पसन्नं ते तहा मणो ॥ २० ॥

व्याख्या—त्यक्त्वा राष्ट्रं देशं प्रव्रजितः क्षत्रियः क्षत्रियजातिरनिर्दिष्टनामा कोपि मुनिः परिभाषते संजयराजर्षिमिति शेषः, स हि पूर्वभवे वैमानिकोऽभूत्ततश्च्युतश्च क्षत्रियकुले राजा जातस्तत्र च कुतोऽपि निमित्ताज्जातजातिस्मृतिस्तत एवं विरक्तः प्रव्रज्य विहरन् संजयमुनिं प्रेक्ष्य तत्परीक्षार्थमिदमाचख्यौ, यथा ते दृश्यते रूपं प्रसन्नं निर्विकारं ते तव तथा मनोऽपि प्रसन्नं वर्त्तते इति शेषः, अन्तः कालुष्ये हि सति बहिर्नैवं प्रसन्नता स्यादिति भावः ॥ २० ॥ किञ्च—

मूलम्—किं नामे किं गोत्ते, कस्सट्ठाए व माहणे। कहं पडिअरसी बुद्धे, कहं विणीएत्ति वुच्चसी? ॥२१॥

व्याख्या—किंनामा? किं गोत्रः? 'कस्सठाएवत्ति' कस्मै वा अर्थाय माहनः प्रव्रजितः? कथं केन प्रकारेण प्रतिचरसि सेवसे बुद्धानाचार्यादिन्? कथं विनीत इत्युच्यसे? इति सूत्रचतुष्कार्थः ॥ २१ ॥ संजयमुनिराह—

मूलम्—संजयो नाम नामेणं, तहा गोत्तेण गोअमो। गद्दभाली ममायरिआ, विज्जाचरणपारगा २२

व्याख्या—संजयो नाम नाम्ना, तथा गोत्रेण गौतमोऽहमिति शेषः, शेषप्रश्नत्रयोत्तरमाह—गर्द्दभालयो ममाऽऽचार्याः, विद्याचरणपारगाः श्रुतचारित्रपारगामिनः, अयं भावः—गर्दभालिनामाचार्यैर्जीववघातान्निवर्त्तितोऽहं तन्निवृत्तौ च तैर्मुक्तिरूपं फलं दर्शितं ततस्तदर्थं माहनोऽस्मि, यथा तदुपदेशं गुरून् प्रतिचरामि, तदुपदेशासेवनाच्च विनीतोऽहमिति सूत्रार्थः ॥ २२ ॥ ततस्तद्गुणाकृष्टचेता अपृष्टोऽपि क्षत्रिय इदमाह—

मूलम्—किरिअं अकिरिअं विणयं, अण्णाणं च महामुणी।
एएहिं चउहिं ठाणेहिं, मेअण्णे किं पभासति? ॥ २३ ॥

व्याख्या—क्रिया अस्ति जीव इत्यादिरूपा, नपुंसकत्वं प्राकृतत्वात्, एवमग्रेऽपि, अक्रिया तद्विपरीता, विनयो नमस्कारादिः, अज्ञानं तत्त्वाऽनवगमः, चः समुच्चये, हे महामुने! एतैः क्रियादिभिश्चतुर्भिः स्थानैः 'मेअण्णेत्ति' मेयं ज्ञेयं जीवादिवस्तु जानन्ति इति मेयज्ञाः, क्रियादिभिः स्वस्वाभिप्रायकल्पितैः वस्तुतत्त्वपरिच्छेदिन इत्यर्थः। किमिति कुत्सितं 'पभासतित्ति' प्रभाषन्ते विचाराक्षमत्वात् तदुक्तीनां, तथा हि—ये तावत् क्रियावादिनः ते अस्तिक्रियाविशिष्टमात्मानं मन्यमाना अपि विभुरविभुः कर्त्ता अकर्त्ता मूर्त्तोऽमूर्तोऽसावित्याद्येकान्तवादमभ्युपगताः, कुत्सितभाषणञ्चैतत् युक्तिबाधितत्वात्। इह हि विभुत्वं व्यापित्वं, तच्चात्मनो न घटते, देह एव तल्लिङ्गभूतचैतन्योपलब्धेः। न च वाच्यं आत्मनो अव्यापित्वे तद्गुणयोर्धर्माधर्मयोरपि अव्यापित्वं, तथा च द्वीपान्तरगतदेवदत्ताद्दृष्टाकृष्टमणिमुक्तादीनामिहागमनं न स्यादिति, भिन्नदेशस्थस्याप्ययस्कान्तादेर्लोहाद्याकर्षणशक्तिदर्शनाच्छरीरव्यापिनोरपि धर्माऽधर्मयोर्दूरस्थस्याऽपि वस्तुन आकर्षणमुपपद्यत एवेति न विभुत्वमात्मनो युज्यते। तथाऽविभुरप्यङ्गुष्ठपर्वमात्राद्यधिष्ठानो यैरिष्यते तेषामपि शेषावयवेषु चैतन्याभावाच्छस्त्रादिना छेदने वेदनानुभवाभावः स्यान्न चैवं दृश्यते, एवं कर्त्तृत्वाद्येकान्तवादोऽपि सुधियाऽपासनीयः। अक्रियावादिनस्तु अस्तिक्रियाविशिष्टमात्मानं नेच्छन्त्येव, तदप्यसङ्गततरं, अहं सुखीत्यादिप्रत्ययानामन्यथानुपपत्त्या मानसप्रत्यक्षादिप्रमाणगम्यत्वात् तस्य। विनयवादिनस्तु सुरनृपमुनिगजवाजिगोमृगकरभमहिषकुक्कुरछगलशृगालकाकमकरादिनमस्कारकरणादेव कर्मक्षयमभ्युपगताः, दुष्टञ्चैतत्, लोकसमयवेदेषु गुणाधिकस्यैव विनयार्हतया प्रतीतत्वात्, तदन्यविनयस्य चाशुभफलत्वात्। अज्ञानवादिनश्च ज्ञानस्य मोक्षं प्रत्यनुपयोगित्वात् केवलं कष्टमेव कार्यं, न हि कष्टविनेष्टसिद्धिरिति प्रतिपन्नाः, इदमप्ययुक्तमेव, ज्ञानमन्तरेण हेयोपादेयनिवृत्तिप्रवृत्त्यभावात्, ज्ञानं विना च भूयोपि कष्टानुष्ठानं पशोरिव व्यर्थमेव स्यादिति सर्वेऽप्यमी कुत्सितमेव प्रभाषन्ते इति स्थितमिति सूत्रार्थः ॥ २३ ॥ न चैतत्स्वाभिप्रायेणैवोच्यते इत्याह—

मूलम्—इइ पाउकरे बुद्धे, नायए परिनिव्वुडे। विज्जाचरणसंपन्ने, सच्चे सच्चपरक्कमे ॥ २४ ॥

व्याख्या—इति एते क्रियावाद्यादयः कुत्सितं प्रभाषन्ते इत्येवं रूपं 'पाउकरेत्ति' प्रादुरकार्षीत् प्रकटितवान् बुद्धो ज्ञाततत्त्वो,

ज्ञात एव ज्ञातकः क्षत्रियः, स चात्र प्रस्तावात् महावीरः, परिनिर्वृतः कषायानलविध्यापनाच्छीतीभूतः, विद्याचरणाभ्यां क्षायिकज्ञानचारित्राभ्यां संपन्नो यः स तथा, अत एव सत्यः सत्यवाक्, सत्यपराक्रमः सत्यवीर्यः, इति सूत्रार्थः ॥ २४ ॥ तेषां फलमाह—

मूलम्—पडंति नरए घोरे, जे नरा पावकारिणो । दिव्वं च गइं गच्छंति, चरित्ता धम्ममारिअं ॥२५॥

व्याख्या—पतन्ति नरके घोरे रौद्रे ये नरा उपलक्षणत्वादन्ये च जीवाः, पापमिह प्रस्तावादसत्प्ररूपणारूपं कर्म शीलं येषां ते पापकारिणः, दिव्यां देवसम्बन्धिनीं सर्वगतिप्रधानां वा सिद्धिरूपां गतिं गच्छन्ति चरित्वा आसेव्य धर्ममिह सत्प्ररूपणारूपं आर्यमुत्तमं, ततोऽसत्प्ररूपणां हित्वा सत्प्ररूपणापरेणैव भवता भवितव्यमिति भावः, इति सूत्रार्थः ॥ २५ ॥ अथ कथममी पापकारिणः इत्याह—

मूलम्—मायावुइअमेअं तु, मुसाभासा निरत्थिआ । संजममाणोवि अहं, वसामि इरिआमि अ ॥२६॥

व्याख्या—मायया शाठ्येन 'वुइअंति' उक्तं मायोक्तं एतदनन्तरोक्तं क्रियादिवादिभिरुक्तं, तुरेवकारार्थः स च मायोक्तमेवेत्यत्र योज्यः, अत एव तेषां मृषा भाषा, निरर्थिका सम्यगभिधेयशून्या, ततः 'संजममाणोवित्ति' अपिरेवकारार्थः, ततः संयच्छन्नेवोपरमन्नेव तदुक्तिश्रवणादेः, अहमित्यात्मनिर्देशो विशेषेण तं स्थिरीकर्तुं वसामि तिष्ठामि उपाश्रय इति शेषः, 'इरिआमिअत्ति' ईरे च गच्छामि च गोचरादाविति सूत्रार्थः ॥ २६ ॥ कुतस्त्वं तदुक्ताकर्णनाद्युपरमसि ? इत्याह—

मूलम्—सव्वे ते विइआ मज्झं, मिच्छादिट्ठी अणारिआ । विज्जमाणे परे लोए, सम्मं जाणामि अप्पयं ॥२७॥

व्याख्या—सर्वे ते क्रियादिवादिनो विदिता मम यथाऽमी मिथ्यादृष्टयः तत एवानार्याः पशुहिंसाद्यनार्यकर्मप्रवृत्ताः, कथमीदृशास्ते तव विदिताः ? इत्याह—विद्यमाने परलोकेऽन्यजन्मनि सम्यग् जानाम्यात्मानं भवान्तरादागतं, ततः परलोकात्मनोः सम्यग् वेदनान्मम ते तादृशा विदितास्ततोऽहं तदुक्ताकर्णनादेः संयच्छामि इति सूत्रार्थः ॥ २७ ॥ कथमात्मानमन्यभवादागतं वेत्सीत्याह—

मूलम्—अहमासि महापाणे, जुइमं वरिससओवमे । जा सा पाली महापाली, दिव्वा वरिससओवमा ॥२८॥

व्याख्या—'अहमासित्ति' अहमभूवं महाप्राणे ब्रह्मलोकविमाने द्युतिमान् वर्षशतजीविना उपमा यस्याऽसौ वर्षशतोपमः, मध्यपदलोपीसमासः, अयमर्थो यथेह सम्प्रति वर्षशतजीवी पूर्णायुरुच्यते तथाऽहमपि तत्र पूर्णायुरभूवं, तथाहि—या सा पालिरिव पालिः जीवितजलधारणाद्भवस्थितिः, सा चोत्तरत्र महाशब्दोपादानादिह पल्योपमप्रमाणा, महापाली सागरोपमप्रमाणा, तस्या एव महत्वात्, दिवि भवा दिव्या वर्षशतैः केशखण्डोद्धारहेतुभिरुपमा अर्थात् पल्यविषया यस्यां सा वर्षशतोपमा, तत्र मे महापालीदशरूपा दिव्या भवस्थितिरासीदित्युपस्कारः, ततश्चाहं वर्षशतोपमायुरभूवमिति भावः ॥ २८ ॥

मूलम्—से चुए बंभलोआओ, माणुस्सं भवमागओ । अप्पणो अपरेसिं च, आउं जाणे जहा तहा ॥२९॥

व्याख्या—से इति अथ स्थितिपालनानन्तरं च्युतो ब्रह्मलोकात् मानुष्यं भवमागत इत्थमात्मनो जातिस्मरणात्मकमतिशयमुक्त्वाऽतिशयान्तरमाह—आत्मनश्च परेषाञ्च आयुर्जानामि, यथा येन प्रकारेण स्यात्तथा तेनैव प्रकारेण न त्वन्यथेति भाव इति सूत्रद्वयार्थः ॥ २९ ॥ इत्थं प्रसङ्गादपृष्टमपि स्ववृत्तान्तमाचख्योपदेष्टुमाह—

मूलम्—नाणारुइं च छंदं च, परिवज्जिज्ज संजए । अणट्ठा जे अ सव्वत्था, इइ विज्जामणुसंचरे ॥३०॥

व्याख्या—नानाऽनेकधा रुचिं च प्रक्रमात् क्रियावाद्यादिमतविषयां वाञ्छां, छन्दश्च स्वमतिकल्पितमाशयं, इहापि नानेति सम्बन्धादनेकविधं परिवर्जयेत् संयतः । तथाऽनर्था निःप्रयोजनाः ये च व्यापारा इति गम्यं, 'सव्वत्था' अत्राकारस्यालाक्षणिकत्वात्सर्वत्र क्षेत्रादौ तानपि परिवर्जयेदिति सम्बन्ध इत्येवं रूपां विद्यां सम्यग्ज्ञानरूपां अनु लक्षीकृत्य सञ्चरेः सम्यक् संयमाध्वनि यायाः इति सूत्रार्थः ॥ ३० ॥ तथा—

मूलम्—पडिकमामि पसिणाणं, परमंतेहिं वा पुणो । अहो उट्ठिए अहोरायं, इइ विज्जा तवं चरे ॥३१॥

व्याख्या—प्रतिक्रमामि प्रतिनिवर्त्ते 'पसिणाणंति' प्रश्नेभ्यः शुभाशुभसूचकेभ्योऽङ्गुष्ठप्रश्नादिभ्यः, तथा परे गृहस्था

तेषां मंत्रास्तत्कार्यालोचनरूपास्तेभ्यो, वा समुच्चये, पुनर्विशेषणे, अतिसावद्यत्वं तेषां विशिनष्टि, सोपस्कारत्वात्सूत्रस्य यश्चैवं संयमं प्रति उत्थानवान् स 'अहो'! इति विस्मये, उत्थितो धर्मम्प्रत्युद्यतः, कश्चिदेव हि महात्मा एवंविधः स्यादित्याश्चर्यं, अहोरात्रं अहर्निशं, इति एतदनन्तरोक्तं 'विज्जत्ति' विद्वान् जानन् 'तवंति' गम्यत्वादवधारणस्य तप एव, न तु प्रश्नादि, चरेरासेवेथा इति सूत्रार्थः ॥ ३१ ॥ अथ संजययतिना कथमायुर्वेत्सीति पृष्टोऽसावाह—

मूलम्—जं च मे पुच्छसी काले, सम्मं सुद्धेण चेअसा। ताइं पाउकरे बुद्धे, तं नाणं जिणसासणे ॥ ३२ ॥

व्याख्या—यच्च मे इति मां पृच्छसि काले कालविषयं सम्यक् शुद्धेन चेतसोपलक्षितः 'ताइंति' सूत्रत्वात् तत् प्रादुष्कृतवान् प्रकटितवान् बुद्धः सर्वज्ञोऽत एव तज्ज्ञानं जिनशासने सावधारणत्वाद्वाक्यस्य जिनशासने एव, न त्वन्यत्र सुगतादिशासनेऽतो जिनशासने एव यत्नः कार्यो येन यथाऽहं जानामि तथा त्वमपि ज्ञास्यसि इति भावः, इति सूत्रार्थः ॥ ३२ ॥ पुनरुपदेष्टुमाह—

मूलम्—किरिअं रोअए धीरो, अकिरिअं परिवज्जए। दिट्ठिए दिट्ठिसंपन्ने, धम्मं चर सुदुच्चरं ॥ ३३ ॥

व्याख्या—क्रियाश्चास्ति जीव इत्यादिरूपां सदनुष्ठानात्मिकां वा रोचयेद्धीरोऽक्षोभ्यः, तथाऽक्रियां नास्त्यात्मा इत्यादिकां परिवर्जयेत्, ततश्च दृष्ट्या सम्यग्दर्शनरूपया उपलक्षिता या दृष्टिर्बुद्धिः, सा चेह प्रक्रमात् सम्यक्ज्ञानात्मिका, तया सम्पन्नो दृष्टिसम्पन्नः, एवं च सम्यक्दर्शनज्ञानान्वितः सन् धर्मं चर सेवस्व, सुदुश्चरं अत्यन्तकष्टानुष्ठेयमिति सूत्रार्थः ॥ ३३ ॥ पुनः क्षत्रियमुनिरेव संजयमुनिं महापुरुषदृष्टान्तैः स्थिरीकर्तुमाह—

मूलम्—एअं पुण्णपयं सोच्चा, अत्थधम्मोवसोहिअं। भरहोवि भारहंवासं, चिच्चा कामाइं पव्वए ॥३४॥

व्याख्या—एतत् पूर्वोक्तं पुण्यहेतुत्वात् पुण्यं, पद्यते गम्यतेऽर्थोऽनेनेति पदं, पुण्यं च तत् पदं च पुण्यपदं, क्रियावादादिलक्षणनानारुचिवर्जनादिज्ञापकं शब्दसंदर्भं श्रुत्वा अर्थोऽर्थ्यमानतया स्वर्गाऽपवर्गादिः, धर्मस्तदुपायभूतः श्रुतधर्मादिस्ताभ्यामुपशोभितं अर्थधर्मोपशोभितं, भरतः प्रथमचक्री, अपिशब्द उत्तरापेक्षया समुच्चये, भारतं वर्षं क्षेत्रं त्यक्त्वा 'कामाइंति' चस्य गम्यत्वात्, कामांश्च 'पव्वएत्ति' प्राव्राजीत्, तत्कथांशस्त्वेवम्। तथाहि—

अत्रैव भरते शक्रा—ज्ञया श्रीदेन निर्मिता। अस्त्ययोध्या पुरी स्वर्ग—प्रतिस्पर्द्धिसमृद्धिका ॥ १ ॥ प्रथमः प्रथितः पृथ्व्यां, पुत्रः श्रीवृषभप्रभोः। सार्वभौमोऽभवत्तत्र, भरतो भरतेश्वरः ॥ २ ॥ चतुर्दशानां रत्नानां, विभुर्नवनिधिप्रभुः। द्वात्रिंशता सहस्रैर्भू—भुजां सेवितपत्कजः ॥ ३ ॥ लक्षैश्चतुरशीत्याऽश्व—रथेभानां समाश्रितः ॥ ग्रामाणां च पदातीनां, कोटिषण्णवतेः पतिः ॥ ४ ॥ लोकैर्द्वात्रिंशत्सहस्र—देशानां धृतशासनः ॥ सत्पत्तनसहस्राणां, द्विश्चतुर्विंशतेर्विभुः ॥ ५ ॥ द्वासप्ततेः श्रेष्ठपुर—सहस्राणामधीश्वरः ॥ सहस्रोनं द्रोणमुख—लक्षं च परिरक्षयन् ॥ ६ ॥ सुत्रकानां

१ 'अत्यन्तकष्टानुष्ठेयमितिपाठ. 'घ' पुस्तके नास्ति।

षोडशभिः, सहस्रैः सेवितोऽनिशम् ॥ षट्खण्डं भरतक्षेत्र—मखण्डाज्ञः प्रपालयन् ॥ ७ ॥ चतुष्षष्टिसहस्रान्तः—पुरस्त्रीभिः सहान्वहम् ॥ क्रीडन् पूर्वोक्तपुण्यद्रु—पुष्पाभं सौख्यमाश्रयन् ॥ ८ ॥ ऋषभस्वामिनिर्वाणा—स्पदेऽष्टापदपर्वते ॥ चैत्ये स्वकारिते भक्त्या, जिनबिम्बानि पूजयन् ॥ ९ ॥ साधर्मिकाणां वात्सल्यं, कुर्वन्नाश्रितवत्सलः ॥ पूर्वलक्षाणि षट् क्षोणी—हर्यश्वः सोऽत्यवाहयत् ॥ १० ॥ [ अष्टभिः कुलकम् ] अन्यदा प्रातरभ्यक्तो—द्वर्त्तितस्नपिताङ्गकः ॥ आदर्शसदनं सोऽगा—त्सर्वालङ्कारभूषितः ॥११॥ तत्राऽऽत्मदर्शे महति, पश्यंश्चक्री निजं वपुः ॥ भ्रष्टाङ्गुलीयकामेकां, ददर्श स्वकराङ्गुलीम् ॥ १२ ॥ अशोभमानां तां प्रेक्ष्य, प्रेक्षावान् क्ष्माधवाग्रणीः ॥ सकलानप्यलङ्कारा—नेकैकमुदतारयत् ॥१३॥ तत उज्झितपाथोजं, पद्माकरमिवाऽऽत्मनः ॥ विलोक्य वपुरश्रीक—मिति दध्यौ धराधवः ॥ १४ ॥ अहो! आगन्तुकैरेव—द्रव्यैरङ्गं विराजते ॥ स्वाभाविकं तु सौन्दर्यं, किमप्यस्य न दृश्यते! ॥१५॥ स्वरूपासारतां वच्मि, यस्य संस्कारसारता ॥ मोहादेव तदप्यङ्गं, जना जानन्ति मञ्जुलम्! ॥ १६ ॥ मनोज्ञमप्यन्नपान—पुष्पगन्धांशुकादिकम् ॥ विनश्यत्यस्य सङ्गेन, ब्रह्मचर्यमिव स्त्रियाः! ॥ १७ ॥ तदहो निर्विवेकत्वं, विदुषामपि बालवत् ॥ ये देहस्येदृशस्यापि, कृते पापानि कुर्वते! ॥ १८ ॥ तन्मोक्षदायि मानुष्यं, शरीरार्थेन पाप्मना ॥ द्यूतेनेव द्युसद्रत्नं, युक्तं नाशयितुं न मे ॥१९॥ ध्यायन्नित्यादि सम्प्राप्तः, संवेगमधिकाधिकम् ॥ आरूढः क्षपकश्रेणी, निश्रेणीं शिवसद्मनः ॥ २० ॥ घनघातिक्षयं

१ क्षोणीहर्यश्व. भूमीन्द्रः ॥

छुत्वा, भावचारित्रमाश्रितः ॥ अज्ञानतिमिरादित्यं, केवलज्ञानमाप सः ॥ २१ ॥ [ युग्मम् ] कृतलोचं शक्रदत्तं, मुनिवेशं दधत्ततः ॥ निर्जगाम गृहात्पङ्क्ति–साधुभोनुरिवाम्बुदात् ॥ २२ ॥ तमुपात्तव्रतं वीक्ष्य, क्षामसंसारवासनाः ॥ भूपा दश सहस्राणि, दीक्षामाददिरे मुदा ! ॥ २३ ॥ ततः शक्रादयो देवा–स्तं नत्वा स्वाश्रयं ययुः ॥ क्षितिं व्यहा- र्षीद्भगवा–नपि भव्यान् प्रबोधयन् ॥ २४ ॥ सप्तसप्ततिलक्षाणि, पूर्वाणां भरतप्रभोः ॥ कौमारे मण्डलित्वे तु, सहस्रं शरदामभूत् ॥ २५ ॥ चक्रित्वेऽष्टसहस्रोनाः, पूर्वलक्षा रसोन्मिताः ॥ पूर्वाणां लक्षमेकं तु, केवलीत्वे भतेऽपि च ॥ २६ ॥ सर्वायुषा चतुरशीतिमितानि पूर्व–लक्षाणि सम्यगतिगम्य महेन्द्रनम्यः ॥ कर्मक्षयेण भरतेश्वरसाधुराजो, भेजे महोदयरमामुदितोदितश्रीः ॥ २७ ॥ इतिभरतचक्रिकथालेशः ॥ ३४ ॥

मूलम्—सगरोवि सागरंतं, भरहवासं नराहिवो। इस्सरिअं केवलं हिच्चा, दयाए परिनिव्वुए ॥ ३५॥

व्याख्या—सगरो पि द्वितीयचक्री सागरान्तं पूर्वादिदिक्त्रये समुद्रपर्यन्तं, उत्तरस्यां तु हिमवदन्तं भरतवर्षं नरा- धिपः, ऐश्वर्यञ्च केवलं परिपूर्णं हित्वा दयया संयमेन परिनिर्वृतो मुक्तः । तद्वृत्तलेशो यथा, तथाहि—

अयोध्यायां पुरि क्ष्मापो, जितशत्रुरभूज्जयी ॥ युवराजोऽनुजस्तस्य, सुमित्रविजयाह्वयः ॥ १ ॥ तयोर्महिष्यौ विज- या–यशोमत्यौ बभूवतुः ॥ शक्रेशानाभ्यां स्वकल्प–सारे देव्याविवार्पिते ! ॥ २ ॥ तयोश्चतुर्दशस्वप्न–सूचितौ सद्गुणा- न्वितौ ॥ सुतावभूतामजित–सगरौ जिनचक्रिणौ ॥ ३ ॥ जितशत्रुसुमित्राभ्या–मेकदा स्वीकृते व्रते ॥ नृपोऽभूदजि- तस्वामी, युवराट् सगरः पुनः ॥ ४ ॥ न्यस्यान्यदाऽनुजं राज्ये, प्राव्राजीदजितप्रभुः ॥ ततो बभूव सगर–श्चक्रवर्ती महाभुजः ॥ ५ ॥ क्रमात्षष्टिसहस्राणि, तनयास्तस्य जज्ञिरे ॥ तेषु ज्येष्ठोऽभवज्जह्नुः, सोऽन्यदाऽप्रीणयन्नृपम् ॥ ६ ॥ ततः पित्रा वरे दत्ते, सोऽवादीत्त्वत्प्रसादतः ॥ दिदृक्षेऽहं महीं भ्रातृ–युक्तो दण्डादिरत्नवान् ॥ ७ ॥ राजाऽनुज्ञातोऽथ जह्नुः, ससैन्यः प्रस्थितस्ततः ॥ विहिताश्चर्यसन्दर्भा, रत्नगर्भा विलोकयन् ॥ ८ ॥ चतुर्योजनविस्तारं, योजनाष्टकमुन्न- तम् ॥ प्राप्तोऽष्टापदमारोह–त्सह सर्वैः सहोदरैः ॥ ९ ॥ [ युग्मम् ] क्रोशद्वयपृथु क्रोश–त्रयोच्चं योजनायतम् ॥ चतु- र्मुखं रत्नमयं तत्र चैत्यं ददर्श सः ॥१०॥ ऋषभाद्यर्हतामर्चाः, स्वस्वमानादिशोभिताः ॥ स्तूपांश्च भरतादीनां, शतं तत्र ननाम सः ॥ ११ ॥ सुषमां तस्य शैलस्य, चैत्यस्य च विलोकयन् ॥ पीतामृत इवात्यर्थं, जहर्ष सगराङ्गजः ॥ १२ ॥ केनेदं कारितं चैत्य–मित्यमात्यं च पृष्टवान् ? ॥ सोप्यूचे भरताख्येन, चक्रिणा पूर्वजेन वः ॥ १३ ॥ अथाख्यत्से- वकान् जह्नु–रीदृशं भरतेऽपरम् ॥ पश्यतार्द्रिं यथाऽस्माभिः, कार्यते चैत्यमीदृशम् ॥ १४ ॥ तेऽपि गत्वाऽऽगताः प्रोचु–र्नास्त्यन्योत्राऽद्रिरीदृशः ॥ ततो जगाद जह्नुस्त–द्रक्षामस्यैव कुर्महे ॥ १५ ॥ कालानुभावतो लुब्धा, भाविनो भाविनो जनाः ॥ उपद्रोष्यन्ति तेह्यत्र, तद्रक्षास्य महाफला ! ॥ १६ ॥ इत्युक्त्वा दण्डरत्नेन, जह्नुस्तं परितो गिरिम् ॥ सहस्रयोजनोद्वेधां, विदधे परिखां क्षणात् ॥ १७ ॥ तदा च दण्डरत्नेन, तेन दारयता महीम् ॥ क्रीडागेहानि नागा- नां, मृत्पात्राणीव पुस्फुटुः ॥ १८ ॥ तं प्रेक्ष्योपद्रवं क्षुब्धा, भुजङ्गा ज्वलनप्रभम् ॥ उपेत्य स्वप्रभुं सौध–भङ्गव्यति- करं जगुः ॥ १९ ॥ सोऽपि ज्ञात्वाऽवधेः क्रुद्धो–ऽभेत्योचे सगराङ्गजान् ॥ भुवं भवद्भिर्भिन्दानै–र्भोः ! किमेतत्कृतं जडैः ? ॥ २० ॥ उपद्रुता हि युष्माभि–र्नागास्तद्गेहभेदनैः ॥ ते च क्रुद्धा हनिष्यन्ति, युष्मान् सिंहा इव द्विपान् ॥ २१ ॥ तन्नूनं स्ववधायैव, प्रयत्नो भवतामयम् ॥ पतङ्गानां दीपपात–कृते पक्षबलं यथा ॥ २२ ॥ जह्नुर्जगौ तीर्थ- रक्षा–कृतेऽस्माभिरदः कृतम् ॥ तन्मन्तुमेनं भोगीन्द्र !, क्षमस्वाज्ञानसम्भवम् ॥ २३ ॥ आगः सोढमिदं नैनं, पुनः कार्यमिति ब्रुवन् ॥ अहीन्द्रोऽगात्ततो जह्नु–रिति दध्यौ सहानुजैः ॥ २४ ॥ परिखाऽसौ विना वारि, पांशुभिः पूर- यिष्यते ॥ तदेनां पूरयामोऽथ, पुण्यैर्मन्दाकिनीजलैः ॥ २५ ॥ तत्रार्थे सोदराः सर्वे, ज्यायांसमनुमेनिरे ॥ यादृशं भवितव्यं स्या–त्सहायाः खलु तादृशाः ! ॥ २६ ॥ ततः स दण्डेनाऽऽकृष्य, तत्र चिक्षेप जाह्नवीम् ॥ उपाद्रूयन्त भूयोऽपि, भोगिगेहास्तदम्भसा ॥२७॥ नागलोकं पुनर्वीक्ष्य, क्षुभितं ज्वलनप्रभः ॥ कोपावेशाद्बभूवाशु, प्रज्वलज्ज्वल- नप्रभः ॥ २८ ॥ सोऽथ दृष्टिविषान् प्रैषी–द्वधाय महोरगान् ॥ तैश्च निर्गत्य ते दृष्टा, दृष्टिभिर्विषवृष्टिभिः ॥ २९ ॥ ततस्ते भस्मतां भेजुः, सर्वेऽपि सगरात्मजाः ॥ तं चोत्पातं प्रेक्ष्य चक्रि–चक्रं चक्रन्द तद्भृशम् ॥ ३० ॥ ततः सैन्या- निति प्रोचे, सचिवः शोचितैरलम् ॥ नावश्यम्भाविनं भाव–मतिक्रामति कोऽपि हि ! ॥ ३१ ॥ तीर्थसेवातीर्थरक्षा- करणोपक्रियादिभिः ॥ कृतपुण्यार्जनाः शोच्या, न स्वामी स्वामीसूनवः ॥ ३२ ॥ तद्विमुच्य शुचं सर्वैः, क्षिप्रं प्रस्थि- यतामितः ॥ स्थाने सोपद्रवे स्थातुं, धीधनानां हि नोचितम् ॥३३॥ इति मंत्रिगिरा त्यक्ता–क्रन्दास्ते चलितास्ततः ॥

इत्ययोध्यामुपागत्य, सामन्ताद्या व्यचिन्तयन् ॥ ३४ ॥ दग्धाः स्वामिसुताः सर्वे–ऽप्यागता वयमक्षताः॥ लज्जाकर-मिदं राज्ञो–ऽग्रे कथं कथयिष्यते ? ॥ ३५ ॥ प्रविशामस्ततो वह्नि–मनन्यगतिका वयम् ॥ तानिति ध्यायतोऽभ्येत्य, विप्रः कोऽपीत्यभाषत ॥ ३६ ॥ कर्मणा शुभमन्यद्वा, नाङ्गिनां किं भवे भवेत् ? ॥ तद्याकुला भवत मा, वक्ष्याम्ये-तदहं प्रभोः ॥ ३७ ॥ इत्युदित्वा द्विजः कञ्चि–दनाथं शवमुद्वहन् ॥ गत्वा राजकुलद्वारे, व्यलापीदुच्चकैर्मुहुः ॥३८॥ तत् श्रुत्वा चक्रिणाऽऽहूय, पृष्टः किं रोदिषीति सः ? ॥ प्रोचे ममैक एवासौ, सूनुर्दष्टो महाहिना ॥ ३९ ॥ प्राप्तो निश्चेष्टतां देव !, तदेनं जीवयाऽधुना ॥ जाङ्गुलीकमथादिक्ष–त्तत्र कर्मणि भूधवः ॥ ४० ॥ ज्ञातभूपापत्यमृत्यु–रि-त्यूचे सोऽपि कोऽपि हि ॥ मृतो न स्याद्यत्र तस्मा–द्गृहादानयत मन्दिरात् ॥ ४१ ॥ यथाऽहं जीवयाम्येन–मिति तेनोदितो नृपः ॥ तद्गृहमामार्गयद्भृत्यैः, पुर्यां सर्वेषु वेश्मसु ॥ ४२ ॥ तेऽप्यागत्यावदन्नाथ !, सकला वीक्षिता पुरी ॥ परं पुरा यत्र मृतो, न कश्चिन्नास्ति तद्गृहम् ॥ ४३ ॥ राजाऽप्यूचेऽस्माकमपि, भूयांसः पूर्वजाः मृताः ॥ सर्वसाधारणे मृत्यौ, तत्किं कोविद ! खिद्यसे ? ॥ ४४ ॥ किं शोचसि ? मृतं पुत्रं, किञ्चिदात्महितं कुरु ॥ सिंहेनेव मृगो याव-न्मृत्युना त्वं न गृह्यसे ! ॥ ४५ ॥ भूदेवोऽथावदद्देव, जानाम्येतदहं परम् ॥ अद्यैव जायते पुत्र–मन्तरा मे कुल-क्षयः ॥ ४६ ॥ तद्बलाक्रान्तविक्रान्त–दीनानाथैकनाथ ! हे ॥ कथञ्चिज्जीवयित्वाऽमुं, पुत्रभिक्षां प्रदेहि मे ॥ ४७ ॥ भूयोऽप्यधान्मंत्रतंत्र–शस्त्रादीनामगोचरे ॥ अदृष्टविद्विषि विधौ, कः पराक्रमते ? कृतिन् ! ॥ ४८ ॥ तन्मुञ्च शोकं शोकोहि, विपदि क्रियते जडैः ॥ आर्यैस्तु कार्यं तत्रापि, धर्मकर्मैव शर्मकृत् ! ॥ ४९ ॥ विप्रः प्रोचे प्रभो! षष्टि–सह-स्राणि सुतास्तव ॥ सममेव विपन्नास्त–च्छोकं त्वमपि मा कृथाः ! ॥ ५० ॥ आः ! किमेतदिति क्ष्माप–स्ततो याव-दचिन्तयत् ॥ सामन्तमुख्यास्ते पूर्वं–सङ्केतात्तावदाययुः ॥ ५१ ॥ यथावृत्तेऽथ तैः प्रोक्ते, वज्राहत इव क्षणात् ॥ मूर्च्छितो न्यपतद्भूमौ, सार्वभौमः स विष्टरात् ॥ ५२ ॥ कथञ्चिल्लब्धसंज्ञस्तु, व्यलापीदिति भूपतिः ॥ हा ! पुत्रा मां विमुच्यैकं, यूयं सर्वेऽपि किं गताः ? ॥ ५३ ॥ अरे दुर्दैव ! तान् सर्वा–नपि संहरतः शिशून् ॥ न ते कृपा कृपाणाग्र–क्रूरचित्तस्य काप्यभूत् ॥५४॥ सुतानपि मृतान् श्रुत्वा, शतधा यन्न भिद्यसे ॥ तत्त्वां हृदय ! मन्येऽहं, निष्ठुरेभ्योऽपि निष्ठुरम् ॥ ५५ ॥ अतृप्तान् सर्वसौख्यानां, परलोकपथं श्रितान् ॥ यत्सुतान्नान्वगच्छं त–त्प्रेम कृत्रिममेव मे ॥ ५६ ॥ विलपन्तमिति प्रोच्चैः, स विप्रः स्माह चक्रिणम् ॥ मां निषिध्याऽधुनैव त्वं, स्वामिन्! रोदिषि किं स्वयम् ?॥ ५७ ॥ वियोगः प्रेयसां नाथ !, न स्यात्कस्याऽतिदुःसहः ?॥ सहते किन्तु तं धीरो, वडवाग्निमिवार्णवः॥ ५८ ॥ शिक्षादानं परेषां हि, तेषामेव विराजते ॥ आत्मानमपि ये काले, शिक्षयन्ति विचक्षणाः ! ५९ ॥ इति तद्वचनैर्मन्त्रि–वाक्यैश्च विविधैश्चिरात् ॥ आलम्ब्य धीरतां चक्री, चक्रे कालोचितक्रियाम् ॥ ६० ॥ तदा चाष्टापदासन्न–ग्रामेभ्योऽभ्येत्य मान-वाः ॥ राज्ञे व्यजिज्ञपन्नेवं, मुकुलीकृतपाणयः ॥ ६१ ॥ स्रोतस्विनीत्तमो देवा–ऽऽनिन्ये यद्भवतां सुतैः ॥ प्रपूर्य परिखां

१ गङ्गायाः ॥

ग्रामान्, प्लावयत्तन्निवार्यताम् ॥ ६२ ॥ राज्ञादिष्टस्ततः शिष्टः, पुत्रपुत्रो भगीरथः ॥ तत्र गत्वाऽष्टमं कृत्वा–ऽऽराधय-ज्ज्वलनप्रभम् ॥ ६३ ॥ प्रदत्तदर्शनं तं चे–त्यूचे युष्मत्प्रसादतः ॥ गङ्गां नीत्वाम्बुधौ लोकान्, करोमि निरुपद्रवान् ॥ ६४ ॥ वारयिष्यामि भुजगा–नहं भरतवासिनः ॥ तत्कुरुष्वाऽभयोऽभीष्ट–मित्युक्त्वाऽगात्ततोऽहिराट् ॥ ६५ ॥ नागपूजां ततः कृत्वा, दण्डरत्नेन जह्नुजः ॥ नीत्वा सुपर्वसरितं, पूर्वाब्धावुदतारयत् ॥ ६६ ॥ भगीरथो भोगिपूजां, तत्रापि विधिवत् व्यधात् ॥ गङ्गासागरसङ्गाख्यं, तत्तीर्थं पप्रथे ततः ॥ ६७ ॥ गङ्गापि जह्नुनाऽऽनीते–त्युक्ता लोकेन जाह्नवी ॥ भगीरथेन नीताब्धा–विति भागिरथी तथा ॥ ६८ ॥ अथो भगीरथोऽयोध्यां, गतस्तुष्टेन चक्रिणा ॥ सोत्सवं निदधे राज्ये, मूर्त्यन्तरमिवात्मनः ॥ ६९ ॥ स्वयं तु व्रतमादृत्य, सन्निधावजितप्रभोः ॥ सुदुस्तपं तपस्तेपे, सगरस्सत्यसङ्गरः ॥ ७० ॥ क्रमाच्च केवलज्ञानं, ध्वस्ताज्ञानमवाप्य सः ॥ द्वासप्तति पूर्वलक्षाः, समाप्यायुः शिवं ययौ ॥ ७० ॥ सर्वे समायुषो जह्नु–मुख्याः किं जज्ञिरे ? प्रभो !॥ ज्ञानी भगीरथेनेति, पृष्टोऽन्येद्युरदोऽवदत् ॥ ७२ ॥ सङ्घः पुरा जिनान्नन्तुं, सम्मेताद्रिं व्रजन्महान् ॥ सम्प्राप्य गहनप्रान्तं, प्रान्तग्रामे क्वचिद्ययौ ॥ ७३ ॥ अनार्यैस्तद्गतैः षष्टि–सहस्रप्रमितैर्जनैः ॥ एकेन कुम्भकारेण, वार्यमाणैरपि स्फुटम् ॥७४॥ स संघो मुषितो लुब्धैः, कथञ्चिदगमत् पुरः ॥ तैस्तु तत्प्रत्ययं सर्वैः, पापकर्म निकाचितम् ॥ ७५ ॥ [ युग्मम् ] अन्यदा कोऽपि तत्रत्यो–न्यत्र चौर्यं व्यधात्

१ सत्यप्रतिज्ञः ॥

पुरे ॥ पुरारक्षास्ततो ग्राम-मीयुस्तं तत्पदानुगाः ॥ ७६ ॥ ग्रामद्वाराणि चावृत्या-ऽज्वालयन् परितोऽनलम् ॥ स कुलालस्तु तत्राह्नि, ग्राममन्यं गतोऽभवत् ॥ ७७ ॥ तं विना ते ततः सर्वे, क्षुधा तृषा विपेदिरे ॥ मारिवाद्दकजीवत्वे-नाऽटव्यां चोपपेदिरे ॥ ७८ ॥ पिण्डीभूय स्थितास्तेऽथ, तत्रायातस्य हस्तिनः ॥ पादेन मर्दिता मृत्वा, चिरं भ्रेमुः कुयोनिषु ॥ ७९ ॥ पुण्यं च प्राग्भवे किञ्चि-त्कृत्वा ते सद्वदम्ययः ॥ जज्ञिरे चक्रिणः षष्टि-सहस्राणि सुता इमे ॥८०॥ प्राग्भवैर्दुर्भवैस्तस्य, यद्भुक्तस्य कर्मणः ॥ शेषांशेन मृता एते, सममेव महीपते ! ॥ ८१ ॥ कुलालोऽप्यन्यदा मृत्वा, सोऽभूत् क्वापि पुरे धनी ॥ तत्रापि सुकृतं कृत्वा, विपद्य क्वाप्यभून्नृपः ॥ ८२ ॥ भूयोऽपि सोऽन्यदा दीक्षां, लात्वा मृत्वा सुरोऽभवत् ॥ ततश्च्युतश्च त्वं जह्नु-जातो जातोऽसि भूपते ! ॥८३॥ भगीरथक्षोणिधवोऽथ वाचं, वाचंयमस्येति निशम्य सम्यक् ॥ सुश्राद्धधर्मं प्रतिपद्य सद्यं, सद्योऽनवद्यः स्वपुरीं जगाम ॥८४॥ इति सगरचक्रवर्त्तिकथालेशः ॥३५॥

मूलम्—चइत्ता भारहं वासं, चक्कवट्टी महिड्ढीओ। पव्वज्जमब्भुवगओ, मघवं नाम महायसो ॥ ३६ ॥

व्याख्या—सुगमं, तत्कथालेशस्त्वेवं, तथा हि—

अभूदिहैव भरते, महीमण्डलसत्पुरे ॥ वासुपूज्यप्रभोस्तीर्थे, नाम्ना नरपतिर्नृपः ॥ १ ॥ स्वप्रजावत् प्रजाः सम्यक्, पालयित्वा चिरं स राट् ॥ संत्यज्य राज्यमन्येद्यु-र्विरक्तो व्रतमाददे ॥ २ ॥ अप्रमत्तश्चिरं दीक्षां, पालयित्वा विपद्य च ॥ अहमिन्द्रः स गिर्वाणो, मध्यग्रैवेयकेऽभवत् ॥ ३ ॥ इतश्चात्रैव भरते, श्रावस्त्यां पुरि भूपतिः ॥ श्रिया समुद्रविजयी, समुद्रविजयोऽभवत् ॥ ४ ॥ तस्य भार्याऽभवद्भद्रा, भद्राकारजितामरी ॥ सोऽथ देवोऽन्यदा च्युत्वा, तस्याः कुक्षाववातरत् ॥ ५ ॥ चतुर्दशमहास्वप्नां-स्तदा च प्रेक्ष्य सा मुदा ॥ राज्ञे जगाद चक्री ते, सुतो भावीति सोऽप्यवक् ॥ ६ ॥ क्रमाच्च सुषुवे पुत्रं, राज्ञी पूर्वेव भास्करम् ॥ महोत्सवैर्नृपस्तस्य, मघवेत्यऽभिधां व्यधात् ॥ ७ ॥ संप्राप्तः सोऽथ तारुण्यं, दत्तराज्यो महीभुजा ॥ उत्पन्नचक्रः षट्खण्डं, साधयामास भारतम् ॥ ८ ॥ भुक्त्वा चिरं चक्रिरमां विरक्तः, प्रान्ते परिव्रज्य स चक्रवर्त्ती ॥ पंचाब्दलक्षीमतिवाह्य सर्वा-ऽऽयुषो सुरोऽभूत्त्रिदिवे तृतीये ॥ ९ ॥ इति श्रीमघवचक्रिकथा ॥ ३६ ॥

मूलम्—सणंकुमारो मणुस्सिंदो, चक्कवट्टी महिड्ढीओ। पुत्तं रज्जे ठवित्ता णं, सोवि राया तवं चरे ॥३७॥

व्याख्या—स्पष्टं-तच्चरितं चैवं, तथा हि—

अस्तीह काञ्चनपुरं, समृद्धं काञ्चनर्द्धिभिः ॥ तत्रासीद्विक्रमयशा, विक्रमाक्रान्तभूर्नृपः ॥ १ ॥ तस्य पंच शतान्यासन्, राज्ञो विश्वमनोहराः ॥ तत्र चाभूत् पुरे नाग-दत्ताह्वः सार्थपो धनी ॥ २ ॥ रूपलावण्यसौभाग्य-निर्जितामरसुन्दरी ॥ विष्णुश्रीरिति तस्यासी-त्कान्ता विष्णोरिवाब्धिजा ॥ ३ ॥ तां चान्यदा नृपोऽपश्य-न्मनसः पश्यतोहराम् ॥ दध्यौ चेमां विना जन्म, राज्यं चैतन्ममाऽफलम् ! ॥ ४ ॥ चिक्षेप क्षितिपः क्षिप्र-मन्तरन्तःपुरं च ताम् ॥ प्राणिनो हि प्रियः प्रायो-ऽन्यायोऽपथ्यमिवाऽपटोः ॥ ५ ॥ विनाऽपि विप्रियं त्यक्त्वा, प्रियं क्वासि ? गता प्रिये ! ॥ विलपन्निति सार्थेशो, बभ्रामोन्मत्तवत्ततः ! ॥ ६ ॥ शुद्धान्तनारीसहितां, लज्जां लोकापवादजां ॥ विमुच्य रेमे भूपस्तु, नित्यं विष्णुश्रिया समम् ॥ ७ ॥ जातासूयास्ततो राज्यो-ऽकारयन् कार्मणं तथा ॥ मृगाक्षी क्षीयमाणा सा, व्यपद्यत यथा स्वयम् ॥ ८ ॥ ततस्तस्या वियोगेन, दुस्सहेन दवाग्निवत् ॥ नागदत्त इवोन्मत्तः, पृथ्वीनाथोऽभवद्भृशम् ॥ ९ ॥ नाग्नौ क्षेप्तुमदात्तस्याः, शवं स स्नेहमोहितः ॥ ऊचे च मत्प्रिया मौनं, धत्ते प्रणयकोपतः ! ॥ १० ॥ सचिवाः किञ्चिदालोच्य, वञ्चयित्वा च पार्थिवम् ॥ विपिने क्षेपयंस्तस्या, धेनोरिव शवं ततः ॥ ११ ॥ तांश्चापश्यन्नश्रुनीर-धाराभिः स धराधरः ॥ धरां धारधर इव, सिञ्चन्नाटीदितस्ततः ॥ १२ ॥ कान्ते ! कान्तस्त्वदेकान्त-स्वान्तो विरहविह्वलः ॥ ह्यास्यान्नोपेक्षणार्हः स्या-दिति चाक्रन्ददुच्चकैः ! ॥ १३ ॥ इत्थं त्यक्तान्नपानस्य, गते राज्ञो दिनत्रये ॥ अमात्या म्रियतां माय-मिति तं काननेऽनयन् ॥ १४ ॥ तत्र च प्रसरत् पूती-क्लिन्नं कृमिकुलाकुलम् ॥ गृध्रविक्षिप्तवक्षोजं, वायसाकृष्टलोचनम् ॥ १५ ॥ आकृष्टांत्रं शृगालीभि-रावृतं मक्षिकागणैः ॥ विष्णुश्रियो वपुर्वीक्ष्या-ऽध्यासीदिति महीपतिः ॥ १६ ॥ [ युग्मम् ] अहो असारे संसारे, सारं किंचिन्न दृश्यते ॥ मया त्वसौ सारमिति-ऽध्याता मूढेन धिक् चिरम् ॥ १७ ॥ कुलशीलयशोलज्जा-स्त्यक्ता यस्याः कृते त्वया ॥ रेजीव ! मत्त ! पश्याद्य, तस्या जातेदृशी दशा ! ॥ १८ ॥ प्रियेति यां पृथक्कर्त्तु-मसुवं न प्रभुः क्षणम् ॥ वीक्ष्य तामपि शीतार्त्त-मिव मे वेपते वपुः ! ॥ १९ ॥ ततो धर्मक्रियानीरैः, पापपङ्कपरिप्लुतम् ॥ आत्मानं विमलीकर्त्तुं, साम्प्रतं मम साम्प्रतम् ॥ २० ॥ विमृश्येति विरक्तात्मा,

सुव्रताचार्यसन्निधौ ॥ राज्यं रज इवोत्सृज्य, प्रव्रज्यामाददे नृपः ॥ २१ ॥ तपोभिः विविधैः साकं, कर्मभिः शोषयन् वपुः ॥ चिरं विहृत्य व्यापन्न–स्तृतीयं स्वर्जगाम सः ॥ २२ ॥ ततश्च्युतो रत्नपुरे, जिनधर्माऽभिधोऽभवत् ॥ श्रेष्ठिपुत्रः श्राद्धधर्मे, शुद्धं बाल्यादपि श्रितः ॥ २३ ॥

इतश्च कान्ताविरहा–न्नागदत्तोऽतिदुःखितः ॥ मृत्वार्त्तध्यानतो भ्रामं, भ्रामं तिर्यक्षु भूरिशः ॥ २४ ॥ अग्निशर्माह्वयो विप्रः, पुरे सिंहपुरेऽभवत् ॥ पुण्याशया त्रिदण्डित्वं, स्वीचकार स चैकदा ॥ २५ ॥ [ युग्मम् ] द्विमासादि तपः कुर्वन्, सोऽगाद्रत्नपुरेऽन्यदा ॥ त्रिदण्डिभक्तस्तत्राभू–द्भूपतिर्नरवाहनः ॥ २६ ॥ तेन राज्ञा तपस्वीति, भोक्तुं नीतो निजे गृहे ॥ सोऽपश्यज्जिनधर्मं तं, दैवात्तत्रागतं तदा ॥ २७ ॥ ततः प्राग्भववैरेण, कोपाटोपारुणेक्षणः ॥ नरवाहनमूमीश–मित्यूचे स त्रिदण्डिकः ॥ २८ ॥ अस्याढ्यस्य न्यस्य पृष्टे, पात्रमत्युष्णपायसम् ॥ चेद्विभो ! भोजयसि मां तदा भुञ्जे भवद्गृहे ॥ २९ ॥ स्थालमन्यस्य विन्यस्य, पृष्ठे त्वां भोजयाम्यहम् ॥ नृपेणेत्युदितो रुष्टो, दुष्टो भूयोऽवदद्व्रती ॥ ३० ॥ पृष्ठेऽस्यैव न्यस्य पात्रं, भुञ्जे गच्छामि वाऽन्यतः ॥ तद्भक्तः स ततो भूपः, प्रत्यपद्यत तद्वचः ॥ ३१ ॥ नृपादेशात्ततः पृष्ठे, तेन दत्ते स तापसः ॥ अत्युष्णपायसं स्थालं, न्यस्य भोक्तुं प्रचक्रमे ॥ ३२ ॥ श्राद्धोऽपि स्थालतापं तं, सोऽधिसेहे विशुद्धधीः ॥ स्वस्यैव कर्मणोऽयं हि, विपाक इति चिन्तयन् ॥ ३३ ॥ भुक्ते भिक्षौ श्रेष्ठिपृष्ठात्समं त्वग्मांसशोणितैः ॥ जनैः स्थालं तदुत्खातं, ततः श्रेष्ठी गृहं ययौ ॥ ३४ ॥ सत्कृत्य क्षमयित्वाऽथ, स्वजनान् पुर्जनांस्तथा ॥ जिनधर्मो गुरूपान्ते, प्रव्रज्य जिनधर्मवित् ॥ ३५ ॥ पुरान्निर्गत्य विहिता–ऽनशनोऽद्रिशिरस्थितः ॥ पक्षं पक्षं कृतोत्सर्गः, क्रमादस्थाच्चतुर्दिशम् ॥ ३६ ॥ [ युग्मम् ] गृध्रकाकादिभिर्भक्ष्य–माणपृष्ठोऽपि तत्र सः ॥ सहमानो व्यथामुग्रां, स्मरन् पञ्चनमस्क्रियाः ॥ ३७ ॥ विपद्य प्रथमस्वर्गे, बभूव त्रिदशाधिपः ॥ आनुषङ्गि फलं ह्येतत्, जिनधर्मविधायिनाम् ॥ ३८ ॥ [ युग्मम् ] तापसोऽपि मृतस्तेना–ऽऽभियोग्येन कुकर्मणा ॥ ऐरावणाह्वयो हस्ती, जज्ञे तस्यैव वाहनम् ॥ ३९ ॥ ततश्च्युतो भवे भ्रान्त्वा, कृत्वा बालतपः क्वचित् ॥ यक्षोऽसिताक्षनामाभू–ज्जीवस्तस्य त्रिदण्डिनः ॥ ४० ॥

इतश्चात्रैव भरते, विषये कुरुजङ्गले ॥ अस्ति स्वस्तिपदं श्रीम–न्नगरं हस्तिनापुरम् ॥ ४१ ॥ जैत्रसेनोऽश्वसेनाह्व–स्तत्राभूद्भूभुजां वरः ॥ सहदेवीति तस्यासी–द्देवी देवीव भूगता ॥ ४२ ॥ तस्याः कुक्षौ जिनधर्म–जीवः स्वर्गात्परिच्युतः ॥ चतुर्दश महास्वप्नान्, दर्शयन् समवातरत् ॥ ४३ ॥ पूर्णे कालेऽथ साऽसूत, सुतं लक्षणलक्षितम् ॥ जगज्जनमनोहारि, रूपं लक्ष्मीरिव स्मरम् ॥ ४४ ॥ सनत्कुमार इत्याख्यां, चक्रे तस्योत्सवैर्नृपः ॥ सोऽथ क्रमेण ववृधे, कल्पद्रुम इवोद्गतः ॥४५॥ श्रीमान् महेन्द्रसिंहाख्यः, कालिन्दीसुरयोः सुतः ॥ सपांशुक्रीडितस्तस्य, वयस्यः शस्यधीरभूत् ॥ ४६ ॥ समं तेन वयस्येन, कलाचार्यस्य सन्निधौ ॥ सनत्कुमारः सकलाः, कलाः जग्राह लीलया ॥४७॥ अमंत्रयंत्रनिर्ग्रंथ–कामिनीजनकार्मणम् ॥ लावण्यपुण्यं तारुण्यं, कुमारः प्राप स क्रमात् ॥४८॥ उद्यानं मकरन्दाख्यं, वसन्तसमयेऽन्यदा ॥ समं महेन्द्रसिंहेन, क्रीडायै भूपभूर्ययौ ॥ ४९ ॥ नानाक्रीडाभिरक्रीड–त्तत्रा मित्रेण तत्र सः ॥ तदा च राज्ञोऽश्वपति–र्वयान्याहानढौकयत् ॥ ५० ॥ हयं जलधिकल्लोला–ह्वयं भूपभुवोऽप्यधात् ॥ कुमारोऽपि तमारोह–त्तद्गतिं द्रष्टुमुत्सुकः ॥ ५१ ॥ कशां चोत्क्षिप्य तं यावत्, प्रेरयामास भूपभूः ॥ सोऽश्वस्तावद्दधावोच्चै–र्वायुं जेतुमना इव ॥ ५२ ॥ यथा यथाकृषद्वल्गां, रक्षितुं तं नृपाङ्गजः ॥ स वक्रशिक्षितो वाहो, ववधावत्तथा तथा ॥ ५३ ॥ राज्ञां राजकुमाराणां, सादिनां धावतामपि ॥ मध्यात्कुमारं हृत्वाऽश्वः, क्षणात्सोऽगाददृश्यताम् ॥ ५४ ॥ ततोऽश्वसेनभूशक्रो, ज्ञात्वाऽश्वापहृतं सुतम् ॥ प्रत्यानेतुं स सैन्योगा–द्यावद्वाजिपदानुगः ॥ ५५ ॥ तावद्भूरिरजःपुञ्ज–दिग्मूढीकृतसैन्यया ॥ भग्नानि पादचिह्नानि, तस्य वाहस्य वात्यया ॥ ५६ ॥ निरुपाये ततोऽत्यर्थं, व्याकुले सकले बले ॥ महेन्द्रसिंहो भूमीन्द्र–सिंहमित्थं व्यजिज्ञपत् ॥ ५७ ॥ देव ! दैवादिदं सर्व–मजनिष्टासमञ्जसम् ॥ तथापि मित्रमन्विष्या–ऽऽनेष्यामि न चिरादहम् ॥ ५८ ॥ प्रभोः प्रभूतसैन्यस्य, कान्तारे दुष्करा भ्रमिः ॥ सुकरा सा खगस्येव, स्वल्पतंत्रस्य मे पुनः ॥ ५९ ॥ तत्तिष्ठतु प्रभुर्यामि, स्वामीन् ! सुहृदमन्वहम् ॥ तेनेत्युक्तोऽवलिष्टोर्वी–पतिरश्रुजलाविलः ॥ ६० ॥ धीरो महेन्द्रसिंहस्तु, मितसारपरिच्छदः ॥ क्रीडावनीं यमस्यैवा–ऽरण्यानीं प्रविवेश ताम् ॥ ६१ ॥ प्रौढपादैरुग्रदन्तैः, प्रक्षरन्मदनिर्झरैः ॥ करीन्द्रैश्च गिरीन्द्रैश्च, क्वापि दुर्गमतां गताम् ॥ ६२ ॥ क्वापि प्रारब्धसमर–सैरिभोत्खातपादपाम् ॥ सङ्कीर्णां केशरीव्याघ्र–व्यालभल्लूकसूकरैः ॥ ६३ ॥ भानुभानुगणाभेद्य-निकुञ्जनिकरैः क्वचित् ॥

न्तःपुरपुरन्ध्रीव–दसूर्यम्पश्यजम्बुकाम् ॥ ६४ ॥ क्वचित्कण्ठीरवरव–त्रस्यन्मृगकुलाकुलाम् ॥ क्वापि दावाग्निसन्ताप–
मुर्मुरीभूतभूतलाम् ॥ ६५ ॥ क्वचिच्छरभसंरम्भ–सम्भ्रान्तोद्भ्रान्तकुञ्जराम् ॥ शाखारूढैरजगरैः, क्वापि कुब्जीकृतद्रुमाम्
॥ ६६ ॥ तस्याटवीं तामटतो, भीषणेभ्योऽपिभीषणाम् ॥ शनैः शनैरगात्सर्वः, खेदक्षयैः परिच्छदः ॥ ६७ ॥[ पञ्चिः
कुलकम् ] तत एकोपि कुञ्जेषु, कन्दरासु च भूभृताम् ॥ भिल्लेश इव सोऽभ्राम्य–न्मित्रं द्रष्टुं धनुर्द्धरः ॥ ६८ ॥ नि-
दाघवर्षाशीतर्तून्, क्षुधातृष्णाश्रमांश्च स ॥ मित्रैकतानो नाज्ञासी–द्योगीव ध्यानतत्परः ॥ ६९ ॥ तस्यैवं भ्राम्यतोऽ-
टव्यां, व्यतीते वत्सरेऽन्यदा ॥ कर्णातिथित्वमगम–त्सरसः सारसध्वनिः ॥ ७० ॥ घ्राणं चाप्रीणयद्वायुः, कमलामो-
दमेदुरः ॥ ततः पद्मसरः किञ्चि–दिहास्तीति विवेद सः ॥७१॥ सोऽथ पद्माकरमभि–व्रजन् वीरव्रजाग्रणीः ॥ सङ्गी-
तमिश्रमश्रौषी–द्वेणुवीणाकलक्वणम् ॥ ७२ ॥ ततः प्रमुदितः प्राज्ञ–पुरोगस्स पुरो गतः ॥ ददर्श दर्शनसुधा–अनं मित्रं
वधूवृतम् ॥ ७३ ॥ किं मनोविभ्रमः किं वा, सखाऽसौ मे सुखाकरः ? ॥ सोऽथ ध्यायन्निति तदे–त्यश्रौषीद्वन्दिनो
वचः ॥ ७४ ॥ कुरुवंशावतंसश्री–अश्वसेननृपात्मज ! ॥ सनत्कुमार ! सौभाग्य–जितमार ! चिरं जय ॥ ७५ ॥
निशम्येति प्रमोदाश्रु–वृष्टिमेघायितेक्षणः ॥ गत्वा स दृक्पथं सख्यु–र्न्यपतत् पादपद्मयोः ॥ ७६ ॥ अभ्युत्थाय कुमा-
रोऽपि, दोर्भ्यामादाय सादरम् ॥ तमालिलिङ्ग सर्वाङ्गं, हर्षाश्रैः स्नपयन्निव ॥ ७७ ॥ अथाचिन्त्यमिथःसङ्गा–त्तौ द्वयं
जातविस्मयौ ॥ हर्षोदञ्चद्रोमहर्षा–वासीनावासनद्वये ॥ ७८ ॥ वीक्षितौ खेचरगणैः, स्मयमानैः सविस्मयैः ॥ क्षणं
बाष्पाम्बुपूर्णाक्षौ, परस्परमपश्यताम् ॥ ७९ ॥ [ युग्मम् ] खेचरीनिकरे त्यक्त–गीतादितुमुले ततः ॥ कुमारः स्वदृशो-
रश्रु, प्रमृज्य तमदोवदत् ॥ ८० ॥ त्वमत्रागाः किमेकाकी, कथं वा मामिहाऽविदः ? ॥ अन्तरामामियन्तं चा–ऽग-
मयः समयं कथम् ? ॥८१॥ पित्रोः का विद्यते हृद्य !, मद्वियोगवशाद्दशा ॥ पितृभ्यां प्रहितो हन्त, त्वमिहापि किमे-
ककः ? ॥ ८२ ॥ तेनेति पृष्टः स्निग्धेषु, प्रष्ठो गद्गदयागिरा ॥ महेन्द्रसिंहः सकलं, प्राच्यं वृत्तान्तमब्रवीत् ॥ ८३ ॥
ततः स्नेहं च धैर्यं च, सकर्णैस्तस्य वर्णयन् ॥ कुमारोऽकारयत् स्नान–भोजनादि वधूजनैः ॥ ८४ ॥ महेन्द्रोऽथ कु-
मारेन्द्र–मित्युवाच कृताञ्जलिः ॥ आरभ्याश्वापहारात्स्वां, वार्त्तां ब्रूहि प्रसद्य मे ! ॥ ८५ ॥ तेनेत्युक्तः कुमारोऽन्त–
रिति दध्यौ विशुद्धधीः ॥ स्वनामेव स्वयं वक्तु–मयुक्ता स्वकथा सताम् ! ॥ ८६ ॥ स्वतुल्यस्य वयस्यस्य, वाच्या चाव-
श्यमस्य सा ॥ कथयामि तदन्येन, केनाप्येनां सविस्तराम् ॥ ८७ ॥ ध्यात्वेति कान्तां वकुल–मत्याह्वामिति सोऽव-
दत् ॥ प्रियेऽस्मै मत्कथां तथ्यां, वद विज्ञाय विद्यया ॥ ८८ ॥ शुभाशये ! शयेऽहं तु, निद्राघूर्णितलोचनः ॥ इत्यु-
दित्वा रतिगृहं, प्रविश्याशेत भूपभूः ॥ ८९ ॥ ततो महेन्द्रसिंहं सा–ऽवदत्तव सुहृत्तदा ॥ निन्ये हयेन हृत्वाऽऽशु,
कान्तारमतिभीषणम् ॥ ९० ॥ द्वितीयेऽपि दिने तत्र, व्रजन् वाजी जवेन सः ॥ तस्थौ मध्यंदिने कृष्ट्वा, रसनां क्षुत्तृ-
षातुरः ॥ ९१ ॥ ततः स्तब्धक्रमाच्छ्वासा–पूर्णकण्ठात् श्रमाकुलात् ॥ तस्मादुत्तीर्यार्यपुत्रः, पर्याणमुदतारयत् ॥ ९२ ॥
घूर्णित्वाऽश्वस्ततोऽपप्तत्, प्राणैश्च मुमुचे द्रुतम् ॥ तृषाकुलः सखा ते तु, तदाटीत्परितोऽम्भसे ॥ ९३ ॥ तच्चाप
क्वापि न ततः, तृषाक्रान्तः श्रमातुरः ॥ दवदग्धाटवीतापो–त्तप्तोऽसौ व्याकुलोऽभवत् ॥ ९४ ॥ वीक्ष्य सप्तच्छदं दूरे,
गत्वा तस्य तले द्रुतम् ॥ निविष्टोऽयं क्षणात्क्षोणौ, पपात भ्रमितेक्षणः ॥ ९५ ॥ पुण्येन प्रेरितो यक्ष–स्तदासप्तच्छ-
दालयः ॥ सर्वाङ्गेषु सिषेचामुं, शीतलैर्विमलैर्जलैः ॥ ९६ ॥ प्राप्तसंज्ञस्ततस्तोयं, पीत्वासौ यक्षढौकितम् ॥ कस्त्वं कुतो
जलं चैत–दानीतमिति पृष्टवान् ? ॥ ९७ ॥ सोवादीदस्मि यक्षोऽह–मिहत्यस्त्वत्कृते कृतिन् ! ॥ सरसः सरसं नीर–
मानयं मानसादिदम् ॥ ९८ ॥ सुहृत्तवोचे तापोऽयं, मानसे मज्जनं विना ॥ न मेऽपगन्ताविरह–इवेष्टप्राप्तिमन्तरा
॥ ९९ ॥ तवाभीष्टं करोमीति, प्रोच्याऽमुं यक्षराट् ततः ॥ कृत्वा पाणिपुटेऽनैषी– न्मानसं स्वच्छमानसः ॥ १०० ॥
तत्राऽमुं विहितस्नान–मपनीतपरिश्रमम् ॥ यक्षोऽसिताक्षः प्राग्जन्म–विपक्षः क्षिप्रमैक्षत ॥ १०१ ॥ क्रोधाध्मातः
सोऽथ बाढं, विकुर्वन् गुह्यकब्रुवः ॥ आर्यपुत्राय चिक्षेप, वृक्षमुत्क्षिप्य तत्क्षणम् ॥ १०२ ॥ तमायान्तं निहत्यार्यं,
पाणिनाऽपानयत्तरुम् ॥ यक्षस्तमोमयं विश्वं, ततश्चक्रे रजोव्रजैः ॥१०३॥ भीमाट्टहासान् धूमाभ–भूघनान् विकृताकृ-
तीन् ॥ पिशाचांश्च ज्वलज्ज्वाला–करालवदनान् व्यधात् ॥१०४॥ तैरप्यभीतं त्वन्मित्रं, नागपाशैर्बबन्ध सः ॥ तान्स-
घोऽत्रोटयदयं, जीर्णरज्जुरिव द्विपः ॥ १०५ ॥ ततो यक्षःकराघातै–र्घोरैरेतमताडयत् ॥ असौ तु तं न्यहन्मुष्ट्या, वज्रेणेव
गिरिं हरिः ॥ १०६ ॥ आर्यपुत्रमथो लोह–मुद्गरेण जघान सः ॥ विरमन्ति हि नाकृत्या–त्कथंचिदपि दुर्जनाः ;
॥ १०७ ॥ उन्मूलितेन सहसा, महता चन्दनद्रुणा ॥ तं वर्द्धिष्णुं निहत्योर्व्यां, सखा तेऽपातयत्ततः ॥ १०८ ॥ गिरि-

मुत्क्षिप्य यक्षोथा–ऽक्षिपदस्योपरि द्रुतम् ॥ क्षणं निश्चेतनो जज्ञे, बाधितस्तेन ते सुहृत् ॥ १०९ ॥ लब्धसंज्ञस्तु तं शैल–मवधूयोत्थितो द्रुतम् ॥ आर्यपुत्रो नियुद्धेन, योद्धुमाह्वास्त गुह्यकम् ॥ ११० ॥ ततोऽसौ बाहुदण्डेन, हत्वा तं खण्डशो व्यधात् ॥ अमरत्वात्तदा मृत्यु–माससाद न गुह्यकः ॥ १११ ॥ ततो रसित्वा विरस–मसिताक्षः पलायत ॥ पुरो हि हस्तिमल्लस्य, महिपः स्यात्कियच्चिरम् ॥ ११२ ॥ वीक्षितुं समराश्चर्य–मागताः सुरखेचराः ॥ मौलौ त्वत्सुहृदः पुष्प–वृष्टिं तुष्टा वितेनिरे ! ॥ ११३ ॥ अपराह्ने पुरो गच्छं–स्ततोऽसौ नन्दने वने ॥ ददर्शाष्टौ कनीः शक्र–महिषी-रिव सुन्दराः ॥ ११४ ॥ कटाक्षदक्षनयनै–र्ददृशे ताभिरप्ययम् ॥ अथोपेत्यार्यपुत्रस्ता–स्तद्भावं ज्ञातुमित्यवक् ॥११५॥ नयनानन्दना यूयं, कृतिनः कस्य नन्दनाः ॥ हेतुना केन युष्माभि–र्वनमेतदलङ्कृतम् ? ॥ ११६ ॥ ताः प्रोचुर्भानुवेगस्य, खेचरस्य सुता वयम् ॥ इतश्च नातिदूरेस्ति, तत्पुरी प्रियसङ्गमा ॥ ११७ ॥ तामलङ्कुरु विश्राम्ये–त्युक्तस्ताभिः सखा तव ॥ दर्शिताध्वा तदादिष्ट–किङ्करेण जगाम ताम् ॥ ११८ ॥ उपापरार्णवं भानु–स्तदानीयत सन्ध्यया ॥ उप-तातं मुदानायी, सौविदैस्ताभिरप्यसौ ॥ ११९ ॥ अभ्युत्थानादिकं कृत्वो–चितं सोप्येनमित्यवक् ॥ उद्वह त्वं महा-भाग !, ममाष्टौ नन्दना इमाः ॥ १२० ॥ एतासां स प्रियो भावी, योऽसिताक्षं विजेष्यते ॥ इत्यर्चिर्मालिमुनिना, प्रोचे तत्प्रार्थ्यसे मया ॥ १२१ ॥ तेनेत्युक्तस्तव सुहृत्, परिणिन्ये तदैव ताः ॥ ताभिः सहास्वपीद्वासा–वासे चाऽऽबद्धकङ्कणः ॥ १२२ ॥ तदोत्क्षिप्यासिताक्षोऽमुं, निद्राणं गहनेऽक्षिपत् ॥ तत्र प्रेक्ष्य विनिद्रः स्वं, दध्यौ किमिदमि-त्ययम् ॥ १२३ ॥ आर्यपुत्रस्ततोऽटव्या–मेकाकी पूर्ववद्भ्रमन् ॥ सप्तभूमीकमद्राक्षीत्, प्रासादमधिभूधरम् ॥ १२४ ॥ मायेयमपि कस्यापि, भाविनीत्येप भावयन् ॥ तत्समीपे गतोऽश्रौषी–त्कस्याश्चिद्रुदितं स्त्रियाः ॥ १२५ ॥ ततस्तत्र प्रविश्याय–मारूढः सप्तमीं भुवम् ॥ दिव्यां कनीं ददर्शैकां, वदन्तीमिति गद्गदम् ॥ १२६ ॥ जगत्रयजनोत्कृष्ट, कुरु-वंशनभोरवे ! ॥ सनत्कुमार ! भर्त्ता त्वं, भूयाज्जन्मान्तरेऽपि मे ॥ १२७ ॥ तदाकर्ण्य ममासौ का, भवतीति विचि-न्तयन् ॥ पुरोभूयार्यपुत्रस्तां, न्यग्सुदीमेवमब्रवीत् ॥ १२८ ॥ का त्वं सनत्कुमारेण, सम्बन्धस्तव कः पुनः ? ॥ मुहुः स्मरन्ती तं चैवं, केन दुःखेन रोदिपि ? ॥१२९॥ पृष्टानेनेति साऽस्मै, प्रदायासनमुत्तमम् ॥ सुस्मिता विस्मिता प्रोचे, सुधा-मधुरया गिरा ॥१३०॥ सुराष्ट्रराजः साकेत–पुरेशस्य सुतास्म्यहम् ॥ सुनन्दाह्वा चन्द्रयशो–देवीकुक्षिसमुद्भवा ॥१३१॥ कलयित्वा कलाः सर्वा, वयो मध्यममध्यगाम् ॥ धवोस्याः कोऽनुरूपः स्या–दिति दध्यौ तदा नृपः ? ॥ १३२ ॥ आनाय्य भूपरूपाणि, ततो मेऽदर्शयन्मुहुः ॥ नारमत्तेपु मे दृष्टिः, किंशुकेपु शुकी यथा ! ॥ १३३ ॥ दूतानीतपट-न्यस्तं, पित्रा दर्शितमन्यदा ॥ रूपं सनत्कुमारस्य, वीक्ष्य व्यामुह्यमुच्चकैः ! ॥ १३४ ॥ ह्रियानुक्तोपि तातेन, रागो-बुध्यत तत्र मे ॥ प्रच्छन्नोऽपि प्रकाशः स्या–त्तृणछन्नाग्निवत्स हि ! ॥ १३५ ॥ ततः सनत्कुमाराय, पितृभ्यां कल्पि-तास्म्यहम् ॥ भर्त्ता तदिच्छामात्रेण, स मे न तु विवाहतः ॥ १३६ ॥ [ इतश्च ] खेचरः कोऽपि हृत्वा मा–मिहा-नैपीत्स्वकुट्टिमात् ॥ विद्याकृतेऽत्र गेहे मां, मुक्त्वा च क्वाप्यगात्कुधीः ॥ १३७ ॥ स्मारं स्मारं कुमारं तं, ततो रोदिमि सुन्दर ! ॥ बालानामबलानां च, दुःखितानां हृदो बलम् ॥१३८॥ आख्यत्सखा ते मा रोदी–र्यस्मै दत्तासि सोस्म्य-हम् ॥ सानन्दाख्यत्सुनन्दाथ, दैवं जागर्त्ति देव मे ॥ १३९ ॥ तयोरालपतोरेव–मागात्तत्र क्रुधा ज्वलन् ॥ नन्दनोऽ-शनिवेगस्य, वज्रवेगः स खेचरः ॥ १४० ॥ त्वन्मित्रं च समुत्पाट्यो–दक्षिपद्वियति द्रुतम् ॥ रुदती सुदती भूमौ, मू-र्च्छिता साऽपतत्ततः ॥ १४१ ॥ मुष्टिघातेन दुष्टं तं, ततो व्यापाद्य तत्क्षणम् ॥ अक्षताङ्गस्तामुपेत्या–श्वासयामास ते सखा ॥ १४२ ॥ वार्त्तां प्रोच्यात्मनः सर्वा–मुदुवाह च तां मुदा ॥ अमुष्य मुख्यपत्नी सा, भाविनी भाविचक्रिणः ॥ १४३ ॥ स्वसाथ वज्रवेगस्य, नाम्ना सन्ध्यावली कनी ॥ तदा तत्रायया भ्रातृ–वधं वीक्ष्य चुकोप च ॥१४४॥ भावी भर्त्ता भ्रातृहन्ता, तवेति ज्ञानिनो गिरम् ॥ स्मृत्वा शान्ता पतीयन्ती, सार्यपुत्रमुपासरत् ॥ १४५ ॥ अयं तामप्यु-पायंस्त, सुनन्दानुज्ञया कृती ॥ स्वयमायान्ति पात्रं हि, श्रियोऽर्णवमिवापगाः ! ॥ १४६ ॥ अत्रान्तरे खेचरौ द्वा–वु-पेत्यामुं प्रणम्य च ॥ प्राभृतीकृत्य कवचं, स्यन्दनं चैवमूचतुः ॥ १४७ ॥ स्वपुत्रमरणोदन्तं, ज्ञात्वा विद्याधराधिपः ॥ आयात्यशनिवेगोऽत्र, सैन्यैराच्छादयन्नभः ॥ १४८ ॥ तत आवां हरिश्चन्द्र–चन्द्रवेगौ तवान्तिके ॥ प्रहितौ चन्द्रवेगेन भानुवेगेन चात्मजौ ॥१४९॥ आरोहार्करथाभं त–त्तत्प्रेपितममुं रथम् ॥ कवचं चामुमामुंच, वज्रसन्नाहसंन्निभम् ॥१५०॥ चन्द्रवेगभानुवेगौ, सोदरौ श्वसुरौ तव ॥ महाचमूवृतौ स्वामिन् !, विद्धि सेवार्थमागतौ ॥ १५१ ॥ तयोरेवं प्रवदतो–स्तत्र तावप्युपेयतुः ॥ खेचरेन्द्रौ चन्द्रवेग–भानुवेगौ महाबलौ ॥ १५२ ॥ तदा सन्ध्यावली विद्या–मसौ प्रज्ञप्तिकां

ददौ ॥ ततोयमपि सन्नह्य, रथमारोहदाजये ॥ १५३ ॥ ततोऽमुं चन्द्रवेगाद्याः, खेचराः परिवव्रिरे ॥ तदाचाशनिवेगस्य, तत्राऽगात्प्रबलं बलम् ॥ १५४ ॥ तेन सार्द्धं चन्द्रवेग-भानुवेगौ बलान्वितौ ॥ योद्धुं प्रवृत्तौ त्वन्मित्रं, निषिध्यापि रणोद्यतम् ॥ १५५ ॥ योधं योधं भग्नयोश्च, सैन्ययोरुभयोश्चिरात् ॥ आर्यपुत्राशनिवेगौ, युयुधाते महौजसौ ॥ १५६ ॥ तयोश्च कुर्वतोर्युद्धं, जयश्रीसङ्गमोत्कयोः ॥ आशुगैराशु तिरयां-चक्रिरे भानुभानवः ॥ १५७ ॥ मुमोचाशनिवेगोऽथ, नागास्त्रमतिभीषणम् ॥ तच्च गारुडशस्त्रेण, न्यग्रहीद्भवतः सखा ॥ १५८ ॥ आग्नेऽयं वारुणेनैवं, वायव्यं पार्वतेन च ॥ वैरिशस्त्रं निजग्राह, प्रतिशस्त्रेण ते सुहृत् ॥ १५९ ॥ ततः कार्मुकमादाय, नाराचं मुंचतो द्विषः ॥ अर्द्धेन्दुनाऽसौ चिच्छेद, मौर्वीं सह जयाशया ॥ १६० ॥ अथो कृपाणमाकृष्य, धावतस्तस्य ते सखा ॥ बाहोरर्द्धं महाबाहु-र्मृणालच्छेदमच्छिनत् ॥ १६१ ॥ तथापि धावतो हन्तुं, तस्य प्रज्वलतः क्रुधा ॥ विद्यादत्तेन चक्रेण, चक्रेऽसौ मस्तकं पृथक् ! ॥ १६२ ॥ राज्यलक्ष्मीस्ततः सर्वा, तस्य खेचरचक्रिणः ॥ हराविव प्रतिहरेः, सञ्चक्राम मम प्रिये ॥ १६३ ॥ सन्ध्यावलीसुनन्दाभ्यां, सानन्दाभ्यां युतस्ततः ॥ वैताढ्याद्रौ जगामासौ, चन्द्रवेगादिभिः समम् ॥१६४॥ तत्र चामुष्य संभूय, सकलैः खेचरैश्वरैः ॥ विद्याधरमहाराज्या-भिषेको निर्ममे मुदा ॥ १६५ ॥ अथैनं शाश्वते चैत्ये, विहिताष्टाहिकोत्सवम् ॥ खेचरेन्द्रश्चन्द्रवेग, इत्यूचे मत्पिताऽन्यदा ॥ १६६ ॥ममार्चिर्मालिमुनिना, प्रोक्तं यच्चतुर्थचक्रभृत् ॥ भावी सनत्कुमाराख्यः, पतिः पुत्रीशतस्य ते ॥ १६७ ॥ स चायास्यति मासेन, मानसेऽत्र सरोवरे ॥ तत्रासिताक्षयक्षं च, पराजेता महाभुजः ॥ १६८ ॥ ततो वकुलमत्यादि-सुताशतमिदं मम ॥ परिणीय प्रभो ! क्षिप्रं, प्रार्थनां मे कृतार्थय ॥ १६९ ॥ विज्ञप्त इति मत्पित्रा, वयस्यस्ते महाशयः ॥ मदादिकाः शतं कन्याः, परिणिन्ये महामहैः ॥ १७० ॥ ततो विविधलीलाभिः, क्रीडन् विद्याधरीवृतः ॥ निनायासौ सुखं कालं, खेचरेन्द्रनिषेवितः ॥१७१॥ अद्य तु क्रीडयात्रागा-दैवाच्च मिलितो भवान् ॥ अनुकूले हि दैवे स्या-द्विनोपायमपीहितम् ॥ १७२ ॥ एवं बकुलमत्योक्ते, गृहान्निर्गत्य भूपभूः ॥ मित्रेण सह वैताढ्यं, जगाम सपरिच्छदः ॥ १७३ ॥ प्राप्यावसरमन्येद्यु-र्महेन्द्रस्तं व्यजिज्ञपत् ॥ पितरौ त्वद्वियोगार्त्तौ, प्रभो ! भूरि विषीदतः॥१७४॥ कदा कुमारं द्रक्ष्यामो, ध्यायन्तावित्यहर्निशम् ॥ स्वदर्शनेन पितरौ, प्रमोदयितुमर्हसि ॥१७५॥ श्रुत्वेति सोऽपि सोत्कण्ठः, सकलत्रस्समित्रयुक् ॥ विमानैर्विविधैर्व्योम्नि, दर्शयन् शतशो रवीन् ॥ १७६ ॥ दिव्यवेषैर्व्योमयायि-द्विपवाहादिवाहनैः ॥ ससैन्यैः खेचराधीशै-र्वृतः शक्र इवामरैः ॥ १७७ ॥ वर्यतूर्यौघनिर्घोषै, रोदसी परिपूरयन् ॥ जगाम सम्पदां धाम, पुरं श्रीहस्तिनापुरम् ॥ १७८ ॥ [ त्रिभिर्विशेषकम् ] तत्र स्वदर्शनेनाशु, पितरौ नागरांश्च सः ॥ प्रामूमुदच्चक्रवाकौ, पद्मानि च यथार्यमा ॥ १७९ ॥ पश्यन्पुत्रस्य तां लक्ष्मी-मश्वसेननरेश्वरः ॥ विस्मयं च प्रमोदं च, प्राप वाचामगोचरम् ॥ ॥ १८० ॥ तुष्टेन राज्ञा पृष्टोऽथ, कुमारस्यात्मनश्च तम् ॥ वृत्तान्तमखिलं प्रोचे, महेन्द्रो विस्मयावहम् ॥ १८१ ॥ ततोऽश्वसेनभूपालः, पुत्रं राज्ये न्यवी-

---

१ जयिष्यति महाभुजः । इति "ब" संज्ञकपुस्तके ॥

विशत् ॥ सुधीर्महेन्द्रसिंहं च, तत्सेनाधिपतिं व्यधात् ॥ १८२ ॥ स्वयं तु श्रीधर्मनाथ-तीर्थे स्थविरसन्निधौ ॥ विरक्तो व्रतमादाय, निजं जन्माकृतार्थयत् ॥ १८३ ॥ अथो सनत्कुमारस्य, राज्यं पालयतोऽन्यदा ॥ चक्रादीनि महारत्नान्यजायन्त चतुर्दश ॥ १८४ ॥ ततो वर्षसहस्रेण, साधयित्वा स भारतम् ॥ निधानानि नवासाद्य, पुनरागान्निजं पुरम् ॥ १८५ ॥ प्रविशन्तं पुरे तं चा-वधिना वीक्ष्य वासवः ॥ मत्तुल्योऽसौ प्राग्भवेऽभू-दिति स्नेहं ददौ भृशम् ॥१८६॥ श्रीदं चेत्यादिशच्चक्री, तुर्योऽसावस्ति मे सुहृत् ॥ राज्याभिषेकं तद्गत्वा, कुरुष्वाऽमुष्य धीनिधे! ॥१८७॥ इत्युक्त्वा चामरे च्छत्रं, हारं मौलिं च कुण्डले ॥ सिंहासनं पादपीठं, देवदूष्ये च पादुके ॥ १८८ ॥ दातुं सनत्कुमाराय, धनदस्य हरिर्ददौ ॥ रम्भातिलोत्तमादींश्च गन्तुं तेन सहादिशत् ॥ १८९ ॥ [ युग्मम् ] ततस्तदन्वितो गत्वा, कुबेरो हस्तिनापुरे ॥ सौधर्माधिपतेराज्ञां, चक्रिणे तां न्यवेदयत् ॥ १९० ॥ तेन चानुमतः श्रीदो, विचक्रे योजनायतम् ॥ माणिक्यपीठं तस्योर्द्ध्वं, मण्डपं च मणीमयम् ॥ १९१ ॥ मणिपीठं च तन्मध्ये, कृत्वा सिंहासनाञ्चितम् ॥ आनाययद्वैश्रवणः, क्षीरोदादुदकं सुरैः ॥ १९२ ॥ ततः सगौरवं श्रीद-श्चक्रिणं तत्र मण्डपे ॥ सिंहासने निवेश्येन्द्र-प्रहितं प्राभृतं ददौ ॥ १९३ ॥ चक्रे चक्रित्वाऽभिषेकं, तैर्जलैः सोऽथ चक्रिणः ॥ मङ्गलातोद्यनिर्घोषं, तदोच्चैश्चक्रिरे सुराः ॥ १९४ ॥ तदा मङ्गलगीतानि, जगुर्निर्जरगायनाः ॥ रम्भातिलोत्तमाद्याश्च, नाटकं व्यधुरुत्तमम् ॥ १९५ ॥ पूजयित्वाथ तं वस्त्र-भूषामाल्यविलेपनैः ॥ श्रीदः प्राविविशद्गन्ध-हस्तिना हस्तिनापुरे ॥ १९६ ॥ रत्नादिवृष्ट्या कृत्वा च,

तत्पुरं स्वपुरीसमम् ॥ विसृष्टश्चक्रिणा स्वर्गं, ययौ यक्षपतिर्द्रुतम् ॥ १९७ ॥ चक्रेऽथ पार्थिवैस्तस्या-ऽभिषेको द्वादशाब्दिकः ॥ कृपालुः सोऽथ भूपालो, न्यायेनापालयत्प्रजाः ॥ १९८ ॥ भोगांश्चावामवामाक्षी-सम्भोगाभोगमञ्जुलान् ॥ भुञ्जानोऽगमयद्भूमान्, वासरानिव वत्सरान् ॥ १९९ ॥ अन्यदा दिवि देवेन्द्रः, सुधर्मासदसि स्थितः ॥ नाटकं नाटयन्नासी-द्रम्यं सौदामिनाभिधम् ॥ २००॥ तदा तत्रेशानकल्पा-दाययौ सङ्गमाभिधः ॥ सुपर्वा रूपतेजोभ्यां, निर्जरान्निर्जयन् परान् ॥२०१॥ तस्मिन् गते सुराः शक्र-मपृच्छन्निति विस्मिताः ॥ कुतोऽस्य तेजो रूपं च, सर्वगीर्वाणगर्वहृत् ॥ २०२ ॥ इन्द्रः प्रोचेऽमुनाचाम्ल-वर्धमानाभिधं तपः ॥ कृतं पूर्वभवे तेजो, रूपं चास्य तदीदृशम् ॥ २०३ ॥ एवंविधोऽन्योऽपि कोऽपि, किमस्ति भुवनत्रये ॥ इति पृष्टः पुनर्देवै-र्देवराजोऽब्रवीदिदम् ॥ २०४ ॥ सनत्कुमारनामास्ति, नृहस्ती हस्तिनापुरे ॥ तस्य रूपं च तेजश्च, सुरेभ्योऽप्यतिरिच्यते ! ॥ २०५ ॥ अश्रद्दधानौ तच्छक्र-वचनं त्रिदशावुभौ ॥ विजयो वैजयन्तश्च, विप्ररूपमुपाश्रितौ ॥ २०६ ॥ आगत्य चक्रिप्रासाद-द्वारे तस्थतुरुत्सुकौ ॥ बभूव सार्वभौमस्तु, तदा प्रारब्धमज्जनः ॥ २०७ ॥ [ युग्मम् ] प्रावीविशद्विशामीशो, द्वास्थेनोक्तौ तदापि तौ ॥ वैदेशिकान् दर्शनोत्कान्, विलम्बयति नो सुधीः ॥ २०८ ॥ ततस्तौ वीक्ष्य तद्रूप-मधिकं शक्रवर्णितात् ॥ प्राप्तौ वचोतिगं चित्रं, शिरोऽधूनयतां चिरम् ॥ २०९ ॥ दध्यतुश्चेत्यहो ! अस्य, तेजः प्राज्यं रवेरिव ॥ पयोधिजलवन्माना-तिगं लावण्यमप्यहो ! ॥२१०॥ स्थाप्यते दृष्टिरस्याङ्गे, यत्र यत्र ततस्ततः ॥ कीलितेव निमग्नेव, कृच्छ्रादेव निवर्त्तते ! ॥ २११ ॥ रूपं तदस्य शक्रेण, मिथ्या न खलु वर्णितम् ॥ अद्येर्ष्ययाप्यभूवावां, कृतार्थावस्य दर्शनात् ॥ २१२ ॥ शुभवन्तौ भवन्तौ भोः !, कुतो हेतोरिहागतौ ? ॥ अथेत्युक्तौ नृदेवेन, भूदेवावेवमूचतुः ॥ २१३ ॥ रूपमप्रतिरूपं ते, वर्ण्यमानं जगज्जनैः ॥ निशम्यावामिहायातौ, तद्दर्शनकुतूहलात् ॥ २१४ ॥ यादृशं च तवावाभ्यां, श्रुतं रूपं जनाननात् ॥ दृश्यते सविशेषं भू-विशेषक ! ततोऽप्यदः ॥ २१५ ॥ ऊचे रूपमदाद्भूपो, युवाभ्यां भो द्विजोत्तमौ ! ॥ किं मे मज्जनसज्जस्य, रूपमेतन्निरूपितम् ? ॥ २१६ ॥ तत्कृत्वा मज्जनं सार-रत्नालङ्कारभासुरः ॥ शोभयामि सभां यावत्, क्षणं तावत् प्रतीक्ष्यताम् ॥ २१७ ॥ रूपं तदा च मे सम्यक्, प्रेक्षणीयं मनोरमम् ॥ इत्युक्तौ देवभूदेवौ, राज्ञा तस्थतुरन्यतः ॥ २१८ ॥ स्नात्वा भूपस्ततो भूरि-भूषाभूषितभूधनः ॥ सभां विभूष्य तौ विप्रौ, रूपं द्रष्टुं समादिशत् ॥ २१९ ॥ अथेक्षमाणौ तौ वीक्ष्य, भूपरूपमनीदृशम् ॥ विषण्णौ दध्यतुरहो !, नृणां रूपादि चञ्चलम् ॥ २२० ॥ नृपः प्रोचे पुरा प्रेक्ष्य, मां युवां मुदितावपि ॥ विषादश्यामलास्यौ द्राक्, सञ्जातौ साम्प्रतं कुतः ? ॥ २२१ ॥ तावूचतुः सुरावावां, दिवि देवेन्द्रवर्णितम् ॥ अश्रद्दधानौ त्वद्रूपं, परीक्षितुमिहागतौ ॥ २२२ ॥ रूपं तव पुरा प्रेक्ष्य, श्रेष्ठमिन्द्रोदितादपि ॥ हृष्टावपि विषीदावो-ऽधुनाऽन्यादृग् निरीक्ष्य तत् ! ॥ २२३ ॥ एतावताऽपि कालेनो-द्भूताः काये तवाऽऽमयाः ॥ राक्षसैरिव तैर्ग्रस्ता, रूपलावण्यकान्तयः ! ॥ २२४ ॥ इत्युदित्वा तयोरन्त-र्हितयोः स्ववपुर्नृपः ॥ पश्यन्नपश्यद्विच्छायं, रजश्छन्नमिवारुणम् ॥ २२५ ॥ दध्यौ चैवमहो ! देहे, का नामास्था मनीषिणाम् ? ॥ विविधाः व्याधयो व्याधा, इवैणं बाधयन्ति यम् ॥ २२६ ॥ भीता इवामयेभ्यो ये, नष्टा रूपादयो गुणाः ॥ भीरुभूतैरिवोर्वीशः, कथं माद्यति तैः सुधीः ? ॥ २२७ ॥ सरोपा इव ये यान्ति, सेव्यमाना अपि क्षणात् ॥ भोगेषु तेषु को नाम, प्रतिबन्धः सुमेधसाम् ? ॥ २२८ ॥ यतो गुणाः प्रणश्यन्ति वैराग्यविनयादयः ॥ परिग्रहे ग्रह इवा-ऽऽग्रहः कस्तत्र धीमताम् ? ॥ २२९ ॥ तन्ममत्वं शरीरादे-रद्य श्वो वा विनाशिनः ॥ विहाय शाश्वतसुख-प्रदायि व्रतमाददे ॥२३०॥ ध्यात्वेति नन्दनं न्यस्य, राज्ये प्राज्यमतिर्नृपः ॥ विनयन्धरसूरीणा-मन्तिके व्रतमग्रहीत् ॥ २३१ ॥ ततः सर्वाणि रत्नानि, सर्वा राज्यो नृपाः सभे ॥ निखिला निधयो यक्षाः, सैन्याः प्रकृतयस्तथा ॥२३२॥ गाढानुरागात्तत्पृष्ठे, षण्मासीं यावदभ्रमन् ॥ प्रभो ! विनाऽपराधं नः, किं जहासीति वादिनः ॥ २३३ ॥ [युग्मम्] सिंहावलोकितेनाऽपि, नाथ्यत्संयतस्तु तान् ॥ ततो नत्वोग्रसत्त्वं तं, ययुस्ते स्वस्वमास्पदम् ॥ २३४ ॥ मुनिस्तु षष्ठतपसः, पारणे गोचरं गतः ॥ चीनकान्नमजातक्र-युक्तं सम्प्राप्य भुक्तवान् ॥ २३५ ॥ भूयो भूयोऽपि षष्ठान्ते, पारणं सोऽतनोत्तथा ॥ ततो वपुधिरे तस्य, रोगा नीरादिवाङ्कुराः ॥२३६॥ कंडूः कुक्षिदृशोः पीडे, कास-श्वास-ज्वरा॑ऽरुची ॥ इति सप्तामयान् सेहे, सप्त वर्षशतानि सः ॥२३७॥ तस्यैवं सहमानस्य, सर्वानपि परीषहान् ॥ प्रकुर्वतस्तपस्तीव्रं, वार्त्तवार्त्तामकुर्वतः ॥ २३८॥ मलामर्शैशकृन्मूत्र-सर्वौषध्यः कफौषधिः ॥ संभिन्नश्रोतोऽभिधा चे-त्यभूवन् सप्त लब्धयः ॥ २३९ ॥ [ युग्मम् ]

---

१ सुखवार्त्ताम् ॥

तथाप्यङ्गप्रतीकार–मकुर्वन्तं तमन्यदा ॥ पुरुहूतः पुरः स्वाहा–भुजामेवमवर्णयत् ॥ २४० ॥ अहो ! सनत्कुमारोसौ, धैर्यधरितभूधरः ॥ त्यक्त्वा चक्रिश्रियं भार–मिवोग्रं तप्यते तपः ! ॥ २४१ ॥ रोगानलाब्दमालासु, लब्धास्वपि हि लब्धिषु ॥ चिकित्सति यतिः काय–निस्पृहो नायमामयान् ! ॥ २४२ ॥ अश्रद्दधानौ तद्वाक्यं, तावेव त्रिदशौ ततः ॥ अभिरूपभिषग्रूपौ, मुनिरूपमुपेयतुः ॥ २४३ ॥ तं चेत्सखोचतां साधो !, यदि त्वमनुमन्यसे ॥ धर्मवैद्यौ चिकित्साव–स्तदावां तेऽगदान्मुदा ॥ २४४ ॥ भूयो भूयः पुरोभूय, ताभ्यामित्युदितो व्रती ॥ उवाच वावां चिकित्सकं, तत्त्वामृतमिवोद्गिरन् ॥ २४५ ॥ चिकित्सथो युवां कर्म–रोगान् किं वा वपुर्गदान् ? ॥ तावुचतुश्चिकित्साव, आवां कायामयान्मुने ! ॥ २४६ ॥ ततो लिस्वाङ्गुलीं पामा–शीर्णां निष्ठीवनेन सः ॥ स्वर्णवर्णसवर्णांमां, व्यधादेवमुवाच च ॥ २४७ ॥ आतङ्कान्तं नयाम्येता–दृशांस्तु स्वयमप्यहम् ॥ चिकित्सा क्रियते कर्म–रुजां चेत्कार्यते तदा ! ॥२४८॥ हन्तुं कर्मामयान् शक्ता, यूयमेवेतिवादिनौ ॥ विस्मितौ तौ ततश्चक्रि–मुनिं नत्वैवमूचतुः ॥ २४९ ॥ लब्धलब्धिरपि व्याधि–व्यथा धीरस्तितिक्षते ॥ सनत्कुमारराजर्षि–रिति त्वां हरिरस्तवीत् ॥ २५० ॥ ततस्ते रूपवीक्षार्थं, यथा वामागतौ पुरा ॥ तथा सत्वपरीक्षार्थ–मधुनापि समागतौ ॥ २५१ ॥ दृष्टं च तदपि स्पष्टं सुराचल इवाचलम् ॥ इत्युक्त्वा तं च नत्वा तौ, तिरोधत्तां सुधाशनौ ॥ २५२ ॥ कौमारे मण्डलीत्वे च, लक्षार्द्धं शरदामभूत् ॥ लक्षं च तस्य चक्रित्वे, श्रामण्येऽपि तदेव हि ॥ २५३ ॥ वर्षलक्षत्रयीमान–मतिवाह्यायुरित्ययम् ॥ चकारानशनं प्रान्ते, सम्मेताचलमूर्द्धनि ॥ २५४ ॥ आयुःक्षयेणाऽथ सनत्कुमारः, सनत्कुमारत्रिदिवे सुरोऽभूत् ॥ ततश्च्युतश्चायमवाप्य देहगन्त्यं विदेहे शिवगेहमेता ॥ २५५ ॥ इति सनत्कुमारचक्रिकथा ॥ ३७ ॥

**मूलम्—चइत्ता भारहं वासं, चक्कवट्टी महिड्ढीओ। संती संतीकरो लोए, पत्तो गइमणुत्तरं ॥ ३८॥**

व्याख्या—व्यक्तं, कथासम्प्रदायस्त्विहायम् , तथा हि—

अत्रैव भरतक्षेत्रे, पुरे रत्नपुराभिधे ॥ भूपः श्रीषेणनामाभू–दसमग्रगुणसेवधिः ॥ १ ॥ प्रिये अभूतां तस्याभि–नन्दिताशिखिनन्दिते ॥ स्मरस्येव रतिप्रीती, परमप्रीतिभाजनम् ॥ २ ॥ तत्राभिनन्दिताकुक्षि–प्रभवौ तस्य भूप्रभोः ॥ इन्दुषेणविन्दुषेणा–वभूतां तनयावुभौ ॥ ३ ॥ सूरेर्विमलबोधाह्वात्, श्राद्धधर्मं स पार्थिवः ॥ प्राप लोक इवालोकं, कोकवन्धोस्तमोपहात् ॥ ४ ॥ तत्र चाभूदुपाध्यायः, सत्यकिर्नाम सत्यधीः ॥ जंबुकाह्वा प्रिया तस्य, सत्यभामा च नन्दना ॥ ५ ॥ [ इतश्च ] मगधेष्वचलग्रामे, वेदवेदाङ्गपारगः ॥ नाम्ना धरणिजटोऽभू–द्विप्रो धरणिविश्रुतः ॥ ६ ॥ तस्याभूतां यशोभद्रा–भिधभार्यासमुद्भवौ ॥ कुलीनौ द्वौ सुतौ नंदि–भूतिश्रीभूतिसंज्ञकौ ॥ ७ ॥ स च विप्रश्चिरं रेमे, दास्या कपिलया समं ॥ तत्कुक्षिजः ततस्तस्य, सुतोऽभूत्कपिलाभिधः ॥ ८ ॥ स दासेरः सुतौ कुल्यौ, पितुः पाठयतोऽन्तिकात् ॥ कर्णश्रुत्या श्रुतीः सर्वा–स्तूष्णीकोप्यग्रहीत्सुधीः ॥ ९ ॥ ग्रामात्ततोऽथ निर्गत्यो–पवीतद्वयमुद्वहन् ॥ द्विजोत्तमोऽस्मीति वदन्, पर्यटन् पृथिवीतले ॥ १० ॥ पुरे रत्नपुरे सोऽगात्, सत्यकिद्विजसन्निधौ ॥ कस्त्वमागाः कुतश्चेति, तत्पृष्टश्चैवमब्रवीत् ॥ ११ ॥ [ शृणुध्वम् ] पुत्रोऽहं धरणिजट–द्विजस्य कपिलाभिधः ॥ इहागामचलग्रामात्, क्षोणीवीक्षणकौतुकी ॥१२॥ सत्यकिं पृच्छतां सोऽथ, छात्राणां निखिलानपि ॥ चिच्छेद वेदविषया–नन्तरापि हि संशयान् ॥ १३ ॥ तुष्टोऽथ सत्यकिश्छात्र–पाठने तं न्ययोजयत् ॥ स्वपुत्रीं सत्यभामां च, मुदा तेनोदवाहयत् ॥ १४ ॥ कपिलोऽपि सुखं सत्य–भामयाऽन्वहमन्वभूत् ॥ लोकप्रदत्तद्रविणैः, समृद्धश्चाचिरादभूत् ॥ १५ ॥ नाट्यं वीक्ष्याऽन्यदा तस्मि–न्निवृत्ते प्रावृषो निशि ॥ सारं धाराधरो धारा–सारं मोक्तुं प्रचक्रमे ॥ १६ ॥ तदा घनान्धकारत्वा–द्विजनत्वात्पथश्च सः ॥ क्षिप्त्वांशुकानि कक्षांत–र्नग्नीभूयाऽगमद्गृहम् ॥ १७ ॥ द्वारे च परिधायान्त–र्गतं तं सत्यकिसुता ॥ छिन्नवस्त्रोऽयमित्यन्य–वस्त्रपाणिरुपागमत् ॥ १८ ॥ नार्द्रीभूतानि मे दृष्टा–प्यपि वासांसि विद्यया ॥ अलं तदपरैर्वस्त्रै–रित्यूचे कपिलस्तु ताम् ॥ १९ ॥ तस्याङ्गं छिन्नमक्लिन्ना–न्यंशुकान्यथ वीक्ष्य सा ॥ दध्यौ यो विद्यया रक्षे–द्वासांस्यङ्गं कथं न सः ? ॥ २० ॥ तन्नूनमागान्नग्नोय–मकुलीनश्च विद्यते ॥ भयेनैतादृशी बुद्धिः, कुलीनानां हि जातुचित् ! ॥ २१ ॥ वेदानपि पपाठायं, कर्णश्रुत्यैव धीवलात् ॥ ध्यायन्तीति ततो मन्द–स्नेहा तस्मिन् बभूव सा ॥२२॥ अन्यदा धरणिजटो, दैवात्प्राप्तोऽतिदुःस्थताम् ॥ श्रीमन्तं कपिलं श्रुत्वा, तत्रागाद्धनलिप्सया ॥ २३ ॥ चकार कपिलस्तस्य, भक्तिं स्नानाशनादिना ॥ अपरोप्यतिथिः पूज्यः, कोविदैः किं पुनः

---

१ जल्प्।

पिता ! ॥ २४ ॥ तयोः पितापुत्रयोश्च, वीक्ष्याचारेऽन्तरं महत् ॥ जाताशंका भृशं भामे-त्युवाच श्वशुरं रहः ॥ २५ ॥ द्विजन्महत्याशपथं, दत्वा पृच्छामि यः प्रभो ! ॥ पुत्रोऽयं वः शुद्धपक्ष-द्वयोऽन्यो वेति कथ्यताम् ॥ २६ ॥ ततोऽसौ शपथच्छेद-भीरुः सूनृतमब्रवीत् ॥ कपिलेन विसृष्टश्च, जगाम ग्राममात्मनः ॥ २७ ॥ सत्याथ गत्वा श्रीषेण- नृपमेवं व्यजिज्ञपत् ॥ भर्त्ताभूदकुलीनो मे, देव ! दैवनियोगतः ॥ २८ ॥ तस्मान्मोचय मां तेन, मुक्ता हि प्रव्रजाम्यहम् ॥ ततः कपिलमाहूय, प्रोवाचेति महीपतिः ॥ २९ ॥ धर्मकर्मोद्यतां मुञ्च, विरक्तां ब्राह्मणीमिमाम् ॥ किमस्यां हि विरक्तायां, भावि भोगसुखं तव ! ॥३०॥ सोवादीदेव नैवैनां, निजां त्यक्षामि कामिनीम् ॥ न क्षमोऽस्मि क्षणमपि, विनामुष्या हि जीवितुम् ॥ ३१ ॥ भामा प्रोचे यद्यसौ मां, न जहाति तदा म्रिये ॥ व्याजहार ततो राजा, मुधा मा म्रियतामियम् ॥ ३२ ॥ किन्तु तिष्ठत्वसौ कश्चि-त्कालं कपिल ! मद्गृहे ॥ एवमस्त्वियति सोप्यूचे, तां बलान्नेतुमक्षमः ॥ ३३ ॥ सत्या सत्याशया राज्ञा, पट्टराज्योस्ततोऽर्पिता ॥ तस्थौ स्वच्छमनस्तत्रा-चरन्ती दुश्चरं तपः ॥ ३४ ॥ अन्यदाऽनन्तमतिकां, वीक्ष्य वेश्यां मनोहराम् ॥ इन्दुषेणविन्दुषेणा-वभूतामनुरागिणौ ॥ ३५ ॥ तां च कामयमानौ तौ, सुरभिं वृषभाविव ॥ सोदरावपि सामर्षौ, युध्येते स्म परस्परम् ! ॥ ३६ ॥ तद्वीक्षितुं निरोद्धुं चा-प्रभूः श्रीषेणभूविभुः ॥ विपेदे पद्ममाघ्राय, विषमिश्रं त्रपातुरः ! ॥ ३७ ॥ व्यपद्येतां तथैवाभि-नंदिताशिखिनन्दिते ॥ शिश्राय कपिलाप्रीता, सत्यभामाऽपि तत्पथम् ! ॥ ३८ ॥ चत्वारोऽपि विपद्यैव-मतीवसरलाशयाः ॥ युग्मिनो जज्ञिरे जम्बूद्वीपोत्तरकुरुष्वमी ॥ ३९ ॥ पुंस्त्रीरूपं युग्ममेकं, तत्र भूपाभिनन्दिते ॥ अभूत्तदन्यत्तु शिखि-नंदिताकपिलप्रिये ॥ ४० ॥ कोशत्रयोच्छ्रयास्ते च, पल्यत्रितयजीविताः ॥ तुर्येऽहनि[1] कृताहारा, व्यतीयुः समयं सुखम् ॥ ४१ ॥

इतश्च युध्यमानौ तौ, श्रीषेणनृपनंदनौ ॥ कोऽपि विद्याधरोभ्येत्य, विमानस्थोऽब्रवीदिति ॥ ४२ ॥ अज्ञानाजामिमप्येनां, भो ! युवां भोक्तुमुद्यतौ ॥ मा युध्येथां मुधा वाक्यं, हितेच्छोः श्रूयतां मम ॥ ४३ ॥ द्वीपेत्रैवास्ति विजयो, विदेहे पुष्कलावती ॥ तद्वैताढ्योत्तरश्रेण्या-मादित्याभपुरं वरम् ॥ ४४ ॥ नृपः सुकुण्डली तत्रा-ऽजितसेना च तत्प्रिया ॥ अहमस्मि तयोः सूनु-र्नामतो मणिकुण्डली ॥ ४५ ॥ अन्यदाहं गतो व्योम्ना, नगरीं पुण्डरीकिणीम् ॥ भूरिभक्त्याऽमितयशो-नामानमनमं जिनम् ॥ ४६ ॥ खेचरोऽहं कुतोऽभूव-मित्यपृच्छं च तं प्रभुम् ॥ सर्वज्ञोऽपि ततः प्रोचे, सुधामधुरया गिरा ॥ ४७ ॥ पुष्करद्वीपपश्चार्द्धे, शीतोदापाच्यरोधसि ॥ विजये सलिलावत्यां, वीतशोकास्ति पूर्वरा ॥ ४८ ॥ चक्री रत्नध्वजस्तत्र, रूपमीनध्वजोऽभवत् ॥ तस्याभूतां प्रिये हेम-मालिनीकनकश्रियौ ॥ ४९ ॥ तत्राद्या सुषुवे पुत्रीं, पद्मां नामापरा पुनः ॥ पुत्रीद्वितयं कनक-लतापद्मलताभिधम् ॥ ५० ॥ पद्मा पद्माद्वितीयश्री-र्द्वितीयेऽपि वयस्सहो ॥ जग्राहाजितसेनार्या-सन्निधौ दुर्द्धरं व्रतम् ॥ ५१ ॥ चक्रे चतुर्थकं नाम, सा साध्वी दुस्तपं तपः ॥ वेश्यार्थं युध्यमानौ चा-ऽन्यदा पश्यन्नृपाङ्गजौ ॥ ५२ ॥ दध्यौ चैवमहो ! अस्याः, सौभाग्यं भुवनाद्भुतम् ॥ यदर्थमेतौ युध्येते, कुमारौ मारसुन्दरौ ॥ ५३ ॥ महिम्नाऽमुष्य तपस-स्तन्यमाप्यन्यजन्मनि ॥ भूयात्सौभाग्यमीदृक्षं, निदानमिति सा व्यधात् ॥ ५४ ॥ प्रान्ते चानशनं कृत्वा, सौधर्मे चाभवत्सुरी ॥ विमाता या पुनस्तस्याः, कनकश्रीरभूत्तदा ॥५५॥ सा तु मृत्वा भवं भ्रान्त्वा, कृत्वा जन्मन्यनन्तरे ॥ दानादि पुण्यं त्वमभूः, खेचरो मणिकुण्डली ॥ ५६ ॥ क्रमाद्विपद्य कनक-लतापद्मलते तु ते ॥ भवं भ्रांत्वा प्राग्भवे च, विधाय विविधं शुभम् ॥ ५७ ॥ द्वीपस्यास्यैव भरते, पुरे रत्नपुराव्हये ॥ इन्दुषेणविन्दुषेणौ, जातौ श्रीषेणराट्सुतौ ॥ ५८ ॥ [ युग्मम् ] पद्माजीवो दिवश्च्युत्वा, तत्रैव गणिकाऽभवत् ॥ इन्दुषेणविन्दुषेणौ, युध्येते तत्कृतेऽधुना ! ॥ ५९ ॥ श्रुत्वेति प्राग्भवान् सोऽहं, युवां युद्धान्निषेधितुम् ॥ इहागां तद्विबुध्येथां, मा युध्येथां स्वसुः कृते ॥ ६० ॥ माताहं युवयोः पूर्वभवे वेश्या त्वसौ स्वसा ॥ तद्धि मोहं विहायाशु, श्रयेथां शुद्धिकृद्व्रतम् ॥ ६१ ॥ ततस्तौ साधुसाध्वावां, बोधिताविति वादिनौ ॥ सहस्रैर्भूमिनाथानां, चतुर्भिः परिवारितौ ॥ ६२ ॥ गुरोर्धर्मरुचेः पार्श्वे, दीक्षामादाय धीधनौ ॥ तप्त्वा चिरं तपो घोर-मगातां परमं पदम् ॥ ६३ ॥ [ युग्मम् ] अथ श्रीषेणजीवाद्या-श्चत्वारस्तेपि युग्मिनः ॥ आयुः प्रपूर्य सौधर्म-स्वर्गमीयुः सुखास्पदम् ॥ ६४ ॥ इतश्चात्रैव भरते-ऽभवद्वैताढ्यभूधरे ॥ श्रीरथनूपुरचक्र-वालाह्वं पुरमुत्तमम् ॥ ६५ ॥ तत्रार्ककीर्त्तिर्नामासीत्, खेचरेन्द्रो महाबलः ॥ ज्योतिर्माला च तस्याऽभू-द्राज्ञीन्दोरिव रोहिणी ॥ ६६ ॥ स्वसा स्वयंप्रभा तस्या-ऽभवत्सा चादिमो हरिः ॥ त्रिपृष्ठः पोतनाधीशः, परिणिन्येऽचलानुजः ॥ ६७ ॥

1 तुर्याहनि—इति 'घ' पुस्तके ॥

श्रीषेणनृपजीवोऽथ, प्रथमस्वर्गतश्च्युतः ॥ मुक्ता शुक्ताविव ज्योति–र्मालाकुक्षावथावतरत् ॥ ६८ ॥ स्वप्ने तदा च सा-वित्यं, ददर्शामिततेजसम् ॥ क्रमाच्च सुषुवे पुत्रं, पवित्रं पुण्यलक्षणैः ॥ ६९ ॥ स्वप्नानुसारतस्तस्या–ऽमिततेजा इति स्फुटम् ॥ नामधेयं व्यधाद्राजा, तरुणारुणतेजसः ॥ ७० ॥ भामाजीवश्च्युतः स्वर्गा–दर्ककीर्तिमहीपतेः ॥ सुताराह्वा सुता ज्योति–र्मालागर्भोद्भवाभवत् ॥ ७१ ॥ च्युत्वाभिनन्दिताजीव–स्त्रिपृष्ठस्य हरेरभूत् ॥ स्वयंप्रभाकुक्षिजन्मा, सुतः श्रीविजयाह्वयः ॥ ७२ ॥ शिखिनंदिताजीवस्तु, च्युत्वा ज्योतिःप्रभाभिधा ॥ स्वयंप्रभाकुक्षिभवा, त्रिपृष्ठस्य सुताऽभवत् ॥ ७३ ॥ कपिलः स तु संसारे, भ्रान्त्वा विद्याधराधिपः ॥ पुर्यां चमरचञ्चायां–मजन्यशनिघोषराट् ॥ ७४ ॥ सुतारामर्ककीर्त्तिः श्री–विजयेनोदवाहयत् ॥ ज्योतिःप्रभां त्रिपृष्ठोऽपि, सानन्दोऽमिततेजसा ॥ ७५ ॥ अथान्यदाभि-नन्दन–जगन्नंदनसंज्ञयोः ॥ चारणव्रतिनोः श्रुत्वा, सुधाभां धर्मदेशनाम् ॥ ७६ ॥ अर्ककीर्त्तिः निजे राज्ये, निधाया-मिततेजसम् ॥ मुक्तेः सरलमध्वानं, प्रव्रज्यामाददे मुदा ॥ ७७ ॥ [ युग्मम् ] ततो विद्याधराधीश–मौलिलालित-शासनः ॥ राज्यं तत्पालयामासा–ऽमिततेजा महाभुजः ॥ ७८ ॥

इतश्च मरणे विष्णो–स्त्रिपृष्ठस्य विरक्तधीः ॥ न्यस्य श्रीविजयं राज्ये, प्राव्राजीदचलो बलः ॥ ७९ ॥ अथान्यदा सुताराश्री–विजयौ द्रष्टुमुत्सुकः ॥ जगाम पोतनपुरे–ऽमिततेजा महीपतिः ॥ ८० ॥ उत्तम्भितध्वजं तच्च, पुरमानन्द-मेदुरम् ॥ विशेषाच्च नृपकुलं, वीक्ष्य हृष्टं विसिष्मिये ॥ ८१ ॥ व्योमोत्तीर्णं तं च वीक्ष्यो–दस्थात् श्रीविजयो मुदा ॥ मिथो जामिपती तौ च, गाढमालिङ्गतां मिथः ॥८२॥ ततः सिंहासनासीनं, नृपं सिंहासनस्थितः ॥ पप्रच्छामितते-जास्तं, किंनिमित्तोऽयमुत्सवः ॥ ८३ ॥ ततः श्रीविजयोवादी–दितोऽतीतेऽष्टमे दिने ॥ कोऽपि नैमित्तिकोऽत्रागात्, प्रतिहारनिवेदितः ॥ ८४ ॥ किमर्थमागास्त्वमिति, मया पृष्टश्च सोऽब्रवीत् ॥ निमित्तं वक्तुमागां त–त्सावधानः शृणु प्रभो ! ॥८५॥ सप्तमेऽह्नि दिनादस्मा–ज्जाते मध्यंदिने महान् ॥ पतिष्यति तडिद्दण्डः, पोतनाधीशमूर्द्धनि ॥ ८६ ॥ तत्कर्णकटुकं श्रुत्वा, कुपितोऽमात्यपुङ्गवः ॥ तदा पतिष्यति किमु, त्वयीति तमवोचत ॥ ८७ ॥ दैवज्ञोऽथावदन्मह्यं, यथादृष्टार्थवादिने ॥ प्रतीपशकुनायेत्र, धीसखाधीश ! मा कुपः ॥ ८८ ॥ तत्राह्नि मयि तु स्वर्ण्ण–रत्नवृष्टिः पति-ष्यति ॥ वदन्तमिति दैवज्ञ–मित्यपृच्छमहं ततः ॥ ८९ ॥ निमित्तमीदृग् दैवज्ञा–ऽधीतं ब्रूहि कुतस्त्वया ? ॥ सोवा-दीदचलस्वामी, प्रव्रज्यामाददे यदा ॥ ९० ॥ तदा प्रव्रजता पित्रा, सहाहं प्राव्रजं शिशुः ॥ महानिमित्तमष्टांगं, तत्रेदं शिक्षितं मया ॥ ९१ ॥ पुरं च पद्मिनीषंडं, यौवने विहरन्नगाम् ॥ हिरण्यलोमिकाह्वा मे, तत्र चास्ति पितृष्वसा ॥ ९२ ॥ तया स्वपुत्री दत्तासी–द्बाल्याच्चंद्रयशा मम ॥ अहं तु प्राव्रजमिति, पर्यणैषं न तां तदा ॥ ९३ ॥ तां च वीक्ष्याऽधुना प्राप्त–यौवनां व्यामुहं मुहुः ॥ तत्सोदरगिरा त्यक्त–व्रतः पर्यणयं च ताम् ॥ ९४ ॥ निमित्तेन ततः स्वार्थं, महानर्थमसुं च ते ॥ विज्ञायाहमिहागां त–द्यथोचितमथो कुरु ॥ ९५ ॥ तेनेत्युक्तेऽब्रवीदेको, मंत्री नाव्धौ पतेत्तडित् ॥ तत्र तिष्ठतु सप्ताहं, नावारूढो विभुस्ततः ॥ ९६ ॥ ऊचेऽन्यः केन तत्राऽपि, पतन्ती सा निरोत्स्यते ॥ ? सप्ताहं वसतु स्वामी, तद्वैताढ्यगुहान्तरे ! ॥ ९७ ॥ तृतीयो न्यगदन्नाय–मुपायः प्रतिभाति मे ॥ अवश्यम्भावी भावो हि, यत्रतत्रापि जायते ! ॥ ९८ ॥ तत्तपः क्रियतां सर्वैः, सर्वोपद्रववारकम् ॥ तपसा क्षीयते कर्म, निकाचितमपि ध्रुवम् ॥ ९९ ॥ तुर्यः प्रोचे पोतनोर्वी–पतेरुपरि कथ्यते ॥ गणकेन तडित्पातो, न तु श्रीविजयप्रभोः ॥ १०० ॥ क्रियतामपरः कोऽपि, सप्ताहमिह तन्नृपः ॥ पतिष्यति तडित्तस्मिन्, स्वामी स्थास्यति चाक्षतः ॥ १०१ ॥ प्रतिपेदे मुदा दैव–ज्ञेनाऽमात्यैश्च तद्वचः ॥ अहो ! साधु मतिज्ञानं, भवतामिति वादिभिः ॥ १०२ ॥ ततोऽहमब्रवं त्रातुं, स्वप्राणानपरं नरम् ॥ न घातयिष्ये स्वप्राणाः, सर्वेषामपि हि प्रियाः ! ॥ १०३ ॥ ऊचिरे सचिवाः स्वामिन् !, विचा-रोऽसौ विमुच्यताम् ॥ श्रीवैश्रवणयक्षस्य, मूर्त्तीराज्येऽभिषिच्यताम् ॥ १०४ ॥ उपद्रवो दिव्यशक्त्या, न चेद्भावी तदा शुभम् ॥ भावी चेज्जीवहिंसायाः, पापं नाथ ! न भावि ते ॥ १०५ ॥ इदं हि युक्तमित्युक्त्वा, ततोऽहं जिन-सद्मनि ॥ गत्वास्थां पौषधं कृत्वा, दर्भसंस्तारकं श्रितः ! ॥१०६॥ राज्येऽभिषिक्तं यक्षं चा–ऽभजन्मामिव नागराः ॥ सप्तमे चाह्नि मध्याह्ने, गर्जन्नुदनमद् घनः ॥ १०७ ॥ उद्दण्डोऽथ तडिद्दण्डः, प्रचण्डो वडवाग्निवत् ॥ यक्षमूर्त्तौ सनि-र्घातः, पपात जलदात्ततः ॥ १०८ ॥ तदा च तुष्टा दैवज्ञे, रत्नानि ववृषुः प्रजाः ॥ चैत्याच्च निर्गतं राज्ये–ऽभ्यषि-ञ्चन्मां पुनर्मुदा ॥ १०९ ॥ मयापि पद्मिनीषंडं, दत्वा पत्तनमुत्तमम् ॥ व्यसर्जि गणको भूरि, तेन ह्युपकृतं मम ! ॥ ११० ॥ मूर्तिं च धनदस्याहं, दिव्यां नव्यामकारयम् ॥ महं कुर्वन्ति पौराश्च, विघ्नो मे शान्त इत्यमुम्

॥१११॥ तदाकर्ण्य प्रमुदितो, दिव्यैरंशुकभूषणैः ॥ जामिं सुतारामभ्यर्च्या-ऽमिततेजा ययौ गृहम् ॥ ११२ ॥

अथान्यदा श्रीविजयः, समं देव्या सुतारया ॥ ययौ क्रीडितुमुद्यानं, मुदा ज्योतिर्वनाभिधम् ॥ ११३ ॥ तदा च कपिलजीवः, खेचरोऽशनिघोषराट् ॥ सुतारां प्राग्भववधूं, तत्राद्राक्षीद्दिवि व्रजन् ॥११४॥ तस्यां प्राग्भवसंस्कारा-त्सोऽनुरागं दधौ भृशम् ॥ तां जिहीर्षुर्मृगं हैमं, तदग्रे विद्यया व्यधात् ॥ ११५ ॥ सुतारा कान्तमित्यूचे, तं च श्री-ख्यातिमञ्जुलम् ॥ आनीय मृगमेनं मे, देहि क्रीडाकृते प्रभो ! ॥ ११६ ॥ ततो ग्रहीतुं तं धावन्, यावद्दूरमगान्नृपः ॥ तावदेकाकिनीं देवीं, जहाराऽशनिघोषराट् ॥ ११७ ॥ नृपं हन्तुं प्रयुक्ता च, तेन विद्या प्रतारणी ॥ प्रोच्चकैः पुत्-कारेति, सुतारारूपधारिणी ! ॥ ११८ ॥ दष्टां कुर्कुटसर्पेण, प्रिय ! त्रायस्व मां द्रुतम् ॥ तदाकर्ण्य नृपो याव-त्तत्रा-गाद्गाढमाकुलः ॥ ११९ ॥ तावत्तां पतितां पृथ्व्यां, विपन्नां वीक्ष्य पार्थिवः ॥ मूर्च्छितो न्यपतद्भूमा-वनुकुर्वन्निव प्रियाम् ॥ १२० ॥ सिक्तोऽथ चन्दनरसैः, प्राप्तसंज्ञो धराधिपः ॥ व्यलापीदिति हा कान्ते!, किं ते जातेदृशी दशा ? ॥ १२१ ॥ हिरण्यहरिणेनाद्य, मूढोऽहं वञ्चितोऽस्मि हा ! ॥ मय्यासन्ने हि शेषाहि-रपि त्वां दंष्टुमप्रभुः ॥ १२२ ॥ त्वां विना न क्षणमपि, जनोऽसौ जीवितुं क्षमः ! ॥ कदाऽपि किं जीवति हि, मीनः पानीयमन्तरा ? ॥ १२३ ॥ तद्दुःखं त्वद्वियोगोत्थ-मसासहिरयं जनः ॥ अन्तयत्वनुगम्य त्वां, सत्वरं जीवितेश्वरि ! ॥ १२४ ॥ इत्युदीर्य महीनाथः, समं दयितया तया ॥ विमोहमोहितोऽध्यास्त, नियुक्तै रचितां चिताम् ॥ १२५ ॥ वह्नौ ज्वलितुमारब्धे, तत्रागातां च खेचरौ ॥ तयोश्चैको मंत्रितेना-ऽसिञ्चन्नीरेण तां चिताम् ॥ १२६ ॥ ततः प्रतारणी कृत्वा-ट्टहासान् द्राक् पलायत ॥ तद्वीक्ष्य दध्यौ राट् केयं, क्व मे कान्ता क्व चाऽनलः ! ॥ १२७ ॥ ध्यायन्निति नृपोऽप्राक्षी-त्किमेतदिति तौ नरौ ॥ ततो राजानमानम्य, तावप्येवमवोचताम् ॥ १२८ ॥ आवां हि पत्ती अमित-तेजसो नन्तुमर्हतः ॥ निर्यातौ प्रागि-हायातौ, वाणीमश्रृणुवेदृशीम् ॥ १२९ ॥ हा सोदरामिततेजो !, हा श्रीविजय मत्प्रिय ! ॥ इमां सुतारामेतस्मा-द्विमोचयत खेचरात् ॥ १३० ॥ गिरं तामनुधावद्भ्यां, दृष्टावाभ्यां तव प्रिया ॥ उपात्ताशनिघोषेण, सुताराऽस्मत्प्रभोः स्वसा ॥१३१॥ तां विमोचयितुं दुष्ट!, तिष्ठ तिष्ठेति वादिनौ ॥ योद्धुमुत्कौ समं तेन, सुताराऽऽवामदोऽवदत् ॥१३२॥ युवां ज्योतिर्वनं यातं, तत्र श्रीविजयप्रभुम् ॥ प्रतारण्या विप्रतार्य, मार्यमाणं च रक्षतम् ॥१३३॥ ततोऽत्र द्रुतमेता-भ्या-मावाभ्यां मंत्रितैर्जलैः ॥ चिताग्निः शमितो दुष्टा, नाशिता च प्रतारणी ॥१३४॥ हृतां सुतारां ज्ञात्वाऽथ, विपन्नं तं नरेश्वरम् ॥ गाढाग्रहेण वैताढ्यं, निन्यतुस्तौ नभश्चरौ ॥ १३५ ॥ तं वाभ्युदस्थात्सहसा-ऽमिततेजाः ससम्भ्रमः ॥ प्रतिपत्तिं च कृत्वोच्चैः, पप्रच्छागमकारणम् ॥ १३६ ॥ ततः श्रीविजयेनोक्तौ, तौ विद्याधरकुञ्जरौ ॥ तस्मै सर्वं सुता-राया, हरणोदन्तमूचतुः ॥ १३७ ॥ क्रुद्धोऽथामिततेजास्तं, प्रोचे हृत्वा तव प्रियाम् ॥ मज्जामिं च कियन्नामा-ऽशनि-घोषः स जीविता ॥ १३८ ॥ उक्त्वेति शस्त्रावरणीं, बन्धनीं मोचनीं तथा ॥ विद्यामामिततेजाः श्री-विजयाय ददौ मुदा ॥१३९॥ वृतं सैन्यान्वितैः स्वीय-सुतानां पञ्चभिः शतैः ॥ प्रैषीत् श्रीविजयं सद्यः, सुतारानयनाय सः ॥१४०॥ ततो विद्याधरानीकै-श्छादयन् द्यां घनैरिव ॥ पुर्यां चमरचंचायां, क्षिप्रं श्रीविजयो ययौ ॥ १४१ ॥ स्वयं त्वशनि-घोषं तं, भूरिविद्याविदं विदन् ॥ सहस्ररश्मिना साकं, स्वपुत्रेणार्ककीर्त्तिसूः ॥ १४२ ॥ महाज्वालां महाविद्यां, पर-विद्याबलापहाम् ॥ महासत्वः साधयितुं, जगाम हिमवद्गिरिम् ॥ १४३ ॥ [ युग्मम् ] सहस्ररश्मिना रक्ष्य-माणो मासोपवासकृत् ॥ विद्यां साधयितुं तत्रा-ऽमिततेजाः प्रचक्रमे ॥ १४४ ॥

इतश्चाशनिघोषाय, दूतं श्रीविजयो नृपः ॥ प्राहिणोत्सोऽपि गत्वा तं, प्रोवाचेति प्रगल्भवाक् ॥ १४५ ॥ प्रता-रण्या विप्रतार्य, श्रीश्रीविजयपार्थिवम् ॥ हरन् सुतारां किं वीर-मन्यस्त्वं न हि लज्जितः ॥ १४६ ॥ यद्वा पौरुष-हीनानां, छलमेव बलं भवेत् ! ॥ किन्तु ध्वान्तमिवार्के श्री-विजये तत्कथं स्फुरेत् ? ॥ १४७ ॥ सुतारां देहि तत्तस्मै, तूर्णं प्रणतिपूर्वकम् ॥ त्वत्प्राणैः सह तां नेता, नेता श्रीविजयोऽन्यथा ! ॥ १४८ ॥ शशंसाशनिघोषोऽथ, साधु धृष्टोऽसि दूत रे ! ॥ यदि श्रीविजयोऽत्रागा-न्मन्दधीस्तर्हि तेन किम् ? ॥ १४९ ॥ शौर्यांशोऽपि न मे तेन, घरा-केण सहिष्यते ! ॥ भानुप्रकाशलेशोऽपि, सह्यते कौशिकेन किम् ॥ १५० ॥ यथाऽऽयातस्तथा यातु, तदसाविह तु स्थितः ॥ सुतारां लप्स्यते नैव, लप्स्यते तु विगोपनाम् ॥ १५१ ॥ इति तद्वचनं दूतो, गत्वा राज्ञे व्यजिज्ञपत् ॥ सोऽथ क्रुद्धो भृशं युद्ध-सज्जः सेनामसज्जयत् ॥ १५२ ॥ विज्ञायाशनिघोषोऽपि, तस्य सैन्यं रणोद्यतम् ॥ सानीका-नश्वघोषादीन्, प्राजिघायाऽऽजयेऽङ्गजान् ॥ १५३ ॥ पूर्णेऽथ रणतुर्याणां, निर्घोषैरभितोऽम्बरे ॥ तयोः प्रववृते

घोरं, महानीकमनीकयोः ॥ १५४ ॥ तदा च समरं द्रष्टुं, देवानां दिवि नरत्युपाग् ॥ वीराः केऽपि न्यधुर्निभं, कुर्वन्तो मण्डपं शरैः ॥ ॥ १५५ ॥ कुन्तप्रोन्तान् रिपून् केचि-दुदधुर्वटकानिव ॥ केप्यद्रीणामिवेभानां, दन्तान् दण्डैरभ्यगञ्जयत ॥ १५६ ॥ मुद्गरैर्मृदुः केपि, घटानिव भटा रथान् ॥ परिघैश्च परान् केचि-च्चुक्षुदुश्चणकानिव ॥ १५७ ॥ कुष्माण्डानिव केचित्तु, द्विपः खड्गैर्व्यदारयन् ॥ केप्यभिन्दन् द्विपन्मौलीन्, गदाभिर्नालिकेरवत् ॥ १५८ ॥ केऽप्युत्खातमहान्तेन, प्रजहुर्नि-ष्ठितायुधाः ॥ योद्धारः केप्ययुध्यन्त, नियुद्धेन महौजसः ॥ १५९ ॥ शस्त्रमंत्रास्त्रमायाभिः, मदैवं युध्यमानयोः ॥ किंचिदूनो मास एको, व्यत्यगात्सैन्ययोस्तयोः ॥ १६० ॥ भटैः श्रीविजयस्याथा-ऽभज्यन्ताऽशनिघोषजाः ॥ ततो ढुढौके युद्धाया-ऽशनिघोषनृपः स्वयम् ॥ १६१ ॥ इक्षुनुक्षेव सोऽभांक्षीत्, सुतानमिततेजसः ॥ ततः श्रीविजयो राजा, जन्यायाऽढौकत स्वयम् ॥ १६२ ॥ साश्चर्यैर्वीक्षितौ देवै-स्तौ मिथो घातयश्चिनौ ॥ उभावपि महावीर्यौ, चक्रतुः समरं चिरम् ॥ १६३ ॥ अथ श्रीविजयश्छित्वा-ऽसिना शत्रुं द्विधा व्यधात् ॥ जातावशनिघोषौ द्वौ, ते तत्खण्डे उभे ततः ॥ १६४ ॥ चत्वारोऽशनयोऽभूवं-स्तयोश्च छिन्नयोः पुनः ॥ भूयोऽपि तेषु भिन्नेषु, तेनाथाशन-योऽभवन् ॥ १६५ ॥ प्रतिप्रहारमिति तै-र्वर्द्धमानैर्मुहुर्मुहुः ॥ किंकर्त्तव्यविमूढोऽभू-द्यावत् श्रीविजयो नृपः ॥ १६६ ॥ तावत्तत्रामिततेजाः, सिद्धविद्यः समाययौ ॥ करीव सिंहं तं वीक्ष्या-ऽशनिघोषः पलायत ॥ १६७ ॥ तं चानेतुं

१ युद्धाय ।

महाज्वाला-मादिदेशार्ककीर्त्तिसूः ॥ ततस्तमन्वधाविष्ट, सा विद्या विश्वजित्वरी ॥ १६८ ॥ तस्या नश्यन् क्वाप्य-पश्यन्, शरण्यं भृशमाकुलः ॥ विवेशाशनिघोषोऽपि, भरतार्द्धेऽत्र दक्षिणे ॥ १६९ ॥ तत्रः श्रमंश्च सीमाद्रौ, तत्कालो-त्पन्नकेवलम् ॥ बलदेवर्षिमचलं, सोद्राक्षीदमरैर्वृतम् ॥ १७० ॥ तमेव शरणीचक्रे-ऽशनिघोषोऽपि सत्वरम् ॥ न्यव-र्तत ततो मोघा, महाज्वाला विहाय तम् ॥ १७१ ॥ गत्वा च वार्त्तां तां सर्वा-मुवाचामिततेजसे ॥ ततः स मुमुदे बाढं, नृपः श्रीविजयस्तथा ॥ १७२ ॥ ततः सुतारामानेतुं, प्रेष्य मारीचिखेचरम् ॥ ससैन्यौ तौ विमानस्थौ, द्राक् सीमाद्रौ समेयतुः ॥ १७३ ॥ तत्र प्रणमतां भक्त्या-ऽचलकेवलिनं च तौ ॥ दुर्यां चमरचंचायां, मारीचिः खेचरोऽ-प्यगात् ॥ १७४ ॥ अहं सुतारामानेतुं, प्रहितोऽमिततेजसा ॥ आगामिहेति च स्माहा-ऽशनिघोषस्य मातरम् ॥ १७५ ॥ ततः सुतारामादाय, सीमाद्रौ सा ययौ द्रुतम् ॥ अर्पयामास तां च श्री-विजयामिततेजसोः ॥ १७६ ॥ तदा च क्षमयामासा-ऽशनिघोषोऽपि तौ मुदा ॥ अथ तेषां पुरश्चक्रे, देशनामचलप्रभुः ॥ १७७ ॥ देशनान्ते च रामर्षि-मित्यूचेऽशनिघोषराट् ॥ न मया दुष्टभावेन, सुताराऽपहृता प्रभो ! ॥ १७८ ॥ किन्तु प्रतारणीविद्यां, साध-यित्वा गृहं व्रजन् ॥ ज्योतिर्वनेऽपश्यमिमा-मुपश्रीविजयं स्थिताम् ॥ १७९ ॥ हेतोः कुतोऽप्यभूदस्यां, मम प्रेम चचोऽतिगम् ॥ विहायैनां पुरो गन्तुं, ततोऽहं नाऽभवं प्रभुः ॥ १८० ॥ पार्श्वस्थिते श्रीविजये, नैनां हर्तुमहं क्षमे ॥ प्रतार्येति प्रतारण्या, नृपमेनामपाहरम् ॥ १८१ ॥ अमूमपापां चामुंच-मातुरं मातुरन्तिके ॥ जस्यै चानुचितं किञ्चि-दवोचं वचसापि न ॥ १८२ ॥ तद्ब्रूहि भगवन्नस्यां, किं मम प्रेमकारणम् ॥ श्रीषेणादीनां ततस्ता, कथामुक्त्वेत्यवग् मुनिः ॥ १८३ ॥ श्रीषेणसत्यभामाभि-नंदिताशिखिनंदिताः ॥ विपद्य युग्मिनोऽभूवं-स्ततो मृत्वाऽभवन् सुराः ॥ १८४ ॥ च्युत्वा ततोऽपि श्रीषेणो-ऽमिततेजा अभूदसौ ॥ ज्योतिःप्रभाह्वा भार्यास्य, जज्ञे सा शिखिनंदिता ॥ १८५ ॥ जी-वोऽभिनंदितायास्तु, सोऽयं श्रीविजयोऽभवत् ॥ तस्य पत्नी सुतारेयं, भामाजीवस्त्वजायत ॥ १८६ ॥ कपिलस्तु ततो मृत्वा, भ्रांत्वा तिर्यक्षु भूरिशः ॥ तापसस्य सुतो धर्म-रतोऽभूद्धर्मिलाभिधः ॥ १८७ ॥ स च बालतपस्तीव्रं, कुर्व-न्नारभ्य बाल्यतः ॥ खे यांतमन्यदाऽपश्यत्, खेचरं परमर्द्धिकम् ॥ १८८ ॥ अमुष्मात्तपसो भावि-भवे भूयासमी-दृशः ॥ निदानमिति सोऽकार्षी-न्मृत्वा च त्वमभूस्ततः ॥ १८९ ॥ ततः प्राग्भवसम्बन्धात्, स्नेहोऽस्यां भवतोऽ-भवत् ॥ शतशोऽपि भवान् याति, संस्कारः स्नेहवैरयोः ॥ १९० ॥ श्रुत्वेति विस्मितेष्वन्तः, सकलेष्वर्ककीर्त्तिसूः ॥ भव्योऽस्मि यदि वा नास्मी-त्यपृच्छत्तं मुनिप्रभुम् ॥ १९१ ॥ साधुरूचे भवादस्मा-द्भावी त्वं नवमे भवे ॥ क्षेत्रेऽत्र पंचमश्चक्री, धर्मचक्री च षोडशः ॥ १९२ ॥ तस्मिन् भवे श्रीविजयो, ज्येष्ठपुत्रो गणी च ते ॥ भावीत्याकर्ण्य तौ श्राद्ध-धर्मं स्वीचक्रतुर्नृपौ ॥ १९३ ॥ अथेत्यूचेऽशनिः साधुं, विना सन्मार्गदेशकम् ॥ मूढः पान्थ इवारण्ये, भवे सु-चिरमभ्रमम् ॥ १९४ ॥ दिष्ट्या त्वमद्य दृष्टोऽसि, सिद्धिपूर्मार्गदर्शकः ॥ तत्प्रसद्य प्रभो ! सद्यः, साधुधर्मं प्रदेहि मे ॥ १९५ ॥ अनुज्ञातोऽथ मुनिना-ऽशनिघोषो न्यधात्सुधीः ॥ स्वपुत्रमभ्रघोषाख्य-मुत्संगेऽमिततेजसः ॥ १९६ ॥

अस्मिन्नपि त्वया साधो!, वर्तितव्यं स्वपुत्रवत् ॥ तमित्युक्त्वाऽचलस्वामि-समीपे सोग्रहीद्व्रतम् ॥ १९७ ॥ प्रणम्याथ बलर्षिं श्री-विजयाऽमिततेजसौ ॥ अन्येऽपि च प्रमुदिताः, स्थानं निजं निजं ययुः ॥ १९८ ॥ श्राद्धधर्मं पालयन्तौ, द्योतयन्तौ च शासनम् ॥ कालं खेचरमर्त्येशौ, तौ प्राज्यमतिनिन्यतुः ॥ १९९ ॥

अथाऽन्यदा श्रीविजयो-ऽमिततेजाश्च सङ्गतौ ॥ गतौ मेरुमवन्देता-मनश्वरजिनेश्वरान् ॥ २०० ॥ तत्र चानमतां स्वर्ण-शिलास्थौ चारणौ मुनी ॥ ध्यानस्थौ विपुलमति-महामत्याह्वयौ मुदा ॥ २०१ ॥ तयोश्च देशनां सर्व-भावानित्यत्वशंसिनीम् ॥ श्रुत्वा तौ कियदायुर्नौ, शेषमस्तीत्यपृच्छताम् ॥ २०२ ॥ तावाख्यतां शेषमायुः, षड्विंशतिरहानि वाम् ॥ ततस्तौ धर्मैकृत्योत्कौ, स्वं स्वं धाम समेयतुः ॥ २०३ ॥ अष्टाहिकोत्सवं कृत्वा, तत्र चार्हतवेश्मसु ॥ दानं दत्वा च दीनादेः, पुत्रौ विन्यस्य राज्ययोः ॥ २०४ ॥ प्रव्रज्य चाभिनन्दन-जगन्नंदनसन्निधौ ॥ तौ पादपोपगमनानशनं चक्रतुर्मुदा ॥ २०५ ॥ [ युग्मम् ] स्वतो महर्द्धिकं तातं, तदा श्रीविजयोऽस्मरत् ॥ भूयासं पितृतुल्योऽहं, निदानमिति चाकरोत् ॥ २०६ ॥ विपद्याऽमिततेजाः श्री-विजयश्च बभूवतुः ॥ गीर्वाणौ प्राणतस्वर्गे, विंशत्यर्णवजीवितौ ॥ २०७ ॥

इतश्च जंबुद्वीपप्राग्-विदेहायनिमण्डने ॥ विजये रमणीयाह्वे, शुभाख्याऽभूत् पुरी शुभा ॥ २०८ ॥ तत्राऽऽसीद्गुणरत्नाढ्यो, राजा स्तिमितसागरः ॥ वसुंधरानुद्धराह्वे, पत्न्यौ तस्य च बन्धुरे ॥ २०९ ॥ प्रच्युत्य प्राणतस्वर्गा-ज्जीवोऽथामिततेजसः ॥ कुक्षौ वसुंधरादेव्याः, पुत्रत्वेनोदपद्यत ॥ २१० ॥ वदने विशतो दंति-वृषेन्दुकमलाकरान् ॥ सुखसुप्ता तदापश्य-त्स्वप्ने सा कमलानना ॥ २११ ॥ तया स्वप्नफलं पृष्ट-श्चैवं स्माह महीपतिः ॥ स्वप्नैरेभिः शुभे ! भावी, बलदेवस्तवाङ्गजः ॥ २१२ ॥ तदाकर्ण्य प्रमुदिता, राज्ञी गर्भं बभार सा ॥ क्रमाचाजीजनत्पुत्रं, श्वेतवर्णं सुलक्षणम् ॥ २१३ ॥ चक्रेऽपराजित इति, तस्य नामोत्सवैर्नृपः ॥ मितम्पच इव द्रव्यं, तं चालालयदन्वहम् ॥ २१४ ॥ जीवः श्रीविजयस्याऽपि, च्युत्वा प्राणतकल्पतः ॥ उदरेऽनुद्धरादेव्याः, समवातरदन्यदा ॥ २१५ ॥ सिंहलक्ष्मीभानुकुम्भाम्भोधिरत्नोच्चयानलान् ॥ मुखे प्रविशतः स्वप्ने-ऽद्राक्षीद्राज्ञी तदा च सा ॥ २१६ ॥ स्वप्नार्थमथ भूनाथः, पृष्टो मुदितया तया ॥ सानन्दमवदत्पुत्रो, विष्णुर्भावी तवाऽनघे ! ॥ २१७ ॥ कालेऽसूत सुतं सापि, श्यामवर्णं मनोहरम् ॥ तस्योत्सवैर्नृपो नामा-ऽनन्तवीर्यं इति व्यधात् ॥ २१८ ॥ भ्रातरौ वर्द्धमानौ तौ, रममाणौ मिथोऽनिशम् ॥ कलाकलापं सकलं, गुरोर्जगृहतुर्द्रुतम् ॥ २१९ ॥ वसन्तेनेव माकन्दौ, यौवनेन विभूषितौ ॥ भृङ्गीरिवाङ्गनादृष्टी-स्तावमोहयतां भृशम् ॥ २२० ॥ भूपोऽन्यदा वाहकेल्यां, गतः स्तिमितसागरः ॥ स्वयम्प्रभाऽभिधं साधु-मुद्यानस्थमवन्दत ॥२२१॥ देशनां च ततः श्रुत्वा, प्रतिबुद्धः स बुद्धिमान् ॥ राज्ये न्यस्यानन्तवीर्यं, प्राव्राजीत्तस्य सन्निधौ ॥ २२२ ॥ स चारुचरितोऽप्यन्ते, किञ्चिद्दीक्षां व्यराधयत् ॥ कालं कृत्वा च चमरा-ऽभिधोऽभूदसुराधिपः ॥ २२३ ॥ [1] साग्रजोऽनन्त-

1 सभ्रातानन्तवीर्योपि । इति 'घ' संज्ञकपुस्तके ॥

वीर्योऽपि, वर्यवीर्यविराजितः ॥ आखण्डल इवाखण्ड-शासनो बुभुजे भुवम् ॥ २२४ ॥ खेचरेणान्यदैकेन, समं सख्यमभूत्तयोः ॥ स च दत्वा तयोर्विद्याः, सर्वा वैताढ्यमीयिवान् ॥ २२५ ॥ 'किराती' 'वर्बरी' संज्ञे, चाभूतां चेटिके तयोः ॥ हरन्त्यौ जगतश्चित्तं, गीतनाट्यादिकौशलात् ॥ २२६ ॥ पुरोऽन्यदा सोदरयो-रास्थानस्थितयोस्तयोः ॥ प्रारब्धे नाटके ताभ्यां, तत्रोपेयाय नारदः ॥ २२७ ॥ संगीताक्षिप्तचित्ताभ्यां, ताभ्यां चाकृतगौरवः ॥ अन्तः स कुपितोऽत्यन्त-मगाद्वैताढ्यपर्वतम् ॥ २२८ ॥ दमितारिः प्रतिहरि-स्तत्र विद्याधराधिपः ॥ द्रागऽभ्युत्थाय तं सिंह-विष्टरेण न्यमन्त्रयत् ॥ २२९ ॥ दत्ताशिषं निविष्टं च, दमितारिस्तमित्यवक् ॥ त्वया हि भ्रमता स्वैरं, ब्रूहि दृष्टं किमद्भुतम् ॥ २३० ॥ ततः प्रमुदितोऽवादी-न्नारदोऽद्यैव भूपते ! ॥ शुभापुर्यां गतोऽनन्त-वीर्यस्योर्वीपतेः पुरः ॥२३१॥ किरातीवर्बरीसंज्ञ-चेटिकारब्धनाटकम् ॥ अहमद्भुतमद्राक्षं, दुरापं सुसदामपि !॥ २३२ ॥ [ युग्मम् ] तद्विना राज्यमप्येतत्, फल्गु भोज्यमिवाघृतम् ॥ उक्त्वेति गगनेनागा-न्नारदर्षिः कलिप्रियः ॥२३३॥ दूतोऽथानन्तवीर्याय, प्रहितो दमितारिणा ॥ गत्वा शुभापुरीं नत्वा, साग्रजं तमदोऽवदत् ॥२३४॥ विजयार्द्धेऽत्र यत्सारं, दमितारेस्तदर्हति ॥ चेट्यौ नट्याविमे राज्य-सारे तस्मै प्रदेहि तत् ! ॥ २३५ ॥ उवाचानन्तवीर्योऽथ, यातु दूताऽधुना भवान् ॥ त्वरितं प्रेषयिष्यामि, किञ्चिदालोच्य चेटिके ॥ २३६ ॥ ततः प्रयाते दूते तौ, भ्रातराविति दध्यतुः ॥ अयं हि विद्याशक्त्यैव, भूपोऽस्मासु प्रभूयते ॥ २३७ ॥ तत्साधयामो विद्यास्ता, यास्तेन सुहृदार्पिताः ॥ अविहस्तौ रहस्तौ द्वौ, यावद्ध्यमृश-

स्वामिति ॥ २३८ ॥ प्रज्ञप्त्याद्यास्तावदेत्य, विद्यादेव्योऽवदन्नदः ॥ याः साधयितुमिष्टा वा–मायातास्ताः स्वयं वयम् ॥ २३९ ॥ प्राग्भवे साधितत्वाद्धि, नाऽधुना साधनेष्यते ॥ युवां तदनुजानीत–मस्मान् संक्रमितुं तनौ ॥ २४० ॥ ताभ्यां चानुमताः सर्वा, विविशुस्तास्तदङ्गयोः ॥ तासां ताभ्यां सपर्यां च, मुदितौ तौ वितेनतुः ॥ २४१ ॥ इतश्च प्रहितो दूतो, भूयोऽपि दमितारिणा ॥ क्षिप्रमागत्य तावेव–मवदद्वदतां वरः ॥ २४२ ॥ दास्यौ दास्याच इत्युक्त्वा, युवाभ्यां प्रहिते न यत् ॥ युवयोस्तदसुभ्योऽपि, ते प्रिये इति दृश्यते ! ॥ २४३ ॥ अथ चेद्वां प्रियाः प्राणाः, तत्ते प्रेषयतं द्रुतम् ॥ अमर्षणः स हि प्राणा–नन्यथा वां हरिष्यति ! ॥ २४४ ॥ ततस्तावूचतुः स्वामी, स हि तोष्यो धनैर्धनैः ॥ आभ्यां चेत् प्रियते तर्हि, ते लात्वा त्वं प्रगे व्रजेः ॥ २४५ ॥ ताभ्यामित्युदितो दूत–स्तद्दत्ते न्यवस-द्गृहे ॥ न्ययुङ्क्तां राज्यभारं, सुधियौ धीसखेषु तौ ॥ २४६ ॥ प्रातश्च विद्यया चेटी–भूतौ दूतमुपेयतुः ॥ साग्र-जोऽनन्तवीर्यो नौ, प्रैषीदित्यूचतुश्चतम् ॥ २४७ ॥ तत आदाय ते दूतो, चैताढ्यं मुदितो ययौ ॥ दमितारेश्चोपनीय, प्रोवाचेति कृताञ्जलिः ॥ २४८ ॥ प्रभो ! ऽपराजितानन्त–वीर्यौ त्वद्वशवर्त्तिनौ ॥ इमे ते चेटिके मह्य–मदत्तां प्राभृ-ताय ते ॥ २४९ ॥ ते नव्यौ नाटकं कर्त्तुं, दमितारिरथादिशत् ॥ अपूर्वदर्शनोत्को हि, विलम्बं नावलम्बते ! ॥२५०॥ ततस्ते चक्रतुर्नाट्यं, पूर्वरङ्गादिपूर्वकम् ॥ रसाशेषविशेषाढ्यं, विश्वविश्वैककार्मणम् ॥ २५१ ॥ प्रेक्षणीयं प्रेक्षणीयं, प्रेक्ष्य तत् क्ष्माधवः सुधीः ॥ भूर्भुवःस्वस्त्रयीसारं, मेने तच्चेटिकाद्वयम् ॥ २५२ ॥ अथ नाट्यं शिक्षयितुं, स्वपुत्रीं कनक-श्रियम् ॥ दमितारिस्तयोर्विश्व–जैत्ररूपश्रियं ददौ ॥ २५३ ॥ अनन्तवीर्यं गायन्त्यौ, रूपाद्यैरद्भुतं गुणैः ॥ तामशिक्ष-यतां नाट्यं, ते मायाचेटिके ततः ॥ २५४ ॥ युवाभ्यां गीयते भूयः, कोऽयमित्यथ कन्यया ॥ पृष्टे तयाब्रवीदेवं, माया-चेट्यपराजितः ॥ २५५ ॥ शुभापुरीप्रभू रूप–हृतदर्पकदर्पकः ॥ परापराजितो भ्राता–ऽपराजितविभोर्लघुः ॥ २५६ ॥ गीयते जगतीगेयो–ऽनन्तवीर्याह्वयो ह्ययम् ॥ युवा युवत्या स यया, न दृष्टः तज्जनिर्मुधा ! ॥ २५७ ॥ [ युग्मम् ] तन्निशम्योल्लसत्प्रेम–हर्षा हृल्लेखमाश्रिता ॥ कथं द्रक्ष्यामि तं कान्त–मिति साऽचिन्तयच्चिरम् ॥ २५८ ॥ इङ्गितज्ञ-स्ततोऽवादी–त्तामेवमपराजितः ॥ तं विश्वसुभगोत्तंसं, किं मृगाक्षि ! दिदृक्षसे ? ॥ २५९ ॥ कनकश्रीरथाचख्यौ, क नु मे तस्य दर्शनम् ॥ प्राणिनां मन्दभाग्यानां, दुरापो हि द्युसन्मणिः ॥ २६० ॥ ऊचेऽपराजितो मुंच, शुचं नलि-नलोचने ! ॥ विद्यया भ्रातृयुक्तं तं, त्वत्कृतेऽहमिहानये ॥ २६१ ॥ हर्षगद्गदगीरेवं, कनकश्रीरथावदत् ॥ कलावति ! कुरुष्वाशु, वचः सफलमात्मनः ॥ २६२ ॥ स्वं स्वं रूपं ततः प्रादु–श्चक्रतुस्तौ जितामरम् ॥ ऊचेऽपराजितस्तां चा–न-न्तवीर्यो ह्यसौ शुभे ! ॥ २६३ ॥ मदुक्तमस्य रूपादि, दृशा संवादय स्वयम् ॥ सापि प्रेक्षावती प्रेक्षा–मास तं निर्नि-मेषदृक् ॥ २६४ ॥ दमितारिसुता कामं, कामेन दमिता ततः ॥ अपाकृत्य त्रपां मान–मपमान्येति तं जगौ ॥२६५॥ अद्ययावद्युवानोऽन्ये, बहवो वीक्षिताः परम् ॥ त्वां विना नारमत् क्वापि, मनोरम ! मनो मम ॥२६६॥ तत्प्रसीद द्रुतं पाणौ,

१ उत्साहम् । तर्कं वा ॥

गृहाणानुगृहाण मां ॥ न हि जातु जनं रक्त–मुपेक्षन्ते भवादृशाः ! ॥ २६७ ॥ बभाषेऽनन्तवीर्योऽथ, यद्येवं तर्हि सुन्दरि ! ॥ एहि यावः शुभापूर्यां, ततस्तं सा पुनर्जगौ ॥ २६८ ॥ एष्याम्यहं कान्त ! किन्तु, कर्त्तानर्थं पिता मम ॥ प्रत्यूचे तां हरिर्मास्म–भैषीस्त्वं कातरे ! ततः ॥ २६९ ॥ ततस्ताभ्यां सहारुह्य, विमानं साऽचलन्मुदा ॥ प्रोवाचाऽ-नन्तवीर्योऽथ, वाक्यमित्युच्चकैस्तदा ॥ २७० ॥ हराम्यनन्तवीर्योऽहं, दमितारिसुतामिमाम् ॥ शूरंमन्यस्ततो यः स्या-त्स स्वौजो दर्शयत्वहो ! ॥ २७१ ॥ तन्निशम्य नृपः प्रैषी–द्भटांस्तं हन्तुमुद्भटान् ॥ रत्नानि चक्रवर्जाणि, प्रादुरासंस्तदा तयोः ॥ २७२ ॥ दमितारिभटांस्तांश्चा–मर्षणान् शस्त्रवर्षिणः ॥ सद्योऽनाशयतां सीरि–शार्ङ्गिणौ तौ महारथौ ॥२७३॥ दमितारिस्ततोऽचाली–त्सैन्यैराच्छादयन्नभः ॥ अनभ्रं विद्युदुद्योतं, कुर्वन्नुत्तेजितायुधैः ॥ २७४ ॥ तमायान्तं वीक्ष्य भीता–माश्वास्य कनकश्रियम् ॥ अवलिप्ट बलिष्टो द्राग्, योद्धुं विष्णुर्बलान्वितः ॥ २७५ ॥ तत्सैन्यद्विगुणं सैन्यं, विद्यया विदधे च सः ॥ योद्धुं प्रवव्रते तच्च, दमितारिभटैः समम् ॥ २७६ ॥ निजसैन्येन तत्सैन्या–न्नऽभञ्जान् वीक्ष्य केशवः ॥ पाञ्चजन्यं जन्यनाट्य–नांदीनादमवादयत् ॥ २७७ ॥ ततो भीतेषु नष्टेषु, खेचरेष्वखिलेष्वपि ॥ दमितारिः सहानन्त–वीर्येण युयुधे चिरम् ॥ २७८ ॥ दुर्जयं तं च विज्ञाया–ऽस्मरच्चक्रं स पार्थिवः ॥ पाणौ तस्य तदप्यागा-त्तेजसाऽन्य इवाऽऽरुणः ॥ २७९ ॥ मुमोचानन्तवीर्याय, तच्चक्रं दमितारिराट् ॥ सोऽपि तत्तुम्बघातेन, मूर्च्छितो न्यपतत्क्षणम् ॥ २८० ॥ उत्थितस्तु क्षणाच्चक्रं, तदेवादाय केशवः ॥ दमितारिं प्रत्यमुञ्च–त्तत्सञ्जातोऽपि जीवितव

॥ २८१ ॥ तदा च भो ! विष्णुरयं, बलश्चायं निषेव्यताम् ॥ वदन्त इति तन्मौलौ, पुष्पवृष्टिं व्यधुः सुराः ॥ २८२ ॥ ततो नतैः खेचरेन्द्रै–र्वृतो विष्णुः सहाग्रजः ॥ गच्छन् स्वपुर्यां कनक–गिरिं पर्वतमैक्षत ॥ २८३ ॥ इहाद्रौ सन्ति चैत्यानि, तानि नत्वा व्रज प्रभो ! ॥ तदेति खेचरैरुक्त–स्तच्चैत्यानि ननाम सः ॥ २८४ ॥ तत्र कीर्त्तिधरं साधुं, तदैवोत्पन्नकेवलम् ॥ वीक्ष्य नत्वा च सोऽश्रौषी–द्देशनां सपरिच्छदः ॥ २८५ ॥ बन्धूनां विरहस्तात–घातश्चाभूत्कुतो मम ? ॥ अथेति पृष्टः कनक–श्रिया मुनिरदोऽवदत् ॥ २८६ ॥ धातकीषण्डभरते, शङ्खग्रामेऽभवद्वशा ॥ श्रीदत्ताह्वाऽतीवदुःस्था, परौकःकृत्यजीविका ॥ २८७ ॥ श्रीपर्वते गता सत्य–यशसं मुनिमन्यदा ॥ वीक्ष्यावन्दत सा दत्ता–शिषं तं चैवमब्रवीत् ॥ २८८ ॥ अहमत्यन्तदुःस्थास्मि, तत्किञ्चित्तादृशं वद ॥ अत्रामुत्र च येनाहं, भवामि सुखिनी विभो ! ॥ २८९ ॥ साधुस्तस्यै ततो धर्म–चक्रवालं तपोऽवदत् ॥ प्रारेभे तत्तपः सापि, तं प्रणम्य गृहं गता ॥ २९० ॥ तन्महिम्ना शुभं भोज्यं, प्राप पारणकेषु सा ॥ स्वगेहभित्तिदेशाच्च, पतितात्काञ्चनादिकम् ॥ २९१ ॥ उद्यापनं तपःप्रान्ते, सा विधायोत्तमं ततः ॥ मासोपवासिनेऽन्नादि, ददौ सुव्रतसाधवे ॥ २९२ ॥ कृताहारात्ततः साधोः, श्राद्धधर्मं च साददे ॥ दध्यौ चान्येद्युरित्यस्या–द्धर्माद्भावि फलं न वा ? ॥ २९३ ॥ विचिकित्सामनालोच्य, विपन्ना साऽन्यदा

१ ॥ अष्टमं १ एकान्तरं चतुर्थं ३७ प्रान्ते अष्टमं १ इति धर्मचक्रवालं तपः ॥ अथवा प्रथमं षष्ठं १ तत एकान्तरोपवासाः ६० इति । प्रकारद्वयेन धर्मचक्रवाल, तत्र प्रथमप्रकारे दिनसर्वाग्रं ८२ । द्वितीयप्रकारे १२३ ॥

ततः ॥ दमितारेर्मृतसुतस्य, तनया त्वमभूः शुभे ! ॥ २९४ ॥ तस्यारते विचिकित्सायाः, फलमेतदुपस्थितम् ॥ स्वल्पोऽपि खलु धर्मस्य, कलंको भूरिदुःखदः ॥ २९५ ॥ श्रुत्वेति जातवैराग्या, कनकश्रीर्जगौ हरिम् ॥ महाभागाऽनुजानीहि, भवाद्भीतां व्रताय माम् ॥ २९६ ॥ ततः स विस्मितः स्माह, शुभामेहि शुभाशये ॥ स्वयम्प्रभजिनोपान्ते, प्रव्रजेस्तत्र चोत्सवैः ॥ २९७ ॥ इत्युक्त्वा तां सहादाय, सबलः सबलानुजः ॥ मुनिं प्रणम्य तं भक्त्या, जगाम नगरीं निजाम्[१] ॥ २९८ ॥ तत्र पूर्वं प्रतिहरि–प्रहितैः खेचरेश्वरैः ॥ भ्रातुष्पुत्रं युद्ध्यमानं, वीक्ष्याऽधावद्बलो बली ॥ २९९ ॥ सीरं भ्रमयतस्तस्मा–द्भीताः सद्यो दिशोदिशम् ॥ दमितारिभटा नेशु–र्गरुडादिव भोगिनः ॥ ३०० ॥ गृहं गतोऽर्द्धचक्रित्वे–ऽथाऽभ्यषिच्चि हरिर्नृपः ॥ स्वयम्प्रभप्रभुस्तत्रा–ऽन्यदा च समवासरत् ॥ ३०१ ॥ तं च श्रुत्वाऽऽगतं गत्वा, दमितारिसुतायुतः ॥ साग्रजः प्राणमद्विष्णु–स्ततोऽश्रौषीच्च देशनाम् ॥ ३०२ ॥ ततो हरिमनुज्ञाप्य, कनकश्रीर्महोत्सवैः ॥ जिनान्तिके प्रवव्राज, क्रमान्मुक्तिमवाप च ॥ ३०३ ॥ सीरिशार्ङ्गधरौ तौ च, पुष्पदन्ताविवापरौ ॥ चिरं राज्यमभुञ्जातां, सम्यक्त्वोद्योतशालिनौ ॥ ३०४ ॥ पूर्वलक्षाणि चतुर–शीतिमायुरथो हरिः ॥ प्रपूर्य कर्मविवशः, प्रथमां पृथिवीं ययौ ॥ ३०५ ॥ द्विचत्वारिंशत्सहस्र–वर्षायुष्कस्य तस्य च ॥ दुस्सहा जज्ञिरे तत्र, वेदनाश्छेदनादिभिः ॥ ३०६ ॥ स्वकर्मणां फलमिति, क्षममाणस्य तस्य ताः ॥ तत्रैत्य प्राग्भवपिता–ऽशमयच्चमराधिपः ॥ ३०७ ॥ राज्ये निवेश्य तनयं,

१ शुभा नगरीम् ।

बलोऽपि भ्रातृशोकतः ॥ भूमीभुजां षोडशभिः, सहस्रैः परिवारितः ॥ ३०८ ॥ परिव्रज्यां जयधर–गणाधीशान्तिकेऽश्रयत् ॥ तपश्च तीव्रं तत्वाऽऽयुः–प्रान्तेऽभूद्वासवोऽच्युते ॥ ३०९ ॥ [ युग्मम् ] जीवोऽथानन्तवीर्यस्य, निरयान्निर्गतस्ततः ॥ वैताढ्ये भरतस्यास्य, पुरे गगनवल्लभे ॥ ३१० ॥ खेचराधिपतेर्मेघ–वाहनस्याङ्गजोऽभवत् ॥ मेघनादाभिधः प्राप्त–यौवनो राज्यमाप्य च ॥ ३११ ॥ साधयामास वैताढ्य–श्रेण्यौ द्वे अपि स क्रमात् ॥ विभज्य च ददौ देशानशेषानङ्गजन्मनाम् ॥ ३१२ ॥ नन्तुं शाश्वतचैत्यानि, गतं तं नन्दनेऽन्यदा ॥ तत्रायातोऽच्युताधीशः, प्रेक्ष्य प्राबुबुधन्मुदा ॥ ३१३ ॥ नाम्नामरगुरुस्तत्र, चारणर्षिस्तदाऽऽययौ ॥ प्राव्राजीत् खेचराधीश–स्ततोऽसौ तस्य सन्निधौ ॥ ३१४ ॥ स व्रतं पालयंस्तीव्रं, सहमानः परिषहान् ॥ विपद्यानशनेनान्ते–ऽच्युतसामानिकोऽभवत् ॥ ३१५ ॥

इतश्च जम्बूद्वीपेऽस्ति, प्राग्विदेहविभूषणे ॥ विजये मङ्गलावत्यां, नगरी रत्नसञ्चया ॥ ३१६ ॥ तत्र क्षेमङ्कराह्वोऽभूद्विश्वक्षेमङ्करो नृपः ॥ रत्नमालेति तस्यासी–न्महिषी गुणमालिनी ॥ ३१७ ॥ द्वाविंशतिसमुद्रायुः, प्रपूर्य प्रच्युतोऽच्युतात् ॥ जीवोऽपराजितस्याथ, तस्याः कुक्षाववातरत् ॥ ३१८ ॥ तदा च सुखसुप्ता सा, महास्वप्नांश्चतुर्दश ॥ वज्रं पञ्चदशं प्रेक्ष्य, प्रबुद्धा भूभुजेऽभ्यधात् ॥ ३१९ ॥ सोऽपि स्माह सुतो भावी, चक्रवर्त्ती तव प्रिये ! ॥ तन्निशम्य दधौ गर्भं, राज्ञी मुदितमानसा ॥ ३२० ॥ क्रमाच्च सुषुवे पुत्रं, जगत्त्रयमनोहरम् ॥ स्वप्नानुसारात्तं भूपो, व्यधाद्वज्रायुधाऽभिधम् ॥ ३२१ ॥ स क्रमाद्यौवनं प्राप्तः, प्रियमित्रं मनोभुवः ॥ लक्ष्मीवतीं नृपसुता–मुदुवाह महामहैः ॥ ३२२ ॥

जीवोऽथानन्तवीर्यस्या-ऽच्युतस्वर्गात्परिच्युतः ॥ कुक्षौ लक्ष्मीवतीदेव्याः, समवातरदन्यदा ॥ ३२३ ॥ समयेऽजीजन-त्पुत्रं, साऽपि लक्षणलक्षितम् ॥ सहस्रायुध इत्याख्यां, चक्रे तस्योत्सवैः पिता ॥ ३२४ ॥ सोऽपि क्रमाद्वर्द्धमान स्वीकृत्य सकलाः कलाः ॥ प्रपेदे यौवनं लीला-वनं मदनभूभृतः ॥३२५॥ सुतयुक्तेऽन्यदा क्षेम-ङ्करराजे सभां श्रिते ॥ वज्रायुधस्य सम्यक्त्व-मीशानेन्द्रोऽस्यवर्णयत् ॥ ३२६ ॥ अश्रद्दधानस्तच्चित्र-चूलो मिथ्यामतिः सुरः ॥ विवादं कर्तु-मागात्तां, सभां नास्तिकतां श्रितः ॥ ३२७ ॥ पुण्यपापप्रेत्यभावा-त्मादि नास्तीति वादिनम् ॥ वज्रायुधोऽवधिज्ञानी, निजगादेति तं मुदा ॥ ३२८ ॥ देव ! त्वमेवावधिना, पश्य प्राग्भवमात्मनः ॥ धर्मकर्म च तत्परं, सम्पदोऽस्या निबन्धनम् ॥ ३२९ ॥ पुण्ये प्राच्यभवे चैवं, सिद्धे जीवोऽपि विद्यते ॥ अभावः पुण्यपापादे-स्तत्कथं कथ्यते त्वया ! ॥ ३३० ॥ उक्तो वज्रायुधेनेति, चित्रचूलसुरोऽब्रवीत् ॥ दुर्बोधोऽपि त्वया साधु, सुबुद्धे बोधितोऽस्म्यहम् ॥३३१॥ प्रसीद बोधिरत्नं प्राग् , देहि मिथ्यामतेर्मम ॥ न हीर्ष्ययाऽपि विहितं, दर्शनं निष्फलं सताम् ॥ ३३२ ॥ वज्रायुध-स्ततस्तस्मै, सम्यक् सम्यक्त्वमादिशत् ॥ निःस्पृहाय ददौ दिव्या, भूषास्तस्मै सुरोऽपि सः ॥ ३३३ ॥ सभामीशानना-थस्य, गत्वा चैवमुवाच सः ॥ वज्रायुधस्य सम्यक्त्वं, स्थानेऽश्लाघि त्वया प्रभो ! ॥ ३३४ ॥ अथ लोकान्तिकैर्देवै-रुक्तः क्षेमङ्करः प्रभुः ॥ अर्थिभ्यो वार्षिकं दानं, ददौ राज्यं च सूनवे ॥ ३३५ ॥ वज्रायुधेन देवैश्च, कृतनिष्क्रमणो-त्सवः ॥ प्रव्रज्य केवलज्ञानं, क्रमेण प्राप स प्रभुः ॥ ३३६ ॥ श्रुत्वा तद्देशनां वज्रा-युधस्य गृहमीयुषः ॥ उत्पत्तिं चक्ररत्नस्या-ऽभ्यधादायुधरक्षकः ॥ ३३७ ॥ अन्यान्यपि हि रत्नानि, तदा तस्योपपेदिरे ॥ ततः स चक्रे चक्रस्य, चक्री पूजां महीयसीम् ॥ ३३८ ॥ चक्ररत्नानुगः सोऽथ, विजयं मङ्गलावतीम् ॥ साधयामास षट्खण्ड-मखंडाज्ञ शशास च ॥ ३३९ ॥ क्षेमङ्करजिनस्तत्र, समवासरदन्यदा ॥ चक्रिणेऽर्हन्तमायात-मूचुश्च वनपालकाः ॥ ३४० ॥ सार्द्धद्वादशदीनार-कोटीस्तेभ्यो वितीर्य सः ॥ गत्वा नत्वा च सर्वज्ञ-मश्रौषीद्धर्मदेशनाम् ॥ ३४१ ॥ ततो वैराग्यमासाद्य, सद्यः सञ्जातो नृपः ॥ निजे न्यवीविशद्राज्ये, सहस्रायुधमादरात् ॥ ३४२ ॥ चतुर्भिर्निजराज्ञीनां, सहस्रैर्भूभुजां तथा ॥ सप्तभिश्चात्मजशतैः, सहितो महितो जनैः ॥ ३४३ ॥ क्षेमङ्करप्रभोः पार्श्वे, गत्वा स व्रतमा-ददे ॥ तप्यमानस्तपस्तीव्रं, विजहार च भूतले ॥ ३४४ ॥ [ युग्मम् ] सहस्रायुधराजोऽपि, राज्ये न्यस्यान्यदा सुतम् ॥ गणाधीशस्य पिहिता-श्रवस्यान्तेऽग्रहीद्व्रतम् ॥ ३४५ ॥ स क्रमात् श्रुतपारीणो, विहरन् पृथिवीतले ॥ समगंस्तान्य-दावज्रा-युधराजर्षिणा समम् ॥ ३४६ ॥ ततश्च तौ पितापुत्रौ, स्वाध्यायध्यानतत्परौ ॥ सुचिरं रुचिरस्वान्तौ, सम-मेव विजहतुः ॥ ३४७ ॥ अधिरुह्याऽन्यदा शैल-मीषत्प्राग्भारसंज्ञकम् ॥ पादपोपगमं नामा-ऽनशनं तौ वितेनतुः ॥ ३४८ ॥ पूर्णे च जीविते पंच-विंशत्यर्णवजीविनौ ॥ ग्रैवेयके तृतीये ता- वभूतां भासुरौ सुरौ ॥ ३४९ ॥

इतश्च जम्बूद्वीपे प्राग्-विदेहेषु महर्द्धिका ॥ विजये पुष्कलावत्या-मस्ति पूः पुण्डरीकिणी ॥ ३५० ॥ प्रतीपभूपते-जोऽग्नि-शमनैकघनाघनः ॥ राजा घनरथस्तस्या-मभूदद्भुतविक्रमः ॥३५१॥ गङ्गागौर्याविवेशस्य, तस्याभूतामुभे प्रिये ॥ तत्रादिमा प्रीतिमती, द्वितीया तु मनोरमा ॥ ३५२ ॥ जीवो वज्रायुधस्याथ, च्युत्वा ग्रैवेयकात्ततः ॥ देव्याः प्रीति-मतीनाम्न्याः, कुक्षौ समवतीर्णवान् ॥ ३५३ ॥ प्रविशन्तं तदा वक्त्रे, गर्जन्तं विद्युदञ्चितम् ॥ वर्षन्तममृतासारं, स्वप्ने मेघं ददर्श सा ॥ ३५४ ॥ प्रातः स्वप्नार्थमुर्वीश-स्तया पृष्टोऽब्रवीदिदम् ॥ सुतस्ते भविता मेघ, इव सन्तापच्छिदः ॥ ३५५ ॥ सहस्रायुधजीवोऽपि, ततो ग्रैवेयकाच्च्युतः ॥ देव्या मनोरमाह्वाया, उदरे समवातरत् ॥ ३५६ ॥ सापि स्वप्ने रथं रम्यं, प्रेक्ष्य पत्ये न्यवेदयत् ॥ सोऽप्युवाच प्रिये ! भावी, सुतस्तव महारथः ॥ ३५७ ॥ पूर्णेऽथ समये ताभ्यां, प्रसूतावद्भुतौ सुतौ ॥ इन्द्रोपेन्द्राविव क्रीडा-वशोपात्तभवान्तरौ ॥ ३५८ ॥ पुत्रं तत्रादिमं भूमा-न्नाम्ना मेघरथं जगौ ॥ परं पुनर्दृढरथं, राज्ञीस्वप्नानुसारतः ॥ ३५९ ॥ भूषयन्तौ तौ नरेन्द्र-कुलं मेरुमिवोन्नतम् ॥ बालौ क्रमादवर्द्धेतां, बालकल्पद्रुमाविव ॥ ३६० ॥ रत्नेन काञ्चनमिव, वसन्तेनेव काननम् ॥ द्वितीयवयसा रूप-मभूष्यत तयोः क्रमात् ॥ ३६१ ॥ इतश्च निहतशत्रोः, सुमन्दिरपुरप्रभोः ॥ तिस्रोऽभुवन् सुता, विश्व-त्रयश्रिय इवाहृताः ! ॥ ३६२ ॥ तास्वाद्या प्रियमित्राह्वा, द्वितीया तु मनोरमा ॥ तृतीया सुमतिर्नाम, जगत्त्रय-मनोरमा ॥ ३६३ ॥ तत्र मेघरथायादा-न्नन्दने द्वे स पार्थिवः ॥ एकां पुनर्दृढरथ-कुमाराय लघीयसीम् ॥ ३६४ ॥ कान्ताभिः सह ताभिस्तौ, देवीभिरिव नाकिनौ ॥ भुञ्जानौ विषयान् कालं, भूयांसमतिनिन्यतुः ॥ ३६५ ॥ बोधितः श्रीघनरथो-ऽन्यदा लोकान्तिकामरैः ॥ ददौ वार्षिकदानं स-न्नातैर्नुन्न इवाम्बुदः ॥ ३६६ ॥ राज्ये च यौवराज्ये च,

ततो विन्यस्य तौ सुतौ ॥ प्रव्रज्य केवलं प्राप्य, सोऽर्हन् भव्यानबोधयत् ॥ ३६७ ॥ नम्रार्वीशशिरःस्रस्त–माल्यपूजित-पत्कजः ॥ अन्वशान्मेदिनीं मेघ–रथो द्यां मघवानिव ॥३६८॥ तस्याऽन्यदा पौषधिनः, पौषधौकसि तस्थुषः ॥ एत्य पारापतः कोऽपि, पपाताङ्के भयाकुलः ॥३६९॥ शरणं मार्गयन् सोऽथ, शकुन्तो मर्त्यभाषया ॥ मा भैषीरिति राज्ञोक्त–स्तदङ्के स्थितवान् सुखम् ॥ ३७० ॥ मम भक्ष्यमिदं देव !, विमुञ्चेत्युच्चकैर्वदन् ॥ तमन्वागादथ श्येनो, गरुत्मानिव भोगिनम् ॥३७१॥ नृपोऽथेत्यब्रवीदेनं, श्येन ! दास्ये न ते श्रितम् ॥ प्राणान्तेऽपि हि रक्षन्ति, क्षत्रियाः शरणागतम् ॥ ३७२ ॥ अन्यच्च युज्यते नैव, भवतोऽपि विवेकिनः ॥ अपहृत्य परप्राणा–नेवं स्वप्राणपोषणम् ॥ ३७३ ॥ स्वजीवितं यथेष्टं ते, तथान्यस्यापि तत्प्रियम् ॥ तद्रक्षसि यथात्मानं, तथान्यमपि रक्ष भोः ! ॥३७४॥ भुक्तेनाप्यमुना भावि, सौहित्यं क्षणमेव ते ॥ सर्वस्याप्यायुषो नाशो, भविताऽस्य तु पक्षिणः ॥ ३७५ ॥ आहारेणापरेणापि, क्षुद्व्यथा क्षीयते क्षणात् ॥ प्राणिहिंसोत्थनरक–व्यथा तु न चिरादपि ॥ ३७६ ॥ तद्विमुञ्च प्राणिहिंसां, धर्ममाश्रय सन्मते ! ॥ अत्रामुत्र च येन त्वं, लभसे सुखमुत्तमम् ॥ ३७७ ॥ ततो नरेश्वरं श्येनः, प्रोचे मनुजभाषया ॥ मत्तो भीतः कपोतोऽयं, प्रभो ! त्वां शरणं श्रितः ॥ ३७८ ॥ क्षुत्पीडापीडितोऽहं तु, ब्रूहि कं शरणं श्रये ? ॥ तदेनं रक्षसि यथा, तथा त्वं रक्ष मामपि ! ॥ ३७९ ॥ धर्माधर्मविचारोऽपि, सति स्वास्थ्येऽङ्गिनां भवेत् ॥ बुभुक्षितो हि किं पापं, न करोतीति न श्रुतम् ?

१ पक्षी ॥ २ तृप्तिः ।

॥ ३८० ॥ न चान्यैरपि भोज्यैर्मे, तुष्टिर्भवति भूपते ! ॥ सद्यो हतप्राणिपला–स्वादनैकरतो ह्यहम् ॥ ३८१ ॥ क्षुधया म्रियमाणस्य, तदेनं देव ! देहि मे ॥ सर्वेष्वपि महात्मानो, भवन्ति हि कृपालवः ॥ ३८२ ॥ राजाऽथ श्येनमित्यूचे, कपोतप्रमितं तव ॥ ददे स्वमांसमुत्कृत्य, मा म्रियेथा मुधा क्षुधा ॥ ३८३ ॥ ओमित्युक्ते तेन पारा–पतं नृपतिरेकतः ॥ तुलायां न्यास्थदुत्कृत्यो–त्कृत्य स्वामिषमन्यतः ॥३८४॥ चिक्षेप स्वपलं भूपः, छेदं छेदं यथा यथा ॥ कपोतपोतो ववृधे, वीवधेन तथा तथा ॥ ३८५ ॥ ततस्तुलामिलापालो–ऽध्यास्त शस्तमतिः स्वयम् ॥ तदा च मन्त्रिमुख्यास्तं, सगद्गदसदोऽवदत् ॥ ३८६ ॥ रक्षणीयाऽमुनाङ्गेन, महीश ! निखिला मही ॥ पक्षिणो रक्षणायास्य, तद्विभो ! किं जहासि ? हा ! ॥ ३८७ ॥ किञ्चेयान् वीवधो नैवा–ण्डजे सम्भवति क्वचित् ॥ किन्त्वयं कोऽपि मायावी, भावी देवोऽथवाऽसुरः ! ॥ ३८८ ॥ इति तेषु वदत्स्वेव, दिव्यालङ्कारभासुरः ॥ प्रादुर्भूयाऽमरो भूप–मित्युवाच कृताञ्जलिः ॥ ३८९ ॥ धर्माच्चालयितुं मेघ–रथं नेशाः सुरा अपि ॥ इति ते स्तुतिमीशान–शक्रेणोक्तामसासहिः ॥ ३९० ॥ अधिष्ठाय स्वगौ वैरायुध्यमानाविमौ स्वयम् ॥ अकार्षं त्वत्परीक्षार्थं–महमेतन्महीपते ! ॥ ३९१ ॥ [ युग्मम् ] तन्महासत्व ! धन्यस्त्वं, यस्त्रातुं प्राणिनं परम् ॥ प्रियानपि निजप्राणां–स्तृणायापि न मन्यसे ! ॥ ३९२ ॥ इत्युक्त्वा तं नृपं सज्जं, विधाय स्वर्ययौ सुरः ॥ मन्त्र्यादयोऽपि तद्वीक्ष्य, विस्मयं दधुरुच्चकैः ॥ ३९३ ॥ देवः कोऽसौ पुरा किञ्च, पक्षिणोर्वैरमेतयोः ? ॥

१ भारेण ।

अथेति पृष्टस्तैर्भूपो–ऽवधिज्ञानी जगाविदम् ॥ ३९४ ॥ रामोऽपराजिताह्वोऽहं, प्राग्भवे पञ्चमेऽभवम् ॥ असौ दमरथोऽनन्त–वीर्याख्योऽभूत्तदा हरिः ॥ ३९५ ॥ प्रतिविष्णुर्दमितारि–स्तदाऽऽवाभ्यां हतोऽभवत् ॥ भवे भ्रान्त्वा स देवोऽसौ, बभूवाज्ञानकष्टतः ॥ ३९६ ॥ [ अन्यच्च ] जम्बूद्वीपस्यैरवते, पद्मिनीषण्डपत्तने ॥ सागरदत्तेभ्यसुता–वभूतां धननन्दनौ ॥ ३९७॥ वाणिज्याय गतौ तौ च, पुरे नागपुरेऽन्यदा ॥ गृध्राविव क्रव्यपिण्डं, रत्नमेकमपश्यताम् ॥ ३९८ ॥ सोदरावप्ययुध्येतां, तस्य रत्नस्य लिप्सया ॥ एकद्रव्याभिलाषो हि, परमं वैरकारणम् ॥ ३९९ ॥ नदीतीरे युध्यमानौ, तन्ह्रदे पतितौ च तौ ॥ मृत्वाऽभूतां महाटव्यां, श्येनपारापताविमौ ॥ ४०० ॥ तेन प्राग्भववैरेण, युध्यमानाविहाप्यमू ॥ अधिष्ठाय स गीर्वाण–श्चक्रेऽस्माकं परीक्षणम् ॥ ४०१ ॥ तत्क्षोणीशवचः श्रुत्वा, पक्षिणावपि तौ क्षणात् ॥ जातिस्मरणमासाद्य, स्ववाचेत्यूचतुर्नृपम् ॥ ४०२ ॥ रत्नवन्नृत्वमप्यावां, तदा लोभेन हारितौ ॥ यथार्हं धर्ममादिश्या–ऽनुगृह्णात्वधुना भवान् ! ॥ ४०३ ॥ तद्विज्ञायावधिज्ञाना–द्राज्ञानशनमीरितम् ॥ प्रपद्य तौ विपद्याशु, जातौ भवनपौ सुरौ ॥ ४०४ ॥ कृताष्टमं मेघरथं, प्रतिमास्थितमन्यदा ॥ तुभ्यं नमोऽस्त्विति वद–न्नीशानेन्द्रोऽनमन्मुदा ॥ ४०५ ॥ त्वयाऽपि विश्ववन्द्येन, कोऽसौ स्वामिन्नमस्कृतः ॥ महिषीभिस्तदा चैवं, पृष्टः स हरिरित्यवक् ॥ ४०६ ॥ नगर्यां पुण्डरीकिण्यां, श्रीमेघरथपार्थिवम् ॥ प्रतिमास्थं भाविजिनं, वीक्ष्य भक्त्याहमानमम् ॥ ४०७ ॥ ध्यानस्थितं

१ मांसपिण्डम् ।

महासत्व-मसुं मेरुमिव स्थिरम् ॥ शक्ताश्चालयितुं नैव, सेन्द्रा अपि सुरासुराः ॥ ४०८ ॥ तन्महिष्यौ सुरूपाति-रूपे स्तां तस्य वर्णनाम् ॥ असहिष्णू तदा तत्रा-ऽऽगातां तत्क्षोभहेतये ॥४०९॥ कामपादपकुल्याभाः, कामिनीस्ते विचक्रतुः ॥ अनुकूलोपसर्गांस्ता, इति प्रारेभिरे ततः ॥ ४१० ॥ कटाक्षविशिखैः काचि-ल्लक्षा लक्षीचकार तम् ॥ काऽपि भ्रूविभ्रमान् सुभ्रु-र्विदधे पिदधे त्रपाम् ॥ ४११ ॥ पीनस्तनी स्तनौ शात-कुम्भकुम्भायितोन्नतौ ॥ कापि प्राकाशयत्केश-पाशोद्बन्धनकैतवात् ॥ ४१२ ॥ त्रिवलीललितं मध्यं, सुमध्या काप्यदर्शयत् ॥ कापि वापीसनाभिं च, नाभिं प्राकटयन्मुहुः ॥ ४१३ ॥ अस्मिन्नसमपदे काञ्ची-दाम मां बहु बाधते ॥ माययेति महारोहा-रोहं कापि स्फुटं व्यधात् ॥ ४१४ ॥ हले ! ऽलिना किं दष्टाह-मिहेति व्यपदेशतः ॥ उत्क्षिप्य कापि संव्यान-मूर्वोर्मूलमदीदृशत् ॥ ४१५ ॥ शृङ्गारशाखिपुष्पाभं, काचिदस्मेरयत् स्मितम् ॥ काचिज्जगौ च गीतानि, विकाराङ्कुरवाग्दिान् ॥ ४१६ ॥ कथामकथयत् कापि, प्रियसंयोगवियोगयोः ॥ स्वानुभूता रतक्रीडा, वर्णिनी काप्यवर्णयत् ॥ ४१७ ॥ देहि प्रियं वचः सौम्य-दृशा वीक्षस्व नः प्रभो ! ॥ कण्ठे निधेहि च भुजौ, तमित्यूचुश्च काश्चन ॥ ४१८ ॥ क्षोभायेति कृतास्ताभिः, कुचेष्टा निखिलां निशाम् ॥ प्रत्युतादीपयत् ध्यानं, तस्याऽऽप इव वाडवम् ॥ ४१९ ॥ मेरौ वात्या इवोर्वीशे, मोघास्ता विकृताः स्त्रियः ॥ ततः संहृत्य ते देव्यौ, नत्वा तं दिवमीयतुः ॥ ४२० ॥ निशावृत्तेन तेनाथ, पृथ्वीनाथो विरक्तधीः ॥

१ शातकुम्भकुम्भौ स्वर्णघटौ ॥ २ सुष्ठु मध्यं कटीभागं यस्याः सा सुमध्या स्त्रीत्यर्थः ॥ ३ संव्यानं वस्त्रमुत्क्षिप्य ऊर्वोर्जङ्घयोर्मूलमदीदृशत् ॥

प्रतिमां पारयित्वागा-त्स्वधामाऽप्रतिमक्षमः ॥ ४२१ ॥ तत्राथ समवासार्षी-ज्जिनो घनरथोऽन्यदा ॥ तं चायातं निशम्यागा-त्सानुजो वन्दितुं नृपः ॥ ४२२ ॥ वैराग्यमातरं श्रुत्वा, देशनां स गृहं गतः ॥ राज्यमेतद्गृहाणेति राजाऽवरजमब्रवीत् ॥ ४२३ ॥ त्वामनुप्रव्रजिष्यामि, कृतं राज्येन तन्मम ॥ तेनेत्युक्तोऽथ पृथ्वीशो, राज्येऽस्थापयदात्मजम् ॥ ४२४ ॥ साकं दृढरथेनाथ, सुतानां सप्तभिः शतैः ॥ राज्ञां चतुःसहस्र्या च, गत्वा तीर्थङ्करान्तिकम् ॥ ४२५ ॥ स्वीचकार परिव्रज्यां, श्रीमेघरथपार्थिवः ॥ अधीत्यैकादशाङ्गानि, विजहार च भूतले ॥ ४२६ ॥ [ युग्मम् ] विंशत्या स्थानकैरर्ह-त्सिद्धसेवादिभिः शुभैः ॥ तीर्थकृन्नाम सत्कर्म, सोऽर्जयामास सार्जवः ॥ ४२७ ॥ सोऽथ कृत्वा साधुसिंहः, सिंहनिक्रीडितं तपः ॥ पूर्वलक्षं यावदुग्रं, पालयित्वा च संयमम् ॥ ४२८ ॥ आरुह्याम्बरतिलके, गिरावनशनं श्रितः ॥ आयुःक्षयेण सर्वार्थ-सिद्धे जज्ञे सुधाशनः ॥ ४२९ ॥ तद्बान्धवोऽपि समये, कियत्यपि गते सति ॥ प्रायं प्रपद्य तत्रैव, विमानेऽजनि निर्जरः ॥ ४३० ॥

अथास्त्यत्रैव भरते, भरितं विपुलर्द्धिभिः ॥ पुरं पुरन्दरपुरो-पमं श्रीहस्तिनापुरम् ॥ ४३१ ॥ विश्वसेनो महासेन-सेनाजित्वरसैनिकः ॥ तत्रासीद्भूमिसुत्रामा-ऽलकायामिव यक्षराट् ॥ ४३२ ॥ स्वाहा स्वाहाप्रियस्येवा-ऽचिरा तस्य महिष्यभूत् ॥ रूपनिर्जितपौलोमी, शीलालङ्कारशालिनी ॥ ४३३ ॥ जीवो मेघरथस्याऽथ, च्युत्वा सर्वार्थसिद्धतः ॥

१ अनशनम् ॥ २ इन्द्रः ॥ ३ अग्नेः ॥ ४ इन्द्राणी ॥

आगात् श्रीअचिरादेव्याः, कुक्षौ हंस इवाम्बुजे ॥ ४३४ ॥ चतुर्दश महास्वप्नान्, सुखसुप्ता तदा च सा ॥ मुखे प्रविशतोऽपश्य-त्प्रशस्ताकारधारिणः ॥ ४३५ ॥ तयाऽथ पृथिवीनाथः, पृष्टः स्वप्नार्थमित्यवक् ॥ साचों वा सार्वभौमो वा, भावी तव सुतः प्रिये ! ॥ ४३६ ॥ प्रागुजातं शान्तिकाशान्तं, मारिरोगादिकं तदा ॥ प्रभुप्रभावादशिवं, शशाम कुरुमण्डले ॥ ४३७ ॥ गर्भकालेऽथ सम्पूर्णे, निशीथसमये सुखम् ॥ सुषुवे सा सुतं राज्ञी, स्वर्णवर्णं मृगध्वजम् ॥४३८॥ त्रैलोक्येऽपि महोद्योतो, नारकाणां सुखं तथा ॥ क्षणं तदाभून्नित्यं हि, जिनकल्याणकेष्वदः ! ॥ ४३९ ॥ ज्ञात्वाऽथासनकम्पेन, जिनजन्माऽऽगता द्रुतम् ॥ षट्पञ्चाशद्दिक्कुमार्यः, सूतिकर्माणि चक्रिरे ॥ ४४० ॥ अथासनास्थैर्यदत्ता-ऽवधिज्ञानोपयोगतः ॥ ज्ञात्वाऽर्हज्जन्म शक्रोऽपि, तत्रागात्सपरिच्छदः ॥ ४४१ ॥ नत्वा जिनं जिनाम्बां च, ज्ञापयित्वाऽभिधां निजाम् ॥ दत्त्वाऽवस्वापिनीं देव्याः, प्रभो रूपान्तरं न्यधात् ॥ ४४२ ॥ पञ्चरूपाणि कृत्वाऽथ, तेनैकेन जिनेश्वरम् ॥ द्वाभ्यां च चामरे ताभ्या-मेकेन छत्रमुद्वहन् ॥४४३॥ एकेन च पुरो वज्र-मुत्क्षिपन् मघवा क्षणात् ॥ जगाम मेरुमौलिस्था-ऽतिपाण्डुकम्बलां शिलाम् ॥ ४४४ ॥ [ युग्मम् ] अङ्कन्यस्तजिनस्तत्रा-ऽध्यास्त सिंहासनं हरिः ॥ अन्येऽपि वासवाः सर्वे, तत्रेयुश्चलितासनाः ॥ ४४५ ॥ ततस्तीर्थोदकैस्तीर्थ-करं प्राग्च्युताधिपः ॥ अभ्यषिञ्चत्तदनु च, क्रमादन्येऽपि वासवाः ॥ ४४६ ॥ अथेशानप्रभोरङ्के, जिनं विन्यस्य वज्रभृत् ॥ प्रभोश्चतुर्दु पार्श्वेषु, विचक्रे

१ अर्हन् सर्वज्ञः तीर्थकर इति यावत् ॥ २ चक्री ॥ ३ शान्तिकेन शान्तिकरेणापि पूजादिविधानेन अशान्तमित्यर्थः ॥

चतुरो वृषान् ॥ ४४७ ॥ तद्विषाणोद्गतैर्नीरैः, स्नपयामास स प्रभुम् ॥ गन्धमाल्यविभूषाभिः, पूजयित्वाऽस्तवीच्च तम् ॥४४८॥ अथादायजिनं शक्रो–ऽचिरादेव्यन्तिकेऽमुचत् ॥ द्रागवस्वापिनीमर्ह–त्प्रतिरूपं जहार च ॥४४९॥ विनोदाय विभोरूर्द्ध्वं, न्यस्य श्रीदामगण्डकम् ॥ उच्छीर्षके न्यधाद्वज्री, क्षौम कुण्डलयामले ॥४५०॥ जिने जिनजनन्यां च, यो दुर्ध्यास्यति दुर्मतिः ॥ तन्मौलिः सप्तधा भावी, आर्जकस्येव मञ्जरी ! ॥ ४५१ ॥ इत्युद्घोष्य सुरैरिन्द्रः, स्वर्णरत्नादिवर्षणम् ॥ श्रीदेन कारयित्वा च, द्वीपे नन्दीश्वरे ययौ ॥ ४५२ ॥ [ युग्मम् ] तत्र शाश्वतचैत्येषु, शक्रोऽन्येऽपि च वासवाः ॥ अष्टाहिकोत्सवं कृत्वा, स्थानं निजनिजं ययुः ॥ ४५३ ॥ वर्धापितोऽथ दासीभि–र्भूपतिः पुत्रजन्मना ॥ ताभ्यो दत्त्वा भूरि दानं, प्राज्यं चक्रे महोत्सवम् ॥ ४५४ ॥ गर्भस्थेऽस्मिन् सुते शान्ति–रशिवानामभूद्भुवि ॥ इति क्षितिपतिः शान्ति–रिति तस्याभिधां व्यधात् ॥ ४५५ ॥ निहितं हरिणाङ्गुष्ठे, पिबन् पीयूषमन्वहम् ॥ अद्वैतरूपतेजःश्री–र्वैवृधेऽथ जगत्पतिः ॥ ४५६ ॥ पश्यतोरालिङ्गतोश्च, मौलावाजिघ्रतोश्च तम् ॥ पित्रोः सुखमभूद्ब्रह्म–मग्नयोरिव निस्तुलम् ॥ ४५७ ॥ निशम्य मन्मनालापां–स्तस्येष्टान् द्युसदामपि ॥ पितरौ पीतपीयूषा–विवात्यर्थमतुष्यताम् ॥ ४५८ ॥ भूपगेहाङ्गणं स्वामी, क्रमचङ्क्रमणैः क्रमात् ॥ अलञ्चकार चटुलैः, कल्पद्रुरिवजङ्गमः ॥ ४५९ ॥ शिशुभूतैः समं देवै–श्चलचूलाञ्चलो विभुः ॥ पांशुलीलां व्यधाद्रम्यां, शैशवे शोभते ह्यदः ॥ ४६० ॥ क्रमाच्च स्वपुर्योगा–द्यौवनं भूषयन्विभुः ॥ चत्वारिंशद्धनुस्तुंगो, विश्वं विश्वममोदयत् ! ॥ ४६१ ॥ पित्रोराज्ञेत्युपायंस्त, जिनो राजाङ्गजास्ततः ॥ यशोमत्यादिका धन्यं–मन्यास्ताद्दग्धवासितः ॥ ४६२ ॥ यातेष्वब्दसहस्रेषु, जन्मतः पञ्चविंशतौ ॥ राजा राज्ये न्यस्य शान्तिं, निजं कार्यममाधयत् ॥ ४६३ ॥ जिनोऽपि बुभुजे भोगान्, पुरन्ध्रीभिः सहोत्तमान् ॥ कर्मभोगफलं ह्येव–मेवार्पयति निकाचितम् ॥ ४६४ ॥ जीवो दृढरथस्याथ, सर्वार्थादन्यदा च्युतः ॥ आगाद्यशोमतीकुक्षौ, स्वप्ने चक्रं प्रदर्शयन् ॥ ४६५ ॥ पृष्टस्तयाऽथ स्वप्नार्थं, जगादेति जगत्पतिः ॥ तव देवी सुतो भावी, जङ्गमं विश्वमण्डनम् ॥ ४६६ ॥ पूर्णे च समये पुत्रं, सुषुवे सा सुलक्षणम् ॥ स्वामिस्वप्नानुसारात्तं, चक्रे चक्रायुधाभिधम् ॥ ४६७ ॥ क्रमेण वर्द्धमानोऽथ. सोपि यौवनमासदत् ॥ बहीर्नृपतिपुत्रीश्च, पर्यणैषीत् स्वयंवराः ॥ ४६८ ॥ नृपत्वेऽपि सहस्रेषु, शरदां पञ्चविंशतौ ॥ गतेषु शस्त्रशालायां, चक्रं प्रादुरभूत् प्रभोः ॥ ४६९ ॥ चक्रपूजां कारयित्वा, ततस्तदनुगो विभुः ॥ लीलया साधयामास, षट्खण्डमपि भारतम् ॥ ४७० ॥ द्वात्रिंशता सहस्रैर्भू–भुजां सेवितपत्कजः ॥ कृतारिशान्तिः श्रीशान्ति–र्हस्तिनापुरमाययौ ॥ ४७१ ॥ ततो देवैर्नृदेवैश्च, स्वामिनो द्वादशाब्दिकः ॥ चक्रे चक्रित्वाभिषेको, मोदयन् जगतीजनम् ॥ ४७२ ॥ अथान्तःपुरकान्ताव–च्चक्रवर्त्तिश्रियं प्रभुः ॥ भुञ्जानो व्यत्यगादब्द–सहस्रान्पञ्चविंशतिम् ॥ ४७३ ॥ तीर्थं प्रवर्तयेत्युक्तो, लोकान्तिकसुरैरथ ॥ निर्मिदानं ददौ दान–माब्दिकं जगदीश्वरः ॥ ४७४ ॥ राज्ये चक्रायुधं न्यस्य, सर्वार्थां शिबिकां श्रितः ॥ सुरासुरनराधीश–कृतनिष्क्रमणोत्सवः ॥ ४७५ ॥ गत्वा सहस्राम्रवणे, याप्ययानादवातरत् ॥ समं राज्ञां सहस्रेण, प्राव्राजीच्च जिनेश्वरः ॥ ४७६ ॥ [ युग्मम् ] लेभे मनःपर्यायाह्वं, तुर्यज्ञानं प्रभुस्तदा ॥ विजहार च भूपीठे–ऽप्रतिबद्धः समीरवत् ॥ ४७७ ॥ वर्षान्ते च पुनः प्राप्तः, सहस्राम्रवणं विभुः ॥ शुक्लध्यानं श्रितः प्राप, केवलज्ञानमुज्ज्वलम् ॥ ४७८ ॥ तत आसनकम्पेन, तत्राऽऽयाताः सुरासुराः ॥ चक्रुः समवसरणं, प्राकारत्रयमञ्जुलम् ॥ ४७९ ॥ पूर्वद्वारेण तत्राथ, प्रविश्य भुवनप्रभुः ॥ धर्ममाख्यातुमारेभे, पूर्वसिंहासनस्थितः ॥ ४८० ॥ तदा च व्यन्तरैः स्वामि–प्रतिमास्त्रिदिशं कृताः ॥ प्रभुप्रभावात्तदनु–रूपरूपत्वमासदन् ॥ ४८१ ॥ उद्यानपालकाः सद्य–स्ततो गत्वा न्यवेदयन् ॥ स्वामिनः केवलोत्पत्तिं, चक्रायुधमहीभुजे ॥४८२॥ ततस्तेभ्यः प्रीतिदानं, दत्वा सोत्यर्थमुत्सुकः ॥ गत्वा नत्वा जिनं स्तुत्वा–ऽश्रौषीद्धर्मं समाहितः ॥ ४८३ ॥ देशनान्ते जिनं नत्वा, प्रोवाचेति महीपतिः ॥ दिष्ट्या दृष्टोऽसि नाथ ! त्वं, कारुण्यामृतसागरः ॥ ४८४ ॥ अस्माच्छलान्विषो भीत–भीतं मां भवराक्षसात् ॥ दीक्षारक्षाप्रदानेना–ऽनुगृहाण द्रुतं विभो ! ॥४८५॥ स्वामिनाऽनुमतः सोऽथ, राज्यं न्यस्याङ्गजे निजे ॥ पंचत्रिंशन्नृपयुतः, प्राव्राजीज्जिनसन्निधौ ॥ ४८६ ॥ तांश्च षट्त्रिंशतं शान्ति–र्नाथो गणधरान् व्यधात् ॥ त्रिपद्या अनुसारेण, द्वादशाङ्गीविधायिनः ॥ ४८७ ॥ नरा नार्यश्च बहवो–ऽपरेऽपि प्राव्रजंस्तदा ॥ श्राद्धाः केप्यभवंश्चेति, तीर्थं तीर्थङ्करोऽकरोत् ॥ ४८८ ॥ ध्वंसयन् दुर्मतध्वान्तं, भव्याब्जानि प्रबोधयन् ॥ व्योम्नि भास्वानिव

---

१ चलोऽस्थिर' चूलाया मस्तकमध्यशिखाया अञ्चलः प्रान्तभागो यस्य स तथा ॥

---

१ समवायाङ्गाभिप्रायेण श्रीशान्तिनाथस्य नवतिर्गणधरा दृश्यन्ते, षट्त्रिंशच्चावश्यकादिबहुग्रन्थाभिप्रायेण, तदत्र तत्त्वं केवलिनो विदन्तीति ज्ञेयम् ॥

स्वामी, विजहार चिरं भुवि ॥ ४८९ ॥ श्रमणानां सहस्राणि, द्वाषष्टिरभवन् विभोः ॥ एकषष्टिः सहस्राणि, साध्वीनां षट् शतानि च ॥ ४९० ॥ लक्षद्वयं च नवति–सहस्राढ्यमुपासकाः ॥ लक्षत्रयं त्रिनवति–सहस्राग्रमुपासिकाः ॥४९१॥ संघो गुणोदधिरिति, प्रभोर्जज्ञे चतुर्विधः ॥ धर्मं प्रभावयन्नुर्वी–श्चतुर्भेदं चतुर्दिशम् ॥ ४९२ ॥ दीक्षादिनात् प्रभृत्य–ब्द–सहस्रान्पंचविंशतिम् ॥ विहृत्य भुवि संमेत–पर्वतं भगवानगात् ॥ ४९३ ॥ तत्र चानशनं सार्द्धं, साधूनां नवभिः शतैः ॥ प्रभुः प्रपद्य मासेन, सिद्धिसौधमभूषयत् ॥ ४९४ ॥ कौमारे मण्डलीत्वे च, चक्रित्वे संयमेऽपि च ॥ लक्षतुर्यांश इत्यब्द–लक्षायुरभवद्विभोः ॥ ४९५ ॥ शान्तत्रिलोकदुष्टजिनस्य जिनस्य शान्ते–श्चक्रे विमुक्तिमहिमाथ सुरासुरेशैः ॥ चक्रायुधोऽपि भगवान् वृतकेवलश्री–र्भेजेऽन्यदा प्रियतमां शुभसिद्धिलक्ष्मीम् ॥ ४९६ ॥ इति शान्तिनाथचरितलेशः ॥ ३८ ॥

मूलम्—इक्खागरायवसभो, कुंथू नाम नराहिवो । विक्खायकित्ती भयवं, पत्तो गइमणुत्तरं ॥ ३९ ॥

व्याख्या—स्पष्टं, कथालेशस्त्वेवम्—

अत्रैव जम्बूद्वीपे प्राग्–विदेहेषु पुराऽभवत् ॥ आवर्त्तविजये खड्गि–पुर्यां सिंहावहो नृपः ॥ १ ॥ सोऽन्यदा व्रतमादत्त, संवराचार्यसन्निधौ ॥ जिनसेवादिभिः स्थानैः, तीर्थकृत्कर्म चार्जयत् ॥ २ ॥ चिरं पवित्रं चारित्रं, प्रपाल्यानशनं श्रितः ॥ आयुःक्षयेण सर्वार्थ–सिद्धे सोऽभूत्सुधाशनः ॥ ३ ॥ इतश्चात्रैव भरते, पुरे श्रीहस्तिनापुरे ॥ भूपो बभूव सूराह्वः, श्रीसंज्ञा तस्य च प्रिया ॥ ४ ॥ सिंहावहस्य जीवोऽथ, च्युत्वा सर्वार्थसिद्धतः ॥ कुक्षौ चतुर्दशस्वप्ना–ऽऽवेदितोऽवातरत् श्रियः ॥५॥ क्रमाच्च साऽसूत सुतं, छागाङ्कं काञ्चनच्छविम् ॥ दिक्कुमार्यो व्यधुस्तस्य, सूतिकर्म तदाऽऽगताः ॥ ६ ॥ जन्माभिषेकं मेरौ च, तस्येन्द्राः चक्रिरेऽखिलाः ॥ तुष्टोऽन्यतिष्ठद्भूपोऽपि, पुत्रजन्ममहामहः ॥ ७ ॥ गर्भस्थेऽस्मिन् कुंथुभावं, भेजिरे निखिला द्विषः ॥ स्वप्ने च जननी कुस्थं, रत्नस्तूपं ददर्श यत् ॥ ८ ॥ तत्कुंथुरिति तस्याख्या–मुत्सवैर्निर्ममे नृपः ॥ विश्वोत्तरगुणाधारः, क्रमात्स ववृधे विभुः ॥ ९ ॥ यौवने राजकन्या राट्, समं तेनोद्वाहयत् ॥ तस्मै वितीर्य राज्यं चा–ऽन्यदा पर्यव्रजत्स्वयम् ॥१०॥ श्रीकुंथुस्वामिनः प्राज्यं, राज्यं पालयतस्ततः ॥ चक्रमायुधशालाया–मन्येद्युरुदपद्यत ॥ ११ ॥ ततश्चक्रानुगः सर्वं, विजिग्ये भरतं प्रभुः ॥ चक्रिश्रियं च स्त्रीरत्न–मिवोपबुभुजे चिरम् ॥ १२ ॥ अथ लौकान्तिकैर्देवैः, स्वयम्बुद्धः स बोधितः ॥ राज्यं पुत्राय दानं च, ददौ वार्षिकमर्थिनाम् ॥१३॥ ततोनरेन्द्रैरिन्द्रैश्च, कृतनिष्क्रमणोत्सवः ॥ आरुह्य शिबिकां स्वामी, सहस्राम्रवणं गतः ॥ १४ ॥ महीपतिसहस्रेण, सह व्रतमुपाददे ॥ मनः पर्ययसंज्ञं च, तुर्यज्ञानं तदाऽऽसदत् ॥ १५ ॥ [ युग्मम् ] विभुर्भारुण्डपक्षीवा–ऽप्रमत्तो विहरन् भुवि ॥ आगात् षोडशभिर्वर्षैः, सहस्राम्रवणं पुनः ॥ १६ ॥ तत्र च स्वामिनाऽवासे, केवले हरयोऽखिलाः ॥ आगत्य चक्रुः समव–सरणं शरणं श्रियाम् ॥ १७ ॥ पञ्चत्रिंशद्धनुस्तुङ्गः, पञ्चत्रिंशत्गुणाढ्यया ॥ गिरा दिदेश तत्रेशो, धर्मं सिंहासने स्थितः ॥ १८ ॥ तं निशम्य प्रभोः पार्श्वे, प्राव्रजन् बहवो जनाः ॥ तेषु चास्थापयत्पञ्च–त्रिंशतं गणिनो जिनः ॥ १९ ॥ षष्टिः सहस्रा व्रतिनां, साध्वीनां ते सषट्शताः ॥ एकोनाशीत्या सहस्रै–र्युक्तं लक्षमुपासकाः ॥ २० ॥ एकाशीतिसहस्राग्रं, लक्षत्रयमुपासिकाः ॥ एवं चतुर्विधस्संघः, प्रभोर्विहरतोऽभवत् ॥ २१ ॥ [ युग्मम् ] कौमारराज्यचक्रित्व–चारित्रेषु समांशकम् ॥ जीवितं पञ्चनवति–सहस्राब्दान्यभूद्विभोः ॥ २२ ॥ समं सहस्रेण मुनीश्वराणां, संमेतशैलेऽनशनं प्रपन्नः ॥ मासेन सोऽर्हन् शिवमाससाद, सुरेश्वरैस्तन्महिमा च चक्रे ॥ २३ ॥ इति श्रीकुंथुनाथकथा ॥ ३९ ॥

मूलम्—सागरंतं चइत्ता णं, भरहं नरवरीसरो । अरोवि अरयंपत्तो, पत्तो गइमणुत्तरं ॥ ४० ॥

व्याख्या—व्यक्तं नवरं 'अरयंपत्तोत्ति' रजसः कर्मणोऽभावोऽरजस्तत्प्राप्तः,प्राप्तो गतिमनुत्तराम् । तद्वृत्तलेशस्त्वेवम्–

जम्बूद्वीपप्राग्विदेहे, वत्साह्वविजयेऽभवत् ॥ निःसीमविक्रमः सीमा–पुर्यां धनपतिर्नृपः ॥ १ ॥ संवराह्वमुनेः पार्श्वे, प्राव्रजत् सोन्यदा मुदा ॥ स्थानैरर्हद्भक्तिमुख्यै–रार्जयज्जिननाम च ॥ २ ॥ चिरं तस्वा तपस्तीव्रं, प्रपाल्य व्रतमुत्तमम् ॥ प्रायं प्रपद्य स सुरो, जज्ञे ग्रैवेयकेऽन्तिमे ॥ ३ ॥ इतश्च भरतेऽत्रैव, श्रीहास्तिनपुरेऽभवत् ॥ राजा सुदर्शनो लोक–दर्शनानन्दिदर्शनः ॥ ४ ॥ देवीसंज्ञाऽभवद्देवी, तस्य देवीव सुन्दरा ॥ जीवो धनपतेश्च्युत्वा, तस्याः कुक्षावयातरत् ॥ ५ ॥ चतुर्दश महास्वप्ना–स्तदा राज्ञी ददर्श सा ॥ ज्ञानत्रयधरस्तस्या, गर्भोऽपि ववृधे सुखम् ॥ ६ ॥

१ त्रिंशद्गणधरान् जिनः ॥ इति 'घ' संज्ञक पुस्तके चतुर्थपादः ॥

क्रमाच्च नन्दनं नन्द्या—वर्त्ताङ्कं काञ्चनद्युतिम् ॥ असूत सा महादेवी, महासेनमिवाद्रिजा ॥ ७॥ सूतिकर्माणि तस्याथ, दिक्कुमार्यो वितेनिरे ॥ चक्रे जन्माऽभिषेकश्चा—ऽखिलैरिन्द्रैः सुराचले ॥ ८ ॥ स्वप्ने रत्नारकं माता—ऽपश्यदित्यस्य पार्थिवः ॥ अर इत्यभिधां चक्रे, कृत्वा जन्म महोत्सवम् ॥ ९ ॥ क्रमाच्च कलयन् वृद्धिं, त्रिंशचापोच्चभूघनः ॥ पित्राज्ञयाऽङ्गजा राज्ञां, पर्यणैपीत्स यौवने ॥ १० ॥ अन्येद्युः पितुरादेशात्, दधौ राज्यधुरं जिनः ॥ जातचक्रादिरत्नश्चा—ऽखिलं भरतमन्वशात् ॥ ११ ॥ चक्रिश्रियं चाऽनासक्तो—ऽभुङ्क्त योगीव भोजनम् ॥ लोकांतिकैर्बोधितश्चा—ऽन्यदाऽदाद्दानमाब्दिकम् ॥ १२ ॥ राज्यं नियोज्य पुत्रे च, शिविकासंस्थितोविभुः ॥ ययौ सहस्राम्रवणं, सुरासुरनरैर्वृतः ॥ १३ ॥ सह राजसहस्रेण, प्राव्राजीत्तत्र तीर्थकृत् ॥ तदा मनःपर्ययाह्वं, तुर्यज्ञानमवाप च ॥ १४ ॥ ईभारातिरिवाभीतः, पृथिव्यां विहरन् विभुः ॥ भूयोऽप्यागात्सहस्राम्र—वणं संवत्सरैस्त्रिभिः ॥ १५ ॥ तदा चाभ्युदिते भर्त्तुः, केवलज्ञानभास्करे ॥ सैमे समेत्य समव—सरणं वासवा व्यधुः ॥ १६ ॥ वाण्या योजनगामिन्या, सर्वभाषानुयातया ॥ पूर्वमिंहासने तत्रा—ऽऽसित्वा धर्मं जगौ जिनः ॥ १७ ॥ तं चाकर्ण्य जिनाभ्यर्णे, नैके पर्यव्रजन् जनाः ॥ त्रयस्त्रिंशद्गणधराः, स्वामिना तेषु चक्रिरे ॥ १८ ॥ श्रमणानां प्रभोः पंचा—शत्सहस्राणि जज्ञिरे ॥ श्रमणीनां पुनः षष्टि—सहस्राणि महात्मनाम् ॥ १९ ॥ लक्षं चतुरशीत्या च, सहस्रैर्युक्तमास्तिकाः ॥ द्वासप्ततिसहस्राग्रं, लक्षत्रयमुपासिकाः

१ कार्त्तिकेयम् । २ सिंह' । ३ सर्वे । ४ त्रयस्त्रिंशद्गणधरान्, तेषु चास्थापयत् प्रभुः ॥ इति 'घ' पुस्तके ॥

॥ २० ॥ अनुग्रहीतुं भविनो, भूमौ विहरतोऽर्हतः ॥ सङ्घश्चतुर्विध इति, जज्ञे गुणमणीनिधिः ॥ २१ ॥ समभागं कुमारत्वा—दिके स्थानचतुष्टये ॥ आयुश्चतुरशीत्यब्द—सहस्राणि प्रभोरभूत् ॥ २२ ॥ निर्वाणकालं ज्ञात्वाऽथ, गत्वा सम्मेतपर्वते ॥ सह साधुसहस्रेणा—ऽनशनं विदधेऽधिपः ॥ २३ ॥ एकेन मासेन स सार्वसार्व—भौमो महानन्दपदं ततोऽगात् ॥ निर्वाणकाले च समेत्य तस्य, सर्वैर्वितेने महिमा सुरेन्द्रैः ॥ २४ ॥ इति श्रीअरनाथकथा ॥ ४० ॥

**मूलम्—चइत्ता भारहं वासं, चक्कवट्टी महिड्ढीओ। चइत्ता उत्तमे भोए, महापउमो तवं चरे ॥ ४१ ॥**

व्याख्या—सुगमं। तच्चरितं त्वेवम्—

अत्रैव भरतक्षेत्रे, श्रीहास्तिनपुरेऽभवत् ॥ इक्ष्वाकुवंशकासार—पद्मं पद्मोत्तरं नृपः ॥ १ ॥ तस्य ज्वालाभिधा राज्ञी, बभूव परमार्हता ॥ तस्याश्चैकः सुतो विष्णुः, सिंहस्वप्नेन सूचितः ॥ २ ॥ पद्मासद्मममहापद्म—नामान्यश्च सुतोऽजनि ॥ तस्याश्चतुर्दशस्वप्न—सूचितो निचितो गुणैः ॥ ३ ॥ कलाकलापं सकलं, कलाचार्यादधीत्य तौ ॥ द्वितीयमद्वितीयश्री—वयस्यं प्रापतुर्वयः ॥४॥ तत्र पद्मं जिगीषुत्वा—द्यौवराज्ये न्यधात्पिता ॥ विप्रेषु प्राज्ञवाजैत्रः, क्षत्रियेषु हि शस्यते ॥५॥

इतश्चोज्जयिनीपुर्यां, श्रीवर्म्मासीन्महीपतिः ॥ मन्त्रि तु तस्य नमुचि—र्वितण्डापण्डितोऽभवत् ॥ ६ ॥ तस्यां नगर्यामन्येद्यु—र्विहरन् समवासरत् ॥ मुनिसुव्रतनाथस्य, शिष्यः सुव्रतसूरिराट् ॥ ७ ॥ तं नन्तुं व्रजतो वीक्ष्य, पौरान् गौधोपरिस्थितः ॥ अमी जनाः क्व यान्तीति, नमुचिं पृष्टवान्नृपः ॥ ८ ॥ देवाद्योपवने केपि, श्रमणाः सन्त्युपागताः ॥ तान्नन्तुं यान्ति तद्भक्ता, इत्यूचे सचिवस्ततः ॥ ९ ॥ तत्र यामो वयमपी—त्युक्ते राज्ञाऽथ सोऽब्रवीत् ॥ यद्येवं तर्हि तत्रैः, स्थेयं मध्यस्थवृत्तिभिः ॥ १० ॥ पाषण्डिनोऽखिलान्वादे, स्वामिन्! जेष्यामि तानहम् ॥ ओमित्युक्त्वा ततो राजा, समंत्री तद्वनं ययौ ॥ ११ ॥ धर्मं चेद्वित्थ तद्ब्रूते—त्यूचे च नमुचिर्मुनीन् ॥ क्षुद्रोऽयमिति विज्ञाय, ते तु तूष्णीकतां दधुः ॥ १२ ॥ ततः स शासनं जैनं, निन्दन्नुद्दिश्य सद्गुरून् ॥ गौरयं किमु वेत्तीति, व्यब्रवीत्सचिवब्रुवः ॥ १३ ॥ मुखं कण्डूयते ते चेत्, तत्किंचिद्ब्रूमहे वयम् ॥ अथेति गुरुभिः प्रोक्ते, तानेकः क्षुल्लको जगौ ॥ १४ ॥ अनेन सह धृष्टेन, वक्तुं युक्तं न वः स्वयम् ॥ विजेष्ये ह्यहमेवामुं, स्वपक्षं तद्वदत्वयम् ॥ १५ ॥ क्रुद्धः सोऽथावदद्वेद—बाह्याः शौचविवर्जिताः ॥ देशे वासयितुं नार्हा, यूयं पक्षोऽयमस्तु मे ॥ १६ ॥ प्रत्यूचे क्षुल्लको चारि, कुम्भश्चुल्ली प्रमार्जनी ॥ कण्डणी पेषणीत्युक्ताः, पञ्च शूनाः श्रुतिष्वहो! ॥ १७ ॥ ये हि शूना भजन्त्येता, वेदबाह्याः त एव हि ॥ तद्वर्जितानामस्माकं, तत्कथं वेदबाह्यता? ॥ १८ ॥ अशौचं तु रैतं तस्य, सेवकश्चाशुचिर्मतः ॥ सुरताद्विरतास्तस्मा—त्कस्मादशुचयो वयम् ॥ १९ ॥ निरुत्तरीकृत इति, क्षुल्लकेन स धीसखः ॥ वैरं महद्वहन् साधु—ष्वगाद्गेहं नृपान्वितः ॥ २० ॥ निशायां च मुनीन् हन्तुं, क्रोधान्धः स वने गतः ॥ धावन्निहन्तुमस्तम्भि, देव्या निर्ग्रन्थभक्तया ॥ २१ ॥ प्रातश्च तं तथा प्रेक्ष्य, विस्मिता नागरा नराः ॥ नृपश्च धर्मं सूरिभ्यो, निशम्योपशमं ययुः

१ प्राणिवधस्थानानि। "पञ्च शूना गृहस्थस्य, चूल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च, बध्यते यास्तु वाहयन् ॥" [मनु'] २ कामम् ॥

॥ २२ ॥ निन्द्यमानो जनैः सर्वै-र्विलक्षो नमुचिस्ततः ॥ देव्या मुक्तो ययौ लज्जा-विहस्तो हस्तिनापुरम् ॥ २३ ॥ सोऽथ तत्र महापद्म-युवराजेन सङ्गतः ॥ तदमात्यपदं प्राप, पापोऽपि प्राच्यपुण्यतः ! ॥ २४ ॥

इतश्चासीत्प्रान्तवासी, दुर्गमं दुर्गमाश्रितः ॥ नृपः सिंहबलः सिंहः, इव प्रबलविक्रमः ॥ २५ ॥ स च प्रदायाव-स्कन्दं, पद्मदेशे मुहुर्मुहुः ॥ स्वदुर्गं प्राविशत्तं च, ग्रहीतुं कोऽपि नाशकत् ॥ २६ ॥ धर्तुं सिंहबलं जाना-स्युपायं कंचिदित्यथ ॥ पृष्टो रुष्टेन पद्मेन, वेद्मीति नमुचिर्जगौ ॥ २७ ॥ ततो मुदा महापद्मे-नादिष्टः स गतो द्रुतम् ॥ भंक्त्वा दुर्गं सिंहबलं, बलाद्बद्ध्वा समाययौ ॥ २८ ॥ ततो वरं वृणीष्वेति, प्रोक्तः पद्मेन संसदात् ॥ ऊचे नमुचिरा-दास्ये, काले वरममुं विभो ! ॥ २९ ॥ तत्प्रपद्य चिरं पद्मो, यौवराज्यमपालयत् ॥ ज्वालादेव्याऽथ तन्मात्रा-ऽ-कारि जैनरथोऽन्यदा ॥ ३० ॥ मिथ्यादृष्टिस्तत्सपत्नी, लक्ष्मीर्ब्रह्मरथं तदा ॥ विधाप्योचे नृपं ब्रह्म-रथः प्राग् भ्रम्यतां पुरे ॥ ३१ ॥ ततो ज्वालाऽलपज्जूपं, न चेज्जैनरथोऽग्रतः ॥ पुरे भ्रमिष्यति तदा, करिष्येऽनशनं ध्रुवम् ॥ ३२ ॥ द्वयोरपि स्यन्दनयो-र्यात्रां राजाऽरुणत्ततः ॥ मातुर्दुःखेन तेनाथ, पद्मोऽभूद्भृशमातुरः ! ॥ ३३ ॥ दध्यौ चेति स्पृहा मातुः, मादृशेऽपि सुते सति ॥ व्यलीयत मनस्येव, कदर्यश्रीरिवाधनौ ! ॥३४॥ सुपुत्रत्वाभिमानं हि, कथंकारं करो-तु सः ? ॥ शक्तोऽपि यः पूरयति, न मातुः सन्मनोरथान् ! ॥ ३५ ॥ कृतः पित्रापि मन्मातु-र्विशेषः कोऽपि न ह्यहो ! ॥ तन्मानिनो न मे मानं, विनेहाऽवस्थितिः शुभा ! ॥ ३६ ॥ ध्यात्वेति सुप्ते लोके सः, निर्गत्य स्वपुरा-न्निशि ॥ भ्रमन् स्वैरमरण्यान्त-स्तापसाश्रममासदत् ॥ ३७ ॥ वल्लभाभ्यागतैस्तत्र, तापसैः कृतसत्कृतिः ॥ सुखं प्रभ-भृते स्थातुं, महापद्मः स्वसद्मवत् ॥ ३८ ॥

इतश्चाजनि चम्पायां, भूजानिर्जनमेजयः ॥ स च कालेन राज्ञाऽऽजौ, पराभूतः पलायत ! ॥ ३९ ॥ ततः पुरे भज्यमाने, नेशुर्लोका दिशोदिशम् ॥ अन्तःपुरमहेलाश्चा-ऽन्तरा त्रातारमातुराः ! ॥ ४० ॥ तदा चम्पापतेः पत्नी, नष्टा नागवती द्रुतम् ॥ स्वपुत्र्या मदनावल्या, सममागात्तमाश्रमम् ॥ ४१ ॥ तदा च पद्ममदना-वल्योरन्योन्यदर्श-नात् ॥ क्षणादाविरभूद्रागो, मन्दाक्षं मन्दतां नयन् ! ॥ ४२ ॥ तद्विज्ञाय जगौ नाग-वतीति मदनावलीम् ॥ पुरुषे यत्रतत्राऽपि, सुते ! किमनुरज्यसे ? ॥ ४३ ॥ भाविनी चक्रिणो मुख्य-पत्नी त्वमिति भाषितम् ॥ ज्ञानिनो वि-स्मृतं किं ते ?, यद्भवस्येवमुत्सुका ! ॥ ४४ ॥ मिथोरक्ताविमौ कार्यो, विप्लवं मेति चिन्तयन् ॥ स्थानं यथेष्टं याहीति, पद्मं कुलपतिर्जगौ ॥ ४५ ॥ तदाकर्ण्य ततः पद्मो, निर्ययौ विमना मनाक् ॥ अभीष्टानां वियोगो हि, महतामपि दुःसहः ! ॥ ४६ ॥ नूनमेषा ममैव स्त्री, भाविनी भाविचक्रिणः ॥ तत्साधयित्वा भरतं, परिणेष्याम्यमूं कदा ? ॥ ४७ ॥ विधाप्यार्हतचैत्यैश्च, मण्डितामखिलामिलाम् ॥ पूरयिष्ये कदा मातु, रथयात्रामनोरथम् ? ॥ ४८ ॥ इत्थं मनोरथरथा-ऽधीरूढो भूपभूस्ततः ॥ श्रीसिन्धुनन्दनपुरो-पवनं आप पर्यटन् ॥ ४९ ॥ [ त्रिभिर्विशेषकम् ] ॥

१ लज्जाम् । २ उपद्रवम् ॥

तत्र चोद्यानिकायात-क्रीडन्नागरयोषिताम् ॥ निशम्य तुमुलं हस्ती, महासेनमहीशितुः ॥ ५० ॥ स्तम्भमुन्मूल्य मिण्ठौ च, व्यापाद्य व्यालतां गतः ॥ अनु ता नागरीरागा-द्रागाकुल इव क्षणात् ॥ ५१ ॥ [ युग्मम् ] ततोऽति-भीता नशितु-मनीशास्ताः स्त्रियोऽखिलाः ॥ पूच्चक्रुरिति यो ह्यत्र, वीरोऽस्मान्पातु पातु सः ! ॥ ५२ ॥ ताश्च पूत्कु-र्वतीः प्रेक्ष्य, पद्मो व्यालं ततर्ज तम् ॥ अवलिष्ट ततः सोऽपि, तम्प्रति प्रतिघाकुल ॥ ५३ ॥ तमायान्तं स्खलयितुं, पटं पद्मोऽन्तराऽक्षिपत् ॥ मर्त्योऽयमिति तत्रापि, क्रोधान्धः प्राहरत्करी ! ॥ ५४ ॥ कोलाहलैस्तदा चोग्रैः, पौरलो-कोऽखिलोऽमिलत् ॥ महासेनमहीशश्च, समं सामन्तमंत्रिभिः ॥ ५५ ॥ क्रुद्धात्कालादिव व्याला-दस्मादपसराशु भोः ! ॥ महापद्म महासेन, इत्युद्बाहुस्तदाऽवदत् ॥ ५६ ॥ पद्मः स्माह महाराज !, पश्य स्वच्छमना क्षणम् ॥ मत्तं मतङ्गजममूं, वशीकुर्वे वशामिव ! ॥ ५७ ॥ इत्युक्त्वा ताडितो मुष्ट्या, तेन स न्यग्मुखो गजः ॥ यावन्मुक्त्वा पटी-येधं, तं ग्रहीतुं समुत्थितः ॥ ५८ ॥ तावत्स विद्युदुत्क्षिप्त-करणेनारुरोह तम् ॥ चिरं चाखेदयत्पाणि-पादाङ्गुष्ठक-चोङ्कुशैः ॥ ५९ ॥ तं च व्यालं कलभवत्, क्रीडयन्तं समीक्ष्य तम् ॥ विस्मयं भेजिरे पौरा, नृपतिश्च वचोऽतिगम् ! ॥ ६० ॥ दत्वा हस्तिपकायाथ, हस्तिनं तं वशीकृतम् ॥ भूधरादिव पारिन्द्रः, पद्मस्तस्मादवातरत् ॥ ६१ ॥ धाम्ना स्याज्ञा च तं श्रेष्ठ-कुलभूरिति भूपतिः ॥ निश्चिकाय निजं धाम, निनाय च सगौरवम् ॥ ६२ ॥ तस्मै कृतोपचाराय,

१ सिंहः ॥

ददौ कन्याशतं नृपः ॥ पुण्यैरगण्यैर्जामाता, प्राप्यते खलु तादृशः ! ॥ ६३ ॥ क्रीडंस्ताभिः समं नायं, व्यस्मरन्मदनावलीम् ॥ भृङ्गो लवंगीभोगेऽपि, किं विस्मरति पद्मिनीम् ? ॥ ६४ ॥ खेचर्या वेगवत्या स, निशि सुप्तोऽन्यदा हृतः ॥ प्रबुद्धो बद्धमुष्टिस्तां, किं रे ! मां हरसीत्यवक् ? ॥ ६५ ॥ साप्यूचे शूर ! हरण–कारणं शृणु मा कुपः ! ॥ वैताढ्यपर्वते सूरो–दयं नामास्ति सत्पुरम् ॥ ६६ ॥ तत्र चेन्द्रधनुःसंज्ञो, विद्यते खचरेश्वरः ॥ श्रीकान्ता तद्वधूः पुत्री, जयचन्द्रा तयोः शुभा ॥ ६७ ॥ पुरुषद्वेषिणी साभू–दप्राप्य प्रवरं वरम् ॥ दुःखाकरो हि दक्षाणां, स्त्रीणां हीनः पतिर्भृशम् ॥ ६८ ॥ पटेषु भरतस्थानां, रूपाण्यालिख्य भूभुजाम् ॥ अदर्शयमहं तस्यै, न किमप्यरुचत्परम् ॥ ६९ ॥ पटे मयाऽन्यदा रूपं, तवालिख्य प्रदर्शितम् ॥ तस्याश्चित्तमयस्कान्त–मणिर्लोहमिवाकृषत् ! ॥ ७० ॥ चेदयं दयितो न स्यात्, तदाहमनलं श्रये ॥ इति प्रत्यशृणोत्साऽथ, मत्वा त्वां खलु दुर्लभम् ! ॥ ७१ ॥ तस्यास्तस्यां प्रतिज्ञायां ज्ञापितायां मया स्यात् ॥ त्वामानेतुं तत्पितृभ्यां, हृष्टाभ्यां प्रहितास्म्यहम् ॥ ७२ ॥ तमानये न चेत्तर्हि, वह्नावहाय याम्यहम् ॥ तामाश्वासयितुं कन्या–मित्युक्त्वेहागमं ततः ॥ ७३ ॥ तां पद्मीनीं मोदयितुं, नये त्वां च प्रभाकरम् ॥ तस्या मम च जीवातु–स्त्वमेवासि प्रसीद तत् ! ॥ ७४ ॥ साऽथ तं तदनुज्ञाता, निन्ये सूरोदयं पुरम् ॥ विभाते भास्करमिव, तं चेन्द्रधनुरार्चयत् ॥ ७५ ॥ विदधे येन धात्राऽसौ, तस्य स्यामनृणा कथम् ? ॥ ध्यायन्तीमित्युपायंस्त, जयचन्द्रां ततश्च सः ॥ ७६ ॥ तस्याश्च मातुलसुतौ, गङ्गाधरमहीधरौ ॥ विद्याधरौ महाविद्यौ, तद्विवाहाभिलाषिणौ ॥ ७७ ॥ पद्मेन परिणीतां तां, निशम्य समरोद्यतौ ॥ सूरोदयपुरे सर्वा–ऽभिसारेण समीयतुः ॥७८॥ [ युग्मम् ] पुरान्निर्गत्य पद्मोऽपि, विद्याधरचमूवृतः ॥ तत्सैन्येन समं योद्धुं, प्रावर्त्तत महाभुजः ॥ ७९ ॥ रथी सादी निषादी वा, पदातिर्वा न कोऽपि हि ॥ पद्मस्य युध्यमानस्य, पुरः स्थातुमभूत्प्रभुः ! ॥ ८० ॥ नैर्ऋतेनानिलेनाब्द–मिव पद्मेन सर्वतः ॥ स्वसैन्यं वीक्ष्य विक्षिप्तं, खेचरौ तौ प्रणेशतुः ॥ ८१ ॥ तत उत्पन्नचक्रादि–रत्नो ज्वालाङ्गजो बली ॥ षट्खण्डं भरतक्षेत्रं, साधयामास लीलया ॥ ८२ ॥ स्त्रीरत्नवर्जं स प्राप, सकलां चक्रिसम्पदम् ॥ विना तु मदनावल्या, मेने तामपि नीरसाम् ॥ ८३ ॥ ततः स क्रीडयाऽन्येद्यु–र्गतस्तं तापसाश्रमम् ॥ सचक्रे तापसैश्चारु–फलपुष्पादिदायिभिः ॥ ८४ ॥ जनमेजयराजोऽपि, भ्रमंस्तत्रागतस्तदा ॥ ददौ तस्मै निजां पुत्रीं, मुदितो मदनावलीम् ॥ ८५ ॥ ततश्चक्रिरमां पूर्णां, कलयन् स्वपुरं गतः ॥ भून्यस्तमौलिः पितरौ, हृष्टो हृष्टौ ननाम सः ॥ ८६ ॥ आकर्ण्य कर्णपीयूषं, सूनोर्वृत्तान्तमद्भुतम् ॥ लक्ष्मीं च तादृशीं वीक्ष्य, पितरावत्यहृष्यताम् ॥ ८७ ॥ तदा च सुव्रताचार्याः, शिष्याः श्रीसुव्रतार्हतः ॥ विहरन्तः पुरे तत्र, समेत्य समवासरन् ॥ ८८ ॥ तांश्च श्रुत्वा नृपो गत्वा, ननाम सपरिच्छदः ॥ देशनां चाशृणोन्मोह–हिमापोहरविप्रभाम् ॥ ८९ ॥ व्रताय यावदायामि, राज्ये विन्यस्य नन्दनम् ॥ तावत्पूज्यैरिह स्थेय–मथेत्यूचे नृपो गुरून् ॥ ९० ॥ विलम्बनीयं नार्येऽस्मि–न्निति प्रोक्तोऽथ सूरिभिः ॥ प्रविवेश विशामीश–स्तान्प्रणम्य निजं पुरम् ॥ ९१ ॥ आकार्य मंत्रीसामंत–मुख्यं परिजनं निजम् ॥ पुत्रं च विष्णुनामानं, पद्मोत्तरनृपोऽवदत् ॥ ९२ ॥ श्रुत्वा श्रीसुव्रताचार्या–त्संसारासारतामहम् ॥ मन्ये स्वं वंचितं काल–मियन्तं व्रतमन्तरा ! ॥ ९३ ॥ अद्यैव तदुपादास्ये, व्रतं श्रीसुव्रतान्तिके ॥ राज्ये तु निदधे विष्णु–कुमारं स्फारविक्रमम् ॥ ९४ ॥ विष्णुर्जगौ विभो ! भोगैः, किं किम्पाकफलोपमैः ? ॥ मोघीकर्त्तुमघं दीक्षा–मादास्येऽहं त्वया सह ! ॥ ९५ ॥ राज्यमादत्स्व वत्सेद–मित्याहूयाथ साग्रहम् ॥ पद्मं पद्मोत्तरोऽवादी–त्ततः सोऽप्येवमब्रवीत् ॥ ९६ ॥ प्रभविष्णुः प्रभो ! विष्णु–रसौ राज्येऽभिषिच्यताम् ॥ श्रयिष्ये युवराजत्व–मस्य शस्यमहं पुनः ! ॥ ९७ ॥ भूपः प्रोचेयमुक्तोऽपि, राज्यं नादित्सते कृतिन् ! ॥ आदित्सते तु प्रव्रज्यां, मया सह महाशयः ! ॥ ९८ ॥ कृतमौनं ततः पद्मं, राज्ये न्यस्योत्सवैर्नृपः ॥ सुव्रताचार्यपादान्ते, प्राव्राजीद्विष्णुना समम् ॥ ९९ ॥ पद्मचक्री ततः सर्वैः, पूज्यमानं जनैः पुरे ॥ रथमभ्रमयज्जैनं, जनन्या जनयन्मुदम् ॥ १०० ॥ चक्रे स्ववंशवज्जैन–शासनस्योन्नतिं च सः ॥ भेजिरे बहवो भव्या–स्ततः शासनमार्हतम् ॥ १०१ ॥ उच्चैश्चैत्यानि जैनानि, ग्रामाकरपुरादिषु ॥ कोटिशः कारयामास, स चक्री परमार्हतः ॥ १०२ ॥ केवलं प्राप्य कैवल्यं, प्राप पद्मोत्तरोऽन्यदा ॥ लेभे विष्णुकुमारस्तु, लब्धीर्नैका महातपाः ! ॥ १०३ ॥ स्वर्णशैल इवोत्तुंगो, व्योमगामी सुपर्णवत् ॥ बहुरूपः सुर इव, कन्दर्प इव रूपवान् ॥ १०४ ॥ इत्याद्यनेकावस्थावान्, भवितुं प्रबभूव सः ॥ नन्वभूल्लब्धिभोगो हि, विना हेतुं न योगिनाम् ! ॥ १०५ ॥ तेऽन्येद्युः सुव्रताचार्या, भूरिसंयतसंयुताः ॥ श्रीहस्तिनापुरे तस्थु–र्वर्षातिक्रमहेतवे ॥ १०६ ॥ ज्ञात्वा तान्नमुचिः प्राच्य–वैरशुद्धिविधित्सया ॥

देहि मे तं वरं स्वामि–न्निति पद्मं व्यजिज्ञपत् ॥ १०७ ॥ यथाकामं वृणुष्वेति, राज्ञा प्रोक्तोऽब्रवीन्न सः ॥ यज्ञं यक्ष्यामि तद्राज्यं, तत्प्रान्तावधि देहि मे ॥१०८॥ सत्यसन्धस्ततो राज्ये, निधाय नमुचिं द्रुतम् ॥ शुद्धान्तरात्मा शुद्धान्त-मध्यमध्यास्त चक्रभृत् ॥ १०९ ॥ ततः पुराद्बहिर्गत्वा, नमुचिर्यज्ञपाटके ॥ मायया दीक्षितो जज्ञे, वैकोट इव कूटधीः ! ॥ ११० ॥ राज्येऽभिषिक्तं तं वर्द्धा–पयितुं निखिलाः प्रजाः ॥ लिङ्गिनश्चाखिला जैन–मुनिवर्जाः समाययुः ॥१११॥ सर्वेप्यागुर्लिङ्गिनो मां, न पुनः श्वेतभिक्षवः ॥ प्रवदन्निति मात्सर्या–त्तच्छिद्रं स पुरोऽकरोत् ॥ ११२ ॥ आकार्य सुव्रताचार्या–नार्यो व्याहरच्च सः ॥ राजा यः स्याद्यदा सोऽभि–गम्यते लिङ्गिभिस्तदा ॥ ११३ ॥ तपोवनानि हि क्ष्माप–रक्ष्याणीति तपस्विनः ॥ भूपालमुपतिष्ठन्ते, लोकस्थितिरियं खलु ॥ ११४ ॥ स्तब्धा यूयं तु मर्यादा–विकला मम निन्दकाः ॥ तन्मे राज्ये न युष्माभिः, स्थेयं गन्तव्यमन्यतः ॥ ११५ ॥ स्थाता यस्त्विह वो मध्ये, ध्रुवं वध्यः स मे शठः ॥ संवासयति वः को हि, लोकराजविरोधिनः ॥ ११६ ॥ सूरिरूचे न नः कल्प, इति नोपागता वयम् ॥ तवाऽभिषेके न पुन–र्निन्दामः कश्चिदप्यहो ! ॥ ११७ ॥ कुधीः क्रुद्धोऽभ्यधात्सोऽथ, पर्याप्तं बहुभाषितैः ॥ सप्ताहोपरि दृष्टान् वो, घातयिष्यामि चौरवत् ! ॥ ११८ ॥ ततः स्वस्थानमागत्य, मुनीनाहूय सूरयः ॥ अथ किं कार्यमित्यूचु–स्तेष्वेकः साधुरित्यवक् ॥ ११९ ॥ सुदुस्तपं तपस्तेपे, षष्टिं वर्षशतानि यः ॥ स हि विष्णुकुमारर्षि–र्मेरौ सम्प्रति वर्त्तते

१ अन्तःपुरमध्ये ॥ २ बकः ॥

॥ १२० ॥ पद्माग्रजः स इति त–द्गिराऽसौ शान्तिमप्येति ॥ यातु कोऽपि तमानेतुं, तद्विद्यालब्धिमान्मुनिः ॥१२१॥ ऊचेऽथान्यो यतिर्व्योम्ना, गन्तुं तत्रास्म्यहं क्षमः ॥ न त्वाऽऽगन्तुं ततो ब्रूत, यदि कार्यं मयास्ति वः ॥ १२२ ॥ विष्णुरेव समानेता, त्वामित्युक्तेऽथ सूरिभिः ॥ उत्पत्य नभसा विष्णु–मुपागात्स मुनिः क्षणात् ॥ १२३ ॥ तं चायान्तं वीक्ष्य दध्या–विति विष्णुर्महामुनिः ॥ सङ्घकार्यं महन्नून–मस्ति किञ्चिदुपस्थितम् ॥ १२४ ॥ इहागच्छेदसौ साधु–र्वर्षासु कथमन्यथा ? ॥ ध्यायन्तमिति तं साधु–रुपेत्य प्रणनाम सः ॥ १२५ ॥ तेनागमनहेतौ च, प्रोक्ते विष्णुमुनि-र्द्रुतम् ॥ तं गृहीत्वा गजपुरे, गत्वा च प्राणमद्गुरून् ॥ १२६ ॥ अगाच्च नमुचेः पार्श्वे, बहुभिर्मुनिभिः समम् ॥ विना नमुचिमुर्वीशा–दिभिः सर्वैरनामि सः ॥ १२७ ॥ ततो धर्मोपदेशादि–पूर्वमित्यवदत्स तम् ॥ वर्षाकालं यावदत्र, वसन्तु मुनयः पुरे ॥ १२८ ॥ स्वतोऽप्येते हि तिष्ठन्ति, नैकत्र समयं बहुं ॥ वर्षासु तु भुवो भूरि-जन्तुत्वाद्विहरन्ति न ॥ १२९ ॥ महत्यस्मिन्पुरे भिक्षा–वृत्तिभिः प्रचुरैरपि ॥ अस्मादृक्षैः संवसद्भिः, क्षतिः का ? नाम ते कृतिन् ! ॥ १३० ॥ पुरा हि मुनयो भूपैः, प्रणता भरतादिभिः ॥ कुरुषे न तथा त्वं चे–न्निर्वासयसि तान् कुतः ? ॥ १३१ ॥ श्रुत्वेति नमुचिः क्रुद्धो–ऽवादीत्किं पुनरुक्तिभिः ? ॥ निग्रहीष्यामि वो नूनं, पञ्चाहोपरि वीक्षितान् ! ॥ १३२ ॥ विष्णुर्जगौ पुरोद्याने, वसन्त्वेते महर्षयः ॥ ततः क्रुधाऽभ्यधान्मंत्री, वाक्यैः कर्करकर्कशैः ॥ १३३ ॥ आस्तामुद्यानं पुरं वा, मम राज्येऽपि सर्वथा ॥ पाखण्डिपाशैः पापाशै–र्न स्थेयं श्वेतभिक्षुभिः ! ॥ १३४ ॥ तन्म मुञ्चत राज्यं द्राग्, यदि वः प्राणितं प्रियम् ॥ रुष्टो विष्णुरथोचेऽङ्घ्रि–त्रयस्थानं तु देहि नः ! ॥ १३५ ॥ अथाख्य-न्नमुचिर्दत्तं, मया यत्त्रिपदीपदम् ॥ किन्तु तस्माद्बहिर्यो वः, स्थाता स द्राग् हनिष्यते ॥ १३६ ॥ प्रावर्त्तत ततः कोपा–विष्टो विष्णुः प्रवर्धितुम् ॥ मौलिकुण्डलमालाढ्यः, पविचापक्षपाणभृत् ॥ १३७ ॥ स्फारान्विमुञ्चन्फूत्कारान्, कल्पान्तपवनोपमान् ॥ काश्यपीं कम्पयन्पाद–दर्दरैर्निखिलामपि ॥ १३८ ॥ उल्लालयन्पयोराशीन्, शैलशृङ्गाणि पातयन् ॥ धात्रीफलौघवज्ज्योति–श्चक्रमप्यपसारयन् ॥ १३९ ॥ क्षोभयन्विविधै रूपै–र्देवदानवमानवान् ॥ वर्धमानोऽमानशक्तिः, सोऽभून्मेरुसमः क्रमात् ॥ १४० ॥ [ त्रिभिर्विशेषकम् ] प्रपात्य नमुचिं पृथ्व्यां, पूर्वापरसमुद्रयोः ॥ पादौ विन्यस्तवान् विष्णु–रलम्भूष्णुर्जगज्जये ॥ १४१ ॥ त्रिलोकिक्षोभमालोक्य, शक्रेण प्रहितास्तदा ॥ इति कर्णान्तिके तस्या–ऽप्सरसः सरसं जगुः ॥ १४२ ॥ क्रोधो धर्मद्रुमज्वाला–जिह्वः स्वपरदाहकः ॥ स्वार्थनाशं विधत्तेऽत्र, दत्तेऽमुत्र च दुर्गतिम् ॥ १४३ ॥ तच्छान्तरसपीयूषं, निरपायं निपीयताम् ॥ इत्थं जगुः पुरस्तस्य, ननृतुश्च प्रसत्तये ॥ १४४ ॥ महापद्मोऽपि तत्रागात्, शङ्कातङ्काकुलस्तदा ॥ इलातलमिलन्मौलि–स्तं च नत्वैवमब्रवीत् ॥१४५॥ श्रीसंघाशातना मंत्रि–पाशेनानेन निर्मिताम् ॥ न ज्ञापितोऽस्मि केनापी–त्यज्ञासिषमहं न हि ॥ १४६ ॥ कृतस्वान्योपतापस्य, पापस्याऽमुष्य मन्तुना ॥ प्राणसन्देहमारूढं, त्रायस्व भुवनत्रयम् ॥ १४७ ॥ इत्यन्येपि नृपा देवा–सुराः संघस्तथाऽखिलः ॥ तं मुनिं विविधैर्वाक्यैः, सान्त्वयामासुरुच्चकैः ॥ १४८ ॥ मौलिस्पृष्टक्रमांस्तांश्च, वीक्ष्य विष्णुर्व्यचि-

नयत् ॥ संघोऽसौ भगवान् भीता–श्मामी पद्मसुरादयः ॥ १४९ ॥ कोपापहारहेतोर्मां, सान्त्वयन्ति मुहुर्मुहुः ॥ मान्वः संघोऽनुकम्प्याश्च, पद्मदेवादयोऽपि मे ॥ १५० ॥ [ युग्मम् ] ध्यात्वेति शर्द्धिं संहृत्य, पूर्वावस्थोऽजनिष्ट सः ॥ ततस्त्रिविक्रम इति, ख्यातिं च प्राप सर्वगाम् ॥ १५१ ॥ मुमोच नमुचिं विष्णु–मुनिः संघोपरोधतः ॥ तं धीसखा-धमं पद्म–चक्री तु निरयासयत् ॥ १५२ ॥ संघकार्यं विधायेति, शान्तो विष्णुर्महामुनिः ॥ आलोचितप्रतिक्रान्त-स्तीव्रं तत्वा तपश्चिरम् ॥ १५३ ॥ उत्पन्नकेवलः प्राप, महानन्दपदं क्रमात् ॥ चक्रिपद्मां च पद्मोऽपि, बुभुजे रुचिरां चिरम् ॥ १५४ ॥ [ युग्मम् ] सन्त्यज्य राज्यमन्येद्युः, परिव्रज्याऽन्तिके गुरोः ॥ स दशाब्दसहस्राणि, तीव्रं व्रतम-पालयत् ॥ १५५ ॥ त्रिंशद्वर्षसहस्रायु–श्चापान्विंशतिमुन्नतः ॥ महामहा महापद्म–महाराजो बभूव सः ॥ १५६ ॥ तीव्रैस्तपोभिर्घनघातिघातं, निर्माय निर्मायचरित्रचारुः ॥ स केवलज्ञानमवाप्य वापीं, श्रेयःसुधायाः श्रयतिस्म सिद्धिम् ॥ १५७ ॥ इति श्रीमहापद्मचक्रिकथा ॥ ४१ ॥

मूलम्—एगछत्तं पसाहित्ता, महिं माणनिसूरणो । हरिसेणो मणुस्सिंदो, पत्तो गइमणुत्तरं ॥ ४२ ॥

व्याख्या—एकं छत्रं राजचिह्नमस्त्यस्यामित्येकछत्रा तां, अविद्यमानापरनृपामित्यर्थः । महीं पृथ्वीं प्रसाध्य वशी-कृत्येति सम्बन्धः । 'माणनिसूरणोत्ति' दृप्तारातिदर्पदलनः, हरिषेणो मनुष्येन्द्रः प्राप्तो गतिमनुत्तराम् । तद्वृत्तलेशस्त्वयम्–

अत्रैव भरतक्षेत्रे, पुरे काम्पील्यनामनि ॥ महाहरिरभूद्भूमा–न्मेराह्वाना च तत्प्रिया ॥ १ ॥ हरिषेणस्तयोर्विश्वा-नन्दनो नन्दनोऽभवत् ॥ चतुर्दशमहास्वप्न–सूचितोऽस्वप्नजिन्महाः ॥ २ ॥ कलाकलापमापन्नो, वर्द्धमानः शशीव सः ॥ चापपंचदशोत्तुङ्गः, पुण्यं तारुण्यमासदत् ॥ ३ ॥ राज्यं प्राज्यं पितुः प्राप्य, तस्य पालयतः सतः ॥ रत्नान्युत्पेदि-रेऽन्येद्यु–श्चक्रादीनि चतुर्दश ॥ ४ ॥ ततः स साधयामास, षट्खंडमपि भारतम् ॥ जातचक्रित्वाभिषेको, भोगांश्च बुभुजे चिरम् ॥ ५ ॥ भववासाद्विरक्तोऽथ, लघुकर्मतयाऽन्यदा ॥ सोऽध्यासीदियसौ सम्पत्, प्राक्पुण्यैः सङ्गतास्ति मे ॥ ६ ॥ पुण्यार्जनाय भूयोऽपि, प्रयत्नं विदधे ततः ॥ विनार्जनां हि क्षपिते, मूले स्याद्दुःस्थता भृशम् ! ॥ ७ ॥ ध्यात्वेति तनयं न्यस्य, राज्ये स व्रतमाददे ॥ कर्मकक्षमधाक्षीच, सत्तपोजातवेदसा ॥ ८ ॥ समासहस्राणि दशाति-वाह्य, सर्वायुषा श्रीहरिषेणचक्री ॥ घातिक्षयाज्ज्ञानमनन्तमाप्य, भेजे महानन्दमनिंद्यकीर्त्तिम् ॥ ९ ॥ इति श्रीह-रिषेणचक्रिकथा ॥ ४२ ॥

मूलम्—अन्निओ रायसहस्सेहिं, सुपरिच्चाइ दमं चरे । जयनामो जिणक्खायं, पत्तो गइमणुत्तरं ॥४३॥

व्याख्या—अन्वितो युक्तो राजसहस्रैः, सुष्ठु शोभनप्रकारेण राज्यादि त्यजतीत्येवंशीलः सुपरित्यागी, दमं जिना-ख्यातमिति सम्बन्धः, 'चरेत्ति' अचारीत् । जयनामा एकादशचक्री । चरित्वा च दमं प्राप्तो गतिमनुत्तराम् । तत्कथांशस्त्वयम्—

अत्रैव भरते सम्पद्–गृहे राजगृहे पुरे ॥ यशः सुधासमुद्रोऽभू–त्समुद्रविजयो नृपः ॥ १ ॥ पुण्यलावण्यतारुण्या, शीलालङ्कारशालिनी ॥ वप्रः शालिगुणालीनां, वप्रा तस्य प्रियाऽभवत् ॥ २ ॥ द्विः सप्तभिर्महास्वप्नैः, सूचितोऽभूत्सु-तस्तयोः ॥ जयाह्वयो जयन्तस्य, जयन् रूपं वपुःश्रिया ॥ ३ ॥ कलिन्दिकासुधाः पीत्वा, क्रमाद्यौवनमाश्रितः ॥ स द्वादशधनुस्तुङ्गः, पित्र्यां राज्यधुरां दधौ ॥ ४ ॥ जातचक्रादिरत्नश्च, जितषट्खण्डभारतः ॥ बुभुजे रमणीरत्न–मिव चक्रिरमां चिरम् ॥ ५ ॥ स चान्यदा भवोद्विग्नः, संविग्नस्यान्तिके गुरोः ॥ राज्ये निधाय तनयं, सनयं प्राव्रजत्स्वयम् ॥६॥ सर्वायुषा त्रीनतिगम्य सम्यक्, समासहस्रान् जय चक्रवर्त्ती ॥ तपोऽनिलैः कर्मघनानपास्य, प्राप्योत्तमं ज्ञानमवाप मुक्तिम् ॥ ७ ॥ इति श्रीजयचक्रिकथा ॥ ४३ ॥

मूलम्—दसण्णरज्जं मुइअं, चइत्ता णं मुणी चरे । दसण्णभद्दो निक्खंतो, सक्खं सक्केण चोइओ ४४।

व्याख्या—दशार्णो देशस्तद्राज्यं मुदितं प्रमोदवत् त्यक्त्वा 'णं' वाक्यालङ्कारे, मुनिश्चरेत् अचारीत् अप्रतिबद्धतया व्यहार्षीदित्यर्थः । दशार्णभद्रो निष्क्रान्तः, साक्षाच्छक्रेण चोदितोऽधिकसम्पद्दर्शनेन धर्मं प्रति प्रेरित इति । तत्कथा त्वेवम्–

श्रीमद्दशार्णविषये, दशार्णपुरपत्तने ॥ दशार्णभद्रो भद्राणा–माकरोऽभून्महीपतिः ॥ १ ॥ स राजहंसः शुद्धात्मा, चित्ताब्जेष्ववसत्सताम् ॥ उवास तस्य चित्ते तु, धर्म एव जिनोदितः ॥ २ ॥ जज्ञिरे तस्य शुद्धान्ते, राज्ञ्यः पञ्चश-तानि ताः ॥ यत्प्राप्तिचिन्तया मन्ये, न निद्रान्ति स्म निर्जराः ! ॥३॥ वार्द्धेर्वारीव तस्यासी–द्रक्षमाप्यासिक्ष्माचमूः ॥

१ सप्तशतानि–इति तु 'घ' संज्ञकपुस्तके ॥

ल्लंघे न तु मर्यादां, स गम्भीरोऽम्बुराशिवत् ॥ ४॥ [ इतश्च ] वराटविषये धान्य-पुरे धान्यभरैर्भृते ॥ महत्तरः शिवा कोऽपि, महत्तरसुतोऽभवत् ॥ ५ ॥ कान्ता तु तस्य कुलटा, गृहनाथे बहिर्गते ॥ सान्यासिकेन केनाऽपि, समं स्वच्छन्दमारमत् ॥ ६ ॥ पुरे तत्राऽन्यदाऽऽयातैः, प्रारब्धे नाटके नटैः ॥ रामावेषं दधद्रम्यं, ननर्त्तैको नटो युवा ॥ ७ ॥ दृश्मैकविज्ञा विज्ञाय, कथंचित्तं च पूरुषम् ॥ तत्रारज्यत साऽत्यंतं, धर्षिणी धर्मधर्षिणी ॥ ८ ॥ प्रतिबन्धो हि बेन्धक्या, वात्याया इव न क्वचित् ॥ यो युवा दृढदेहश्च, तस्याः स्यात्स तु वल्लभः ! ॥ ९ ॥ ततः सा पुंश्चली छन्नं, नटपेटकनायकम् ॥ इत्युवाच ह्रियं हित्वा, कामान्धानां हि का त्रपा ? ॥ १० ॥ एनमेव दधद्वेषं, रमते चेन्मया समम् ॥ तदा ददामि वः सारं, वस्त्रं किंचिन्मनोरमम् ॥ ११ ॥ नटाधीशोऽपि तद्वाक्यं, मुदितः प्रत्यपद्यत ॥ ते हि प्रायः कुशीलाः स्युः, किं पुनः स्त्रीभिरर्थिताः ! ॥ १२ ॥ संप्रत्यायात्वयं किन्तु, तव वेश्म क्व विद्यते ? ॥ इत्युक्ताऽथ नटेशेन, सा स्वसौधमदर्शयत् ॥ १३ ॥ गृहं गत्वा नटकृते, पायसं च पपाच सा ॥ स्त्रीवेषः सोऽपि तत्रागा-न्नटेशप्रेषितो नटः ॥ १४ ॥ आसितस्याऽशितुं तस्य, पुरः सा पुंश्चली मुदा ॥ स्थालजस्थापयद्यावत्, प्राज्यखण्डाज्यपायसम् ॥ १५ ॥ तावत्सांन्यासिकोऽभ्येत्य, द्वारमुद्घाटयेत्यवक् ॥ शनैस्तं नटमित्यूचे, ततः सा पांशुलाऽऽकुला ॥ १६ ॥ अस्मिंस्तिलापवरके, गत्वा त्वं तिष्ठ कोणके ॥ तयेत्युक्तः सोऽपि तत्र, प्रविश्य द्राग् न्यलीयत ॥ १७ ॥ तयाऽथोद्घाटिते द्वारे, स रजस्कोन्तराऽऽगतः ॥ किमिदं पायसापूर्णं, स्थालमस्तीत्युवाच ताम् ॥ १८ ॥ क्षुधितास्मीति भोक्ष्येऽह-मित्युक्ते मायया तया ॥ सोऽवादीदयि ! तिष्ठ त्व-महं भोक्ष्ये बुभुक्षितः ॥ १९ ॥ इत्युदित्वा बलाद्यावज्जारो भोक्तुमुपाविशत् ॥ द्वारं प्रकाशयेत्यूचे, तावदेत्य गृहाधिपः ॥ २० ॥ क्व यामीति ततः पृष्टा, जारेण कुलटाऽब्रवीत् ॥ तिलापवरके गत्वा, तिष्ठास्मिन्नातिदूरतः ॥ २१ ॥ कोणेऽस्य तिष्ठति व्यालः, कालः काल इवापरः ॥ त्वया तत्र न गन्तव्यं, ततो जीवितमिच्छता ॥ २२ ॥ ओमित्युक्त्वा ततः सोऽपि, तत्रापवरकेऽविशत् ॥ भूयस्तमिस्रमिश्रत्वा-त्तमिस्राभे दिवाऽपि हि ॥ २३ ॥ द्वारमुद्घाटयामास, ततस्त्वरितमित्वरी ॥ विवेश वेश्मनि ततो, गृहेशः सरलाशयः ॥ २४ ॥ क्षैरेयी किमियं स्थाले, क्षिप्तास्तीत्यब्रवीच्च ताम् ॥ उवाच पुंश्चली भुक्तिं, कुर्वेऽहमशनायिता ॥ २५ ॥ सोऽवदन्मम गन्तव्यं, कार्ये तद्भोक्ष्यते मया ॥ सा प्रोचेऽद्याष्टमी तस्या-दस्नातो भोक्ष्यसे कथम् ? ॥ २६ ॥ सोऽशंसत्स्नात एवाहं, स्नातायां त्वयि वल्लभे ॥ साऽलपन्न ह्यसौ धर्मो-ऽस्माकं तदिति मा कृथाः ॥ २७ ॥ वयं हि शैवास्तेषां च, न प्सानं स्नानमन्तरा ॥ तयेत्युक्तोऽपि स व्यक्तं, बलाद्भोक्तुं प्रचक्रमे ॥ २८ ॥ इतश्चाहं क्षुधाक्षामः, किं तिष्ठामीति चिन्तयन् ॥ नटः कराभ्यां संघृष्य, फूच्चकार तिलान्मुहुः ॥ २९ ॥ सांन्यासीकस्ततोऽध्यासी-दसौ फूत्कुरुते फणी ॥ तद्गृहेशेऽशनासक्ते, नश्याम्यहमलक्षितः ॥ ३० ॥ इति ध्यात्वाऽपवरका-न्निर्गत्य द्राग् ननाश सः ॥ समयोऽयमिति ध्यायं-स्ततोऽनेशन्नटोऽपि सः ॥ ३१ ॥ महत्तरसुतः प्रेक्ष्य, निर्यान्तौ तौ नरस्त्रियौ ॥ क्वावेतावित्यपृच्छत्तां, स्वच्छः स्वच्छन्दचारिणीम् ॥ ३२ ॥ तत उत्पन्नधीः प्रोचे, कुलटा कुटिलाशया ॥ अस्नातो मा त्वमश्नीया, इत्युक्तं प्राग्मया हि ते ॥ ३३ ॥ अस्मदावसथेऽजस्र-सेवया वासितौ मया ॥ इमावुमाहरौ नष्टा-वस्मादस्नानभोजनात् ! ॥ ३४ ॥ तदाकर्ण्य मया दुष्टु, कृतमित्यनुतापवान् ॥ प्रत्यायातः कथमिमा-वित्यूचे तां गृहाधिपः ॥ ३५ ॥ गच्छत्यसौ विदेशे चे-द्रमे स्वैरमहं तदा ॥ ध्यायन्तीति ततोऽवोच-त्स्वैरिणी पतिवैरिणी ॥ ३६ ॥ सोद्यमेनैव सन्याय-मर्जितैः प्रचुरैर्धनैः ॥ चेदर्चयसि चण्डीशौ, प्रत्यायातस्तदा हि तौ ॥ ३७ ॥ तत्प्रपद्य दशार्णेषु, महत्तरसुतो ययौ ॥ छेकोऽपि वंच्यते धर्म-छद्मना किं पुनः परः ? ॥ ३८ ॥ क्षेत्रे कस्यापि तत्रासौ, कुर्वन्कार्यमुपार्जयत् ॥ दश गद्याणकान्स्वर्णं, तच्चाल्पमिति नाऽतुपत् ॥ ३९ ॥ तथापि स प्रति गृहं, निवृत्तः स्वप्रियां स्मरन् ॥ मध्याह्ने क्वापि कान्तारे, विशश्राम तरोस्तले ॥४०॥ इतश्चापहृतो वक्र-शिक्षिताश्वेन पर्यटन् ॥ दशार्णभद्रभूपाल-स्तत्रागच्छत्तृषातुरः ॥ ४१ ॥ आतिथ्यार्हो महात्माय-मित्यन्तश्चिन्तयंस्ततः ॥ महत्तराङ्गजस्तस्मै, पयः पेयमढौकयत् ॥ ४२ ॥ नृपोऽपि पीत्वा तन्नीर-मुत्पर्याणं हयं व्यधात् ॥ क्षणं विश्रम्य कोऽसि त्व-मिति चापृच्छदध्वगम् ॥ ४३ ॥ स्ववृत्तान्तेऽथ तेनोक्ते, राजा दध्यौ कुशाग्रधीः ॥ प्रियास्य नूनमसती, तत्तया वञ्चितोऽस्त्ययम् ॥ ४४ ॥ परं धार्मिकतास्य, वीक्ष्य चिप्रीयते मनः ॥ चिकीर्षति सदेवार्चा-मसंद्वित्तमुपार्ज्य यः ॥ ४५ ॥ विदोपि सदपि द्रव्यं, व्ययन्ते व्यसनादिभिः ॥

---

१ असती ॥ २ असत्या ॥

१ अविद्यमानम् ॥

मुग्धोप्यसौ तु धर्माय, क्लिश्यतेऽर्जयितुं धनम् ॥ ४६ ॥ तद्धार्मिकस्य पुंसोऽस्य, कुर्वे कां प्रत्युपक्रियाम् ॥ तस्येति ध्यायतः सैन्य–मागादश्वपदानुगम् ॥ ४७ ॥ ततो नृपः सहादाय, नरं तमुपकारिणम् ॥ ययौ निजं पुरं तं च, सच्चक्रे भोजनादिना ॥ ४८ ॥ तदा चायुक्तपुरुषै–रिति व्यज्ञपि भूपतिः ॥ पुरोद्यानेऽद्य समव–सृतोऽस्ति चरमो जिनः ॥ ४९ ॥ तत्कर्णामृतमाकर्ण्यो–दञ्चद्रोमाञ्चकञ्चुकः ॥ नृपोऽनमज्जिनं मौलि–स्पृष्टभूस्त्यक्तविष्टरः ॥ ५० ॥ दत्त्वा दानं जीविकार्हं–मर्हदागमवादिनाम् ॥ भूभृन्मणी सहृदय–ग्रामणीरित्यचिन्तयत् ॥ ५१ ॥ तादृग्विवेकविकलो–ऽप्यसौ वैदेशिको नरः ॥ पुपूजयिषति स्वीय–देवांश्चेत्सर्वसम्पदा ॥ ५२ ॥ तदा समग्रसामग्री–मतामस्मादृशां विशाम् ॥ विवेकिनां विशेषेण, कर्त्तुमर्हाऽर्हणाऽर्हतः ॥ ५३ ॥ ध्यात्वेत्यादिशदुर्वीशो, द्विपाद्यधिकृतान्कृती ॥ कार्या विशेषात्सामग्री, प्रातर्नन्तुं जगद्गुरुम् ॥ ५४ ॥ विभाते वन्दितुं सार्वं, सामन्तामात्यनागराः ॥ श्रेष्ठां कुर्वन्तु सामग्री–मिति चाघोषयत् पुरे ॥ ५५ ॥ तृणगोमयभस्मादि–सम्मार्जनपवित्रितम् ॥ संसिक्तं चन्दनाम्भोभिः, पुष्पप्रकरचित्रितम् ॥ ५६ ॥ हृद्यं वन्दनमालाभिः, सदोलाभिरिव श्रियाम् ॥ धृतानङ्कानेकचन्द्र–मिव कुम्भैश्च राजतैः ॥ ५७ ॥ उदित्वाद्भमियाकाण्डे, धूपधूमैर्निरन्तरैः ॥ धृतचक्रधनुर्लक्ष–मिव माणिक्यतोरणैः ॥ ५८ ॥ अभितः शोभितं श्रेयो–हेतुभिः केतुकोटिभिः ॥ विमानवद्राजमानै–रञ्चितं चारुमञ्चकैः ॥ ५९ ॥ प्रारब्धस्वस्वकर्त्तव्यं, जल्लमल्लनटादिभिः ॥ स्वपुरं

१ अनङ्का अङ्करहिताः कलङ्करहिता इत्यर्थः ॥

स्वरिवाऽध्यक्षं, क्ष्मापोऽध्यक्षैरचीकरत् ॥ ६० ॥ [ पञ्चभिः कुलकम् ] प्रातश्च विधिना स्नात्वा, चन्दनालिप्तभूघनः ॥ अदूष्ये देवदूष्ये द्वे, दधद्भासुरभूषणः ॥ ६१ ॥ आतपत्रेण पूर्णेन्दु–पवित्रेण विराजितः ॥ चतुर्भिश्चामरैर्वीज्य–मानो डिण्डिरपाण्डुरैः ॥ ६२ ॥ केनाप्यवन्दि न यथा, वन्दे जिनमहं तथा ॥ ध्यायन्निति मुदाऽध्यास्त, महाराजो महागजम् ॥ ६३ ॥ [ त्रिभिर्विशेषकम् ] आरूढसिन्धुरा भूपा–बन्धुराश्च सहस्रशः ॥ सामन्ताः परिवव्रुस्तं, शक्रं सामानिका इव ॥ ६४ ॥ पादाभ्यां प्रेरितो राज–कुञ्जरेणाऽथ कुञ्जरः ॥ शनैः प्रववृते गन्तुं, भूमिभङ्गभयादिव ! ॥ ६५ ॥ सहस्रशस्तदाऽन्येऽपि, वारणा वैरिवारणाः ॥ चलाचलोपमाश्चेलु–र्मणिमण्डनमण्डिताः ॥ ६६ ॥ सहोदराः सप्तसप्ति–सप्तीनां तत्र सैसयः ॥ लक्षशः पुपुषुर्लक्ष्मीं, भूरिभूरिविभूषणाः ॥ ६७ ॥ आयुक्तहरयो हारि–श्रियस्तत्र सहस्रशः ॥ रथा दिद्युतिरे तिग्म–द्युतिस्यन्दनसोदराः ॥ ६८ ॥ नानाविधायुधभृतः, पत्तयोऽपविपत्तयः ॥ शिश्रियुः सुषमां वीर–कोटीरास्तत्र कोटिशः ॥ ६९ ॥ अध्यासितानि राज्ञीनां, पर्श्चशता पृथक् पृथक् ॥ रेजिरे यौप्ययानानि, सदेवीकविमानवत् ॥ ७० ॥ प्रक्वणत्किङ्किणीक्काण–मुखरीकृतदिग्मुखाः ॥ अभ्रंलिहा ध्वजा रेजुः, पञ्चवर्णाः सहस्रशः ॥ ७१ ॥ आतोद्यैर्लक्षशो भम्भा–भेरिप्रभृतिभिस्तदा ॥ युगपद्वादितैर्जज्ञे, शब्दाद्वैतमयं जगत् ॥ ७२ ॥ मुदा मङ्गलवाक्यानि, पेठुर्मङ्गलपाठकाः ॥ श्रवःसुधाश्रवागीति–रगायन् गायनास्तदा ॥ ७३ ॥ वारवध्वोऽप्सरःकल्पा, गायन्त्यो भगवद्गु-

१ सूर्याश्वानाम् ॥ २ अश्वाः ॥ ३ सप्तशत्या इति तु 'ध' संज्ञकपुस्तके ॥ ४ शिविका–पालखी–इति भाषा ॥

णान् ॥ नृत्यं चक्रुस्तदा हृद्यं, पुरो राज्ञः पदे पदे ॥ ७४ ॥ इत्थं महर्द्धिभिर्भव्य–जीवानां मोदयन्मनः ॥ सिञ्चन् सङ्गावपीयूषैः, सुकृतक्षोणिजन्मनः ॥ ७५ ॥ कल्पद्रुम इवात्यर्थं, ददानो दानमर्थिनाम् ॥ आत्मानं मानयन्माना–त्पदमुत्कृष्टसम्पदाम् ॥ ७६ ॥ परिच्छदेन पौरैश्च, महत्तरसुतेन च ॥ समं समवसरण–समीपं प्राप पार्थिवः ॥ ७७ ॥ [ त्रिभिर्विशेषकम् ] उत्तीर्याथ गजाद्राज–ककुदानि विसृज्य सः ॥ जिनं प्रदक्षिणीकृत्य, सतंत्रो विधिनाऽनमत् ॥ ७८ ॥ जिनाधीशं जनाधीशो, हर्षगद्गदया गिरा ॥ स्तोत्रैर्महार्थैः स्तुत्वा च, यथास्थानमुपाविशत् ॥ ७९ ॥ तदा चावधिना ज्ञात्वा, राज्ञस्तादृशमाशयम् ॥ इति दध्यौ हरिर्भक्ति–रहो राज्ञोऽस्य भूयसी ! ॥ ८० ॥ परमत्राभिमानस्तु, कर्त्तुं नामुष्य युज्यते ॥ भवेत्त्रिभुवनेनाऽपि, भक्तिः पूर्णा हि नाऽर्हताम् ! ॥ ८१ ॥ ध्यात्वेति हर्त्तुं तन्मानं, सम्पदुत्कर्षसम्भवम् ॥ प्रतिबोधयितुं तं च, समादिष्टो बिडौजसा ॥ ८२ ॥ चतुःषष्टिसहस्राणि, द्विपानैरावणामरः ॥ सितत्वोत्सत्वविजित–कैलासान् व्यकरोन्मुदा ॥ ८३ ॥ [ युग्मम् ] प्रत्येकं द्वादशयुतां, तेषु पञ्चशतीं मुखान् ॥ मुखं मुखं प्रति रदा–नष्टावष्टौ च निर्ममे ॥ ८४ ॥ प्रतिदन्तं पुष्करिणी–रष्टावष्टौ मनोरमाः ॥ तासु प्रत्येकमष्टाष्ट, पद्मान् लक्षच्छदान् व्यधात् ॥ ८५ ॥ दलेषु तेषु प्रत्येकं, द्वात्रिंशद्बद्धनाटकम् ॥ प्रत्यब्जकर्णिकं चक्रे, प्रासादं च चतुर्मुखम् ॥ ८६ ॥ पश्यन्नृत्यानि तान्युच्चै–र्महिषीभिर्युतोऽष्टभिः ॥ अध्यास्त तांश्च प्रासादा–न्सर्वानपि सुपर्वराट् ॥ ८७ ॥ "एवंच–"

१ जनान् ॥

मुह पणसय वारुत्तर [५१२] दन्ता चउरो सहस्स छण्णउआ [ ४०९६ ] बत्तीस सहस सगसय अडसट्ठी [३२७६८] होंति पुक्खरिणी ॥ ८८ ॥ पउमा दुलक्ख बासट्ठि सहस चोआल सयमिआ [ २६२१४४ ] जाण ॥ पासा इंदा ततुल्ल अग्गमहिसी तयट्ठगुणा [ २०९७१५२ ] ॥ ८९ ॥ दुसहस्स छसय इगवीस कोडि चउआल लक्ख कमलदला [ २६२१४४०००० ] ॥ नट्टा पुण दलतुल्ला एगेग गयस्स इइ संखा ॥ ९० ॥ तैर्गजैश्छादयन् व्योम, शरदभ्रैरिवा-मलैः ॥ आगात्पुरन्दरः क्षिप्र-मुपमार्वपुरन्दरम् ॥ ९१ ॥ जिनं प्रदक्षिणीचक्रे, हस्तिमल्लस्थितो हरिः ॥ ववन्दे च स्वकीयाङ्ग-रुचिन्यञ्चितभास्करः ! ॥ ९२ ॥ क्षोणीक्षिद्वीक्ष्य तल्लक्ष्मीं, दक्षधीरित्यचिन्तयत् ॥ मया तुच्छतयाऽकारि, सम्पद्दर्पो मुधैव हि ! ॥ ९३ ॥ इयं का नाम मे सम्प-दस्याऽऽसां सम्पदां पुरः ॥ खद्योतपोतोद्योतो हि, कियान् प्रद्योतनद्युताम् ? ॥ ९४ ॥ तन्नूनं तुच्छयाऽपि स्या-न्नीचानां सम्पदा मदः ॥ प्राप्य पङ्किलमप्यम्भो, भृशं नर्दन्ति दर्दुराः ! ॥ ९५ ॥ इयं च श्रीरनेनापि, लेभे धर्मप्रभावतः ॥ विना धर्मं हि सा चेत्स्या-त्सर्वेषां स्यात्तदा न किम् ? ॥ ९६ ॥ हित्वा विषादं तद्धर्मं, श्रयेहमपि निर्मलम् ॥ इत्थं कृते हि मानोऽपि, कृतार्थो मे भविष्यति ! ॥ ९७ ॥ ध्यात्वेति प्राञ्जलिर्भूमी-जानिर्जिनमदोऽवदत् ॥ भवोद्विग्नं विभो ! दीक्षा-दानेनानुगृहाण माम् ॥ ९८ ॥ इत्युक्त्वा कृतलोचं तं, पृथ्वीनाथं व्रतार्थिनम् ॥ स्वयं प्राव्राजयद्वीर-विभुर्विश्वैकवत्सलः ॥ ९९ ॥ तमनु प्राव्रजत्सद्यो, महत्तर-सुतोऽपि सः ॥ सङ्गः सत्पुरुषाणां हि, सर्वकल्याणकामधुक् ! ॥ १०० ॥ ततः प्रणम्य राजर्षि-मित्युवाच दिव-स्पतिः ॥ धन्यस्त्वं येन सपदि, संत्यक्ता सम्पदीदृशी ! ॥ १०१ ॥ प्राज्यमुत्सृज्य साम्राज्य-मुररीकुर्वता व्रतम् ॥ स-त्यसन्ध ! स्वसन्धाऽपि, नूनं सत्यापिता त्वया ! ॥ १०२ ॥ जिनार्चा हि द्रव्यपूजा, भावपूजा तु संयमः ॥ द्रव्यपू-जाकृतो भाव-पूजाकृद्याधिको मतः ॥ १०३ ॥ तत्त्वया जित एवाहं, भावस्तवविधायिना ॥ अन्या हि भूयसी शक्ति-रस्ति मे न पुनर्व्रते ॥ १०४ ॥ स्तुत्वेति तं राजमुनिं बिडौजा, जिनं प्रणम्य त्रिदिवं जगाम ॥ राजर्षिरप्युग्रतपो विधाय, कर्मक्षयं मुक्तिपुरीमियाय ॥ १०५ ॥ इति श्रीदशार्णभद्रराजर्षिकथा ॥ ४४ ॥

**मूलम्—नमी नमेहि अप्पाणं, सक्खं सक्केण चोइओ। चइऊण गेहं वइदेही, सामण्णे पज्जवट्ठिओ ४५**

व्याख्या—प्राग्वत् ॥ ४५ ॥

**मूलम्—करकंडु कलिंगेसु, पंचालेसु अ दुम्मुहो । नमिराया विदेहेसु, गंधारेसु अ नग्गई ॥ ४६ ॥**

व्याख्या—स्पष्टम् ॥ ४६ ॥

**मूलम्—एए नरिंदवसहा, निक्खंता जिणसासणे । पुत्ते रज्जे ठवेऊणं, सामण्णे पज्जुवट्ठिया ॥ ४७ ॥**

व्याख्या—एते नरेन्द्रवृषभा निष्क्रान्ताः प्रव्रजिता जिनशासने न त्वन्यत्र. निष्क्रम्य च श्रामण्ये पर्युपस्थिताः प्रोद्यता अभुवन्निति शेषः, एतेषां कथास्तु प्रागुक्ता इति न पुनरिहोच्यन्ते ॥ ४७ ॥

**मूलम्—सोवीररायवसहो, चइत्ताण मुणी चरे । उद्दायणो पव्वइओ, पत्तो गइमणुत्तरं ॥ ४८ ॥**

व्याख्या—सौवीरेषु राजवृषभस्तत्कालीननृपप्रधानत्वात् सौवीरराजवृषभः, त्यक्त्वा राज्यमिति शेषः, मुनिश्चरेत् अचारीत् मुनिचर्ययेति शेषः, 'उद्दायणोत्ति' उदायननामा प्रव्रजितः सन् चरित्वा च प्राप्तो गतिमनुत्तराम्, तत्कथा त्वेवम्—

अत्रैव भरतक्षेत्रे, सिन्धुसौवीरनीवृति ॥ सान्वर्थनामकं वीत-भयाभिधमभूत्पुरम् ॥ १ ॥ तत्रोदायननामाऽऽसी-त्सुकृतोदयरुन्नृपः ॥ राजितः सहजैः शौर्य-धैर्यौदार्यादिभिर्गुणैः ॥ २ ॥ वीतभयादिपुराणां, त्रिषष्ट्यग्रं शतत्रयम् ॥ सिन्धुसौवीरमुख्यांश्च, देशान्षोडश पालयन् ॥ ३ ॥ सेवितो दशभिर्वीरै-र्महासेनादिभिर्नृपैः ॥ स भूपालोऽलगा-त्कालं, श्रिया शक्र इवापरः ॥ ४ ॥ [ युग्मम् ] तस्य प्रभावती राज्ञी, जज्ञे चेटकराट्सुता ॥ बिभ्रती मानसे जैनं, धर्मं पतिमिवाऽनिशम् ॥ ५ ॥ तत्कुक्षिजो यौवराज्यं, प्राप्तस्तस्य महीपतेः ॥ नन्दनोऽभीचिनामाऽऽसी-त्केशी च भगिनीसुतः ॥ ६ ॥

इतश्च पुर्यां चम्पायां, स्वर्णकारो महाधनः ॥ कुमारनन्दीनामाऽभू-ल्ललनालोलमानसः ! ॥ ७ ॥ ददर्श कन्यकां यां यां, यत्र यत्र मनोहराम् ॥ निष्कपञ्चशतीं दत्त्वा, तां तां परिणिनाय सः ॥ ८ ॥ इत्थं पञ्चशतानि स्त्री-रुदूढोऽपि स नाऽतृपत् ॥ स्त्रीधनायुष्कभोज्येषु, प्रायोऽतृप्ता हि जन्तवः ! ॥ ९ ॥ एता मिलन्तु माऽन्येन, केनापीति विचि-न्त्य सः ॥ एकस्तम्भगृहे न्यस्य, बुभुजे ता दिवानिशम् ॥ १० ॥ इतश्च पञ्चशैलाख्य-द्वीपे वारिधिमध्यगे ॥ बभूव

व्यन्तरो विद्यु-न्मालिनामा महर्द्धिकः ॥ ११ ॥ स च हासाप्रहासाभ्या, स्वदेवीभ्या युतोऽन्यदा ॥ व्रजन् शक्राज्ञया नन्दी-श्वरे प्राच्योष्ट वर्त्मनि ॥ १२ ॥ ततश्चिन्तातुरे तस्य, कान्ते ते इति दध्यतुः॥ प्रलोभयामः स्त्रीलोलं, कश्चिद्यो नौ पतिर्भवेत् ॥ १३ ॥ इति ताभ्यां भ्रमन्तीभ्यां, चम्पायां स सुवर्णकृत् ॥ ददृशेऽधिगृहं ताभि-र्ललनाभिः समं ललन् ॥ १४ ॥ ततो योग्योऽयमस्माकं, नूनमित्यवधार्य ते ॥ तस्यादर्शयतां दिव्यं, स्वरूपं विश्वकार्मणम् ॥ १५ ॥ मोहितस्सोऽथ ते देव्यौ, के युवामिति पृष्टवान् ? ॥ सविलासं विलासिन्यौ, ततस्ते इत्यऽवोचताम् ॥ १६ ॥ आवां हासाप्रहासाहे, देव्यौ विद्धि महर्द्धिके ॥ चेन्नौ वाञ्छसि तत्पञ्च-शैलाख्यं द्वीपमापतेः ॥ १७ ॥ उक्त्वेति विद्युल्लेखाव-द्राक् तिरोहितयोस्तयोः ॥ दिशं तामेव स प्रेक्षा-मास शून्यमनाश्चिरम् ॥ १८ ॥ दध्यौ च योषितामासां, पञ्चशताऽपि किं मम ॥ विश्वं शून्यमिवाभाति, दृशाविव विना हि ते ! ॥ १९ ॥ तद्रूपं वीक्ष्य रत्नाभ-मासु काचमणीष्विव ॥ को नाम रमते, तस्मात्तदर्थं प्रयते द्रुतम् ॥ २० ॥ ध्यात्वेति गत्वा भूपाल-कुले दत्वा धनं घनम् ॥ डिण्डिमं वादयन्नुच्चैः, पूर्यामेवमघोषयत् ॥ २१ ॥ कुमारनन्दिनं पञ्च-शैले नयति यो द्रुतम् ॥ तस्मै नाविकवर्याय, द्रव्यकोटिं ददाति सः ॥ २२ ॥ तत्प्रपद्य मुदा कोऽपि, जरी जीवितनिःस्पृहः ॥ विधाप्य पोतं पाथेय-पाथोमुख्यैरपूरयत् ॥ २३ ॥ निजानामङ्गजानां च, वित्तकोटिं वितीर्य ताम् ॥ कुमारनन्दिना साक-मारोहद्वहनं स तत् ॥ २४ ॥ दिनैः कियद्भिस्तस्मिंश्च, पोते दूरं गतेऽम्बुधौ ॥ पुरः पश्यसि किं किञ्चि-दित्यूचे नन्दिनं जरी ॥ २५ ॥ श्यामं किमपि पश्यामी-त्युक्ते तेन जगौ जरन् ॥ वटोऽयं दृश्यते वार्द्धि-तटस्थाद्रिनितम्बजः ॥ २६ ॥ यास्यत्यवश्यमस्माधो, यानपात्रमिदं च नः ॥ ततस्तूर्णं त्वमुत्प्लुत्या-ऽमूढोऽस्मिन्विलगेस्तरौ ॥ २७ ॥ वसन्ति वसंतावस्मिन्, गिरौ भारण्डपक्षिणः ॥ ते च प्रातः पञ्चशैलं, व्रजन्ति चुंणिहेतवे ॥ २८ ॥ अंह्रयः स्युस्त्रयस्तेषां, ततस्त्वं मध्यमे क्रमे ॥ पटेन स्वं निबध्नीयाः, तस्य सुप्तस्य कस्यचित् ॥ २९ ॥ ततस्त्वां पञ्चशैलाख्य-द्वीपे नेष्यन्ति ते खगाः ॥ शक्ष्याम्यहं तु प्रवैया, ग्रहीतुं न हि तं वटम् ॥ ३० ॥ वटात्पुरो महावर्त्ते, पोतस्त्वेष पतिष्यति ॥ तत्रैव च मया सार्द्धं, विनाशमुपयास्यति ! ॥ ३१ ॥ अथ त्वमपि चेदग्रो, न्यग्रोधं न ग्रहीष्यसि ॥ तदा तूर्णं तमावर्त्ते, गते पोते मरिष्यसि ! ॥ ३२ ॥ एवं वृद्धे वदत्येव, वटाधो वहनं ययौ ॥ विलग्नः सोऽपि तत्र द्राक्, पञ्चशैलमगात्ततः ॥ ३३ ॥ तं चायातं भोक्तुमुत्कं, ते देव्याविस्त्यवोचताम् ॥ अनेन भूघनेन त्वं, न नौ भोगाय कल्पसे ! ॥ ३४ ॥ कर्णोऽपि लभते भूषाः, सोढच्छेदनवेदनः ॥ सोढदाहादिकष्टं च, स्वर्णमप्यश्नुते मणीन् ! ॥ ३५ ॥ तद्गत्वा स्वगृहं दत्वा, दीनादीनां निजं धनम् ॥ कृत्वा वह्निप्रवेशादि-कष्टं त्वमपि सत्वरम् ॥ ३६ ॥ द्वीपस्यास्य श्रियामासा-मावयोश्च पतिर्भव ॥ भूरिलाभाय दक्षैर्हि, किञ्चित्कष्टमपीष्यते ! ॥ ३७ ॥ [ युग्मम् ] अथ तत्र कथं यामी-त्युक्ते रक्तेन तेन ते ॥ चम्पापुर्यां निन्यतुस्तं, कलादं विकलं स्मरात् ! ॥ ३८ ॥ कथमागाः किञ्च चित्रं ?, तत्रेत्युक्तोऽथ नागरैः ॥ हा ! क्व हासाप्रहासे ते, इत्येव स्माह

१ रात्रौ ॥ २ चरितुम् ॥ ३ वृद्धः ॥

सोऽसकृत् ॥ ३९ ॥ इङ्गिनीमृत्युना मर्त्तु-मुद्यतं तं जडं ततः ॥ व्याजहारेति तन्मित्रं, श्रावको नागिलाह्वयः ॥ ४० ॥ भो ! मित्राऽमात्रधीपात्र !, नैतत्कापुरुषोचितम् ॥ युज्यते भवतः कर्त्तुं, सिंहस्येव तृणाशनम् ॥ ४१ ॥ किञ्चातितुच्छभोगार्थं, दुर्लभं मानुषं भवम् ॥ मा हार्षीर्घुसदां रत्न-मिव काचकृते कृतिन् ! ॥ ४२ ॥ अथ यद्यपि ते वाञ्छा, भोगेष्वेव तथापि हि ॥ धर्ममेवाचराभीष्ट-दायिनं सुरशाखिवत् ॥ ४३ ॥ मित्रोपदेशमप्येनं, मोहोन्मत्तोऽवमत्य सः ॥ आपादादाशिरोदेह-माच्छाद्य छागगोमयैः ॥ ४४ ॥ चिरं दारुवदग्निभ्यां, प्रदत्तेनाग्निना ज्वलन् ॥ देव्योस्तयोः स्मरन्मृत्वा, विद्युन्मालित्वमासदत् ॥ ४५ ॥ [ युग्मम् ] तमेवमिङ्गिनीमृत्या, मृतं वीक्ष्य विरक्तधीः ॥ अहो ! विमूढा भोगार्थं, क्लिश्यन्त इति चिन्तयन् ॥ ४६ ॥ प्रव्रज्य नागिलश्राद्धो, विपद्याऽभूत्सुरोऽच्युते ॥ ददर्शाऽवधिना तं च, वयस्यं पूर्वजन्मनः ॥ ४७ ॥ [ युग्मम् ] उपस्थितेऽन्यदा नन्दी-श्वरयात्रामहोत्सवे ॥ नश्यतोऽपि गले विद्यु-न्मालिनः पटहोऽपतत् ॥ ४८ ॥ अस्मत्कान्तेन वाद्योऽसौ, ध्रुवं तर्कि पलायसे ? ॥ इति हासाप्रहासाभ्यां, प्रोचे स व्यन्तरस्तदा ॥ ४९ ॥ ततस्तं वादयन् शक्र-पुरो नन्दीश्वरे गतः ॥ तत्रागतेन सोऽदर्शि, तेन श्राद्धसुधाभुजा ॥ ५० ॥ ततस्तं निकषा श्राद्ध-सुरः सोऽगाद्यथा यथा ॥ तत्तेजोऽसहमानोऽसौ, पलायत तथा तथा ॥ ५१ ॥ स्वतेजः सोऽथ संहृत्य, मां जानासीति तं जगौ ॥ सुरान् शक्रादिकान्को हि, न जानातीति सोप्यवक् ? ॥५२॥ ततः प्राग्भवरूपं स्वं, प्रदर्श्येत्यवदत्स तम् ॥ सोऽहं नागिलनामास्मि, पूर्वजन्मसुहृत्तव ॥ ५३ ॥ मृतं कुमृत्युना प्रेक्ष्य, तदा

त्वां भोगकाम्यया ॥ विरक्तः प्राव्रजमहं, ततः प्रापमिमां रमाम् ॥ ५४ ॥ निषिद्धोऽपि मया बाल-मृत्युना त्वं मृतोऽसि यत् ॥ प्रापः कष्टेन तेनापि, तदेवं देवदुर्गतिम् ॥ ५५ ॥ अथ धर्मं जिनप्रोक्तं, तदा चेदकरिष्यथाः ॥ महत्सदा त्वमप्येवं, स्वर्लक्ष्मीमवरिष्यथाः ॥ ५६ ॥ प्रबुद्धः स ततोऽवादी—त्किं गतस्यानुशोचनैः ? ॥ अथ किञ्चित्तदादिशाहि, येनाऽमुत्र शुभं लभे ॥ ५७ ॥ ऊचे श्राद्धसुरो वीर—जिनस्य प्रतिमां कुरु ॥ सुलभं बोधिरत्नं स्या—द्यथा तव भवान्तरे ॥ ५८ ॥ दौःस्थ्यदुर्गतिदुःखादि, नाऽर्हदर्चाकृतां भवेत् ॥ धर्मश्च जायते स्वर्गा—पवर्गसुखदायकः ! ॥ ५९ ॥ ततः क्षत्रियकुण्डाख्य—ग्रामे गत्वा स निर्जरः ॥ सालङ्कारं निर्विकारं, साराकारं गुणाकरम् ॥ ६० ॥ गार्हस्थ्येऽपि कृतोत्सर्गं, भावसाधुत्वसाधनात् ॥ श्रीवर्द्धमानतीर्थेशं, ददर्श प्रणनाम च ! ॥ ६१ ॥ [ युग्मम् ] प्राग् महाहिमवदद्रौ, ततो गत्वा स दैवतः ॥ गोशीर्षचन्दनं विश्वा—नन्दनामोदमाददे ॥ ६२ ॥ प्रतिरूपं प्रभोस्तत्र, यथादृष्टं विधाय सः ॥ सत्काष्ठसम्पुटे हारं, समुद्रक इव न्यधात् ॥ ६३ ॥ षण्मासीं यावदुत्पाता—दब्धौ भ्राम्यदितस्ततः ॥ सोऽथ बोहित्थमैक्षिष्ट, व्यग्रसांयात्रिकव्रजम् ॥ ६४ ॥ ततो हृत्वा तदुत्पातं, प्रत्यक्षीभूय स स्वयम् ॥ सांयात्रिकेभ्यो दत्वा त—द्दारुसम्पुटमित्यवक् ॥ ६५ ॥ इह देवाधिदेवस्य, मूर्त्तिर्न्यस्तास्ति चान्दनी ॥ तदादाय तदाह्वानं, भेदनीयमिदं मुदा ॥ ६६ ॥ युष्माभिरित्युदीर्योदो, देयं वीतभयप्रभोः ॥ कार्यं षाण्मासिकोत्पात—हर्त्तुः कार्यमियन्मम ॥ ६७ ॥ तन्मुदा प्रतिपन्नेषु, तेषु देवस्तिरोदधे ॥ पारावारस्य पारं च, वणिजस्तेऽपि लेभिरे ॥ ६८ ॥ पुरं वीतभयं प्राप्तास्तेऽथ तत्काष्ठसम्पुटम् ॥ राज्ञस्तापसभक्तस्यो—दायनस्योपनिन्यिरे ॥ ६९ ॥ तां च गीर्वाणवाणीं ते, विज्ञा राज्ञे व्यजिज्ञपन् ॥ श्रुत्वा तद्बहवो विप्र—सरजस्कादयोऽमिलन् ॥ ७० ॥ तेष्वेकेऽवादिषुर्वेद—वादी विश्वविधायकः ॥ देवाधिदेवो ब्रह्मा, तद्भेद्यमेतत्तदाह्वया ॥ ७१ ॥ इत्युक्त्वाऽऽख्याय तस्याख्यां, तत्र मुक्तः शितोऽपि तैः ॥ कृतीव विस्मृते शास्त्रे, कुठारः कुण्ठतां ययौ ॥ ७२ ॥ अन्ये जगुर्जगद्वृत्ते, युगान्ते यो निजोदरे ॥ हन्ति दैत्यांश्च विश्वारीन्, स हि विष्णुः सुरोत्तमः ७३ ॥ इत्यादाय तदाह्वानं, परशुर्वाहितोऽपि तैः ॥ जगाम मोघतामोघे, शैवलिन्या इवाऽनलः ॥७४॥ प्रोचुः परे तु यस्यांशौ, विधिविष्णू स एव हि ॥ वामदेवो देवदेवो, विश्वयोनिरयोनिजः ॥७५॥ अभिधामभिधायेति, तस्य तैः पर्शुणा हतम् ॥ तन्नाभिद्यत पारीन्द्र—पुच्छेनेव गिरेस्तटम् ॥ ७६ ॥ ततस्तेषु विहस्तेषु, विमृशत्सु भृशं मिथः ॥ तदाकर्ण्याययौ तत्र, महादेवी प्रभावती ॥ ७७ ॥ विधाय विधिवत्पूजां, तस्य काष्ठपुटस्य सा ॥ उज्जगार सुधोद्गारो—पमां रम्यामिमां गिरम् ॥ ७८ ॥ गतरागद्वेषमोहः, प्रातिहार्यैर्युतोऽष्टभिः ॥ देवाधिदेवः सर्वज्ञो, देयान्मे दर्शनं जिनः ॥ ७९ ॥ इत्युदीर्य तया स्पृष्ट—मात्रमप्याशु पर्शुना ॥ तद्दारु व्यकसद्भानु—भानुना नलिनं यथा ! ॥८०॥ अम्लानमाल्या सर्वाङ्ग—सुभगा सकला ततः ॥ मूर्त्तिराविरभूद्वीर—विभोर्लक्ष्मीरिवार्णवात् ॥ ८१ ॥ तां प्रेक्ष्य वचनातीतां, मुदं प्राप्ता प्रभावती ॥ अभ्यर्च्य भक्त्या सन्तुष्टा, तुष्टाव सरसैः स्तवैः ॥ ८२ ॥ जज्ञे प्रभावना जैन—शासनस्य ततो भृशम् ॥ आनुकूल्यं दधौ किञ्चि—न्नृपेऽपि जिनशासने ॥ ८३ ॥ अन्तरन्तःपुरं चैत्यं, विधाप्याथ धराधवः ॥ तत्र न्यवीविशत्सार्व—प्रतिमां तां महामहैः ॥ ८४ ॥ त्रिसन्ध्यं पूजयामास, विधिवत्तां प्रभावती ॥ तस्यां च नृत्यं कुर्वत्यां, नृपो वीणामवादयत् ॥ ८५ ॥ नृत्यन्त्याश्च शिरस्तस्या, न ददर्श नृपोऽन्यदा ॥ ततस्तस्य विहस्तस्य, हस्ततः कम्बिकाऽपतत् ॥ ८६ ॥ किं मया दुष्टु नृत्तं ? य—द्वीणावादनमत्यजः ॥ सकोपमिति राज्याऽथ, पृष्टो मौनं दधौ नृपः ॥ ८७ ॥ तयाऽथ साग्रहं पृष्टः, सद्भावं भूधवोऽब्रवीत् ॥ तन्निशम्य महासत्वा, महादेवीत्युवाच सा ॥ ८८ ॥ सेवितश्राद्धधर्माया—श्चिरं मे न हि मृत्युभीः ! ॥ तन्निमित्तादितोऽल्पायुः—सूचकात्किमु खिद्यसे ? ॥ ८९ ॥ तयाऽथ स्नातया देहि, वासांसीत्युदिताऽन्यदा ॥ आनिन्ये तानि रक्तानि, काचिच्चेटी ससम्भ्रमा ॥ ९० ॥ जिनं पूजयितुं चैत्यं, प्रविशन्त्या ममाऽधुना ॥ ददासि दासि ! वासांसि, किं रक्तानीति वादिनी ॥ ९१ ॥ जातकोपा ततो राज्ञी, दर्पणेन जघान ताम् ॥ तेन मर्मणि लग्नेन, सा भुजिष्या व्यपद्यत ॥ ९२ ॥ [ युग्मम् ] सानुतापा ततो राज्ञी, दध्यौ धिक् किं कृतं मया ॥ खंडितं हि व्रतं घाता—दस्या दास्या निरागसः ! ॥ ९३ ॥ विधायानशनं तस्मादेनदेनः क्षिपाम्यहम् ॥ व्रतभंगे हि जाते किं, जीवितेन विवेकिनाम् ? ॥ ९४ ॥ विमृश्येति खमाकूतं, राज्ञी राज्ञे व्यजिज्ञपत् ॥ भूपः साहानुमंस्येऽहं, नेदं त्वद्वशजीवितः ॥ ९५ ॥ देव्यूचे दुर्निमित्तेन, तेनाल्पायुष्कतां मम ॥

१ समुद्रस्य ॥ २ योगी ॥ ३ शैवलिन्या ओघे नद्याः प्रवाहे ॥ ४ व्याकुलेषु ॥

जानासि त्वं तदपि किं, स्वामिन् ! स्वार्थं निहंसि मे ? ॥ ९६ ॥ राजा जगाद देवत्वं, प्राप्ता त्वं धर्ममार्हतम् ॥ चेद्बोधयसि सम्यग्मा-मनुमन्ये तदा वदः ! ॥ ९७ ॥ तत्प्रतिश्रुत्य सा भक्तं, प्रत्याख्याय दिवं ययौ ॥ आराद्धश्राद्ध-धर्माणां, फलं प्रासङ्गिकं ह्यदः ! ॥ ९८ ॥ कुब्जा दासी देवदत्ता, तां जिनार्चां ततोऽभजत् ॥ स्वप्नादिना नृदेवं तं, देवीदेवोऽप्यबूबुधत् ॥ ९९ ॥ जहौ तापसभक्तत्वं, न तथाऽपि स पार्थिवः ॥ दृष्टिरागो हि दुर्मोचो, नीलीराग इवा-ङ्गिनाम् ॥ १०० ॥ ततस्तापसरूपेणो-पेत्य राज्ञे स निर्जरः ॥ ददावन्येद्युरमृत-फलानि सफलोद्यमः ॥ १०१ ॥ सन्ती-दृशानि भगवन् , ! फलानि क्वेति भूपतिः ? ॥ जातानन्दस्तदास्वादा-त्तं पप्रच्छ तपोधनम् ॥ १०२ ॥ सोऽवादी-न्नगरान्नाति-दूरस्थेऽस्माकमाश्रमे ॥ दुर्लभानि विशां सन्ति, फलानीमानि भूविभो ! ॥ १०३ ॥ ततोऽमूनि मनो-हृत्या-ऽऽस्वादयामीति चिन्तयन् ॥ विस्रब्धोऽगाद्विशामीशः, समं तेन तमाश्रमम् ॥ १०४ ॥ तं मायातापसास्तत्र, हन्तुमारेभिरेऽपरे ॥ अरे ! कस्त्वमिहायासी-रित्यूचाना मुधा क्रुधा ॥ १०५ ॥ ततो दुष्टा अमी नार्हाः, संस्तव-स्येति भावयन् ॥ निहन्तुमनुधावद्भ्य-स्तेभ्यो नश्यन् भयाकुलः ॥ १०६ ॥ स नृपः शरणीचक्रे, वीक्ष्य क्वापि वने मुनीन् ॥ त्रायध्वमेभ्यः पापेभ्यः, पूज्या ! मामीत्युदीरयन् ॥ १०७ ॥ [ युग्मम् ] मा भैषीरथ भूप ! त्व-मित्यूचु-र्मुनयोऽपि तम् ॥ ते तापसा न्यवर्त्तन्त, ह्रीणा इव ततो द्रुतम् ॥ १०८ ॥ अथ वीतभयं वीत-भयनाथं क्षमाधनाः ॥ वाक्यैः पैजूषपीयूषै-र्जैनं धर्ममुपादिशन् ॥ १०९ ॥ प्रतिबुद्धस्ततो राजा, श्राद्धधर्ममुपाददे ॥ प्रगेऽब्दगर्जिवन्मोघो, नोपायः खलु नाकिनाम् ! ॥ ११० ॥ प्रादुर्भूयाऽथ तं धर्मे, स्थिरीकृत्य स निर्जरः ॥ स्वर्जगाम ततो भूमा-नाऽऽ-स्थानस्थं समैक्षत ॥ १११ ॥ एवं श्रावकतां प्राप्तः, स महीधवपुङ्गवः ॥ अर्चाभिर्विविधाभिस्ता-मर्चामार्चयदन्वहम् ॥ ११२ ॥ इतश्च व्रतमादित्सु-र्गान्धारः श्रावकः कृती ॥ अवन्दत मुदा सर्वाः, सार्वकल्याणकावनीः ॥ ११३ ॥ वैताढ्ये शाश्वतीरर्चाः, सोऽथ श्राद्धो विवन्दिषुः ॥ आरराधोपवासस्थः, सम्यक्शासनदेवताम् ॥ ११४ ॥ तुष्टा देवी ततस्तस्मै, तानि बिम्बान्यदर्शयत् ॥ ददौ च सकलाभीष्ट-विधायि गुटिकाशतम् ॥ ११५ ॥ ततो निवृत्तः स श्राद्धः, श्रुत्वा दत्तां सुधाभुजा ॥ तामर्चां चान्दनीं नन्तु-मागाद्वीतभयं पुरम् ॥ ११६ ॥ तत्र तं श्रावकं जात-मान्द्यं दैवनि-योगतः ॥ स्वतातमिव सद्वृत्त्या, कुब्जा प्रतिचचार सा ॥ ११७ ॥ ततः क्रमाद्गतः स्वास्थ्यं, स कृतज्ञशिरोमणिः ॥ तस्यै ता गुलिकाः सर्वा, दत्वा दीक्षामुपाददे ॥ ११८ ॥ भूयासमनया स्वर्ण-वर्णाऽहं सुन्दराकृतिः ॥ ध्यात्वेति गुलिकामेकां, भुञ्जिष्या बुभुजेऽथ सा ॥ ११९ ॥ आयसीव कुशी सिद्ध-रसवेधेन सा द्रुतम् ॥ बभूव तत्प्रभावेण, चारुचामीकरच्छविः ॥ १२० ॥ सुवर्णगुलिकेत्याह्वां, प्राप्ता सा व्यमृशत्ततः ॥ भोक्तारमन्तरा फेल्गु, रूपं मे वनपुष्पवत् ॥ १२१ ॥ न चाहं कामये जातु, तातकल्पममुं नृपम् ॥ तत्प्रद्योतोऽस्तु मे भर्त्ता, नृपः स हि महर्द्धिकः ॥ १२२ ॥

१ कर्णामृतैः ॥ २ जिनकल्याणकभूमीः ॥ ३ दासी ॥ ४ लोहमयी इव ॥ ५ निकृष्ट असारमित्यर्थः ॥

एवं विचिन्त्य सा चेटी, गुटीमेकामभक्षयत् ॥ तत्स्वरूपं ततो गत्वा प्रद्योताय जगौ सुरी ॥ १२३ ॥ तामानेतुं ततो दूतं, प्रैषीत्प्रद्योतभूधवः ॥ सुवर्णगुलिका तं च, व्याजहारेति भामिनी ॥ १२४ ॥ मामाह्वातुमिहायातु, स राट् पश्या-मि तं यथा ॥ अदृष्टपूर्वमभ्येति, कामिनं न हि कामिनी ! ॥ १२५ ॥ इति तद्वचनं दूतो, गत्वा राज्ञे व्यजिज्ञपत् ॥ सोऽप्यारुह्यानलगिरिं, तत्र रात्रावुपागमत् ॥ १२६ ॥ तं च प्रेक्ष्यानुरक्ता सा, प्रोचे चेत्प्रतिमामिमाम् ॥ सहादत्से तदाऽऽयामि, त्वया सह महीपते ! ॥ १२७ ॥ इह विन्यासयोग्याऽन्या, नास्ति प्रतिकृतिस्ततः ॥ तामानयामि त्वचेतो, मानयामि मनस्विनि ! ॥ १२८ ॥ इत्युदीर्य ततोऽवन्ती-मवन्तीशोऽगमद्द्रुतम् ॥ तादृशीमपरां वीर-प्रतिमां च व्यधापयत् ॥ १२९ ॥ [ युग्मम् ] तां च सम्यक् प्रतिष्ठाप्य, कपिलेन महर्षिणा ॥ गन्धद्विपेन तेनाऽऽगा-द्भूयो वीतभये निशि ॥ १३० ॥ दन्तिनं तं बहिर्मुक्त्वा, तामर्चामुद्वहन्मुदा ॥ अपाकृत्य भियं तत्रा-ऽविशत्का कामिनां हि भीः ? ॥ १३१ ॥ तत्र तां प्रतिमां न्यस्य, देवदत्तार्चया समम् ॥ तां दासीं देवदत्ताह्वां, हृत्वा स स्वपुरीमगात् ॥ १३२ ॥ तद्गन्धेभः सविण्मूत्रं, तदा वीतभयेऽमुचत् ॥ तद्गन्धेन च तत्रत्या, गजाः सर्वे मदं जहुः ॥ १३३ ॥ गन्धः स च यतोऽभ्यागा-त्तां दिशं ते मुहुर्मुहुः ॥ उत्तब्धशुण्डा व्यात्तास्याः, स्तब्धकर्णा व्यलोकयन् ॥ १३४ ॥ अजानिव गजांस्तांश्च, वीक्ष्य वीतमदान्प्रगे ॥ अतिमात्रं महामात्राः, सम्भ्रान्तस्वान्ततां दधुः ॥ १३५ ॥ विमदास्ते द्विपाः सर्वे-ऽवन्तिमार्गदिशं विभो ! ॥ मुहुर्विलोकयन्तीति, तेऽथ राज्ञे व्यजिज्ञपन् ॥ १३६ ॥ श्रुत्वा मा ततस्तत्र, न्ययुं

कायुक्तपूरुषान् ॥ तेऽपि गत्वेभपादादि, वीक्ष्यागत्यैवमूचिरे ॥ १३७ ॥ इहाऽऽरूढोऽनलगिरिं, प्रद्योतो नूनमाययौ ॥ श्रूयते न हि गन्धेभ-स्तं विनाऽन्यस्य कस्यचित् ॥ १३८ ॥ जाङ्गुलीश्रवणान्नागा, इव नागा समेऽप्यमी ॥ तद्गन्धान्मदमत्याक्षु-र्मक्षु क्षोणीदिवस्पते ! ॥ १३९ ॥ "ततश्च"-स राजाऽऽगात्कुतोऽत्रेति ?, ध्यायिनं तायिनं भुवः ॥ सुवर्णगुलिका नास्ती-त्यूचिवान्कोऽपि कञ्चुकी ॥ १४० ॥ भूपस्ततोऽवदन्नून-मुपेत्य स नृपः स्वयम् ॥ तां चेटीमहरत्तर्हि, किं तया गतयाऽपि मे ! ॥ १४१ ॥ किन्तु पश्यत सा सार्वे-प्रतिमा विद्यते न वा ? ॥ सा हि मोहाहिदष्टस्य, जीवातुर्मम वर्त्तते ! ॥ १४२ ॥ गत्वाऽऽगतस्ततः कोऽपि, साऽर्चाऽस्तीति नृपं जगौ ॥ पश्यन्ति स्थूलमतयः, स्थानाशून्यत्वमेव हि ! ॥ १४३ ॥ पूजाकालेऽथ भूपालः, स्वयं चैत्यालयं गतः ॥ वीक्ष्याऽर्चां म्लानपुष्पां तां, विषण्णो ध्यातवानिति ! ॥ १४४ ॥ हृता मे प्रतिमा तस्याः, प्रतिरूपमिदं खलु ॥ म्लानत्वं लेभिरे तस्यां, पुष्पाणि न हि कर्हिचित् ! ॥ १४५ ॥ प्रद्योताय ततो दूतं, प्रजिघाय स भूधवः ॥ सोऽपि क्रमाद्गतोऽवन्ती-मवन्तीपतिमित्यवक् ॥ १४६ ॥ स्ववीर्यवह्निविध्वस्त-वैरिवर्गतृणव्रजः ॥ श्रीउदायनभूपस्त्वां, मन्मुखेन वदत्यदः ॥१४७॥ दस्युवत्प्रतिमादास्यौ, हरन् ह्रीणो न किं भवान् ? ॥ यद्वा दासीरतेर्युक्त-मेवादश्चेष्टितं तव ! ॥१४८॥ तत्र दास्याऽनया कार्यं, कार्याकार्यविदो न मे ॥ स्वमूर्त्तेः कुशलं कांक्ष-न्मूर्त्तिं तु प्रेषयेद्द्रुतम् ॥ १४९ ॥ तदर्चां देहि तां नो चे-दिहाऽऽयातमवेहि तम् ॥ कल्पान्तोद्भ्रान्तपाथोधि-कल्पानल्पबलान्वितम् ॥ १५० ॥ तन्निशम्याथदवखण्ड-प्रद्योतश्चण्डतां गतः ॥ साधु दूत ! वियातोऽसि, मदग्रेऽपीत्थमात्थ यत् ! ॥ १५१ ॥ अर्चाचेट्यौ रत्नभूते, हरतः का त्रपा मम ? ॥ कार्यं यथा तथा रत्न-मात्मसादिति न श्रुतम् ? ॥ १५२ ॥ न दास्ये प्रतिमां चेमां, न हि दातुमिहानयम् ॥ प्रतिमाशेषतां गन्ता, जिघृक्षुः प्रतिमां स तु ! ॥ १५३ ॥ तन्माऽऽयासीद्वृथायासी, जेता मां नागतोऽपि सः ॥ दन्तावलो वलिष्ठोऽपि, नाचलं चलयत्यहो ! ॥ १५४ ॥ वाक्यं तस्येति दूतोऽपि, गत्वा राज्ञे न्यवेदयत् ॥ तन्निशम्य नृपोऽप्युच्चै-र्यात्रानकमवीवदत् ॥ १५५ ॥ ससैन्यैर्बद्धमुकुटै-र्दशभिः सह राजभिः ॥ प्रत्यवन्ति प्रतस्थेऽथ, ज्येष्ठमासि स पार्थिवः ॥ १५६ ॥ सैन्यैर्भुवं तदुद्भूतै, रजोभिश्च दिशोऽखिलाः ॥ छादयन्मरुदेशोर्वी-मम्बुदुःस्थां क्रमादगात् ॥१५७॥ तस्यां विना जलं तृष्णा-कुलं तस्याऽखिलं बलम् ॥ आसन्नमृत्युवदभू-न्नष्टवाग् मीलितेक्षणम् ॥१५८॥ ततः प्रभावतीदेव-मुदायननृपोऽस्मरत् ॥ आगात्सुरोऽपि तत्कालं, कालक्षेपो न तादृशाम् ॥ १५९ ॥ पुष्कलैः पुष्करावर्त-पुष्करोपमपुष्करैः ॥ पूर्णानि विदधे त्रीणि, पुष्कराणि स निर्जरः ॥ १६० ॥ शीतलं सलिलं तेषु, पीत्वा स्वस्थमभूद्बलम् ॥ विनाऽन्नं जीव्यते जातु, न पुनर्जीवनं विना ॥१६१॥ सुरोऽथ भूपमापृच्छ्य, जगाम निजधाम सः ॥ क्रमादुज्जयिनीपुर्या-मुदायननृपोऽप्यगात् ॥ १६२ ॥ दूतेनाचीकथच्चैवं, क्ष्मापालुर्मालवाधिपम् ॥ किं मारितैर्जनैर्जन्यं, भवत्वन्योन्यमावयोः ! ॥१६३॥ रथी सादी निषादी वा, पदातिर्वा यथा भवान् ॥ युयुत्सते तथा वक्तु, यथाऽऽगच्छाम्यहं तथा ॥१६४॥

---

१ निर्लज्जः ॥ २ मरणता गमिष्यतीत्यर्थः ॥ ३ वृथाप्रयासी ॥ ४ गजः ॥ ५ यात्रापटहम् ॥

रथिनोरावयोरस्तु, युद्धमित्यथ सोऽब्रवीत् ॥ तच्च दूतमुखाज्ज्ञात्वा-ऽऽरुरोहोदायनो रथम् ॥ १६५ ॥ रथिना न मया जय्यो, राजायमिति चिन्तयन् ॥ सज्जितेनानलगिरि-द्विपेनागादवन्तिराट् ॥ १६६ ॥ तं च वीक्ष्य द्विपारूढमुदायननृपोऽब्रवीत् ॥ सन्धाभ्रष्टोऽसि रे पाप !, न हि मोक्षस्तथापि ते ! ॥ १६७ ॥ इत्युदीर्य नृपो धीमा-न्मण्डल्याऽभ्रमयद्रथम् ॥ तत्पृष्ठे भ्रमयामास, प्रद्योतोऽपि निजं गजम् ॥ १६८ ॥ स च गन्धद्विपो भ्राम्य-न्यं यं पादमुदक्षिपत् ॥ तं तं विव्याध निशितैः, शरैर्वीतभयेश्वरः ॥ १६९ ॥ विहस्ते हस्तिनि ततः, पतितेऽवन्तिभूधवम् ॥ द्विपादप्रपात्य बद्धा च, जग्राहोदायनो वली ॥ १७० ॥ अङ्कं तस्यालिके दासी-पतिरित्यक्षरैर्नृपः ॥ निधाय दिव्यामर्चां ता-मानेतुमगमन्मुदा ॥ १७१ ॥ प्रणम्याभ्यर्च्य तां याव-दादातुमुपचक्रमे ॥ तावन्नाचलदर्चा सा, दिव्यागीरिति चाभवत् ॥ १७२ ॥ पांशुवृष्ट्या स्थलं भावि, स्थाने वीतभयस्य यत् ॥ तन्नाऽऽयास्याम्यहं तत्र, राजन् ! मा खिद्यथास्ततः ॥ १७३ ॥ न्यवर्त्तताशु तच्छ्रुत्वा, स्वदेशं प्रति भूपतिः ॥ प्रावर्त्तताऽन्तरा वर्षा, तत्प्रयाणान्तरायकृत् ॥ १७४ ॥ स्कन्धावारं पुराकारं, ततस्तत्र न्यधान्नृपः ॥ धूलिवप्रान्विधाप्यास्थु-स्तद्रक्षायै नृपा दश ॥ १७५ ॥ तत्र च न्यवसन्नेके, वाणिज्याय वणिग्जनाः ॥ इति तच्छिविरं लोकै-रूचे दशपुरं पुरम् ॥ १७६ ॥ प्रद्योतं चात्मवद्भूपो-ऽचिन्तयद्भोजनादिना ॥ प्राप्ते पर्युषणापर्व-ण्युपवासं चकार च ॥ १७७ ॥ किमद्य भोक्ष्यसे राज-न्निति सूदो नृपाज्ञया ॥ तदा प्रद्योतमप्राक्षी-त्ततः सोऽपीत्यचिन्तयत् ॥ १७८ ॥ नूनं विषादिदानान्मा-मद्यासौ मारयिष्यति ॥ नोचेद-

कृतपूर्वोऽयं, प्रश्नोऽद्य क्रियते कथम् ? ॥ १७९ ॥ ध्यात्वेति सूदमित्यूचे, पृच्छसीदं कुतोऽद्य माम् ? ॥ सरसा रसवत्याऽऽगा–न्नित्यं हि समये स्वयम् ॥ १८० ॥ सूदोऽवादीदद्यपर्वा–द्धिकं तत्सपरिच्छदः ॥ उपोषितोऽस्ति नः स्वामी, पृच्छामि तदिदं तव ॥ १८१ ॥ अवन्तीशोऽवदत्साधु, पर्वेदं ज्ञापितं त्वया ॥ तन्ममाप्युपवासोऽद्य, पितरौ श्रावकौ हि मे ! ॥ १८२ ॥ तत्प्रद्योतवचः सूदो–ऽप्याख्यद्वीतभयप्रभोः ॥ राजाऽप्युवाच श्राद्धोऽसौ, यादृशो वेद्मि तादृशम् ॥ १८३ ॥ मायाश्राद्धेऽपि किन्त्वस्मिन्, बद्धे पर्युषणा मम ॥ न शुद्ध्यतीति प्रद्योत–मुदायननृपोऽमुचत् ॥ १८४ ॥ क्षमास्थाम्नोः क्षमस्तं चा–ऽक्षमयत्स क्षमाधवः ॥ पट्टबन्धं च भालाङ्कं, तस्याऽऽच्छादयितुं ददौ ॥ १८५ ॥ तदादिपट्टबन्धोऽपि, श्रीचिह्नं भूभुजामभूत् ॥ मौलिमेव हि ते मौलौ, पुरा तु दधिरेऽखिलाः ॥ १८६ ॥ तस्मै देशं च तं सत्य–सन्धः सिन्धुप्रभुर्ददौ ॥ अतीतासु च वर्षासु, पुरं वीतभयं ययौ ॥ १८७ ॥ वणिजस्ते तु तत्रैव, स्कन्धावारास्पदेऽवसन् ॥ पुरं दशपुराह्वं त–त्तैरेव च ततोऽभवत् ॥ १८८ ॥ अन्यदोदायननृपः, पौषधौकसि पौषधी ॥ धर्मजागरिकां जाग्र–द्रजन्यामित्यचिन्तयत् ॥ १८९ ॥ धन्यास्ते नगरग्रामा–करद्रोणमुखादयः ॥ पवित्रयति यान् श्रीमान्, वर्द्धमानो जगद्गुरुः ! ॥ १९० ॥ श्रुत्वा वीरविभोर्वाणीं, श्राद्धधर्मं श्रयन्ति ये ॥ दीक्षामाददते ये च, धन्यास्तेऽपि नृपादयः ! ॥ १९१ ॥ तच्चेत्पुनाति पादाभ्यां, पुरं वीतभयं विभुः ॥ तदा तदन्तिके दीक्षा–मादाय स्यामहं कृती ! ॥ १९२ ॥ तच्च तच्चिन्तितं ज्ञात्वा, चम्पातः प्रस्थितः प्रभुः ॥ एत्य वीतभयोद्याने, समवासरदन्यदा ॥ १९३ ॥ श्रुत्वाऽथ नाथमायात–मुदायननृपो मुदा ॥ गत्वा नत्वा देशनां च, निशम्येति व्यजिज्ञपत् ॥ १९४ ॥ राज्यमङ्गजसात्कृत्वा, व्रतार्थं युष्मदन्तिके ॥ यावदायाम्यहं ताव–त्पावनीयमिदं वनम् ॥ १९५ ॥ प्रतिबन्धं मा कृथास्त्व–मित्युक्तः स्वामिना ततः ॥ उदायनो जिनं नत्वा, गृहं गत्वेत्यचिन्तयत् ॥ १९६ ॥ सुतायाभीचये राज्यं, यदि दास्यामि साम्प्रतम् ॥ तदाऽसौ मूर्च्छितस्तत्र, भ्रमिष्यति भवे चिरम् ! ॥ १९७ ॥ आपातसुन्दरं राज्यं, विपाके चातिदारुणम् ॥ तदिदं न हि पुत्राय, दास्ये विषफलोपमम् ! ॥ १९८ ॥ ध्यात्वेति राज्ये विन्यस्य, जामेयं केशिनं नृपः ॥ जिनोपान्ते प्रवव्राज, केशिराजकृतोत्सवः ॥ १९९ ॥ तपोभिरुपवासाद्यै–र्मासान्तैरतिदुष्करैः ॥ शोषयन्कर्म कायं च, राजर्षिर्विजहार सः ॥ २०० ॥ अन्यदा तद्वपुष्यन्त–प्रान्ताहारैरभूद्रुजा ॥ भिषजो भेषजं तस्या, रुजोऽभिदधिरे दधि ॥२०१॥ उदायनमुनिप्रष्ठो, गोष्ठेषु व्यहरत्ततः ॥ दधिभिक्षा हि निर्दोषा, तेष्वेव सुलभा भवेत् ॥ २०२ ॥ पुरे वीतभयेऽन्येद्यु–रुदायनमुनिर्ययौ ॥ केशिभूपस्तदामात्यै–रित्यूचेऽहेतुवैरिभिः ॥ २०३ ॥ परिषहैर्जितो नूनं, मातुलस्तव भूपते ! ॥ राज्यलिप्सुरिहायासी–त्ततो मा तस्य विश्वसीः ! ॥ २०४ ॥ केश्यूचे राज्यनाथोऽसौ, राज्यं गृह्णातु किं मम ? ॥ धनेशे गृह्णति द्रव्यं, वणिक्पुत्रस्य किं रुषा ? ॥ २०५ ॥ अभ्युधुर्धीसखा धर्मः, क्षत्रियाणां न खल्वयम् ॥ प्रसह्य गृह्यते राज्यं, राजन्यैर्जनकादपि ! ॥ २०६ ॥ प्रतिदद्या न तद्राज्यं, प्रत्यदान्न हि कोऽपि तत् ॥ तैरित्युक्तस्ततः केशी, किं कार्यमिति पृष्टवान् ? ॥ २०७ ॥ दुष्टास्ते प्रोचुरेतस्मै, विषं दापय केनचित् ॥ व्युद्ग्राहितस्तैस्तदपि, प्रतिपेदे स मन्दधीः ! ॥ २०८ ॥ ततः कयाचिदाभीर्या, स भूपः सविषं दधि ॥ तस्मै दापितवांस्तस्मा–द्विषं चापाहरत्सुरी ॥ २०९ ॥ विषमिश्रदधिप्रासि–स्तव तन्मा ग्रहीस्ततः ॥ इत्यूचे च मुनिं देवी, ततः सोऽपि तदत्यजत् ! ॥ २१० ॥ विना दधि व्याधिवृद्धौ, भूयः साधुस्तदाददे ॥ तद्विषं च सुरी प्राग्व–ज्जहार व्याजहार च ॥ २११ ॥ तृतीयवारमप्येवं, देवताऽपाहरद्विषम् ॥ तद्भक्तिरागविवशा–ऽप्रमत्तपृष्ठतश्च सा ! ॥ २१२ ॥ अन्यदा च प्रमत्तायां, देव्यां सविषमेव सः ॥ बुभुजे दधि भाव्यं हि, भवत्येव यथातथा ! ॥ २१३ ॥ ततोऽङ्गव्याकुलतया, ज्ञात्वाऽऽत्मानं विपाशिनम् ॥ चकारानशनं साधुः, समतारससागरः ! ॥ २१४ ॥ त्रिंशद्दिनान्यनशनं, पालयित्वा समाहितः ॥ केवलज्ञानमासाद्य, स राजर्षिः शिवं ययौ ॥ २१५ ॥ तस्मिन्मुक्तिं गते तत्रा–ऽऽगता सा देवता पुनः ॥ ज्ञात्वा तथा मुनेरन्त–मन्तः कोपं दधौ भृशम् ! ॥ २१६ ॥ साऽथ वीतभये पांशु–वृष्टिं रुष्टा व्यधात्तथा ॥ यथा जज्ञे पुरस्थाने, स्थलं विपुलमुच्चकैः ! ॥ २१७ ॥ शय्यातरं मुनेस्तस्य, कुम्भकारं निरागसम् ॥ सा सुरी सिनपल्यां प्राग्, निन्ये हृत्वा ततः पुरात् ॥ २१८ ॥ तस्य नाम्ना कुम्भकार–कृतमित्याह्वयं पुरम् ॥ तत्र सा विदधे किं वा, दिव्यशक्तेर्न गोचरः ? ॥ २१९ ॥

इतश्च केशिनं राज्ये, यदा न्यास्थदुदायनः ॥ तदा तत्तनयोऽभीचि–रिति दूनो व्यचिन्तयत् ॥ २२० ॥ प्रभावतीकुक्षिभवे, सनये भक्तिमत्यपि ॥ सुते मयि सति क्ष्मापो, राज्यं यत्केशिने ददौ ॥ २२१ ॥ न हि चक्रे विवेकाऽर्हं,

पिता तन्मे विवेक्यपि ॥ भागिनेयो हि नाऽऽनेयो, धात्रीत्युक्तं जडैरपि ! ॥ २२२ ॥ हित्वाऽङ्गजं निजं राज्ये, जामेयं न्यस्यतः पितुः ॥ धारकः कोऽपि किं नासी-दुर्निमित्तमभून्न किम् ? ॥ २२३ ॥ प्रभुः पिता मे यदि वा, यथाकामं प्रवर्त्ततम् ॥ न तूदायनसूनोर्मे, युज्यते केशिसेवनम् ! ॥ २२४ ॥ इति दुःखाभिभूतोऽसौ, निर्गत्य स्वपुराद्रुतम् ॥ चम्पायां कूणिकं मातृ-ष्वसुः पुत्रमुपागमत् ॥ २२५ ॥ तत्रापि विपुलां लक्ष्मीं, प्रापोदायननन्दनः ॥ सुखं चास्थात्कूणिकेन, भूभुजा कृतगौरवः ॥ २२६ ॥ श्राद्धधर्मं च सुचिरं, यथावत्पर्यपालयत् ॥ न्यक्कारं तं स्मरं-स्तातं, वैरं तत्तु जहौ न सः ! ॥ २२७ ॥ प्रपाल्याब्दानि भूयांसि, श्राद्धधर्मं स भूपभूः ॥ पितृवैरमनालोच्या-ऽनशनं पाक्षिकं व्यधात् ॥ २२८ ॥ मृत्वा ततोऽभूदसुरेष्वभीचिः, पल्योपमायुस्त्रिदशो महर्द्धिः ॥ ततश्च्युतस्त्वेष महाविदेहे, कृत्वा भवं प्राप्स्यति सिद्धिसौधम् ॥ २२९ ॥ इति श्रीउदायनराजर्षिकथा ॥ ४८ ॥

मूलम्—तहेव कासीराया, सेओसच्चपरक्कमे । कामभोगे परिच्चज्ज, पहणे कम्ममहावणं ॥ ४९ ॥

व्याख्या—तथैव तेनैव प्रकारेण काशिराजः काशिमण्डलाधिपतिः श्रेयसि प्रशस्यतरे सत्ये संयमे पराक्रमः सामर्थ्यं यस्यासौ श्रेयःसत्यपराक्रमः, कामभोगान् परित्यज्य 'पहणेत्ति' प्रहतवान्, कर्मैव महावनमिवातिगहनतया कर्ममहावनम् ॥ ४९ ॥

मूलम्—तहेव विजयो राया, आणट्ठाकित्ति पव्वए । रज्जं तु गुणसमिद्धं, पयहित्तु महायसो ॥ ५० ॥

व्याख्या—तथैव विजयो राजा, आनष्टा सामस्त्येनापगता अकीर्त्तिरश्लाघा यस्य सः आनष्टाकीर्त्तिः, प्राकृतत्वात्तिलोपः 'पव्वएत्ति' प्राव्राजीत्, राज्यं गुणैः समृद्धं सम्पन्नं गुणसमृद्धं, प्राच्य'तु'शब्दस्यापिशब्दार्थस्य भिन्नक्रमस्येह योगाद्गुणसमृद्धमपि प्रहाय त्यक्त्वा महायशाः । इह च लघुवृत्तौ काशिराजो नंदनाह्वः सप्तमबलदेवो विजयश्च द्वितीयबलदेव इति व्याख्यातमस्ति, तत एतौ तावन्यौ वा यथागमं वाच्यौ, निर्णयाभावाच्चात्र नानयोः कथा लिखितेति ५०

मूलम्—तहेवुग्गं तवं किच्चा, अवक्खित्तेण चेअसा। महब्बलो रायरिसी, आदाय सिरसा सिरीं ॥५१॥

व्याख्या—तथैव उग्रं तपः कृत्वा अव्याक्षिप्तेन चेतसा महाबलो राजर्षिरादाय गृहीत्वा शिरसेव शिरसा शिरःप्रदानेनेव जीवितनिरपेक्षमित्यर्थः, श्रियं भावश्रियं संयमरूपां तृतीयभवे परिनिर्वृत इति शेषः । तत्कथा त्वियम्—

अत्रैव भरतक्षेत्रे, नगरे हस्तिनापुरे ॥ बलो नामाऽतुलबलो, वसुधाखण्डलोऽभवत् ॥ १ ॥ दीप्रप्रभावती तस्य, जज्ञे राज्ञी प्रभावती ॥ अन्यदा तु सुखं सुप्ता, सिंहं स्वप्ने ददर्श सा ॥२॥ तया मुदितया पृष्टः, स्वप्नार्थमथ पार्थिवः ॥ प्रोचे भावी तव सुतो-ऽस्मत्कुलाम्भोधिचन्द्रमाः ॥ ३ ॥ तन्निशम्य मुदं प्राप्ता, दधौ गर्भं प्रभावती ॥ काले च सुषुवे पुत्रं, पवित्रं पुण्यलक्षणैः ॥ ४ ॥ प्राज्यं जन्मोत्सवं कृत्वा, शिशोस्तस्याभिधां व्यधात् ॥ महाबल इति क्ष्मापः, प्रमोदाद्वैतमाश्रितः ॥ ५ ॥ लाल्यमानोऽथ धात्रीभि-र्वर्द्धमानः क्रमेण सः ॥ कलाकलापमापन्नः, पुण्यं तारुण्यमासदत् ॥ ६ ॥ अष्टौ राजाङ्गजाः श्रेष्ठा, दिशां श्रिय इवाऽऽहृताः ॥ एकेनाह्ना पितृभ्यां स, पर्यणायि महामहैः ॥ ७ ॥ वधूवराणां तेषां च, यौतकं तद्ददौ नृपः ॥ वंश्यादासप्तमात्कामं, दातुं भोक्तुं च यद्भवेत् ॥ ८ ॥ ताभिः सद्गुणकान्ताभिः, कान्ताभिः सममष्टभिः ॥ कामभोगान्यथाकामं, सोऽभुङ्क्त सततं ततः ॥ ९ ॥ साधुपञ्चशतीयुक्तः, वंश्यः श्रीविमलार्हतः ॥ आचार्यो धर्मघोषाख्यः, पुरे तत्राऽन्यदाऽऽययौ ॥ १० ॥ तं च श्रुत्वाऽऽगतं तुष्ट-मनाः श्रीमान्महाबलः ॥ गत्वा प्रणम्य शुश्राव, धर्मं कर्ममलोदकम् ॥ ११ ॥ ततोऽवाप्तः स वैराग्यं, मन्दभाग्यैः सुदुर्लभम् ॥ श्रीधर्मघोषसूरीन्द्रं, प्रणम्येति व्यजिज्ञपत् ॥ १२ ॥ धर्मोऽसौ रोचते मह्यं, जीवातुरिव रोगिणे ॥ तत्पृष्ट्वा पितरौ याव-दायामि व्रतहेतवे ॥ १३ ॥ तावत्पूज्यैरिह स्थेयं, मयि बाले कृपालुभिः ॥ सूरिरूचे युक्तमेत-त्प्रतिबन्धं तु मा कृथाः ! ॥ १४ ॥ [ युग्मम् ] सोऽथ गत्वा गृहं नत्वा, पितरावित्यवोचत ॥ धर्मघोषगुरोर्धर्मं, श्रुत्वाऽवापमहं मुदम् ॥१५॥ तत्पूज्यानुज्ञया दीक्षा-मादित्सेऽहं तदन्तिके ॥ सम्प्राप्यापि प्रवहणं, मग्नस्तिष्ठति कोऽम्बुधौ ? ॥ १६ ॥ मूर्च्छिता न्यपतत्पृथ्व्यां, तच्च श्रुत्वा प्रभावती ॥ कथंचिल्लब्धसंज्ञा तु, रुदतीति जगाद तम् ॥ १७ ॥ विश्लेषं नेश्महे सोढुं, पुत्र ! प्राणप्रियस्य ते ॥ तद्यावत्स्मो वयं ताव-त्तिष्ठ पश्चात्परिव्रजेः ॥ १८ ॥ कुमारः स्माह संयोगाः, सर्वेऽमी स्वप्नसन्निभाः ॥ नृणामायुश्च वातास्त-कुशाग्रजलचञ्चलम् ! ॥ १९ ॥ तन्न जानामि कः पूर्वं, पश्चाद्वा प्रेत्य यास्यति ॥ तदद्यैवानुजानीत, प्रव्रज्याग्रहणाय माम् ॥ २० ॥ देव्यूचे तव कायोऽयं, रम्योऽभिनवयौवनः ॥ भुक्त्वा तदङ्ग ! सौख्यानि, गृह्णीया वार्द्धके व्रतम् ॥ २१ ॥ कुमारः स्माह रोगाढ्ये-ऽशुचिपूर्णे मलाविले ॥ कारागार इवाऽसारे,

कायेऽस्मिन् किं सुखं नृणाम् ? ॥२२॥ किञ्च सत्यङ्गसामर्थ्ये, व्रतं युक्तं न वार्द्धके ॥ वार्द्धके ह्यक्षमतनोः, स्वाद्विनाऽपि मनो व्रतम् ॥ २३ ॥ प्रभावत्यभ्यधादाभिः, समग्रगुणधामभिः ॥ भोगान्सहाष्टभिः स्त्रीभि–र्भुङ्क्ष्व किं साम्प्रतं व्रतम् ? ॥ २४ ॥ महाबलोऽब्रवीत्क्लेश–साध्यैर्बालिशसेवितैः ॥ दुःखानुबन्धिभिर्भोगैः, किं मे विषफलोपमैः ? ॥ २५ ॥ किञ्च मोक्षप्रदं मर्त्य–जन्मभोगकृते कृती ॥ वराटिकाकृते रत्न–मिव को हारयत्यहो ! ॥ २६ ॥ अम्बाऽवादीदिदं जात !, द्रव्यजातं क्रमागतम् ॥ स्वैरं विलस पुण्यद्रोः, फलं ह्येतदुपस्थितम् ! ॥ २७ ॥ अभ्यधाद्भूपभूर्मात–र्गोत्रि-चोरामिराजसात् ॥ क्षणाद्भवति यद्वित्तं, प्रलोभयसि तेन किम् ? ॥ २८ ॥ किञ्च प्रेत्य सहाऽऽयाति, यो धर्मोऽनन्त-शर्मदः ॥ धनं तद्विपरीतं त–त्समतामश्नुवीत किम् ?॥ २९ ॥ राज्ञी जगौ वह्निशिखा–पानवद्दुष्करं व्रतम् ॥ कुमार ! सुकुमारस्त्वं, कथङ्कारं करिष्यसि ? ॥ ३० ॥ उवाच नृपभूः स्मित्वा, मातः ! किमिदमुच्यते ? ॥ नराणां कातराणां हि, व्रतं भवति दुष्करम् ! ॥ ३१ ॥ पालयन्ति प्रतिज्ञां स्वां, वीराः प्राणव्ययेऽपि ये ॥ परलोकार्थिनां तेषां, न हि तद्दुष्करं परम् ! ॥ ३२ ॥ विहाय मोहं तत्पूज्या, व्रताय विसृजन्तु माम् ॥ परोऽपि प्रेर्यते धर्मे–चिकीः किं पुनरा-त्मजः ? ॥ ३३ ॥ तं तत्वविज्ञं वैराग्या–त्प्रकम्पयितुमक्षमौ ॥ व्रतार्थमन्वमन्येतां, कथंचित्पितरौ ततः ॥ ३४ ॥ सोऽथ मूर्द्धाभिषिक्तेना–ऽभिषिक्तस्तीर्थवारिभिः ॥ ज्योत्स्नासधर्मभिर्लिप्त–गात्रः श्रीचन्दनद्रवैः ॥ ३५ ॥ अदूष्ये देव-दूष्ये द्वे, हयलालोपमे दधत् ॥ आपादादाशिरोन्यस्तै, राजन्माणिक्यमण्डनैः ॥ ३६ ॥ विस्मेरपुण्डरीकाभ–पुण्डरी-केण राजितः ॥ वेल्लत्कल्लोललोलाभ्यां, चामराभ्यां च वीजितः ॥ ३७ ॥ सहस्रेण नृणां वाह्या–मारूढः शिबिकां शुभाम् ॥ चतुरङ्गबलाढ्येना–ऽनुयातो बलभूभुजा ॥ ३८ ॥ भेरीप्रभृतितूर्याणां, नादैर्गर्ज्जानुकारिभिः ॥ अकाण्डता-ण्डवारम्भं, जनयन्केलिकेकिनाम् ॥ ३९ ॥ हित्वा रमामिमां दीक्षा–मादत्ते यौवनेऽपि यः ॥ सोऽयं कृतार्थ इत्युच्चैः, स्तूयमानोऽखिलैर्जनैः ॥ ४० ॥ ददानो दानमर्थिभ्य–श्चिन्तामणिरिवेहितम् ॥ प्राप पावितमाचार्यैः, पुरान्निर्गत्य तद्वनम् ॥ ४१ ॥ [ सप्तभिः कुलकम् ] याप्ययानादथोत्तीर्णं, पुरस्कृत्य महाबलम् ॥ गत्वान्तिके गुरोस्तस्य, पितरा-विदमोचताम् ॥ ४२ ॥ प्रियः पुत्रोऽयमस्माकं, विरक्तो युष्मदन्तिके ॥ दीक्षां गृह्णाति तच्छिष्य–भिक्षां वो दद्महे वयम् ! ॥ ४३ ॥ ओमित्युक्तेऽथ गुरुभि–रैशानीं दिशमाश्रितः ॥ सर्वान्मुमोचालङ्कारा–न्विकारानिव भूपभूः !॥४४॥ छिन्नमुक्तावलिमुक्ता–कल्पान्यश्रूणि मुञ्चती ॥ गृह्णती तानलङ्कारां–स्तदेत्यूचे प्रभावती ॥ ४५ ॥ जात ! त्वं जातुचि-न्माभू–र्धर्मकृत्ये प्रमद्वरः ॥ आराधयेर्गुरुवचः, सन्मंत्रमिव सर्वदा ! ॥ ४६ ॥ अथ नत्वा गुरून् राज्ञि, राज्ञीयुक्ते ततो गते ॥ लोचं चकार भूपाल–नन्दनः पञ्चमुष्टिकम् ॥ ४७ ॥ धर्मघोषगुरून् भक्त्या, नत्वा चेति व्यजिज्ञपत् ॥

---

१ हयलालामृदू दधत् । इति 'घ' संज्ञकपुस्तके ॥ हयलाला अश्वफेनः ॥ २ श्वेतच्छत्रेण ॥ ३ स्वय केशानुदखनत्, कुमारः पञ्च-मुष्टिभिः ॥ इति 'घ' पुस्तके पाठः ॥

दीक्षानावं दत्त पूज्या, मज्जतो मे भवार्णवे ! ॥ ४८ ॥ ततस्तैर्दीक्षितस्तीव्रं, स यती पालयन्व्रतम् ॥ चतुर्द्दशाऽपि पूर्वाणि, पपाठ प्राज्यधीबलः ॥ ४९ ॥ तप्यमानस्तपोऽत्युग्रं, द्वादशाब्दीं विहृत्य सः ॥ मासिकानशनेनाभू–त्स्वर्लोके पञ्चमे सुरः ॥ ५० ॥ तत्र चायं पूरयित्वा, सागराणि दशाऽऽयुषा ॥ च्यूत्वाऽभूद्वाणिजग्रामे, श्रेष्ठिश्रेष्ठः सुदर्शनः ॥ ५१ ॥ सम्यग्दर्शनपूतात्मा, द्योतयन् जिनशासनम् ॥ चिरं सुदर्शनस्तत्र, श्राद्धधर्ममपालयत् ॥ ५२ ॥ तत्र ग्रामेऽ-न्यदा स्वामी, श्रीवीरः समवासरत् ॥ केकीवाब्दं तमायातं, श्रुत्वा श्रेष्ठी जहर्ष सः ॥ ५३ ॥ ततो नत्वा जिनं श्रुत्वा, धर्मं स श्रेष्ठिपुङ्गवः ॥ विरक्तो व्रतमादत्त दत्तवित्तव्रजोऽर्थिषु ॥ ५४ ॥ तत्राऽपि स श्रेष्ठिमुनिः सदङ्ग–पूर्वाणि पूर्वा-ण्यखिलान्यधीत्य ॥ कर्मक्षयासादितकेवलर्द्धि–र्भेजे महानन्दमुदारकीर्त्तिः ॥ ५५ ॥ इति महाबलर्षिकथा ॥ "अयं पञ्चमाङ्गभणितो महाबल इहोक्तो, यदि चान्यः कोऽपि प्रतीतो भवति तदा स एवात्र वाच्यः" इति सप्तदशसूत्रार्थः ॥ ५१ ॥ इत्थं महापुरुषदृष्टान्तैर्ज्ञानपूर्वकक्रियाफलमुपदर्श्य साम्प्रतमुपदेष्टुमाह—

मूलम्— कहं धीरे अहेऊहिं, उम्मत्तोव महिं चरे । एए विसेसमादाय, सूरा दढपरक्कमा ॥ ५२ ॥

व्याख्या—कथं केन प्रकारेण धीरोऽहेतुभिः क्रियावाद्यादिकल्पितकुहेतुभिरुन्मत्त इव ग्रहगृहीत इव तत्वापल-पनेनालजालभाषितया महीं भुवं चरेद्भ्रमेन्नैव चरेदित्यर्थः । कुत इत्याह—यत एते पूर्वोक्ता भरतादयो विशेषं मिथ्या-

---

१ ज्ञात्वा– इति "घ" पुस्तके ॥

दर्शनेभ्यो जिनशासनस्य विशिष्टतामादाय गृहीत्वा सूरा दृढपराक्रमा एतदेवाश्रितवन्त इति शेषः ॥ ततस्त्वयाऽपि विशेषज्ञेन धीरेण च सता अत्रैव निश्चितं चेतो विधेयमिति ॥ ५२ ॥ किञ्च—

**मूलम्—अच्चंतनिआणखमा, सच्चा मे भासिआ वई। अतरिंसु तरंतेगे, तरिस्संति अणागया ॥ ५३ ॥**

व्याख्या—अत्यन्तं अतिशयेन निदाने कर्ममलशोधने क्षमा समर्था अत्यन्तनिदानक्षमा, सत्या मे मया भाषिता 'वइत्ति' वाक्, जिनशासनमेवाश्रयणीयमित्येवंरूपा । अनया वाक्कृतया अतार्षुस्तीर्णवन्तस्तरन्त्येकेऽपरे सम्प्रत्यपि तत्कालापेक्षया क्षेत्रान्तरापेक्षया वा इत्थमभिधानं । तरिष्यन्त्यनागता भाविनो भव्या भवार्णवमिति शेषः ॥ ५३ ॥ यतश्चैवमतः—

**मूलम्—कहं धीरे अहेऊहिं, अत्ताणं परिआवसे। सव्वसंगविणिमुक्के, सिद्धे हवइ नीरए त्ति बेमि ॥५४॥**

व्याख्या—कथं धीरोऽहेतुभिः क्रियादिवादिकल्पितकुयुक्तिभिरात्मानं स्वं पर्यावासयेत् ? कथमात्मानं अहेत्वावासं कुर्यान्नैव कुर्यादित्यर्थः । अथात्मनि कुहेतूनामवासने किं फलमित्याह—सर्वे सङ्गा द्रव्यतो द्रव्यस्वजनादयो भावतस्तु मिथ्यात्वरूपत्वादेत एव क्रियादिवादास्तैर्विनिर्मुक्तो विरहितः सर्वसङ्गविनिर्मुक्तः सन् सिद्धो भवति नीरजा निष्कर्मा । तदनेनाऽहेतुत्यागस्य सम्यग्ज्ञानहेतुत्वात् सिद्धत्वं फलमुक्तमिति सूत्रत्रयार्थः ॥ ५४ ॥ इत्थमनुशास्य विजहे क्षत्रिययतिः, संजयोपि चिरं विहृत्य प्राप्तकेवलः सिद्ध इति ब्रवीमीति प्राग्वत् ॥

## ॥ अथ एकोनविंशमध्ययनम् ॥

॥ अर्हम् ॥ उक्तमष्टादशमध्ययनं, अथैकोनविंशं मृगापुत्रीयमारभ्यते । अस्य चायं सम्बन्धः, इहानन्तराध्ययने भोगर्द्धित्याग उक्तः, स चाप्रतिकर्मतया प्रशस्यतरः स्यादितीहाऽप्रतिकर्मतोच्यते, इति सम्बन्धस्यास्येदमादि सूत्रम्—

**मूलम्—सुग्गीवे नयरे रम्मे, काणणुज्जाणसोहिए। राया बलभद्दत्ति, मिआ तस्सग्गमाहिसी ॥ १ ॥**

व्याख्या—सुग्रीवे सुग्रीवाह्वे, काननानि बृहद्वृक्षाश्रयाणि वनानि, उद्यानानि क्रीडावनानि, तैः शोभिते । राजा बलभद्र इति नाम्ना, मृगा नाम्नी तस्याग्रमहिषी प्रधानपत्नी ॥ १ ॥

**मूलम्—तेसिं पुत्ते बलसिरी, मिआपुत्तेत्ति विस्सुए। अम्मापिऊण दइए, जुवराया दमीसरे ॥ २ ॥**

व्याख्या—तयोः पुत्रो बलश्रीरिति मातापितृकृतनाम्ना, मृगापुत्र इति च लोके विश्रुतः, अम्बापित्रोर्दयितो वल्लभः, युवराजो, दमिनामुपशमवतामीश्वरो दमीश्वरः, भाविकालापेक्षं चैतद्विशेषणम् ॥ २ ॥

**मूलम्—नंदणे सो उ पासाए, कीलए सह इत्थिहिं। देवो दोगुंदगो चेव, निच्चं मुइअमाणसो ॥३॥**

व्याख्या—नन्दने लक्षणोपेततया समृद्धिजनके स मृगापुत्रः तु पूरणे प्रासादे, क्रीडति सह स्त्रीभिः । क इव ? दोगुन्दको देव इव, चःपूर्त्तौ । दोगुन्दकाश्च त्रायस्त्रिंशास्तथा च वृद्धाः—"त्रायस्त्रिंशा देवा नित्यं भोगपरायणा दोगुन्दका इति भण्यन्त इति" तथा नित्यं मुदितमानसः ॥ ३ ॥

**मूलम्—मणिरयणकुट्टिमतले, पासायालोअणे ठिओ। आलोएइ नयरस्स, चउक्कतिगचच्चरे ॥ ४ ॥**

व्याख्या—स चाऽन्यदा मणयः चन्द्रकान्ताद्याः, रत्नानि कर्केतनादीनि, तैरुपलक्षितं कुट्टिमतलं यत्र तत्तथा तस्मिन्, प्रासादालोकने प्रासादगवाक्षे स्थितः, आलोकते नगरस्य चतुष्कत्रिकचत्वराणीति सूत्रचतुष्कार्थः ॥४॥ ततो यदभूत्तदाह—

**मूलम्—अह तत्थ अइच्छंतं, पासई समणसंजयं। तवनिअमसंजमधरं, सीलड्ढं गुणआगरं ॥ ५ ॥**

व्याख्या—अथानन्तरं तत्र तेषु त्रिकादिषु अतिक्रामन्तं पश्यति श्रमणसंयतं, श्रमणः शाक्यादिरपि स्यादिति संयतग्रहणं, तपश्चानशनादि, नियमाश्च द्रव्याद्यभिग्रहाः, संयमश्च प्रतीतः, तान् धारयतीति तपोनियमसंयमधरस्तम् । अत एव शीलमष्टादशसहस्ररूपं तेनाढ्यं सीलाढ्यं, तत एव गुणानां ज्ञानादीनामाकर इव गुणाकरस्तम् ॥ ५ ॥

**मूलम्—तं देहइ मिआपुत्ते, दिट्ठीए अणिमिसाए उ। कहिं मन्नेरिसं रूवं, दिट्ठपुव्वं मए पुरा ॥६॥**

व्याख्या—तं मुनिं 'देहइत्ति' पश्यति मृगापुत्रो दृष्ट्या 'अणिमिसाए उत्ति' अनिमिषयैव, क्व मन्ये जाने ईदृशं रूपं दृष्टपूर्वं, पूर्वमपि अवलोकितं, मया पुरा पूर्वजन्मनि ॥ ६ ॥

मूलम्—साहुस्स दरिसणे तस्स, अज्झवसाणंमि सोहणे। मोहं गयस्स संतस्स, जाईसरणं समुप्पण्णं॥७॥

व्याख्या—'अज्झवसाणंमित्ति' अध्यवसाने परिणामे शोभने क्षायोपशमिकभाववर्त्तिनि, मोहं क्वेदं मया दृष्टमिति चिन्तात्मकं, गतस्य सतः, शेषं व्यक्तमेवमग्रेऽपि ज्ञेयम् ॥ ७ ॥

मूलम्—जाईसरणे समुप्पण्णे, मिआपुत्ते महिड्ढिए। सरइ पोराणिअं जाइं, सामण्णं च पुराकडं ॥ ८ ॥

व्याख्या—'पोराणिअंति' पौराणिकीं प्राक्तनीं जातिं जन्मेति सूत्रचतुष्कार्थः, ॥ ८ ॥ ततोऽसौ यच्चक्रे तदाह—

मूलम्—विसेएसु अरज्जंतो, रज्जंतो संजमंमि अ। अम्मापिअरं उवागम्म, इमं वयणमब्बवी ॥९॥

व्याख्या—विषयेष्वरज्यन् रागमकुर्वन्, रज्यन् संयमे, चः पुनरर्थे, अम्बापितरौ उपागम्येदं वचनमब्रवीत् ॥९॥ यदब्रवीत्तद्दर्शयति—

मूलम्—सुआणि मे पंच महव्वयाणि, नरएसु दुक्खं च तिरिक्खजोणिसु।
निव्विण्णकामोम्हि महण्णवाओ, अणुजाणह पव्वइस्सामि अम्मो! ॥ १० ॥

व्याख्या—श्रुतानि प्राग्भवे इति शेषः, मे मया पंच महाव्रतानि, तथा नरकेषु दुःखं, तिर्यग्योनिषु च, उपलक्षणत्वादेवमनुष्ययोश्च यद्दुःखं तदपि श्रुतं। ततः किमित्याह—निर्विण्णकामो निवृत्ताभिलाषोऽस्मि अहं, कुतो? महार्णव इव महार्णवः संसारस्तस्मात्, यतश्चैवमतोऽनुजानीत मा, प्रव्रजिष्यामि सकलदुःखापनोदाय व्रतं ग्रहीष्यामि, 'अम्मोत्ति' मातुरामंत्रणम् ॥ १० ॥ अथ कदाचित्पितरौ भोगैर्निमंत्रयत इति तन्निषेधार्थमाह—

मूलम्—अम्मताय! मए भोगा, भुत्ता विसफलोवमा। पच्छा कडुअविवागा, अणुबंधदुहावहा! ॥११॥

व्याख्या—'विसफलोवमत्ति' विषमिति विषवृक्षस्तत्फलोपमाः तदुपमत्वं भावयति—पश्चात् परिभोगानन्तरं कटुकविपाकाः, अनुबन्धदुःखावहा निरन्तरदुःखदायिनः ॥ ११ ॥ किञ्च—

मूलम्—इमं सरीरं अणिच्चं, असुइं असुइसंभवं। असासयावासमिणं, दुक्खकेसाण भायणं! ॥१२॥

व्याख्या—'असुइत्ति' अशुचि स्वभावादेवापावनं, अशुचिभ्यां शुक्रशोणिताभ्यां सम्भवमुत्पन्नं अशुचिसंभवं, अशाश्वत आवासः प्रक्रमाज्जीवस्यावस्थानं यस्मिंस्तत्तथा, 'इणंति' इदं, दुःखहेतवः क्लेशा दुःखक्लेशा ज्वरादयो रोगास्तेषां भाजनम् ॥ १२ ॥ यतश्चैवमतः—

मूलम्—असासए सरीरंमि, रइं नोवलभामहं। पच्छा पुरा य चइअव्वे, फेणबुब्बुअसन्निभे! ॥ १३ ॥

व्याख्या—अशाश्वते शरीरे रतिं नोपलभेऽहं, पश्चाद्भुक्तभोगावस्थायां, पुरा वा अभुक्तभोगतायां त्यक्तव्ये। अनेन च कुमारावस्थायां मृत्योरनागमो नास्ति इति सूचितं, अत एव फेनबुद्बुदसन्निभे ॥ १३ ॥

मूलम्—माणुसत्ते असारंमि, वाहिरोगाण आलए। जरामरणघत्थम्मि, खणं पि न रमामहं! ॥ १४ ॥

व्याख्या—वाहीत्यादि—व्याधयोऽगाधबाधाहेतवः कुष्ठाद्याः, रोगा ज्वरादयस्तेषामालये, जरामरणग्रस्ते ॥ १४ ॥

मूलम्—जम्मं दुक्खं जरा दुक्खं, रोगा य मरणाणि अ। अहो दुक्खो हु संसारो, जत्थ कीसंति जंतुणो ॥१५

व्याख्या—अहो! इति संबोधने, 'दुक्खो हुत्ति' दुःख एव दुःखहेतुरेव संसारो यत्र क्लिश्यन्ते जन्मादिदुःखैर्जन्तवः! १५

मूलम्—खित्तं वत्थुं हिरण्णं च, पुत्तदारं च बंधवे। चइत्ता ण इमं देहं, गंतव्वमवसस्स मे! ॥ १६॥

व्याख्या—'वत्थुंति' वास्तु गृहहट्टादि ॥ १६ ॥

मूलम्—जहा किंपागफलाणं, परिणामो न सुंदरो। एवं भुत्ताण भोगाणं, परिणामो न सुंदरो! ॥१७॥

व्याख्या—[ स्पष्टा ] एवं भोगादीनामसारतामुक्त्वा दृष्टान्तद्वयेन स्वाशयं प्रकाशयन्नाह ॥ १७ ॥

मूलम्—अद्धाणं जो महंतं तु, अपाहिज्जो पवज्जई। गच्छंतो सो दुही होइ, छुहातण्हाहिं पीडिए १८

व्याख्या—'अपाहिज्जोत्ति' अपाथेयः शम्बलरहितः प्रपद्यते स्वीकरोति ॥ १८ ॥

मूलम्—एवं धम्मं अकाऊणं, जो गच्छइ परं भवं। गच्छंतो सो दुही होइ, वाहिरोगेहिं पीडिए १९

व्याख्या—[ स्पष्टा ] उक्तव्यतिरेकमाह ॥ १९ ॥

मूलम्—अद्धाणं जो महंतं तु, सपाहिज्जो पवज्जइ । गच्छंतो सो सुही होइ, छुहातण्हाविवज्जिओ २०
एवं धम्मं पि काऊणं, जो गच्छइ परं भवं । गच्छंतो सो सुही होइ, अप्पकम्मे अवेअणे ॥ २१ ॥

व्याख्या—[ सुगमे नवरं ] 'अप्पकम्मेत्ति' अल्पपापकर्मा, 'अवेअणेत्ति' अल्पासातवेदनः ॥ २० ॥ २१ ॥

मूलम्—जहा गेहे पलित्तंमि, तस्स गेहस्स जो पहू । सारभंडाइं नीणेइ, असारं अवउज्झइ ॥२२॥

व्याख्या—सारभाण्डानि महामूल्यवस्त्रादीनि 'नीणेइत्ति' निष्काशयति 'अवउज्झइत्ति' अपोहति त्यजति ॥२२॥

मूलम्—एवं लोए पलित्तंमि, जराए मरणेण य । अप्पाणं तारइस्सामि, तुब्भेहिं अणुमन्निओ ॥२३॥

व्याख्या—'पलित्तंमित्ति' प्रदीप्त इव प्रदीप्ते व्याकुलीकृते आत्मानं सारभाण्डतुल्यं तारयिष्यामि, असारं तु कामभोगादि त्यक्ष्यामीति भाव इति सूत्रपञ्चदशकार्थः ॥ २३ ॥ एवं तेनोक्ते यत्पितरावूचतुस्तद्विंशत्या सूत्रैर्दर्शयति—

मूलम्—तं बिंतम्मापिअरो, सामण्णं पुत्त दुच्चरं । गुणाणं तु सहस्साइं, धारेअव्वाइं भिक्खुणो ॥२४॥

व्याख्या—तमिति मृगापुत्रं, गुणानां श्रामण्योपकारकाणां शीलाङ्गरूपाणां, तुः पूरणे ॥ २४ ॥

मूलम्—समया सव्वभूएसु, सत्तुमित्तेसु वा जगे । पाणाईवायविरई, जावज्जीवाइ दुक्करं ॥ २५ ॥

व्याख्या—समता रागद्वेषत्यागेन तुल्यता, सर्वभूतेषु शत्रुमित्रेषु वा जगति लोकेऽनेन सामायिकमुक्तं । तथा प्राणातिपातविरतिर्यावज्जीवं, दुष्करमेतदिति शेषः ॥ २५ ॥

मूलम्—निच्चकालप्पमत्तेणं, मुसावायविवज्जणं । भासिअव्वं हिअं सच्चं, निच्चाउत्तेण दुक्करं ॥ २६ ॥

व्याख्या—नित्यकालाप्रमत्तेन, नित्यायुक्तेन सदोपयुक्तेन, यत्रान्वयव्यतिरेकाभ्यामेकस्यैवार्थस्याभिधानं तत्स्पष्टार्थत्वाददुष्टमेवेति ॥ २६ ॥

मूलम्—दंतसोहणमाइस्स, अदिण्णस्स विवज्जणं । अणवज्जेसणिज्जस्स, गिण्हणा अवि दुक्करं ॥२७॥

व्याख्या—'दंतसोहणमाइस्सत्ति' मकारोऽलाक्षणिकः, अपेश्च गम्यत्वाद्दन्तशोधनादेरपि आस्तामन्यस्य, किञ्च दत्तस्याऽपि अनवद्यैषणीयस्यैव 'गिण्हणत्ति' ग्रहणम् ॥ २७ ॥

मूलम्—विरई अबंभचेरस्स, कामभोगरसण्णुणा । उग्गं महव्वयं बंभं, धारेअव्वं सुदुक्करं ॥ २८ ॥

व्याख्या—'कामभोगरसण्णुणत्ति' कामभोगरसज्ञेन त्वयेति शेषः, तदनभिज्ञस्य हि कदाचिद्विषयेच्छा न स्यादपीत्येवमुक्तम् ॥ २८ ॥

मूलम्—धणधन्नपेसवग्गेसु, परिग्गहविवज्जणा । सव्वारंभपरिच्चाओ, निम्ममत्तं सुदुक्करं ॥ २९ ॥

व्याख्या—धनधान्यप्रेष्यवर्गेषु परिग्रहः स्वीकारस्तद्विवर्जनं, सर्वे ये आरम्भा द्रव्योपार्जनार्थं व्यापारास्तत्परित्यागः२९

मूलम्—चउव्विहेवि आहारे, राईभोअणवज्जणा । संनिहिसंचओ चेव, वज्जेअव्वो सुदुक्करं ॥ ३० ॥

व्याख्या—संनिधिर्घृतादेरुचितकालातिक्रमेण स्थापनं, स चासौ सञ्चयश्च संनिधिसञ्चयः ॥ ३० ॥ एवं व्रतषट्कदुष्करतोक्ता, अथ परीषहदुष्करतोच्यते—

मूलम्—छुहा तण्हा य सी उण्हं, दंसमसगवेअणा । अक्कोसा दुक्ख सिज्जा य, तणफासा जल्लमेव य ३१
तालणा तज्जणा चेव, वहबंधपरीसहा । दुक्खं भिक्खायरिया, जायणा य अलाभया ॥ ३२ ॥

व्याख्या—ताडना कराद्यैर्हननं, तर्जना अङ्गुलिभ्रमणादिरूपा, वधो लकुटादिप्रहारः, बन्धो मयूरबन्धादिस्तावेव परीषहौ वधबन्धपरीषहौ, 'दुक्खंति' दुःखशब्दोऽसौ प्रत्येकं योज्यः, क्षुधादुःखमित्यादि 'जायणा यत्ति' चकारोऽनुक्तपरीषहसमुच्चयार्थः ॥ ३१ ॥ ३२ ॥

मूलम्—कावोआ जा इमा वित्ती, केसलोओ अ दारुणो । दुक्खं बंभवयं घोरं, धारेउं असहप्पणा ३३

व्याख्या—कपोताः पक्षिविशेषास्तेषामियं कापोती या इयं वृत्तिः, यथा हि ते नित्यं शंकिताः कणादिग्रहणे प्रवर्त्तन्ते, एवं मुनिरप्येषणादोषेभ्यः शङ्कमान एव भिक्षादौ प्रवर्त्तते । यच्चेह ब्रह्मचर्यस्य पुनर्दुर्धरत्वोक्तिस्तदस्यातिदुष्करताख्यापनार्थं(?) । 'असहप्पणत्ति' असहात्मना सता ॥ ३३ ॥ उपसंहारमाह—

मूलम्—सुहोइओ तुमं पुत्ता!, सुकुमालो अ सुमज्जिओ। नहुसि पहु तुमं पुत्ता!, सामण्णमणुपालिआ ३४

व्याख्या—सुखोचितः सुखयोग्यः, सुकुमारः, सुमज्जितः सुष्ठु अभ्यंगनादिपूर्वं मज्जितः स्नपितः, सकलालङ्कारोपलक्षणमेतत्। इह च सुमज्जितत्वं सुकुमारत्वे हेतुः, द्वयञ्चैतत् सुखोचितत्वे, ततो 'नहुसित्ति' नैवासि प्रभुः समर्थः, श्रामण्यमनुपालयितुम् ॥ ३४ ॥ असमर्थतामेव दृष्टान्तैः समर्थयन्नाह—

मूलम्—जावज्जीवमविस्सामो, गुणाणं तु महब्भरो। गरुओ लोहभारुव, जो पुत्तो! होइ दुव्वहो ॥३५॥

व्याख्या—अविश्रामो निरन्तरः गुणानां मुनिगुणानां, तुः पूरणे, महाभरो गुरुको लोहभार इव, यः पुत्र! भवति दुर्वहः, स वोढव्य इति शेषः ॥ ३५ ॥

मूलम्—आगासे गंगसोओव, पडिसोओव दुत्तरो। बाहाहिं सागरो चेव, तरिअव्वो गुणोदही ॥३६॥

व्याख्या—आकाशे गङ्गाश्रोतोवद्दुस्तर इति योज्यते, लोकरूढ्या चेदमुक्तं। तथा प्रतिश्रोतोवत्, कोऽर्थः? यथा प्रतीपजलप्रवाहः शेषनद्यादौ दुस्तरः, बाहुभ्यां 'सागरो चेवत्ति' सागरवच्च दुस्तरो यः, स तरितव्यो गुणाः ज्ञानाद्यास्त एवोदधिर्गुणोदधिः ॥ ३६ ॥

मूलम्—वालुआकवले चेव, निरस्साए उ संजमे। असिधारागमणं चेव, दुक्करं चरिउं तवो ॥ ३७ ॥

व्याख्या—'वालुआकवले चेवत्ति' चः पूरणे, इवेत्यौपम्ये, एवमुत्तरत्राऽपि। ततो वालुकाकवल इव निरास्वादो नीरसः विषयगृद्धानां वैरस्यहेतुत्वात् ॥ ३७ ॥

मूलम्—अहिवेगंतदिट्ठीए, चरित्ते पुत्त! दुच्चरे। जवा लोहमया चेव, चावेअव्वा सुदुक्करं! ॥ ३८ ॥

व्याख्या—अहिरिव एकोऽन्तो निश्चयो यस्याः सा तथा, सा चासौ दृष्टिश्चैकान्तदृष्टिस्तया, अहिपक्षे दृशाऽन्यत्र तु बुद्ध्योपलक्षितं चरित्रं, हेपुत्र! दुष्करं। अयं भावः—यथा नागोनन्याक्षिप्तया दृष्ट्योपलक्षितं स्यात्तथाऽनन्यव्याक्षिप्तया बुद्ध्योपलक्षितं चारित्रं दुष्करं, इन्द्रियमनसां दुर्जयत्वादिति। यवा लोहमया इव चर्वयितव्याः, लोहमययवचर्वणवद्दुष्करं चारित्रमिति भावः ॥ ३८ ॥

मूलम्—जहा अग्गिसिहा दित्ता, पाउं होइ सुदुक्करं। तह दुक्करं करेउं जे, तारुण्णे समणत्तणं ॥३९॥

व्याख्या—'अग्गिसिहत्ति' सुब्व्यत्ययादग्निशिखां दीप्तां पातुं भवति सुदुष्करं नृभिरिति शेषः, 'जे' इति पूर्त्तौ, सर्वत्र ॥ ३९ ॥

मूलम्—जहा दुःखं भरेउं जे, होइ वायस्स कुत्थलो। तहा दुक्करं करेउं जे, कीवेणं समणत्तणं ॥४०॥

व्याख्या—कोत्थल इह वस्त्रादिमयो ग्राह्यः, चर्ममयो हि सुखेनैव भ्रियते इति, क्लीबेन निःसत्त्वेन ॥ ४० ॥

मूलम्—जहा तुलाए तोलेउं, दुक्करं मंदरो गिरी। तहा निहुअनीसंकं, दुक्करं समणत्तणं ॥ ४१ ॥

व्याख्या—'निहुअनीसंकंति' निभृतं निश्चलं निश्शङ्कं शरीरनिरपेक्षं यथा स्यात्तथा ॥ ४१ ॥

मूलम्—जहा भुआहिं तरिउं, दुक्करं रयणायरो। तहा अणुवसंतेणं, दुक्करं दमसायरो ॥ ४२ ॥

व्याख्या—'अणुवसंतेणंति' अनुपशान्तेनोत्कटकषायेण दमसागर उपशमसमुद्रः, इह केवलस्योपशमस्य प्राधान्यात्समुद्रोपमा, पूर्वं तु गुणोदधिरित्यनेन सकलगुणानामिति न पौनरुक्त्यम् ॥ ४२ ॥ यतश्चैवं ततः—

मूलम्—भुंज माणुस्सए भोए, पंचलक्खणए तुमं। भुत्तभोगी तओ जाया!, पच्छा धम्मं चरिस्ससि ॥४३॥

व्याख्या—'पंचलक्खणएत्ति' पञ्चलक्षणकान् पञ्चस्वरूपान्, पश्चाद्वार्द्धके 'चरिस्ससित्ति' चरेरिति विंशतिसूत्रार्थः ॥ ४३ ॥ इति पितृभ्यामुक्ते मृगापुत्रो यदूचे तदेकत्रिंशता सूत्रैराह—

मूलम्—सो बिंतम्मापिअरो! एवमेअं जहाफुडं। इह लोए निप्पिवासस्स, नत्थि किंचि वि दुक्करं ॥४४॥

व्याख्या—स मृगापुत्रो ब्रूते, हे अम्बापितरौ! एवमिति यथोक्तं भवद्भ्यां तथैव, एतत् प्रव्रज्यादुष्करत्वं, यथा स्फुटं सत्यतामनतिक्रान्तं सत्यमित्यर्थः। तथापि इहलोके निष्पिपासस्य निःस्पृहस्य नास्ति किञ्चिदतिकष्टमप्यनुष्ठानं, अपिः सम्भावने, दुष्करम् ॥ ४४ ॥ निःस्पृहताहेतुमाह—

मूलम्—सारीरमाणसा चेव, वेअणाओ अणंतसो। मए सोढाओ भीमाओ, असइं दुक्खभयाणि अ ॥४५॥

व्याख्या—शारीरमानसश्चैव पूरणे, वेदना अनन्तशो मया सोढा भीमा रौद्राः, असकृत् वारं वारं दुःखानि दुःखोत्पादकानि भयानि राजविड्वरादिजनितानि दुःखभयानि, चः समुच्चये ॥ ४५ ॥

मूलम्—जरामरणकंतारे, चाउरंते भयागरे। मए सोढाणि भीमाणि, जम्माणि मरणाणि अ ॥४६॥

व्याख्या—जरामरणाभ्यामतिगहनतया कान्तारमिव जरामरणकान्तारं तस्मिन्, चतुरन्ते देवादिगतिचतुष्कावयवे भयाकरे भवे इति शेषः ॥ ४६ ॥ शारीरमानसो वेदना यत्र प्रौढाः सोढास्तदाह—

मूलम्—जहा इहं अगणी उण्हो, एत्तोऽणंतगुणा तहिं। नरएसु वेअणा उण्हा, अस्साया वेइआ मए ४७

व्याख्या—यथा इह मनुष्यलोकेऽग्निरुष्ण इतोऽस्मादग्नेरनन्तगुणाः 'तहिं' तेषु नरकेषु येष्वहमुत्पन्न इति भावः, तत्र च बादराग्नेरभावात् पृथिव्या एव तथाविधः स्पर्श इति ज्ञेयं। ताश्च वेदना उष्णानुभवात्मकत्वेन असाता दुःखरूपाः ॥ ४७ ॥

मूलम्—जहा इहं इमं सीअं, एत्तोऽणंतगुणा तहिं। नरएसु वेअणा सीआ, अस्साया वेइआ मए ॥४८॥

व्याख्या—यथेदमनुभूयमानं माघमासादिसम्भवमिह शीतम् ॥ ४८ ॥

मूलम्—कंदंतो कंदुकुंभीसु, उड्ढपाओ अहोसिरो। हुआसिणे जलंतम्मि, पक्कपुव्वो अणंतसो ॥ ४९ ॥

व्याख्या—क्रंदन् कंदुकुंभीषु लोहादिमयीषु पाकभाजनविशेषरूपासु हुताशने देवमायाकृते ॥ ४९ ॥

मूलम्—महादवग्गिसंकासे, मरुम्मि वइरवालुए। कलंबवालुआए अ, दड्ढपुव्वो अणंतसो ॥ ५० ॥

व्याख्या—महादवाग्निसंकाशे, अत्रान्यस्य तादृग्दाहकतरस्याभावादेवमुपमा प्रोक्ता, अन्यथा त्विहत्याग्नेरनंतगुण एव तत्रोष्णः पृथिव्यनुभाव इति। 'मरुम्मित्ति' तास्थ्यात्तद्व्यपदेशसम्भवादन्तर्भूतोपमार्थत्वाच्च मरौ मरुवालुकानिकरकल्पे, 'वइरवालुएत्ति' वज्रवालुकानदीपुलिने, कदम्बवालुकायां कदम्बवालुकानदीपुलिने च ॥ ५० ॥

मूलम्—रसंतो कंदुकुंभीसु, उड्ढं बद्धो अबंधवो। करवत्तकरकयाईहिं, छिन्नपुव्वो अणंतसो ॥ ५१ ॥

व्याख्या—रसन्नाक्रंदन् कंदुकुंभीषु क्षिप्तः, ऊर्ध्वं वृक्षशाखादौ बद्धो माऽयमितोऽनंक्षीदिति नियंत्रितः। क्रकचं करपत्रविशेष एव ॥ ५१ ॥

मूलम्—अइतिक्खकंटयाइण्णे, तुंगे सिंबलिपायवे। खेविअं पासबद्धेणं, कड्ढोकड्ढाहिं दुक्करं ॥ ५२ ॥

व्याख्या—'खेविअंति' खिन्नं खेदोऽनुभूतः मयेति गम्यते, 'कड्ढोकड्ढाहिंति' आकर्षणाप्रकर्षणैः परमाधार्मिककृतैः दुष्करं दुःसहमिदमिति शेषः ॥ ५२ ॥

मूलम्—महाजंतेसु उच्छू वा, आरसंतो सुभेरवं। पीलिओम्मि सकम्मेहिं, पावकम्मो अणंतसो ॥५३॥

व्याख्या—'उच्छूवत्ति' इक्षव इव, आरसन्नाक्रंदन् ॥ ५३ ॥

मूलम्—कूवंतो कोलसुणएहिं, सामेहिं सबलेहि अ। पाडिओ फालिओ छिन्नो, विप्फुरंतो अणेगसो ५४

व्याख्या—कूजन्नाक्रंदन्, कोलशुनकैः शूकरश्वानरूपधरैः श्यामैः शबलैश्च परमाधार्मिकविशेषैः पातितो भुवि, पाटितो जीर्णवस्त्रवत्, छिन्नो वृक्षवत्, विस्फुरन्नितस्ततश्चलन् ॥ ५४ ॥

मूलम्—असीहिं अयसीवण्णाहिं, भल्लीहिं पट्टिसेहि य। छिन्नो भिन्नो विभिन्नो अ, उववण्णो पावकम्मुणा ५५

व्याख्या—असिभिः कृपाणैः 'अयसिवण्णाहिंति' अतसीकुसुमवर्णैः कृष्णैरित्यर्थः, भल्लीभिः पट्टिशैश्च आयुधविशेषैः छिन्नो द्विधाकृतो, भिन्नो विदारितो, विभिन्नः सूक्ष्मखण्डीकृतः, अवतीर्णः पापकर्मणा हेतुना नरके इति शेषः ५५

मूलम्—अवसो लोहरहे जुत्तो, जलंते समिलाजुए। चोइओ तोत्तजोत्तेहिं, रोज्झो वा जह पाडिओ ॥५६॥

व्याख्या—लोहरथे लोहमये शकटे युक्तो योजितो ज्वलति दीप्यमाने कदाचित्ततो दाहभिया नश्येदपीत्याह—समिलायुते युगकीलिकायोक्त्रादियुक्ते 'चोइओत्ति' प्रेरितस्तोत्रयोक्त्रैः प्राजनकबन्धनविशेषैः 'रोज्झोवत्ति' रोज्झः पशुविशेषः, वा समुच्चये भिन्नक्रमश्च, यथेत्यौपम्ये, ततो रोझवत्पातितश्च लकुटादिपिट्टनेनेति शेषः ॥ ५६ ॥

मूलम्—हुआसणे जलंतम्मि, चिआसु महिसो विव। दड्ढो पक्को अ अवसो, पावकम्मेहिं पाविओ ॥५७॥

व्याख्या—हुताशने ज्वलति केत्याह–चितासु परमाधार्मिकरचितासु महिष इव दग्धो भस्मसात्कृतः, पक्को भडित्रीकृतः, अवशः पापकर्मभिः 'पाविओत्ति' प्राप्तो व्याप्तः, प्रापितो वा नरकम् ॥ ५७ ॥

मूलम्—बला संडासतुंडेहिं, लोहतुंडेहिं पक्खिहिं । विलुत्तो विलवंतोऽहं, ढंकगिद्धेहिंऽणंतसो ॥ ५८ ॥

व्याख्या—बलात् हठात् सन्दंशाकाराणि तुण्डानि येषां ते सन्दंशतुण्डास्तैः, तथा लोहतुण्डैः पक्षिभिर्ढङ्कगृध्रैरिति योगः, एते च वैक्रिया एव, तत्र तिरश्चामभावात् । विलुप्तो विविधं छिन्नो विलपन्नहमिति ॥ ५८ ॥

मूलम्—तण्हा किलंतो धावंतो, पत्तो वेअरणिं नइं । जलं पाहंति चिंतंतो, खुरधाराहिं विवाइओ ॥५९॥

व्याख्या—'विवाइओत्ति' व्यापादितः ॥ ५९ ॥

मूलम्—उण्हाभितत्तो संपत्तो, असिपत्तं महावणं । असिपत्तेहिं पडंतेहिं, छिन्नपुव्वो अणेगसो ॥ ६० ॥

व्याख्या—उष्णेन वज्रवालुकादितापेनाभितप्तः सम्प्राप्तोऽसयः खड्गास्तद्वच्छेदकानि पत्राणि यत्र तदसिपत्रम् ॥६०॥

मूलम्—मुग्गरेहिं मुसंढीहिं, सूलेहिं मुसलेहि अ । गयासं भग्गगत्तेहिं, पत्तं दुक्खमणंतसो ॥ ६१ ॥

व्याख्या—मुद्गरादिभिः शस्त्रविशेषैः गता नष्टा आशा परित्राणविषया यस्मिंस्तद्गताशं यथासादेवं 'भग्गगत्तेहिंति' भग्नगात्रेण सता मयेति शेषः ॥ ६१ ॥

मूलम्—खुरेहिं तिक्खधाराहिं, छुरिआहिं कप्पणीहि आकप्पीओ फालिओ छिन्नो, उक्कित्तो अ अणेगसो ६२

व्याख्या—अत्र कल्पितः कल्पनीभिः कर्त्तरीभिर्वस्त्रवत्खण्डितः, पाटित ऊर्ध्वं द्विधाकृतः, छिन्नस्तिर्यक् खण्डितश्च क्षुरिकाभिः, उत्कृत्तश्च त्वगऽपनयनेन क्षुरैरिति योगः ॥ ६२ ॥

मूलम्—पासेहिं कूडजालेहिं, मिओ वा अवसो अहं । वाहिओ बद्धरुद्धो अ, बहुसो चेव विवाइओ ॥६३॥

व्याख्या—'वाहिओत्ति' वञ्चितः बद्धो बन्धनै रुद्धो बहिःप्रचारनिवारणेन, 'विवाइओत्ति' विनाशितः ॥ ६३ ॥

मूलम्—गलेहिं मगरजालेहिं, मच्छो वा अवसो अहं । उल्लिओ फालिओ गहिओ, मारिओ अ अणंतसो ६४

व्याख्या—गलैर्वडिशैर्मकरैर्मकररूपैः परमाधार्मिकैर्जालैश्च तत्कृतैरनयोर्द्वन्द्वः, 'उल्लिओत्ति' उल्लिखितो गलैः पाटितो मकरैर्गृहीतश्च जालैर्मारितश्च सर्वैरपि ॥ ६४ ॥

मूलम्—विदंसएहिं जालेहिं, लिप्पाहिं सउणो विव । गहिओ लग्गो अ बद्धो अ, मारिओ अ अणंतसो ६५

व्याख्या—विशेषेण दशन्तीति विदंशकाः श्येनादयस्तैर्जालैस्तथाविधबन्धनैः, 'लिप्पाहिंति' लेपैर्वज्रलेपाद्यैः शकुन इव पक्षीव गृहीतो विदंशकैर्लग्नश्च लेपद्रव्यैः श्लिष्टः, बद्धो जालैर्मारितश्च सर्वैरपि ॥ ६५ ॥

मूलम्—कुहाडपरसुमाईहिं, वड्ढइहिं दुमो विव । कुट्टिओ फालिओ छिन्नो, तच्छिओ अ अणंतसो ६६॥

व्याख्या—अत्र कुट्टितः सूक्ष्मखण्डीकृतः, तक्षितश्च त्वगपनयनेन ॥ ६६ ॥

मूलम्—चवेडमुट्ठिमाईहिं, कुमारेहिं अयं विव । ताडिओ कुट्टिओ भिन्नो, चुण्णिओ अ अणंतसो ॥६७॥

व्याख्या—चपेटामुष्ट्यादिभिः कुमारैरयस्कारैरय इव लोहमिव घनादिभिरिति शेषः, ताडितः आहतः, कुट्टित इह छिन्नो, भिन्नः खण्डीकृतः, चूर्णितः सूक्ष्मीकृतः ॥ ६७ ॥

मूलम्—तत्ताइं तंबलोहाइं, तउआणि सीसगाणि अ । पाइओ कलकलंताइं, आरसंतो सुभेरवं ॥६८॥

व्याख्या—तप्तताम्रादीनि वैक्रियाणि पृथिव्यनुभावभूतानि वा, 'कलकलंताइंति' अतिक्वाथतः कलकलशब्दं कुर्वन्ति ॥ ६८ ॥

मूलम्—तुहं पिआइं मंसाइं, खंडाइं सोल्लगाणि अ । खाइओमि समंसाइं, अग्गिवण्णाइं णेगसो ॥ ६९ ॥

व्याख्या—तव प्रियाणि मांसानि ! खण्डानि खण्डरूपाणि, सोल्लकानि भडित्रीकृतानीति स्मरयित्वा खादितोऽस्मि, समांसानि मच्छरीरादेवोत्कृत्य ढौकितानि अग्निवर्णान्युष्णतया ॥ ६९ ॥

मूलम्—तुहं पिआ सुरा सीहू, मेरओ अ महूणि अ । पज्जिओमि जलंतीओ, वसाओ रुहिराणि अ ॥७०॥

व्याख्या—सुरादयो मद्यविशेषा इहापि स्मरयित्वेति शेषः, 'पज्जिओमित्ति' पायितोऽस्मि ॥ ७० ॥

मूलम्—निच्चं भीएण तत्थेणं, दुहिएणं वहिएण य। परमा दुहसंबद्धा, वेअणा वेइआ मए ॥ ७१ ॥

व्याख्या—भीतेनोत्पन्नभयेन, त्रस्तेनोद्विग्नेन दुःखितेन जातविविधदुःखजातेन, व्यथितेन कम्पमानसर्वाङ्गेन ॥७१॥

मूलम्—तिव्वचंडप्पगाढाओ, घोराओ अइदुस्सहा। महाभयाओ भीमाओ, नरएसुं वेइआ मए ॥७२॥

व्याख्या—तीव्रा अनुभागतोऽत एव चण्डा उत्कटाः, प्रगाढा गुरुस्थितिकास्तत एव घोरा रौद्रा अतिदुरसहाः, तत एव महाभयाः भीमाः श्रूयमाणा अपि भयप्रदाः, एकार्थिकानि वा एतानि, इह च वेदना इति प्रक्रमः ॥७२॥ कीदृशं पुनस्तासां तीव्रादिरूपत्वमित्याह—

मूलम्—जारिसा माणुसे लोए, ताया! दीसंति वेअणा। एत्तो अणंतगुणिआ, नरएसुं दुक्खवेअणा ७३

व्याख्या—[ सुगमा ] ॥ ७३ ॥ न च नरक एव दुःखवेदना मयाऽनुभूताः, किन्तु सर्वगतिष्वपि इत्येतदेवाह—

मूलम्—सव्वभवेसु असाया-वेअणा वेइआ मए। निमेसंतरमित्तंपि, जं साया नत्थि वेअणा ॥ ७४ ॥

व्याख्या—सर्वभवेष्वसातवेदना वेदिता मया, निमेषस्यान्तरं व्यवधानं यावता कालेनासौ भूत्वा पुनर्भवति तन्मात्रमपि कालं, यत्साता सुखरूपा नास्ति वेदना, वैषयिकसुखस्यापीर्ष्याद्यनेकदुःखानुविद्धत्वेन विपाककटुत्वेन चाऽसुखरूपत्वात्। सर्वस्य चास्य प्रकरणस्यायमाशयो येन मयैवं दुःखान्यनुभूतानि सोऽहं तत्त्वतः कथं सुखोचितः सुकुमारो वा? येन चेदृशो नरकादिव्यथाः सोढास्तस्य कथं दीक्षा दुष्करेत्यतोऽसौ मया ग्राह्यैवेत्येकत्रिंगत्सूत्रार्थः ॥ ७४ ॥ तत्रेत्थमुक्त्वा स्थिते—

मूलम्—तं बिंतऽम्मापिअरो, छंदेणं पुत्त! पव्वया। नवरं पुण सामण्णे, दुक्खं निप्पडिकम्मया ॥७५॥

व्याख्या—'छंदेणंति' छन्दसाऽभिप्रायेण यथारुचीत्यर्थः, पुत्र! प्रव्रज, नवरं केवलं, पुनर्विशेषणे, दुःखं दुःखहेतुर्निःप्रतिकर्मता रोगाद्युत्पत्तौ प्रतिकाराकरणमिति सूत्रार्थः ॥ ७५ ॥ इत्थं पितृभ्यामुक्ते मृगापुत्रः स्माह—

मूलम्—सो बिंतऽम्मापिअरो!, एवमेअं जहा फुडं। परिकम्मं को कुणइ, अरण्णे मिअपक्खिणं? ॥७६॥

व्याख्या—स ब्रूते हे अम्बापितरौ! एवमेतन्निःप्रतिकर्मताया यद्दुःखरूपत्वमुक्तं यथा स्फुटं सत्यं, परं परिभाव्यतामिदं, परिकर्म चिकित्सां कः करोत्यरण्ये मृगपक्षिणां? तेऽपि च जीवन्ति विचरन्ति च, ततः किमस्या दुःखरूपत्वमिति भावः ॥ ७६ ॥ ततश्च—

मूलम्—एगभूओ अरण्णे वा, जहा उ चरई मिगो। एवं धम्मं चरिस्सामि, संजमेण तवेण य ॥७७॥

व्याख्या—एकभूत एकत्वम्प्राप्तः 'अरण्णेवत्ति' अरण्येऽटव्यां, वा पूरणे, 'जहा उत्ति' यथैव चरति मृगः, एवं धर्मं चरिष्यामि संयमेन तपसा च हेतुभूतेन ॥ ७७ ॥

मूलम्—जया मिअस्स आयंको, महारण्णंमि जायई। अच्छंतं रुक्खमूलंमि, कोणं ताहे तिगिच्छई? ७८

व्याख्या—'अच्छंतं' तिष्ठन्तं वृक्षमूले, 'कोणंति' क एनं 'ताहेत्ति' तदा चिकित्सति, औषधाद्युपदेशेन नीरोगं करोति? न कश्चिदित्यर्थः। अन्यत्र हि कदाचित्कोऽपि दृष्ट्वा चिकित्सेदपीति महारण्ये इत्युक्तम् ॥ ७८ ॥

मूलम्—को वा से ओसहं देइ, को वा से पुच्छई सुहं। को वा से भत्तपाणं वा, आहरित्तु पणामए? ७९

व्याख्या—'भत्तपाणंति' भक्तं तृणादि, पानं जलादि, आहृत्य प्रणामयेदर्पयेत्? ॥ ७९ ॥ कथं तर्हि तस्य निर्वाहः? इत्याह—

मूलम्—जया य से सुही होइ, तया गच्छइ गोअरं। भत्तपाणस्स अट्ठाए, वल्लराणि सराणि अ ॥८०॥

व्याख्या—यदा च स सुखी भवति स्वत एव रोगाभावात्, तदा गच्छति गोरिव चरणं भ्रमणं गोचरस्तं, वल्लराणि गहनानि सरांसि च ॥ ८० ॥

मूलम्—खाइत्ता पाणिअं पाउं, वल्लरेहिं सरेहि अ। मिगचारिअं चरित्ता णं, गच्छई मिअचारियं ॥८१॥

व्याख्या—खादित्वा निजभक्ष्यमिति शेषः, पानीयं पीत्वा, वल्लरेषु सरस्सु च, मृगाणां चर्या इतश्च इतश्च उत्प्लवनात्मकं चरणं मृगचर्या तां चरित्वाऽऽसेव्य गच्छति, मृगाणां चर्या चेष्टा स्वातंत्र्योपवेशनादिका यस्यां सा मृगचर्या मृगाश्रयभूस्ताम् ॥ ८१ ॥ इत्थं दृष्टान्तमुक्त्वा गाथाद्वयेनोपसंहारमाह—

मूलम्—एवं समुट्ठिते भिक्खू , एवमेव अणेगगो। मिगचारिअं चरित्ता णं, उड्ढं पक्कमई दिसिं ॥८२॥

व्याख्या—एवं मृगवत्समुत्थितः संयमानुष्ठानम्प्रत्युद्यतस्तथाविधातङ्कोत्पत्तावपि न चिकित्साभिमुख इति भावः, एवमेव मृगवदेवानेकगो यथाऽसौ वृक्षतले नैकस्मिन्नेवास्ते, किन्तु कदाचित् क्वचिदेवं मुनिरप्यनियतस्थानतया, स चैवं मृगचर्यां निष्प्रतिकर्मत्वादिरूपां चरित्वाऽऽसेव्य अपगताशेषकर्मांश ऊर्द्ध्वं प्रक्रामति गच्छति दिशं, सर्वोपरिस्थानस्थो भवतीति भावः ॥ ८२ ॥ मृगचर्यामेव स्पष्टयति—

मूलम्—जहा मिए एग अणेगचारी, अणेगवासे धुवगोअरे अ ।
एवं मुणी गोअरिअं पविट्ठे, नो हीलए नोवि अ खिंसइज्जा ॥ ८३ ॥

व्याख्या—यथा मृग एकोऽद्वितीयोऽनेकचारी अनियतचारी, नैकत्रैव वासोऽवस्थानमस्येत्यनेकवासो ध्रुवगोचरश्च, सदा गोचरलब्धमेवाहारयतीति । एवं मृगवदेकत्वादिविशेषणविशिष्टो मुनिर्गोचर्यां प्रविष्टो नो हीलयेदवजानीयात्कदन्नादीति गम्यं, नापि च 'खिंसएज्जत्ति' निन्देदाहाराप्राप्तौ स्वं परं चेति सूत्राष्टकार्थः ॥ ८३ ॥ एवं मृगचर्यास्वरूपं निरूप्य यत्तेनोक्तं यच्च पितृभ्यां यथायं चक्रे तदाह—

मूलम्—मिगचारिअं चरिस्सामि, एवं पुत्ता ! जहासुहं। अम्मापिईहिंऽणुण्णाओ,जहाइ उवहिं तओ ८४

व्याख्या—मृगस्येव चर्या मृगचर्या ता निःप्रतिकर्मतादिकां चरिष्यामीति कुमारेणोक्ते पितृभ्यामभाणि, एवं हे पुत्र ! भवतो यथा रुचितं तथा सुखं ते भवत्विति शेषः । इत्थं ताभ्यामनुज्ञातो जहाति त्यजति उपधिं परिग्रहं ततः ॥ ८४ ॥ उक्तमेव अर्थं सविस्तरमाह—

मूलम्—मिअचारिअं चरिस्सामि,सवदुक्खविमोक्खणीं। तुब्भेहिं समणुण्णाओ,गच्छ पुत्त ! जहासुहं८५

व्याख्या—'गच्छ पुत्तत्ति' गच्छ पुत्र ! मृगचर्ययेति प्रक्रमः, यथासुखं सुखस्यानतिक्रमेणेति पित्रोर्वचः ॥ ८५ ॥

मूलम्—एवं स अम्मापिअरो, अणुमाणित्ता ण बहुविहं। ममत्तं छिंदई ताहे, महानागुव्व कंचुअं ॥८६॥

व्याख्या—एवं स मातापितरौ अनुमान्यानुज्ञाप्य ममत्वं छिनत्ति, 'ताहेत्ति' तदा, महानाग इव कञ्चुकं, यथाऽसौ चिरप्ररूढतयाऽतिजरठमपि कञ्चुकमपनयति तथाऽयमप्यनादिभवाभ्यस्तमपि ममत्वमिति ॥ ८६ ॥ अनेनान्तरोपधित्याग उक्तो, बहिरुपधित्यागमाह—

मूलम्—इड्ढी वित्तं च मित्ते अ, पुत्त दारं च नायओ। रेणुअंव पडे लग्गं, निद्धुणित्ता ण निग्गओ ८७

व्याख्या—ऋद्धिं करितुरगादिसम्पदं, 'नायओत्ति' ज्ञातीन् स्वजनान् 'निद्धुणित्तत्ति' 'निर्द्धूय त्यक्त्वा निर्गतो गृहान्निष्क्रान्तः प्रव्रजित इति सूत्रचतुष्कार्थः ॥ ८७ ॥ ततोऽसौ कीदृक् जातः, किञ्च तस्य फलमभूदित्याह—

मूलम्—पंचमहव्वयजुत्तो,पंचहिं समिओ तिगुत्तिगुत्तो अ। सब्भिंतरबाहिरए,तवोवहाणंमि उज्जुत्तो ॥८८॥

व्याख्या—'पंचहिंति' पंचभिः समितिभिरिति शेषः, 'सब्भिंतरेत्यादि' साभ्यन्तरे बाह्ये तपसि, उपधाने च श्रुतोपचाररूपे उद्युक्त उद्यमवान् ॥ ८८ ॥

मूलम्—निम्ममो निरहंकारो, निस्संगो चत्तगारवो । समो अ सवभूएसु, तसेसु थावरेसु अ ॥ ८९ ॥
लाभालाभे सुहे दुक्खे, जीविए मरणे तहा । समो निंदापसंसासु, समो माणावमाणओ ॥ ९० ॥
गारवेसु कसाएसु दंडसल्लभएसु अ । निअत्तो हाससोगाओ, अनिआणो अबंधणो ॥ ९१ ॥

व्याख्या—गौरवादीनि पदानि सुब्व्यत्ययात् पञ्चम्यन्ततया व्याख्येयानि, निवृत्त इति सर्वत्र योज्यं, अबन्धनो रागादिबन्धनरहितः ॥ ८९ ॥ ९० ॥ ९१ ॥

मूलम्—अणिस्सिओ इहं लोए,परलोए अणिस्सिओ। वासीचंदणकप्पो अ, असणे अणसणे तहा ॥९२॥

व्याख्या—अनिश्रित इह लोके परलोके च, नेह लोकार्थं परलोकार्थं वा तपोऽनुष्ठायीति भावः । 'वासीचंदणकप्पो अत्ति' सूचकत्वात्सूत्रस्य वासीचन्दनव्यापारकपुरुषयोः कल्पस्तुल्यो यः स तथा, तत्र वासी सूत्रधारस्य दारुतक्षणोपकरणं । अशने आहारे अनशने च तदभावे, कल्प इत्यत्रापि योज्यम् ॥ ९२ ॥

मूलम्—अप्पसत्थेहिं दारेहिं, सव्वओ पिहिआसवो। अज्झप्पज्झाणजोगेहिं, पसत्थदमसासणो ॥९३॥

व्याख्या—अप्रशस्तेभ्यो द्वारेभ्यः कर्मोपार्जनोपायेभ्यो हिंसादिभ्यः सर्वतः सर्वेभ्यो निवृत्त इति गम्यते, अत एव पिहिताश्रवो रुद्धकर्मागमः। कैरयमीदृशोऽभूदित्याह–'अज्झप्पेत्यादि' अध्यात्म आत्मनि ये ध्यानयोगाः शुभध्यानव्यापारास्तैः प्रशस्तो दम उपशमः शासनं च जिनागमात्मकं यस्य स तथेति ॥ ९३ ॥

मूलम्—एवं नाणेण चरणेणं, दंसणेण तवेण य। भावणाहि अ सुद्धाहिं, सम्मं भावित्तु अप्पयं ॥९४॥

व्याख्या—'भावणाहिंत्ति' भावनाभिर्व्रतविषयाभिरनित्यतादिभिर्वा, शुद्धाभिर्निर्निदानाभिः, सम्यग् भावयित्वा तन्मयतां नीत्वा आत्मानम् ॥ ९४ ॥

मूलम्—बहुआणि उ वासाणि, सामण्णमणुपालिआ। मासिएण उ भत्तेणं, सिद्धिं पत्तो अणुत्तरं ॥९५॥

व्याख्या—'मासिएण उत्ति' मासिकेन, तुः पूर्त्तौ, 'भत्तेणंति' भीमो भीमसेन इतिन्यायाद्भक्तेन भक्तप्रत्याख्यानेन मासिकानशनेनेत्यर्थः। इति सूत्राष्टकार्थः ॥ ९५ ॥ अथोपसंहारपूर्वमुपदिशन्नाह–

मूलम्—एवं करंति संबुद्धा, पंडिआ पविअक्खणा। विणिअट्टंति भोगेसु, मिआपुत्ते जहामिसी ॥९६॥

व्याख्या—'जहामिसीत्ति' यथा ऋषिर्मकारोऽलाक्षणिकः ॥ ९६ ॥ पुनः प्रकारान्तरेणोपदेशमाह–

मूलम्—महापभावस्स महाजसस्स, मिआइपुत्तस्स निसम्म भासिअं।
तवप्पहाणं चरिअं च उत्तमं, गइप्पहाणं च तिलोअविस्सुअं ॥ ९७ ॥

व्याख्या—'भासिअंति' भाषितं संसारस्य असारत्वदुःखप्रचुरत्वावेदकं, 'गइप्पहाणं चत्ति' प्रधानगतिं च सिद्धिरूपां त्रिलोकविश्रुताम् ॥ ९७ ॥

मूलम्—विआणिआ दुक्खविवद्धणं धणं, ममत्तवंधं च महब्भयावहं।
सुहावहं धम्मधुरं अणुत्तरं, धारेह निव्वाणगुणावहं महंति बेमि ॥ ९८ ॥

व्याख्या—धनं दुःखविवर्द्धनं विज्ञाय ममत्वबन्धं च स्वजनादिममत्वपाशं च महाभयावहं विज्ञाय, तत एव ऐहिकामुष्मिकभयावाप्तेः। सुखावहां धर्मधुरां अनुत्तरां धारयत। निर्वाणगुणा अनन्तज्ञानदर्शनाद्यास्तदावहां 'महंति' अमितमाहात्म्यतया महतीमिति सूत्रत्रयार्थः ॥ ९८ ॥ इति ब्रवीमीति प्राग्वत् ॥ *

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिशिष्यमहोपाध्यायश्रीमुनिविमलगणिभुजिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ एकोनविंशमध्ययनं सम्पूर्णम्॥१९॥

* अस्मिन्नध्ययने "देवलोगचुओसंतो, माणुसं भवमागओ। सन्निनाणसमुप्पन्ने, जाइं सरइ पुराणयं" इत्यष्टमसूत्रं क्वचिद्दृश्यते ॥

## ॥ अथ विंशतितममध्ययनम् ॥

॥ अर्हम् ॥ उक्तमेकोनविंशमध्ययनमथ महानिर्ग्रन्थीयाख्यं विंशतितमं प्रस्तूयते, अस्य चायमभिसम्बन्धोऽनन्तराध्ययने निःप्रतिकर्मतोक्ता, सा चानाथत्वभावनेनैव पालयितुं शक्येत्यनाथत्वमेवानेनाऽनेकविधमुच्यते। इत्यनेनसम्बन्धेनायातस्यास्येदमादिसूत्रम्—

मूलम्—सिद्धाण नमोकिच्चा, संजयाणं च भावओ। अत्थधम्मगइं तच्चं, अणुसिट्ठिं सुणेह मे ॥ १ ॥

व्याख्या—सिद्धेभ्यस्तीर्थकरादिसिद्धेभ्यो नमस्कृत्य, संयतेभ्यश्चाचार्योपाध्यायसाधुभ्यो भावतो भक्त्या। अर्थ्यो हितार्थिभिः प्रार्थ्यः स चासौ धर्मश्चार्थ्यधर्मस्तस्य गतिर्ज्ञानं यस्याः सा अर्थ्यधर्मगतिस्तां, 'तच्चंति' तथ्यामविपरीतार्थां, अनुशिष्टिं शिक्षां शृणुत, मे मया कथ्यमानामिति शेषः। स्थविरवचनमेतदिति सूत्रार्थः ॥ १ ॥ अथ धर्मकथानुयोगत्वादस्य धर्मकथाकथनद्वारा शिक्षामाह–

मूलम्—पभूअरयणो राया, सेणिओ मगहाहिवो। विहारजत्तं निज्जाओ, मंडिकुच्छिंसि चेइए ॥ २ ॥

व्याख्या—प्रभूतानि रत्नानि वैडूर्यादीनि सारगजाश्वादिरूपाणि वा यस्य स तथा, 'विहारजत्तंति' विहारयात्रया

क्रीडार्थमश्ववाहनिकादिरूपया निर्यातो निर्गतो नगराद्गतश्च मण्डितकुक्षिनाम्नि चैत्ये उद्याने ॥ २ ॥ तदुद्यानं कीदृशमित्याह—

मूलम्—नाणादुमलयाइण्णं, नाणापक्खिनिसेविअं । नाणाकुसुमसंछन्नं, उज्जाणं नंदणोवमं ॥ ३ ॥

तत्थ सो पासई साहुं, संजयं सुसमाहिअं । निसन्नं रुक्खमूलंमि, सुकुमालं सुहोइअं ॥ ४ ॥

व्याख्या—साधुः सर्वोऽपि शिष्ट उच्यते, ततः संयतमित्युक्तं । सोऽपि बहिःसंयमवान्निह्नवादिरपि स्यादिति सुसमाहितमित्युक्तम् ॥ ३ ॥ ४ ॥

मूलम्—तस्स रूवं तु पासित्ता, राइणो तंमि संजए। अच्चंतं परमो आसि, अउलो रूवविम्हओ ॥५॥

व्याख्या—'अच्चंतं परमोत्ति' अतिशयप्रधानः, अतुलोऽतिमहान्, रूपविषयो विस्मयो रूपविस्मयः ॥ ५ ॥ तमेव दर्शयति—

मूलम्—अहो वण्णो अहो रूवं, अहो अज्जस्स सोमया। अहो खंती अहो मुत्ती, अहो भोगे असंगया ॥ ६

व्याख्या—अहो ! आश्चर्ये वर्णो गौरत्वादिः, रूपमाकारः, आर्यस्य, मुनेः सौम्यता चन्द्रस्येव द्रष्टुरानन्ददायिता, असङ्गता निःस्पृहता ॥ ६ ॥

मूलम्—तस्स पाए उ वंदित्ता, काऊण य पयाहिणं। नाइदूरमणासन्ने, पंजली पडिपुच्छइ ॥ ७ ॥

व्याख्या—अत्र पादवन्दनानन्तरं प्रदक्षिणाभिधानं पूज्यानामालोक एव प्रणामः कार्यः इति ख्यापनार्थं, 'नाइदूरमणासन्नेत्ति' नातिदूरं न चासन्ने प्रदेशे स्थित इति शेषः ॥ ७ ॥

मूलम्—तरुणोऽसि अज्जो पव्वइओ,भोगकालंमि संजया। उवट्ठिओऽसि सामण्णे, एअमट्ठं सुणामि ता ८

व्याख्या—तरुणोऽसि आर्य ! अत एव भोगकाले प्रव्रजित इत्युच्यसे, उपस्थितश्च सर्वादरेण कृतोद्यमश्चासि श्रामण्ये, एतमर्थं निमित्तं येनार्थेन त्वमस्यामप्यवस्थायां प्रव्रजितः शृणोमि 'ताइति' तावत् पूर्वं, पश्चात्तु यत्त्वं भणिष्यसि तदपि श्रोष्यामीति भावः। इति सूत्रसप्तकावयवार्थः, शेषं तु सुगमत्वात् न व्याख्यातमेवमग्रेऽपि ज्ञेयम् ॥ ८ ॥ इत्थं राज्ञोक्ते मुनिराह—

मूलम्—अणाहोमि महाराय !, नाहो मज्झ न विज्जइ। अणुकंपगं सुहिं वावि, कंची नाभिसमेमहं ॥९॥

व्याख्या—अनाथोऽस्म्यहं महाराज ! किमिति ? यतो नाथो योगक्षेमकारी मम न विद्यते। तथा अनुकम्पकं अनुकंपाकरं 'सुहिंति' सुहृदं वा कंचिन्नाभिसमेमि नाभिसङ्गच्छामि न प्राप्नोमि, अहं इत्यनेनार्थेन तारुण्येऽपि प्रव्रजित इति भावः ॥ ९ ॥ एवं मुनिनोक्ते—

मूलम्—तओ सो पहसिओ राया,सेणिओ मगहाहिवो। एवं ते इड्ढिमंतस्स,कहं नाहो न विज्जइ ? ॥१०॥

व्याख्या—एवं दृश्यमानप्रकारेण ऋद्धिमतो विस्मापकवर्णादिसम्पत्तिमतः कथं नाथो न विद्यते ? वर्त्तमाननिर्देशः सर्वत्र तत्कालापेक्षया ज्ञेयः ॥ १० ॥ यदि चानाथतैव व्रताङ्गीकारहेतुस्तर्हि—

मूलम्—होमि नाहो भयंताणं, भोगे भुंजाहि संजया !। मित्तनाइपरिवुडो, माणुस्सं खु सुदुल्लहं ॥११॥

व्याख्या—भवामि नाथो भदंतानां, मयि च नाथे सति मित्राणि ज्ञातयो भोगाश्च सुलभा एवेत्याशयेनाह—भोगे इत्यादीति ॥ ११ ॥ मुनिराह—

मूलम्—अप्पणावि अणाहोऽसि, सेणिआ ! मगहाहिवा !।
अप्पणा अणाहो संतो, कहं मे नाहो भविस्ससि ? ॥ १२ ॥

व्याख्या—[ सुगमैव ] ॥ १२ ॥ एवं मुनिनोक्ते—

मूलम्—एवं वुत्तो नरिंदो सो, सुसंभंतो सुविम्हिओ। वयणं अस्सुअपुव्वं, साहुणा विम्हयन्निओ ॥१३॥

व्याख्या—इहैवमक्षरघटना, स नरेन्द्रः श्रेणिको 'विम्हयन्निओत्ति' पूर्वमपि रूपादिविषयविस्मयान्वितः सन्, एवमुक्तनिया वचनमश्रुतपूर्वं साधुना उक्तः सुसम्भ्रान्तः सुविस्मितश्च भूत्वा प्रोवाचेति शेषः ॥ १३ ॥

मूलम्—आसा हत्थी मणुस्सा मे, पुरं अंतेउरं च मे। भुंजामि माणुसे भोए, आणाइस्सरिअं च मे ॥१४॥

व्याख्या—'आणाइस्सरिअंति' आज्ञा अस्खलितशासनरूपा, ऐश्वर्यं समृद्धिः प्रभुत्वं वा ॥ १४ ॥

मूलम्—एरिसे संपयग्गंमि, सव्वकामसमप्पिए। कहं अणाहो भवइ, मा हु भंते मुसं वए ॥१५॥

व्याख्या—ईदृशे सम्पदग्रे सम्पत्प्रकर्षे 'सव्वकामसमप्पिएत्ति' आर्षत्वात्समर्पितसर्वकामे सम्पूरितसकलाभीप्सिते सति कथमनाथो भवति, पुरुषव्यत्ययाद्भवामि ? । अयं भावः—न नाथो अनाथः, स चाकिंचन एव स्यान्न पुनः सर्वाङ्गीणसम्पन्नाथोहमिति । 'मा हुत्ति' हुर्यस्मादर्थे, यत एवं ततो मा भदंत ! मृषावादीरिति सूत्रसप्तकार्थः ॥१५॥ मुनिराह—

मूलम्—ण तुमं जाणे अणाहस्स,अत्थं पोत्थं च पत्थिवा !। जहा अणाहो हवइ, सणाहो व नराहिवा ! १६

व्याख्या—न त्वं जानीषे अनाथस्यानाथशब्दस्यार्थमभिधेयं, प्रोत्थां वा प्रकर्षेणोत्थां उत्थानं मूलोत्पत्तिं, केनाशयेन मयाऽयमुक्त इत्येवंरूपां । अत एव यथा अनाथो भवति सनाथो वा तथा न जानासीति सम्बन्धः ॥ १६ ॥

मूलम्—सुणेहि मे महाराय !, अव्वक्खित्तेण चेअसा। जहा अणाहो भवति, जहा मे अ पवत्तिअं ॥१७॥

व्याख्या—शृणु मे कथयत इति शेषः, किं तदित्याह—यथा अनाथो अनाथशब्दवाच्यः पुरुषो भवति, यथा 'मे अत्ति' मया च प्रवर्त्तितं प्ररूपितं अनाथत्वमिति प्रक्रमः, अनेनोत्थानमुक्तम् ॥ १७ ॥

मूलम्—कोसंबी नाम नयरी, पुराणपुरभेअणी। तत्थ आसी पिआ मज्झं, पभूअधणसंचओ ॥ १८॥

व्याख्या—पुराणपुराणि भिनत्ति स्वगुणैरसमानत्वात्स्वतो भेदेन व्यवस्थापयतीति पुराणपुरभेदिनी ॥ १८ ॥

मूलम्—पढमे वये महाराय !, अउला मे अच्छिवेअणा। अहोत्था विउलो दाहो,सव्वगत्तेसु पत्थिवा ! १९

व्याख्या—प्रथमे वयसीह यौवने अतुला मे अक्षिवेदना 'अहोत्थत्ति' अभूत् ॥ १९ ॥

मूलम्—सत्थं जहा परमतिक्खं, सरीरविवरंतरे। आवीलिज्ज अरी कुद्धो, एव मे अच्छिवेअणा ॥२०॥

व्याख्या—'शरीरेत्यादि' शरीरविवराणि कर्णघ्राणादीनि तेषामन्तरं मध्यं शरीरविवरान्तरं तस्मिन् आपीडयेत् समन्तादवगाहयेत् ॥ २० ॥

मूलम्—तिअं मे अंतरिच्छं च, उत्तिमंगं च पीडई। इंदासणीसमा घोरा, वेअणा परमदारुणा ॥ २१ ॥

व्याख्या—त्रिकं कटिप्रदेशं मे, अंतरा मध्ये इच्छां चाभिमतवस्त्वभिलाषं, न केवलं बहिस्त्रिकाद्येवेति भावः, पीडयति बाधते वेदनेति सम्बन्धः, इन्द्राशनिरिन्द्रवज्रं तत्समातिदाहोत्पादकत्वादिति भावः । घोराऽन्येषामपि भयजनिका परमदारुणाऽतीवदुःखोत्पादिका ॥ २१ ॥

मूलम्—उवट्ठिआ मे आयरिआ, विज्जामंततिगिच्छगा। अवीआ सत्थकुसला, मंतमूलविसारया ॥२२॥

व्याख्या—उपस्थिताः प्रतिकारम्प्रत्युद्यता आचार्याः प्राणाचार्याः वैद्या इत्यर्थः, विद्यामंत्राभ्यां चिकित्सका व्याधिप्रतिकारकर्त्तारो विद्यामंत्रचिकित्सकाः, 'अवीअत्ति' अद्वितीया अनन्यसमानाः ॥ २२ ॥

मूलम्—ते मे तिगिच्छं कुव्वंति,चाउप्पायं जहाहिअं। न य दुक्खा विमोअंति, एसा मज्झ अणाहया ॥२३॥

व्याख्या—'चाउप्पायंति' चतुष्पादां भिषग्भेषजातुरप्रतिचारकात्मकभागचतुष्करूपां, 'जहाहिअंति' यथाहितं हितानतिक्रमेण यथाख्यातां वा यथोक्ताम् ॥ २३ ॥

मूलम्—पिआ मे सव्वसारंपि,दिज्जाहि मम कारणा। न य दुक्खा विमोएइ,एसा मज्झ अणाहया ॥२४॥

व्याख्या—पिता मे सर्वसारमपि सर्वप्रधानवस्तुरूपं 'दिज्जाहित्ति' दद्यात् ॥ २४ ॥

मूलम्—मायावि मे महाराय !, पुत्तसोगदुहट्टिआ। न य दुक्खा विमोएइ,एसा मज्झ अणाहया ॥२५॥

व्याख्या—'पुत्तसोगदुहट्टिअत्ति' पुत्रशोकदुःखार्त्ता ॥ २५ ॥

मूलम्—भायरो मे महाराय !, सगा जिट्ठकणिट्ठगा। न य दुक्खा विमोअंति, एसा मज्झ अणाहया २६

व्याख्या—'सगत्ति' लोकरूढितः सौदर्याः, स्वका वा स्वकीयाः ॥ २६ ॥

मूलम्—भइणिओ मे महाराय !, सगा जिट्ठकणिट्ठगा। न य दुक्खा विमोअंति, एसा मज्झ अणाहया २७

भारिआ मे महाराय !, अणुरत्ता अणुव्वया । अंसुपुण्णेहिं नयणेहिं, उरं मे परिसिंचइ ॥ २८ ॥

व्याख्या—'अणुव्वयत्ति' अनुव्रता पतिव्रता ॥ २७ ॥ २८ ॥

मूलम्—अन्नं पाणं च ण्हाणं च, गंधमल्लविलेवणं। मए णायमणायं वा, सा बाला नोवभुंजइ ॥२९॥

खणंऽपि मे महाराय !, पासओवि न फिट्टइ । न य दुक्खा विमोएइ, एसा मज्झ अणाहया ॥ ३० ॥

व्याख्या—'पासओवित्ति' पार्श्वतश्च, 'न फिट्टइत्ति' नापयाति ॥ २९ ॥ ३० ॥

मूलम्—तओहं एवमाहंसु, दुक्खमा हु पुणो पुणो । वेअणा अणुभविउं जे, संसारम्मि अणंतए ॥३१॥

व्याख्या—ततो रोगाप्रतिकार्यतानन्तरं अहमेवं वक्ष्यमाणप्रकारेण 'आहंसुत्ति' उदाहृतवान्, यथा 'दुक्खमा हुत्ति' दुःक्षमा एव दुस्सहा एव पुनः पुनर्वेदना अनुभवितुं 'जे इति पूरणे ॥ ३१ ॥ ततश्च—

मूलम्—सइं च जइ मुच्चिज्जा, वेअणा विउला इओ । खंतो दंतो निरारंभो, पव्वए अणगारिअं ॥३२॥

व्याख्या—'सइं चत्ति' सकृदपि यदि मुच्येऽहं वेदनाया विपुलाया इतोऽस्या अनुभूयमानायाः, ततः किमित्याह—क्षान्तः क्षमावान्, दान्त इन्द्रियनोइन्द्रियदमवान्, निरारम्भः प्रव्रजेयं प्रतिपद्येयं अनगारितां । येन संसारोच्छेदान्मूलत एव वेदना न स्यादिति भावः ॥ ३२ ॥

मूलम्—एवं च चिंतइत्ता णं, पसुत्तोमि नराहिवा !। परिअत्तंतीए राईए, वेअणा मे खयं गया ॥ ३३ ॥

व्याख्या—न केवलमुक्त्वा, किन्तु एवं चिन्तयित्वा च, प्रसुप्तोऽस्मि नराधिप ! परिवर्त्तमानायामतिक्रामंत्यां रात्रौ वेदना मे क्षयं गता ॥ ३३ ॥

मूलम्—तओ कल्ले पभायंमि, आपुच्छित्ता ण बंधवे। खंतो दंतो निरारंभो, पव्वइओ अणगारियं ॥३४॥

व्याख्या—ततो वेदनापगमनानन्तरं 'कल्लेत्ति' कल्यो निरोगः सन् ॥ ३४ ॥

मूलम्—तओहं नाहो जाओ, अप्पणो अ परस्स य । सव्वेसिं चेव भूआणं, तसाणं थावराण य ॥ ३५ ॥

व्याख्या—ततः प्रव्रज्याङ्गीकारात् अहं नाथो योगक्षेमकृज्जातः, आत्मनः परस्य च । तत्रालब्धलाभो योगः, स स्वस्य रत्नत्रयलाभेन, लब्धस्य च रक्षणं क्षेमः, स तु स्वस्य प्रमादपरित्यागेन । एवमन्येषामपि धर्मदानस्थैर्यविधानाभ्यां योगक्षेमकारित्वं भाव्यमिति विंशतिसूत्रार्थः ॥ ३५ ॥ कुतो दीक्षादानादनु त्वं नाथो जातो न पूर्वमित्याह—

मूलम्—अप्पा नई वेअरणी, अप्पा मे कूडसामली । अप्पा कामदुहा धेणू, अप्पा मे नंदणं वणं ॥३६॥

व्याख्या—आत्मेति वाक्यस्य सावधारणत्वादात्मैव नदी वैतरणी, नरकसम्बन्धिनी । आत्मन एवोद्धतस्य तद्धेतुत्वात् । अत एवात्मैव मे, कूटमिव जन्तुयातनाहेतुत्वाच्छाल्मली कूटशाल्मली, तथा आत्मैव कामदुघा धेनुरिव धेनुः, इयं च रूढित उक्ता, एतदौपम्यं च तस्य स्वर्गापवर्गादिसमीहितावाप्तिहेतुत्वात् । आत्मैव मे नन्दनं वनं, एतदौपम्यं चास्यैव चित्ताह्लादहेतुत्वात् ॥ ३६ ॥

मूलम्—अप्पा कत्ता विकत्ता य, दुहाण य सुहाण य। अप्पा मित्तममित्तं च, दुप्पट्ठिअ सुपट्ठिओ ॥३७॥

व्याख्या—आत्मैव कर्त्ता दुःखानां सुखानां चेति योगः, विकरिता च विक्षेपक आत्मैव तेषां, अत एवात्मैव मित्रममित्रश्च, कीदृशः सन् ? दुःप्रस्थितो दुराचारः, सुप्रस्थितः सदनुष्ठानः । दुःप्रस्थितो ह्यात्मा समग्रदुःखहेतुरिति वैतरण्यादिरूपः, सुप्रस्थितश्च सकलसुखहेतुरिति कामधेन्वादिकल्पः । तथा च प्रव्रज्यायामेव सुप्रस्थितत्वात् स्वस्यान्येषां च योगक्षेमकरणक्षमत्वात् मम नाथत्वमिति सूत्रद्वयार्थः ॥ ३७ ॥ पुनरन्यथाऽनाथत्वमाह—

मूलम्—इमा हु अन्नावि अणाहया निवा !, तमेगचित्तो निहुओ सुणाहि ।
निअंठधम्मं लहिआण वी जहा, सीदंति एगे बहु कायरा नरा ॥ ३८ ॥

व्याख्या—'इमत्ति' इयं, हुः पूर्त्तौ, अन्या अपरा, अपिः समुच्चये, अनाथता, यदभावादहं नाथो जात इति भावः । 'णिवत्ति' हेनृप ! तामनाथतामेकचित्तो निभृतो स्थिरः शृणु । का पुनरसौ ? इत्याह—निर्ग्रन्थधर्मं साध्वाचारं लब्ध्वाऽपि, यथेत्युपदर्शने, सीदन्तितदनुष्ठानं प्रति शिथलीभवन्ति । एके केचन, बहु प्रकामं यथास्यात्तथा, कातरा निस्सत्वा नरा मनुष्याः । यद्वा बहुकातरा इपन्निःसत्वाः, सर्वथा निःसत्वानां हि निर्ग्रन्थमार्गाङ्गीकार एव मूलतोऽपि

न स्यादित्येवमुक्तं। सीदन्तश्च ते नात्मानमन्यांश्च रक्षितुं क्षमा इतीयं सीदनलक्षणाऽपराऽनाथतेति भावः ॥ ३८ ॥ तामेव दर्शयति—

मूलम्—जो पव्वइत्ता ण महव्वयाइं, सम्मं च नो फासयई पमाया।
अणिग्गहप्पा य रसेसु गिद्धे, न मूलओ छिंदइ बंधणं से ॥ ३९ ॥

व्याख्या—यः प्रव्रज्य महाव्रतानि सम्यग् न स्पृशति, न सेवते, प्रमादात्। अनिगृहीतात्मा, अवशीकृतात्मा। बन्धनं रागद्वेषात्मकम् ॥ ३९ ॥

मूलम्—आउत्तया जस्स य नत्थि काई, इरिआइ भासाइ तहेसणाए।
आयाणनिक्खेव दुगंछणाए, न वीरजायं अणुजाइ मग्गं ॥ ४० ॥

व्याख्या—आयुक्तता सावधानता यस्य नास्ति काचिदतिस्वल्पापि। 'आयाणेत्यादि' सुप्तविभक्तिदर्शनादादान-निक्षेपयोरुपकरणग्रहणन्यासयोः, तथा जुगुप्सनायां परिष्ठापनायां। इच्चोचारादीनां संयमानुपयोगितया जुगुप्सनी-यत्वेनैव परिष्ठापनात् परिष्ठापनैव जुगुप्सनोक्ता। स मुनिर्वीरैर्यातो गतो वीरयातस्तं नानुयाति मार्गं सम्यग्दर्शना-दिकं मुक्तिपथम् ॥ ४० ॥ तथा च—

मूलम्—चिरंपि से मुंडरुई भवित्ता, अथिरव्वए तवनिअमेहिं भट्ठे।
चिरंपि अप्पाण किलेसइत्ता, न पारए होई हु संपराए ॥ ४१ ॥

व्याख्या—चिरमपि मुण्ड एव मुण्डन एव सकलानुष्ठानविमुखतया रुचिर्यस्यासौ मुण्डरुचिर्भूत्वा, अस्थिरव्रतश्च-श्चलव्रतस्तपोनियमेभ्यो भ्रष्टः, चिरमप्यात्मानं क्लेशयित्वा लोचादिना बाधयित्वा, न पारगो भवति, हुर्वाक्यालंकारे, 'संपराएत्ति' सम्परायस्य संसारस्य ॥ ४१ ॥

मूलम्—पोल्लेव मुट्ठी जह से असारे, अयंतिए कूडकहावणे वा।
राढामणी वेरुलिअप्पगासे, अमहग्घए होइ हु जाणएसु ॥ ४२ ॥

व्याख्या—पोल्लेव सुषिरैव न मनागपि निविडा मुष्टिर्यथा मुष्टिरिव स द्रव्यमुनिः असारः, असारत्वं च द्वयोरपि सदर्थशून्यत्वात्। अयंत्रितः कूटकार्षापण इव, यथाऽसौ कूटत्वान्न केनापि नियंत्र्यते, तथैषोऽपि निर्गुणत्वादुपेक्ष्यत एवेति भावः। कुत एवमित्याह—यतो राढामणिः काचमणिर्वैडूर्यप्रकाशो वैडूर्यमणिकल्पोऽपि अमहार्घकः अमहा-मूल्यो भवति, हुरवधारणे 'जाणएसुत्ति' ज्ञेषु दक्षेषु, मुग्धजनविप्रतारकत्वात्तस्य ॥ ४२ ॥

मूलम्—कुसीललिंगं इह धारइत्ता, इसिज्झयं जीविय वूहइत्ता।
असंजए संजयलप्पमाणे, विणिघायमागच्छइ से चिरंपि ॥ ४३ ॥

व्याख्या—कुशीललिङ्गं पार्श्वस्थादिवेषमिह जन्मनि धारयित्वा, ऋषिध्वजं साधुचिह्नं रजोहरणादि 'जीविअत्ति' जीविकायै जठरभरणार्थं बृंहयित्वा, इदमेव प्रधानमिति ख्यापनेनोपबृंह्य, अत एवासंयतः सन् 'संजयलप्पमा-णेत्ति' संयतमात्मानं लपन् भाषमाणः, विनिघातं विविधाभिघातरूपमागच्छति स चिरमप्यास्तां स्वल्पकालं नरका-दाविति भावः ॥ ४३ ॥ इहैव हेतुमाह—

मूलम्—विसं पिवित्ता जह कालकूडं, हणाइ सत्थं जह कुग्गहीअं।
एसेव धम्मो विसओववण्णो, हणाइ वेआल इवाविवण्णो ॥ ४४ ॥

व्याख्या—विषं 'पिवित्तत्ति' आर्षत्वात् पीतं, यथा कालकूटं 'हणाइत्ति' हन्ति, शस्त्रं च यथा कुगृहीतं कुत्सि-तप्रकारेण गृहीतं, 'एसेवत्ति' एष एवं विषादिवत् धर्मः साधुधर्मो विषयोपपन्नः शब्दादिविषयलाम्पट्ययुक्तो हन्ति, दुर्गतिपातहेतुत्वेन द्रव्यमुनिमितिगम्यं। वेताल इवाविपन्नो मंत्रादिभिरनियंत्रितः साधकमिति गम्यम् ॥ ४४ ॥

मूलम्—जो लक्खणं सुविण पउंजमाणे, निमित्तकोऊहलसंपगाढे।
कुहेडविज्जासवदारजीवी, न गच्छई सरणं तम्मि काले ॥ ४५ ॥

व्याख्या—यो लक्षणं स्वप्नं च प्रयुंजानो व्यापारयन्, निमित्तं भौमादि, कौतुकं चापत्याद्यर्थं स्नानादि, तयोः संप्रगाढः प्रसक्तो यः स तथा। कुहेटकविद्या अलिकाश्चर्यकारिमंत्रतंत्रज्ञानात्मिकास्ता एव कर्मबन्धहेतुत्वादाश्रवद्वा-

राणि तैर्जीवितुं शीलमस्येति कुहेटकविद्याश्रवद्वारजीवी । न गच्छति न प्राप्नोति शरणं, तस्मिन् फलोपभोगोपलक्षिते काले समये ॥ ४५ ॥ अमुमेवार्थं विशेषादाह—

मूलम्—तमंतमेणेव उ से असीले, सया दुही विप्परिआसुवेइ ।
संधावइ नरगतिरिक्खजोणी, मोणं विराहित्तु असाहुरूवे ॥ ४६ ॥

व्याख्या—'तमंतमेणेव उत्ति' अतिमिथ्यात्वोपहततया तमस्तमसैव प्रकृष्टाज्ञानेनैव, तुः पूर्त्तौ, स द्रव्यमुनिः अशीलः सदा दुःखी विराधनाजनितदुःखानुगतो 'विपरिआसुवेइत्ति' विपर्यासं तत्वेषु वैपरीत्यमुपैति, ततश्च सन्धावति सततं गच्छति नरकतिर्यग्योनीः, मौनं चारित्रं विराध्यासाधुरूपस्तत्वतोऽयतिस्वभावः सन्। अनेन विराधनाया अनुबन्धवत् फलमुक्तम् ॥ ४६ ॥ कथं मौनं विराधयति, कथं वा नरकतिर्यग्गतीः सन्धावतीत्याह—

मूलम्—उद्देसिअं कीअगडं निआगं, न मुंचई किंचि अणेसणिज्जं ।
अग्गी विवा सव्वभक्खी भवित्ता, इओ चुओ गच्छइ कट्टु पावं ॥ ४७ ॥

व्याख्या—'निआगंति' नित्यपिण्डं, 'अग्गीविवत्ति' अग्निरिव सर्वमप्रासुकमपि भक्षयतीत्येवंशीलः सर्वभक्षी भूत्वा कृत्वा च पापं, इतो भवाच्युतो गच्छति, कुगतिमिति शेषः ॥ ४७ ॥ कुत एतदेवमित्याह—

मूलम्—न तं अरी कंठछित्ता करोति, जं से करे अप्पणिआ दुरप्पा ।
से नाहिई मच्चुमुहं तु पत्ते, पच्छाणुतावेण दयाविहूणो ॥ ४८ ॥

व्याख्या—न नैव तमिति प्रक्रमादनर्थं, अरिः कण्ठच्छेत्ता करोति, यं से तस्य करोत्यात्मीया दुरात्मता दुष्टाचारप्रवृत्तिरूपा । न चेमामाचरन्नपि जन्तुरत्यन्तमूढतया वेत्ति, परं स दुरात्मतासेवी ज्ञास्यति दुरात्मतां मृत्युमुखं तु मरणसमयं पुनः प्राप्तः । पश्चादनुतापेन हा ! दुष्टु मयानुष्ठितेयमित्येवंरूपेण, दयया संयमेन विहीनः सन् । यतश्चैवमनर्थहेतुः पश्चात्तापहेतुश्च दुरात्मता, तत आदित एवासौ त्याज्येत्यर्थः ॥ ४८ ॥ यस्तु प्रान्तेऽपि मोहेन दुरात्मतां तथात्वेन न जानाति तस्य किं स्यादित्याह—

मूलम्—निरट्ठिआ नग्गरुई उ तस्स, जे उत्तिमट्ठं विवज्जासमेइ ।
इमेवि से नत्थि परेवि लोए, दुहओवि से झिज्झइ तत्थ लोए ॥ ४९ ॥

व्याख्या—निरर्थिका 'तु'शब्दस्यैवकारार्थस्येह सम्बन्धान्निरर्थिकैव निष्फलैव नाग्न्ये श्रामण्ये रुचिस्तस्य यः 'उत्तिमट्ठंति' सुपूव्यत्ययादपेश्च गम्यत्वादुत्तमार्थेऽपि प्रान्तसमयाराधनारूपे, आस्तां पूर्वं, विपर्यासं दुरात्मतायामपि सुन्दरात्मताज्ञानरूपं एति गच्छति, यस्तु मोहमपोह्य दुरात्मतां तथात्वेन जानाति, तस्य तु स्वनिन्दादिना स्यादपि किञ्चित्फलमिति भावः । ततश्च 'इमेवित्ति' अयमपि प्रत्यक्षो लोक इति योगः, से तस्य नास्ति । न केवलमयमेव, किन्तु परोऽपि भवान्तररूपः। तत्रेहलोकाभावः कायक्लेशहेतुलोचादिसेवनात् , परलोकाभावश्च कुगतिगमनात् । एवं च 'दुहओवित्ति' द्विधापि ऐहिकपारत्रिकार्थाभावेन स जन्तुः 'झिज्झइत्ति' ऐहिकपारत्रिकार्थसम्पत्तिमतो जनान् वीक्ष्य, धिग्मामुभयभ्रष्टमिति चिन्तया क्षीयते । तत्रेत्युभयलोकाभावे सति, लोके जगति ॥ ४९ ॥ ततोऽसौ यथानुतापमापद्यते तथा दर्शयति—

मूलम्—एमेवहाछंदकुसीलरूवे, मग्गं विराहित्तु जिणुत्तमाणं ।
कुररी विवा भोगरसाणुगिद्धा, निरट्ठसोआ परितावमेइ ॥ ५० ॥

व्याख्या—एवमेवोक्तरूपेणैव महाव्रतास्पर्शनादिना प्रकारेण यथाछन्दाः स्वरुचिकल्पिताचाराः, कुशीलाश्च कुत्सितशीलास्तद्रूपास्तत्स्वभावाः, मार्गं विराध्य जिनोत्तमानां । कुररीव पक्षिणीव भोगरसानुगृद्धा निरर्थः शोको यस्याः सा निरर्थशोका परितापं पश्चात्तापमेति प्राप्नोति । यथा साऽऽमिषगृद्धा मुखात्तपिशितपेशिका परपक्षिभ्यो विपत्प्राप्तौ शोचति, न च ततः कोऽपि विपत्प्रतिकार इति, एवमयमपि भोगरसगृद्ध ऐहिकामुष्मिकापायप्राप्तौ । ततोऽस्य स्वान्यत्राणाक्षमत्वादनाथत्वमेवेति भाव इति सूत्रत्रयोदशकार्थः ॥ ५० ॥ इदं च श्रुत्वा यत्कार्यं तदाह—

मूलम्—सोच्चाण मेहावि सुभासिअं इमं, अणुसासणं नाणगुणोववेअं ।
मग्गं कुसीलाण जहाय सव्वं, महानिअंठाण वए पहेणं ॥ ५१ ॥

व्याख्या—श्रुत्वा हे मेधाविन् ! सुष्ठु भाषितं इदमनन्तरोक्तं अनुशासनं शिक्षणं ज्ञानेन गुणेन च प्रस्तावाद्विरति-रूपेणोपपेतं ज्ञानगुणोपपेतं, मार्गं कुशीलानां हित्वा सर्वं, महानिर्ग्रन्थानां 'वएत्ति' व्रजेस्त्वं 'पहेणंति' पथा ॥५१॥ ततः किं फलमित्याह—

मूलम्—चरित्तमायारगुणन्निए तओ, अणुत्तरं संजम पालिआणं ।
निरासवे संखविआण कम्मं, उवेइ ठाणं विउलुत्तमं धुवं ॥ ५२ ॥

व्याख्या—'चरित्तमायरत्ति' मकारोऽलाक्षणिकः, चारित्राचारश्चारित्रासेवनं, गुण इह ज्ञानरूपस्ताभ्यामन्वितश्चा-रित्राचारगुणान्वितः । ततो महानिर्ग्रन्थमार्गगमनात् अनुत्तरं प्रधानं संयमं यथाख्यातचारित्ररूपं पालयित्वा निरा-श्रवः संक्षपय्य क्षयं नीत्वा कर्म उपैति स्थानं, विपुलं च तदनन्तानामपि तत्रावस्थितेरुत्तमं च प्रधानत्वाद्विपुलोत्तमं, ध्रुवं नित्यं मुक्तिमित्यर्थः ॥ ५२ ॥ उपसंहारमाह—

मूलम्—एवुग्गदंतेवि महातवोधणे, महामुणी महापइण्णे महायसे ।
महानियंठिज्जमिणं महासुअं, से काहए महया वित्थरेणं ॥ ५३ ॥

व्याख्या—एवं उक्तनीत्या स मुनिः कथयतीति संबंधः, स कीदृशः ? इत्याह—उग्रः कर्मशत्रुं प्रति, दान्तश्च इन्द्रियनोइन्द्रियदमनात्, उग्रदान्तः । अपिः पूर्त्तौ, महातपोधनः महामुनिर्महाप्रतिज्ञो दृढव्रत अत एव महायशाः, महानिर्ग्रन्थेभ्यो हितं महानिर्ग्रन्थीयं इदं पूर्वोक्तं महाश्रुतं, स कथयति महता विस्तरेणेति सूत्रत्रयार्थः ॥५३॥ ततश्च—

मूलम्—तुट्ठो अ सेणिओ राया, इणमुदाहु कयंजली । अणाहत्तं जहाभूयं, सुट्ठु मे उवदंसिअं ॥५४॥

व्याख्या—तुष्टश्चेति चः पुनरर्थे भिन्नक्रमश्च, ततः श्रेणिकः पुनरिदमुदाहृतवान्, यथाभूतं सत्यम् ॥ ५४ ॥

मूलम्—तुब्भं सुलद्धं खु मणुस्सजम्मं, लाभा सुलद्धा य तुमे महेसी ।
तुब्भे सणाहा य सबंधवा य, जं भे ठिआ मग्गि जिणुत्तमाणं ॥ ५५ ॥

व्याख्या—'सुलद्धं खुत्ति' सुलब्धमेव, लाभा वर्णादिप्राप्तिरूपाः 'जं भेत्ति' यद्यस्मात् 'भे' भवन्तः ॥ ५५ ॥

मूलम्—तंऽसि णाहो अणाहाणं, सव्वभूआण संजया ! । खामेमि ते महाभाग !, इच्छामु अणुसासिउं ५६

व्याख्या—इह पूर्वार्द्धेनोपबृंहणां कृत्वा उत्तरार्द्धेन क्षमणामुपसम्पन्नतां चाह—तत्र 'तेत्ति' त्वां 'अणुसासिउंति' अनुशासयितुं शिक्षयितुं त्वयात्मानमिति गम्यम् ॥ ५६ ॥ पुनः क्षमणामेव विशेषेणाह—

मूलम्—पुच्छिऊण मए तुब्भं, झाणविग्घो उ जो कओ । निमंतिआ य भोगेहिं, तं सव्वं मरिसेह मे ॥५७॥

व्याख्या—'पुच्छिऊणत्ति' कथं त्वं यौवने प्रव्रजितः ? इत्यादि पृष्ट्वा यो युष्माकं मया ध्यानविघ्नः कृतः, निमंत्रि-ताश्च यद्यूयं भोगैस्तत्सर्वं मर्षयत क्षमध्वं ममेति सूत्रचतुष्कार्थः ॥ ५७ ॥ अध्ययनार्थोपसंहारमाह—

मूलम्—एवं थुणित्ताण स रायसीहो—ऽणगारसीहं परमाइ भत्तिए ।
सओरोहो सपरिअणो सबंधवो, धम्माणुरत्तो विमलेण चेअसा ॥ ५८ ॥

व्याख्या—'सओरोहोत्ति' सावरोधः सान्तःपुरः 'विमलेणत्ति' विगतमिथ्यात्वमलेन चेतसोपलक्षितः ॥ ५८ ॥

मूलम्—ऊससिअरोमकूवो, काऊण य पयाहिणं । अभिवंदित्ता सिरसा, अतिजातो नराहिवो ॥ ५९ ॥

व्याख्या—'अतिजातोत्ति' अतियातः स्वस्थानं गतः ॥ ५९ ॥

मूलम्—इअरोवि गुणसमिद्धो, तिगुत्तिगुत्तो तिदंडविरओ अ ।
विहग इव विप्पमुक्को, विहरइ वसुहं विगयमोहोत्ति बेमि ॥ ६० ॥

व्याख्या—इतरो मुनिः सोऽपि विहग इव विप्रमुक्तः प्रतिबन्धरहितः, विगतमोहः क्रमात्समुत्पन्नकेवलज्ञानत्वे-नेति सूत्रत्रयार्थः ॥ ६० ॥ इति ब्रवीमीति प्राग्वत् ॥ २० ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिशिष्यमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ विंशतितममध्ययनं सम्पूर्णम् ॥ २० ॥

## ॥ अथ एकविंशमध्ययनम् ॥

॥ॐ॥व्याख्यातं विंशतितममध्ययनं, अथैकविंशं समुद्रपालीयाख्यमारभ्यते। अस्य चायं सम्बन्धोऽनन्तराध्ययनेऽनाथत्वमुक्तं, तच्च परिभाव्य विविक्तचर्यया चरितव्यं। सा च समुद्रपालदृष्टान्तेनानेनोच्यते, इति सम्बन्धस्यास्येदमादि सूत्रम्—

**मूलम्**—चंपाए पालिए नामं, सावए आसि वाणिए। महावीरस्स भगवओ, सीसे सो उ महप्पणो ॥१॥

व्याख्या—महावीरस्य भगवतः शिष्यः 'सो उत्ति' स पुनः, तच्छिष्यता चास्य तत्प्रतिबोधिततत्वात् ॥ १ ॥

**मूलम्**—निग्गंथे पावयणे, सावए से विकोविए। पोएण ववहरंते, पिहुंडं नगरमागए ॥ २ ॥

व्याख्या—नैर्ग्रन्थे निर्ग्रन्थसम्बन्धिनि प्रवचने स पालितो 'विकोविएत्ति' विशेषेण कोविदो विकोविदः, पोतेन प्रवहणेन व्यवहरन् व्यापारं कुर्वन्, पिहुंडं पिहुंडसंज्ञम् ॥ २ ॥

**मूलम्**—पिहुंडे ववहरंतस्स, वाणिओ देइ धूअरं। तं ससत्तं पइगिज्झ, सदेसमह पत्थिओ ॥ ३ ॥

व्याख्या—'वाणिओ देइ धूअरंति' तद्गुणाकृष्टचेताः कोऽपि वणिग् ददाति दुहितरं पुत्री, तां ससत्वां सगर्भां प्रतिगृह्यादाय स्वदेशमथ प्रस्थितः ॥ ३ ॥

**मूलम्**—अह पालिअस्स घरणी, समुद्दंमि पसवई। अह दारए तहिं जाए, समुद्दपालित्ति नामए ॥४॥

व्याख्या—'तहिंति' तत्र समुद्रे ॥ ४ ॥

**मूलम्**—खेमेण आगए चंपं, सावए वाणिए घरं। संवड्ढए घरे तस्स, दारए से सुहोइए ॥ ५ ॥
बावत्तरिं कलाओ अ, सिक्खिए नीइकोविए। जोव्वणेण य संपन्ने, सुरूवे पिअदंसणे ॥ ६ ॥
तस्स रूववइं भज्जं, पिआ आणेइ रूविणिं। पासाए कीलए रम्मे, देवो दोगुंदगो जहा ॥ ७ ॥

व्याख्या—'रूविणिंति' रूपिणीसंज्ञां, प्रासादे क्रीडति, तया सहेति शेषः ॥ ५ ॥ ६ ॥ ७ ॥

**मूलम्**—अह अन्नया कयाइ, पासायालोअणे ठिओ। वज्झमंडणसोभागं, वज्झं पासइ वज्झगं ॥ ८ ॥

व्याख्या—अथान्यदा कदाचित् प्रासादालोकने गवाक्षे स्थितः सन् समुद्रपालो वध्यमण्डनानि रक्तचन्दनकरवीरादीनि तैः शोभा यस्य स वध्यमण्डनशोभाकस्तं वध्यं वधार्हं कञ्चन तादृशाकार्यकारिणं पश्यति, वध्ये वध्यभूमौ गच्छतीति वध्यगस्तं, इहोपचाराद्वध्यशब्देन वध्यभूरुक्ता ॥ ८ ॥

**मूलम्**—तं पासिऊण संवेगं, समुद्दपालो इणमब्बवी। अहो असुहाण कम्माणं, निज्जाणं पावगं इमं ॥९॥

व्याख्या—तं दृष्ट्वा संवेगं संवेगकारणं समुद्रपाल इदं वक्ष्यमाणमब्रवीत्, अहो ! अशुभानां कर्मणां निर्याणमवसानं विपाक इत्यर्थः, पापकमशुभमिदं प्रत्यक्षं, यदयं वराको वधार्थमित्थं नीयते ॥ ९ ॥

**मूलम्**—संबुद्धो सो तहिं भयवं, परमं संवेगमागओ। आपुच्छऽम्मापिअरो, पव्वए अणगारिअं॥ १० ॥

व्याख्या—एवं ध्यायन् सम्बुद्धः समुद्रपालः 'तहिं' तत्र प्रासादालोकने, आपृच्छ्य मातापितरौ 'पव्वएत्ति' प्राव्राजित् प्रतिपेदेऽनगारितामिति सूत्रदशकावयवार्थः, शेषं व्यक्तं, एवमग्रेपि॥ १० ॥ प्रव्रज्य च यथायं आत्मानमनुशासितवान् यथा वा प्रावर्त्तत तथाह—

**मूलम्**—जहित्तु संगं च महाकिलेसं, महंतमोहं कसिणं भयावहं।
परिआयधम्मं चऽभिरोयइज्जा, वयाणि सीलाणि परीसहे अ ॥ ११ ॥

व्याख्या—हित्वा त्यक्त्वा सङ्गं स्वजनादिसम्बन्धं, चः पूर्त्तौ, महाक्लेशं महादुःखं, महान्मोहः स्त्र्यादिविषयोऽज्ञानरूपो वा यस्मात् स महामोहस्तं, कृत्स्नं सर्वं, कृष्णं वा कृष्णलेश्याहेतुत्वात्, अत एव विवेकिनां भयावहं, पर्यायो व्रतपर्यायस्तत्र धर्मो महाव्रतादिः पर्यायधर्मस्तं, चः पूर्त्तौ, अभिरोचयेद्भवान् हे आत्मन् ! इति प्रक्रमः। पर्यायधर्ममेव विशेषादाह—व्रतानि महाव्रतानि, शीलान्युत्तरगुणरूपाणि, परीषहानिति परीषहसहनानि चाभिरोचयेदिति योगः ॥ ११ ॥ तदनु यत्कार्यं तदाह—

**मूलम्**—अहिंस सच्चं च अतेणगं च, तत्तो य बंभं अपरिग्गहं च।
पडिवज्जिआ पंच महव्वयाइं, चरिज्ज धम्मं जिणदेसिअं विऊ ॥ १२ ॥

व्याख्या—अहिंसां सत्यमस्तैन्यकं च ततश्च ब्रह्म ब्रह्मचर्यं अपरिग्रहं च प्रतिपद्यैवं पञ्च महाव्रतानि चरेदासेवेत, न तु स्वीकारमात्रेणैव तिष्ठेदित्यर्थः। धर्मं श्रुतचारित्ररूपं जिनदेशितं 'विऊत्ति' विद्वान् भवान् हे आत्मन्! ॥ १२ ॥

मूलम्—सव्वेहिं भूएहिं दयाणुकंपी, खंतिक्खमे संजयबंभयारी।
सावज्जजोगं परिवज्जयंतो, चरेज्ज भिक्खू सुसमाहि इंदिए ॥ १३ ॥

व्याख्या—सर्वेषु भूतेषु दयया हितोपदेशरूपया रक्षणरूपया च अनुकम्पनशीलो दयानुकम्पी, क्षान्त्या न त्वशक्त्या क्षमते दुर्वचनादीति क्षान्तिक्षमः, संयतः सम्यग् यतः स चासौ ब्रह्मचारी च संयतब्रह्मचारी, पूर्वं व्रतप्रतिपत्त्याऽऽगतेऽपि ब्रह्मचारीति पुनः कथनं ब्रह्मचर्यस्य दुर्द्धरत्वज्ञप्त्यै ॥ १३ ॥

मूलम्—कालेण कालं विहरिज्ज रट्ठे, बलाबलं जाणिअ अप्पणो अ।
सीहो व सद्देण न संतसिज्जा, वयजोग सुच्चा ण असब्भमाहु ॥ १४ ॥

व्याख्या—कालेन पादोनपौरुष्यादिना, कालमिति कालोचितं प्रत्युप्रेक्षणादि कृत्यं, कुर्वन्निति शेषः। विहरेत् राष्ट्रे मण्डले उपलक्षणत्वाद्ग्रामादौ च। बलाबलं सहिष्णुत्वासहिष्णुत्वरूपं ज्ञात्वाऽऽत्मनो यथा यथा संयमयोगहानिर्न स्यात्तथा तथेति भावः। अन्यच्च सिंह इव शब्देन प्रक्रमाद्भयोत्पादकेन न संत्रसेत् नैव सत्वाचलेत् हे आत्मन्! भवानिति सर्वत्र गम्यते। तथा वचो योगमर्थादशुभं श्रुत्वा नाऽसभ्यं 'आहुत्ति' आर्षत्वाद्ब्रूयात् ॥ १४ ॥ तर्हि किं कुर्यादित्याह—

मूलम्—उवेहमाणो उ परिव्वएज्जा, पिअमप्पिअं सव्व तितिक्खएज्जा।
न सव्व सव्वत्थऽभिरोअइज्जा, न यावि पूअं गरहं च संजए ॥ १५ ॥

व्याख्या—उपेक्षमाणः कुवचनवक्तारमवगणयन् परिव्रजेत्, तथा प्रियमप्रियं सर्वं तितिक्षेत सहेत, न सर्वं वस्तु सर्वत्र सर्वस्थानेऽभिरोचयेत्, यथादृष्टाभिलाषुको माभूदिति भावः। न चापि पूजां, गर्हां च परनिन्दां, अभिरोचयेदिति योगः ॥ १५ ॥ ननु भिक्षोरपि किमन्यथाभावः सम्भवति? यदेवमात्मानुशास्यते इत्याह—

मूलम्—अणेग छंदा मिह माणवेहिं, जे भावओ संपकरेइ भिक्खू।
भयभेरवा तत्थ उइंति भीमा, दिव्वा मणुस्सा अदुवा तिरिच्छा ॥ १६ ॥

व्याख्या—अनेके छन्दा अभिप्राया भवन्तीति गम्यं, 'मिहत्ति' मकारोऽलाक्षणिकः, इह जगति मानवेषु। याननेकछन्दान् भावतश्चित्तवृत्त्या सम्प्रकरोति भृशं विधत्ते,'भिखुत्ति' अपर्गम्यत्वाद्भिक्षुरपि कर्मवशगः, तत एवेत्थमात्मानुशास्यते इति भावः। किञ्च भयेन भयजनकत्वेन भैरवा भीषणा भयभैरवाः तत्रेति व्रतप्रतिपत्तौ उद्यन्ति उदयं यान्ति भीमा रौद्राः, अस्य च पुनः कथनमतिरौद्रत्वख्यापकं,दिव्या मानुष्यका अथवा तैरश्चा उपसर्गाः इति शेषः ॥१६॥ तथा—

मूलम्—परीसहा दुव्विसहा अणेगे, सीदंति जत्था बहुकायरा नरा।
से तत्थ पत्ते न वहिज्ज भिक्खू, संगामसीसे इव नागराया ॥ १७ ॥

व्याख्या—परीषहा दुर्विषहा दुस्सहा अनेके उद्यन्तीति योगः, सीदन्ति संयमं प्रति शिथिलीभवन्ति 'जत्था'इति यत्र येषूपसर्गेषु परीषहेषु च सत्सु बहु भृशं कातराः नराः,'से' इत्यथ तत्र तेषु प्राप्तो न व्यथेत न सत्वाचलेद्भवान् भिक्षुः सन् सङ्ग्रामशीर्षे इव नागराजः ॥ १७ ॥

मूलम्—सीतोसिणा दंसमसाय फासा, आयंका विविहा फुसंति देहं।
अकुक्कुओ तत्थऽहियासएज्जा, रयाइं खेवेज्ज पुरेकडाइं ॥ १८ ॥

व्याख्या—शीतोष्णदंशमशकाः, च-शब्द उत्तरत्र योक्ष्यते, स्पर्शास्तृणस्पर्शादयः, आतङ्काश्च विविधाः स्पृशन्ति उपतापयन्ति देहं भवत इति गम्यं। 'अकुकुओत्ति' कुत्सितं कूजति कुकूजो न तथा अकुकूजस्तत्र शीतादिस्पर्शनेऽधिसहेत, अनेन चानन्तरसूत्रोक्त एवार्थः स्पष्टतार्थमन्वयेनोक्तः। ईदृशश्च सन् रजांसि जीवमालिन्यहेतुतया कर्माणि 'खेवेज्जत्ति' क्षिपेत् पुराकृतानि ॥ १८ ॥

मूलम्—पहाय रागं च तहेव दोसं, मोहं च भिक्खू सययं विअक्खणो।
मेरुव्व वाएण अकंपमाणो, परीसहे आयगुत्ते सहेज्जा ॥ १९ ॥

व्याख्या—'मेरुव' इत्यादि—मेरुर्वातेनेव परीषहादिनाऽकम्पमानः, 'आयगुत्तेत्ति' गुप्तात्मा, अनेन सूत्रेण परीषह-सहनोपाय उक्तः ॥ १९ ॥ किञ्च—

मूलम्—अणुण्णए नावणए महेसी, नयावि पूअं गरीहं च संजए ।
से उज्जुभावं पडिवज्ज संजये, निव्वाणमग्गं विरए उवेइ ॥ २० ॥

व्याख्या—अनुन्नतो नावनतो महर्षिः, न चापि पूजां गर्हां च प्रतीतीति शेषः, 'संजएत्ति' सजेत्सङ्गं कुर्यात् । तत्रानुन्नतः पूजां प्रति, अनवनतश्च गर्हां प्रति, 'से' इति स एवमात्मानुशासकः, ऋजुभावं प्रतिपद्य संयतो निर्वाणमार्गं सम्यग् ज्ञानादिकं विरतः सन्नुपैति प्राप्नोति । तत्कालापेक्षया वर्त्तमाननिर्देशः ॥ २० ॥ ततः स कीदृशः सन् किं करोति ? इत्याह—

मूलम्—अरइरइसहे पहीणसंथवे, विरए आयहिए पहाणवं ।
परमट्ठपएहिं चिट्ठई, छिन्नसोए अममे अकिंचणे ॥ २१ ॥

व्याख्या—अरतिरती संयमासंयमविषये सहते ताभ्यां न बाधते इत्यरतिरतिसहः, प्रहीणः संस्तवः पूर्वपश्चात्परिचयरूपो यस्य सः तथा, विरत आत्महित इति स्पष्टं, प्रधानः संयमो मुक्तिहेतुत्वात्स यस्यास्त्यसौ प्रधानवान्, परमार्थो मोक्षस्तस्य पदानि सम्यक्दर्शनादीनि तेषु तिष्ठति, 'छिन्नशोकः' 'अममः' 'अकिञ्चनः' इमानि त्रीणि पदानि मिथो हेतुतया व्याख्येयानि ॥ २१ ॥

मूलम्—विवित्तलयणाणि भइज्ज ताई, निरूवलेवाइं असंथडाइं ।
इसीहिं चिण्णाइं महायसेहिं, कायेण फासेज्ज परीसहाइं ॥ २२ ॥

व्याख्या—विविक्तलयनानि स्त्र्यादिरहितोपाश्रयान् 'भइज्जत्ति' भजति, त्रायी, विविक्तत्वादेव निरुपलेपानि भावतोऽभिष्वङ्गरहितानि द्रव्यतस्तदर्थं नोपलिप्तानि, असंस्कृतानि बीजादिभिरव्याप्तानि अत एव ऋषिभिश्चीर्णानि सेवितानि महायशोभिः, तथा कायेन 'फासेज्जत्ति' स्पृशति सहते परीषहान् ॥ २२ ॥ ततः स कीदृशोऽभूदित्याह—

मूलम्—स नाणनाणोवगए महेसी, अणुत्तरं चरिउं धम्मसंचयं ।
अणुत्तरेनाणधरे जसंसी, ओभासइ सूरिए वंतलिक्खे ॥ २३ ॥

व्याख्या—स समुद्रपालर्षिर्ज्ञानं श्रुतज्ञानं तेन ज्ञानमवबोधः प्रक्रमात्क्रियाकलापस्य तेनोपगतो युक्तो ज्ञानज्ञानोपगतो महर्षिः, अनुत्तरं चरित्वा धर्मसंचयं क्षांत्यादिधर्मसंचयं, 'अणुत्तरेनाणधरेत्ति' एकारस्यालाक्षणिकत्वात् अनुत्तरज्ञानं केवलाह्वं तद्धरो यशस्वी अवभासते जगति प्रकाशते सूर्य इवान्तरिक्षे इति त्रयोदशसूत्रार्थः ॥ २३ ॥ उपसंहारपूर्वं तस्यैव फलमाह—

मूलम्—दुविहं खवेऊण य पुण्णपावं, निरंगणे सव्वओ विप्पमुक्के ।
तरित्ता समुद्दं व महाभवोहं, समुद्दपालो अपुणागमं गएत्ति बेमि ॥ २४ ॥

व्याख्या—द्विविधं घातिभवोपग्राहिभेदेन द्विभेदं पुण्यपापं शुभाशुभप्रकृतिरूपमर्थात्कर्म क्षिप्त्वा, निरङ्गनः प्रस्तावात्संयमं प्रति निश्चलः शैलेश्यवस्थां प्राप्त इत्यर्थः, सर्वतो बाह्यादाभ्यन्तराच्चाभिष्वंगहेतोर्विप्रमुक्तः, तीर्त्वा समुद्रमिव महाभवौघं देवादिजन्मसन्तानं, समुद्रपालोऽपुनरागमां गतिं मुक्तिं गत इति सूत्रार्थः ॥२४॥ इति ब्रवीमीति प्राग्वत् ॥२१॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय-श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ एकविंशमध्ययनं सम्पूर्णम् ॥ २१ ॥

## ॥ अथ द्वाविंशमध्ययनम् ॥

॥ॐ॥उक्तमेकविंशमध्ययनमथ रथनेमीयाख्यं द्वाविंशमारभ्यते, अस्य चायं सम्बन्धोऽनन्तराध्ययने विविक्तचर्योक्ता, सा च धृतिमता सुकरेति कथञ्चिदुत्पन्नविश्रोतसिकेनापि रथनेमिवद्धृतिराधेयेत्येवं सम्बन्धस्यास्येदमादौ सूत्रम्—

मूलम्—सोरीअपुरम्मि नयरे, आसि राया महिड्डिए। वसुदेवित्ति नामेणं, रायलक्खणसंजुए ॥ १ ॥

व्याख्या—राजलक्षणानि चक्रस्वस्तिकाङ्कुशादीनि शौर्योदार्यादीनि वा, तैः संयुतो राजलक्षणसंयुतः ॥ १ ॥

मूलम्—तस्स भज्जा दुवे आसि, रोहिणी देवई तहा। तासिं दोण्हंपि दो पुत्ता, इट्ठा रामकेसवा ॥२॥

व्याख्या—'दुवे आसित्ति' द्वे अभूतां 'तासिंति' तयोः, इह च पूर्वोत्पन्नत्वेन श्रीनेमिविवाहादावुपयोगित्वेन च रामकेशवयोः पूर्वमभिधानम् ॥ २ ॥

मूलम्—सोरिअपुरम्मि नयरे, आसि राया महिड्डिए। समुद्दविजए नामं, रायलक्खणसंजुए ॥ ३ ॥

व्याख्या—इह पुनः शौर्यपुराभिधानं समुद्रविजयवसुदेवयोरेकत्रावस्थितिदर्शनार्थम् ॥ ३ ॥

मूलम्—तस्स भज्जा सिवा नाम, तीसे पुत्ते महायसे। भयवं अरिट्ठनेमित्ति, लोगनाहे दमीसरे ॥४॥

व्याख्या—'दमीसरेत्ति' दमिनामीश्वरो दमीश्वरः, कौमार एव मारविजयादिति सूत्रचतुष्कार्थः। शेषं प्रतीतमेवमग्रेऽपि ज्ञेयम् ॥ ४ ॥ अत्र प्रसङ्गागतं श्रीनेमीश्वरचरितं किञ्चिदुच्यते, तथा हि—

अत्रैव भरतक्षेत्रे, पुरेऽचलपुरेऽभवत् ॥ निस्सीमविक्रमधनः, श्रीविक्रमधनो नृपः ॥ १ ॥ सधर्मचारिणी तस्य, धारिणीसंज्ञिकाऽभवत् ॥ तयोश्चाभूत्सुतश्चूत—स्वप्नाख्यातो धनाभिधः ॥ २ ॥ कलाकलापमासाद्य, स प्राप्तो यौवनं क्रमात् ॥ रूपेणाप्रतिरूपेण, विजिग्ये निर्जरानपि ॥ ३ ॥ सिंहस्य राज्ञः कुसुम—पुराधीशस्य नन्दनाम् ॥ रूपाधरीकृतरतिं, रतिदां दर्शनादपि ॥ ४ ॥ पट्टालिखिततद्रूपं, वीक्ष्यात्यन्तानुरागिणीम् ॥ धनः कनीं धनवती—मुपयेमेऽन्यदा मुदा ॥ ५ ॥ [ युग्मम् ] श्रिया विष्णुरिव प्रेम्णा, रममाणस्तया समम् ॥ ग्रीष्ममध्यन्दिनेन्येद्यु—र्वनोद्देशं जगाम सः ॥ ६ ॥ तत्र चैकं तृषा शुष्य—द्रसनाधरतालुकम् ॥ घर्मश्रमातिरेकेण, मूर्छितं पतितं क्षितौ ॥ ७ ॥ तपःकृशाङ्गमकृशं, गुणैः शान्तरसोदधिम् ॥ मुनिं ददृशतुर्मार्ग—भ्रष्टं धनवतीधनौ ॥ ८ ॥ [ युग्मम् ] ततस्तौ दम्पती साधुं, तमुपेत्य ससम्भ्रमौ ॥ शीतलैरुपचारैद्राग्, व्यधत्तां प्राप्तचेतनम् ॥ ९ ॥ तं च स्वास्थ्यं गतं नत्वा, धनो विनयवामनः ॥ भदन्तानामवस्थासौ, कुतोऽभूदिति पृष्टवान् ? ॥ १० ॥ वाचंयमोऽप्युवाचैवं, मुनिचन्द्राभिधो ह्यहम् ॥ गुरुगच्छेन संयुक्तो, विहर्तुमचलं पुरा ॥११॥ सार्थाद्भ्रष्टोऽन्यदाटव्यां, मोहाद्भ्राम्यन्नितस्ततः ॥ श्रान्तः क्षुधातृषाक्रान्तो—ऽत्रायातो मूर्छयाऽपतम् ॥ १२ ॥ चेतनां च पुनः प्राप—मुपचारैर्भवत्कृतैः ॥ धर्मलाभोऽस्तु वस्तेन, धर्मसाहाय्यदायिनाम् ॥१३॥ किञ्चार्चामन्तरा चैत्य—मिवार्हद्धर्ममन्तरा ॥ श्लाघ्यं न स्यान्नृजन्मेति, प्रयत्नं तत्र धीधनैः ॥ १४ ॥ इत्युदीर्य तयोर्योग्यं, सम्यक्त्वाणुव्रतादिकम् ॥ श्राद्धधर्मं जिनप्रोक्तं, मुनिचन्द्रमुनिर्जगौ ॥ १५ ॥ ततस्तौ प्रत्यपद्येतां, गृहिधर्मं तदन्तिके ॥ प्रत्यलम्भयतां तञ्च, गृहं नीत्वाऽशनादिना ॥ १६ ॥ ताभ्यां च धर्मशिक्षायै, रक्षितः स महामुनिः ॥ तत्र स्थित्वा कियत्कालं, व्यहार्षीत्तदनुज्ञया ॥ १७ ॥ तौ तु जायापती शुद्धं, श्राद्धधर्मं ततः परम् ॥ पर्यपालयतां स्नेह—मिवान्योन्यमखण्डितम् ॥ १८ ॥ प्रदत्तमन्यदा पित्रा, धनो राज्यमपालयत् ॥ वसुन्धरमुनिस्तत्रा—न्यदा च समवासरत ॥ १९ ॥ तं च ज्ञात्वागतं गत्वा, धनवत्या समं धनः ॥ प्रणम्य भवपाथोधि—नावं शुश्राव देशनाम् ॥ २० ॥ विरक्तः स ततो राज्ये, न्यस्य पुत्रं प्रियान्वितः ॥ प्रव्रज्यामाददे तस्मा—द्गुरोः प्राज्यैर्महोत्सवैः ॥ २१ ॥ सोऽथ गीतार्थतां प्राप्तः, प्राप्याचार्यपदं क्रमात् ॥ व्यहार्षीद्धर्मदानेना—ऽनुगृह्णन् भविनो बहून् ॥ २२ ॥ व्यधत्तानशनं प्रान्ते, धनो धनवतीयुतः ॥ विपद्य तौ च सौधर्मे—ऽभूतां शक्रसमौ सुरौ ॥ २३ ॥

"इतश्च" भरतेऽत्रैव वैताढ्यो—त्तरश्रेणिशिरोमणौ ॥ सूरतेजःपुरे सूर—नामा खेचरचक्रभृत् ॥ २४ ॥ तस्य विद्युन्मती विद्यु—न्मेघस्येवाजनि प्रिया ॥ धनजीवश्च्युतः स्वर्गा—त्तस्याः कुक्षाववातरत् ॥ २५ ॥ पूर्णेऽथ समयेऽसूत, सुतं सा पुण्यलक्षणम् ॥ पिता तस्योत्सवैश्चित्र—गतिरित्यभिधां व्यधात् ॥ २६ ॥ वर्द्धमानः क्रमाज्ञ्यासी—कृता इव गुरोः कलाः ॥ स गृहीत्वाऽखिलाः प्राप, यौवनं रूपपावनम् ॥ २७ ॥

अथ तत्रैव वैताढ्ये-ऽपाच्यश्रेणिस्थितेऽभवत् ॥ भूमानन‌ङ्गसिंहाख्यो, नगरे शिवमन्दिरे ॥ २८ ॥ शशिप्रभांप्रभ-गुणा, तस्य राज्ञी शशिप्रभा ॥ दिवो धनवतीजीव-श्च्युत्वा तत्कुक्षिमागमत् ॥ २९ ॥ क्रमाचाजीजनत्पुत्रीं, पुण्य-रूपां शशिप्रभा ॥ पिता रत्नवतीत्याख्यां, तस्याश्चक्रे महोत्सवैः ॥ ३० ॥ क्रमेण वर्द्धमाना सा, स्वीकृत्य सकलाः कलाः ॥ प्रपेदे यौवनं वर्य-चातुर्यामृतसागरम् ॥ ३१ ॥ कः स्यादस्याः पतिरिति, पृष्टः पित्राऽन्यदा मुदा ॥ ज्ञानी कोऽपि जगौ यस्ते, हर्त्ता दिव्यमसिं करात् ॥ ३२ ॥ यस्योर्द्ध्वं निलयचैत्ये च, पुष्पवृष्टिर्भविष्यति ॥ कनीरत्नमिदं मर्त्य-रत्नं स परिणेष्यति ॥ ३३ ॥ [ युग्मम् ] आच्छेत्ता खड्गरत्नं यो, ममापि स महाबलः ॥ जामाता भवितेत्यन्त-र्मुमुदे भूपतिस्ततः ॥ ३४ ॥

अथात्र भरते चक्र-पुरे सुग्रीवभूभुजः ॥ राज्ञौ यशस्विनीभद्रे, अभूतामति वल्लभे ॥ ३५ ॥ तत्राद्यायाः सुतो जज्ञे, जैनधर्मरतो गुणी ॥ सुमित्रो मित्रवत्सज्जः, सज्जनाब्जप्रमोदने ॥ ३६ ॥ पद्माह्रश्छद्मनां सद्मा-ऽपरस्यास्तु सुतोऽ-भवत् ॥ वैमात्रेयमर्ममीभेजु-रितीव गुणवर्जकः ॥ ३७ ॥ सत्यस्मिन्मम पुत्रस्य, राज्यं स्वप्नेऽपि दुर्लभम् ॥ इति भद्रा सुमित्रस्या-ऽन्यदाऽदाद्द्विपमं विषम् ॥ ३८ ॥ विषेण मूर्च्छिते तेन, सुमित्रे भृशमाकुलः ॥ सुग्रीवस्तस्य मंत्राद्यै-रुप-चारानचीकरत् ॥ ३९ ॥ तैरभूत्तस्य न स्वास्थ्यं, ततः पौरान्वितो नृपः ॥ स्मारं स्मारं सुतगुणा-श्चक्रन्द भृशमुन्मनाः

१ सदृक् । २ अमी गुणाः ॥

॥ ४० ॥ नंष्ट्वा भद्रा त्वगाल्लोकै-र्विपदेयमितीरिता ॥ छन्नं न तिष्ठेत्पापानां, पापं लशुनगन्धवत् ! ॥ ४१ ॥ दैवा-त्तत्रागतश्चित्र-गतिर्व्योम्ना व्रजंस्तदा ॥ विलपन्नृपपौरं त-द्ददर्श पुरमातुरम् ॥ ४२ ॥ ज्ञात्वा च विषवार्त्तां ता-मु-त्तीर्य नभसो द्रुतम् ॥ मंत्राभिमंत्रिताम्भोभिः, सुमित्रमभिषिक्तवान् ॥ ४३ ॥ ततस्तं प्राप्तचैतन्यं, किमेतदितिवादि-नम् ॥ नृपोऽवादीद्विमाता ते, भद्राऽदादुल्वणं विषम् ! ॥ ४४ ॥ अयं चाशमयद्वत्स !, बान्धवो हेतुमन्तरा ॥ तन्नि-शम्य सुमित्रोऽपि, तमित्यूचे कृताञ्जलिः ॥ ४५ ॥ स्वनामवंशाख्यानेन, भ्रातः ! कर्णौ पुनीहि मे ॥ श्रुतं नामादि पुण्याय, त्वादृशां ह्युपकारिणाम् ॥ ४६ ॥ मित्रं चित्रगतेर्नामा-दिकं तस्मै ततोऽब्रवीत् ॥ तदाकर्ण्य प्रमुदितः, सु-मित्रस्तमदोऽवदत् ॥ ४७ ॥ विषेण विपदात्रा च, बहूपकृतमद्य मे ॥ अनभ्रामृतवृष्ट्याभं, नो चेत्त्वद्दर्शनं कुतः! ॥४८॥ जीवितदातुः पातुश्च, बालमृत्यूत्थदुर्गतेः ॥ किं ते प्रत्युपकुर्वेऽहं, घनस्येव जगज्जनः ! ॥ ४९ ॥ सुमित्रं मित्रतां प्राप्तं, वदन्तमिति संमदात् ॥ पप्रच्छ स्वच्छधीर्गन्तुं, स्वपुरं सूरनन्दनः ॥ ५० ॥ ऊचे सुमित्रो विहरन्, सुयशाः केवली सखे ! ॥ इहाऽऽगन्ताऽद्य वा श्वो वा, तं नत्वा गन्तुमर्हसि ! ॥ ५१ ॥ तेनेत्युक्तः स तत्रास्था-त्तौ चोद्यानेऽन्यदा गतौ ॥ तं मुनीन्द्रं वृतं देवैः, स्वर्णाब्जस्थमपश्यताम् ॥ ५२ ॥ तयोर्मुदितयोः सम्यक्, तमानम्य निविष्टयोः ॥ श्रुत्वा सुग्रीवभूपोऽपि, तत्रोपेत्य ननाम तम् ॥ ५३ ॥ तेषामुपादिशद्धर्मं, केवली जगतां हितः ॥ तं चाकर्ण्य मुदा चित्र-गतिरित्यवदन्मुनिम् ॥ ५४ ॥ मित्रस्यास्य प्रसादेन, श्रुत्वा वो देशनामिमाम् ॥ श्राद्धधर्मं प्रपद्येऽहं, प्रभो ! सम्यक्त्वपूर्वकम् ॥ ५५ ॥ इत्युदीर्योल्लसद्वीर्यो, धर्मकार्ये स खेचरः ॥ आददे देशविरतिं, विरतः पापकर्मणः ॥ ५६ ॥

अथेत्यपृच्छत्सुग्रीव-स्तं मुनिन्द्रं कृताञ्जलिः ॥ विषं दत्वाऽस्य मत्सूनोः, सा नंष्ट्वा क्वाऽगमद्विभो ! ॥ ५७ ॥ मुनि-र्जगौ गताऽरण्ये, सा चौरैर्हृतभूषणा ॥ पल्लीशायार्पिता सोऽपि, तामदाद्वणिजां धनैः ॥ ५८ ॥ ततोऽपि नष्टा साऽ-टव्यां, दग्धा दावाग्निना मृता ॥ प्रथमं नरकं प्राप, पापानां क्व नु सद्गतिः ! ५९ ॥ ततस्तु निर्गता प्राप्या-ऽन्त्य-जजायात्वमन्यदा ॥ हता सपत्न्या कलहे, तृतीयां गामिनी भुवम् ॥ ६० ॥ ततस्तूद्धृत्य सा तीर्य-ग्गतौ दुःखानि लप्स्यते ॥ तदाकर्ण्य विरक्तात्मा, प्रोवाचेति गुरून्नृपः ॥ ६१ ॥ यत्कृते दूस्तया चक्रे सोऽस्थात्त्रैव तत्सुतः ॥ जगाम नरकं सा तु, तत्संसारं धिगीदृशम् ॥ ६२ ॥ इत्युदीर्य सुमित्राय, दत्त्वा राज्यं स पार्थिवः ॥ तस्य केवलिनः पार्श्वे, दीक्षां जग्राह साग्रहम् ॥ ६३ ॥ सुमित्रोऽपि समित्रोऽगा-त्पुरे पद्माय चार्पयत् ॥ ग्रामान्कत्यपि स त्वेको, निर्गत्य काप्यगात्कुधीः ॥ ६४ ॥ सुमित्रमन्यदापृच्छ्य, स्वपुरं सूरसूर्ययौ ॥ धर्मकार्ये च नो मित्र-मिव स व्यसरत्कचित् ॥६५॥

अथ रत्नवतीभ्राता, कमलोऽनङ्गसिंहसूः ॥ सुमित्रभगिनी जह्रे, कलिङ्गाधिपतेः प्रियाम् ॥ ६६ ॥ तच्छ्रुत्वा व्या-कुलं ज्ञात्वा, सुमित्रं खेचराननात् ॥ ऊचे चित्रगतिर्जामि-मानेष्येऽन्विष्य सत्वरम् ॥ ६७ ॥ विद्यया तां हृतां ज्ञात्वा, कमलेन बलान्वितः ॥ ययौ चित्रगतिस्तूर्णं, नगरे शिवमन्दिरे ॥ ६८ ॥ कमलेन समं तत्र, व्यग्रहीत्न्यग्रहीच्च तम् ॥

तच्च ज्ञात्वाऽनङ्गसिंहः, क्रुधाऽधावत सिंहवत् ! ॥ ६९ ॥ ततस्तयोरभूद्युद्धं, दारुणेभ्योऽपि दारुणम् ॥ चित्रं च दुर्जेयं ज्ञात्वा-ऽनङ्गस्तं खड्गमस्मरत् ॥ ७० ॥ ज्वालामालाकुलं देव-दत्तं शत्रुमदापहम् ॥ तत्खड्गरत्नं तत्पाणा-वापपात ततो द्रुतम् ॥ ७१ ॥ अनङ्गोऽथ जगौ मूर्ख !, किं मुमूर्षसि याहि रे ! ॥ नो चेदेकोऽपि पञ्चत्वं, गन्ता त्वमसिनाऽमुना ॥ ७२ ॥ ऊचे चित्रगतिर्लोह-खण्डेनानेन यो मदः ॥ स ते स्वबलहीनत्व-मेव सूचयति स्फुटम् ! ॥ ७३ ॥ इत्युक्त्वा विद्यया चक्रे, तमस्कायोपमं तमः ॥ पाणिस्थमपि नापश्य-त्कोऽपि तत्तुल्यलोचनः ॥ ७४ ॥ तमसिं तमसि व्याप्ते, सद्य आच्छिद्य तत्करात् ॥ सुमित्रजामिं चादाय, ययौ चित्रगतिस्ततः ॥ ७५ ॥ क्षणाच्च तिमिरे क्षीणे, नृसिंहोऽनङ्गसिंहराट् ॥ पश्यन्नापश्यत्कृपाणं, पाणौ तं च रिपुं पुरः ॥ ७६ ॥ क्षणं व्यषीदत्स्मृत्वा त-ज्ज्ञानिवाक्यं तुतोष च ॥ ज्ञेयः शाश्वतचैत्येऽसौ, ध्यायंश्चेति गृहं ययौ ॥ ७७ ॥ सुमित्रायाखण्डशीलां, जामिं चित्रगतिर्ददौ ॥ भगिनीहरणोत्पन्न-दुःखात्स तु विरक्तवान् ॥ ७८ ॥ राज्ये न्यस्य ततः पुत्रं, समीपे सुयशोमुनेः ॥ सुमित्रः प्राव्रज-चित्र-गतिस्तु स्वपुरेऽव्रजत् ॥ ७९ ॥ नवपूर्वीं किञ्चिदूना-मधित्यानुज्ञया गुरोः ॥ विहरन्नेकदैकाकी, सुमित्रो मगधेष्वगात् ॥ ८० ॥ तत्र ग्रामाद्बहिः क्वापि, कायोत्सर्गेण तं स्थितम् ॥ भ्रमंस्तत्रागतोऽपश्य-त्पद्माहस्तद्विमातृजः ॥ ८१ ॥ आकर्णं बाणमाकृष्य, मुनिं हृदि जघान सः ॥ मुनिस्तु तस्मै नाकुप्य-दिति चान्तश्चिन्तयत् ! ॥ ८२ ॥ दोषो ममैव यन्नाह-मस्मै राज्यमदां तदा ॥ तदेष क्षमयाम्येन-मन्यांश्चासुमतोऽखिलान् ॥ ८३ ॥ ध्यायन्निति सुमित्रर्षि-र्विहितानशनः सुधीः ॥ विपद्य वासवसमो, ब्रह्मलोके सुरोऽभवत् ॥८४॥ पद्मस्तु निशि तत्रैवा-ऽहिदष्टोऽगात्तमस्तमाम् ! ॥ सुमित्रं च मृतं ज्ञात्वा, व्यषीदत्सूरसूश्चिरम् ॥ ८५ ॥ यात्रामहोत्सवे सिद्धा-यतने सोऽन्यदा ययौ ॥ परेऽपि मिमिलुस्तत्र, भूयांसः खेचराधिपाः ॥ ८६ ॥ रत्नवत्या समं तत्रा-ऽनङ्गसिंहोऽप्युपागमत् ॥ तत्र चित्रगतिर्भक्त्या, जिनानभ्यर्च्य तुष्टुवे ॥ ८७ ॥ मित्रं द्रष्टुं सुमित्रोऽपि, सुरस्तत्रागतस्तदा ॥ चित्रां चित्रगतेर्मूर्ध्नि, पुष्पवृष्टिं व्यधान्मुदा ॥ ८८ ॥ विवेदानङ्गसिंहोऽपि, तमेव दुहितुः पतिम् ॥ प्रत्यक्षीभूय देवोऽपि, किं मां वेत्सीत्युवाच तम् ॥ ८९ ॥ देवो महर्द्धिस्त्वमसिति, प्रोक्ते सूरभुवा सुरः ॥ प्रत्यभिज्ञाकृते पूर्व-भवरूपमदर्शयत् ॥ ९० ॥ ततो मुदा चित्रगति-रित्युचे परिरभ्य तम् ॥ महाभाग ! मया धर्मो, लेभेऽसौ त्वत्प्रसादतः ॥ ९१ ॥ देवोऽवादीदियं लक्ष्मी-स्तदा मे जीवितार्पणात् ॥ त्वयाऽदायि न चेत्तत्र, मृत्यौ देवगतिः क्व मे ? ॥ ९२ ॥ उपकारमिति प्राच्यं, वदन्तौ वीक्ष्य तौ मिथः ॥ सूरचक्रीप्रभृतयः, सर्वेऽमोदन्त खेचराः ॥ ९३ ॥ चित्रो नेत्राध्वना रत्न-वत्याश्चित्तेऽविशत्तदा ॥ तत्स्पर्द्धयेव कामोऽपि, तत्रैव विदधे पदम् ॥ ९४ ॥ लज्जांशुकमपाकृत्य, साथ कामग्रहाकुला ॥ भावमाविश्चकार स्वं, चेष्टितैर्विविधैर्द्रुतम् ॥ ९५ ॥ तां च कामातुरां वीक्ष्या-ऽनङ्गसिंहो व्यचिन्तयत् ॥ ममासिमिव जह्वेऽसौ, मनोऽप्यस्या महामना. ! ॥ ९६ ॥ ददे तदेनामत्रैव, कालक्षेपेण किं मुधा ? ॥ धर्मस्थानेऽथवा कार्यमिदं नार्हति धीमताम् ! ॥ ९७ ॥ ध्यात्वेति स्वगृहं सोऽगा-द्विसृज्याथ सुहृत्सुरम् ॥ पित्रा समं चित्रगति-रपि स्वसदनं ययौ ॥ ९८ ॥ अनङ्गोऽथ सुतां दातुं, प्रैषीन्मंत्रिणमात्मनः ॥ सोऽपि गत्वा प्रणम्यैव-मब्रवीत्सूरचक्रिणम् ॥ ९९ ॥ अयं चित्रगती रत्न-वती चेयं गुणाधिकौ ॥ स्वर्णरत्ने इव स्वामिन् !, मिथो योगाद्विराजताम् ॥ १०० ॥ प्रपद्य तन्मुदा सूर-स्तां सुतेनोदवाहयत् ॥ सोऽपि भेजे यथाकालं, धर्मसौख्ये तया समम् ॥ १०१ ॥ राज्यं चित्रगतेर्दत्वा-ऽन्यदा सूरमहीपतिः ॥ आदाय सद्गुरोर्दीक्षां, क्रमात्प्राप परं पदम् ॥ १०२ ॥ ततश्चित्रगतिश्चित्र-कारिविद्याबलोर्जितः ॥ चिरं खेचरचक्रित्व-मन्वभूचण्डशासनः ॥ १०३ ॥ स्वसामन्तसुतौ राज्य-कृते युद्धा मृतिं गतौ ॥ वीक्ष्याऽन्यदा चित्रगतिः, प्राप वैराग्यमुत्तमम् ॥ १०४ ॥ ततो निधाय तनयं, राज्ये चित्रगतिर्नृपः ॥ पर्यव्राजीद्दमधरा-चार्यपार्श्वे प्रियायुतः ॥ १०५ ॥ चिरं विहृत्य प्रान्ते चा-ऽनशनेन विपद्य सः ॥ रत्नवत्या समं तुर्यकल्पे देवत्वमासदत् ॥ १०६ ॥

अथापरविदेहेषु, विजये पद्मसंज्ञके ॥ पुरे सिंहपुरे नाम्ना, हरिणन्दी नृपोऽभवत् ॥ १०७ ॥ तस्य सान्वर्थनामासीद्राज्ञी तु प्रियदर्शना ॥ च्युत्वा चित्रगतेर्जीव-स्तत्कुक्षाववतीर्णवान् ॥ १०८ ॥ काले चासूत सा पुत्रं, रत्नमाकरभूरिव ॥ तस्याऽपराजित इति, नामधेयं व्यधान्नृपः ॥ १०९ ॥ क्रमेण कलयन् वृद्धि-मादाय सकलाः कलाः ॥ स प्राप पुण्यं तारुण्यं, पूर्णत्वमिव चन्द्रमाः ॥ ११० ॥ सपांशुक्रीडितस्तस्य, वयस्यः सचिवाङ्गजः ॥ जज्ञे विमलबोधाख्यो, द्वितीयमिव तन्मनः ॥ १११ ॥ कुमारावन्यदा वाजि-हृतौ तौ प्रापतुर्वनम् ॥ तदाऽपराजितो मित्रं, मंत्रिपुत्रमदोऽवदत्

॥ ११२ ॥ दिष्ट्याऽऽवाभ्यां हृतावाचां, पित्राज्ञावशयोर्न चेत् ॥ कथं स्यादावयो रम्यं, देशान्तरविलोकनम् ! ॥११३॥ पितृभ्यामावयोः स्नेहे, विरहः साम्प्रतं ततः ॥ न यासावो गृहं किन्तु, द्रक्ष्यावः कौतुकं भुवः ! ॥ ११४ ॥ एवमस्त्विति तं याव–त्प्रत्यूचे सचिवात्मजः ॥ पाहि पाहीतिगिस्ताव–त्तत्रागात्कोऽपि पूरुषः ॥ ११५ ॥ मा भैषीरिति तं भीतं, कुमारो यावदब्रवीत् ॥ कृपाणपाणयस्ताव–दागुस्तत्रोद्भटा भटाः ॥ ११६ ॥ मुषितास्मत्पुरममुं, हनिष्यामो वयं ध्रुवम् ॥ रे पान्थौ ! तद्युवां यात–मिति ते प्रोचिरे च तौ ॥ ११७ ॥ शक्रोऽपि मां श्रितं हन्तुं, न शक्तः के पुनः परे ? ॥ इत्युक्तेऽथ कुमारेणा–ऽधावंस्ते हन्तुमुच्चकैः ॥ ११८ ॥ आकृष्टासिः कुमारस्ता–न्मृगान् सिंह इव न्यहन् ॥ ततो नंष्ट्वा तदूचुस्ते, स्वविभोः कोशलेशितुः ॥ ११९ ॥ सैन्यं प्रैषीन्नृपोऽजैषी–त्कुमारस्तदपि द्रुतम् ॥ कृपीटयोनेः स्फुरतः, पुरः को हि तृणोत्करः ? ॥ १२० ॥ आगात्ततः स्वयं भूप–श्चतुरङ्गचमूवृतः ॥ दत्वाथ सुहृदो दस्युं, सज्जोऽभून्नृपभूर्युधे ॥ १२१ ॥ उत्प्लुत्य दत्तदन्ताङ्घ्रिः, कञ्चिदारुह्य दन्तिनम् ॥ हत्वा धोरणमारेभे, स रणं वारणं गतः ! ॥ १२२ ॥ राज्ञेऽमात्योऽथ कोप्यूचे, दृष्टपूर्व्युपलक्ष्य तम् ॥ ततः सैन्यान्नृपो जन्या–न्निषिध्येति जगाद तम् ॥१२३॥ वत्स ! पुत्रोसि सख्युर्मे, हरिणन्दिक्ष्माभुजः ॥ विक्रमेणामुना वीर !, न पिता हेपितस्त्वया ! ॥ १२४ ॥ दिष्ट्याऽतिथिस्त्वमायासी–र्दिष्ट्या दृष्टोऽसि शिष्ट हे ! ॥ उक्त्वेति तं नृपः स्वेभ–मारोप्य परिषस्वजे ॥ १२५॥ मंत्रिपुत्रान्वितं तं च, नीत्वा निजगृहं नृपः ॥ मुदा व्यवाहयत्पुत्र्या, स्वया कनकमालया ॥ १२६ ॥ तत्र स्थित्वा दिनान्कांश्चि–न्मित्रयुक्तोऽपराजितः ॥ विघ्नो मा भूत्प्रयाणस्ये–त्यनुक्त्वा निरगान्निशि ॥ १२७ ॥ गच्छंश्च विपिने हा ! हा !, निर्वीरोर्वीति रोदनम् ॥ आकर्ण्य करुणं वीर–स्तं शब्दमनु सोऽगमत् ॥ १२८ ॥ अग्रे चैकां ज्वलज्ज्वाला–जिह्वोपान्ते स्थितां स्त्रियम् ॥ नरं चैकं समाकृष्ट–करवालं ददर्श सः ॥ १२९ ॥ योऽत्र वीरः स मामस्मा–त्पातु विद्याधराधमात् ॥ इति भूयस्तदाक्रन्दत्, श्येनात्ता वर्त्तिकेव सा ! ॥ १३० ॥ अथेत्यूचे कुमारस्त–त्परे ! सज्जो भवाजये ॥ अबलायां बलमदः, किं दुर्मद करोषि रे ! ॥१३१॥ सार्थः प्रेतगतौ भीरो–रस्मास्त्वं भवितासि रे ! ॥ ब्रुवन्निति ततः सोऽपि, ढुढौके योद्धुमुद्धतः ॥ १३२ ॥ खड्गाखड्गि चिरं कृत्वा, तौ मिथो घातवञ्चिनौ ॥ दोर्युद्धेन न्ययुध्येतां, कम्पयन्तौ द्रुमानपि ॥ १३३ ॥ नागपाशैर्बबन्धाथ, तं पुन्नागं स खेचरः ॥ तांश्च सोऽत्रोटयत्तूर्णं, जीर्णरज्जूरिव द्विपः ॥ १३४ ॥ विद्याधरोऽथ विद्यास्त्रैः, प्रजहारापराजितम् ॥ तानि न प्राभवन्पुण्य–बलाढ्ये तत्र किंचन ! ॥ १३५ ॥ अथोदिते रवौ मूर्ध्नि, कुमारेणासिना हतः ॥ पपात मूर्च्छितः पृथ्व्यां, सद्यो विद्याधराग्रणीः ॥ १३६ ॥ स्वस्थीकृत्य पुनर्योद्धुं, कुमारेणोदितस्ततः ॥ उवाच खेचरः साधु, मामजैषीर्महाभुज ! ॥ १३७ ॥ विद्येते मित्र ! वस्त्रान्त–ग्रन्थौ मे मणिमूलिके ॥ घृष्ट्वाऽम्बुना मणेर्देहि, प्रहारे मम मूलिकाम् ॥ १३८ ॥ कुमारोऽपि तथा चक्रे, खेचरोऽप्यभवत्पटुः ॥ पृष्टोऽपराजितेनेति, स्ववृत्तान्तं जगाद च ॥ १३९ ॥ असावमृतसेनस्य, सुता विद्याधरप्रभोः ॥ रत्नमालाभिधा शालिगुणरत्नालिमालिनी ॥ १४० ॥ रक्ताऽपराजिते भावि–भर्त्तरि ज्ञानिनोदिते ॥ अभ्यर्थिता मयाऽन्येद्यु–र्विवाहायैवमब्रवीत् ॥ १४१ ॥ [ युग्मम् ] भर्त्ताऽपराजितो मे स्या–द्दहेन्मां दहनोऽथवा ! ॥ तदाकर्ण्याऽकुपं सूर–कान्तः श्रीषेणसूरहम् ॥ १४२ ॥ विद्या वह्वीः कृतेऽमुष्या, दुःसाधा अप्यसाधयम् ॥ एनां च बहुधाऽयाचं, न त्वियं मामममानयत् ॥ १४३ ॥ अथास्याः पूर्यतां वह्नि–दाहात्सन्धेतिधीः क्रुधा ॥ एनामिहानयं हृत्वा, हत्वाऽसौ क्षेप्तुमुद्यतः ! ॥ १४४ ॥ अस्या मम च पुण्यौघै–राकृष्टेन त्वया पुनः ॥ मत्तोऽसौ रक्षिताऽहं च, स्त्रीहत्याभाविदुर्गतेः ! ॥१४५॥ परं [1]परोपकारिन् ! त्वं, कोऽसीति ब्रूहि सन्मते ! ॥ तेनेत्युक्तेऽवदद्भूप–भुवो नामादि मंत्रिसूः ॥ १४६ ॥ तदाकर्ण्य तदा रत्न–मालाऽन्तर्मुमुदेऽधिकम् ॥ कामं [2]कामपृषत्कानां, गोचरत्वमियाय च ॥ १४७ ॥ गवेषयन्तौ तां तत्रा–ऽऽगातां तत्पितरौ तदा ॥ यथावृत्तमथावादी–त्पृच्छन्तो मन्त्रिसूस्तयोः ॥ १४८ ॥ ततस्तौ मुदितौ भूप–भुवेऽदत्तां निजाङ्गजाम् ॥ अभयं सूरकान्ताया–ऽर्पयतां तद्गिरा पुनः ॥ ॥ १४९ ॥ ते मणीमूलिके वेषा–न्तरदा गुटिकास्तथा ॥ कुमारे निःस्पृहे सूर–कान्तो मंत्रिभुवे ददौ ॥ १५० ॥ गते भवि निजं स्थान–मानेयाऽसौ स्वनन्दना ॥ इत्युक्त्वाऽमृतसेनाय, भूपभूः पुरतोऽचलत् ॥ १५१ ॥ तं कुमारं स्मरन्तस्ते, स्वस्थानं खेचरा ययुः ॥ कुमारोऽपि पुरो गच्छ–न्नटव्यां तृषितोऽभवत् ॥ १५२ ॥ निवेश्य तं च चूताधो–ऽमात्यभूरम्भसे गतः ॥ प्रत्यायातस्तदादाय, तत्र मित्रं न दृष्टवान् ॥ १५३ ॥ सोऽथ शोकाकुलो मित्र–मन्वेष्टुं सर्वतो भ्रमन् ॥ मूर्च्छितो न्यपतल्लब्ध–संज्ञस्तु व्यलपदृभृशम्

---

१ परोपकारी 'घ' पुस्तके ॥ २ कामवाणानाम् ॥

॥ १५४ ॥ कथञ्चिद्धैर्यमाधाय, तं द्रष्टुं पर्यटन्पुनः ॥ प्राप्तो नन्दिपुरोद्याने, सोऽतिछायावदुन्मनाः ॥ १५५ ॥ तावदागत्य तं विद्या–धरौ द्वावेवमूचतुः ॥ विद्याधरेन्द्रो भुवन–भानुनामास्ति विश्रुतः ॥ १५६ ॥ तस्य च स्तः कमलिनी–कुमुदिन्याबुभे सुते ॥ भर्त्ता तयोश्च कथितो, ज्ञानिना भवतः सखा ॥ १५७ ॥ स्वामिनाथ तमानेतुं, प्रहितौ तत्र कानने ॥ आवां युवामपश्याव, त्वं चागाः पावसे तदा ॥१५८॥ इत्वाऽऽवां तव मित्रं च–ऽनयाव स्वामिनोऽन्तिके ॥ तं चाभ्युत्थाय भुवन–भानुरासयदासने ॥ १५९ ॥ उद्वोढुं स्वसुते सोऽथ, प्रोक्तो भुवनभानुना ॥ दधौ तूष्णीकतामेव, त्वद्वियोगव्यथाकुलः ॥ १६० ॥ त्वामानेतुं ततः प्रोक्तौ, प्रभुणाऽऽवामिहागतौ ॥ विद्याऽपश्याव पश्यन्तौ, नष्टस्वमिव सर्वतः ! ॥ १६१ ॥ महाभाग ! तदेहि त्वं, सद्योऽस्मत्स्वामिनोऽन्तिके ॥ विधाय क्रीडया सौधं, भूमिष्ठे तस्थुषो घने ॥ १६२ ॥ तदाकर्ण्य समं ताभ्यां, तुष्टोऽगात्तत्र मंत्रिभूः ॥ कुमारोऽपि कुमार्यौ ते, पर्यणैषीत्ततो मुदा ॥ १६३ ॥ ततस्तौ निर्गतौ प्राग्व–द्रतौ श्रीमन्दिरे पुरे ॥ सूरकान्तार्पितमणि–पूर्णच्छौ तस्थतुः सुखम् ॥ १६४ ॥ पुरे तत्रान्यदाकर्ण्य, प्रोच्चैः कलकलारवम् ॥ किमेतदिति सम्भ्रान्तो–ऽपृच्छन्मित्रं नृपाङ्गजः॥१६५॥ सोऽपीत्यूचे जनाज्ज्ञात्वा, सुप्रभोत्रास्ति भूप्रभुः ॥ स च प्रविश्य केनापि, शस्त्र्याऽघानि छलान्निशा ॥ १६६ ॥ राज्ञोऽस्य राज्ययोग्यश्च, सुतादिर्न हि विद्यते ॥ तेनातिव्याकुलैर्लोकै–स्तुमुलोऽसौ विधीयते ! ॥ १६७ ॥ तच्छ्रुत्वाराति–नाघाति, केनाप्ययमिति ब्रुवन् ॥ व्यपीदद्भूपभूः सन्तो, ह्यन्यदुःखेन दुःखिनः ! ॥ १६८ ॥ अथोपायैरप्यजाते, स्वास्थ्ये भूपस्य धीसखान् ॥ ऊचे गाणिक्यमाणिक्य–मिति कामलता रहः ॥ १६९ ॥ वैदेशिकः पुमान्कोऽपि, समित्रो–ऽत्रास्ति सद्गुणः ॥ सम्पद्यमानसर्वार्थः, सदोपायं विनापि हि ! ॥ १७० ॥ तत्पार्श्वे भेषजं किञ्चि–द्भावि श्रुत्वेति तद्गिरम् ॥ उपभूपं कुमारं तं, मंत्रिणो निन्युरादरात् ॥ १७१ ॥ कृपालुः सोऽपि सद्युक्ते, गृहीत्वा मणिमूलिके ॥ मणिनीरेण घृष्ट्वा त–त्प्रहारे मूलिकां न्यधात् ॥ १७२ ॥ ततः सज्जतनू राजा, राजाङ्गजमिदं जगौ ॥ कुतोऽकारणबन्धुस्त्व–मत्रागाः ? सुकृतैर्मम ! ॥ १७३ ॥ तन्मित्रेणाथ तत्रूचे, प्रोक्ते भूयोऽभ्यधान्नृपः ॥ मन्मित्रस्य सुतोऽसि त्वं, दिष्ट्या स्वगृहमागमः ॥ १७४ ॥ इत्युक्त्वा स्वसुतां रम्भा–भिधां तस्मै ददौ नृपः ॥ तत्र स्थित्वा चिरं प्राग्व–त्समित्रो निर्जगाम सः ॥ १७५ ॥ सोऽथ कुण्डपुरोद्याने, गतः स्वर्णाम्बुजस्थितम् ॥ वीक्ष्य केवलिनं भक्त्या, नत्वा शुश्राव देशनाम् ॥ १७६ ॥ भगवन्नस्मि भव्योह–मभव्यो वेति शंस मे ॥ अथापराजितेनेति, पृष्टः प्रोवाच केवली ॥ १७७ ॥ भव्योऽसि जंबूद्वीपस्य, भरते पंचमे भवे ॥ भावी द्वाविंशो जिनस्त्वं, सख्याऽसौ तु गणी तव॥१७८॥ तदाकर्ण्य सहर्षौ तौ, भेजतुस्तं मुनिं चिरम् ॥ मुनौ तु विहृते ग्रामा–दिषु चैत्यानि नेमतुः ॥ १७९ ॥

इतश्च श्रीजनानन्दे, जनानंदकरे पुरे ॥ जितशत्रुरभूद्भूपः, तस्य राज्ञी तु धारिणी ॥ १८० ॥ दिवो रत्नवतीजीवश्च्युत्वा तत्कुक्षिमाययौ ॥ काले चासूत सा प्रीति–मतीसंज्ञां सुतां शुभाम् ॥ १८१ ॥ क्रमेण वर्द्धमाना सा, स्वीकृत्य सकलाः कलाः ॥ आससाद जगज्जैत्रं, वैदग्ध्यमिव यौवनम् ॥ १८२ ॥ तस्याः पुरोऽतिविज्ञाया, जज्ञे प्राज्ञोऽपि बालिशः ॥ ततोऽरज्यत सा क्वाऽपि, पुरुषे न मनागपि ॥ ८३ ॥ तां च कस्ते धवोऽभीष्ट ?, इत्यपृच्छन्नृपोऽन्यदा ॥ सा जगौ मां जयति यो, वादे भर्त्ता ममास्तु सः ! ॥ ८४ ॥ तत्प्रपद्य नृपोऽन्येद्युः, स्वयंवरणमण्डपम् ॥ चारुमञ्चाञ्चितं चित्र–कारिचित्रमचीकरत् ॥ ८५ ॥ तत्र पुत्रवियोगार्त्तं, हरिणन्दिनृपं विना ॥ समं कुमारैरेयुस्त–द्दूताहूता नृपाः समे ॥ ८६ ॥ अधिमञ्चं निषण्णेषु, तेषु दैवात्परिभ्रमन् ॥ समित्रः सद्गुणो मित्र, इवागादपराजितः ॥८७॥ मा दृष्टपूर्वौ नौ ज्ञासी–दिति तौ गुटिकावशात् ॥ रूपं निर्माय सामान्य–मगातां तत्र मण्डपे ॥८८॥ दधाना चारु नेपथ्यं, सखीदासीजनावृता ॥ अथ तत्राययौ प्रीति–मती लक्ष्मीरिवापरा ॥ ८९ ॥ अङ्गुल्या दर्शयन्ती ता–न्नृपान्नृपसुतांस्तथा ॥ तदेति मालतीसंज्ञा, तद्वयस्या जगाद ताम् ॥ ९० ॥ खेचरा भूचराश्चामी, वरीतुं त्वामिहाययुः ॥ तदेषां वीक्ष्य दक्षाणां, दाक्ष्यं वृणु समीहितम् ॥ ९१ ॥ तयेत्युक्ता नृपे यत्र, यत्र प्रायुङ्क्त सा दृशौ ॥ तयोक्त इव कामोपि, तत्र तत्राशुगान्निजान् ॥ ९२ ॥ स्वरेण मधुरेणाथ, पूर्वपक्षं चकार सा ॥ वाग्देवी किमसौ साक्षा–दिति दध्यौ जनस्तदा ? ॥ ९३ ॥ तस्याः प्रतिवचो दातुं, प्रभुष्णुः कोऽपि नाभवत् ॥ विलक्षाः किन्तु सर्वेऽपि, भुवमेव व्यलोकयन् ॥ ९४ ॥ रूपेणैव मनोऽस्माकं, जहारासौ विना तु तत् ॥ क्व शक्तिरुत्तरं दातु–मिति चाहुर्मुहुर्मिथः ॥ ९५ ॥ जितशत्रुस्ततो दध्यौ, सर्वेऽमी सङ्गता नृपाः ॥ योग्यो न चैषु मत्पुत्र्याः, कोऽपि तत्किं

---

१ आशुगान् बाणान् ॥

भविष्यति ? ॥ ९६ ॥ ध्यायन्तमिति तं प्रोचे, भावज्ञः कोऽपि धीसखः ॥ विषादेन कृतं नाथ !, बहुरत्ना हि भूरियम् ॥ ९७ ॥ राजा राजाङ्गजोऽन्यो वा, वादे यो निर्जयेदिमाम् ॥ स एव भर्त्ता स्यादस्या, इतीहोद्घोष्यतां विभो ! ॥ ९८ ॥ ओमित्युक्त्वा नृपोऽप्युच्चै–स्तत्तथैवोदघोषयत् ॥ आगादुपप्रीतिमति, तच्चाकर्ण्याऽपराजितः ॥९९॥ दुर्वेषमपि तं प्रेक्ष्य, पूर्वप्रेम्णा जहर्ष सा ॥ नानन्दयति किं भानु–रभ्रच्छन्नोऽपि पद्मिनीम् ? ॥ २०० ॥ पूर्ववत्पूर्वपक्षं च, चक्रे प्रीतिमती कनी ॥ तां चापराजितोऽजैषी–द्वादे क्वाप्यपराजितः ॥ १ ॥ स्वयंवरस्रजं साथ, तत्कण्ठे क्षिप्रमक्षिपत् ॥ ततः सर्वे नृपाः क्रुद्धा, युद्धायासज्जयन्भटान् ! ॥ २ ॥ कोऽसौ वराको वाक्शूरो–ऽस्मासु सत्स्वुद्वहेदिमाम् ? ॥ वदन्त इति सामर्षं, घोरमारेभिरे रणम् ॥ ३ ॥ हत्वा कंचित्कुमारस्तु, गजस्थं तद्गजस्थितः ॥ युयुधे रथिनं हत्वा क्षणाच्च स्यन्दनस्थितः ॥ ४ ॥ एवं सादी रथी पत्ति–र्निषादी च मुहुर्भवन् ॥ युध्यमानोऽमानशक्तिः, सोऽभांक्षीन्मंक्षु विद्विषः ! ॥ ५ ॥ शास्त्रैः स्त्रिया जिताः शस्त्रै–स्त्वनेनेति त्रपातुराः ॥ भूयः सम्भूय जन्याय, राजन्यास्ते ढुढौकिरे ! ॥ ६ ॥ राज्ञः सोमप्रभस्येभ–मारुरोहाथ भूपभूः ॥ प्रत्यभिज्ञातवांस्तं च, स भूपस्तिलकादिना ॥ ७ ॥ जामेयामेयवीर्य ! त्वां, दिष्ट्याऽवेदमिति ब्रुवन् ॥ सोमः सोममिवोदन्वा–न्मुदा तं परिषस्वजे ! ॥ ८ ॥ तत्स्वरूपेऽथ तेनोक्ते, नृपाः सर्वे जहुर्युधम् ॥ कुमारोऽपि निजं रूप–माविश्चक्रे मनोरमम् ॥ ९ ॥ सर्वोर्वीवल्लभैर्वर्ण्य–मानरूपपराक्रमः ॥ प्रीतः प्रीति-

१ उदन्वान् सागरः ॥

मर्ती सोऽथ, परिणिन्ये शुभेऽहनि ॥ १० ॥ व्यसृजज्जितशत्रुस्ता–न्नृपान् सत्कृत्य कृत्यवित् ॥ प्रीतिमत्या रमन्प्रीत्या, तस्थौ तत्रापराजितः ॥ ११ ॥ हरिणन्दिमहीभर्त्तु–र्दूतस्तत्रागतोऽन्यदा ॥ पित्रोः कुशलमस्तीति, तं चालिंग्य स पृष्टवान् ॥ १२ ॥ दूतोऽवादीत्तयोरस्ति, कुशलं देहधारणात् ॥ तव प्रवासदिवसा–न्नतूद्वान्ति दृशस्तयोः ॥ १३ ॥ त्वद्वृत्तान्तमिमं श्रुत्वा, पितृभ्यां प्रहितोऽस्म्यहम् ॥ तन्निजं दर्शनं दत्वा, तावद्यापि प्रमोदय ॥ १४ ॥ तदाकर्ण्योत्सुकः पित्रो–र्दर्शनायापराजितः ॥ आपृच्छ्य श्वशुरं प्रीति–मत्या सह ततोऽचलत् ॥ १५ ॥ नेन पूर्वमुदूढा या–स्ता आदाय स्वनन्दनाः ॥ नृपाः समे समाजग्मु–स्तत्समीपं तदा मुदा ॥ १६ ॥ खेचरैर्भूचरैश्चापि, स सैन्यैर्पार्थिवैर्वृतः ॥ भार्याभिः शोभितः षड्भिः, सोऽगात्सिंहपुरं क्रमात् ॥ १७ ॥ हरिणन्दी तमायान्तं, श्रुत्वाभ्यागात्प्रमोदभाक् ॥ तं चानमन्तमालिंग्य, चुम्बन्मौलौ मुहुर्मुहुः ॥ १८ ॥ नमन्तं तं च मातापि, पाणिभ्यामस्पृशन्मुहुः ॥ स्नुषाश्च प्रीतिमत्याद्या, नेमुः श्वशुरयोः क्रमात् ॥ १९ ॥ उक्तं विमलबोधेन, श्रुत्वा तद्वृत्तमादितः ॥ पितरौ प्रापतुर्हर्षं, तत्संगोत्थमुदोऽधिकम् ॥ २० ॥ विससर्ज कुमारोऽथ, भूपान्भूचरखेचरान् ॥ तं च न्यस्यान्यदा राज्ये, राजा प्रव्रज्य सिद्धवान् ॥ २१ ॥ तुङ्गैरर्हद्गृहैर्भूमिं, भूषयन्भूषणैरिव ॥ ततोऽपराजितोर्वीश–श्चिरं राज्यमपालयत् ॥ २२ ॥ स राजाऽन्येद्युरुद्याने, गतो मूर्त्या जितस्मरम् ॥ वृतं मित्रैर्वधूभिश्च, महेभ्यं कञ्चिदैक्षत ॥ २३ ॥ गीतासक्तं ददानं च, दानमत्यर्थमर्थिनाम् ॥ तं वीक्ष्य क्ष्मापतिः कोऽसा–विति पप्रच्छ सेवकान् ? ॥ २४ ॥ असौ समुद्रपालस्य, सार्थेशस्य सुतः प्रभो ! ॥ अनङ्गदेवो नाम्नेति, प्रोचिरे तेऽपि भूभुजे ॥ २५ ॥ वणिजा अपि यस्यैव–मुदाराः परमर्द्धयः ॥ सोऽहं धन्य इति ध्यायं–स्ततोऽगान्नृधवो गृहम् ॥ २६ ॥ द्वितीये च दिने वीक्ष्य, शवं यान्तं जनैर्वृतम् ॥ राज्ञा कोऽसौ मृत इति, पृष्टा भृत्या इदं जगुः ॥ २७ ॥ क्रीडन्नदर्शि यः काम–मुद्याने ह्यस्तने दिने ॥ स एवानङ्गदेवोऽसौ, द्राग् विशूचिकया मृतः ! ॥ २८ ॥ अहो ! अशाश्वतं विश्वं, विश्वेऽस्मिन् सान्ध्यरागवत् ॥ ध्यायन्निति ततोऽध्यास्त, वैराग्यं परमं नृपः ॥ २९ ॥ इतश्च यः कुण्डपुरे, पुरा दृष्टः स केवली ॥ तत्रागादन्यदा दीक्षा–योग्यं ज्ञानेन तं विदन् ॥ ३० ॥ धर्मं श्रुत्वा ततो न्यस्य, राज्यं पुत्रेऽपराजितः ॥ तत्पार्श्वे प्राव्रजत्प्रीति–मतीविमलबोधयुक् ॥ ३१ ॥ तपो व्रतं च सुचिरं, तीव्रं कृत्वा त्रयोपि ते ॥ विपद्यैकादशे कल्पे–ऽभुवन्निन्द्रसमाः सुराः ॥ ३२ ॥

इतश्चात्रैव भरते, पुरे श्रीहस्तिनापुरे ॥ श्रीषेणाह्वोऽभवद्भूपः, श्रीमती तस्य च प्रिया ॥३३॥ स्वप्ने शंखोज्ज्वलं पूर्णचन्द्रं मातुः प्रदर्शयन् ॥ जीवोऽपराजितस्यागा–त्तस्याः कुक्षौ दिवश्च्युतः ॥३४॥ सा सुतं समयेऽसूत, पूर्णेन्दुमिव पूर्णिमा ॥ तस्योत्सवैः शङ्ख इति, नामधेयं व्यधात्पिता ॥३५॥ धात्रीभिर्लाल्यमानोऽथ, वृद्धिमासादयन् क्रमात् ॥ गुरोः कलाः स जग्राह, वार्द्धेरप इवाम्बुदः ॥ ३६ ॥ स्वर्गाद्विमलबोधोऽपि, च्युत्वा श्रीषेणमंत्रिणः ॥ नाम्ना गुणनिधेः पुत्रो, जज्ञे नाम्ना मतिप्रभः ॥ ३७ ॥ सोऽभूच्छङ्खकुमारस्य, सपांशुक्रीडितः सखा ॥ मधुस्मराविव वनं, यौवनं तौ सहाऽऽपुताम् ॥ ३८ ॥ अथाऽन्यदा जानपदाः, नृपमेत्यैवमूचिरे ॥ देव ! त्वद्देशसीमाद्रा–वस्ति दुर्गोऽस्तिदुर्गमः ॥ ३९ ॥ नाम्ना

समरकेतुश्च, पल्लीशस्तत्र वर्त्तते ॥ सोऽस्मान् लुण्टति तस्मात्त्वं, रक्ष रक्ष क्षितीश नः ॥ ४० ॥ तन्निशम्य स्वयं तत्र, गन्तुमुक्तो महीशिता ॥ इति शङ्खकुमारेण, नत्वा व्यज्ञपि साग्रहम् ॥ ४१ ॥ शिशुनागे पक्षिराज, इवोद्योगः स्वयं प्रभोः ॥ न युक्तस्तत्र पल्लीशे, तन्मामादिश तज्जये ॥ ४२ ॥ नृपाज्ञया ससैन्येऽथ, शंखे पल्लीमुपागते ॥ दुर्गं विहाय पल्लीशः, प्राविशत् क्वापि गह्वरे ॥ ४३ ॥ सुधीः शंखोऽपि सामन्तं, दुर्गे कंचिदवीविशत् ॥ स्वयं पुनर्निलीयास्था-न्नि-कुञ्जे क्वापि सैन्ययुक् ॥ ४४ ॥ छलच्छेकोऽथ पल्लीशो, यावद्दुर्गं रुरोध तम् ॥ प्रचलैः स्वबलैस्ताव-त्कुमारस्तमवेष्ट-यत् ॥ ४५ ॥ दुर्गप्रविष्टसामन्त-कुमारकटकैरथ ॥ स्थितैरुभयतोऽघानि, भिल्लेशो मध्यगो भृशम् ॥ ४६ ॥ कांदिशी-कस्ततः कण्ठे, कुठारमवलम्ब्य सः ॥ कुमारं शरणीचक्रे, प्राञ्जलिश्चैवमब्रवीत् ॥ ४७ ॥ मायाजालस्य संहर्त्ता, त्वमेव मम धीनिधे ! ॥ तव दासोऽस्मि सर्वस्वं, ममादत्स्व प्रसीद च ॥ ४८ ॥ तेनोपात्तं कुमारोऽथ, दत्वा तत्स्वामिनां धनम् ॥ पल्लीनाथं सहादाय, न्यवर्त्तत पुरं प्रति ॥ ४९ ॥ मार्गे निवेश्य शिबिरं, स्थितो रात्रौ स भूपभूः ॥ श्रुत्वा रुदितमा-त्तासि-र्ययौ शब्दानुसारतः ॥ ५० ॥ किंचिद्गतश्च वीक्ष्याऽर्द्ध-वृद्धां स्त्रीं रुदतीं पुरः ॥ किं रोदिषीति सोऽपृच्छ-त्ततः साप्येवमब्रवीत् ॥ ५१ ॥ अस्त्यंगदेशे चंपायां, जितारिः पृथिवीपतिः ॥ तस्य कीर्त्तिमतीराज्ञ्यां, जज्ञे पुत्री यशोमती ॥ ५२ ॥ कलाकलापकुशला, सा विभूषितयौवना ॥ सानुरूपमपश्यन्ती, वरं न क्वाप्यरज्यत ॥ ५३ ॥ शंखं श्रीषेण-पुत्रं सा-ऽन्यदा श्रुत्वा गुणाकरम् ॥ पतिर्मे शंख एवेति, प्रत्यश्रौषीद्यशोमती ॥ ५४ ॥ ततः स्थानेऽनुरक्तेय-मित्युच्चै-र्मुमुदे नृपः ॥ अयाचताऽन्यदा तां च, मणिशेखरखेचरः ॥ ५५ ॥ तं जितारिर्जगौ नैषा, शङ्खादन्यं वृणुते ॥ ततोऽ-कनीयःकामासौ, कनी ते दीयते कथम् ? ॥ ५६ ॥ सोऽन्यदा तां ततोऽहार्षी-त्सह पार्श्वस्थया मया ॥ असाध्यः कुग्रह इवा-ऽऽग्रहः प्रायो हि रागिणाम् ! ॥ ५७ ॥ मां तु तद्धात्रिकामत्र, हित्वा तामनयत्क्वचित् ॥ ततो रोदिमि वीराहं, भविष्यति कथं हि सा ? ॥ ५८ ॥ धैर्यं स्वीकुरु तं जित्वा-ऽऽनेष्ये तां कन्यकामहम् ॥ इत्युक्त्वा गहने भ्राम्यन्, प्रातः सोऽगाद्गिरौ क्वचित् ॥ ५९ ॥ शङ्ख एव विवोढा मे, मूढ ! किं क्लिश्यसे मुधा ? ॥ इति खेचरमाख्यांतीं, सोऽ पश्यत्तत्र तां कनीम् ॥ ६० ॥ ताभ्यामदर्शि शंखोऽपि, स्मित्वा स्माहाथ खेचरः ॥ मुमूर्षुः सोऽयमत्रागा-द्यं वृणू-षेसि रे जडे ! ॥ ६१ ॥ अमुं त्वदाशया साकं, हत्वा नेष्ये यमौकसि ॥ त्वां च प्रसह्योद्वाह्य, मुदा सह निजौकसि ॥ ६२ ॥ तदाकर्ण्य तमूचेऽथ, शंखोप्युत्तिष्ठ पाप रे ! ॥ परनारीरिरंसां ते, हरामि शिरसा समम् ॥ ६३ ॥ खड्गाखड्गि ततोऽकार्ष्टां, चिरं तौ घातवञ्चिनौ ॥ ज्ञात्वाथ दुर्जयं शंखं, विद्यास्त्रैः खेचरो न्यहन् ॥ ६४ ॥ तानि न प्राभवंस्तत्र, पुण्याढ्ये वाडवेऽम्बुवत् ॥ कुमारोऽथाऽऽच्छिनचापं, युद्धश्रान्तान्नभश्चरात् ॥ ६५ ॥ तद्बाणेनैव शंखेन, खेचरः प्रहतोथ सः ॥ मुमूर्च्छ तत्कृतैः शीतो-पचारैश्चाभवत्पटुः ॥ ६६ ॥ भूयो युद्धाय शंखेनो-त्साहितश्चैवमब्रवीत् ॥ केनाप्यनि-र्जितो दोष्मन् !, माद्यहं निर्जितस्त्वया ! ॥ ६७ ॥ वीर्यक्रीतोऽस्मि दासस्ते, मंतुमेनं क्षमस्व मे ॥ शंखोप्युवाच त्वद्भक्त्या, तुष्टोऽस्मि ब्रूहि कामितम् ॥ ६८ ॥ सोऽवादीन्नित्यचैत्यानां, नत्यै मेऽनुग्रहाय च ॥ एहि पुण्याढ्य ! वैताढ्यं, शंखोऽपि तदमन्यत ॥ ६९ ॥ गुणैः समग्रैरुत्कृष्टं, तं च प्रेक्ष्य यशोमती ॥ भर्त्ता मया वृतः श्रेष्ठ, इत्यन्तर्मुमुदे भृशम् ॥ ७० ॥ तदाजग्मुः खेचराश्च, मणिशेखरमैत्रकाः ॥ तेषु द्वौ प्रेष्य सेनां स्वां, शंखः प्रैषीन्निजे पुरे ॥ ७१ ॥ आनाय्य खेचरैस्तत्र, प्राग्दृष्टां धात्रिकां तु ताम् ॥ धात्रीकनीखेचरयुग्, वैताढ्ये भूपभूर्ययौ ॥ ७२ ॥ तत्र शाश्वतचैत्यस्था-न्प्रणम्याऽऽनर्च सोऽर्हतः ॥ स्वपुरे तं च नीत्वोच्चै-रानर्च मणिशेखरः ॥ ७३ ॥ परेपि खेचरास्तत्र, प्रीता वैरिजया-दिना ॥ पत्तीभूय कुमाराय, ददुर्निजनिजाः सुताः ॥ ७४ ॥ यशोमतीमुदुह्यैव, परिणेष्यामि वः सुताः ॥ शङ्खस्तानि-त्यवक् सा हि, तस्य प्राग्भवगेहिनी ॥ ७५ ॥ स्वस्वपुत्रीरथादाय, यशोमत्या सहान्यदा ॥ मणिशेखरमुख्यास्तं, चम्पां निन्युर्नभश्चराः ॥ ७६ ॥ स्वपुत्र्या खेचरेन्द्रैश्च, सह श्रीषेणनन्दनम् ॥ ज्ञात्वाऽऽयान्तं मुदाऽभ्येत्य, जितारिः स्वपुरेऽन-यत् ॥ ७७ ॥ यशोमतीं खेचरीश्च, तत्र शङ्ख उपायत ॥ श्रीवासुपूज्यचैत्यानां, भक्त्या यात्रां च निर्ममे ॥ ७८ ॥ विसृज्य खेचरांस्तत्र, स्थित्वा कांश्चिद्दिनांश्च सः ॥ पत्नीभिः सह सर्वाभि-र्हस्तिनापुरमीयिवान् ॥ ७९ ॥ शंखं राज्ये-ऽन्यदा न्यस्या-ऽऽददे श्रीषेणराड् व्रतम् ॥ ततः सोऽपालयद्राज्यं, वज्रीव प्राज्यवैभवः ॥ ८० ॥ तत्र श्रीषेणराजर्षि-रन्यदा प्राप्तकेवलः ॥ विहरन्नागमत्तं च, गत्वा शङ्खनृपोऽनमत् ॥ ८१ ॥ श्रुत्वा च देशनां मोह-पङ्कप्लावनवाहिनीम् ॥ मुक्तिकल्पलताबीजं, वैराग्यं प्राप शङ्खराट् ॥ ८२ ॥ राज्यं प्रदाय पुत्राय, तत्पार्श्वे प्राव्रजच्च सः ॥ मतिप्रभेणामा-त्येन, यशोमत्या च संयुतः ॥ ८३ ॥ क्रमाच्च श्रुतपारीणः, कुर्वाणो दुस्तपं तपः ॥ स्थानैरर्हद्भक्तिमुख्यै-रार्जयज्जिन-

नाम सः ॥ ८४ ॥ यशोमतीमंत्रिमुनि–युक्तः शङ्खमुनीश्वरः ॥ प्रान्ते प्रायं प्रपद्यागा–द्विमानमपराजितम् ॥ ८५ ॥

इतश्चात्रैव भरते, पुरे शौर्यपुरेऽभवत् ॥ ज्येष्ठभ्राता दशार्हाणां, समुद्रविजयो नृपः ॥ ८६ ॥ शिवाभिधाऽभवत्तस्य, राज्ञी विश्वशिवङ्करा ॥ च्युत्वाऽपराजिताच्छङ्ख–जीवस्तत्कुक्षिमागमत् ॥ ८७ ॥ सुखसुप्ता तदा देवी, महास्वप्नांश्चतुर्दश ॥ वीक्ष्याधिकां रिष्टरत्न–नेमिं चाख्यन्महीभुजे ॥ ८८ ॥ पृष्टास्तदर्थं राज्ञाऽथ, तज्ज्ञाः प्रातरिदं जगुः ॥ चक्री वा धर्मचक्री वा, युष्माकं भविता सुतः ॥ ८९ ॥ पूर्णे कालेऽथ साऽसूत, राज्ञी विश्वोत्तमं सुतम् ॥दिक्कुमार्योऽभ्येत्य तस्य, सूतिकर्माणि चक्रिरे ॥ ९० ॥ तस्येन्द्रा निखिलाश्चक्रु–र्मेरौ स्नात्रमहोत्सवम् ॥ पार्थिवोऽपि मुदा चक्रे, पुरे जन्ममहोत्सवम् ॥ ९१ ॥ स्वप्ने दृष्टो रिष्टनेमि–र्मात्रास्मिन्गर्भमागते ॥ इति तस्यारिष्टनेमि–रिति नामाऽकरो न्नृपः ॥ ९२ ॥ वासवादिष्टधात्रीभि–र्लाल्यमानो जगत्पतिः ॥ समं जगन्मुदा वृद्धिं, दधदष्टाब्दिकोऽभवत् ॥ ९३ ॥ अथान्यदा यशोमत्या, जीवश्च्युत्वाऽपराजितात् ॥ उग्रसेनधराधीश–धारिण्योस्तनयाऽभवत् ॥ ९४ ॥ राजीमतीति संज्ञा सा, प्राप्ता वृद्धिमनुक्रमात् ॥ कलाकलापमासाद्य, पुण्यं तारुण्यमासदत् ॥ ९५ ॥

इतश्च मथुरापूर्यां, वसुदेवाङ्गजन्मना ॥ विष्णुना निहते कंसे, जरासन्धसुतापतौ ॥ ९६ ॥ क्रुद्धाद्भीता जरासन्धात्सङ्गत्य यदवोऽखिलाः ॥ पश्चिमाम्भोनिधेस्तीरं, जग्मुर्दैवज्ञशासनात् ॥ ९७॥ [ युग्मम् ] तत्र श्रीदोऽच्युताराद्धो, नवयोजनविस्तृताम् ॥ द्वादशयोजनायामां, निर्ममे द्वारकापुरीम् ॥ ९८ ॥ जात्यस्वर्णमयीं तां च, लङ्काशङ्काविधायिनीम् ॥ रामकृष्णदशार्हाद्या, यदवोऽध्यवसन्समे ॥ ९९ ॥ जरासन्धं प्रतिहरिं, हत्वा रामाच्युतौ क्रमात् ॥ भरतार्द्धं साधयिता–ऽभुञ्जातां राज्यमुत्तमम् ॥ ३०० ॥ भगवान्नेमिनाथोऽपि, तत्र क्रीडन् यथासुखम् ॥ प्राप्तोऽपि पुण्यतारुण्यं, तस्थौ भोगपराङ्मुखः ॥ ३०१ ॥ तस्य च प्रभोः रूपादिस्वरूपं प्ररूपयितुमाह सूत्रकारः—

**मूलम्—सो रिट्ठनेमिनामो उ,लक्खणस्सरसंजुओ। अट्ठसहस्स लक्खणधरो,गोअमो कालगच्छवी ॥५॥**

व्याख्या—अत्र 'लक्खणस्सरसंजुओत्ति' स्वरलक्षणानि माधूर्यगाम्भीर्यादीनि तैः संयुतो यः स तथा । अष्टसहस्रलक्षणधरः, अष्टोत्तरसहस्रसंख्यशुभसूचकरेखात्मकचक्रादिधारी। गौतमो गौतमगोत्रः, कालकच्छविः कृष्णत्वक् ॥५॥

**मूलम्—वज्जरिसहसंघयणो, समचउरंसो झसोदरो । तस्स राइमइं कण्णं, भज्जं जाएइ केसवो ॥ ६ ॥**

व्याख्या—'झसोदरो' झषो मत्स्यस्तदाकारमुदरं यस्य सः तथा, तस्यारिष्टनेमेर्भार्यां, कर्तुमिति शेषः, राजीमतीं कन्यां । याचते केशवस्तत्पितरमिति प्रक्रमः ॥ ६ ॥ सा च कीदृशी ? इत्याह—

**मूलम्—अह सा रायवरकण्णा। सुसीला चारुपेहिणी ॥ सव्वलक्खणसंपन्ना, विज्जुसोआमणिप्पहा ॥७॥**

व्याख्या—अथेत्युपन्यासे राज्ञ उग्रसेनस्य वरकन्या राजवरकन्या, सुशीला, चारुप्रेक्षिणी, नाऽधोदृष्टित्वादिदोषदुष्टा 'विज्जुसोआमणिप्पहत्ति' विशेषेण द्योतते विद्युत्सा चासौ सौदामिनी च विद्युत्सौदामिनी तत्प्रभा तद्वर्णेति सूत्रत्रयार्थः ॥ ७ ॥ राजीमतीयाचनं चैवम्—

अथान्यदा विभुः क्रीडन्, शस्त्रशालां हरेर्ययौ ॥ शार्ङ्गश्च धनुरादित्सु–रारक्षेणैवमोच्यत ॥ ३०२ ॥ विना विष्णुमिदं चापं, नान्योऽधिज्ययितुं क्षमः ॥ गिरीशमन्तरा को वा, नागेन्द्रं हारतां नयेत् ॥ ३ ॥ तत्कुमार ! विमुञ्चास्य चापस्य ग्रहणाग्रहम् ॥ अनारम्भो हि कार्यस्य, श्रेयानारभ्य वर्जनात् ! ॥ ४ ॥ तदाकर्ण्य प्रभुः स्मित्वा, द्रुतमादाय तद्धनुः ॥ वेत्रवन्नमयन्नुच्चै–र्लीलयाऽधिज्यमातनोत् ॥ ५ ॥ तेनेन्द्रचापकल्पेन, शोभितो नेमिनीरदः ॥ टङ्कारध्वनिगर्जाभि–र्विश्वं विश्वमपूरयत् ॥ ६ ॥ त्यक्त्वाथ चापमादाय, चक्रं भाचक्रभासुरम् ॥ अङ्गुल्याऽभ्रमयद्धर्म–चक्री चाक्रिकचक्रवत् ॥ ७ ॥ जनार्दनोऽपि यां गृह्ण–न्नायासं लभते भृशम् ॥ हित्वा चक्रं गदां ताम–प्युद्दधौ यष्टिवद्विभुः! ॥८॥ तां च मुक्त्वा पाञ्चजन्यः, स्वामिना योजितो मुखे ॥ स्मेरनीलारविन्दस्थ–राजहंसश्रियं दधौ ॥ ९ ॥ ध्माते च स्वामिना तस्मिन्, विश्वं बधिरतां दधौ ॥ चकम्पिरेऽचलाः सर्वे–ऽचलाप्यासीच्चलाचला ॥ १० ॥ चुक्षुभुर्वार्द्धयो धीरा, अप्युर्व्यां मूर्च्छयाऽपतन् ॥ किमन्यत्तस्य शब्देन, वित्रेसुस्त्रिदशा अपि ! ॥११॥ क्षुभितस्तद्ध्वनेः सिंह–नादाद्गज इवाऽच्युतः ॥ इति दध्यावयं कम्बु–र्ध्मातः केन महौजसा ? ॥ १२ ॥ सामान्यभूस्पृशां क्षोभः, शंखे ध्माते मयाप्यभूत् ॥ ध्मानेनानेन तु क्षोभो, ममाप्युच्चैः प्रजायते ॥१३॥ तद्वज्री चक्रवर्त्ती वा, विष्णुर्वान्यः किमागतः ? ॥ तत्किं कार्यमदो राज्यं, रक्षणीयं कथं मया ॥ १४ ॥ ध्यायन्निति आयुधारक्षै–रेतोदन्तं यथास्थितम् ॥ विज्ञप्तो विष्णुरित्यूचे

१ क्षुब्धो ध्मानाच्छ सिंह–इति "घ" पुस्तके प्रथमपाद ॥

शङ्कातङ्काकुलो बलम् ॥ १५ ॥ इत्थं विश्वत्रयस्यापि, क्षोभो यत्क्रीडयाप्यभूत् ॥ स नेमिरावयो राज्यं, गृह्णन्केन निपत्स्यते ? ॥ १६ ॥ बभाषे सीरभृद्भ्रात-र्मा शंकिष्ठा वृथाऽन्यथा ॥ असावस्मद्भ्रातुरुक्तं हि, स्वरूपं प्राग् जिनैरिदम् ॥ १७ ॥ द्वाविंशोऽरिष्टनेम्यर्हन् , यदुवंशाब्धिचन्द्रमाः ॥ अभुक्तराज्यलक्ष्मीकः, प्रव्रज्यां प्रतिपत्स्यते ! ॥ १८ ॥ किञ्चार्थ्यमानोपि सदा, समुद्रविजयादिभिः ॥ युवाऽपि नो कनीमेका-मप्युद्वहति यः सुधीः ! ॥ १९ ॥ आददीत स किं राज्य-मिदं नेमिर्महाशयः ? ॥ तेनेत्युक्तोऽपि नाशंकां, हरिस्तत्याज तां हृदः ॥ २० ॥ उद्याने च गतं नेमि-मन्यदेति जगाद सः ॥ नियुद्धं कुर्वहे भ्रात-रावां शौर्यं परीक्षितुम् ॥ २१ ॥ ऊचे नेमिर्नियुद्धं नौ, न युक्तं प्राकृतोचितम् ॥ मिथो बलपरीक्षा तु, बाहुयुद्धेन भाविनी ! ॥ २२ ॥ तत्प्रपद्य निजं बाहुं, हरिः परिघमोदरम् ॥ प्रासारयद्वासवेश्म, भरतार्द्धजयश्रियः ॥ २३ ॥ तद्दोर्मदेन सत्रा तं, नमयित्वाऽब्जनालवत् ॥ स्वदोर्दण्डं विभुर्वज्र-दण्डोद्दण्डमदीर्घयत् ॥ २४ ॥ तं च न्यञ्चयितुं सर्वं, स्वसामर्थ्यं समर्थयन् ॥ विलग्नः केशवः शाखा-विलग्नशिशुवद्वभौ ॥ २५ ॥ राज्यमादित्सते यो हि, स सामर्थ्ये सतीदृशे ॥ नेयचिरं विलम्बेत, दध्याविति तदा हरिः ! ॥ २६ ॥ राज्यापहारचिन्तामि-त्यपहाय गृहं गतः ॥ समुद्रविजयेनैव-मन्यदाऽभाणि माधवः ॥ २७ ॥ स्वस्वस्त्रीभिः समं वीक्ष्य, कुमारान् क्रीडतोऽखिलान् ॥ नेमिं चान्यादृशं दृष्ट्वा, भृशं खिद्यामहे वयम् ॥ २८ ॥ कन्योद्वाहं तदस्मै त्वं, वत्सोपायेन केनचित् ॥ वैद्योऽरोचकिने भोज्यं, भेषजेनेव रोचय ! ॥ २९ ॥ तत्प्रपद्य मुकुन्दोऽपि, दिव्यास्त्राणि मनोभुवः ॥ कार्ये तत्रादिशद्रामा-रुक्मिण्याद्या निजाङ्गनाः ! ॥ ३० ॥ तदा च कामिनः कामं, वर्त्तयन्कामशासने ॥ विकारकारितां कार-स्कराणामपि शिक्षयन् ॥ ३१ ॥ मधुमत्तैर्मधुकरै-र्मधुरारवपूर्वकम् ॥ भुज्यमानोत्फुल्लपुष्प-स्तवकव्रततिव्रजः ॥ ३२ ॥ पिकानां पञ्चमोद्गीति-शिक्षणैककलागुरुः ॥ मलयानिलकल्लोल-लोलद्विरहिमानसः ॥ ३३ ॥ उत्साहिताऽनङ्गवीरो, जगज्जननिर्जये ॥ मधूत्सवः प्रववृते, विश्वोत्सवनिबन्धनम् ॥३४॥ [चतुर्भिः कलापकम् ॥] तदा कृष्णोपरोधेना-ऽवरोधे तस्य पारगः ॥ ऋतूचिताभिः क्रीडाभि-श्चिक्रीडाऽकामविक्रियः ॥३३५॥ व्यतीतेऽथ वसन्तर्त्तौ, ग्रीष्मर्त्तुः रामवातरत् ॥ राज्ञः प्राज्ञ इवामात्यो, भानोस्तेजोऽभिवर्द्धयन् ॥ ३६ ॥ तत्रापि भगवान्सत्रा, सावरोधेन विष्णुना ॥ क्रीडागिरौ रैवतके, विजहार तदाग्रहात् ॥ ३७ ॥ जलक्रीडादिकाः क्रीडा-स्तत्र कृष्णोपरोधतः ॥ चकार विश्वालङ्कारो, निर्विकारो जगद्गुरुः ॥ ३८ ॥ रामा रामानुजस्याथ, प्राप्यावसरमन्यदा ॥ सप्रश्रयं सप्रणयं, सहासं चेति तं जगुः ॥ ३९ ॥ देवराद्यो देवराज-जित्वरं रूपमात्मनः ॥ वपुश्चेदं सदारोग्य-सौभाग्यादिगुणाश्चितम् ॥ ४० ॥ शच्या अपि स्मरोन्माद-करमेतच्च यौवनम् ॥ अनुरूपवधूयोगा-त्सफलीकुरु धीनिधे ! ॥ ४१ ॥ [युग्मम्] विना हि भोगान् विफलं, रूपाद्यमवकेशिवत् ॥ विना नारीं च के भोगाः ?, भोगरत्नं हि सुन्दरी ! ॥ ४२ ॥ भवेद्विनाङ्गनां नाङ्ग-शुश्रूषा मज्जनादिना ॥ अस्त्रीकस्य मनोभीष्टं, निःस्वस्येव क्व भोजनम् ? ॥ ४३ ॥ रत्नानीव विना खानिं,

१ भोगान् विना हि विफल—इति "घ" पुस्तके प्रथमपाद. ॥

नन्दनाः क्व विनाङ्गनाम् ? ॥ अस्त्रीकस्यातिथिर्भिक्षो-रिवार्थमपि नाश्नुते ! ॥ ३४४ ॥ यामिन्यपि कथं याति, यूनो युवतिमन्तरा ? ॥ चक्रवाकीं विना पश्य, चक्रस्याब्दायते निशा ! ॥ ३४५ ॥ विना योग्यवधूयोगं, सकलोपि न शोभते ॥ पश्य श्यामावियुक्तस्य, कान्तिः का नाम शीतगोः ! ॥ ३४६ ॥ पाणौ कृत्य ततः काञ्चि-त्कन्यां गुणगणाम्बुधे ! ॥ श्रीदाशार्ह ! दशार्हादि-यदूनां पूरयेर्हितम् ॥ ३४७ ॥ आजन्मस्वैरिणा पण्ढे-नेव धूर्भवता वधूः ॥ निर्वोढुं दुःशका शङ्के, नोद्वाहं कुरुषे ततः ! ॥ ३४८ ॥ तदप्ययुक्तं निर्वोढा, तामप्यस्यानिवाच्युतः ॥ शेषस्याशेषभूधर्त्तु-र्नहि भाराय वल्लरी ! ॥ ३४९ ॥ निर्वाणप्राप्तिभित्यापि, मा भूर्भोगपराङ्मुखः ॥ भुक्तभोगा अपि जिनाः, सिद्धा हि वृषभाद्यः ! ॥ ३५० ॥ दद्याः प्रतिवचो मा वा, धाष्ट्यान्मूकस्य ते परम् ॥ नासत्तो भविता मोक्षो, विवाहाङ्गीकृतिं विना ! ॥३५१॥ इति ताभिः प्रार्थ्यमान-मुपेत्यार्हन्तमादरात् ॥ प्रार्थयन्त तमेवार्थं, रामकृष्णादयोऽपि हि ! ॥३५२॥ बन्धुभिर्बन्धुरैर्वाक्यैः, स निर्बन्धमितीरितः ॥ जिनोऽनुमेने वीवाहं, भावि भावं विभावयन् ! ॥ ३५३ ॥ तमुदन्तं ततो गत्वा, वैकुण्ठोऽकुण्ठसम्मदः ॥ समुद्रविजयायाख्य-न्मुदमुन्मुद्रयन् पराम् ॥३५४॥ योग्यामस्य कुमारस्य, कन्यां वृणु महामते ! ॥ इत्थं समुद्रविजयः, प्रोचे तार्क्ष्यध्वजं ततः ॥ ३५५ ॥ कनीं तदार्हां दाशार्हः, सर्वतोऽन्वेषयंस्ततः ॥ चिन्ताचान्तोऽन्यदा सत्य-भामयैवमभाष्यत ॥ ३५६ ॥ राजीवनयना राजी-मती सद्गुणराजिनी ॥ नेमेरर्हास्ति जामिर्मे, जयन्तीजयिनी श्रिया ! ॥ ३५७ ॥ प्रिये ! साधु ममाहार्षी-श्चिन्तामिति वदंस्ततः ॥ उग्रसेननरेन्द्रस्य, वेश्मो-

१ शण्ढेन धूरिवाजन्म-स्वैरिणा भवता वधूः । इति "घ" पुस्तके ॥

पेन्द्रः स्वयं ययौ ॥ ३५८ ॥ दृष्टः प्रेक्ष्य हृषीकेश-मभ्युत्थाय स पार्थिवः ॥ दत्वासनमपव्याजं, व्याजहार कृताञ्जलिः ॥ ३५९ ॥ किमियानयमायासः, कृतोऽद्य स्वामिना स्वयम् ॥ नाहूतः किमहं प्रेष्य-प्रेषणेन सकिङ्करः ? ॥ ३६० ॥ इदं गृहमियं लक्ष्मी-रिदं वपुरियं सुता ॥ सर्वं विद्धि स्वसान्नाथ !, येनार्थस्तन्निवेद्यताम् ॥ ३६१ ॥ ऊचे मुकुन्दः कुन्दाभ-रदाभाभासुराधरः ॥ मद्भ्रातुर्देहि नेमेस्त्वं, राजन् ! राजीमतीमिमाम् ॥ ३६२ ॥ इत्थं हरिणा याचितायां राजीमत्यां धन्यंमन्यः प्रमोदभरमेदुर उग्रसेननृपो यदूचे तदाह सूत्रकृत्—

मूलम्—अहाह जणओ तीसे, वासुदेवं महिड्ढिअं । इहागच्छउ कुमारो, जासे कन्नं दलामहं ॥ ८ ॥

व्याख्या—अथ याच्ञानन्तरमाह जनकस्तस्या राजीमत्याः 'जासेत्ति' सुब्व्यत्ययाद्येन तस्मै कन्यां ददामि विवाहविधिना उपढौकयाम्यहम् ॥ ८ ॥ इत्थं तेनोक्ते, कृते च द्वयोरपि कुलयोर्वर्द्धापने, आसन्ने च क्रोष्टुक्यादिष्टे विवाहलग्ने यदभूत्तदाह—

मूलम्—सव्वोसहिहिं ण्हविओ, कयकोउअमंगलो । दिव्वजुअलपरिहिओ, भूसणेहिं विभूसिओ ॥ ९ ॥

व्याख्या—सर्वौषधयो जयाविजयर्द्धिवृद्धिप्रमुखास्ताभिः स्नपितोऽभिषिक्तः, कृतकौतुकमङ्गल इत्यत्र ललाटमुशलस्पर्शनादीनि कौतुकानि, मङ्गलानि च दध्यक्षतादीनि । दिव्वेत्यादि-परिहितं दिव्यं युगलमिति देवदूष्ययुगलं येन स तथा, सूत्रे व्यत्ययः प्राकृतत्वात् ॥ ९ ॥

मूलम्—मत्तं च गंधहत्थिं, वासुदेवस्स जिट्ठगं । आरूढो सोहई अहिअं, सिरे चूडामणी जहा ॥ १० ॥

व्याख्या—वासुदेवस्य सम्बन्धिनं ज्येष्ठकमतिशयप्रशस्यं पट्टहस्तिनमित्यर्थः, आरूढः शोभतेऽधिकं, शिरसि यथा चूडामणिः ॥ १० ॥

मूलम्—अह ऊसिएण छत्तेण, चामराहि अ सोहिओ । दसारचक्केण य सो, सव्वओ परिवारिओ ॥ ११ ॥

व्याख्या—उच्छ्रितेन उपरि धृतेन, दसारेत्यादि-दशार्हाः समुद्रविजयादयो वसुदेवान्ता दश भ्रातरस्तेषां चक्रेण समूहेन ॥ ११ ॥

मूलम्—चतुरंगिणीए सेणाए, रइआए जहक्कमं । तुडिआणं सन्निनाएणं, दिव्वेणं गयणंफुसे ॥ १२ ॥

व्याख्या—'रइआएत्ति' रचितया न्यस्तया यथाक्रमं, तूर्याणां सन्निनादेन गाढध्वनिना, दिव्येन प्रधानेन, गगनस्पृशा नभोङ्गणव्यापिना उपलक्षितः ॥ १२ ॥

मूलम्—एआरिसीए इड्ढीए, जुत्तीए उत्तमाए य । नियगाओ भवणाओ, निज्जाओ वण्हिपुंगवो ॥ १३ ॥

व्याख्या—एतादृश्या पूर्वोक्तया ऋद्ध्या विभूत्या, द्युत्या च दीप्त्या उत्तमया उपलक्षितः सन् निजकाद्भवनान्निर्यातो निष्क्रान्तो वृष्णयोऽन्धकवृष्णिसन्तानीया यदवस्तेषु पुङ्गवः प्रधानो भगवानरिष्टनेमिर्गतश्च, जगज्जनमनोहरैर्महामहैर्मण्डपासन्नप्रदेशमिति सूत्रपदकार्थः ॥ १३ ॥ तदा च—

वीक्ष्यायान्तं गवाक्षस्था, नेमिं राजीमती कनी ॥ वचोऽगोचरमापन्ना-ऽऽनन्दमेवमचिन्तयत् ॥ ३६३ ॥ किमाश्विनोऽसौ सूर्यो वा, स्मरो वा मघवाऽथवा ॥ मर्त्यमूर्त्तिं श्रितः पुण्य-प्राग्भारोऽसौ ममैव वा ? ॥ ३६४ ॥ भर्त्ता मे विदधे येन, वेधसाऽसौ सुमेधसा ॥ कां प्रत्युपक्रियां तस्मै, करिष्येऽहं महात्मने ? ॥ ३६५ ॥ काहं किं जायते कोऽसौ, कालस्तिष्ठाम्यहं क्व वा ? ॥ इत्यज्ञासीन्न सा नेमि-दर्शनोत्थमुदा तदा ! ॥ ३६६ ॥ अत्रान्तरे स्फुरत्तस्या, मंक्षु दक्षिणमीक्षणम् ॥ तचोद्विग्नमनाः सद्यः, सा सखीनां न्यवेदयत् ॥ ३६७ ॥ ऊचुः सख्यो हतं पापं, सा खिद्यस्व महाशये ! ॥ इयतीं भुवमायातो, न हि नेमिर्वलिष्यते ! ॥ ३६८ ॥ राजीमती जगौ जाने, स्वभाग्यप्रत्ययादहम् ॥ इहागतोऽपि गन्ताय-मुद्वोढा न तु मां प्रभुः ! ॥ ३६९ ॥ अत्रान्तरे च यदभूत्तत्सूत्रकृदेव दर्शयति—

मूलम्—अह सो तत्थ निज्जंतो, दिस्स पाणे भयद्दुए । वाडेहिं पंजरेहिं च, सन्निरुद्धे सुदुक्खिए ॥ १४ ॥

व्याख्या—अथानन्तरं सोऽरिष्टनेमिस्तत्र मण्डपासन्ने प्रदेशे निर्यन्नधिकं गच्छन् 'दिस्सत्ति' दृष्ट्वा, प्राणान् प्राणिनो मृगादीन्, भयद्रुतान् भयत्रस्तान्, वाटैर्वाटकैः, पञ्जरैश्च सन्निरुद्धान् गाढनियंत्रितान्, अत एव सुदुःखितान् ॥ १४ ॥

मूलम्—जीवीअंतं तु संपत्ते, मंसट्ठा भक्खिअव्वए । पासित्ता से महापण्णे, सारहिं पडिपुच्छइ ॥ १५ ॥

व्याख्या—जीवितान्तं मरणावसरं सम्प्राप्तान्, मांसार्थं मांसोपचयनिमित्तं भक्षयितव्यानविवेकिभिरिति शेषः, 'पासित्तत्ति' उक्तविशेषणविशिष्टान् हृदि निधाय भगवान्, महती प्रज्ञा ज्ञानत्रयात्मिका यस्य स तथा, सारथिं हस्तिनः प्रवर्त्तकं हस्तिपकमित्यर्थः, प्रतिपृच्छति ॥ १५ ॥

मूलम्—कस्स अट्ठा इमे पाणा, एए सव्वे सुहेसिणो। वाडेहिं पंजरेहिं च, सन्निरुद्धे अ अच्छहिं ॥१६॥

व्याख्या—कस्यार्थाद्धेतोरिमे प्राणाः प्राणिन एते सर्वे, इमे इत्यनेनैव गते एते इति पुनः कथनमतिसम्भ्रमख्यापकं, 'सन्निरुद्धे अत्ति' सन्निरुद्धाश्चः पूरणे 'अच्छहिंति' तिष्ठन्ति ॥ १६ ॥ एवं भगवतोक्ते—

मूलम्—अह सारही तओ भणइ, एए भद्दा उ पाणिणो। तुब्भंविवाहकज्जंमि, भुंजावेउं बहुं जणं१७

व्याख्या—'भद्दाउत्ति' भद्रा एव कल्याणा एव, न तु शृगालादिकुत्सिताः। तव विवाहकार्ये गौरवादौ भोजयितुं बहुं जनं रुद्धाः सन्तीति शेषः १७ ॥ इत्थं सारथिनोक्ते यत्प्रभुश्चक्रे तदाह—

मूलम्—सोऊण तस्स सो वयणं, बहुपाणविणासणं। चिंतेइ से महापण्णे, साणुक्कोसे जिए हि उ॥१८॥

व्याख्या—बहुपाणेत्यादि-बहूनां प्राणानां प्राणिनां विनाशनं वाच्यं यस्य तद्बहुप्राणविनाशनं, स प्रभुः सानुक्रोशः सकरुणः, 'जिएहि उत्ति' जीवेषु, तुः पूर्त्तौ ॥ १८ ॥

मूलम्—जदि मज्झ कारणा एए, हम्मंति सुबहू जिआ। न मे एअं तु निस्सेसं, परलोए भविस्सइ १९

व्याख्या—यदि मम कारणात् हेतोः 'हम्मंतित्ति' हनिष्यन्ते सुबहवो जीवाः, न मे एतज्जीवहननं निःश्रेयसं कल्याणं परलोके भविष्यति। भवान्तरेषु परलोकभीरुत्वस्य भृशाभ्यासादेवमभिधानं, अन्यथा चरमदेहत्वादतिशयज्ञानित्वाच्च भगवतः कथमियं चिन्ता स्यात्? ॥१९॥ ततश्च ज्ञातजिनाशयेन सारथिना मोचितेषु तेषु परितोषाद्यत्प्रभुश्चक्रे तदाह—

मूलम्—सो कुंडलाण जुअलं, सुत्तगं च महायसो। आहरणाणि अ सव्वाणि, सारहिस्स पणामए॥२०॥

व्याख्या—'सुत्तगं चत्ति' कटीसूत्रं, आभरणानि च सर्वाणि शेषाणि 'पणामएत्ति' अर्पयतीति सूत्रसप्तकार्थः॥२०॥ ततो यदभूत्तदुच्यते—

अवलिष्ट ततः स्वामी, सद्यो वक्र इव ग्रहः ॥ करुणारसपाथोधि-र्विश्वजन्तुहितावहः ! ॥ ३७० ॥ शिवासमुद्रविजयौ, पुरो भूय तदा प्रभुम् ॥ इत्यूचतुरजस्राश्रु-धारामेघायितेक्षणौ ! ॥ ३७१ ॥ किं वत्सास्मत्प्रमोदद्रु-मुन्मूलयसि मूलतः ॥ किं खेदयसि कृष्णादीन्, स्वीकृतत्यागतो यदून् ? ॥ ३७२ ॥ भवत्कृते स्वयं गत्वा, वृतपूर्वी तदङ्गजाम् ॥ अथोग्रसेनस्य कथं, हरिर्दर्शयिता मुखम् ? ॥ ३७३ ॥ कथं वा भाविनी जीव-न्मृता राजीमती कनी? ॥ भर्तृहीना हि नाभाति, स्त्री विनेन्दुमिव क्षपा ! ॥ ३७४ ॥ कृत्वोद्वाहं तदस्माकं, दर्शय स्ववधूमुखम् ॥ प्रथमप्रार्थनामेनां, सफलीकुरु वत्स ! नः ॥ ३७५ ॥ बभाण भगवान्पूज्याः !, श्लथयन्त्वेनमाग्रहम् ॥ प्रवर्त्त्यते हितेऽर्थे हि, स्वाभीष्टो नाऽपरे पुनः ॥ ३७६ ॥ यत्पाणिपीडनेप्येवं, भवति प्राणिपीडनम् ॥ अचिराद्यासु चासक्तः, प्राणी प्राप्नोति दुर्गतिम् ! ॥ ३७७ ॥ तासां स्त्रीणां सङ्गमेन, मुक्तिकामस्य मे कृतम् ॥ कृती हि यतते प्रेत्य-हिते नाऽऽपातसुन्दरे ! ॥ ३७८ ॥ [ युग्मम् ] वदन्तमिति तं सार्वं, सर्वे कम्पितविष्टराः ॥ तीर्थं प्रवर्त्तयेत्यूचु-रेत्य लाकान्तिकामराः ॥ ३७९ ॥ समुद्रविजयादींश्च, ते देवा एवमूचिरे ॥ शुभवन्तो भवन्तः किं, विषीदन्ति मुदः पदे ? ॥ ३८० ॥ अयं हि भगवान् दीक्षा-मादायोत्पन्नकेवलः ॥ चिरं मोदयिता विश्व-त्रयं तीर्थं प्रवर्त्तयन् ! ॥ ३८१ ॥ मुदितेषु तदाकर्ण्य, समुद्रविजयादिषु ॥ गृहं गत्वाऽऽब्दिकं दानं, दातुं स्वामी प्रचक्रमे ॥ ३८२ ॥

इतश्च वलितं वीक्ष्य, नेमिं शोकभरातुरा ॥ राजीमती क्षितौ वज्रा-हतेवाचेतनाऽपतत् ॥ ३८३ ॥ वयस्याः विहितैः शीतो-पचारैश्चासचेतना ॥ दुःखोद्गारोपमांश्चक्रे, विलापानिति दुःश्रवान् ! ॥ ३८४ ॥ दोषं विनापि रक्तां मां, त्यक्त्वा नाथ ! कुतोऽगमः ? ॥ त्वादृशां हि विशां भक्त-जनोपेक्षा न युज्यते ! ॥ ३८५ ॥ सन्त्यजन्ति महान्तो हि, सदोषमपि नाश्रितम् ॥ जहात्यङ्कमृगं नेन्दु-र्नैवाब्धिर्वडवानलम् ! ॥ ३८६ ॥ सत्यप्येवं यदि त्याज्यां, मामज्ञासीर्जगत्प्रभो ! ॥ तदा किमर्थं स्वीकृत्य, विवाहं मां व्यडम्बयः ? ॥ ३८७ ॥ यद्वा ममैवासौ दोषो-ऽरज्यं यत्त्वयि दुर्लभे ॥ काक्या एव हि दोषोऽयं, यद्रज्यति सितच्छदे ! ॥ ३८८ ॥ रूपं कला कुशलता, लावण्यं यौवनं कुलम् ॥ त्वया स्वीकृत्य मुक्तायाः, सर्वं मे विफलं विभो ! ॥ ३८९ ॥ निर्यान्तीवाऽसवो वक्षः, स्फुटतीव ममोच्चकैः ॥ ज्वलतीव वपुः कान्त !, त्वद्वियोगव्यथाभरैः ! ॥ ३९० ॥ पशुष्वासीः कृपालुस्त्वं, यथा मयि तथा भव ॥ त्वादृशा हि महात्मानः, पंक्तिभेदं न कुर्वते ! ॥ ३९१ ॥ दृशा गिरा च मां रक्तां, विभो ! सम्भावयैकशः ॥ को हि वेत्ति विनाऽऽस्वादं, मधुरं कटु वा फलम् ? ॥ ३९२ ॥ यद्वा सिद्धिवधूत्कस्य, तव सापि पुलोमजा ॥ मनो हरति नो तर्हि, क्वाहं मानुषकीटिका ? ॥ ३९३ ॥ इत्युच्चैर्विलपन्तीं तां, कनीं सख्योऽवदन्निदः ॥ मा रोदः सखि ! यात्वेष, नीरसो निष्ठुराग्रणीः ॥ ३९४ ॥ भूयांसोऽन्येपि विद्यन्ते, हृद्या यदुकुमारकाः ॥ स्वानुरूपं वरं तेषु, वृणुयास्त्वं मनोहरम् ॥३९५॥

ततः कर्णौ पिधायैव-मूचे राजीमती सती ॥ किमेतदूचे युष्माभि-र्ममापि प्राकृतोचितम् ॥ ३९६ ॥ निशा भजति चेद्भानुं, वृहद्भानुं च शीतता ॥ तथाऽपि नेमिं मुक्त्वाहं, कामये नाऽपरं नरम्! ॥३९७॥ नेमेः पाणिर्विवाहे चे-न्मत्पाणौ न भविष्यति ॥ तदा भावी व्रतादान-क्षणे मे मूर्ध्नि तस्य सः! ॥ ३९८ ॥ आशयोऽयं तवोत्कृष्टो, जगतोऽपि महाशये! ॥ इत्यूचानास्ततः प्रोच्चैः, स्वसखीः सा सतीत्यवक् ॥ ३९९ ॥ स्वप्नेऽद्यैरावणारूढो, दृष्टः कोऽपि पुमान्मया ॥ मद्वेश्मोपेत्य स क्षिप्रं, निवृत्याध्यास्त मन्दरम् ॥ ४०० ॥ सुधाफलानि चत्वारि, तत्रस्थश्च ददद्दिशाम् ॥ स मया याचितो मह्य-मपि तानि ददौ द्रुतम् ॥ १ ॥ सख्योऽप्याख्यन्मा विषीदः, क्षीणा विघ्नास्तवानघे! ॥ आपाततकटुकोऽप्येष, स्वप्नो ह्यायति सुन्दरः! ॥ २ ॥ ध्यायन्ती सा ततो नेमिं, तस्थौ गेहे कथंचन ॥ प्रभुरप्यन्यदा जज्ञे, व्रतमादातुमुद्यतः ॥ ३ ॥ अथ यथा प्रभुः प्राव्राजीत्तथा सूत्रकृदेव दर्शयति—

मूलम्—मणपरिणामो अ कओ, देवा य जहोइअं समोइण्णा।
सविड्डीइ सपरिसा, निक्खमणं तस्स काउं जे ॥ २१ ॥

व्याख्या—मनः परिणामश्च कृतो निष्क्रमणम्प्रतीति शेषः, देवाश्च चतुर्निकाया यथोचितं समवतीर्णाः, सर्वर्द्ध्या युक्ता इति शेषः, सपर्षदो निजनिजपरिच्छदपरिवृताः, निष्क्रमणमिति प्रस्तावान्निष्क्रमणोत्सवं तस्यारिष्टनेमेः कर्तुम् 'जे' पूर्त्तौ ॥ २१ ॥

मूलम्—देवमणुस्सपरिवुडो, सीआरयणं तओ समारूढो।
निक्खमिअ बारयाओ, रेवययंमि ट्ठिओ भयवं ॥ २२ ॥

व्याख्या—'सीआरयणंति' शिबिकारत्नं सुरकृतमुत्तरकुरुसंज्ञं, निष्क्रम्य द्वारकातो द्वारकापुर्याः, रैवतके स्थितो भगवान् ॥ २२ ॥

मूलम्—उज्जाणं संपत्तो, ओइण्णो उत्तिमाओ सीआओ।
साहस्सीइ परिवुडो, अभिनिक्खमई उ चित्ताहिं ॥ २३ ॥

व्याख्या—तत्रापि गिरौ उद्यानं सहस्राम्रवणसंज्ञं सम्प्राप्तस्तत्र चावतीर्णः, 'सीआओत्ति' शिबिकातः 'साहस्सीएत्ति' पुरुषाणामितिशेषः, परिवृतः। अथ वर्षशतत्रयं गार्हस्थ्ये स्थित्वा निष्क्रामति। तुः पूर्त्तौ, 'चित्ताहिंति' चित्रानक्षत्रे, अस्य प्रभोः पञ्चस्वपि कल्याणकेषु तस्यैव भावात् ॥ २३ ॥ कथमित्याह—

मूलम्—अह सो सुगंधगंधिए, तुरिअं मउअकुंचिए। सयमेव लुंचई केसे, पंचमुट्ठीहिं समाहिओ २४

व्याख्या—सुगन्धगन्धिकान्स्वभावत एव सुरभिगन्धीन् त्वरितं मृदुककुञ्चितान् कोमलकुटिलान् स्वयमेव लुञ्चति केशान्, पञ्चमुष्टिभिः समाहितः सर्वसावद्ययोगत्यागेन समाधिमान् ॥ २४ ॥ एवमुपात्तदीक्षे मनःपर्यायज्ञानं प्राप्ते च जिने—

मूलम्—वासुदेवो य णं भणइ, लुत्तकेसं जिइंदिअं। इच्छिअमणोरहं तुरिअं, पावेसू तं दमीसरा ॥२५॥

व्याख्या—वासुदेवश्चशब्दात् बलभद्रसमुद्रविजयादयश्च 'णंति' एनं नेमिजिनं भणति लुप्तकेशं जितेन्द्रियं, इप्सितमनोरथं महोदयावाप्तिरूपं प्राप्नुहि त्वं हेदमीश्वर! जितेन्द्रियशिरोमणे! ॥ २५ ॥

मूलम्—नाणेणं दंसणेणं च, चरित्तेण तवेण य। खंतीए मुत्तीए, वड्ढमाणो भवाहि अ ॥ २६ ॥

मूलम्—एवं ते रामकेसवा, दसारा य बहुजणा। अरिट्ठनेमिं वंदित्ता, अइगया बारगाउरिं ॥ २७ ॥

व्याख्या—'वंदितत्ति' वन्दित्वा स्तुत्वा नत्वा च, अतिगताः प्रविष्टाः ॥ २६ ॥ २७ ॥ तदा च त्रुटितनतमङ्गमाशा राजीमती कीदृशी बभूवेत्याह—

मूलम्—सोऊण रायवरकन्ना, पव्वज्जं सा जिणस्स उ। नीहासा य निराणंदा, सोगेण उ समुच्छया ॥२८॥

व्याख्या—'नीहासत्ति' निर्हासा हास्यरहिता निरानन्दा च शोकेन समवस्तृता आच्छादिता ॥ २८ ॥

मूलम्—राईमई विचिंतेइ, धिरत्थु! मम जीविअं। जा हं तेण परिच्चत्ता, सेअं पव्वइउं मम ॥ २९ ॥

व्याख्या—'जाहंति' यद्यहं तेनाऽरिष्टनेमिना परित्यक्ता तर्हि श्रेयोऽतिप्रशस्यं प्रव्रजितुं मम यथान्यजन्मन्यपि नेदृशं दुःखं स्यात्, यथा च सत्यः पत्यनुयायिन्यो भवन्तीति वाक्यं सत्यापितं भवतीति सूत्रनवकार्थः ॥२९॥ इतश्च—

रथनेमिः प्रभोर्भ्राता, रक्तो राजीमतीं कनीम् ॥ फलपुष्पविभूषादि–दानैर्नित्यमुपाचरत् ॥ ४ ॥ अयं हि सोदरस्नेहा–त्सर्वमेतद्ददाति मे ॥ ध्यायन्तीत्याददेऽशेषं, दत्तं तेनोग्रसेनजा ॥ ५ ॥ स तु तद्ग्रहणादेव, स्वानुरक्तां विवेद ताम् ॥ काचकामलिवत्कामी, ह्यन्यथाभावमीक्षते ! ॥ ६ ॥ तां चेत्युवाच सोऽन्येद्यु–र्मा विषीदः सुलोचने ! ॥ निरागो नेमिरत्याक्षी–द्यदि त्वां तर्हि तेन किम् ? ॥ ७ ॥ मां प्रपद्यस्व भर्त्तारं, कृतार्थय निजं वयः ॥ त्वां हि कामं कामयेऽहं, मालतीमिव षट्पदः ॥ ८ ॥ सा प्रोचे यद्यपि त्यक्ता, नेमिनाहं तथापि हि ॥ शिष्या तस्य भविष्यामि, तत्किं प्रार्थनयाऽनया ? ॥ ९ ॥ तयेत्युक्तः स तूष्णीक–स्तस्थौ न तु जहौ स्पृहाम् ॥ कामुको हि निषिद्धोऽपि, नेच्छां शुन इव त्यजेत् ! ॥ १० ॥ रथनेमिरथान्येद्यु–स्सतीं राजीमतीं रहः ॥ इत्युवाच पुनर्वाचा, मदनद्रुमकुल्यया ॥११॥ रक्ता नेमौ विरक्तेऽपि, शुष्के काष्ठ इवालिनी ॥ मृगाक्षि ! दक्षाप्यात्मानं, सन्तापयसि किं मुधा ? ॥ १२ ॥ हन्ताऽहं तव दासः स्या–माजन्म स्वीकरोषि चेत् ॥ भोगान् भुंक्ष्व विना तान् हि, विदो जन्माऽफलं विदुः ! ॥ १३ ॥ तदाकर्ण्य पपौ क्षीरं, तस्य पश्यत एव सा ॥ स्थाले पुरःस्थे मदन–फलाघ्राणेन चावमत् ॥ १४ ॥ पयः पिबेदमित्यूचे, रथनेमिं च सा सती ॥ सोऽब्रवीत्किमहं श्वास्मि ?, यदुद्वान्तं पिबाम्यदः ! ॥ १५ ॥ स्मित्वा राजीमती स्माह, जानाति किमिदं भवान् ? ॥ सोऽवदच्छिशुरप्येत–द्वेत्ति नो वेद्म्यहं कुतः ? ॥ १६ ॥ ऊचे राजीमती तर्हि, मां वान्तामपि नेमिना ॥ भोक्तुमिच्छन्कुतो मूढ!, कुर्कुरत्वं प्रपद्यसे ? ॥१७॥ ततो विमुक्ततत्कामो, रथनेमिरगाद्गृहम् ॥ सती सापि सुखं तस्थौ, तप्यमानोत्तमं तपः ॥ १८ ॥

इतश्च नेमिश्छद्मस्थ–श्चतुष्पञ्चाशतं दिनान् ॥ ग्रामादिषु विहृत्यागा–द्भूयो रैवतकाचलम् ॥ १९ ॥ तत्राष्टमतपाः स्वामी, ध्यानस्थः प्राप केवलम् ॥ इन्द्राः सर्वे समं देवै–स्तत्रागुः कम्पितासनाः ॥ २० ॥ निर्मिते तैश्च समव–सरणे शरणे श्रियाम् ॥ उपविश्य चतुर्मूर्तिः, प्रारेभे देशनां प्रभुः ॥ २१ ॥ ज्ञानोत्पत्तिं प्रभोर्ज्ञात्वो–द्यानपालाद्बलाच्युतौ ॥ राजीमती दशार्हाश्चा, यदवोऽन्येपि भूस्पृशः ॥ २२ ॥ तत्र गत्वा जिनं नत्वा, यथास्थानं निविश्य च ॥ शुश्रुवुर्देशनां रम्या–मुद्वेलानन्दवार्द्धयः ॥ २३ ॥ [ युग्मम् ] श्रुत्वा तां देशनां बुद्धा, राजानोऽन्ये च मानवाः ॥ नार्यश्च प्राव्रजन् प्राज्याः, केचित्तु श्राद्धतां दधुः ॥ २४ ॥ गणिनो वरदत्ताद्या–स्तेषु चाष्टादशाऽभवन् ॥ द्वादशाङ्गीकृतः सद्य–स्त्रिपद्या स्वामिदत्तया ॥ २५ ॥ रथनेमिरपि स्वामि–पार्श्वे प्राव्रजदन्यदा ॥ राजीमती च सुमतिः, कन्याभिर्बहुभिः समम् ॥ २६ ॥ एतच्च सूत्रकारोऽपि दर्शयति—

**मूलम्—अह सा भमरसन्निभे, कुच्चफणगपसाहिए । सयमेव लुंचई केसे, धिइमंता ववस्सिआ ॥३०॥**

व्याख्या—सा राजीमती भ्रमरसन्निभान्, कूर्चो मूढकेशोन्मोचको वंशमयः, फणकः कङ्कतकस्ताभ्यां प्रसाधितान् संस्कृतान् धृतिमती स्वस्थचित्ता व्यवसिता कृतोद्यमा धर्मम्प्रतीति शेषः ॥ ३० ॥ ततश्च—

**मूलम्—वासुदेवो य णं भणइ, लुत्तकेसं जिइंदिअं । संसारसायरं घोरं, तर कण्णे ! लहुं लहुं ॥३१॥**

व्याख्या—'लहुं लहुंत्ति' लघु लघु शीघ्रं शीघ्रम्, सम्भ्रमे द्विर्वचनम् ॥ ३१ ॥ ततः—

**मूलम्—सा पव्वइआ संती, पव्वावेसी तहिं बहुं । सयणं परिअणं चेव, सीलवंता बहुस्सुआ ॥ ३२॥**

व्याख्या—'पव्वावेसित्ति' प्रव्राजयामासेति सूत्रत्रयार्थः ॥ ३२ ॥ तदुत्तरवक्तव्यतामाह—

**मूलम्—गिरिं च रेवयं जंती, वासेणोल्ला उ अंतरा । वासंते अंधयारम्मि, अंतो लयणस्स सा ठिआ ३३**

व्याख्या—गिरिं च रैवतं यान्ती, स्वामिनं नन्तुमिति शेषः । वर्षेण वृष्ट्या 'उल्लत्ति' आर्द्रा क्लिन्नाम्बरा, अन्तराऽर्द्धमार्गे 'वासंतेत्ति' वर्षति मेघे इति गम्यं, अन्धकारे प्रकाशरहिते, लयनस्य गिरिगुहाया अन्तर्मध्ये, सा राजीमती स्थिता ॥ ३३ ॥ तत्र च—

**मूलम्—चीवराइं विसारंती, जहाजायत्ति पासिआ । रहनेमी भग्गचित्तो, पच्छा दिट्ठो अ तीईवि ॥३४॥**

व्याख्या—चीवराणि विसारयन्ती विस्तारयन्ती सा यथाजाता अनावृताङ्गतया जन्मावस्थोपमा जज्ञे इति इत्येवंरूपां तां 'पासिअत्ति' दृष्ट्वा रथनेमिर्भग्नचित्तः संयमम्प्रत्यभूत् । स हि तामप्रतिरूपरूपां निरूप्याभिरूपरूपोऽपि स्मरपरवशोऽजनि ! पश्चाद्दृष्टश्च तया राजीमत्या, अपिः पुनरर्थः, प्रथमप्रविष्टैर्हि नान्धकारे किञ्चिद् दृश्यते, अन्यथा हि वृष्टिसम्भ्रमादन्यान्याश्रयान् गतासु शेषसंयतासु तत्रेयमेकाकिनी प्रविशेदपि नेति भावः ॥ ३४ ॥

**मूलम्—भीआ य सा तहिं दट्ठु, एगंते संजयं तयं । बाहाहिं काउं संगोफं, वेवमाणी निसीअइ ॥३५॥**

व्याख्या—भीता च सा, माऽसौ मे प्रसह्य शीलभङ्गं कार्षीदिति श्रुत्वा, तत्रैकान्ते संयतं तकं दृष्ट्वा बाहुभ्यां कृत्वा संगोफं स्तनोपरि मर्कटबन्धं वेपमाना शीलभङ्गभयादेव निषीदति। तत्परिष्वङ्गादिपरिहारायेति ॥ ३५ ॥

मूलम्—अह सोवि रायपुत्तो, समुद्दविजयंगओ। भीअं पवेइअं दट्ठु, इमं वक्कमुदाहरे ॥ ३६ ॥

व्याख्या—[ स्पष्टम् ] ॥ ३६ ॥

मूलम्—रहनेमी अहं भद्दे, सुरूवे चारुभासिणि। ममं भयाहि सुतणू, न ते पीला भविस्सइ ॥ ३७॥

व्याख्या—ममित्यादि–मां भजस्व सुतनो! न ते पीडा भविष्यति, पीडाशङ्कया हि त्वं कम्पसे! न च पीडाहेतुर्विषयसेवा! किन्तु सुखहेतुरेवेयमिति भावः ॥ ३७ ॥

मूलम्—एहि ता भुंजिमो भोए, माणुस्सं खु सुदुल्लहं।
भुत्तभोगी तओ पच्छा, जिणमग्गं चरिस्सिमो ॥ ३८ ॥

व्याख्या—एहि आगच्छ 'ता इति' तस्मात् ॥ ३८ ॥ ततो राजीमती किं चकारेत्याह—

मूलम्—दट्ठुण रहनेमिं तं, भग्गुज्जोअपराइअं। राईमई असंभंता, अप्पाणं संवरे तहिं ॥ ३९ ॥

व्याख्या—'भग्गुज्जोअ'इत्यादि–भग्नोद्योगोऽपगतोत्साहः प्रस्तावात्संयमे, स चासौ पराजितश्च स्त्रीपरीषहेण भग्नोद्योगपराजितस्तं। असम्भ्रान्ता नाऽयं बलादकार्यं कर्तेत्याशयादत्रस्ता। आत्मानं समवारीदाच्छादयच्चीवरैरिति शेषः ॥ ३९ ॥

मूलम्—अह सा रायवरकन्ना, सुट्ठिआ निअमवए। जाइं कुलं च सीलं च, रक्खमाणी तयं वए ॥४०॥

व्याख्या—'निअमव्वएत्ति' नियमे इन्द्रियनियमने, व्रते दीक्षायां 'वएत्ति' अवादीत् ॥ ४० ॥

मूलम्—जइसि रूवेण वेसमणो, ललिएणं नलकूवरो। तहावि ते न इच्छामि, जइसि सक्खं पुरंदरो ४१

व्याख्या—'ललिएणंति' ललितेन सविलासचेष्टितेन नलकूवरो देवविशेषः, 'ते इति' त्वां 'जइसित्ति' यद्यसि साक्षात्पुरन्दरः ॥ ४१ ॥ अन्यच्च—

मूलम्—धीरत्थु ते जसो कामी, जो तं जीविअकारणा। वंतं इच्छसि आवेउं, सेअं ते मरणं भवे! ॥४२॥

व्याख्या—धिगस्तु ते तव यशो महा कुलसम्भवोत्थं हे कामिन्!, यद्वा धिगस्तु ते इति त्वां हे अयशस्कामिन्! अकीर्त्यभिलाषिन्!, यस्त्वं जीवितकारणादसंयमजीवितार्थं वान्तमपि व्रतादानेन भोगसुखमिच्छस्यापातुमुपभोक्तुं! इत्तः श्रेयः कल्याणं ते मरणं भवेत्! न तु वान्तापानं, तस्यातिदुष्टत्वादुक्तं हि–"विज्ञाय वस्तु निन्द्यं, त्यक्त्वा गृह्णन्ति किं क्वचित्पुरुषाः?। वान्तं पुनरपि भुंक्ते, न हि सर्वं सारमेयोपि" इति ॥ ४२ ॥

मूलम्—अहं च भोगरायस्स, तं चऽसि अंधगवह्लिणो। मा कुले गंधणा होमो, संजमं निहुओ चर ४३

व्याख्या—अहं चः पूर्त्तौ भोजराजस्योग्रसेनस्य, त्वं चासि अन्धकवृष्णेः कुले जात इति शेषः। अतो मा कुले 'गंधणत्ति' गन्धनानां 'होमोत्ति' भविष्यावस्तचेष्टितकारितयेति भावः। गन्धना हि वान्तमपि विषं मंत्राकृष्टा ज्वलदनलपातभीरुत्वेन पुनरापिबन्ति, न त्वगन्धनाः। तर्हि किं कार्यमित्याह–संयमं निभृतः स्थिरश्चर सेवस्व ॥ ४३ ॥

मूलम्—जइ तं काहिसि भावं, जा जा दिच्छसि नारिओ। वायाविद्धुव्व हडो, अट्ठिअप्पा भविस्ससि ४४

व्याख्या—यदि त्वं करिष्यसि भावं प्रक्रमाद्भोगेच्छारूपं, या या द्रक्ष्यसि नार्यस्तासु तास्विति गम्यते। ततः किमित्याह–वाताविद्धो वायुप्रेरितो हठो वनस्पतिविशेषः स इव अस्थितात्मा अस्थिराशयो भविष्यसि। हठो ह्यदृढमूलतया यतो यतो वातो वाति ततस्ततो नमतीत्यस्थिरो भवति, तथा चञ्चलचित्ततया स्त्रियं स्त्रियं प्रति स्पृहां कुर्वंस्त्वमपीति ॥ ४४ ॥

मूलम्—गोवालो भंडवालो वा, जहा तद्दवणिस्सरो। एवं अणिस्सरो तं पि, सामण्णस्स भविस्ससि४५

व्याख्या—गोपालो यः परस्य गाः पालयति, भण्डपालो वा यः परस्य भाण्डानि भाटकादिना पालयति स यथा तद्द्रव्यस्य गवादेरनीश्वरोऽप्रभुः, एवमनीश्वरस्त्वमपि श्रामण्यस्य भविष्यसि! भोगाभिलाषितया तत्फलस्याभावादिति सूत्रषोडशकार्थः ॥ ४५ ॥ एवं तयोक्ते रथनेमिः किं चकारेत्याह—

मूलम्—तीसे सो वयणं सोच्चा, संजयाइ सुभासिअं। अंकुसेण जहा नागो, धम्मे संपडिवाइओ ॥४६॥

व्याख्या—अंकुसेणेत्यादि–अङ्कुशेन यथा नागो हस्ती मार्गे इतिशेषः, धर्मे चारित्रधर्मे संप्रतिपातितः स्थितः तद्वचसैवेति गम्यते। अत्रचायं वृद्धवादः "नूपुरपण्डितताख्याने रुष्टेन राज्ञा देवीमिण्ठयारणा मारणार्थं गिरिश्रृङ्गमारोपिताः, तत्र नृपादिष्टमिण्ठनुन्नेन दन्तिना पातार्थं क्रमात्रयः क्रमा आकाशे कृताः, ततः किमयं चिन्तामणिरिव दुरापो द्विपचूडामणिर्मुधा मार्यत इत्यार्यैलोकैर्विज्ञप्तेन राज्ञा हस्तिरक्षणायोक्तो हस्तिपको गत्वा आत्मनश्चाभयमभ्यर्थ्य तं गजं शनैः शनैः शैलशिखरादुदतारयदिति"। यथा चायं तावतीं भुवं प्राप्तोऽपि छिणेऽङ्कुशवशात्पथि संस्थितः, एवमयमप्युत्पन्नविश्रोतसिको राजीमतीवाक्येनाहितप्रवृत्तिनिवर्त्तकतयाङ्कुशदेश्येन धर्मे स्थितः ॥ ४६ ॥

मूलम्—मणगुत्तो वयगुत्तो, कायगुत्तो जिइंदिओ। सामण्णं निच्चलं फासे, जावज्जीवं दढव्वओ ॥४७॥

व्याख्या—'फासेत्ति' अस्प्राक्षीदिति सूत्रद्वयार्थः ॥ ४७ ॥ द्वयोरप्युत्तरवक्तव्यतामाह—

मूलम्—उग्गं तवं चरित्ता णं, जाया दुण्णिवि केवली। सव्वं कम्मं खवित्ता णं, सिद्धिं पत्ता अणुत्तरं ४८

व्याख्या—'दोण्णिवित्ति' द्वावपि रथनेमिराजीमत्यौ। अनयोश्च चत्वारि वर्षशतानि गार्हस्थ्ये, वर्षमेकं छाद्मस्थ्ये, पञ्च वर्षशतानि केवलित्वे, एकाधिकनववर्षशतानि सर्वायुरभूदिति सूत्रार्थः ॥४८॥ अथाध्ययनार्थमुपसंहरन्नुपदेशमाह—

मूलम्—एवं करिंति संबुद्धा, पंडिआ पविअक्खणा। विणिअट्टंति भोगेसु, जहा से पुरिसुत्तमुत्ति बेमि ४९

व्याख्या—एवं कुर्वन्ति सम्बुद्धाः पण्डिताः प्रविचक्षणाः, विनिवर्त्तन्ते कथञ्चिद्विश्रोतसिकोत्पत्तावपि विशेषेण तन्निरोधलक्षणेन निवर्त्तन्ते भोगेभ्यो यथा स पुरुषोत्तमो रथनेमिरिति सूत्रार्थः ॥४९॥ इति ब्रवीमीति प्राग्वत् ॥ इतश्च ॥

भगवान्नेमिनाथोऽपि, विहरन्नवनीतले ॥ पद्मानिव सहस्रांशु–र्भव्यसत्वानबूबुधत् ॥ ४२७ ॥ दशचापोच्छ्रयः शङ्ख–लक्ष्माम्भोदप्रभः प्रभुः ॥ दिशो दशाऽऽदिशन् धर्मं, दशभेदमपावयत् ॥ २८ ॥ अष्टादशसहस्राणि, साधूनां सांधुकर्मणाम् ॥ चत्वारिंशत्सहस्राणि, साध्वीनां तु महात्मनाम् ॥ २९ ॥ एकोनसप्ततिसह–स्राग्रं लक्षमुपासकाः ॥ लक्षत्रयं च षट्त्रिंश–त्सहस्राढ्यमुपासिकाः ॥ ३० ॥ चतु.पंचाशद्दिनोनां, सप्तवर्षशतीं विभोः ॥ आकेवलाद्विहरतः, संघोऽभूदिति संभवः ॥ ३१ ॥ [ त्रिभिर्विशेषकम् ] पर्यन्ते चोजयन्ताद्रौ, प्रपेदेऽनशनं प्रभुः ॥ षट्त्रिंशदधिकैः सार्द्धं, साधूनां पञ्चभिः शतैः ॥ ३२ ॥ तैः साधुभिश्च सह वर्षसहस्रमान–मायुः प्रपूर्य जिनभानुररिष्टनेमिः ॥ धाम्नेन निर्वृतिसुखानि ततः प्रपेदे, चक्रे तदा च महिमा सकलैः सुरेशैः ॥ ४३३ ॥ इति श्रीअरिष्टनेमिजिनचरितम् ॥

१ साधुधर्मणाम्। इति 'घ' पुस्तके ॥ २ सप्तमः। इति 'घ' पुस्तके।

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ द्वाविंशमध्ययनं सम्पूर्णम् ॥ २२ ॥

## ॥ अथ त्रयोविंशमध्ययनम् ॥

अर्हम् ॥ उक्तं द्वाविंशं, अथ केशिगौतमीयं त्रयोविंशमारभ्यते। अस्य चायं सम्बन्धोऽनन्तराध्ययने हि कथञ्चिदुत्पन्नविश्रोतसिकेनापि रथनेमिवद्धर्मेधृतिः कार्येत्युक्तं, अत्र तु परेषामपि मनोविप्लवः केशिगौतमवदपनेय इत्युच्यते। इतिसम्बन्धस्यास्येदमादिसूत्रं—

मूलम्—जिणे पासित्ति नामेणं, अरहा लोगपूइए। संबुद्धप्पा य सव्वण्णू, धम्मतित्थयरे जिणे ॥ १ ॥

व्याख्या—जिनो रागद्वेषादिजेता पार्श्व इति नाम्नाभूदिति शेषः, अर्हन् विश्वत्रयविहितपूजार्हः, अत एव लोकपूजितः, सम्बुद्धस्तत्वावबोधवानात्मा यस्य स तथा। स च छद्मस्थोऽपि स्यादित्याह सर्वज्ञस्तथा धर्म एव भवाब्धितरणहेतुत्वात्तीर्थं धर्मतीर्थं तत्करणशीलो धर्मतीर्थकरो जिनः सकलकर्मजेता, मुक्त्यवस्थापेक्षमेतदिति सूत्रार्थः ॥१॥ अत्र प्रसङ्गागतं श्रीपार्श्वचरितं लेशतो लिख्यते, तथा हि—

अत्रैव भरते वासा–वसथे सकलश्रियाम् ॥ गर्भगेहोपमं जज्ञे, पत्तनं पोतनाभिधम् ॥ १ ॥ नीतिवल्लीघनस्तत्र, गुणालङ्कृतभूघनः ॥ जिनधर्मारविन्दालि–ररविन्दोऽभवन्नृपः ॥ २ ॥ लब्धशास्त्राब्धिरोधास्त–त्पुरोधा जिनधर्मवित् ॥ विश्वभूतिरभूत्तस्य, भार्या चानुद्धराभिधा ॥ ३ ॥ सुतौ तयोश्च कमठ–मरुभूती बभूवतुः ॥ वरुणावसुन्ध-

राज्ञे, तयोश्चाभवतां प्रिये ॥ ४ ॥ विश्वभूतिर्वेश्मभार-मारोप्य सुतयोस्तयोः ॥ प्रपद्य प्रायमन्येद्यु-र्विपद्य त्रिदिवं ययौ ॥ ५ ॥ भार्याप्यनुद्धरा तस्य, तद्वियोगज्वरातुरा ॥ शोषयित्वा वपुः शोक-तपोभ्यां मृत्युमासदत् ! ॥ ६ ॥ चक्रतुः सोदरौ तौ च, स्वपित्रोरौर्द्धदेहिकम् ॥ पुरोहितपदं त्वाप, कमठः स हि पूर्वजः ॥ ७ ॥ व्रताय स्पृहयन्नन्त-र्विषयेभ्यः पराङ्मुखः ॥ बभूव मरुभूतिस्तु, धर्मकर्मरतो भृशम् ॥ ८ ॥ रमणीयाकृतिं तस्य, रमणीं नवयौवनाम् ॥ दृष्ट्वा वसुन्धरां क्षोभं, बभाज कमठोऽन्यदा ॥ ९ ॥ ततः स तां प्रकृत्याऽपि, परस्त्रीलम्पटो विटः ॥ आलापयत्प्रियालापै-र्मन्मथद्रुमदोहदैः ॥१०॥ तां चेत्यूचे स्मराधि-लुप्तलज्जाविलोचनः ॥ भोगान् विना मुधा मुग्धे!, वयः किं गमयस्यदः ? ॥ ११ ॥ निःसत्वः सेवते न त्वां, यदि मूढो ममानुजः ॥ तत्किं तेन मया सार्कं, रमस्व त्वं मनोरमे ! ॥ १२ ॥ तेनैवमुदिता स्वांके, सादरं विनिवेशिता ॥ भोगेच्छुः पूर्वमप्युच्चैः, प्रपेदे तद्वसुन्धरा ! ॥ १३ ॥ ततो विवेकं मर्यादां, त्रपां चावगणय्य तौ ॥ सेवेते स्म रहो नित्यं, पशुकल्पौ पशुक्रियाम् ! ॥ १४ ॥ कथञ्चित्तच्च विज्ञाय, वरुणा कमठाङ्गना ॥ असूयाविवशा सर्व-मुवाच मरुभूतये ॥ १५ ॥ असम्भाव्यमदाऽप्रेक्ष्य, स्वयं प्रत्येति कः सुधीः ॥ ध्यायन्निति ततोऽगच्छ-न्मरुभूतिरुपाग्रजम् ॥ १६ ॥ यामि ग्रामान्तरं भ्रात-रित्युदीर्य बहिर्ययौ ॥ कृत्वा वेषान्तरं चाभू-ज्जन्मकार्पटिकोपमः ॥ १७ ॥ नक्तं चोपेत्य कमठ-मित्यूचे भाषयाऽन्यया ॥ शीतत्राणक्षमं देहि, स्थानं दूराध्वगाय मे ॥ १८ ॥ अज्ञातपरमार्थस्तं, कमठोऽप्येवमब्रवीत् ॥ भोः कार्पटिक ! तिष्ठ त्व-मिह गर्भगृहान्तिके ॥ १९ ॥ मरुभूतिस्ततस्तत्र, सुप्त्वाऽलीकनिद्रया ॥ कामं कामान्धयोर्द्रष्टु-कामो दुश्चेष्टितं तयोः ॥ २० ॥ मरुभूतिर्गतोऽस्तीति, निश्शंकं रममाणयोः ॥ वसुन्धराकमठयो-स्तमन्यायं ददर्श च ! ॥ २१ ॥ अक्षमोऽपि स तद्द्रष्टुं, भीरुर्लोकापवादतः ॥ चकार न प्रतीकारं, निरगाच्च ततो द्रुतम् ॥ २२ ॥ गत्वा चोवाच तत्सर्व-मरविन्दमहाभुजे ॥ क्ष्मापोऽप्यादिक्षदारक्षां-स्तन्निर्वासयितुं पुरात् ॥ २३ ॥ तेऽपि गर्दभमारोप्य, रसद्विरसडिण्डिमम् ॥ शरावजीर्णपन्नद्धा-मालामालितकन्धरम् ॥ २४ ॥ उच्चैरुद्घोषिताकार्यं, रक्षामूत्रविलेपनम् ॥ कमठं भ्रमयित्वान्त-र्नगरं निरवासयत् ! ॥ २५ ॥ [ युग्मम् ] एवं विडम्बितो जात-वैराग्यो विपिनं गतः ॥ कमठस्तापसीभूया-ऽऽरेभे बालतपो भृशम् ॥ २६ ॥ मरुभूतिस्ततो जात-पश्चात्तापो व्यचिन्तयत् ॥ धिग्मां राज्ञे गृहच्छिद्रं, प्रोच्याग्रजविडम्बकम् ! ॥ २७ ॥ गृहदुश्चरितं जातु, प्रकाश्यं नैव कस्यचित् ॥ इति नीतिवचोऽप्यद्य, व्यस्मार्षं हि रुषाकुलः ! ॥ २८ ॥ क्षमयामि तदद्यापि, मन्तुमेनं निजाग्रजम् ॥ ध्यात्वेति तद्वनं गत्वा, सोऽपतत्तस्य पादयोः ॥ २९ ॥ कमठो दुर्धियामेक- भटो दुष्कर्मकर्मठः ॥ विडम्बनां तां तन्मूलां, मृत्योरप्यधिकां स्मरन् ॥ ३० ॥ मूर्ध्नि प्रणमतो भ्रातु-स्सदोत्क्षिप्याऽक्षिपच्छिलाम् ॥ दुष्टस्य सान्त्वनं नूनं, शान्तस्याग्नेः प्रदीपनम् ! ॥ ३१ ॥ [ युग्मम् ] तत्प्रहारक्षुण्णमौलि-र्मृत्वाऽऽर्त्तध्यानयोगतः ॥ मरुभूतिरभूद्विन्ध्या-चले यूथाधिपो द्विपः ॥ ३२ ॥

इतश्च शरदि क्रीडन्, समं स्त्रीभिर्गृहोपरि ॥ अरविन्दनृपोऽपश्य-त्क्षणाल्लब्धोदयं घनम् ॥ ३३ ॥ शक्रचापाञ्चितं तं च, गर्जन्तं द्युविद्युतम् ॥ अहो रम्योयमित्युच्चै-र्वर्णयामास भूधवः ! ॥ ३४ ॥ मेघः स तु क्षणाद्व्योम्नि, व्यानशे तैलवज्जले ॥ क्षणाच्चाऽपुण्यवान्छ्राय-द्वातोद्धूतो व्यलीयत !॥ ३५ ॥ ततो दध्यौ नृपो दृष्ट-नष्टोऽसौ जलदो यथा ॥ तथा विश्वेऽपि विश्वेऽमी, भावास्तत्तेषु का रतिः ? ॥३६॥ ध्यायन्नित्यादि तत्काल-मवधिज्ञानमाप सः ॥ राज्ये न्यस्याङ्गजं पार्श्वे, सद्गुरोश्चाददे व्रतम् ॥ ३७ ॥ क्रमाच्च श्रुतपारिणो, विहरन्सोऽन्यदाऽचलत् ॥ समं सागरदत्तेभ्य-सार्थेनाष्टापदम्प्रति ॥ ३८ ॥ तं नत्वा सार्थपोऽ पृच्छत्, क्व वो गम्यं ? प्रभो ! इति ॥ गन्तव्यं तीर्थयात्रार्थं, ममेति यतिरप्यवक् ॥ ३९ ॥ सार्थेशः पुनरप्यूचे, धर्मः को भवतामिति ? ॥ ततः सविस्तरं तस्मै, जैनं धर्मं मुनिर्जगौ ॥ ४० ॥ तच्चाकर्ण्य सकर्णो द्राक्, श्राद्धत्वं प्रत्यपादि सः ॥ सुक्षेत्रे बीजवद्दक्षे, ह्युपदेशो महाफलः ! ॥ ४१ ॥ सोऽथ सार्थोऽटवीं प्राप, मरुभूतिगजाश्रिताम् ॥ तस्यां च सरसस्तीरे, भोजनावसरेऽवसत् ॥ ४२ ॥ तदा च मरुभूतीभो, वृतो भूरिकरेणुभिः ॥ तत्रागत्य तटाकेऽम्भो-ऽम्भोदोऽम्भोधाविवापिवत् ॥ ४३ ॥ करिणीभिः समं तत्र, क्रीडित्वा पालिमाश्रयत् ॥ दिशः पश्यन्नपश्यच्च, तं सार्थं तत्र संस्थितम् ॥ ४४ ॥ तद्वधाय च सोऽधावत्, क्रुधाऽन्तक इवापरः ॥ तं चायान्तं वीक्ष्य सर्वे, प्रणेशुः सार्थिका द्रुतम् ॥ ४५ ॥ तं चावबुध्य बोधार्ह-मवधेः स तु सन्मुनिः ॥ कायोत्सर्गेण तस्थौ त-न्मार्गेऽचल इवाचलः ॥ ४६ ॥ धावन्कुम्भी तु तमभि, क्रुधा तत्पार्श्वमागतः ॥ तं पश्यन्प्राप शान्तत्वं, स्थिरः तस्थौ च तत्पुरः ॥ ४७ ॥ उत्सर्गं पारयित्वाऽथ, तस्योपकृतये व्रती ॥ इत्यूचे भोः स्मरसि तं, मरुभूतिभवं न किम् ? ॥ ४८ ॥ मां चारविन्दभूपालं, न किं जानासि ? सन्मते ! ॥ प्राग्भवे चादृतं श्राद्ध-धर्मं किं व्यस्मरः ? कृतिन् ! ॥ ४९ ॥ इति तद्वचसा जाति-स्मरणं प्राप्य स द्विपः ॥उदञ्चितकरो भूमि-न्यस्तमूर्द्धानमन्मुनिम् ॥ ५० ॥ तेनोक्तं साधुना श्राद्ध-धर्मं च प्रतिपद्य सः ॥ नत्वा मुनिं गुणास्थानं, स्वस्थाने स्वस्थधीर्ययौ ॥ ५१ ॥

दृष्ट्वा तदद्भुतं पूर्व–नष्टास्ते सार्थिका अपि ॥ उपेत्य तं यतिं नत्वा, श्राद्धधर्मं प्रपेदिरे ॥ ५२ ॥ सार्थेशोऽपि ततोऽत्यन्तं, जिनधर्मे दृढोऽभवत् ॥ अष्टापदेऽर्हतो नत्वा, मुनिरप्यन्यतोऽगमत् ॥ ५३ ॥ सोऽपि मत्वेरमश्राद्ध–श्चरन्मुनिवदीर्यया ॥ षष्ठादिकं तपः कुर्वन्, शुष्कपत्रादिपारणः ॥ ५४ ॥ भानुभानुभिरुत्तप्तं, पल्वलादिजलं पिबन् ॥ तस्थौ शुभाशयस्त्यक्त–वशाकेलिरसोऽनिशम् ! ॥ ५५ ॥ [ युग्मम् ]

इतश्च कमठोऽशान्त–कोपो हत्वापि सोदरम् ॥ विन्ध्याटव्यामभून्मृत्वा–ऽत्युत्कटः कुक्कुटोरगः ॥ ५६ ॥ स भ्रमन्नेकदाऽपश्य–न्मरुभूतिमतङ्गजम् ॥ प्रविशन्तं सरस्यम्भः–पातुं रविनतापितम् ॥ ५७ ॥ सोऽनेकपस्तदा पङ्के–ऽमज्जद्दैवनियोगतः ॥ कुक्कुटाहिः स तं सद्यो, ददंशोड्डीय मस्तके ॥ ५८ ॥ ज्ञाताऽन्तं तद्विषावेशा–द्विधायाऽनशनं द्विपः ॥ वेदनां सहमानस्तां, स्मरन् पञ्चनमस्क्रियः ॥ ५९ ॥ सप्तदशसागरायु–र्विपद्य त्रिदशोऽभवत् ॥ सहस्रारे सहस्रांशु–सहस्रांशुजयी रुचा ॥ ६० ॥ [ युग्मम् ] मृत्वा कुक्कुटनागोऽपि, सोऽन्यदा पञ्चमावनौ ॥ बभूव नारकः सप्तदशसागरजीवितः ॥ ६१ ॥

"इतश्च" जंबूद्वीपे प्राग्विदेहे, सुकच्छविजयेऽभवत् ॥ वैताढ्याद्रौ पुरी नाम्ना, तिलका विजितालका ॥ ६२ ॥ नाम्ना विद्युद्गतिस्तत्रा–ऽभवत्खेचरभूधरः ॥ राज्ञी तु तस्य कनक–तिलका कनकच्छविः ॥ ६३ ॥ सोऽथ जीवः सामयोने–रष्टमस्वर्गतश्च्युतः ॥ जज्ञे किरणवेगाह्व–स्तयोः सूनुर्महाबलः ॥ ६४ ॥ क्रमाद्वृद्धिं गतो विधाः, कलाश्चाभ्यस्य सोऽखिलाः ॥ वैदग्ध्यैककलाचार्यं, वयो मध्यममध्यगात् ॥ ६५ ॥ राज्ये स चान्यदा न्यस्तः, पित्रा स्वीकुर्वता व्रतम् ॥ न्यायेनापालयल्लोकं, लोकपाल इवापरः ॥ ६६ ॥ गुरोर्नाम्ना सुरगुरो–रन्यदाकर्ण्य देशनाम् ॥ प्राज्ञाजीजातसंवेगा–द्वेगः किरणवेगराट् ॥ ६७ ॥ गीतार्थः स्वीकृतैकाकि–विहाराभिग्रहः क्रमात् ॥ नभोगत्या मुनिः सोऽगा–त्पुष्करद्वीपमन्यदा ॥ ६८ ॥ तत्र तस्थौ च कनक–गिरिनाम्नोऽन्तिके गिरेः ॥ कायोत्सर्गेण स मुनि–र्विदधद्विविधं तपः ॥ ६९ ॥

इतश्चोद्वृत्य नरका–जीवः कुक्कुटभोगिनः ॥ गह्वरे तस्य शैलस्य, भुजगोऽभून्महाविषः ॥ ७० ॥ स चाद्रिं निकषा भ्राम्यन् ध्यानस्थं वीक्ष्य तं मुनिम् ॥ क्रुद्धः प्राग्भववैरेण, सर्वेष्वङ्गेषु दष्टवान् ॥ ७१ ॥ ततः किरणवेगर्षि–र्विहितानशनः सुधीः ॥ सर्पोऽसौ मे सुहृत्कर्म–क्षयकारीति भावयन् ॥ ७२ ॥ मृत्वा जंबूद्रुमावर्त्ते, विमानेऽच्युतकल्पगे ॥ द्वाविंशत्यर्णवायुष्को–ऽभूद्विभाभासुरः सुरः ॥ ७३ ॥ भोगी स तु भ्रमन् शैल–मूले दग्धो दवाग्निना ॥ भूयोऽभून्नारको ज्येष्ठ- स्थितिकः पञ्चमावनौ ॥ ७४ ॥

इतश्च जंबुद्वीपेऽत्र, प्रत्यग्विदेहमण्डने ॥ सुगन्धिविजये रम्या, शुशुभे पूः शुभङ्करा ॥ ७५ ॥ वर्यवीर्योऽभवत्तत्र, वज्रवीर्योऽभिधोनृपः ॥ तस्यासीन्महिषी लक्ष्मी–वती लक्ष्मीरिवापरा ॥ ७६ ॥ जीवः किरणवेगर्षे–रन्येद्युः प्रच्युतोऽच्युतात् ॥ वज्रनाभाह्वयो वज्रि–जैत्रोऽभूत्तनयस्तयोः ॥ ७७ ॥ वर्द्धमानः क्रमाद्वज्र–नाभोऽधीत्याखिलाः कलाः ॥ नैपुण्यमिव पुण्यात्मा, पुण्यं तारुण्यमासदत् ॥ ७८ ॥ तस्मै दत्वाऽन्यदा राज्यं, वज्रवीर्योऽग्रहीद्व्रतम् ॥ वज्रनाभस्ततो राज्य–मन्वशादुग्रशासनः ॥ ७९ ॥ विरक्तः सोऽन्यदा राज्ये, न्यस्य चक्रायुधं सुतम् ॥ क्षेमङ्करार्हतोऽभ्यर्णे, दक्षो दीक्षामुपाददे ॥ ८० ॥ तप्यमानस्तपस्तीव्रं, सहमानः परीषहान् ॥ स साधुरासदल्लब्धी–राकाशगमनादिकाः ॥ ८१ ॥ गुरोरनुज्ञयैकाकी, विहरन् सोऽन्यदा मुनिः ॥ सुकच्छविजयेऽगच्छ–त्समुत्पत्य विहायसा ॥ ८२ ॥ विहरंस्तत्र सोऽन्येद्यु–र्भीमकान्तारमध्यगम् ॥ ज्वलनाद्रिं ययावस्ता–चलं च तरणिस्तदा ॥ ८३ ॥ ततस्तस्य गिरेः क्वापि, कन्दरे स महामुनिः ॥ सत्त्वशाली निसर्गेण, कायोत्सर्गेण तस्थिवान् ॥ ८४ ॥ प्रातश्च द्युमणिज्योति–र्द्योतितं धरणीतलम् ॥ जीवरक्षाकृते पश्यन्, विहर्त्तुमुपचक्रमे ॥ ८५ ॥ उद्धृत्योरगजीवोऽपि, नरकात्पर्यटन् भवे ॥ गिरेस्तस्यान्तिके भिल्लोऽभवन्नाम्ना कुरङ्गकः ॥ ८६ ॥ पापः पापर्द्धिविहिता–जीवो जीवक्षयोद्यत. ॥ मृगयायै व्रजन्पूर्वं, सोऽपश्यत्तं मुनिं तदा ॥ ८७ ॥ अमाङ्गलमिति, क्रुद्धः प्राग्वैरतोऽथ सः ॥ आकर्णाकृष्टमुक्तेन, पृषत्केन न्यहन्मुनिम् ॥ ८८ ॥ वदन्नमोऽर्हद्भ्य इति, प्रहारार्त्तो व्रती तु सः ॥ उपविश्य भुवि त्यक्त–भक्तप्राणवपुःस्पृहः ॥ ८९ ॥ क्षमयित्वाऽखिलान् जन्तून्, शुभध्यानी विपद्य च ॥ मध्यग्रैवेयके देवो, ललिताङ्गाभिधोऽभवत् ॥ ९० ॥ [ युग्मम् ] मृतमेकप्रहारेण, तमुदीक्ष्य कुरङ्गकः ॥ महाबलोऽहमस्मीति, मुमुदे दुर्मदो भृशम् ! ॥ ९१ ॥ कालान्तरे च कालेन, स भीलः कवलीकृतः ॥ आवासे रौरवाहेऽभू–न्नारकः सप्तमावनौ ॥ ९२ ॥

इतश्च जम्बुद्वीपेऽत्र, प्राग्विदेहविभूषणम् ॥ पुराणपुरमित्यासी–त्परमर्द्धिभरं पुरम् ॥ ९३ ॥ भूपोऽभूत्तत्र कुलिश–बाहुनामा महाबलः ॥ सुदर्शनाभिधा तस्य, कान्तासीत्कान्तदर्शना ॥ ९४ ॥ वज्रनाभस्य जीवोऽथ, च्युत्वा

ग्रैवेयकात्ततः ॥ चतुर्द्दशमहास्वप्न-सूचितोऽभूत्सुतस्तयोः ॥ ९५ ॥ सुवर्णबाहुरित्याह्वां, व्यधात्तस्योत्सवैर्नृपः ॥ सोऽथ क्रमेण ववृधे, जगन्नेत्रसुधाञ्जनम् ॥ ९६ ॥ धात्रिभिरिव धात्रीशै-स्तत्सौभाग्यवशीकृतैः ॥ अङ्कादङ्कं नीयमानः, स व्यतीयाय शैशवम् ॥ ९७ ॥ सुगमाः प्राग्भवाभ्यामा-दादाय सकलाः कलाः ॥ यौवनं प्राप ललना-नेत्रालिनलिनीवनम् ॥ ९८ ॥ राज्ये निधाय तं राजा, प्रवव्राजान्यदा सुधीः ॥ सदयं स्वर्णबाहुश्चा-ऽभुक्त बालामिव क्षमाम् ॥ ९९ ॥ सोऽथ वाहयितुं वाहान्, वाहकेलीं गतोऽन्यदा ॥ अनायि हृत्वाऽरण्यानीं, वक्रशिक्षितवाजिना ॥१००॥ तत्र चैकं सरो वीक्ष्य, तृषितोऽस्थात्स्वयं हयः ॥ तत्र तं स्नपयित्वाऽथ, पार्थिवोऽपाययत्पयः ॥ १०१ ॥ स्वयं स्नात्वा पयः पीत्वा, तीरे विश्रम्य च क्षणम् ॥ ततः पुरो व्रजन् राजा-ऽपश्यदेकं तपोवनम् ॥ १०२ ॥ तत्र प्रविशतो राज्ञो-ऽस्फुरद्दक्षिणमीक्षणम् ॥ श्रेयः श्रेयोऽथ मे भावी-त्यन्तर्भूपोऽप्यचिन्तयत् ॥ १०३ ॥ पुरो व्रजंश्च सोऽपश्य-त्तत्रैकां मुनिकन्यकाम् ॥ सिञ्चन्तीं शाखिनः सख्या-ऽनुगतां गजजिद्गतिम् ॥ १०४ ॥ द्रुमान्तरस्थो निध्यायं-स्तामध्यायत्ततो नृपः ॥ सर्वायासादिमां नूनं, विज्ञानी विदधे विधिः ॥ १०५ ॥ विकाराणामुपाध्यायो, न ध्यायोऽप्सरसामपि ॥ क्वाऽयं रूपगुणोऽमुष्याः, क्वेदं कर्मेतरोचितम् ! ॥ १०६ ॥ नृदेवे चिन्तयत्येवं, तच्छ्वासामोदमोहितः ॥ आस्ये तस्याः पपाताब्ज-भ्रमेण भ्रमरो भ्रमन् ! ॥ १०७ ॥ भृङ्गात्सा रक्ष रक्षास्मा-दित्यूचे सा सखीं तदा ॥ विना सुवर्णबाहुं त्वां, कोऽन्यः पातीति साप्यवक् ॥ १०८ ॥ सुवर्णबाहौ पाति क्ष्मा-मुपद्रवति कोऽत्र वः ? ॥ इत्युच्चरुच्चरन्प्रादु-रासीद्राजा तयोस्तदा ॥ १०९ ॥ तं चाकस्माद्वीक्ष्य जात-क्षोभे ते तस्थतुः क्षणम् ॥ धृतधैर्याथ तं तस्याः, सख्याऽऽचख्याविदं सुधीः ॥ ११० ॥ वज्रबाहुसुते वज्रि-जैत्रतेजसि पार्थिवे ॥ नेश्वरोऽपीश्वरः कर्त्तुं, तापमानामुपद्रवम् ॥ १११ ॥ मुग्धासौ तु कजभ्रान्त्या, षट्पदाद्दशतो मुखम् ॥ वित्रस्ता रक्ष रक्षेति, व्याजहार सखी मम ! ॥ ११२ ॥ त्वं पुनः कामजिद्रूपः, कोऽसीति ब्रूहि सन्मते ! ॥ तयेत्युक्तोऽवदद्भूपः, स्वयं स्वं वक्तुमक्षमः ॥ ११३ ॥ सुवर्णबाहुभूजाने-र्मां जानीहि वशंवदम् ॥ आश्रमोपद्रवं हन्तु-मिह त्वागां तदाज्ञया ॥ ११४ ॥ किञ्च पृच्छाम्यहं भद्रे !, कुतोऽसौ कमलेक्षणा ॥ रूपस्याननुरूपेण, क्लिश्यतेऽनेन कर्मणा ? ॥ ११५ ॥ माऽवादीत्खेचरेन्द्रस्य, सुता रत्नपुरप्रभोः ॥ रत्नावलीकुक्षिरत्न-मियं पद्माभिधा कनी ॥ ११६ ॥ तातो विपेदे जाताया-ममुष्यां तत्सुतास्ततः ॥ मिथोऽयुध्यन्त राज्यार्थं, ततोऽभूद्विड्वरो महान् ! ॥ ११७ ॥ रत्नावली त्विमां बाला-मादायागादिहाश्रमे ॥ निजभ्रातुः कुलपते-र्गालवाह्वस्य मन्दिरम् ॥ ११८ ॥ ववृधेऽसौ ततोऽत्रैव, लाल्यमाना तपोधनैः ॥ कामकारस्कराङ्कुर-जीवनं चाप यौवनम् ॥ ११९ ॥ अत एवर्षिकन्यानां, कर्मादः क्रियतेऽनया ॥ यादृशः किल संवासः, स्यादभ्यासोऽपि तादृशः ॥ १२० ॥ साधुरेकोऽन्यदा ज्ञाना-लोकभानुरिहाययौ ॥ पद्मायाः कः पतिर्भावी-त्यपृच्छत्तं च गालवः ॥ १२१ ॥ ऊचे साधुरिहायात-श्चक्रभृद्वाजिना हृतः ॥ सुवर्णबाहुर्भाव्यस्याः, विवोढा वज्रबाहुजः ॥ १२२ ॥ ततो दध्यौ मुदा क्ष्मापो, हयेनोपकृतं मम ॥ हृत्वाहं यदिहानिन्ये, सङ्गमोऽस्याः नचेत्क्व मे ? ॥ १२३ ॥ इत्यूचे च नृपो ब्रूहि, भद्रे कुलपतिः क्व सः ? ॥ तं द्रष्टुमहमुत्कोऽस्मि, रथाङ्ग इव भास्करम् ॥ १२४ ॥ सा प्रोचे सोऽद्य चलित-मनुयातोऽस्ति तं मुनिम् ॥ किंचिद्गत्वा तं च नत्वा, समागन्ताऽधुनाश्रमम् ॥ १२५ ॥ तदा तत्राययौ राज्ञः, सैन्यमश्वपदानुगम् ॥ सुवर्णबाहुरेवाय-मिति ते दध्यतुस्ततः ॥ १२६ ॥ कुलपत्यागमकालं, शङ्कमानाऽथ तत्सखी ॥ पद्मां सख्याऽनयद्भूप-दर्शनासक्तदर्शनाम् ॥ १२७ ॥ वार्त्तां सुवर्णबाहोस्तां, गालवस्यैत्युपो गृहम् ॥ रत्नावल्याश्च सानन्दा-नन्दाख्या तत्सखी जगौ ॥ १२८ ॥ ततो रत्नावलीपद्मा-नन्दाभिः सह गालवः ॥ ययावुपनृपं हृष्टः, सोऽपि तं बहुमानयत् ॥१२९॥ अथोचे गालवो राजन् !, पद्मां मे जामिजामिमाम् ॥ पाणौ गृहाण प्रोक्ता हि, भार्याऽसौ ज्ञानिना तव ॥ १३० ॥ तच्छ्रुत्वा दृष्टसुस्वप्न-इवोच्चैर्मुदितो नृपः ॥ गान्धर्वेण विवाहेन, तामुपायंस्त रागिणीम् ॥ १३१ ॥ वैमात्रेयोऽथ पद्माया-स्तदा पद्मोत्तराह्वयः ॥ विमानैश्छादयन् व्योम, तत्रागात्खेचरेश्वरः ॥ १३२ ॥ रत्नावल्या ज्ञापितस्तं, नृपं नत्वैवमब्रवीत् ॥ देवायातोऽस्मि सेवायै, ज्ञात्वोदन्तममुं तव ॥ १३३ ॥ प्रभो ! पुनीहि त्वं स्वीय-पादपद्मसमागमात् ॥ वैताढ्यपर्वते रत्न-पुरं नाम पुरं मम ॥ १३४ ॥ तत्प्रपद्यापृच्छ्य रत्ना-वलीं कुलपतिं तथा ॥ भूमान् विमानमारोह-त्तस्याशु सपरिच्छदः ॥ १३५ ॥ नत्वा मातुलमम्बां च, सस्नेहं तदनुज्ञया ॥ पद्माप्यश्रुजलक्लिन्न-भूतला पतिमन्वगात् ॥ १३६ ॥ ततः पद्मोत्तरः पद्मा-संयुतं तं धराधवम् ॥ सद्यो वैताढ्यशिखरि-शेखरे स्वपुरेऽनयत् ॥ १३७ ॥ दत्वा च रत्नप्रासादं, दिव्यं स्नानाशनादिना ॥

स खेचरोऽनुचरन्न–स्त्स्वर्णबाहुमुपाचरत् ॥ १३८ ॥ स्वर्णबाहुर्महाबाहु–स्तत्रस्थः प्राज्यपुण्यतः ॥ श्रेणिद्वितयसाम्राज्य–मामसाद दुरासदम् ॥ १३९ ॥ विद्याधरकनीस्तत्र, भूयसीरुदुवाह च ॥ पद्माद्याभिः समं ताभिः, स्वपुरेऽगाच सोऽन्यदा ॥ १४० ॥ जातचक्रादिरत्नश्च, षट्खण्डं क्षितिमण्डलम् ॥ सुवर्णबाहुभूपालः, साधयित्वान्वशाच्चिरम् ॥ १४१ ॥ प्रासादोपरि सोऽन्येद्युः, क्रीडन्नन्तःपुरीवृतः ॥ सविस्मयोऽम्बरेऽपश्य–द्गमागमपरान्सुरान् ॥ १४२ ॥ ततो ज्ञात्वा जगन्नाथ–तीर्थनाथसमागमम् ॥ गत्वा नत्वा जिनं मोहा–पहां शुश्राव देशनाम् ॥ १४३ ॥ सोऽथ चक्री ययौ धाम, नत्वा तं धर्मचक्रिणम् ॥ प्रबोध्य भव्यान्सार्वोऽपि, विजहार ततोऽन्यतः ॥ १४४ ॥ स्मरन् जिनान्तिके दृष्टान्सुरांश्चक्री स चान्यदा ॥ दृष्टा मयेदृशाः पूर्व–मपि क्वापीति भावयन् ॥ १४५ ॥ जातिस्मरणमासाद्य, ददर्श प्राग्भवान्निजान् ॥ वैराग्यं चाभवद्बीजं, महानन्दमहीरुहः ॥ १४६ ॥ [ युग्मम् ] दीक्षां जिघृक्षुः क्ष्मापोऽथ, न्यधाद्राज्यं निजेऽङ्गजे ॥ जगन्नाथजिनस्तत्र, पुनरप्यागमत्तदा ॥ १४७ ॥ सुवर्णबाहुः प्राव्राजी–त्ततस्तस्यार्हतोऽन्तिके ॥ स च क्रमेण गीतार्थ–स्तपस्तेपे सुदुस्तपम् ॥ १४८ ॥ जिनसेवादिभिः स्थानैः, तीर्थकृत्कर्म चार्जयत् ॥ विजहार च भूपीठे–ऽप्रतिबद्धः समीरवत् ॥ १४९ ॥ स चान्यदा क्षीरवणा–टव्यां क्षीरमहागिरौ ॥ भानोरभिमुखस्तस्थौ, कायोत्सर्गेण शुद्धधीः ॥ १५० ॥ कुरङ्गकोऽपि नरको–द्वृत्तस्तत्रैव भूधरे ॥ सिंहोऽजनिष्ट दैवाच्च, तत्रागच्छत्परिभ्रमन् ॥ १५१ ॥ मुनीन्द्रं वीक्ष्य तं क्रोधा–ध्मातः प्राग्भववैरतः ॥ दधाव पावकाकार–स्फाराक्षो राक्षसोपमः ॥ १५२ ॥ तमापतन्तं वीक्ष्याशु, व्यधादनशनं शमी ॥ उत्फालो हरिरप्युच्चैः, प्राहरत्तस्य भूघने ॥ १५३ ॥ ततो मृत्वा मुनिः स्वर्गे, दशमे त्रिदशोऽभवत् ॥ महाप्रभविमानान्त–र्विंशत्यर्णवजीवितः ॥ १५४ ॥ सिंहः सोऽपि मृतस्तूर्य–नरके नारकोऽभवत् ॥ दशार्णवायुर्विविध–वेदनावेदनाकुलः ॥ १५५ ॥ उद्वृत्तोऽथ ततो भ्राम्यं–स्तिर्यग्योनिषु भूरिशः ॥ जीवः सिंहस्य स क्वापि, ग्रामे जज्ञे द्विजाङ्गजः ॥ १५६ ॥ जातस्य तस्य ताताद्या, निजाः सर्वे विपेदिरे ॥ दयन्तस्तं कठं लोकाः, कृपयाऽजीवयंस्ततः ॥ १५७ ॥ बाल्यमुलंघ्य तारुण्यं, प्राप्तः सोऽत्यन्तदुर्गतः ॥ निंद्यमानो जनैः प्राप, कृच्छ्राद्भोजनमप्यहो ! ॥ १५८ ॥ त्यागभोगकृतार्थार्थान्, वीक्ष्य सोऽन्येद्युरीश्वरान् ॥ इति दध्यौ तपः प्राज्यं, तस्यमेभिः पुरा खलु ! ॥ १५९ ॥ बीजं विना कृषिरिव, न हि श्रीः स्यात्तपो विना ॥ तपस्यहं यतिष्ये त–द्वाणिज्य इव वाणिजः ॥ १६० ॥ विमृश्येति कठो जात–संवेगस्तापसोऽभवत् ॥ पञ्चाग्न्यादि तपः कष्टं, कुर्वन् कन्दादिभोजनः ॥ १६१ ॥

इतश्चात्रैव भरते–ऽभवद्वाराणसी पुरी ॥ नित्यसख्येव जाह्नव्या, सेविता सन्निधिस्थया ॥ १६२ ॥ रेजेऽभिराममुद्यानं, परितो यां पुरीं परम् ॥ अलकाविभ्रमाचैत्र–रथं किमु समागतम् ! ॥ १६३ ॥ यस्यां सालो विशालोरुमाणिक्यकपिशीर्षकः ॥ दिक्श्रीणां नित्यमादर्शा–न्निरुपायानदर्शयत् ॥ १६४ ॥ यत्र चैत्येषु सौवर्णाः, कलसाः कलसानुषु ॥ पूजयन्ति करैर्भानु–मभ्यागतमिवागतम् ॥ १६५ ॥ यत्र रम्याणि हर्म्याणि, रेजिरे धनशालिनाम् ॥ पुण्याभ्युदयलभ्यानि, विमानानीव नाकिनाम् ॥ १६६ ॥ स्वर्गिणा भोजनायाऽपि, सुधा मिलति याचिता ॥ चित्रं यत्र सुधालिप्ताः, प्रायः सर्वगृहा अपि ! ॥ १६७ ॥ अगण्यपण्यसम्भार–सङ्कटापि विसङ्कटा ॥ कुत्रिकापणराजीव, रेजे यत्रापणावली ॥ १६८ ॥ प्रसक्षां वीक्ष्य यल्लक्ष्मीं, दक्षा विश्वातिशायिनीम् ॥ अशङ्कन्ताश्मसान्मुशेपौ, रोहणाद्रिपयोनिधी ॥ १६९ ॥ अश्वसेनाभिधो विष्वक्–सेनसन्निभविक्रमः ॥ तत्राभूत्पार्थिवः पृथ्वी–वास्तव्य इव वासवः ॥ १७० ॥ गुणैरवामा वामाह्वा, शीलादिगुणशालिनी ॥ तस्यासीद्वल्लभा राज्ञः, स्वप्राणेभ्योऽपि वल्लभा ॥ १७१ ॥ सुवर्णबाहुजीवोऽथ, च्युत्वा प्राणतकल्पतः ॥ कुक्षाववातरद्वामा–देव्या ज्ञानत्रयान्वितः ॥ १७२ ॥ तदा सा सुसुखी कुम्भिप्रमुखान् विशतो मुखे ॥ चतुर्दश महास्वप्नान्, ददर्श शयिता सुखम् ॥ १७३ ॥ शक्रो नृशक्रः तज्ज्ञाश्च, तेषामर्थममुं जगुः ॥ स्वप्नैरेभिः सुतो भावी, तव देवि ! जगत्पतिः ॥ १७४ ॥ ततः प्रमुदिता वामा–देवी गर्भं दधौ सुखम् ॥ काले च सुषुवे पुत्रं, नीलद्युतिमहिध्वजम् ॥ १७५ ॥ विज्ञाय विष्टरास्थैर्या–त्प्रभोर्जन्मागतास्तदा ॥ षट्पञ्चाशद्दिक्कुमार्यः, सूतिकर्माणि चक्रिरे ॥ १७६ ॥ ज्ञात्वा जन्मावधेस्तस्य, शक्राद्या वासवा अपि ॥ जन्माभिषेककल्याणं, सुमेरौ विधिवद्व्यधुः ॥ १७७ ॥ पीतामृत इवानन्दा–दश्वसेननृपोऽपि हि ॥ कारामोक्षादिकं चक्रे, सूनोर्जन्ममहोत्सवम् ॥ १७८ ॥ गर्भस्थेऽस्मिन्कृष्णरात्रा–वपि माता स्वपार्श्वतः ॥ ददर्श सर्पं सर्पन्तं, द्रुतं भर्त्तुरुवाच च ॥ १७९ ॥ प्रभावोऽयं हि गर्भस्ये–त्यूचे भूपोऽपि तां तदा ॥ तच्च स्मृत्वा नृपः सूनोः, पार्श्व इत्यभिधां व्यधात् ॥ १८० ॥ लाल्यमानोऽथ धात्रीभि–रादिष्टाभिर्बिडौजसा ॥ शिशुभूतैः समं देवैः, क्रीडन् क्रीडागृहं श्रियः ॥ १८१ ॥ सुधां

शक्रेण विहिता–मङ्गुष्ठे नित्यमापिवन् ॥ वव्रृधे स जगन्नाथो, जगत्पाथोऽधिचन्द्रमाः ॥ १८२ ॥ [ युग्मम् ]
क्रमाच यौवनं प्राप्तः, कामिनीजनकार्मणम् ॥ नवहस्तप्रमाणाङ्गः, प्रभुः प्राभूमुदज्जगत् ॥ १८३ ॥ अन्येद्युरश्वसेनो-
र्वी–नाथमास्थानसंस्थितम् ॥ द्वाःस्थेनावेदितः कोऽपि, पुमानन्त्वैवमब्रवीत् ॥ १८४ ॥ स्वामिन्निहास्ति भरते, कुश-
स्थलपुरं पुरम् ॥ राजा प्रसेनजि–त्तत्र, विद्यते हृद्यकीर्त्तिभूः ॥ १८५ ॥ तस्य प्रभावतीसंज्ञा, सुतास्ति नवयौवना ॥
जगतां सारमुच्चित्य, रचितेव विरञ्चिना ॥ १८६ ॥ याति दास्यं तदास्यस्य, शशी तन्नेत्रयोर्मृगः ॥ केकी तत्केशपा-
शस्य, तद्वाक्यस्य सुधारसः ! ॥ १८७ ॥ आदर्शो दर्शनीयत्वं, नाश्नुते तत्कपोलयोः ॥ धुरां तदधरस्यापि, न धत्ते
हेमकन्दलः ! ॥ १८८ ॥ कुण्ठो वैकुण्ठकम्बुस्त–त्कण्ठसौन्दर्यशिक्षणे ॥ स्वर्णकुम्भोऽपि नो दक्ष–स्तद्वक्षोजरमाग्रहे !
॥ १८९ ॥ नालमालिंगितुं पद्म–नालं तद्दोर्लताश्रियम् ॥ न तत्पाणिच्छविलवं, लभन्ते पल्लवा अपि ! ॥ १९० ॥
तन्मध्यलीलामध्येतुं, बालिशः कुलिशोऽपि हि ॥ न तन्नाभिसनाभित्व–मावर्त्तः शिक्षितुं क्षमः ! ॥ १९१ ॥ तदा-
रोहतुलारोहे, न शक्ता सैकतस्थली ॥ रम्भास्तम्भोऽश्नुते स्तम्भं, तदूरुपमार्जने ! ॥ १९२ ॥ नैणिजंघापि तज्जंघा–श्री
संघातनसोधमा ॥ नारविन्दानि विन्दन्ति, पद्मां तत्पादपद्मयोः ! ॥१९३॥ कलां नाञ्चति तत्काय–कान्तेः काञ्चन काञ्च-
नम् ॥ तल्लावण्यगुणं वीक्ष्या–ऽप्सरसः सरसा न हि ! ॥ १९४ ॥ तां वीक्ष्य तादृशीं योग्य–जामातृप्राप्तये पिता ॥
बहूनन्वेषयामास, कुमारान्नाप तं पुनः ॥ १९५ ॥ सा सखीभिः सहान्येद्यु–र्गतोद्यानं प्रभावती ॥ गीतं स्फीतं
किन्नरीभि–र्गीयमानमदोऽश्रृणोत् ॥१९६॥ सुतोऽश्वसेनभूनेतुः, श्रीपार्श्वो जयताच्चिरम् ॥ रूपलावण्यतेजोभि–र्निर्जे-
यन्निर्जरानपि ! ॥ १९७ ॥ तदाकर्ण्याभवत्पार्श्वे, सानुरागा प्रभावती ॥ क्रीडां व्रीडां च संत्यज्य, तद्गीतमश्रृणो-
न्मुहुः ॥ १९८ ॥ ततोऽनुरक्ता सा पार्श्वे, वयस्याभिरलक्ष्यत ॥ रागो रागिषु न छन्न–स्तिष्ठत्यम्भसि तैलवत् ॥ १९९ ॥
चिरं साऽपश्यदुत्पश्या, किन्नरीषु गतासु खम् ॥ सखीभिश्च गृहं नीता, क्वापि नाधिगता सुखम् ॥ २०० ॥ स्मरा-
पस्मारविवशा, न हि किञ्चिद्विवेद सा ॥ दध्यौ च पार्श्वमेवान्तः, परब्रह्मेव योगिनी ॥ २०१ ॥ ज्ञात्वा पार्श्वेऽनुरक्तां
तां, पितरौ तत्सखीमुखात् ॥ मुमुदाते भृशं स्थाने, रक्तेयमिति वादिनौ ॥ २०२ ॥ इत्यूचतुश्च प्रेष्यैना–मधिपार्श्वं
स्वयंवराम् ॥ द्रुतमानन्दयिष्यावो, नन्दनां विरहार्दिताम् ॥ २०३ ॥ तन्निशम्य चरैर्नैक–देशाधीशो महाबलः ॥
इत्यूचेऽन्तःसभं राजा, यवनो यवनोपमः ॥ २०४ ॥ कथं पार्श्वाय हित्वा मां, सुतां दाता प्रसेनजित् ? ॥
इत्युदीर्याशु पवन–जवनो यवनो नृपः ॥ एत्यारुण-
प्रसह्यापि ग्रहीष्ये तां, स्वयं दास्यति चेन्न मे ॥ २०५ ॥ इत्युदीर्याशु पवन–जवनो यवनो नृपः ॥ एत्यारुण-
त्पुरं विष्वग्, बलैः प्राज्यैः कुशस्थलम् ॥ २०६ ॥ प्रवेशनिर्गमौ तत्रा–भूतां कस्यापि नो तदा ॥ रोलम्बस्येव रजनी–
मुखमुद्रितनीरजे ॥ २०७ ॥ पुरुषोत्तमनामाहं, प्रहितो भूभुजस्ततः ॥ वार्त्तां वक्तुमिमां रात्रौ, निर्गत्यात्रागमं
प्रभो ! ॥ २०८ ॥ परंतपातः परं तु, यत्कर्त्तव्यं कुरुष्व तत् ॥ शरणं ते प्रपन्नोऽस्ति, तत्रस्थोऽपि प्रसेनजित् ॥२०९॥
तन्निशम्याश्वसेनोर्वी–कान्तः कोपारुणेक्षणः ॥ भम्भामवीवदद्यात्रां, चिकीर्षुर्यवनं प्रति ॥ २१० ॥ तं भम्भाध्वनि-
माकर्ण्य, किमेतदिति चिन्तयन् ॥ पितुः पार्श्वमगात्पार्श्वो, नत्वा चैवमवोचत ॥ २११ ॥ तरस्वी कतरो देवा–
सुराणां चाऽपराध्यति ? ॥ स्वयं श्रीतातपादानां, यदर्थोयमुपक्रमः ॥ २१२ ॥ अश्वमेनन्नृपोङ्गुल्या, दर्शयन्नागतं
नरम् ॥ कुशस्थलपतिं त्रातुं, यवनं जेयमब्रवीत् ॥ २१३ ॥ पार्श्वः प्रोचे तृणे पर्शो–रिव तस्मिन्नृकीटके ॥ सुरासुर-
जितां तात–पादानां नोद्यमोऽर्हति ! ॥ २१४ ॥ तदादिशत मां पूज्याः, सौधं भूषयत स्वयम् ॥ मत्तोऽपि भावि
मत्तस्य, तस्य दर्पापसर्पणम् ! ॥२१५॥ ततो राजा बलं सूनो–र्विदन् विश्वत्रयाऽधिकम् ॥ प्रत्यपद्यत तद्वाक्यं ससैन्यं
व्यसृजच्च तम् ॥ २१६ ॥ आद्य एव प्रयाणेऽथ, मातलिः शक्रसारथिः ॥ एत्य नत्वा जगन्नाथं, रथोत्तीर्णो व्यजि-
ज्ञपत् ॥ २१७ ॥ प्रभो ! विज्ञाय शक्रस्त्वां, क्रीडयापि रणोद्यतम् ॥ भक्त्या रथममुं प्रैषी–त्प्रसद्य तमलङ्कुरु ॥२१८॥
नानाशस्त्राढ्यमस्पृष्ट–भूपृष्ठं तं रथं ततः ॥ आरुह्य तेजसां धाम, व्योम्नागाद्भानुवद्विभुः ॥ २१९ ॥ अन्वायान्त्या
भूमिगायाः, सेनायाः कृपया प्रभुः ॥ प्रयाणैर्लघुकैर्गच्छन्, क्रमात्प्राप कुशस्थलम् ॥ २२० ॥ तत्रोद्याने सुरकृते,
प्रासादे तस्थुषा सुखम् ॥ स्वामिना प्रहितो दूतो, गत्वा यवनमित्यवक् ॥ २२१ ॥ राजन् ! श्रीपार्श्वनाथस्त्वां, मदा-
स्येनादिशत्यदः ॥ शरणीकृततातोऽयं, रोधान्मोच्यः प्रसेनजित् ॥ २२२ ॥ अहं हि तातमायान्तं, निषिध्यानेन
हेतुना ॥ इहायातोऽस्मि तद्याहि, स्वस्थानं चेत्सुखस्पृहा ! ॥ २२३ ॥ अथोचे यवनः क्रुद्धः, किं रे ! दूताब्रवीरि-
दम् ? ॥ अश्वसेनश्च पार्श्वश्च, कियन्मात्रं ममाग्रतः ! ॥ २२४ ॥ तत्पार्श्व एव स्वं धाम, यातु पातु वपुर्निजम् ॥

स्तस्थौ, स्वामी तु समतानिधिः ! ॥३०७॥ तथाऽपि वीक्ष्य पर्यन्त-ममर्षेण कठासुरम् ॥ जातकोपो नागनाथः, साक्षेपमिदमभ्यधात् ॥ ३०८॥ स्वोपद्रवाय किमिद-मारेभे दुष्ट रे ! त्वया ? ॥ दयालोरपि दासोऽहं, सहिष्ये न यतः परम् ॥ ३०९ ॥ ज्वलन्महोरगः पापा-क्षिपेद्धुं स्वामिनाऽमुना ॥ तदाऽदर्शयत चेत्तर्हि, विप्रियं तव किं कृतम् ॥ ३१० ॥ निष्कारणजगन्मित्र-मेनं घूक इवारुणम् ॥ इतोऽविना द्विपन्नद्य, न भविष्यसि पाप रे ! ॥ ३११ ॥ तदाकर्ण्य वचो मेघ-माली दृष्टिमधो न्यधात् ॥ फणीन्द्रसेवितं पार्श्व-मपश्यच्च तथास्थितम् ॥ ३१२ ॥ दध्यौ च चकितः शक्ति-रियत्येवाखिला मम ॥ सा तु शैले शशस्येव, निष्फलाभूदिह प्रभौ ॥ ३१३ ॥ किं चायं भगवान्मुष्या, पेष्टुं वज्रमपि क्षमः ॥ क्षमया क्षमते सर्वं, भोगीन्द्राद्भीस्तथापि मे ॥ ३१४ ॥ न चान्यच्छरणं विश्वे, मम विश्वेशवैरिणः ॥ तदेनमेव शरणी-करोमि करुणाकरम् ॥ ३१५ ॥ ध्यात्वेति मेघं संहृत्य, सोऽसुरः पार्श्वमाश्रयत् ॥ मदागोऽद्य क्षमस्वेति, प्रोच्यागाच्च स्वमास्पदम् ॥ ३१६ ॥ नागेन्द्रोऽपि जिनं ज्ञात्वा-ऽनुपसर्गं प्रणम्य च ॥ निजं स्थानं ययौ प्रात-र्जिनोऽपि व्यहरत्ततः ॥ ३१७ ॥ छद्मस्थत्वेन चतुर-शीतिमह्नां विहृत्य च ॥ तदाश्रमपदोद्यानं, पुनरप्याययौ प्रभुः ॥ ३१८ ॥ ध्यानस्थस्योदभूत्तत्र, पञ्चमज्ञानमर्हतः ॥ इन्द्राद्योपेत्य समव-सरणं चक्रिरेऽखिलाः ॥ ३१९ ॥ पूर्वसिंहासने तत्रा-सीने श्रीपार्श्वपारगे ॥ त्रीणि तत्प्रतिरूपाणि, त्रिदिशं व्यन्तरा व्यधुः ॥ ३२० ॥ यथास्थानं निषण्णेषु, सुरासुरनरेष्वथ ॥ गिरा योजनगामिन्या, प्रारेभे देशनां प्रभुः ॥ ३२१ ॥ ज्ञात्वा ज्ञानोदयं पार्श्व-प्रभोरुद्यानपालकात् ॥ तद्दर्शनोत्सुकमनाः, प्रमोदभरमेदुरः ॥ ३२२ ॥ श्रीअश्वसेनभूपोऽपि, वामादेव्या समन्वितः ॥ गत्वा कृतस्तुतिनति-र्धर्मं शुश्राव शुद्धधीः ॥ ३२३ ॥ [ युग्मम् ] नरा नार्यश्च तां श्रुत्वा, देशनां जगदीशितुः ॥ बुद्धाः पर्यव्रजन्केपि, केपि श्राद्धत्वमाश्रयन् ॥ ३२४ ॥ आर्यदत्तादयस्तेषु, दशाऽभूवन् गणाधिपाः ॥ द्वादशाङ्गीकृत सद्यः, स्वामिदत्तपदत्रयात् ॥ ३२५ ॥ राज्ये न्यस्याश्वसेनोऽपि, हस्तिसेनाभिधं सुतम् ॥ वामादेव्या प्रभावत्या, चान्वितः प्राव्रजत्तदा ॥ ३२६ ॥ पद्मावती-पार्श्वयक्ष-वैरोट्या-धरणाधिपैः ॥ सर्वदाधिष्ठितपार्श्वः, श्रीपार्श्वो व्यहरत्ततः ॥ ३२७॥ सहस्राः षोडशर्षीणां, समग्रगुणशालिनाम् ॥ अष्टात्रिंशत्सहस्राणि, साध्वीनां तु महात्मनाम् ॥ ३२८ ॥ श्रावकाणां लक्षमेकं, चतुष्षष्टिसहस्रयुक् ॥ श्राविकाणां च त्रिलक्षी, सहस्राः सप्तविंशतिः ॥ ३२९ ॥ दिनैश्चतुरशीत्योना-मार्हन्त्ये वर्षसप्ततिम् ॥ विभोर्विहरतः संघो-ऽभवदेव चतुर्विधः ॥ ३३० ॥ प्रान्ते चानशनं गत्वा, सम्मेताद्रौ व्यधाद्विभुः ॥ त्रयस्त्रिंशन्मुनियुतः, कायोत्सर्गेण संस्थितः ॥ ३३१ ॥ आयुर्वर्षशतं प्रपाल्य भगवांस्तैः संयतैः संयुतो, मासेनाप ततः शिवं कृतभवोपग्राहिकर्मक्षयः ॥ शक्राद्यैश्च सुरासुरेश्वरवरैः श्रीपार्श्वविश्वेशितु-श्चक्रेऽभ्येत्य महोदयासिमहिमा माहात्म्यवारांनिधेः ॥ ३३२ ॥ इति श्रीपार्श्वनाथकथा । इत्थं प्रसङ्गतः श्रीपार्श्वनाथचरितमभिधाय प्रस्तुतं व्याख्यायते—

१ सदाधिष्ठितपार्श्वः श्री-पार्श्वोऽपि व्यहरत्ततः ॥ इति "घ" पुस्तके ॥

**मूलम्—तस्स लोगप्पईवस्स, आसि सीसे महायसे । केसी कुमारसमणे, विज्जाचरणपारगे ॥ २ ॥**

व्याख्या—'केसित्ति' केशिनामा, कुमारश्चासावपरिणीततया श्रमणश्च तपस्वितया कुमारश्रमणः, विद्याचरणयोर्ज्ञानचारित्रयो पारगः, श्रीपार्श्वनाथशिष्यता चास्य तत्सन्तानीयतया ज्ञेया, साक्षात्तच्छिष्यस्य हि श्रीवीरतीर्थप्रवृत्तिकालं यावदवस्थानानुपपत्तेः ॥ २ ॥

**मूलम्—ओहिनाणसुए बुद्धे, सीससंघसमाउले । गामाणुगामं रीयंते, सावत्थिं नगरिमागए ॥ ३ ॥**

व्याख्या—'ओहिनाणसुएत्ति' अवधिज्ञानश्रुताभ्यां श्रुतस्य च मतिसहचरितत्वान्मतिज्ञानेन च बुद्धो ज्ञाततत्वः शिष्यसंघेन समाकुलः परिवृतः शिष्यसंघसमाकुलः, ग्रामानुग्रामं रीयमाणो विहरन् ॥ ३ ॥

**मूलम्—तिंदुअं नाम उज्जाणं, तम्मी नयरमंडले । फासुए सिज्जसंथारे, तत्थ वासमुवागए ॥ ४ ॥**

व्याख्या—'तम्मित्ति' तस्याः श्रावस्त्याः, नगरमण्डले पुरपरिसरेऽभूदिति शेषः, प्रासुके स्वाभाविकागन्तुकसत्त्वरहिते, शय्या वसतिः तस्यां संस्तारकः शिलाफलकादिस्तस्मिन्, तत्र तिन्दुकोद्याने वासमवस्थानमुपगतः प्राप्तः इति सूत्रत्रयार्थः, शेषं स्पष्टमेवमग्रेऽपि ज्ञेयम् ॥ ४ ॥ अत्रान्तरे यदभूत्तदाह—

१ उग.' नास्त्ययं पाठः "घ" सञ्ज्ञकपुस्तके ॥

मूलम्—अह तेणेव कालेणं, धम्मतित्थयरे जिणे। भयवं वद्धमाणुत्ति, सव्वलोगम्मि विस्सुए ॥ ५ ॥

व्याख्या—अथ वक्तव्यान्तरोपन्यासे, 'तेणेव कालेणंति' तस्मिन्नेव काले, वर्द्धमान इति नाम्नाऽभूदिति शेषः, विश्रुतो विख्यातः ॥ ५ ॥

मूलम्—तस्स लोगप्पईवस्स, आसि सीसे महायसे। भयवं गोअमे नामं, विज्जाचरणपारगे ॥ ६ ॥

व्याख्या—गौतमो गोत्रेण, नाम्ना तु इन्द्रभूतिः ॥ ६ ॥

मूलम्—बारसंगविऊ बुद्धे, सीससंघसमाउले। गामाणुगामं रीअंते, सेवि सावत्थिमागए ॥ ७ ॥

मूलम्—कोट्ठगं नाम उज्जाणं, तम्मी नयरमंडले ॥ फासुए सिज्जसंथारे, तत्थवासमुवागए ॥ ८ ॥

व्याख्या—कोष्टकं नामोद्यानमिति सूत्रचतुष्कार्थः ॥ ८ ॥ ततः किं बभूवेत्याह—

मूलम्—केसी कुमारसमणे, गोअमे अ महायसे। उभओ तत्थ विहरिंसु, अल्लीणा सुसमाहिआ ॥९॥

व्याख्या—'उभओत्ति' उभावपि तत्र तयोरुद्यानयोर्व्यहार्ष्टां, आलीनौ मनोवाक्कायगुप्तीराश्रितौ, सुसमाहितौ सुष्ठुसमाधिमन्तौ ॥ ९ ॥

मूलम्—उभओ सिस्ससंघाणं, संजयाण तवस्सिणं। तत्थ चिंता समुप्पन्ना, गुणवंताण ताइणं ॥ १० ॥

व्याख्या—उभयोर्द्वयोः शिष्यसंघानां विनेयवृन्दानां, तत्र श्रावस्त्यां, चिन्ता वक्ष्यमाणा, 'ताइणंति' त्रायिणाम् ॥ १० ॥ चिन्तास्वरूपमाह—

मूलम्—केरिसो वा इमोधम्मो, इमो धम्मो व केरिसो। आयारधम्मप्पणिही, इमा वा सा व केरिसी? ॥११॥

व्याख्या—कीदृशः किंस्वरूपो वा विकल्पे 'इमोत्ति' अयमस्मत्सम्बन्धी धर्मो महाव्रतरूपः ? अयं दृश्यमानगणधरशिष्यसम्बन्धी 'धम्मो वत्ति' धर्मो वा कीदृशः ? आचारो वेषधारणादिको बाह्यक्रियाकलापः स एव धर्महेतुत्वाद्धर्मस्तत्प्रणिधिर्व्यवस्था आचारधर्मप्रणिधिः 'इमा वत्ति' प्राकृतत्वादयं वा अस्मत्सम्बन्धी 'सा वत्ति' स वा द्वितीयमुनिसत्कः कीदृशः ? अयं भावः—अस्माकमेषां च सर्वज्ञप्रणीत एव धर्मस्तत्किं तस्य तत्साधनानां च भेदः ? तदेतद्वोद्धुमिच्छामो वयमिति ॥ ११ ॥ उक्तामेव चिन्तां व्यक्तीकुर्वन्नाह—

मूलम्—चाउज्जामो अ जो धम्मो, जो इमो पंचसिक्खिओ।
देसिओ वद्धमाणेणं, पासेण य महामुणी ॥ १२ ॥

व्याख्या—'चाउज्जामो अत्ति' चतुर्यामो महाव्रतचतुष्कात्मको यो धर्मो देशितः पार्श्वेनेति सम्बन्धः, 'जो इमोत्ति' चकारस्य प्रक्षेपात् यश्चायं पञ्चशिक्षाः प्राणातिपातविरमणाद्युपदेशरूपाः सञ्जाता यत्राऽसौ पञ्चशिक्षितः वर्द्धमानेन देशित इति योगः 'महामुणित्ति' महामुनिना, इदं चोभयोरपि विशेषणं, अनयोश्च धर्मयोर्विशेषे किं नु कारणमित्युत्तरेण योगः। अनेन धर्मविषयः संशयो व्यक्तीकृतः ॥ १२ ॥ अथाचारप्रणिधिविषयं संशयं स्पष्टयति—

मूलम्—अचेलगो अ जो धम्मो, जो इमो संतरुत्तरो।
एगकज्जपवन्नाणं, विसेसे किं नु कारणं ? ॥ १३ ॥

व्याख्या—अचेलकश्च यो धर्मो वर्द्धमानेन देशित इतीहापि योज्यं, यश्चायं सान्तराणि श्रीवीरस्वामिशिष्यापेक्षया मानवर्णविशेषितानि उत्तराणि च महामूल्यतया प्रधनानि प्रक्रमाद्वस्त्राणि यत्राऽसौ सान्तरोत्तरो धर्मः श्रीपार्श्वनाथेन देशित इतीहापि वाच्यं, एकं कार्यं मुक्तिरूपं फलं तदर्थं प्रपन्नौ प्रवृत्तौ एककार्यप्रपन्नौ तयोः प्रक्रमात् पार्श्ववर्द्धमानयोर्विशेषे प्रोक्तरूपे किमिति संशये 'नु' इति वितर्के कारणं हेतुरिति सूत्रपञ्चकार्थः ॥ १३ ॥ एवं विनेयचिन्तोत्पत्तौ केशिगौतमौ यदकार्ष्टां तदाह—

मूलम्—अह ते तत्थ सीसाणं, विण्णाय पविअक्किअं। समागमे कयमई, उभओ केसिगोअमा ॥ १४ ॥

व्याख्या—अथ ते इति तौ तत्र श्रावस्त्यां शिष्याणां विज्ञाय प्रवितर्कितं चिन्तितं, समागमे मीलके कृतमती अभूतामिति शेषः ॥ १४ ॥ ततश्च—

मूलम्—गोअमो पडिरूवण्णू, सीससंघसमाउले। जिट्ठं कुलमविक्खंतो, तिंदुअं वणमागओ ॥ १५॥
व्याख्या—गौतमः प्रतिरूपं प्रतिरूपविनयं यथोचितप्रतिपत्तिरूपं जानातीति प्रतिरूपज्ञो, 'जेट्ठंति' प्राग्भावित्वेन ज्येष्ठं कुलं श्रीपार्श्वनाथसन्तानं अपेक्षमाणो गणयन् ॥ १५ ॥

मूलम्—केसीकुमारसमणे, गोअमं दिस्समागयं। पडिरूवं पडिवर्त्तिं, सम्मं संपडिवज्जइ ॥ १६ ॥
व्याख्या—'पडिरूवंति' प्रतिरूपां उचितां प्रतिपत्तिमभ्यागतकर्त्तव्यरूपां, सम्यक् संप्रतिपद्यते करोतीति भावः ॥ १६ ॥ प्रतिपत्तिमेवाह—

मूलम्—पलालं फासुअं तत्थ, पंचमं कुसतणाणि अ। गोअमस्स णिसिज्जाए, खिप्पं संपणामए १७
व्याख्या—पलालं प्रासुकं, तत्र तिन्दुकोद्याने, 'पंचमंति' वचनव्यत्ययात् पञ्चमानि कुशतृणानि च, पञ्चमत्वं चैषां पलालभेदचतुष्कापेक्षया। यदुक्तं—"तणपणगं पुण भणिअं, जिणेहिं कम्मट्ठगंठिमहणेहिं ॥ साली–वीही–कोद्दव–रालय–रण्णे तेणाइं च"। गौतमस्य निषद्यायै उपवेशनार्थं क्षिप्रं संप्रणामयति समर्प्ययतीति सूत्रचतुष्कार्थः ॥ १७ ॥ नौ चोपविष्टौ यथा प्रतिभातस्तथाह—

मूलम्—केसीकुमारसमणे, गोअमे अ महायसे। उभओ निसन्ना सोहंति, चंदसूरसमप्पहा ॥ १८ ॥
व्याख्या—[ स्पष्टम् ] तत्सङ्गमे च यदभूत्तदाह—

मूलम्—समागया बहू तत्थ, पासंडा कोउगामिआ। गिहत्थाणमणेगाओ, साहस्सीओ समागया॥१९॥
व्याख्या—'पासंडत्ति' पाषण्डं व्रतं तद्योगात्पाषण्डाः शेषव्रतिनः कौतुकात् मृगा इव मृगा अज्ञत्वात्, 'साहस्सीओ' सहस्राः ॥ १९ ॥

मूलम्—देवदाणवगंधवा, जक्ख–रक्खस–किन्नरा।
अदिस्साण य भूआणं, आसि तत्थ समागमो ॥ २० ॥

व्याख्या—देवदानवगन्धर्वा यक्षराक्षसकिन्नराः, समागता इति योगः, एते च दृश्यरूपाः, अदृश्यानां च भूतानां केलीकिलव्यंतराणां तत्रासीत्समागमो मीलक इति सूत्रद्वयार्थः ॥ २० ॥ संप्रति तयोर्जल्पमाह—

मूलम्—पुच्छामि ते महाभाग!, केसी गोअममब्बवी। तओ केसीं बुवंतं तु, गोअमो इणमब्बवी॥२१॥
व्याख्या—ते इति त्वां, महाभागातिशयाचिन्त्यशक्ते! ॥ २१ ॥

मूलम्—पुच्छ भंते! जहिच्छं ते, केसी गोअममब्बवी। तओ केसी अणुण्णाए, गोअमं इणमब्बवी॥२२॥
व्याख्या—'जहिच्छंति' यथेच्छं यदवभासते इत्यर्थः, 'ते' इति त्वं 'केसी' 'गोअमंति' सुब्व्यत्ययात् केशिनं गौतमः इति सूत्रद्वयार्थः ॥ २२ ॥ ततोऽसौ यद्गौतमं पप्रच्छ तदाह—

मूलम्—चाउज्जामो अ जो धम्मो, जो इमो पंचसिक्खिओ। देसिओ वद्धमाणेणं, पासेण य महामुणी २३
व्याख्या—चतुर्यामो हिंसानृतस्तेयपरिग्रहोपरमात्मकव्रतचतुष्करूपः, पंचशिक्षितः स एव मैथुनविरतिरूपपञ्चममहाव्रतान्वितः ॥ २३ ॥

मूलम्—एगकज्जप्पवन्नाणं, विसेसे किं नु कारणं। धम्मे दुविहे मेहावी!, कहं विप्पच्चओ न ते? ॥ २४ ॥
व्याख्या—'धम्मेत्ति' इत्थं धर्मे साधुधर्मे द्विविधे हे मेधाविन्! कथं विप्रत्ययः अविश्वासो न ते तव? तुल्ये हि सर्वज्ञत्वे किं कृतोऽयं मतभेदः? इति ॥ २४ ॥ एवं तेनोक्ते—

मूलम्—तओ केसिं बुवंतं तु, गोअमो इणमब्बवी। पण्णा समिक्खए धम्मं–तत्तं तत्तविणिच्छयं ॥ २५ ॥
व्याख्या—'बुवंतं तुत्ति' ब्रुवन्तमेवाऽनेनादरातिशयमाह, प्रज्ञा बुद्धिः समीक्ष्यते पश्यति, किं तदित्याह–'धम्मं-तत्तंति' बिंदोर्लोपे धर्मतत्त्वं धर्मपरमार्थं, तत्त्वानां जीवादीनां विनिश्चयो यस्मात्तत्तथा, अयं भावः–न वाक्यश्रवणमात्रादेवार्थनिर्णयः स्यात्किन्तु प्रज्ञावशादेव ॥ २५ ॥ ततश्च—

मूलम्—पुरिमा उज्जुजडा उ, वक्कजडा य पच्छिमा।
मज्झिमा उज्जुपण्णा उ, तेण धम्मे दुहा कए ॥ २६ ॥

व्याख्या—'पुरिमत्ति' पूर्वे प्रथमजिनमुनयः ऋजवश्च प्राञ्जलतया जडाश्च दुष्प्रज्ञाप्यतया ऋजुजडाः, 'तु' इति यस्माद्धेतोः। वक्राश्च वक्रप्रकृतित्वाज्जडाश्च निजानेककुविकल्पैः विवक्षितार्थावगमाक्षमत्वाद्वक्रजडाः, चः समुच्चये, पश्चिमाः पश्चिमजिनयतयः। मध्यमास्तु मध्यमार्हतां साधवः, ऋजवश्च ते प्रज्ञाश्च सुबोधत्वेन ऋजुप्रज्ञाः। तेन हेतुना धर्मो द्विधा कृतः। एककार्यप्रपन्नत्वेऽपि इतिप्रक्रमः ॥ २६ ॥ यदि नाम पूर्वादिमुनीनामीदृशत्वं, तथापि कथमेतद्वैविध्यमित्याह—

मूलम्—पुरिमाणं दुव्विसोज्झो उ, चरिमाणं दुरणुपालओ।
कप्पो मज्झिमगाणं तु, सुविसोज्झो सुपालओ ॥ २७ ॥

व्याख्या—पूर्वेषां दुःखेन विशोध्यो निर्मलतां नेतुं शक्यो दुर्विशोध्यः, कल्प इति योज्यते, ते हि ऋजुजडत्वेन गुरुणानुशिष्यमाणा अपि न तद्वाक्यं सम्यगवबोद्धुं प्रभवन्तीति तुः पूर्त्तौ। चरमाणां दुःखेनानुपाल्यते इति दुरनुपालः स एव दुरनुपालकः कल्पः साध्वाचारः। ते हि कथंचिज्जानन्तोऽपि वक्रजडत्वेन न यथावदनुष्ठातुमीशते। मध्यमकानां तु सुविशोध्यः सुपालकः कल्प इतीहापि योज्यं, ते हि ऋजुप्रज्ञत्वेन सुखेनैव यथावज्जानन्ति पालयन्ति च, अतस्ते चतुर्यामोक्तावपि पञ्चममपि यामं ज्ञातुं पालयितुं च क्षमाः। यदुक्तं-"नो अपरिग्गहिआए, इत्थीए जेण होइ परिभोगो। ता तव्विरईए चिअ, अबंभविरइत्ति पण्णाणं ॥ १ ॥" इति तदपेक्षया श्रीपार्श्वस्वामिना चतुर्यामो धर्म उक्तः। पूर्वपश्चिमास्तु नेदृगा इति श्रीऋषभश्रीवीरस्वामिभ्यां पञ्चव्रतः। तदेवं विचित्रप्रज्ञविनेयानुग्रहाय धर्मस्य द्वैविध्यं, न तु तात्त्विकं। आद्यजिनकथनं चेह प्रसंगादिति सूत्रपंचकार्थः ॥ २७ ॥ ततः केशी आह—

मूलम्—साहु गोअम! पण्णा ते, छिण्णो मे संसओ इमो।
अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा! ॥ २८ ॥

व्याख्या—साधु गौतम! प्रज्ञा ते, छिन्नो मे संशयः, 'इमोत्ति' अयं त्वयेति शेषः। शिष्यापेक्षं चैवमभिधानं, अन्यथा तु न तस्य ज्ञानत्रयान्वितस्येदृशसंशयसम्भवः ॥ २८ ॥

मूलम्—अचेलगो अ जो धम्मो, जो इमो संतरुत्तरो। देसिओ वद्धमाणेणं, पासेण य महायसा ॥ २९ ॥

व्याख्या—'महायसत्ति' महायशसा ॥ २९ ॥

मूलम्—एगकज्जप्पवन्नाणं, विसेसे किं नु कारणं। लिंगे दुविहे मेहावी, कहं विप्पच्चओ न ते? ॥ ३० ॥

व्याख्या—'लिंगे दुविहेत्ति' लिङ्गे द्विविधेऽचेलकतया विविधवस्त्रधारितया च द्विभेदे, शेषं तु व्याख्येयं प्राग्व्याख्यातमिति ॥ ३० ॥ ततश्च—

मूलम्—केसिमेवं बुवंतं तु, गोअमं इणमब्बवी।
विण्णाणेण समागम्म, धम्मसाहणमिच्छिअं ॥ ३१ ॥

व्याख्या—'विण्णाणेणत्ति' विशिष्टं ज्ञानं विज्ञानं तच्च केवलमेव तेन समागम्य यद्यस्योचितं तत्तथैव विदित्वा, धर्मसाधनं धर्मोपकरणं वर्षाकल्पादिकं, 'इच्छिअंति' इष्टमनुमतं श्रीपार्श्वश्रीवीरार्हद्भ्यामिति प्रक्रमः। पूर्वचरमाणां हि रक्तवस्त्राद्यनुज्ञाते ऋजुवक्रजडत्वेन वस्त्ररञ्जनादावपि प्रवृत्तिः स्यादिति न तेषां तदनुमतं, श्रीपार्श्वशिष्यास्तु न तथेति तेषां रक्तादिकमप्यनुज्ञातमिति भावः ॥ ३१ ॥ किञ्च—

मूलम्—पच्चयत्थं च लोगस्स, नाणाविहविगप्पणं। जत्तत्थं गहणत्थं च, लोए लिंगप्पओअणं ॥ ३२ ॥

व्याख्या—प्रत्ययार्थं चामी व्रतिन इति प्रतीतिनिमित्तं च लोकस्य, नानाविधविकल्पनं प्रक्रमान्नानाप्रकारोपकरणपरिकल्पनं। नानाविधं हि रजोहरणाद्युपकरणं प्रतिनियतं यतिष्वेव सम्भवतीति कथं तल्लोकस्य प्रत्यये हेतुर्न स्यात्? अन्यथा तु यथेष्टं वेषमादाय पूजाद्यर्थमन्येपि केचिद्वयं व्रतिन इत्यभिदधीरन्, ततश्च मुनिष्वपि न लोकस्य प्रत्ययः स्यादिति। तथा 'जत्तत्थंति' यात्रा संयमनिर्वाहस्तदर्थं, विना हि वर्षाकल्पादिकं वृष्ट्यादौ संयमबाधैव स्यात्। 'गहणत्थंति' ग्रहणं ज्ञानं तदर्थं च, कथंचिच्चित्तविप्लवोत्पत्तावपि मुनिरहमस्मीति ज्ञानार्थं च, लोके लिङ्गस्य वेषस्य प्रयोजनम् ॥ ३२ ॥

मूलम्—अह भवे पइण्णा उ, मोक्खसब्भूअसाहणो। नाणं च दंसणं चेव, चरित्तं चेव निच्छए ॥ ३३ ॥

व्याख्या—अथेत्युपन्यासे 'भवे पइण्णा उत्ति' तुशब्दस्यैवकारार्थस्य भिन्नक्रमत्वाद्भवेदेव स्यादेव प्रतिज्ञाभ्युपगमः, प्रक्रमात् पार्श्ववीरयोरेकैवेति शेषः। का प्रतिज्ञेत्याह—'मोक्खसब्भूयसाहणोत्ति' मोक्षस्य सद्भूतानि तात्त्विकानि साधनानि कारणानि मोक्षसद्भूतसाधनानि, लिङ्गव्यत्ययो विभक्तिव्यत्ययो वचनव्यत्ययश्चेह सर्वत्रापि प्राकृतत्वात्। कानीत्याह—ज्ञानं च दर्शनं चैव चारित्रं चैव, कोऽर्थः? ज्ञानाद्येव मुक्तिसाधनं न तु लिंगं, निश्चये निश्चयनये विचार्ये, न तु व्यवहारे। श्रूयते हि भरतादीनां लिंगं विनापि केवलोत्पत्तिः, इति तत्त्वतो लिङ्गस्याकिंचित्करत्वान्न तद्भेदो विदुषां विप्रत्ययहेतुरिति सूत्रपट्कार्थः ॥ ३३ ॥

मूलम्—साहु गोअम ! पण्णा ते, छिण्णो मे संसओ इमो।
अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा ! ॥ ३४ ॥

व्याख्या—प्राग्वन्नवरं, महाव्रतभेदविषयं लिङ्गभेदगोचरं च शिष्याणां संशयमपास्य तेषामेव व्युत्पत्तये जानन्नपि अन्यदपि वस्तुतत्त्वं पृच्छन् केशीदमाह ॥ ३४ ॥

मूलम्—अणेगाण सहस्साणं, मज्झे चिट्ठसि गोअमा !। ते अ ते अभिगच्छंति, कहं ते निज्जिआ तुमे? ३५॥

व्याख्या—अनेकानां सहस्राणां प्रक्रमाद्वैरिसम्बन्धिनां मध्ये तिष्ठसि हे गौतम ! ते च शत्रवः 'ते' त्वां अभिलक्ष्यीकृत्य गच्छन्ति धावन्ति, अथ जेतुं, कथं ते द्विपो निर्जितास्त्वया ? ॥ ३५ ॥ गौतमः प्राह—

मूलम्—एगे जिए जिआ पंच, पंच जिए जिआ दस। दसहा उ जिणित्ता णं, सव्वसत्तू जिणामहं॥३६॥

व्याख्या—एकस्मिन्प्रक्रमाद्रिपौ जिते जिताः पञ्च, तथा 'पंचजिअत्ति' सूत्रत्वात् पञ्चसु जितेषु जिता दश, दशधा तु दशप्रकारान् पुनर्जित्वा सर्वशत्रूननेकसंख्यासहस्रान् जयाम्यहम् ॥ ३६ ॥ ततश्च—

मूलम्—सत्तू अ इइ के वुत्ते, केसी गोअममब्बवी। तओ केसीं बुवंतं तु, गोअमो इणमब्बवी ॥ ३७॥

व्याख्या—'सत्तू अ इइत्ति' चः पूरणे, इतिर्भिन्नक्रमो जातावेकवचनं, ततः शत्रुः क उक्त इति केशी गौतममब्रवीत् ॥ ३७ ॥

मूलम्—एगप्पा अजिए सत्तू, कसाया इंदिआणि अ।
ते जिणित्तु जहाणायं, विहरामि अहं मुणी ॥ ३८ ॥

व्याख्या—एक आत्मा जीवश्चित्तं वा तदभेदोपचारादजितोऽनेकानर्थावाप्तिहेतुत्वात् शत्रुः, तथा कषाया अजिताः शत्रव इति वचनव्यत्ययेन योज्यते, एते चात्मयुक्ताः पूर्वोक्ताः पञ्च भवन्ति, तथा इन्द्रियाणि चाजितानि शत्रवः, एते च सर्वे पूर्वोद्दिष्टा दश जाताः, तज्जये च नोकषायाद्याः सर्वेऽपि रिपवो जिता एव। अथोपसंहारन्याजेन तज्जये फलमाह—तानुक्तरूपान् शत्रून् जित्वा यथान्यायं यथोक्तनीत्या विहराम्यहं तन्मध्येऽपि तिष्ठन्नप्रतिबद्धविहारितयेति शेषः, मुने ! इति केश्यामंत्रणमिति सूत्रपंचकार्थः ॥ ३८ ॥ एवं गौतमेनोक्ते केशी प्राह—

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो। अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा!३९

व्याख्या—प्राग्वत् ॥ ३९ ॥

मूलम्—दीसंति बहवो लोए, पासबद्धा सरीरिणो। मुक्कपासो लहूभूओ, कहं तं विहरसी ? मुणी ! ॥४०॥

व्याख्या—'लहूभूओत्ति' लघुर्वायुः स इव भूतो जातो लघूभूतः, सर्वत्राप्रतिबद्धत्वात् ॥ ४० ॥ गौतमः प्राह—

मूलम्—ते पासे सव्वसो छित्ता, निहंतूण उवायओ। मुक्कपासो लहूभूओ, विहरामि अहं मुणी ! ॥ ४१ ॥

व्याख्या—'सव्वसोत्ति' सूत्रत्वात् सर्वान् छित्त्वा, निहत्य पुनर्बन्धाभावेन विनाश्य, कथमुपायतः सद्भूतभावनाभ्यासरूपात् ॥ ४१ ॥

मूलम्—पासा य इति के वुत्ता, केसी गोअममब्बवी। तओ केसीं बुवंतं तु, गोअमो इणमब्बवी ॥४२॥

व्याख्या—पाशाश्च पाशशब्दवाच्याः के 'वुत्तत्ति' उक्ताः ? ॥ ४२ ॥

रागदोसादओ तिव्वा, नेहपासा भयंकरा। ते छिंदित्तु जहाणायं, विहरामि जहक्कमं ॥ ४३ ॥

व्याख्या—रागद्वेषादयः, आदिशब्दान्मोहादिपरिग्रहः, तीव्रा गाढाः तथा 'नेहत्ति' स्नेहाः पुत्रादिसम्बन्धास्ते पाशा इव पारवश्यहेतुतया पाशा इत्युक्ताः । अतिगाढत्वाच्च रागान्तर्गतत्वेऽपि स्नेहानां पृथक्कथनं । भयङ्कराः अनर्थकारित्वात् । यथाक्रमं क्रमो यतिविहित आचारस्तदनतिक्रमेणेति सूत्रपञ्चकार्थः ॥ ४३ ॥

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो ।
अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा ! ॥ ४४ ॥

व्याख्या—[ प्राग्वत् ] ॥ ४४ ॥

मूलम्—अंतोहिअय संभूआ, लया चिट्ठइ गोअमा ! । फलेइ विसभक्खीणं, सा उ उद्धरिआ कहं?४५॥

व्याख्या—अन्तर्हृदयं मनोमध्ये सम्भूता उत्पन्ना लता तिष्ठत्यास्ते, हे गौतम ! फलति 'विसभक्खीणंति' आर्षत्वाद्विषवद्भक्ष्यन्ते इति विषभक्ष्याणि पर्यन्तदारुणतया विषोपमानि फलानि । सा तु सा पुनः उद्धृता उन्मूलिता कथं ? त्वयेति शेषः ॥ ४५ ॥ गौतमः प्राह—

मूलम्—तं लयं सव्वसो छित्ता, उद्धरित्तु समूलिअं । विहरामि जहानायं, मुक्कोमि विसभक्खणं ॥४६॥

व्याख्या—तां लतां 'सव्वसोत्ति' सर्वां छित्त्वा, उद्धृत्योन्मूल्य समूलिकां रागद्वेषादिमूलयुतां, मुक्तोऽस्मि 'विसभक्खणंति' विषभक्षणात् विषफलाहारोपमात् क्लिष्टकर्मणः ॥ ४६ ॥

मूलम्—लया य इति का वुत्ता, केसी गोअमसब्बवी । केसीमेवं बुवंतं तु, गोअमो इणमब्बवी ॥ ४७ ॥

व्याख्या—[ प्राग्वत् ] ॥ ४७ ॥

मूलम्—भवतण्हा लया वुत्ता, भीमा भीमफलोदया । तमुच्छित्तु जहानायं, विहरामि महामुणी! ॥ ४८ ॥

व्याख्या—भवे तृष्णा लोभो भवतृष्णा, भीमा भयदा स्वरूपतः, भीमो दुःखहेतुत्वेन फलानां अर्थात् क्लिष्टकर्मणामुदयो विपाको यस्याः सा तथेति सूत्रपञ्चकार्थः ॥ ४८ ॥

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो ।
अण्णोवि संसओ मज्झं, तं मे कहसु गोअमा ! ॥ ४९ ॥

व्याख्या—[ प्राग्वत् ] ॥ ४९ ॥

मूलम्—संपज्जलिआ घोरा, अग्गी चिट्ठइ गोअमा ! । जे डहंति सरीरत्था, कहं विज्झाविआ तुमे ? ॥५०॥

व्याख्या—समन्तात्प्रकर्षेण ज्वलिताः सम्प्रज्वलिताः, अत एव घोराः 'अग्गित्ति' अग्नयः 'चिट्ठन्ति' तिष्ठन्ति, ये दहन्तीव दहन्ति परितापकारित्वाच्छरीरस्था न बहिर्वर्त्तिनः । कथं ते विध्यापितास्त्वया ? ॥ ५० ॥ गौतमः प्राह—

मूलम्—महामेहप्पसूआओ, गिज्झ वारि जलोत्तमं । सिंचामि सययं ते उ, सित्ता नो अ दहंति मे ॥ ५१ ॥

व्याख्या—महामेघप्रसूतात् श्रोतस इति गम्यते, 'गिज्झत्ति' गृहीत्वा वारि जलं, जलोत्तमं शेषजलप्रधानं, सिञ्चामि विध्यापयामि सततं 'ते उत्ति' तानग्नीन्, सिक्तास्तु ते 'नो अत्ति' नैव दहन्ति माम् ॥ ५१ ॥

मूलम्—अग्गी अ इइ के वुत्ते, केसी गोअममब्बवी ।
तओ केसीं बुवंतं तु, गोअमो इणमब्बवी ॥ ५२ ॥

व्याख्या—अग्निप्रश्नश्चाग्रं महामेघादिप्रश्नोपलक्षणम् ॥ ५२ ॥

मूलम्—कसाया अग्गिणो वुत्ता, सुअसीलतओ जलं । सुअधाराभिहया संता, भिन्ना हु न डहंति मे ॥५३

व्याख्या—कषाया अग्नयः परितापकतया शोषकतया चोक्ता जिनैः । श्रुतं च उपचारात् कषायोपशमहेतवः श्रुतान्तर्गता उपदेशाः, शीलं च महाव्रतरूपं, तपश्च प्रतीतं, श्रुतशीलतपः इति समाहारः जलं वारि । अस्य चोपलक्षणत्वान्महामेघो जगदानन्दकतया तीर्थकरः । श्रोतस्तु तत उत्पन्नः आगमः । उक्तमेवार्थमुपसंहरन्नाह—'सुअत्ति' श्रुतस्य उपलक्षणत्वात् शीलतपसोश्च धारा इव धारास्तत्परिभावनादिरूपास्ताभिरभिहताः श्रुतधाराभिहताः सन्तः प्रक्रमादुक्तरूपा अग्नयो भिन्ना विदारिता धाराभिघातेन लवमात्रीकृताः, हुः पूर्त्तौ, नदहन्ति मामिति सूत्रपञ्चकार्थः ॥५३॥

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो ।
अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा ! ॥ ५४ ॥

व्याख्या—[ प्राग्वत् ] ॥ ५४ ॥

मूलम्—अयं साहसिओ भीमो, दुट्ठस्सो परिधावइ । जंसि गोअममारूढो, कहं तेण न हीरसि ? ॥ ५५ ॥

व्याख्या—अयं प्रत्यक्षः, सहसा अविमृश्य प्रवर्त्तत इति साहसिको भीमो दुष्टाश्वः परिधावति, 'जंसित्ति' यस्मिन् हे गौतम ! त्वं आरूढः, कथं तेन न ह्रियसे नोन्मार्गं नीयसे ? ॥ ५५ ॥ गौतमः प्राह—

मूलम्—पहावंतं निगिण्हामि, सुअरस्सीसमाहितं । न मे गच्छइ उम्मग्गं, मग्गं च पडिवज्जइ ॥५६॥

व्याख्या—प्रधावन्तं उन्मार्गाभिमुखं गच्छन्तं निगृह्णामि श्रुतरश्मिसमाहितं आगमरज्जुनिबद्धं, ततो न मे दुष्टाश्वो गच्छत्युन्मार्गं, मार्गं च प्रतिपद्यते ॥ ५६ ॥

मूलम्—आसे अ इति के वुत्ते, केसी गोअममब्बवी । केसीमेवं बुवंतं तु, गोअमो इणमब्बवी ॥ ५७ ॥

व्याख्या—[ प्राग्वत् ] ॥ ५७ ॥

मूलम्—मणो साहसिओ भीमो, दुट्ठस्सो परिधावइ । तं सम्मं निगिण्हामि, धम्मसिक्खाइ कंथगं ५८

व्याख्या—धम्मेत्यादि—धर्मशिक्षायै धर्माभ्यासनिमित्तं कन्थकमिव जात्याश्वमिव निगृह्णामि, दुष्टाश्वोऽपि निग्रहणयोग्यः कन्थककल्प एवेति भाव इति सूत्रपञ्चकार्थः ॥ ५८ ॥

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो ।
अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा ! ॥ ५९ ॥

व्याख्या—[ प्राग्वत् ] ॥ ५९ ॥

मूलम्—कुप्पहा वहवो लोए, जेहिं नासंति जंतुणो । अद्धाणे कह वट्टंतो, तं न नस्ससि गोअमा ?६०॥

व्याख्या—कुपथा उन्मार्गा वहवो लोके यैः कुपथैर्नश्यन्ति सन्मार्गाद्भ्रश्यन्ति जन्तवः, ततश्चाध्वनि प्रस्तावात्सन्मार्गे 'कहत्ति' कथं वर्त्तमानस्त्वं न नश्यसि ? न सत्पथाच्च्यवसे ? हे गौतम ! ॥ ६० ॥ गौतमः प्राह—

मूलम्—जे अ मग्गेण गच्छंति, जे अ उमग्गपट्ठिआ । ते सव्वे विइआ मज्झं, तो न नस्सामहं मुणी ! ॥६१॥

व्याख्या—ये च मार्गेण गच्छन्ति ये चोन्मार्गप्रस्थिताः ते सर्वे विदिता मम, न चामी मार्गोन्मार्गज्ञानं विना ज्ञायन्ते । ततो मार्गोन्मार्गज्ञानान्न नश्याम्यहं मुने ! ॥ ६१ ॥

मूलम्—मग्गे अ इति के वुत्ते, केसी गोअममब्बवी । तओ केसीं बुवंतं तु, गोअमो इणमब्बवी ॥ ६२ ॥

व्याख्या—'मग्गे अत्ति' मार्गश्चशब्दादुन्मार्गश्च ॥ ६२ ॥

मूलम्—कुप्पावयणपासंडी, सव्वे उम्मग्गपट्ठिआ । सम्मग्गं तु जिणक्खायं, एस मग्गे हि उत्तमे ॥६३॥

व्याख्या—कुप्रवचनपापण्डिनः कपिलादिदर्शनदर्शनिनः सर्वे उन्मार्गप्रस्थिताः, अनेन कुप्रवचनानि कुपथा इत्युक्तं । सन्मार्गं तु सत्पथं पुनर्जानीयादिति शेषः, जिनाख्यातं धर्ममिति गम्यं, कुत इत्याह—एष मार्गो हि यस्मादुत्तमोऽन्यमार्गेभ्यः प्रकृष्ट इति सूत्रपञ्चकार्थः ॥ ६३ ॥

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो ।
अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा ! ॥ ६४ ॥

व्याख्या—[ प्राग्वत् ] ॥ ६४ ॥

मूलम्—महाउदगवेगेणं, वुज्झमाणाण पाणिणं । सरणं गई पइट्ठा य, दीवं कं मन्नसी मुणी ! ॥६५॥

व्याख्या—'वुज्झमाणाणत्ति' वाह्यमानानां नीयमानानां प्राणिनां शरणं तन्निवारणक्षमं अत एव गम्यमानत्वाद्गतिं तत एव प्रतिष्ठां च स्थिरावस्थानहेतुं द्वीपं कं मन्यसे ? मुने ! ॥ ६५ ॥ गौतमः प्राह—

मूलम्—अत्थि एगो महादीवो, वारिमज्झे महालओ । महाउदगवेगस्स, गति तत्थ न विज्जई ॥ ६६ ॥

व्याख्या—'महालओत्ति' उच्चैस्त्वेन विस्तीर्णत्वेन च महान् महोदकवेगस्य गतिर्गमनं तत्र न विद्यते ॥ ६६ ॥

मूलम्—दीवे अ इइ के वुत्ते, केसी गोअममब्ववी। केसीमेवं बुवंतं तु, गोअमो इणमब्बवी ॥ ६७॥

व्याख्या—द्वीपप्रश्नश्चायमुदकवेगप्रश्नोपलक्षणम् ॥ ६७ ॥

मूलम्—जरामरणवेगेणं, वुज्झमाणाण पाणिणं। धम्मो दीवो पइट्ठा य, गई सरणमुत्तमं ॥ ६८ ॥

व्याख्या—जरामरणे एव वेगो रयः प्रक्रमादुदकस्य तेन, धर्मः श्रुतधर्मादिः, स हि भवोदधिस्थितोऽपि मुक्ति-हेतुत्वेन न जरामरणवेगस्य गम्य इति सूत्रपञ्चकार्थः ॥ ६८ ॥

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो। अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा !

व्याख्या—[ प्राग्वत् ] ॥ ६९ ॥

मूलम्—अण्णवंसि महोहंसि, नावा विप्परिधावइ। जंसि गोअममारूढो, कहं पारं गमिस्ससि?॥७०॥

व्याख्या-अर्णवे समुद्रे महौघे महाप्रवाहे नौर्विपरिधावति विशेषेण समन्ताद्गच्छति, 'जंसित्ति' यस्यां नावि हे गौतम ! त्वमारूढः, ततः कथं त्वं पारं परतीरं गमिष्यसि ? ॥ ७० ॥ गौतमः प्राह—

मूलम्—जा उ अस्साविणी नावा, न सा पारस्स गामिणी।
जा निरस्साविणी नावा, सा उ पारस्स गामिणी ॥ ७१ ॥

व्याख्या—'जा उत्ति' तुः पूर्त्तौ, या आश्राविणी जलसंग्राहिणी नौः, न सा पारस्य समुद्रपर्यन्तस्य गामिनी। या पुनर्निराश्राविणी जलागमरहिता नौः, सा तु पारस्य गामिनी। ततोऽहं निराश्राविणीं नावमारूढः पारगामी भवि-ष्यामि इति भावः ॥ ७१ ॥

मूलम्—नावा अ इति का वुत्ता, केसी गोअममब्ववी। केसीमेवं बुवंतं तु, गोअमो इणमब्बवी ॥७२॥

व्याख्या—नावस्तरणत्वात्तरिता तार्यं च पृष्टमेवातस्तथैवोत्तरमाह ॥ ७२ ॥

मूलम्—सरीरमाहु नावत्ति, जीवो वुच्चति नाविओ। संसारो अण्णवो वुत्तो, जं तरंति महेसिणो ॥७३॥

व्याख्या—शरीरमाहुर्नौरिति, तस्यैव निरुद्धाश्रवद्वारस्य रत्नत्रयाराधनहेतुत्वेन भवाब्धितारकत्वात्। जीवः प्रोच्यते नाविकः, स एवं भवाब्धिं तरतीति। संसारोऽर्णव उक्तस्तत्त्वतस्तस्यैव पारावारवदपारस्य तार्यत्वादिति सूत्रपञ्चकार्थः ॥ ७३ ॥

मूलम्— साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो।
अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा ! ॥ ७४ ॥

व्याख्या—[ प्राग्वत् ] ॥ ७४ ॥

मूलम्—अंधयारे तमे घोरे, चिट्ठंति पाणिणो बहू। को करिस्सति उज्जोअं, सव्वलोअम्मि पाणिणं? ७५

व्याख्या—अन्धमिव जनं करोतीति अन्धकारं तस्मिन् तमसि प्रतीते ॥ ७५ ॥ गौतमः प्राह—

मूलम्—उग्गओ विमलो भाणू, सव्वलोअप्पहंकरो। सो करिस्सति उज्जोअं, सव्वलोअंमि पाणिणं॥७६॥

व्याख्या—'सव्वलोअ' इत्यादि—सर्वलोकप्रभङ्करः सर्वलोकप्रकाशकरः ॥ ७६ ॥

मूलम्—भाणू अ इइ के वुत्ते, केसी गोअममब्ववी। केसीमेवं बुवंतं तु गोअमो इणमब्बवी ॥ ७७ ॥

व्याख्या—[ प्राग्वत् ] ॥ ७७ ॥

मूलम्—उग्गओ खीणसंसारो, सव्वण्णू जिणभक्खरो। सो करिस्सइ उज्जोअं, सव्वलोअंमि पाणिणं७८॥

व्याख्या—'जिणभक्खरोत्ति' जिनभास्करः, 'उज्जोअंति' उद्योतं 'मोहतमोहरणेन सर्ववस्तुप्रकाशनमिति सूत्रपञ्चकार्थः ॥ ७८ ॥

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो। अन्नोवि संसओ मज्झं, तं मे कहसु गोअमा !७९

व्याख्या—[ प्राग्वत् ] ॥ ७९ ॥

मूलम्—सारीरमाणसे दुक्खे, वज्झमाणाण पाणिणं। खेमं सिवमणाबाहं, ठाणं किं मन्नसी ? मुणी ! ८०

व्याख्या—शारीरमानसैर्दुःखैर्बाध्यमानानां पीड्यमानानां प्राणिनां, क्षेमं व्याधिविरहात्, शिवं सर्वोपद्रवाभावात्, अनाबाधं स्वाभाविकबाधापगमात्, स्थानमाश्रयं किं मन्यसेऽवबुध्यसे ? हे मुने ! ॥ ८० ॥ गौतमः प्राह—

मूलम्—अत्थि एगं धुवं ठाणं, लोगग्गंमि दुरारुहं । जत्थ नत्थि जरामच्चू, वाहिणो वेअणा तहा ॥८१॥

व्याख्या—'दुरारुहंति' दुःखेनारुह्यते इति दुरारोहं । वेदनाः शारीरमानसदुःखानुभवरूपाः । ततश्च व्याध्यभावेन क्षेमत्वं, जरामरणाभावेन शिवत्वं, वेदनाभावेन चानाबाधत्वं, तस्येति ॥ ८१ ॥

मूलम्—ठाणे अ इइ के वुत्ते, केसी गोअममब्बवी । केसीमेवं बुवंतं तु, गोअमो इणमब्बवी ॥ ८२ ॥

व्याख्या—[ प्राग्वत् ] ॥ ८२ ॥

मूलम्—निव्वाणंति अवाहंति, सिद्धिलोगग्गमेव य । खेमं सिवमणावाहं, जं चरंति महेसिणो ॥८३॥

व्याख्या—'निव्वाणंति' इतिशब्दः स्वरूपपरामर्शको यत्रापि नास्ति तत्राप्यध्याहार्यः । ततो निर्वाणमिति, अबाधमिति, सिद्धिरिति, लोकाग्रमिति यदुच्यते इति शेषः । एवः पूर्त्तौ, चः समुच्चये, क्षेमं शिवमनाबाधमिति प्राग्वत् यच्चरन्ति गच्छन्ति महर्षयः ॥ ८३ ॥

मूलम्—तं ठाणं सासयंवासं, लोअग्गंमि दुरारुहं । जं संपत्ता न सोअंति, भवोहंतकरा मुणी ॥ ८४ ॥

व्याख्या—तत्स्थानमुक्तमिति गम्यं, कीदृगमित्याह—'सासयंवासंति' बिन्दोर्लोपे शाश्वतावासं नित्यावस्थितिकं । प्रसङ्गात्तन्महात्म्यमाह—जमित्यादि—यत्सम्प्राप्ता न शोचन्ति, भवौघो नारकादिभवप्रवाहस्तस्यान्तकरा भवौघान्तकरा मुनय इति सूत्रपट्कार्थः ॥ ८४ ॥

मूलम्—साहु गोअम ! पण्णा ते, छिन्नो मे संसओ इमो ।
नमो ते संसयातीत, सव्वसुत्तमहोदधी ! ॥ ८५ ॥

व्याख्या—इहोत्तरार्धेन उपबृंहणागर्भां स्तुतिमाह ॥ ८५ ॥ पुनस्तद्वक्तव्यतामाह—

मूलम्—एवं तु संसए छिन्ने, केसी घोरपरक्कमे । अभिवंदित्ता सिरसा, गोअमं तु महायसं ॥ ८६ ॥

व्याख्या—एवमनेनैव क्रमेण संशये छिन्ने इति जातावेकवचनम् ॥ ८६ ॥

मूलम्—पंचमहव्वयधम्मं, पडिवज्जइ भावओ । पुरिमस्स पच्छिमंमि, मग्गे तत्थ सुहावहे ॥ ८७ ॥

व्याख्या—'पुरिमस्सत्ति' पूर्वस्य प्रक्रमाज्जिनस्याभिमते पश्चिमे पश्चिमजिनसम्बन्धिनि मार्गे तीर्थे, तत्र प्रस्तुते शुभावहे कल्याणकारिणि पञ्चमहाव्रतधर्मं प्रतिपद्यते इति सम्बन्धः इति सूत्रत्रयार्थः ॥ ८७ ॥ अथाध्ययनार्थोपसंहारव्याजेन महापुरुषसङ्गमफलमाह—

मूलम्—केसिगोअमओ णिच्चं, तम्मि आसि समागमे । सुअसीलसमुक्करिसो, महत्थत्थविणिच्छओ ॥८८॥

व्याख्या—केशिगौतमत इति केशिगौतमावाश्रित्य नित्यं तत्र पुर्यामवस्थानं यावत्, तस्मिन् समागमे मीलके श्रुतशीलसमुत्कर्षो ज्ञानचरणप्रकर्षः, तथा महार्था मुक्तिसाधकत्वेन महाप्रयोजना ये अर्थाः शिक्षाव्रतादयस्तेषां विनिश्चयो निर्णयो महार्थार्थविनिश्चयः, आसीत्तच्छिष्यापेक्षयेति गम्यते ॥ ८८ ॥ तथा—

मूलम्—तोसिआ परिसा सव्वा, सम्मग्गं समुवट्ठिया ।
संथुआ ते पसीअंतु, भयवं केसीगोअमत्ति बेमि ॥ ८९ ॥

व्याख्या—तोषिता पर्षत्सर्वा सन्मार्गं मुक्तिपथमनुष्ठातुमिति गम्यते, समुपस्थिता उद्यता । अनेन पर्षदः फलमाह । इत्थं तच्चरितवर्णनद्वारा तयोः स्तुतिमुक्त्वा प्रणिधानमाह—संस्तुतौ तौ प्रसीदतां भगवन्तौ केशिगौतमाविति सूत्रद्वयार्थः ॥ ८९ ॥ इति ब्रवीमीति पूर्ववत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ त्रयोविंशमध्ययनं सम्पूर्णम् ॥ २३ ॥

## ॥ अथ चतुर्विंशमध्ययनम् ॥

॥ ॐ ॥ उक्तं त्रयोविंशमध्ययनमथ प्रवचनमातृसंज्ञं चतुर्विंशमारभ्यते । अस्य चायं सम्बन्धः, पूर्वाध्ययने परेषां मनोविप्लुतिः केशिगौतमवदपनेयेत्युक्तं, तदपनयनं च भाषासमित्यात्मकेन वाग्योगेन स्याद्भाषासमितिश्च प्रवचनमातॄणामन्तर्गतेति तत्स्वरूपमिहोच्यते, इत्येवं सम्बन्धस्यास्येदमादिमूत्रम् ॥

मूलम्—अट्ठप्पवयणमायाओ, समिई गुत्ती तहेव य। पंचेव य समीईओ, तओ गुत्तिओ आहिआ ॥ १ ॥

व्याख्या—'समिइत्ति' समितयः,'गुत्तित्ति' गुप्तयः,'आहिअत्ति' आख्याताः कथिताः ॥ १ ॥ ता एव नामत आह—

मूलम्—ईरिआ भासेसणादाणे, उच्चारे समिई इअ। मणगुत्ती वयगुत्ती, कायगुत्ति अ अट्ठमा ॥ २ ॥

व्याख्या—ईरणं गमनं ईर्या, भाषणं भाषा, एषणमन्नादिगवेषणमेषणा, आदानं पात्रादेर्ग्रहणं, निक्षेपोपलक्षणमेतत्, उच्चारे उच्चारादिपरिष्ठापनायां च समितिः सम्यक्प्रवृत्तिरिदं च प्रत्येकं योज्यं, । 'इअत्ति' इतिः समाप्तौ, एतावत्य एव समितय इत्यर्थः । तथा मनसो गुप्तिः शुभे प्रवृत्तिः अशुभे निग्रहो मनोगुप्तिः, एवमग्रेऽपि ॥ २ ॥ निगमनमाह—

मूलम्—एआओ अट्ठ समिईओ, समासेण विआहिआ। दुवालसंगं जिणक्खायं, मायं जत्थ उ पवयणं॥

व्याख्या—एता अष्ट समितयः, समिति सम्यग् जिनवचनानुसारितया इतय आत्मनश्चेष्टाः समितय इत्यन्वर्थेन गुप्तीनामपि समितिशब्दवाच्यत्वमस्तीत्येवमुपन्यासः । यत्तु भेदेनोपादानं तत्समितीनां प्रवृत्तिरूपत्वेन गुप्तीनां तु प्रवृत्तिनिवृत्तिरूपत्वेन कथञ्चिद्भेद इति ख्यापनार्थम् । द्वादशाङ्गं जिनाख्यातं 'मायंति' उत्तरतुशब्दस्यैवकारार्थस्येह योगान्मातमेव यत्र यासु प्रवचनं । तथा हि—सर्वा अप्येताश्चारित्ररूपाश्चारित्रं च ज्ञानदर्शनाविनाभावि, न चैतत्रयातिरिक्तमन्यदर्थतो द्वादशाङ्गमस्तीत्येतासु प्रवचनं मातमित्युच्यते । इति सूत्रत्रयार्थः, शेषं सुगमत्वान्न व्याख्यातमेनमग्रेऽपि ज्ञेयम् ॥ ३ ॥ तत्रेर्यासमिति स्वरुपमाह—

मूलम्—आलंबणेण कालेण, मग्गेण जयणाइ अ । चउकारणपरिसुद्धं, संजये इरिअं रिए ॥ ४ ॥

व्याख्या—आलम्बनेन कालेन मार्गेण यतनया च, एभिश्चतुर्भिः कारणैः परिशुद्धां संयत ईर्यां गतिं रीयेत कुर्यात् ॥ ४ ॥ आलम्बनादीन्येव व्याख्याति—

मूलम्—तत्थ आलंबणं नाणं, दंसणं चरणं तहा । काले अ दिवसे वुत्ते, मग्गे उप्पहवज्जिए ॥ ५ ॥

व्याख्या—तत्र तेष्वालम्बनादिषु मध्ये यदालम्ब्य गमनमनुज्ञायते तदालम्बनं ज्ञानादि । तत्र ज्ञानं सूत्रार्थोभयरूप आगमः, दर्शनं सम्यक्त्वं, चरणं चारित्रं । तथाशब्दो द्विक्यादिसंयोगभङ्गकसूचकस्ततः प्रत्येकं ज्ञानादीन्याश्रित्य द्विकादिसंयोगेन वा गमनमनुज्ञातं, ज्ञानाद्यालम्बनं विना तु तन्नानुज्ञातम् । कालश्च प्रस्तावादीर्याविषयो दिवस उक्तो जिनैः, रात्रौ हि चक्षुर्विषयताभावात्पुष्टालम्बनं विना गमनं नानुज्ञातम् । मार्ग इह सामान्येन पन्थाः, स चोत्पथेनोन्मार्गेण वार्जित उत्पथवर्जित उक्त इति योगः, उत्पथे हि व्रजत आत्मविराधनादयो दोषा. ॥ ५ ॥ अथ यतनामाह—

मूलम्—दव्वओ खेत्तओ चेव, कालओ भावओ तहा । जयणा चउव्विहा वुत्ता, तं मे कित्तयओ सुण ॥ ६ ॥

व्याख्या—'तं मेत्ति' तां यतनां मे मम कीर्तयतः शृणु हे शिष्य ! ॥ ६ ॥

मूलम्—दव्वओ चक्खुसा पेहे, जुगमित्तं तु खेत्तओ । कालओ जाव रीएज्जा, उवउत्ते अ भावओ॥७॥

व्याख्या—द्रव्यतो द्रव्यमाश्रित्येयं यतना, यच्चक्षुषा प्रेक्षेत जीवादिद्रव्यं । युगमात्रं च प्रस्तावात्क्षेत्रं प्रेक्षेत इति योग इयं क्षेत्रतो यतना । कालतो यतना यावन्तं कालं रीयेत गच्छेत्तावत्कालमानेति शेषः । उपयुक्तश्च सावधानो यद्रीयेत इयं भावतो यतना ॥ ७ ॥ उपयुक्ततामेव स्पष्टयति—

मूलम्—इंदिअत्थे विवज्जित्ता, सज्झायं चेव पंचहा । तम्मुत्ती तप्पुरक्कारे, संजए इरिअं रिए ॥ ८ ॥

व्याख्या—इन्द्रियार्थान् शब्दादीन् विवर्ज्य स्वाध्यायं चैव पञ्चधा वाचनादिपञ्चभेदं विवर्ज्य तस्यापि गत्युपयोगघातित्वात्, तस्यामीर्यायामेव मूर्त्तिस्तनुरर्थाद्व्याप्रियमाणा यस्यासौ तन्मूर्त्तिः, तामेव पुरस्करोति उपयुक्ततया

प्राधान्येनाङ्गीकुरुत इति तत्पुरस्कारः । अनेन कायमनसोस्तदेकाग्रमुक्तं, संयत ईर्यां रीयेतेति सूत्रपञ्चकार्थः ॥ ८ ॥ भाषासमितिमाह—

मूलम्—कोहे माणे अ मायाए, लोभे अ उवउत्तया । हासे भयमोहरिए, विकहासु तहेव य ॥ ९ ॥

व्याख्या—क्रोधे माने मायायां लोभे चोपयुक्तता एकाग्रता, हासे भयमौखर्ये विकथासु तथैव चोपयुक्तता ॥९॥

मूलम्—एआइं अट्ठ ठाणाइं, परिवज्जित्तु संजये । असावज्ज मिअं काले, भासं भासिज्जपण्णवं ॥१०॥

व्याख्या—क्रोधाद्युपयुक्ततायां हि प्रायः शुभा भाषा न सम्भवतीति एतान्यनन्तरोक्तानि क्रोधादिन्यष्टस्थानानि परिवर्ज्य संयतः, असावद्यां निर्दोषां, मितां परिमितां, काले प्रस्तावे, इति सूत्रद्वयार्थः ॥ १० ॥ एषणासमितिमाह—

मूलम्—गवेसणाए गहणे अ, परिभोगेसणा य जा । आहारोवहिसेज्जाए, एए तिण्णिवि सोहए ॥११॥

व्याख्या—गवेषणायामन्वेषणायां ग्रहणे स्वीकारे उभयत्र एषणेति सम्बध्यते, ततो गवेषणायामेषणा, ग्रहणे च एषणा, परिभोगैषणा च या, 'आहारोवहिसेज्जाएत्ति' वचनव्यत्ययादाहारोपधिशय्यासु 'एएत्ति' लिङ्गव्यत्ययादेतास्तिस्र एषणा विशोधयेन्निर्दोषाः कुर्यात् ॥ ११ ॥ कथं विशोधयेदित्याह—

मूलम्—उग्गमुप्पायणं पढमे, बीए सोहिज्ज एसणं । परिभोगंमि चउक्कं, विसोहिज्ज जयं जई ॥ १२ ॥

व्याख्या—'उग्गमुप्पायणंति' उद्गमोत्पादनादोषान् 'पढमेत्ति' प्रथमायां गवेषणायां शोधयेदिति योगः । तत्रोद्गमदोषा आधाकर्मादयः षोडश, उत्पादनादोषा अपि धात्र्यादयस्तावन्त एवेति । 'बीएत्ति' द्वितीयायां ग्रहणैषणायां शोधयेत्, 'एसणंति' एषणादोषान् शङ्कितादीन् दश, 'परिभोगंमित्ति' परिभोगैषणायां चतुष्कं संयोजनाप्रमाणाङ्गारधूमकारणरूपं, अङ्गारधूमयोर्मोहनीयान्तर्गतत्वेनैकतया विवक्षितत्वात्, विशोधयेत् 'जयंति' यतमानो यतिः । पुनः क्रियाभिधानमतिशयसूचकमिति सूत्रद्वयार्थः ॥ १२ ॥ आदाननिक्षेपसमितिमाह—

मूलम्—ओहोवहोवग्गहिअं, भंडगं दुविहं मुणी । गिण्हंतो निक्खिवंतो अ, पउंजिज्ज इमं विहिं ॥१३॥

व्याख्या—'ओहोवहोवग्गहिअंति' इहोपधिशब्दो मध्यनिर्दिष्टो डमरुकमणिन्यायेनोभयत्रापि सम्बध्यते, तत ओघोपधिं औपग्रहिकोपधिं च, भाण्डकमुपकरणं यथाक्रमं रजोहरणादि दण्डकादि च, द्विविधं उक्तभेदतो द्विभेदं, मुनिः गृह्णन्निक्षिपंश्च प्रयुञ्जीत इमं वक्ष्यमाणं विधिम् ॥ १३ ॥ तमेवाह—

मूलम्—चक्खुसा पडिलेहित्ता, पमज्जिज्ज जयं जई । आइए निक्खिवेज्ज वा, दुहओवि समिए सया १४

व्याख्या—चक्षुषा प्रत्युपेक्ष्याऽवलोक्य प्रमार्जयेत् रजोहरणादिना यतमानो यतिः, तदनु आददीत निक्षिपेद्वा 'दुहओवित्ति' द्वावपि प्रक्रमादौघिकौपग्रहिकोपधी, समित उपयुक्तः सदेति सूत्रद्वयार्थः ॥ १४ ॥ परिष्ठापनासमितिमाह—

मूलम्—उच्चारं पासवणं, खेलं सिंघाण जल्लिअं । आहारं उवहिं देहं, अन्नं वावि तहाविहं ॥ १५ ॥

व्याख्या—उच्चारं पुरीषं, प्रश्रवणं मूत्रं, खेलं मुखश्लेष्माणं, सिङ्घाणं नासिकाश्लेष्माणं, 'जल्लिअंति' जलं मलं, आहारमुपधिं देहं, अन्यद्वा कारणगृहीतं गोमयादि, अपिः पूर्तौ, तथाविधं परिष्ठापनार्हं स्थण्डिले व्युत्सृजेदित्युत्तरेण योगः ॥ १५ ॥ स्थण्डिलं च दशविशेषणपदविशिष्टमिति तद्गताखिलभङ्गोपलक्षणार्थमाद्यविशेषणपदस्थशब्दद्वयस्य भङ्गकरचनामाह—

मूलम्—अणावायमसंलोए, अणावाए चेव होइ संलोए ।
आवायमसंलोए, आवाए चेव संलोए ॥ १६ ॥

व्याख्या—न विद्यते आपातः स्वपरोभयपक्षसमीपागमनरूपो यत्र तदनापातं स्थण्डिलमिति गम्यं, 'असंलोएत्ति' नास्ति संलोको दूरस्थापि स्वपक्षादेरालोको यत्र तत्तथेत्येको भङ्गः ॥ १ ॥ अनापातं चैव भवति संलोकं, यत्रापातो नास्ति संलोकश्चास्तीति द्वितीयो भङ्गः ॥ २ ॥ आपातमसंलोकं, यत्रापातोऽस्ति न तु संलोक इति तृतीयः ॥ ३ ॥

आपातं चैव संलोकं, यत्रोभयमपि स्यादिति तुर्यः ॥ ४ ॥ इहापातं संलोकं चेति स्थण्डिलविशेषणं मत्वर्थीये अचि सिद्धम् ॥ १६ ॥ दशविशेषणपदज्ञापनार्थमुच्चारादि यादृशे स्थण्डिले व्युत्सृजेत्तदाह—

मूलम्—अणावायमसंलोए १ परस्सऽणुवघाइए २ ।
समे ३ अज्झुसिरे ४ आवि, अचिरकालकयंमि अ ५ ॥ १७ ॥
विच्छिण्णे ६ दूरमोगाढे ७, नासन्ने ८ बिलवज्जिए ९ ।
तसपाणवीअरहिए १०, उच्चाराईणि वोसिरे ॥ १८ ॥

व्याख्या—अनापाते असंलोके, कस्येत्याह—परस्य स्वपरपक्षादेः ॥ १ ॥ तथा अनुपघातके, संयमात्मप्रवचनोपघातरहिते ॥ २ ॥ समे, निम्नोन्नतत्वहीने ॥ ३ ॥ अशुषिरे, तृणपर्णाद्यनाकीर्णे ॥ ४ ॥ अचिरकालकृते, दाहादिना स्वल्पकालकृते, चिरकृते हि पुनः संमूर्च्छन्त्येव पृथिव्यादयः ॥ ५ ॥ 'विच्छिण्णेत्ति' विस्तीर्णे, जघन्यतोऽपि हस्तमात्रे ॥ ६ ॥ दूरमवगाढे, जघन्यतोऽप्यधस्ताच्चतुरङ्गुलमचित्तीभूते ॥ ७ ॥ नासन्ने, ग्रामारामादेर्दूरस्थे ॥ ८ ॥ बिलवर्जिते, मूषकादिबिलरहिते ॥ ९ ॥ त्रसप्राणा द्वीन्द्रियाद्याः, बीजानि शाल्यादीनि, सकलैकेन्द्रियोपलक्षणमेतत्तैः रहिते त्रसप्राणबीजरहिते ॥ १० ॥ एषां च पदानामेकद्विकत्रिकादिसंयोगैश्चतुर्विंशं सहस्रं [ १०२४ ] भङ्गाः स्युः । तत्रान्त्यो दशपदनिष्पन्नो भङ्गको मुख्यवृत्त्या शुद्ध इतीदृशे स्थण्डिले उच्चारादीनि व्युत्सृजेत् परिष्ठापयेत्। पुनरुच्चारादि कथनं विस्मरणशीलानुग्रहार्थमिति सूत्रचतुष्कार्थः ॥१७॥१८॥ अथोक्तार्थोपसंहारपूर्वं वक्ष्यमाणार्थसम्बन्धार्थमाह—

मूलम्—एआओ पञ्च समिईओ, समासेण विआहिआ। इत्तो य तओ गुत्ती, वोच्छामि अणुपुव्वसो १९

व्याख्या—'विआहिअत्ति' व्याख्याताः 'इत्तो अत्ति' इतश्च 'तओत्ति' तिस्रः 'अणुपुव्वसोत्ति' आनुपूर्व्येति सूत्रार्थः ॥ १९ ॥ तत्राद्यामाह—

मूलम्—सच्चा तहेव मोसा य, सच्चामोसा तहेव य । चउत्थी असच्चमोसा अ, मणगुत्ती चउव्विहा ॥ २० ॥

व्याख्या—सत्पदार्थचिन्तनरूपो मनोयोगः सत्यः, तद्विषया मनोगुप्तिरप्युपचारात् सत्या । एवमन्या अपि ॥ २० ॥ अस्या एव स्वरूपं निरूपयन्नुपदेष्टुमाह—

मूलम्—संरंभसमारंभे, आरंभंमि तहेव य । मणं पवत्तमाणं तु, निअत्तिज्ज जयं जई ॥ २१ ॥

व्याख्या—संरम्भः सङ्कल्पः, स च मानसस्तथाऽहं ध्यास्यामि यथाऽसौ मरिष्यतीत्येवंविधः । समारम्भः परपीडाकरोच्चाटनादिनिमित्तं ध्यानं, अनयोः समाहारस्तस्मिन् । आरम्भे परमारणक्षमाशुभध्यानरूपे, चः समुच्चये, तथैव तेनैवागमोक्तप्रकारेण मनः प्रवर्त्तमानं, तुर्विशेषणे, निवर्त्तयेत् यतमानो यतिः । विशेषश्चायं—शुभसङ्कल्पेषु मनः प्रवर्त्तयेदिति ॥ २१ ॥ वाग्गुप्तिमाह—

मूलम्—सच्चा तहेव मोसा य, सच्चामोसा तहेव य। चउत्थी असच्चमोसा उ, वयगुत्ती चउव्विहा ॥ २२ ॥

व्याख्या—सत्या यथास्थितार्थप्रतिपादिका, असत्या तद्विपरीता, सत्यामृषा गोवृषभसङ्घे गाव एवैता इत्यादिका, असत्यामृषा स्वाध्यायं विधेहीत्यादिका ॥ २२ ॥

मूलम्—संरंभसमारंभे, आरंभंमि तहेव य । वयं पवत्तमाणं तु, निअत्तिज्ज जयं जई ॥ २३ ॥

व्याख्या—वाचिकः संरम्भः परव्यापादनक्षममंत्रादिपरावर्त्तनासङ्कल्पसूचको ध्वनिरेवोपचारात्सङ्कल्पशब्दवाच्यः सन्, समारम्भः परपीडाकरमंत्रादिपरावर्त्तनं, आरम्भः परमारणकारणमंत्रादिजपनमिति ॥ २३ ॥ कायगुप्तिमाह—

मूलम्—ठाणे निसीअणे चेव, तहेव य तुअट्टणे । उल्लंघणपल्लंघण, इंदिआणं च जुंजणे ॥ २४ ॥

व्याख्या—स्थाने ऊर्द्ध्वस्थाने, निषीदने उपवेशने, चैव पूर्त्तौ, तथैव च त्वग्वर्त्तने शयने, उल्लङ्घने तादृशहेतोर्गर्त्तादेरुत्क्रमणे, प्रलङ्घने मातत्येन गमने, उभयत्र सूत्रत्वाद्विभक्तिलोपः, इन्द्रियाणां च 'जुंजणेत्ति' योजने शब्दादिषु व्यापारणे, सर्वत्रापि वर्त्तमान इति शेषः ॥ २४ ॥

मूलम्—संरंभसमारंभे, आरंभंमि तहेव य । कायं पवत्तमाणं तु, निअत्तिज्ज जयं जई ॥ २५ ॥

व्याख्या—संरम्भोऽभिघाताय दृष्टिमुष्ट्यादिसंस्थानमेव सङ्कल्पसूचकमुपचारात्सङ्कल्पशब्दवाच्यं सत् समारम्भः

परितापकरो मुष्ट्याद्यभिघातः, आरम्भः प्राणिवधात्मकस्तेषु प्रवर्त्तमानं कायं निवर्त्तयेदिति सूत्रपदकार्थः ॥ २५ ॥ अथ समितिगुप्त्योर्मिथो विशेषमाह—

मूलम्—एआओ पंच समिईओ, चरणस्स य पवत्तणे। गुत्ती निअत्तणे वुत्ता, असुभत्थेसु सव्वसो ॥ २६॥

व्याख्या—एताः पञ्च समितयश्चरणं चारित्रं सचेष्टेत्यर्थः तस्य प्रवर्त्तने प्राग्व्यचशब्दस्य एवार्थस्येह योगात्प्रवर्त्तन एव उक्ता इति योगः, सचेष्टासु प्रवृत्तावेव समितयो व्याप्रियन्त इति भावः। 'गुत्तित्ति' गुप्तयो निवर्त्तनेऽप्युक्ताः, 'असुभत्थेसुत्ति' अशुभमनोयोगादिभ्यः 'सव्वसोत्ति' सर्वेभ्यः, अपिशब्दाच्चरणप्रवर्त्तनेऽपीति सूत्रार्थः ॥२६॥ अध्ययनार्थमुपसंहरन्नेतदाचरणे फलमाह—

मूलम्—एआओ पवयणमायाओ, जे सम्मं आयरे मुणी। से खीप्पं सव्वसंसारा, विप्पमुच्चइ पंडिए त्ति बेमि

व्याख्या—'आयरेत्ति' आचरेत् सेवेतेति सूत्रार्थः ॥ २७ ॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ चतुर्विंशमध्ययनं सम्पूर्णम् ॥ २४ ॥

## ॥ अथ पञ्चविंशमध्ययनम् ॥

॥ ॐ ॥ उक्तं चतुर्विंशमध्ययनमथ यज्ञीयाख्यं पञ्चविंशमारभ्यते। अस्य चायं सम्बन्धोऽनन्तराध्ययने प्रवचनमातर उक्तास्ताश्च ब्रह्मगुणस्थितस्यैव तत्त्वतो भवन्तीति जयघोषविजयघोषचरितवर्णनद्वारा ब्रह्मगुणा इहोच्यन्ते, इति सम्बन्धस्यास्य प्रस्तावनार्थं जयघोषकथालेशो लिख्यते। तथा हि—

वाराणस्यामभूतां द्वौ, द्विजौ युग्मजसोदरौ ॥ काश्यपौ जयघोषाख्य-विजयघोषसंज्ञकौ ॥ १ ॥ जयघोषोऽन्यदा स्नातुं, गतो गङ्गां व्यलोकत ॥ सर्पमेकं मुखोपात्त-रटन्मण्डूकभक्षकम् ॥ २ ॥ गृहीत्वा स भुजङ्गोऽपि, क्षणात्कुररपक्षिणा ॥ उत्क्षिप्याधिक्षिति क्षिप्तः, प्रारेभे भक्षितुं द्रुतम् ॥ ३ ॥ तेन सन्दंशदेशीय-त्रोटित्रोटितविग्रहम् ॥ भक्ष्यमाणोऽप्यहिर्भेकं, रटन्तं तं जघास सः ॥ ४ ॥ तं च प्रेक्ष्य मिथोग्रासं, जयघोषो व्यचिन्तयत् ॥ अहो! भवस्य काप्येषा, स्थितिरस्थितसुस्थता ॥ ५ ॥ यो हि यस्मै प्रभवति, ग्रसते तं स मीनवत् ॥ न तु गोपायति स्वीय-शक्तिं कोऽपि नदीनवत् ॥ ६ ॥ कृतान्तस्तु महाशक्ति-रिति[2] स ग्रसतेऽखिलम् ॥ तदसारेऽत्र संसारे, का नामास्था मनीषिणाम्? ॥ ७ ॥ किञ्चेह धर्म एवैकः, सर्वोपद्रवनाशकः ॥ श्रयामि तत्तमेवाहं, कामितार्थसुरद्रुमम् ॥ ८ ॥ इति चेतसि सम्प्रधार्य गङ्गा-परतीरं स गतो ददर्श साधून् ॥ जिनधर्ममवेत्य तद्गिरा च, व्रतमादाय ततो भुवि व्यहार्षीत् ॥ ९ ॥ इति तत्कथालेशः ॥ तच्छेषं तु सूत्रसिद्धमिति सम्प्रति सूत्रं व्याख्यायते, तच्चेदम्—

मूलम्—माहणकुलसंभूओ, आसि विप्पो महायसो। जायाई जमजण्णंसि, जयघोसेत्ति नामओ ॥१॥

व्याख्या—ब्राह्मणकुलसम्भूतोऽपि जननीजातेरन्यथात्वे ब्राह्मणो न स्यादत आह—विप्र इति, 'जायाइत्ति' यायजीति भृशं यज्ञं करोतीति यायाजी, क्वेत्याह—यमाः पञ्च महाव्रतानि तान्येव भावपूजारूपत्वाद्यज्ञो यमयज्ञस्तस्मिन् ॥१॥

मूलम्—इंदिअग्गामनिग्गाही, मग्गगामी महामुणी। गामाणुगामं रीअंतो, पत्तो वाणारसीं पुरीं ॥२॥

व्याख्या—इन्द्रियग्रामनिग्राही, अत एव मार्गगामी मुक्तिपथयायी ॥ २ ॥

मूलम्—वाणारसीए बहिआ, उज्जाणंमि मणोरमे। फासुए सिज्जसंथारे, तत्थ वासमुवागए ॥ ३ ॥

व्याख्या—'बहिअत्ति' बहिर्भागे, इति सूत्रत्रयावयवार्थः, शेषं व्यक्तमेवमग्रेऽपि ज्ञेयम् ॥ ३ ॥ तदा च तस्यां पुरि यद्वर्त्तते यच्च यतिः कुरुते तदाह—

---

१ स तं ग्रसति मीनवत्। इति "घ" पुस्तके ॥ २ रिति सर्वं ग्रसत्यहो। इति "घ" पुस्तके ॥

मूलम्—अह तेणेव कालेणं, पुरीए तत्थ माहणे । नामेण विजयघोसे, जण्णं जयइ वेअवी ॥ ४ ॥

व्याख्या—'तेणेव कालेणंति' तस्मिन्नेव काले ॥ ४ ॥

मूलम्—अह से तत्थ अणगारे, मासक्खमणपारणे । विजयघोसस्स जण्णंमि, भिक्खमट्ठा उवट्ठिए ५

व्याख्या—'भिक्खमट्ठत्ति' मोऽलाक्षणिकस्ततो भिक्षार्थमिति सूत्रद्वयार्थः ॥५॥ तत्र च यदसौ याजकश्चक्रे तदाह—

मूलम्—समुवट्ठिअं तहिं संतं, जायगो पडिसेहए ।
न हु दाहामु ते भिक्खं, भिक्खू जायाहि अन्नओ ॥ ६ ॥

व्याख्या—समुपस्थितं भिक्षार्थमागतं सन्तं तं संयतं 'तर्हि' तत्र याजको यज्वाऽजातप्रत्यभिज्ञो विजयघोष एव प्रतिषेधति, 'न हुत्ति' नैव दास्यामि ते तुभ्यं भिक्षां हे भिक्षो! 'जायाहित्ति' याचस्व अन्यतो अन्यस्मात् ॥६॥ कुत इत्याह—

मूलम्—जे अ वेअविऊ विप्पा, जण्णट्ठा य जे दिआ । जोइसंगविऊ जे अ, जे अ धम्माण पारगा ॥ ७ ॥

व्याख्या—ये च वेदविदो विप्रा जातितो यज्ञार्थाश्च यज्ञप्रयोजना ये तत्रैव व्याप्रियन्ते, द्विजाः संस्कारापेक्षया द्वितीयजन्मानः । ज्योतिषं च ज्योतिःशास्त्रं, अङ्गानि च शिक्षादीनि विदन्ति ये ते ज्योतिषाङ्गविदः । इहाङ्गत्वेऽपि ज्योतिषः पृथग् ग्रहणं प्राधान्यख्यापकं । ये च धर्माणां धर्मशास्त्राणां पारगाः । अशेषविद्यास्थानोपलक्षणमिदम् ॥ ७ ॥

मूलम्—जे समुत्था समुद्धत्तुं, परं अप्पाणमेव य । तेसिं अन्नमिणं देयं, भो भिक्खू सव्वकामिअं ॥ ८ ॥

व्याख्या—ये समर्थाः समुद्धर्तुं भवाब्धेरिति गम्यं, 'सव्वकामिअंति' सर्वाणि काम्यान्यभिलषणीयवस्तूनि यत्र तत्काम्यं, षड्रसोपेतमित्यर्थः ॥ ८ ॥ एवं तेनोक्तो मुनिः कीदृग् जातः, किञ्च चकारेत्याह—

मूलम्—सो तत्थ एवं पडिसिद्धो, जायगेण महामुणी । नवि रुट्ठो नवि तुट्ठो, उत्तिमट्ठगवेसओ ॥ ९ ॥

व्याख्या—स जयघोषयतिः तत्र यज्ञपाटके एवं प्रतिषिद्धो याजकेन विजयघोषेण नापि रुष्टो नापि तुष्टः, किन्तु समतयैव स्थितः । किमित्याह—यत उत्तमार्थो मोक्षस्तद्गवेषको मोक्षार्थीत्यर्थः—॥ ९ ॥

मूलम्—नन्नट्ठं पाणहेउं वा, नवि निव्वाहणाय वा । तेसिं विमोक्खणट्ठाए, इमं वयणमब्बवी ॥ १० ॥

व्याख्या—न नैव अन्नार्थं पानहेतुं वा, नापि निर्वाहणाय वा वस्त्रादिना यापनार्थं वा आत्मन इति गम्यं । किमर्थं तर्हीत्याह— तेषां याज्ञिकानां विमोक्षणार्थं इदं वचनमब्रवीत् ॥ १० ॥ किं तदित्याह—

मूलम्—नवि जाणासि वेअमुहं, नवि जण्णाण जं मुहं ।
नक्खत्ताण मुहं जं च, जं च धम्माण वा मुहं ॥ ११ ॥

व्याख्या—नापि नैव जानासि वेदानां मुखमिव मुखं वेदमुखं, यद्वेदेषु प्रधानं । नापि नैव यज्ञानां यन्मुखमुपायः । नक्षत्राणां मुखं प्रधानं यच्च, यच्च धर्म्माणां वा मुखमुपायः । अनेन तस्य वेदयज्ञज्योतिर्द्धर्म्मानभिज्ञत्वमुक्तम् ॥ ११ ॥ अथ पात्राविज्ञत्वमाह—

मूलम्—जे समत्था समुद्धत्तुं, परं अप्पाणमेव य । न ते तुमं विआणासि, अह जाणासि तो भण ॥१२॥

व्याख्या—स्पष्टमेतत् ॥ १२ ॥ एवं मुनिनोक्तः स किं चकारेत्याह—

मूलम्—तस्सक्खेवपमुक्खं च, अचयंतो तहिं दिओ । सपरिसो पंजली होउं, पुच्छई तं महामुणिं ॥१३॥

व्याख्या—तस्य यतेराक्षेपस्य प्रश्नस्य प्रमोक्षः प्रतिवचनं, चः पूरणे, दातुमिति शेषः 'अचयंतोत्ति' अशक्नुवन् तस्मिन् यज्ञे द्विजः सपर्षत्सभान्वितः प्राञ्जलिर्भूत्वा पृच्छति तं महामुनिम् ॥ १३ ॥ किमित्याह—

मूलम्—वेआणं च मुहं बूहि, बूहि जण्णाण जं मुहं । नक्खत्ताण मुहं बूहि, बूहि धम्माण जं मुहं ॥ १४ ॥

मूलम्—जे समत्था समुद्धत्तुं, परं अप्पाणमेव य । एयं मे संसयं सव्वं, साहू कहसु पुच्छिओ ॥ १५ ॥

व्याख्या—[ स्पष्टे नवरम् ] 'संसयंति' संशयविषयं वेदमुखादीति सूत्रदशकार्थः ॥ १४ ॥ ॥ १५ ॥ मुनिराह—

मूलम्—अग्गिहोत्तमुहा वेआ, जण्णट्ठी वेअसां मुहं । नक्खत्ताण मुहं चंदो, धम्माणं कासवो मुहं १६

व्याख्या—अग्निहोत्रं अग्निकारिका, सा चेह "कर्मेन्धनं समाश्रित्य, दृढा सद्भावनाहुतिः ॥ धर्मध्यानाग्निना

कार्या, दीक्षितेनाग्निकारिका ॥ १ ॥" इत्यादिरूपा गृह्यते, तदेव मुखं प्रधानं येषां ते अग्निहोत्रमुखा वेदाः ॥ वेदानां हि दध्न इव नवनीतमारण्यकं प्रधानं, तत्र च "सत्यं तपश्च सन्तोषः, क्षमा चारित्रमार्जवम् ॥ श्रद्धा धृतिरहिंसा च, संवरश्च तथापरः ॥ १७ ॥" इति दशप्रकार एव धर्मः प्रोचे। तदनुसारि चोक्तरूपमेवाग्निहोत्रमिति। तथा यज्ञो भावयज्ञः संयमरूपस्तदर्थी वेदसां यागानां मुखमुपायः, यज्ञा हि सत्येव यज्ञार्थिनि प्रवर्त्तन्ते। नक्षत्राणां मुखं प्रधानं चन्द्रः। धर्म्माणां काश्यपो युगादिदेवो मुखमुपायस्तस्यैव प्रथमतस्तत्प्ररूपकत्वात् ॥ १६ ॥ काश्यपस्यैव माहात्म्यप्रकाशनेन धर्ममुखत्वं समर्थयितुमाह—

**मूलम्—जहा चंदं गहाईआ, चिट्ठंति पंजलीउडा। वंदमाणा नमंसंता, उत्तमं मणहारिणो ॥ १७ ॥**

व्याख्या—यथा चन्द्रं ग्रहादिका 'पंजलिउडत्ति' कृतप्राञ्जलयः वन्दमानाः स्तुवन्तो नमस्यन्तो नमस्कुर्वन्तः उत्तमं प्रधानं यथा स्यात् तथा मनोहारिणोऽतिविनीततया चित्ताक्षेपकारिणस्तिष्ठन्तीति सम्बन्धः, तथैव वृषभमपि भगवन्तं देवेन्द्रमुख्या इत्युपस्कारः ॥ १७ ॥ अनेन प्रश्नचतुष्कोत्तरमुक्तं, पञ्चमप्रश्नमधिकृत्याह—

**मूलम्—अजाणगा जण्णवाई, विज्जा माहणसंपया। गूढा सज्झायतवसा, भासछन्ना इवऽग्गिणो ॥१८॥**

व्याख्या—'अजाणगत्ति' अज्ञाः के ते ? यज्ञवादिनो ये तव पात्रत्वेनाभिमताः, कासामज्ञा इत्याह—'विज्जामाहणसंपयत्ति' विद्याब्राह्मणसम्पदां, तत्र विद्या आरण्यकब्रह्माण्डपुराणादिधर्मशास्त्ररूपास्ता एव ब्राह्मणसम्पदो विद्याब्राह्मणसम्पदः। तात्त्विकब्राह्मणानां हि निष्किञ्चनतया विद्या एव सम्पदः स्युः तदविज्ञत्वे च कथममी बृहदारण्यकादिप्रोक्तं दशविधधर्मं विदन्तोऽपि यज्ञमेव कुर्युरिति ? तथा गूढा बहिः संवरवन्तः, केन हेतुना ? स्वाध्यायतपसा वेदाध्ययनोपवासादिना। अत एव 'भासछन्ना इवग्गिणोत्ति' भस्मच्छन्ना अग्नय इव। यथा हि ते बहिरुपशमभाज इवाभान्ति, अन्तः पुनर्जाज्वल्यमाना एव। एवमेतेऽप्यन्तःकषायवत्तया ज्वलिता एव स्युरेवं च भवदभिमतब्राह्मणानां स्वपरोद्धरणक्षमत्वं दूरापास्तमेवेत्यर्थः ॥ १८ ॥ कस्तर्हि भवन्मते ब्राह्मणो यः पात्रमित्याह—

**मूलम्—जो लोए बंभणो वुत्तो, अग्गी वा महिओ जहा। सया कुसलसंदिट्ठं, तं वयं बूम माहणं ॥ १९ ॥**

व्याख्या—यो लोके ब्राह्मण उक्तः कुशलैरिति गम्यते, 'अग्गी वा महिओ जहत्ति' वा पूरणे, यथेतिभिन्नक्रमस्ततो यथाग्निर्यत्तदोर्नित्याभिसम्बन्धात् तथा महितः पूजितः सन्, सदा कुशलैः तत्त्वज्ञैः सन्दिष्टं कथितं कुशलसन्दिष्टं तं वयं ब्रूमो ब्राह्मणम् ॥ १९ ॥ इत उत्तरसूत्रैः कुशलसन्दिष्टब्राह्मणस्वरूपमाह—

**मूलम्—जो न सज्जइ आगंतुं, पव्वयंतो न सोअइ। रमए अज्जवयणंमि, तं वयं बूम माहणं ॥ २० ॥**

व्याख्या—यो न सजति नाभिष्वङ्गं करोति आगन्तुं प्राप्तुं स्वजनादिस्थानमिति गम्यते, आगत्य च प्रव्रजन् तत एव स्थानन्तरं गच्छन्न शोचति, यथाहं कथमेनं विना स्थास्यामीति ? अत एव रमते आर्यवचने तीर्थकृद्वचसि ॥२०॥

**मूलम्—जायरूवं जहामट्ठं, निद्धंतमलपावगं। रागद्दोसभयाइअं, तं वयं बूम माहणं ॥ २१ ॥**

व्याख्या—जातरूपं स्वर्णं यथा आमृष्टं तेजःप्रकर्षार्थं मनःशिलादिना परामृष्टं, अनेनाऽस्य बाह्यो गुण उक्तः। 'निद्धंतमलपावगंति' प्राकृतत्वात् पावकेनाग्निना निर्ध्मातं दग्धं मलं किट्टं यस्य तत्पावकनिर्ध्मातमलं, अनेन चान्तरस्ततो जातरूपवद्बाह्यान्तरगुणान्वितः। अत एव रागद्वेषभयातीतश्च यस्तं वयं ब्रूमो ब्राह्मणम् ॥ २१ ॥

**मूलम्—तसे पाणे विआणित्ता, संगहेण य थावरे। जो न हिंसइ तिविहेणं, तं वयं बूम माहणं ॥ २२ ॥**

व्याख्या—त्रसप्राणिनो विज्ञाय सङ्ग्रहेण संक्षेपेण चशब्दाद्विस्तरेण च तथा स्थावरान् यो न हिनस्ति त्रिविधेन योगेनेति गम्यते ॥ २२ ॥

**मूलम्—कोहा वा जइ वा हासा, लोहा वा जइ वा भया। मुसं न वयई जो उ, तं वयं बूम माहणं २३**
**चित्तमंतमचित्तं वा, अप्पं वा जइ वा बहुं। न गिण्हइ अदत्तं जो, तं वयं बूम माहणं ॥ २४ ॥**

व्याख्या—[ स्पष्टे नवरम् ] चित्तवद्विपदादि, अचित्तं सुवर्णादि ॥ २३ ॥ २४ ॥

**मूलम्—दिव्वमाणुसतेरिच्छं, जो न सेवइ मेहुणं। मणसा काय वक्केणं, तं वयं बूम माहणं ॥ २५ ॥**
**जहा पउमं जले जायं, नोवलिप्पइ वारिणा। एवं अलित्तं कामेहिं, तं वयं बूम माहणं ॥२६॥**

व्याख्या—यथा पद्मं जले जातं नोपलिप्यते वारिणा, एवं पद्मवदलिप्तः कामैस्तज्जातोऽपि यस्तं वयं ब्रूमो ब्राह्मणम् ॥ २५ ॥ २६ ॥ इत्थं मूलगुणैस्तमुक्त्वा उत्तरगुणैस्तमाह—

मूलम्—अलोलुअं मुहाजीवी, अणगारं अकिंचणं। असंसत्तं गिहत्थेसु, तं वयं बूम माहणं ॥ २७ ॥

व्याख्या—अलोलुपं आहारादावलम्पटं 'मुहाजीविंत्ति' मुधाजीविनं अज्ञातोञ्छवृत्तिं, न तु भेषजमन्त्राद्युपदेशकृताजीविकं। असंसक्तमसम्बद्धं गृहस्थैः पूर्वसंस्तुतपश्चात्संस्तुतैः ॥ २७ ॥

मूलम्—जहित्ता पूव्वसंजोगं, नातिसंगे अ बंधवे। जो न सज्जइ एएसु, तं वयं बूम माहणं ॥२८॥

व्याख्या—हित्वा त्यक्त्वा पूर्वसंयोगं मात्रादिसम्बन्धं, ज्ञातिसङ्गान् स्वस्त्रादिसम्बन्धान्, चस्य भिन्नक्रमत्वाद्बान्धवांश्च यो न सजति न भूयो रज्यते एतेषु ॥ २८ ॥ अथ वेदाध्ययनं यजनं च त्रायकमिति तद्योगादेव ब्राह्मणो न तु त्वदुक्त इत्याशंक्याह—

मूलम्—पसुबंधा सव्ववेआ, जट्ठं च पावकम्मुणा। न तं तायंति दुस्सीलं, कम्माणि बलवंतिह ॥२९॥

व्याख्या—पशूनां बन्धो विनाशाय नियमनं यैर्हेतुभिस्ते पशुबन्धाः सर्ववेदा ऋग्वेदादयः, 'जट्ठं चत्ति' इष्टं यजनं, चः समुच्चये, पापकर्मणा पापहेतुपशुवधाद्यनुष्ठानेन न तं यष्टारं त्रायन्ते दुश्शीलं दुराचारं भवादिति गम्यते, यतः कर्माणि बलवन्ति दुर्गतिनयनं प्रति समर्थानि इह वेदाध्ययने यजने च जायन्ते, पशुवधादिप्रवर्त्तकतया तयोः कर्मबलवर्द्धकत्वादिति भावः। ततो नानयोर्योगात् ब्राह्मणः स्यात्किन्तु पूर्वोक्तगुणयुक्त एवेति तत्त्वम् ॥२९॥ अन्यच्च

मूलम्—नवि मुंडिएण समणो, न ॐकारेण बंभणो। नमुणी रण्णवासेणं, कुसचीरेण न तावसो ॥३०॥

व्याख्या—न नैव, अपिः पूर्तौ, मुण्डितेन श्रमणो निर्ग्रन्थो भवतीति शेषः। न 'ॐकारेणत्ति' ॐभूर्भुवःस्वरित्यादिना ब्राह्मणः, न मुनिररण्यवासेन, कुशो दर्भविशेषस्तन्मयं चीरं कुशचीरं वल्कलोपलक्षणमिदं तेन न तापसः ॥३०॥ तर्हि कथमेते भवन्तीत्याह—

मूलम्—समयाए समणो होइ, बंभचेरेण बंभणो। नाणेण य मुणी होइ, तवेणं होइ तावसो ॥ ३१ ॥

व्याख्या—[ स्पष्टा ] तथा ॥ ३१ ॥

मूलम्—कम्मुणा बंभणो होइ, कम्मुणा होइ खत्तिओ। कम्मुणा वइसो होइ, सुद्दो हवइ कम्मुणा॥३२॥

व्याख्या—कर्मणा क्रियया ब्राह्मणो भवति, यदुक्तं—"क्षमा दानं दमो ध्यानं, सत्यं शौचं धृतिर्घृणा। ज्ञानं विज्ञानमास्तिक्य-मेतद्ब्राह्मणलक्षणम् ॥ १ ॥" तथा कर्मणा क्षतत्राणलक्षणेन भवति क्षत्रियः, वैश्यः कर्मणा कृषिपाशुपाल्यादिना भवति, शूद्रो भवति कर्मणा शोचनहेतुप्रैष्यादिसम्पादनरूपेण। कर्मनानात्वाभावे हि ब्राह्मणादिव्यपदेशानामभाव एवेति। ब्राह्मणावसरे च यच्छेषाभिधानं तद्व्यासिदर्शनार्थम् ॥ ३२ ॥ किमिदं स्वबुद्ध्यैवोच्यत इत्याह—

---

१ " ॐ भूर्भुवःस्वस्तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् " ॥

मूलम्—एए पाउकरे बुद्धे, जेहिं, होइ सिणायओ। सव्वसंगविणिमुक्कं, तं वयं बूम माहणं ॥ ३३ ॥

व्याख्या—ताननन्तरोक्तान् अहिंसादीन् अर्थान्प्रादुरकार्षीत् प्रकटितवान् बुद्धः सर्वज्ञो यैर्भवति स्नातकः केवली, ततश्च प्रत्यासन्नमुक्तितया सर्वकर्मविनिर्मुक्तमिव सर्वकर्मविनिर्मुक्तं तं स्नातकं वयं ब्रूमो ब्राह्मणम् ॥ ३३ ॥

मूलम्—एवं गुणसमाउत्ता, जे भवंति दिउत्तमा। ते समत्था उ उद्धत्तुं, परं अप्पाणमेव य ॥ ३४ ॥

व्याख्या—एवं गुणैरहिंसाद्यैः समायुक्ता ये भवन्ति द्विजोत्तमाः ते समर्थाः, तुः पूरणे। इत्येकोनविंशति सूत्रार्थः ॥ ३४ ॥ इत्युदीर्यावस्थितो मुनिः, ततश्च—

मूलम्—एवं तु संसये छिन्ने, विजयघोसे अ माहणे। समुदाय तओ तं तु, जयघोसं महामुणिं ॥३५॥

व्याख्या—एवमुक्तनीत्या, तुर्वाक्यान्तरोपन्यासे, संशये छिन्ने सति विजयघोषश्चः पूरणे ब्राह्मणः, 'समुदायत्ति' समादाय सम्यक् गृहीत्वा ममासौ सोदरो भवति इत्युपलक्ष्येत्यर्थः, ततः संशयच्छेदानन्तरं तं, तुः पूरणे, जयघोषमहामुनिम् ॥ ३५ ॥ किं चकारेत्याह—

मूलम्—तुट्ठे अ विजयघोसे, इणमुदाहु कयंजली। माहणत्तं जहाभूअं, सुट्ठु मे उवदंसिअं ॥ ३६ ॥

व्याख्या—'इणमुदाहुत्ति' इदमुदाहृतवानुवाचेत्यर्थः. 'जहाभूअंति' यथाभूतं यथास्थितम् ॥ ३६ ॥

मूलम्—तुब्भे जइआ जण्णाणं, तुब्भे वेअविऊ विऊ। जोइसंगविऊ तुब्भे, तुब्भे धम्माण पारगा ३७

व्याख्या—'जइअत्ति' यद्यारः यूयं वेदविदो हे विदः ! हे यथास्थिततत्त्वज्ञाः ! ॥ ३७ ॥

मूलम्—तुब्भे समत्था उद्धत्तुं, परं अप्पाण मेव य। तमणुग्गहं करेहम्हं, भिक्खेणं भिक्खउत्तमा ॥ ३८ ॥

व्याख्या—'तमणुग्गहंति' तत्तस्मात् अनुग्रहं कुरुतास्माकं 'भिक्खेणंति' भैक्ष्येण भिक्षाग्रहणेन हे भिक्षूत्तम ! इति सूत्रचतुष्कार्थः ॥ ३८ ॥ एवं द्विजेनोक्ते मुनिराह—

मूलम्—न कज्जं मज्ज भिक्खेणं, खिप्पं निक्खमसू दिआ ।
मा भमिहिसि भयावत्ते, घोरे संसारसागरे ॥ ३९ ॥

व्याख्या—न कार्यं मम भैक्ष्येण किन्तु क्षिप्रं निष्काम प्रव्रज हे द्विज ! मा भ्रमीः भयानि इहलोकभयादीनि आवर्त्ता इव आवर्ता यस्मिन् स तथा तस्मिन् घोरे संसारसागरे ॥ ३९ ॥

मूलम्—उवलेओ होइ भोगेसु, अभोगी नोवलिप्पइ। भोगी भमइ संसारे, अभोगी विप्पमुच्चइ ॥४०॥

व्याख्या—उपलेपः कर्मोपचयरूपो भवति भोगेषु भुज्यमानेष्विति शेषः, अभोगी नोपलिप्यते कर्मणेति शेषः, ततश्च भोगीत्यादि स्पष्टम् ॥ ४० ॥ भोगिनामुपलेपमन्येषां च तदभावं दृष्टान्तद्वारेणाह—

मूलम्—उल्लो सुक्को अ दो छूढा, गोलया मट्टिआमया ।
दोवि आवडिआ कुड्डे, जो उल्लो सोऽत्थ लग्गइ ॥ ४१ ॥

व्याख्या—आर्द्रः शुष्कश्च द्वौ क्षिप्तौ गोलकौ मृत्तिकामयौ, द्वावप्यापतितौ प्राप्तौ कुड्ये भित्तौ, यः आर्द्रः सो 'अत्थत्ति' अनयोर्मध्ये लगति श्लिष्यति ॥ ४१ ॥ दार्ष्टान्तिकयोजनामाह—

मूलम्—एवं लग्गंति दुम्मेहा, जे नरा कामलालसा। विरत्ता उ न लग्गंति, जहा सुक्के उ गोलए ॥४२॥

व्याख्या—'लग्गंति' श्लिष्यन्ति संसार इति शेषः, इति सूत्रचतुष्कार्थः ॥ ४२ ॥ एवमुक्तो यत्स चक्रे तदाह—

मूलम्—एवं सो विजयघोसो, जयघोसस्स अंतिए। अणगारस्स निक्खंतो, धम्मं सोच्चा अणुत्तरं ४३

व्याख्या—अत्र एवमनेन प्रकारेण धर्मं श्रुत्वेति योज्यम् ॥ ४३ ॥ अथाध्ययनार्थमुपसंहरन्ननयोर्निष्क्रमणफलमाह—

मूलम्—खवित्ता पूवकम्माइं, संजमेण तवेण य। जयघोसविजयघोसा, सिद्धिं पत्ता अणुत्तरं ति बेमि ४४

व्याख्या—स्पष्टम् ॥ ४४ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ पञ्चविंशमध्ययनं सम्पूर्णम् ॥ २५ ॥

## ॥ अथ षड्विंशमध्ययनम् ॥

॥ ॐ ॥ उक्तं पञ्चविंशमध्ययनं अथ सामाचारीसंज्ञं षड्विंशमारभ्यते अस्य चायं सम्बन्धोऽनन्तराध्ययने ब्रह्मगुणा उक्ताः ते च यतेरेव स्युः, तेन चावश्यं सामाचारी समाचरणीया, सा चास्मिन्नुच्यत इत्येवं सम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—सामायारीं पवक्खामि, सव्वदुक्खविमोक्खणिं। जं चरित्ता ण निग्गंथा, तिण्णा संसारसागरं ॥१॥

व्याख्या—सामाचारीं साधुजनकर्त्तव्यरूपां 'जं चरित्ता णत्ति' यां चरित्वाऽऽसेव्य 'तिण्णत्ति' तीर्णाः, उपलक्षणत्वात्तरन्ति तरिष्यन्ति चेति सूत्रावयवार्थः, शेषं स्पष्टमेवमग्रेऽपि ज्ञेयम् ॥ १ ॥ यथाप्रतिज्ञातमाह—

मूलम्—पढमा आवस्सिआ नाम १, बिइआ य निसीहिआ २ ॥
आपुच्छणा य तइआ ३, चउत्थी पडिपुच्छणा ४ ॥ २ ॥
पंचमा छंदणा नामं ५, इच्छाकारो अ छट्ठओ ६ ॥
सत्तमो मिच्छकारो उ ७, तह कारो अ ८ अट्ठमो ॥ ३ ॥

अब्भूट्ठाणं नवमं ९, दसमा उवसंपया १० ॥
एसा दसंगा साहूणं, सामायारी पवेइआ ॥ ४ ॥

व्याख्या—प्रतादारभ्य विना कारणं गुरोरवग्रहे न स्थेयमाशातनाशङ्कातः, किन्तु ततो निर्गन्तव्यं, न चावश्यकीं विना निर्गमनमिति प्रथमाऽऽवश्यकी ॥ १ ॥ निर्गत्य चावस्थानस्थाने नैषेधिकी गमनादिनिषेधरूपा कार्येति तदनु नैषेधिकी ॥ २ ॥ तत्र च तिष्ठता भिक्षाटनादिकार्योत्पत्तौ गुरूनापृच्छ्यैव प्रवर्त्तितव्यमिति तदनन्तरमाऽऽप्रच्छना ॥ ३ ॥ तस्यां च कृतायां गुरुनियुक्तेनाऽपि प्रवृत्तिकाले पुनः प्रष्टव्या एव गुरवः इति तत्पृष्ठतः प्रतिप्रच्छना ॥ ४ ॥ कृत्वा च भिक्षाटनं नात्मम्भरिणा भाव्यं, किन्तु शेषमुनीनां निमन्त्रणारूपा छन्दना कार्येति तदनु छन्दना ॥ ५ ॥ तत्रापि इच्छाकार एव प्रयोक्तव्य इति तदनु सः ॥ ६ ॥ इत्थं क्रियमाणेऽपि कथञ्चिदतिचारसम्भवे मिथ्यादुष्कृतं कार्यमिति तदनु मिथ्याकारम् ॥ ७ ॥ महति चापराधे गुरोरालोचिते गुरुवचनं तथेति स्वीकार्यमिति तत्पृष्ठतस्तथाकारः ॥ ८ ॥ तथेति स्वीकृत्य च सर्वकृत्येषूद्यमः कार्य इति तदनु अभ्युत्थानम् ॥ ९ ॥ उद्यमवता च ज्ञानाद्यर्थं गणान्तरेऽपि गत्वोपसम्पद्ग्राह्येति तदनु उपसम्पदुक्तेति सूत्रत्रयार्थः ॥ ४ ॥ एनामेव विषयविभागेनोपदर्शयितुमाह—

मूलम्—गमणे आवस्सिअं कुज्जा, ठाणे कुज्जा णिसीहिअं। आपुच्छणा सयं करणे, परकरणे पडिपुच्छणा

व्याख्या—गमने तथाविधहेतुना बहिर्निस्सरणे, आवश्यकेषु अवश्यकर्त्तव्यव्यापारेषु भवा आवश्यकी तां कुर्यात्। स्थाने उपाश्रयादौ प्रविशन्निति शेषः, कुर्यान्नैषेधिकीं गमनादिनिषेधरूपां। आप्रच्छना इदमहं कुर्यां न वेत्यादिरूपां, स्वयमात्मनः करणं कस्यापि कार्यस्य निर्वर्त्तनं स्वयं करणं तस्मिन्कार्येति शेषः। तथा परकरणेऽन्यकार्यविधाने प्रतिप्रच्छना, गुरुनियुक्तोऽपि हि पुनः प्रवृत्तिकाले पृच्छत्येव गुरुं। इह च स्वकृत्यपरकृत्ययोरुपलक्षणत्वात्सामान्येन स्वपरसम्बन्धिषु सर्वकार्येष्वपि प्रथमतो गुरूणां प्रच्छनमापृच्छा, गुरुनियुक्तेनापि प्रवृत्तिकाले भूयस्तत्प्रच्छनं प्रतिपृच्छेति ज्ञेयं। आह च निर्युक्तिकृत्—"आपुच्छणा उ कज्जे पुव्वनिउत्तेण होइ पडिपुच्छत्ति" ॥ ५ ॥

मूलम्—छंदणा दव्वजाएणं, इच्छाकारो अ सारणे। मिच्छाकारोअ निंदाए, तहक्कारो पडिस्सुए ॥ ६ ॥

व्याख्या—छन्दना शेषमुनिनिमन्त्रणा द्रव्यजातेन द्रव्यविशेषेण पूर्वगृहीतेनेति गम्यते, उक्तं च "पुव्वगहिएण छंदणत्ति"। इच्छया स्वाभिप्रायेण न तु बलात्कारेण करणं तत्तत्कार्यनिर्वर्त्तनमिच्छाकारः, सारणे आत्मनः परस्य वा कृत्यं प्रति प्रवर्त्तने। तत्रात्मसारणे यथा 'इच्छाकारेण युष्मच्चिकीर्षितमिदं कार्यं करोमीति, अन्यसारणे च यथा 'मम पात्रलेपादिकार्यमिच्छाकारेण कुरुतेति'। मिथ्याकरणं मिथ्या इदमिति प्रतिपत्तिर्मिथ्याकारः, स चात्मनो निन्दायां। वितथाचरणे धिगिदं मिथ्या मया कृतमित्यादिरूपायां। तथाकार इदमित्थमेवेत्यभ्युपगमः, प्रतिश्रुते प्रतिश्रवणे गुरौ वाचनादिकं प्रयच्छत्येवमेवेदमित्यङ्गीकाररूपे ॥ ६ ॥

मूलम्—अब्भुट्ठाणं गुरुपूआ, अच्छणे उवसंपया। एवं दुपंचसंजुत्ता, सामायारी पवेइआ ॥ ७ ॥

व्याख्या—अभीत्याभिमुख्येनोत्थानं अभ्युत्थानं उद्यमः 'गुरुपूअत्ति' आर्षत्वाद्गुरुपूजायां गौरवार्हाणामाचार्यग्लानादीनां यथोचिताहारादिसम्पादनरूपायां। इह च सामान्याभिधानेपि अभ्युत्थानं निमन्त्रणारूपमेव ग्राह्यं, अत एव निर्युक्तिकृता अस्य स्थाने निमन्त्रणैवोक्ता "छंदणा य निमंतणत्ति"। तथा 'अच्छणेत्ति' अवस्थाने प्रक्रमादपराचार्यादेः समीपे, उपसम्पदियन्तं कालं युष्मत्पार्श्वे मया वसितव्यमित्येवंरूपा, कार्येति सर्वत्रापि शेषः। एवमुक्तनीत्या 'दुपंचसंजुत्तत्ति' द्विपञ्चकसंयुक्ता दशसंख्यायुता सामाचारी प्रवेदिता कथितेति सूत्रत्रयार्थः॥ ७ ॥ एवं दशविधां सामाचारीमुदीर्यौघसामाचारीमाह—

मूलम्—पुव्विल्लंमि चउब्भागे, आइच्चंमि समुट्ठिए। भंडगं पडिलेहित्ता, वंदिता य तओ गुरुं ॥ ८ ॥
पुच्छिज्जा पंजलीउडो, किं कायव्वं मए इह। इच्छं निओइउं भंते, वेआवच्चे व सज्झाए ॥ ९ ॥

व्याख्या—पूर्वस्मिंश्चतुर्भागे नभस इति शेषः, आदित्ये समुत्थिते समुद्गते प्राप्त इत्यर्थः। अत्र हि किञ्चिदूनोऽपि चतुर्भागश्चतुर्भाग उक्तस्ततोऽयमर्थः। बुद्ध्या नभश्चतुर्द्धा विभज्यते, तत्र पूर्वदिक्सम्बद्धकिञ्चिदूननभश्चतुर्भागे यदाऽऽदित्यः समेति तदा, पादोनपौरुष्यामित्यर्थः। भाण्डमेव भाण्डकं पतद्ग्रहाद्युपकरणं प्रतिलिख्य वन्दित्वा च

ततः प्रतिलेखनानन्तरं गुरुं आचार्यादिकम् ॥ ८ ॥ 'पुच्छेज्जत्ति' पृच्छेत् प्राञ्जलिपुटो भालस्थलयोजितकरसम्पुटः किं कर्त्तव्यं मया ? इहास्मिन् समय इति गम्यते एतदेव व्यनक्ति, 'इच्छंति' इच्छामि 'निओइउंति' अन्तर्भूतणिगर्थत्वान्नियोजयितुं प्रवर्त्तयितुं युष्माभिरात्मानमिति शेषः, हे भदन्त ! वैयावृत्त्ये ग्लानादिसम्बन्धिनि स्वाध्याये वा वाचनादौ ॥ ९ ॥ एवं पृष्ट्वा यत्कार्यं तदाह—

मूलम्—वेआवच्चे निउत्तेणं, कायव्वं अगिलायओ । सज्झाए वा निउत्तेणं, सव्वदुक्खविमोक्खणे ॥ १० ॥

व्याख्या—वैयावृत्त्ये नियुक्तेन कर्त्तव्यं प्रक्रमाद्वैयावृत्त्यं, 'अगिलायओत्ति' अग्लान्यैव शरीरश्रममनिचिन्त्यैव । स्वाध्याये वा नियुक्तेन सर्वदुःखविमोक्षणे स्वाध्यायोऽप्यग्लान्यैव कार्य इति गम्यमिति सूत्रत्रयार्थः ॥ १० ॥ एवं सकलौघसामाचारीमूलत्वात्प्रतिलेखनायास्तत्कालं सदा विधेयत्वाद्गुरुपारतन्त्र्यं चाभिधायौत्सर्गिकं दिनकृत्यमाह—

मूलम्—दिवसस्स चउरो भाए, कुज्जा भिक्खू विअक्खणो ।
तओ उत्तरगुणे कुज्जा, दिणभागेसु चउसु वि ॥ ११ ॥

व्याख्या—'तओत्ति' ततश्चतुर्भागकरणानन्तरं उत्तरगुणान् स्वाध्यायादीन् कुर्यात् ॥ ११ ॥ कथमित्याह—

मूलम्—पढमं पोरिसि सज्झायं, बिइअं झाणं झिआयइ । तइआए गोअरकालं, पुणो चउत्थिए सज्झायं

व्याख्या—प्रथमां पौरुषीं स्वाध्यायं वाचनादिकं कुर्यादिति शेषः, द्वितीयायां ध्यानं ध्यायेत्, धातुनामनेकार्थत्वात् कुर्यात्, ध्यानं चेहार्थपौरुषीत्वादस्या अर्थविषये एव मानसादिव्यापारणमुच्यते । तृतीयायां भिक्षाचर्यामुपलक्षणत्वाद्भोजनबहिर्गमनादि । चतुर्थ्यां पुनः स्वाध्यायं, इहापि प्रतिलेखनादिकमुपलक्षणाद्ग्राह्यमिति ॥ १२ ॥ यदुक्तं प्रथमां पौरुषीमित्यादि, तज्ज्ञानार्थमाह—

मूलम्—आसाढे मासे दुपया, पोसे मासे चउप्पया । चित्तासोएसु मासेसु, तिपया हवइ पोरिसी ॥ १३ ॥

व्याख्या—'दुप्पयत्ति' यदा पुरुषादेरूर्ध्वस्थितस्य दक्षिणकर्णनिवेशिततरणिमण्डलस्य आषाढपूर्णिमादिने जानुच्छाया द्विपदा स्यात्तदा पौरुषी, एवं सर्वत्रापीति ॥ १३ ॥ इदं च पौरुषीमानमाषाढादिपूर्णिमासु ज्ञेयं, तदनु तु वृद्धिहानी एवम्—

मूलम्—अंगुलं सत्तरत्तेणं, पक्खेणं तु दुअंगुलं । वड्ढए हायए आवि, मासेणं चउरंगुलं ॥ १४ ॥

व्याख्या—अङ्गुलं सप्तरात्रेणेति दिनाविनाभावित्वाद्रात्रीणां सप्ताहोरात्रेण वर्द्धते दक्षिणायने, हीयते उत्तरायणे । इह च सप्तरात्रेणेत्यत्र सार्द्धेनेति शेषो द्रष्टव्यः, पक्षेणाङ्गुलद्वयवृद्धेरुक्तत्वात् । अन्यच्च केषुचिन्मासेषु दिनचतुर्दशकेनाऽपि पक्षः सम्भवति, तत्र च सप्तरात्रेणाप्यङ्गुलवृद्धिहान्या न दोषः ॥ १४ ॥ केषु पुनर्मासेषु चतुर्दशभिर्दिनैः पक्ष इत्याह—

मूलम्—आसाढबहुलपक्खे, भद्दवए कत्तिए अ पोसे अ । फग्गुण—वइसाहेसु अ, नायव्वा ओमरत्ताओ १५

व्याख्या—'ओमत्ति' अवमा न्यूना एकेनेति शेषः, 'रत्तत्ति' उपलक्षणत्वादहोरात्राः । एवं च एकैकदिनापहारे दिनचतुर्दशकेनैव कृष्णपक्ष एतेषु मासेष्विति भावः ॥ १५ ॥ एवं पौरुषीज्ञानोपायमभिधाय पूर्वमुक्तायाः पादोनपौरुष्या ज्ञानोपायमाह—

मूलम्—जेट्ठामूले आसाढ—सावणे, छहिं अंगुलेहिं पडिलेहा ।
अट्ठहि बीअतिअम्मि, तइए दस अट्ठहिं चउत्थे ॥ १६ ॥

व्याख्या—ज्येष्ठामूले ज्येष्ठे आषाढश्रावणे च षड्भिरङ्गुलैः प्रत्यहं पूर्वोक्तपौरिषीमाने प्रक्षिप्तैरिति गम्यं, प्रतिलेखा—पात्रप्रतिलेखनाकालः । अष्टभिरङ्गुलैर्द्वितीयत्रिके, भाद्रपदाश्विनकार्त्तिकरूपे । तथा तृतीये त्रिके मार्गशीर्षपौषमाघरूपे, 'दसत्ति' दशभिरङ्गुलैः । अष्टभिश्चतुर्थे त्रिके, फाल्गुनचैत्रवैशाखरूपे । इति सूत्रषट्कार्थः ॥ १६ ॥ इत्थं दिनकृत्यमुक्त्वारात्रौ यद्विधेयं तदाह—

मूलम्—रत्तिंपि चउरो भाए, भिक्खू कुज्जा विअक्खणो । तओ उत्तरगुणे कुज्जा, राईभागेसु चउसुवि १७॥

व्याख्या—'रत्तिंपित्ति' रात्रिमपि न केवलं दिनमित्यपिशब्दार्थः ॥ १७ ॥

मूलम्—पढमं पोरिसि सज्झायं, बिइअं झाणं झिआयइ ।
तइआए निद्दमोक्खं तु, चउत्थीए भुज्जोवि सज्झायं ॥ १८ ॥

व्याख्या—'बिइअंति' द्वितीयायां ध्यानं धर्मध्यानं, तृतीयायां निद्रायाः पूर्वरुद्धाया मोक्षो मुत्कलनं निद्रामोक्षः तं कुर्यात्, वृषभापेक्षं चैतत्, सामस्त्येन तु प्रथमचरमयामजागरणमेव। तथा चागमः—"सव्वेऽवि पढमजामे, दोण्णि उ वसहाण आइमा जामा॥ तइओ होइ गुरूणं, चउत्थओ होइ सव्वेसिं" इति ॥ १८ ॥ अथ रात्रिभागचतुष्कज्ञानोपायमुपदर्शयन् समस्तयतिकृत्यमाह—

मूलम्—जं नेइ जया रत्तिं, नक्खत्तं तम्मि नहचउब्भाए। संपत्ते विरमिज्जा, सज्झाय पओसकालंमि १९

व्याख्या—यन्नयति प्रापयति समाप्तिमिति गम्यते, यदा रात्रिं क्षपां नक्षत्रं, यस्मिन् दिने यस्मिन्नक्षत्रेऽस्तमिते रात्रिपर्यन्तो भवतीतिभावः। तच्च नक्षत्रं रविनक्षत्रात् प्रायश्चतुर्दशं भवतीति वृद्धाः। तस्मिन्नक्षत्रे नभश्चतुर्भागे सम्प्राप्ते विरमेत् निवर्त्तेत, 'सज्झायत्ति' स्वाध्यायात्प्रदोषकाले रात्रिमुखे प्रारब्धादिति शेषः॥ १९॥

मूलम्—तम्मेव य नक्खत्ते, गयण चउब्भागसावसेसंमि। वेरत्तिअंपि कालं, पडिलेहित्ता मुणी कुज्जा २०

व्याख्या—तस्मिन्नेव नक्षत्रे प्रक्रमात्प्राप्ते 'गयणत्ति' गगने, कीदृशे? चतुर्भागेन गम्यत्वेन सावशेषं चतुर्भागसावशेषं तस्मिन्, वैरात्रिकं तृतीयं, अपिशब्दात्त्रिजनिजसमये प्रादोषिकादिकं च कालं, 'पडिलेहित्तत्ति' प्रत्युपेक्ष्य प्रतिजागर्य मुनिः कुर्यात्, करोतेः सर्वधात्वर्थव्यापकत्वाद्गृह्णीयात्। इह च प्रथमादिषु नभश्चतुर्भागेषु सम्प्राप्ते रात्रिसमापके नक्षत्रे रात्रेः प्रथमाद्याः प्रहरा इति सामर्थ्यादुक्तं भवतीति सूत्रचतुष्कार्थः॥ २०॥ इत्थं सामान्येन दिननिशाकृत्यमुपदर्श्य पुनर्विशेषात्तदेव दर्शयन्नादौ दिनकृत्यं सार्द्धसप्तदशसूत्रैराह—

मूलम्—पुव्विल्लंमि चउब्भागे, पडिलेहित्ताण भंडगं। गुरुं वंदित्तु सज्झायं, कुज्जा दुक्खविमोक्खणं॥ २१॥

व्याख्या—पूर्वस्मिंश्चतुर्भागे प्रथमपौरुषीलक्षणे प्रक्रमाद्दिनस्य स्वाध्यायं कुर्यादितियोगः, किं कृत्वेत्याह—प्रत्युपेक्ष्य भाण्डकं वर्षाकल्पादिकमुपधिं सूर्योदयसमये इति शेषः॥ २१॥

मूलम्—पोरिसीए चउब्भागे, वंदित्ताण तओ गुरुं। अपडिक्कमित्ता कालस्स, भायणं पडिलेहए॥ २२॥

व्याख्या—पौरुष्याश्चतुर्भागे अवशिष्यमाण इति शेषः, ततः पादोनपौरुष्यामित्यर्थः। अप्रतिक्रम्य कालस्य, चतुर्थपौरुष्यामपि स्वाध्यायस्य विधास्यमानत्वात्, कालप्रतिक्रमणं च स्वाध्यायसमाप्तौ स्यादित्यप्रतिक्रम्येत्युक्तम् ॥ २२॥ प्रतिलेखनाविधिमाह—

मूलम्—मुहपोत्तिअं पडिलेहित्ता, पडिलेहिज्ज गोच्छगं। गोच्छगलइअंगुलिओ, वत्थाइं पडिलेहए॥२३॥

व्याख्या—मुखवस्त्रिकां प्रतिलिख्य प्रतिलेखयेत् 'गोच्छगं' पात्रकोपरिवर्त्ति उपकरणं, ततश्च 'गोच्छगलइअंगुलिओत्ति' प्राकृतत्वादङ्गुलिभिर्लातो गृहीतो गोच्छको येन सोऽङ्गुलिलातगोच्छकः, वस्त्राणि पटलकरूपाणि प्रतिलेखयेत् प्रस्तावात्प्रमार्जयेदित्यर्थः॥ २३॥ इत्थं तथास्थितान्येव पटलानि गोच्छकेन प्रमृज्य पुनर्यत्कुर्यात्तदाह—

मूलम्—उड्ढं थिरं अतुरिअं, पुव्वं ता वत्थमेव पडिलेहे। तो बिइयं पप्फोडे, तइअं च पुणो पमज्जिज्जा॥२४॥

व्याख्या—ऊर्ध्वं कायतो वस्त्रतश्च, तत्र कायत उत्कुटुको वस्त्रतस्तु तिर्यक्प्रसारितवस्त्रः। स्थिरं दृढग्रहणेन, अत्वरितं अद्रुतं यथाभवत्येवं पूर्वं प्रथमं 'ता इति' तावद्वस्त्रं पटलकरूपं जातावेकवचनं। अत्र च पटलकप्रक्रमेपि वस्त्रमिति सामान्यशब्दाभिधानं तद्वर्षाकल्पादिप्रतिलेखनायामप्ययमेव विधिरिति ख्यापनार्थं एवशब्दो भिन्नक्रमस्ततः प्रत्युपेक्षेतैव, आरतः परतश्च निरीक्षेतैव, न तु प्रस्फोटयेत्। तत्र च यदि जन्तून् पश्यति ततो यतनयाऽन्यत्र सङ्क्रमयति। 'तो इति' ततः प्रत्युपेक्षणानन्तरं द्वितीयमिदं कुर्यात्, किमित्याह—यत् शुद्धं सत् प्रस्फोटयेत्। तृतीयं च पुनरिदं कुर्यात्, प्रमृज्यात् प्रत्युपेक्ष्य प्रस्फोट्य च हस्तगतान् प्राणिनः प्रमृज्यादित्यर्थः॥ २४॥ कथं पुनः प्रस्फोटयेत् प्रमृज्याद्वेत्याह—

मूलम्—अणच्चाविअं अवलियं, अणाणुबंधिं अमोसलिं चेव। छप्पुरिमा नव खोडा, पाणीपाणिविसोहणं

व्याख्या—अनार्त्तितं, वस्त्रं वपुर्वा यथा नर्त्तितं न भवति। अवलितं, यथाऽऽत्मनो वस्त्रस्य च वलितं मोटनं न स्यात्। अननुबन्धि, अनुबन्धेन नैरन्तर्यरूपेण युक्तमनुबन्धि, न तथा अननुबन्धि, कोऽर्थः? लक्ष्यमाणविभागं यथा भवति तथा। अमोसलित्ति' सूत्रत्वादमर्शवत्, तिर्यगूर्ध्वमधो वा कुड्यादिपरामर्शयुक्तं यथा न स्यात्तथा। किमित्याह—'छप्पुरिमत्ति' षट् पूर्वाः, पूर्वं क्रियमाणतया तिर्यक्कृतवस्त्रप्रस्फोटनात्मकाः क्रियाविशेषा येषां ते षट्

पूर्वाः । नव खोटकाः, प्रस्फोटनरूपाः कर्त्तव्या इति शेषः । पाणौ हस्ते प्राणिनां कुन्थ्वादीनां विशोधनं प्राणि-विशोधनं, पाठान्तरे च प्राणिप्रमार्जनं प्रस्फोटनत्रिकत्रिकोत्तरकालं त्रिकत्रिकसंख्यं कर्त्तव्यम् ॥ २५ ॥ प्रतिले-खनादोषपत्यागार्थमाह—

**मूलम्—आरभडा सम्मद्दा, वज्जेअव्वा य मोसली तइआ। पप्फोडणा चउत्थी, विक्खित्ता वेइआ छट्ठा २६**

व्याख्या—'आरभडा' विपरीतकरणं, त्वरितमन्यान्यवस्त्रग्रहणरूपा वा । यदुक्तं—"वितहकरणमारभडा, तुरिअं वा अन्नमन्नगहणेणंति" । संमर्द्दनं संमर्द्दा, रूढित्वात् स्त्रीलिङ्गता, संमर्द्दा नाम वस्त्रान्तकोणसंवलनं[1], उपधेर्वा उपरि उपवेशनं वर्जयितव्येति सर्वत्र योज्यं । चः पूर्त्तौ, 'मोसलित्ति' तिर्यगूर्ध्वमधो वा घट्टना, तृतीया । प्रस्फोटना प्रकर्षेण रेणुगुण्ठितस्येव वस्त्रस्य स्फोटना चतुर्थी । विक्षेपणं विक्षिप्ता पञ्चमी, स्त्रीत्वं प्राग्वत्, सा च प्रत्युपेक्षित-वस्त्रस्याप्रत्युपेक्षिते प्रक्षेपणं, प्रत्युपेक्ष्यमाणो वा वस्त्राञ्चलं यदूर्ध्वं क्षिपति । वेदिका षष्ठी, सा च पञ्चविधा । यदाहुः—"वेइआ पंचविहा पणत्ता, तंजहा—उड्ढवेइआ १ अहोवेइआ २ तिरिअवेइआ ३ दुहओ वेइआ ४ एगओ वेइआ ५ । तत्थ उड्ढवेइआ उवरि जाणुगाणं हत्थे काऊण पडिलेहेइ १ । अहोवेइआ अहो जाणुगाणं हत्थे काऊण पडिलेहेइ २ । तिरिअवेइआ संडासयाणं मज्झे हत्थे नेऊण पडिलेहेइ ३ । उभओ वेइआ वाहाणं अंतरे दोवि

१ वस्त्रान्तकोणाना परस्परमेलनमिति दीपिकायाम् ॥

जाणुगा काऊण पडिलेहेइ ४ । एगओ वेइआ एगं जाणुगं वाहाणमंतरे काऊण पडिलेहेइत्ति ५ ।"* एवमेते षड् दोषाः त्याज्याः ॥ २६ ॥ तथा—

**मूलम्—पसिढिल—पलंब—लोला, एगामोसा अणेगरूवधुणा ।**
**कुणइ पमाणि पमायं, संकिए गणणोवगं कुज्जा ॥ २७ ॥**

व्याख्या—प्रशिथिलं नाम दोषो यदद्दढमतिर्यगायतं वा वस्त्रं गृह्यते, प्रलम्बो यद्विषमग्रहणेन प्रत्युपेक्ष्यमाणवस्त्र-कोणानां लम्बनं । लोलो यद्भूमौ करे वा प्रत्युपेक्ष्यमाणवस्त्रस्य लोलनममीषां द्वन्द्वः । एकामर्शनमेकामर्शा, स्त्रीत्वं प्राग्वत्, मध्ये गृहित्वा ग्रहणदेशं यावदुभयतो वस्त्रस्य यदेककालमाकर्षणं । अनेकरूपा संख्यात्रयातिक्रमेण युगपद-नेकवस्त्रग्रहणेन वा या धूनना वस्त्रकम्पना साऽनेकरूपधूनना । तथा करोति प्रमाणे प्रस्फोटनादिसंख्यारूपे प्रमादम-नवधानं । यच्च शङ्किते प्रमादात्प्रमाणं प्रति शङ्कोत्पत्तौ गणनां कराङ्गुलिरेखास्पर्शनादिना एकद्वित्रिसंख्यारूपा-

* वेदिकायाः पञ्चभेदाः । ऊर्द्ध्ववेदिका १ अधोवेदिका २ तिर्यग्वेदिका ३ उभयवेदिका ४ एकवेदिका ५ । ऊर्ध्ववेदिका सा यस्या उभयोर्जान्वोरुपरि हस्तयो रक्षणम् १ । अधोवेदिका सा जान्वोरधः प्रचुरं हस्तयो रक्षणम् २ । तिर्यग्वेदिका सा यस्या तिर्यग् हस्तौ कृत्वा प्रतिलेखनम् ३ । उभयवेदिका सा यस्या उभाभ्या जानुभ्या बाह्ये उभयोर्हस्तयो रक्षणम् ४ । एकवेदिका सा यस्या एक जानु हस्तमध्ये अपरं जानु बाह्ये रक्ष्यते ५ । इति दीपिकायाम् ॥

मुपगच्छतीति गणनोपगं यथा भवत्येवं प्रक्रमात्प्रस्फोटनादि कुर्यात्सोऽपि दोषः । सर्वत्र पूर्वसूत्रादनुवर्त्त्य वर्जन-क्रिया योज्या । एवं चानन्तरोक्तदोषैर्युक्ता सदोषा प्रतिलेखना तैर्वियुक्ता तु निर्दोषेत्यर्थादुक्तम् ॥ २७ ॥ साम्प्रतं त्वेनामेव भङ्गकदर्शनद्वारेण साक्षात्सदोषां निर्दोषां च किञ्चिद्विशेषतो वक्तुमाह—

**मूलम्—अणूणाइरित्तपडिलेहा, अविवच्चासा तहेव य । पढमं पयं पसत्थं, सेसाणि उ अप्पसत्थाणि॥२८॥**

व्याख्या—ऊना चासावतिरिक्ता च ऊनातिरिक्ता, न तथा अनूनातिरिक्ता, । इह च न्यूनताधिक्ये प्रस्फोटना प्रमार्जने, वेलां चाश्रित्य वक्तव्ये । 'अविवच्चासत्ति' अव्यत्यासा पुरुषोपधिविपर्यासरहिता[1], कार्येति शेषः । अत्र त्रिभिर्विशेषणपदैरष्टौ भङ्गाः सूचितास्तेषु च कः शुद्धः को वाऽशुद्धः? इत्याह—प्रथमं पदं आद्यभङ्गकरूपमिहैवो-पदर्शितं प्रशस्तं, शेषाणि तु सप्ताऽप्रशस्तानि* ॥ २८ ॥ निर्दोषामप्येनां कुर्वता यत्त्याज्यं तत्काक्वोपदेष्टुमाह—

**मूलम्—पडिलेहणं कुणंतो, मिहो कहं कुणइ जणवय—कहं वा ।**
**देइ व पच्चक्खाणं, वाएइ सयं पडिच्छइ वा ॥ २९ ॥**

१ गुर्वादे रत्नाधिकस्य चोपधिं यथाक्रम न प्रतिलेखयति, प्रातः साय च रजोहरणादिकमुपधिं वा यथोक्तस्थाने न प्रतिलेखयति, इत्येव पुरुषव्यत्यय उपधिव्यत्ययश्च । * स्थापना—SSS—।SS—S।S—॥S—SS।—।S।—S॥ —।॥ एवमष्ट भङ्गाः ॥

व्याख्या—प्रतिलेखनां कुर्वन् मिथः कथां करोति, जनपदकथां वा, कथादिकथोपलक्षणमेतत्, ददाति वा प्रत्याख्यानमन्यस्मै, वाचयति परं, स्वयं प्रतीच्छति वा आलापादिकं गृह्णाति य इति शेषः ॥ २९ ॥ स किमित्याह—

**मूलम्—पुढवि आउक्काए, तेउ वाऊ वणस्सइ तसाणं। पडिलेहणापमत्तो, छण्हंपि विराहओ होइ ॥३०॥**

व्याख्या—'पडिलेहणापमत्तोत्ति' मिथः कथादिना प्रतिलेखनायां प्रमत्तोऽनवधानः, षण्णामपि विराधको भवति। कथमिति चेदुच्यते—प्रमत्तो हि कुम्भकारशालादौ स्थितो जलभृतघटादिकमपि प्रलोठयेत्, ततस्तज्जलेन मृदग्निबीजकुन्थ्वादयः प्लाव्यन्ते, यत्र चाग्निस्तत्रावश्यं वायुरिति षण्णामपि विराधना। तदेवं प्रतिलेखनाकाले हिंसाहेतुत्वान्मिथः कथादीनि त्याज्यानि इति भावः ॥ ३० ॥

**मूलम्—पुढवी-आउक्काए, तेऊ-वाऊ-वणस्सइतसाणं। पडिलेहणा आउत्तो, छण्हंपि आराहओ होइ ॥३१॥**

व्याख्या—[ प्रतिलेखनायां आयुक्तः सावधानोऽप्रमादी साधु पृथिव्यादीनां षण्णामपि कायानां आराधको भवति ॥ ३१ ॥ ] इत्थं प्रथमपौरुषीकृत्यमुक्तं, द्वितीयपौरुषीकृत्यं तु 'बीइअं झाणं झिआयइ' इत्यनेनोक्तमेव, उभयं चेदमवश्यं कर्त्तव्यं। अथ तृतीयपौरुषीकृत्यमपि किमेवमवश्यं कार्यमुत कारण एवोत्पन्ने ? इत्याशङ्कापोहार्थमाह—

**मूलम्—तइआए पोरिसीए, भत्तपाणं गवेसए। छण्हमन्नयरागंमि. कारणम्मि समुट्ठिए ॥ ३२ ॥**

१ एषागाथा "घ" सञ्ज्ञकपुस्तके न दृश्यते ॥

व्याख्या—स्पष्टं नवरमौत्सर्गिकमेवेदं तृतीयपौरुषीभक्तपानगवेषणं, अन्यथा हि स्थविरकल्पिकानां यथाकालमेव भक्तादिगवेषणं। यदाहुः—"मइ काले चरे भिक्खू, कुज्जा पुरिसकारिअं ॥ अलाभुत्ति न सोइज्जा, तवुत्ति अहिआसए १ त्ति"। छण्हमित्यादि—षण्णामन्यतरस्मिन् कारणे समुपस्थिते, न तु कारणं विनेति भावः ॥ ३२ ॥ कारणषट्कमेवाह—

**मूलम्—वेअण-वेआवच्चे, इरिअट्ठाए अ संजमट्ठाए। तह पाणवत्तिआए, छट्ठं पुण धम्मचिंताए ॥३३॥**

व्याख्या—'वेअणत्ति' वेदनाशब्दस्योपलक्षणत्वात् क्षुत्पिपासावेदनाच्छेदनार्थं १। 'वेआवच्चेत्ति' क्षुधादिबाधितो वैयावृत्त्यं कर्त्तुं क्षमो न स्यादिति वैयावृत्त्याय २। तथा ईर्यासमितिः सैवार्थस्तस्मै, चः समुच्चये, क्षुत्तृषाकुलस्य हि चक्षुर्भ्यामपश्यतोऽसौ दुष्करेति ३। तथा संयमार्थाय संयमपालनं च यथा स्यादिति, आहारादिकमन्तरा हि कच्छमहाकच्छादीनामिव संयमो दुरनुपालः स्यादिति ४। तथा प्राणप्रत्ययं प्राणत्राणहेतवे, अविधिना ह्यात्मनोऽपि प्राणोपक्रमे हिंसा स्यात् ५। षष्ठं पुनरिदं कारणं यदुत धर्मचिन्तायै धर्म्मध्याननिमित्तं, क्षुत्तृषाक्षामस्य हि दुर्ध्यानोपगतस्य क धर्मचिन्तेति तदर्थं भक्तपानं गवेषयेदिति सर्वत्रानुवर्त्यते ॥ ३३ ॥ अथ यैः कारणैर्भक्तादिग्रहणं न कुर्यात्तानि निर्दिष्टुमाह—

**मूलम्—निग्गंथो धिइमंतो, निग्गंथी वि न करिज्ज छहिं चेव।**
**ठाणेहिं तु इमेहिं, अणतिक्कमणा य से होई ॥ ३४ ॥**

व्याख्या—निर्ग्रन्थो धृतिमान् धर्मचरणं प्रति स्थैर्यवान्, निर्ग्रन्थी साध्वी सापि, न कुर्याद्भक्तादिगवेषणमिति प्रक्रमः। षड्भिरेव स्थानैः, तुः पुनरर्थे एभिर्वक्ष्यमाणैः, कुतः ? इत्याह—'अणइक्कमणायत्ति' अनतिक्रमणं संयमयोगानामनुल्लंघनं, चशब्दो यस्मादर्थे, ततो यस्मात् 'से' तस्य निर्ग्रन्थादेर्भवति, अन्यथा हि तदतिक्रमसम्भवः ॥ ३४ ॥ स्थानरूपषट्कमाह—

**मूलम्—आयंके उवसग्गे, तितिक्खया बंभचेरगुत्तीसु। पाणिदया तवहेउं, सरीरवोच्छेअणट्ठाए ॥३५॥**

व्याख्या—आतङ्के ज्वरादौ १। उपसर्गे दिव्यादौ, व्रतमोक्षाय स्वजनादिकृते वा २। उभयत्र तन्निवारणार्थमिति गम्यते। तथा तितिक्षा सहनं तया, केत्याह—ब्रह्मचर्यगुप्तिषु विषये, ता हि मनोविप्लवोत्पत्तौ नान्यथा सोढुं शक्या इति ३। तथा 'पाणिदयातवहेउंति' प्राणिदयाहेतोर्वर्षादौ अप्कायादिजीवरक्षायै ४। तपश्चतुर्थादि तद्धेतोश्च ५। शरीरव्यवच्छेदार्थं, उचितकालेऽनशनं कुर्वन् ६। भक्तपानगवेषणं न कुर्यादिति योज्यम् ॥ ३५ ॥ भक्तादिगवेषयंश्च केन विधिना कियत्क्षेत्रं पर्यटेदित्याह—

मूलम्—अवसेसं भंडगं गिज्झा, चक्खुसा पडिलेहए। परमद्धजोअणाओ, विहारं विहरए मुणी ॥ ३६ ॥

व्याख्या—अपगतशेषमपशेषं समग्रमित्यर्थः, भाण्डकमुपकरणं गृहीत्वा चक्षुषा प्रत्युपेक्ष्येति शेषः, ततः प्रतिलेखयेत्। तच्चादाय परमुत्कृष्टं अर्द्धयोजनादर्द्धयोजनमाश्रित्य, परतो हि मार्गातीतमशनादि स्यात्, विहरत्यस्मिन्प्रदेशे इति विहारः क्षेत्रं, तं विहरेन्मुनिः ॥३६॥ इत्थं विहृत्योपाश्रयं चागत्य गुर्वालोचनादिपूर्वं भोजनादि कृत्वा यत्कुर्यात्तदाह—

मूलम्—चउत्थीए पोरिसीए, निक्खवित्ताण भायणं। सज्झायं च तओ कुज्जा, सव्वभावविभावणं॥३७॥

व्याख्या—चतुर्थ्यां पौरुष्यां निक्षिप्य प्रत्युपेक्षणापूर्वं बद्ध्वा भाजनं पात्रं, उपलक्षणत्वादुपधिं च प्रतिलिख्य, स्वाध्यायं ततः कुर्यात्, सर्वभावा जीवादयस्तेषां विभावनं प्रकाशकम् ॥ ३७ ॥

मूलम्—पोरिसीए चउब्भाए, वंदित्ताण तओ गुरुं। पडिक्कमित्ता कालस्स, सिज्जं तु पडिलेहए ॥ ३८॥

व्याख्या—पौरुष्याः प्रक्रमाच्चतुर्थ्याश्चतुर्भागे शेषे इति शेषः, 'सिज्जंति' शय्यां वसतिम् ॥ ३८ ॥

मूलम्—पासवणुच्चारभूमिं च, पडिलेहिज्ज जयं जई। काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमोक्खणं॥३९॥

व्याख्या—'पासवणुचारभूमिं चत्ति' प्रश्रवणभूमिमुच्चारभूमिं च प्रत्येकं द्वादशस्थण्डिलात्मिकां, चशब्दात्कालभूमिं च स्थण्डिलत्रयरूपां प्रतिलेखयेत्, यतमारम्भादुपरतं यथा स्यात्तथा यतिरिति सार्द्धसप्तदशसूत्रार्थः। इत्थं दिनेपादिनकृत्यमुक्त्वा रात्रिकृत्यं सार्द्धत्रयोदशसूत्रैराह । काउस्सग्गमित्यादि—'तओत्ति' ततः प्रश्रवणादिभूमिप्रतिलेखनानन्तरम् ॥ ३९ ॥ कायोत्सर्गे स्थितश्च यत्कुर्यात्तदाह—

मूलम्—देसिअं च अईआरं, चिंतिज्ज अणुपुव्वसो । नाणे अ दंसणे चेव, चरित्तंमि तहेव य ॥ ४० ॥

व्याख्या—'देसिअंति' सूत्रत्वाद्दैवसिकं, अतिचारं चिन्तयेदानुपूर्व्या क्रमेण प्रातः प्रतिक्रमणे प्रथममुखवस्त्रिकाप्रत्युपेक्षणादारभ्यामुं कायोत्सर्गं यावदित्यर्थः। किं विषयमतिचारं चिन्तयेदित्याह—ज्ञाने चेत्यादि ॥ ४० ॥

मूलम्—पारिअ काउस्सग्गो, वंदित्ताण तओ गुरुं। देसिअं तु अईआरं, आलोइज्ज जहक्कमं ॥ ४१ ॥

व्याख्या—पारितकायोत्सर्गो वन्दित्वा द्वादशावर्त्तवन्दनेन, तत इत्यतिचारचिन्तनानन्तरं गुरुं । दैवसिकं, तुः पूर्त्तौ, अतिचारमालोचयेत् प्रकाशयेत् यथाक्रमम् ॥ ४१ ॥

मूलम्—पडिक्कमित्तु निस्सल्लो, वंदित्ताण तओ गुरुं। काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमोक्खणं ४२

व्याख्या—प्रतिक्रम्यापराधस्थानेभ्यो निवर्त्त्य निःशल्यो मायाशल्यादिरहितः 'वंदित्ताणत्ति' सूचकत्वात्सूत्रस्य वन्दनकपूर्वं क्षमयित्वा वन्दित्वा च गुरुवन्दनेन ततो गुरुं, कायोत्सर्गं चारित्रदर्शनज्ञानशुद्धिनिमित्तं व्युत्सर्गत्रयरूपं, जातावेकवचनम् ॥ ४२ ॥

मूलम्—पारिय काउस्सग्गो, वंदित्ताणं तओ गुरुं। थुइमंगलं च काउं, कालं संपडिलेहए ॥ ४३ ॥

व्याख्या—'थुइमंगलंति' स्तुतिमङ्गलं सिद्धस्तवरूपं स्तुतित्रयरूपं च कृत्वा कालं प्रादोषिकं सम्प्रत्युपेक्षते, कोऽर्थः ? प्रतिजागर्त्ति। उपलक्षणत्वाद्गृह्णाति च ॥ ४३ ॥

मूलम्—पढमं पोरिसि सज्झायं, बिइअं झाणं झिआयइ।
तइआए निद्दमोक्खं तु, सज्झायं तु चउत्थीए ॥ ४४ ॥

व्याख्या—इदं व्याख्यातमेव पुनः कथनं त्वस्य पुनः पुनरुपदेष्टव्यमेव गुरुभिर्न प्रयासो मन्तव्य इति ख्यापनार्थम् ॥ ४४ ॥ कथं पुनः चतुर्थपौरुष्यां स्वाध्यायं कुर्यादित्याह—

मूलम्—पोरिसीए चउत्थीए, कालं तु पडिलेहिआ। सज्झायं तु तओ कुज्जा, अबोहिंतो असंजए ४५

व्याख्या—'कालंति' वैरात्रिकं कालं, तुः पूरणे, प्रत्युपेक्ष्य प्रतिजागर्य गृहीत्वा च स्वाध्यायं ततः कुर्यादबोधयन्ननुत्थापयन् असंयतान् ॥ ४५ ॥

मूलम्—पोरिसीए चउब्भाए, वंदित्ताण तओ गुरुं। पडिक्कमित्ता कालस्स, कालं तु पडिलेहए ॥ ४६ ॥

व्याख्या—पौरुष्याः प्रक्रमाच्चतुर्थ्याश्चतुर्भागेऽवशिष्यमाणे इति शेषः, वन्दित्वा ततो गुरुं प्रतिक्रम्य कालस्य वैरात्रि-

कस्य कालं प्राभातिकं तुः पूर्त्तौ, 'पडिलेहएत्ति' प्रत्युपेक्षेत गृह्णीयाच्च । इह च साक्षात्प्रत्युपेक्षणस्यैव पुनः पुनः कथनं बहुतरविषयत्वात् । मध्यमक्रमापेक्षं चेह कालत्रयग्रहणमुक्तं, अन्यथा ह्युत्सर्गत उत्कर्षेण चत्वारो जघन्येन त्रयः कालाः, अपवादतश्चोत्कर्षेण द्वौ जघन्येन त्वेकोऽप्यनुज्ञात एवेति । कालग्रहणविधिश्चेहावश्यकवृत्तेरवसेयः ॥ ४६ ॥

मूलम्—आगए कायवुस्सग्गे, सव्वदुक्खविमोक्खणे ।
काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमोक्खणं ॥ ४७ ॥

व्याख्या—आगते प्राप्ते कायव्युत्सर्गे कायव्युत्सर्गसमये, शेषं स्पष्टम् । यच्चेह कायोत्सर्गस्य सर्वदुःखविमोक्षण इति विशेषणं पुनः पुनरुच्यते तदस्यात्यन्तनिर्जराहेतुत्वख्यापनार्थम् । यदुक्तं—"काउस्सग्गे जह सुट्ठिअस्स, भज्जंति अंगमंगाइं ॥ इअ भिंदंति मुणिवरा, अट्ठविहं कम्मसंघायं ॥ १ ॥" तथेह कायोत्सर्गग्रहणेन चारित्रदर्शनज्ञान-शुद्धये कायोत्सर्गत्रयं गृह्यते, तत्र च तृतीये रात्रिकोऽतिचारश्चिन्त्यते ॥ ४७ ॥ तथा चाह—

मूलम्—राइअं च अईआरं, चिंतिज्ज अणुपुव्वसो । नाणम्मि दंसणम्मि, चरित्तम्मि तवंमि य ॥ ४८ ॥

व्याख्या—रात्रौ भवं रात्रिकं, चः पूरणे, अतिचारं चिन्तयेत् 'अणुपुव्वसोत्ति' आनुपूर्व्या क्रमेण ज्ञाने दर्शने चारित्रे तपसि चशब्दाद्वीर्ये च, शेषकायोत्सर्गेषु तु चतुर्विंशतिस्तवचिन्तनं प्रतीतमेवेति नोक्तम् ॥ ४८ ॥ ततश्च—

मूलम्—पारिअ काउस्सग्गो, वंदित्ताण तओ गुरुं । राइअं तु अईआरं, आलोएज्ज जहक्कमं ॥ ४९ ॥

पडिक्कमित्तु निस्सल्लो, वंदित्ताण तओ गुरुं । काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमोक्खणं ॥५०॥

व्याख्या—[ स्पष्टे नवरं ] 'वंदित्ताणत्ति' वन्दनकपूर्वं क्षमयित्वा ततो वन्दित्वेति द्रष्टव्यम् ॥ ४९ ॥ ५० ॥ कायोत्सर्गस्थः किं कुर्यादित्याह—

मूलम्—किं तवं पडिवज्जामि, एवं तत्थ विचिंतए ।
काउस्सग्गं तु पारित्ता, वंदई उ तओ गुरुं ॥ ५१ ॥

व्याख्या—किं रूपं तपो नमस्कारसहितादि प्रतिपद्येऽहमेवं तत्रोत्सर्गे विचिन्तयेत् । वीरो हि भगवान् षण्मासान्निरशनो विहृतवान् तत्किमहमपि निरशनः शक्तोऽस्म्येतावन्तं कालं स्थातुमुत नेति ? एवं पञ्चमासाद्यपि यावन्नमस्कारसहितं तावत्परिभावयेत् ॥ ५१ ॥ पूर्वसूत्रोत्तरार्द्धोक्तमर्थमनुवदन् सामाचारीशेषमाह—

मूलम्—पारिअ काउस्सग्गो, वंदित्ताण तओ गुरुं । तवं संपडिवज्जित्ता, करिज्ज सिद्धाण संथवं ॥ ५२ ॥

व्याख्या—तवमित्यादि–तपो यथाशक्ति चिन्तितं सम्प्रतिपद्य कुर्यात् सिद्धानां संस्तवं स्तुतित्रयरूपं, तदनु च यत्र चैत्यानि सन्ति तत्र तद्वन्दनं विधेयमिति सार्द्धत्रयोदशसूत्रार्थः ॥ ५२ ॥ अथाध्ययनार्थोपसंहारमाह—

मूलम्—एसा सामायारी, समासेण विहाइआ ।
जं चरित्ता बहू जीवा, तीण्णा संसारसागरंति बेमि ॥ ५३ ॥

व्याख्या—'विआहिअत्ति' व्याख्याता कथिता यां चरित्वाऽऽसेव्येति सूत्रार्थः ॥ इति ब्रवीमीति प्राग्वत् ॥ ५३ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय-श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ षड्विंशमध्ययनं सम्पूर्णम् ॥ २६ ॥

## ॥ अथ सप्तविंशमध्ययनम् ॥

॥ अर्हम् ॥ उक्तं षड्विंशमध्ययनं, सम्प्रति खलुङ्कीयाख्यं सप्तविंशमारभ्यते । अस्य चायं सम्बन्धोऽनन्तराध्ययने सामाचारी प्रोक्ता, सा चाशठतयैव पालयितुं शक्या, सापि तद्विपक्षभूतशठतात्यागेनैव स्यादितीह दृष्टान्तद्वारा शठतास्वरूपं निरूप्यते । इतिसम्बन्धस्यास्येदमादि सूत्रम् ॥

**मूलम्—थेरे गणहरे गग्गे, मुणी आसि विसारए । आइण्णे गणिभावंमि, समाहिं पडिसंधए ॥ १ ॥**

व्याख्या—धर्मे अस्थिरान् स्थिरीकरोतीति स्थविरः, गणं गुणसमूहं धारयतीति गणधरो गर्गो गर्गनामा, मुणति प्रतिजानीते सर्वसावद्यविरतिमिति मुनिः, आसीदभूत्, विशारदः सर्वशास्त्रेषु कुशलः, आकीर्णे आचार्यगुणैर्व्याप्तः, गणिभावे आचार्यत्वे स्थित इति शेषः । स समाधिं चित्तसमाधानरूपं प्रतिसन्धत्ते कुशिष्यैस्त्रोटितमपि सङ्घटयत्यात्मन इति गम्यमिति सूत्रार्थः ॥ १ ॥ स च समाधिं सन्दधत् यत् परिभावयति तदाह—

**मूलम्—वहणे वहमाणस्स, कंतारं अइवत्तइ । जोए वहमाणस्स, संसारं अइवत्तइ ॥ २ ॥**

व्याख्या—वहने शकटादौ 'वहमाणस्सत्ति' अन्तर्भावितणिगर्थतया वाहयमानस्य पुरुषस्य उत्तरत्र खलुङ्कग्रहणादिह विनीतगवादिमिति गम्यते, कान्तारमतिवर्त्तते सुखातिवर्त्यतया स्वयमेवातिक्रामतीति । दृष्टान्तोपनयमाह—योगे संयमव्यापारे वाहयमानस्य प्रवर्त्तयतः आचार्यादेः सुशिष्यानिति गम्यते, संसारोऽतिवर्त्तते स्वयमेवातिक्रामति। तद्विनीतत्वदर्शनादात्मनो विशेषतः समाधिसम्भवादिति भावः ॥ २ ॥ एवमात्मनः समाधिसन्धानाय विनीतस्वरूपं परिभाव्य स एवाऽविनीतस्वरूपं यथा परिभावयति तथाह—

**मूलम्—खलुंके जो उ जोएइ, विहम्माणो किलिस्सइ । असमाहिं च वेदेति, तोत्तओ से य भज्जइ ॥ ३ ॥**

व्याख्या—खलुङ्कान् गलिवृषभान् यः, तुर्विशेषणे, योजयति वहने इति प्रक्रमः, स किमित्याह—'विहम्माणोत्ति' विध्यमानस्ताडयन् क्लिश्यते, अत एवासमाधिं वेदयति, तोत्रकः प्राजनकः से तस्य खलुङ्कयोजयितुर्भज्यते ॥ ३ ॥ ततश्चातिरुष्टः सन् स यत्करोति तदाह—

**मूलम्—एगं डसइ पुच्छंमि, एगं विंधइऽभिक्खणं । एगो भंजइ समिलं, एगो उप्पहपट्ठिओ ॥ ४ ॥**

व्याख्या—एकं दशति दशनैर्भक्षयति पुच्छे, एकं विध्यत्यारया तुदति अभीक्ष्णं पुनः पुनः, ततस्ते किं कुर्वन्तीत्याह—एको भनक्ति समिलां युगरन्ध्रकीलिकां, एक उत्पथप्रस्थितो भवतीति शेषः ॥ ४ ॥

**मूलम्—एगो पडइ पासेणं, निवेसइ निवज्जइ । उक्कुद्दइ उप्फिडइ, सढे बालगवी वए ॥ ५ ॥**

व्याख्या—एकः पतति पार्श्वेन गात्रैकविभागेन, निविशति उपविशति, 'निवज्जइत्ति' शेते, उत्कूर्दति ऊर्ध्वं गच्छति, 'उप्फिडइत्ति' मण्डूकवत् प्लवते, शठो बालगवीमवृद्धां धेनुं 'वएत्ति' व्रजेत्तदभिमुखं धावेत्, एक इति सर्वत्र गम्यते ॥ ५ ॥

**मूलम्—माई मुद्धेण पडइ, कुद्धे गच्छइ पडिपहं । मयलक्खेण चिट्ठाइ, वेगेण य पहावइ ॥ ६ ॥**

व्याख्या—अन्यस्तु मायी मूर्ध्ना मस्तकेन पतति निःसत्त्वमिव स्वं दर्शयन्, क्रुद्धः सन् गच्छति प्रतिपथं पश्चाद्वलत इत्यर्थः, मृतलक्षेण मृतव्याजेन तिष्ठति, कथञ्चित्सज्जितस्तु वेगेन प्रधावति, यथा द्वितीयो गौर्गन्तुं न शक्नोति तथा याति इत्यर्थः ॥ ६ ॥

**मूलम्—छिण्णाले छिण्णई सल्लिं, दुदंते भंजई जुगं । सेवि अ सुस्सुआइत्ता, उज्जहित्ता पलायइ ॥७॥**

व्याख्या—छिन्नालस्तथाविधदुष्टजातिः कश्चिच्छिनत्ति 'सल्लित्ति' रज्जुं, दुर्दान्तो भनक्ति युगं, सोऽपि च युगं भङ्क्त्वा 'सुस्सुआइत्तत्ति' सूत्कारान् कृत्वा 'उज्जहित्तत्ति' प्रेर्य स्वामिनमिति शेषः, पलायते अन्यतो धावतीति सूत्रषट्कार्थः ॥ ७ ॥ इत्थं दृष्टान्तं परिभाव्य दार्ष्टान्तिकं यथाऽसौ परिभावयति तथाह—

**मूलम्—खलुंका जारिसा जोज्जा, दुस्सीसाऽवि हु तारिसा ।
जोइआ धम्मजाणम्मि, भज्जंति धिइदुब्बला ॥ ८ ॥**

व्याख्या—खलुङ्का यादृशा योज्या दुःशिष्या अपि तादृशा एव, हुरेवकारार्थोऽत्र योज्यः। कुत इत्याह—यतो योजिता धर्मयाने भज्यन्ते, न सम्यक् प्रवर्त्तन्ते, 'धिइदुब्बलत्ति' आर्षत्वाद्दुर्बलधृतयः कृशस्थैर्या धर्मानुष्ठाने इति गम्यम् ॥ ८ ॥ धृतिदौर्बल्यमेव स्पष्टयितुमाह—

**मूलम्**—इड्ढीगारविए एगे, एगेऽत्थ रसगारवे। सायागारविए एगे, एगे सुचिरकोहणे ॥ ९ ॥

व्याख्या—ऋध्या गौरवं ऋद्धिमन्तः श्राद्धा मे वश्याः सम्पद्यते च चिन्तितमुपकरणादि इत्याद्यात्मबहुमानरूपं ऋद्धिगौरवं तदस्यास्तीति ऋद्धिगौरविक एको नासन्नियोगे प्रवर्त्तते। एकोऽत्रेति कुशिष्याधिकारे, रसेषु मधुरादिषु गौरवं यस्य स रसगौरवो ग्लानाद्याहारदानतपसोर्न प्रवर्त्तते। सातगौरविक एकः, सुखप्रतिबद्धो नाऽप्रतिबद्धविहारादौ प्रवर्त्तते। एकः सुचिरक्रोधनो दीर्घरोषतयैव कृत्येषु न प्रवर्त्तते ॥ ९ ॥

**मूलम्**—भिक्खालसीए एगे, एगे ओमाणभीरुए थद्धे। एगं च अणुसासम्मि, हेऊहिं कारणेहि अ ॥ १० ॥

व्याख्या—भिक्षालसिको भिक्षालस्यवानेको न गोचराग्रं गच्छति, एकोऽपमानभीरुर्भिक्षां भ्रमन्नपि न यस्य तस्यैव गृहे प्रवेष्टुमीहते, स्तब्धोऽहङ्कारवान्न निजकुग्रहान्नमयितुं शक्य एक इति शेषः, एकं च दुःशिष्यं 'अणुसासम्मित्ति' अनुशास्मि अहं हेतुभिः कारणैश्चोक्तरूपैः ॥ १० ॥

**मूलम्**—सोवि अंतरभासिल्लो, दोसमेव पकुव्वइ। आयरिआणं तं वयणं, पडिकूलेइ अभिक्खणं ॥ ११ ॥

व्याख्या—सोऽप्यनुशिष्यमाणः कुशिष्यः 'अंतरभासिलोत्ति' अन्तरभाषावान् गुरुवाक्यान्तराल एव स्वाभिमतभाषको दोषमेवापराधमेव प्रकरोति न त्वनुशिष्यमाणोऽपि तद्विच्छेदमिति भावः। आचार्याणां सतामस्माकं तद्वचनं शिक्षावचनं प्रतिकूलयति विपरीतं करोति कुयुक्तिभिरभीक्ष्णम् ॥ ११ ॥ कथमित्याह—

**मूलम्**—न सा ममं विआणाइ, नवि सा मज्झ दाहिइ।
निग्गया होहिई मन्ने, साहू अन्नोऽत्थ वच्चउ ॥ १२ ॥

व्याख्या—न सा मां विजानाति, अयं भावः—अमुकस्याः श्राविकाया गृहात् ग्लानाद्यर्थं पथ्याद्यानीयतामिति कदाचिदस्माभिरुक्तोऽप्यसौ शाठ्येनोत्तरमाह—न सा मां प्रत्यभिजानाति, नापि सा मह्यं दास्यति पथ्यादीति शेषः, यदि वा निर्गता गृहात्सा भविष्यतीति मन्ये, इति वक्ति। अथवा साधुरन्योऽत्रास्मिन् कार्ये व्रजतु, किमहमेवैकः साधुरस्मीत्यादि ब्रूते ॥ १२ ॥ अन्यच्च—

**मूलम्**—पेसिआ पलिउंचंति, ते परियंति समंतओ। रायविट्ठिं व मन्नंता, करिंति भिउडिं मुहे ॥ १३ ॥

व्याख्या—प्रेषिताः क्वचित्कार्ये 'पलिउंचंतित्ति' तत्कार्यं कुतो न कृतमिति पृष्टाः सन्तोऽपह्नवते, कदा वयमुक्ताः? गता वा तत्र वयं न त्वसौ दृष्टेति। ते कुशिष्याः 'परियंति' पर्यटन्ति समन्ततः सर्वासु दिक्षु न त्वस्मत्पार्श्वे तिष्ठन्ति मा कदाचिदेषां किञ्चित्कस्य कर्त्तव्यं भविष्यतीति। कथञ्चित्कर्त्तुं प्रवर्त्तितास्तु राजवेष्टिमिव मन्यमानाः कुर्वन्ति भ्रुकुटिं मुखे। सकलवपुर्विकारोपलक्षणमेतत् ॥ १३ ॥ अपरञ्च—

**मूलम्**—वाइआ संगहिआ चेव, भत्तपाणेण पोसिआ। जायपक्खा जहा हंसा, पक्कमंति दिसोदिसं ॥ १४ ॥

व्याख्या—वाचिताः सूत्रं पाठिताः, उपलक्षणत्वात्तदर्थं च ग्राहिताः। सङ्गृहीताः परिगृहे कृताः, चशब्दाद्दीक्षिताः स्वयमिति गम्यते, एवेति पूरणे। भक्तपानेन पोषिताः। तथापि जातपक्षाः यथा हंसास्तथैव प्रक्रामन्ति दिशोदिशं दिशि दिशि यदृच्छाविहारिणो भवन्तीत्यर्थः। प्रागेकप्रक्रमेऽपि यदिह बहूनामभिधानं तदीदृशां बहुत्वख्यापनार्थमिति सूत्रपट्कार्थः ॥ १४ ॥ इत्थं कुशिष्यस्वरूपं विचिन्त्य तैरेवासमाधिं खेदं च प्रापितो यदसौ चक्रे तदाह—

**मूलम्**—अह सारही विचिंतेइ, खलुंकेहिं समागओ। किं मज्झ दुट्ठसीसेहिं, अप्पा मे अवसीअइ ॥ १५ ॥

व्याख्या—अथेति पूर्वोक्तचिन्तानन्तरं सारथिरिव सारथिर्धर्मयानस्येति प्रक्रमः, गर्गाचार्यो विचिन्तयति, खलुङ्कैः कुशिष्यैः समागतः संयुक्तः किं? न किञ्चिदित्यर्थः, मम प्रयोजनं सिध्यतीति शेषः, दुष्टशिष्यैः प्रक्रमात्प्रेरितैः केवलमात्मा मे ममाऽवसीदति, एतत्प्रेरणाव्यग्रतया स्वकार्यहानेस्ततो वरमेतत्त्यागत उद्यतविहारेण विहृतमिति भावः ॥ १५ ॥ अथ तत्प्रेरणान्तराले स्वकार्यमपि किं न क्रियते? इत्याह—

**मूलम्**—जारिसा मम सीसा उ, तारिसा गलिगद्दहा। गलिगद्दहे चइत्ताणं, दढं पगिण्हई तवं ॥ १६ ॥

व्याख्या—यादृशाः मम शिष्याः तुः पूरणे तादृशा गलिगर्दभा यदि पर भवेयुरिति गम्यते, न त्वन्यः कोप्येषामौपम्यं लभते इति भावः, गर्दभग्रहणमतिकुत्साख्यापकं, ते हि स्वरूपतोऽप्यतिप्रेरणयैव प्रवर्त्तन्ते, ततस्तत्प्रेरणयैव कालोऽतिक्रामति, न तु तदन्तरालसम्भव इति भावः। यतश्चैवमतो गलिगर्दभान् गलिगर्दभसन्निभान् दुःशिष्यान् त्यक्त्वा दृढं बाढं प्रगृह्णाति गर्गाचार्यस्तपोऽनशनादीति ॥ १६ ॥ एतदेवाह—

मूलम्—मिउ मद्दवसंपन्ने, गंभीरे सुसमाहिए। विहरइ महिं महप्पा, सीलभूएण अप्पणत्ति बेमि १७

व्याख्या—मृदुर्बहिर्वृत्त्या विनयवान्, मार्दवसम्पन्नो मनसापि तादृश एव, गम्भीरोऽलब्धमध्यः, सुसमाहितः सुष्ठुसमाधिमान्, विहरति महीं महात्मा शीलं चारित्रं भूतः प्राप्तः शीलभूतस्तेनात्मना उपलक्षितो यतश्चैवं खलुङ्कताऽऽत्मनो गुरूणां च इहैवासमाधिहेतुरतस्तां विहायाशठतैव सेवनीयेत्यध्ययनतत्त्वार्थः ॥ इति ब्रवीमीति प्राग्वत् ॥ १७ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ सप्तविंशमध्ययनं सम्पूर्णम् ॥ २७ ॥

## ॥ अथ अष्टाविंशमध्ययनम् ॥

॥ अर्हम् ॥ उक्तं सप्तविंशमध्ययनमथ मोक्षमार्गगत्याख्यमष्टाविंशमारभ्यते। अस्य चायं सम्बन्धोऽनन्तराध्ययने शठतात्यागेनाशठता स्वीकार्येत्युक्तं, अशठेन च सुप्रापैव मोक्षमार्गगतिरिति तदभिधायकमिदं प्रस्तूयते, इति सम्बन्धस्यास्येदमादि सूत्रम् ॥

मूलम्—मोक्खमग्गगइं तच्चं, सुणेह जिणभासिअं। चउकारणसंजुत्तं, नाणदंसणलक्खणं ॥ १ ॥

व्याख्या—मोक्षः सकलकर्मक्षयः तस्य मार्गो ज्ञानादिरूपो मोक्षमार्गस्तेन गतिः सिद्धिगमनरूपा मोक्षमार्गगतिस्तां कथ्यमानामिति गम्यं, तथ्यां सत्यां शृणुत जिनभाषिताम्। चत्वारि कारणानि वक्ष्यमाणानि ज्ञानादीनि तैः संयुक्ता चतुष्कारणसंयुक्ता तां। ननु अमूनि चत्वारि कारणानि कर्मक्षयलक्षणस्य मोक्षस्यैव, गतेस्तु तदनन्तरभावित्वात् कथं चतुष्कारणवतीत्वमस्याः? उच्यते—व्यवहारतः कारणकारणस्यापि कारणत्वाभिधानात्। तथा ज्ञानदर्शने विशेषसामान्योपयोगरूपे लक्षणे यस्याः सा तथा तामिति सूत्रार्थः ॥ १ ॥ यदुक्तं मोक्षमार्गगतिं शृणुतेति, तत्र मोक्षमार्गं तावदाह—

मूलम्—णाणं च दंसणं चेव, चरित्तं च तवो तहा। एस मग्गुत्ति पण्णत्तो, जिणेहिं वरदंसिहिं ॥२॥

व्याख्या—ज्ञानं ज्ञानावरणीयकर्मक्षयक्षयोपशमाविर्भूतं सम्यक् ज्ञानं मत्यादिभेदं, दर्शनं दर्शनमोहनीयक्षयक्षयोपशमोपशमसमुत्थमर्हदुक्तजीवादितत्त्वरुचिरूपं क्षायिकादिभेदं, चारित्रं चारित्रमोहक्षयादिसम्भवं सामायिकादिभेदं सदसत्क्रियाप्रवृत्तिनिवृत्तिरूपं, तपो बाह्याभ्यन्तरभेदभिन्नं जिनोक्तमेव। सर्वत्र चकारस्तथेति च समुच्चये, समुच्चयश्चेह समुदितानामेषां मुक्तिमार्गत्वख्यापकः। एष मार्ग इति प्रज्ञप्तो जिनैर्वरदर्शिभिः। अत्र च चारित्रान्तर्गतत्वेऽपि तपसो भेदेनोपादानं अस्यैव कर्मक्षपणं प्रति परमकारणत्वसूचकमिति सूत्रार्थः ॥ २ ॥ अथास्यैवानुवादद्वारेण फलं दर्शयितुमाह—

मूलम्—नाणं च दंसणं चेव, चरित्तं च तवो तहा। एअं मग्गमणुपत्ता, जीवा गच्छंति सोग्गइं ॥ ३ ॥

व्याख्या—'एअंति' एतमनन्तरोक्तं मार्गं अनुप्राप्ता आश्रिता जीवा गच्छन्ति सुगतिं मुक्तिरूपामिति सूत्रार्थः ॥ ३ ॥ ज्ञानादीन्येव क्रमेणाभिधातुमाह—

मूलम्—तत्थ पंचविहं नाणं, सुअं आभिणिबोहिअं। ओहिणाणं च तइअं, मणनाणं च केवलं ॥ ४ ॥

व्याख्या—तत्र तेषु ज्ञानादिषु मध्ये पञ्चविधं पञ्चप्रकारं ज्ञानं, के ते पञ्चप्रकाराः? इत्याह—श्रुतं श्रुतज्ञानं,

आभिनिबोधिकं मतिज्ञानं, अवधिज्ञानं तृतीयं, 'मणनाणंति' मनःपर्यायज्ञानं, चः समुच्चये भिन्नक्रमस्ततः केवलं चेति । आह–नन्द्यादौ मतिज्ञानानन्तरं श्रुतमुक्तं तदिहादौ कुतः श्रुतोपादानं ? उच्यते । शेषज्ञानानामपि स्वरूपज्ञानं प्रायः श्रुताधीनमिति तस्य प्राधान्यख्यापनार्थं पूर्वं तदुपादानमिति सूत्रार्थः ॥ ४ ॥ अथ ज्ञानस्य विषयमाह—

मूलम्—एअं पंचविहं नाणं, दव्वाण य गुणाण य । पज्जवाणं च सव्वेसिं, नाणं नाणीहिं देसिअं ॥ ५ ॥

व्याख्या—एतत्पञ्चविधं ज्ञानं द्रव्याणां च जीवादीनां, गुणानां च सहभाविनां रूपादीनां, पर्यवाणां च क्रमभाविनां नवत्वपुराणत्वादीनां द्रव्यगुणावस्थाविशेषरूपाणां सर्वेषां केवलज्ञानापेक्षया चेह सर्वशब्दोपादानं, शेषज्ञानानां प्रतिनियतपर्यायग्राहित्वात् । 'नाणंति' ज्ञायतेऽनेनेति ज्ञानं अवबोधकं ज्ञानिभिरर्थात्केवलिभिर्देशितं कथितम् ॥ ५ ॥ अनेन द्रव्यादिकं ज्ञानस्य विषय इत्युक्तं तत्र द्रव्यादिः किं लक्षणमित्याह—

मूलम्—गुणाणमासओ दव्वं, एगदव्वस्सिआ गुणा । लक्खणं पज्जवाणं तु, उभओ अस्सिआ भवे ॥ ६ ॥

व्याख्या—गुणानामाश्रयो द्रव्यं, अनेन रूपादय एव वस्तु न तद्व्यतिरिक्तमन्यदस्तीति सुगतमतमपास्तं । तथा एकस्मिन् द्रव्ये आधारभूते आश्रिताः स्थिता एकद्रव्याश्रिता गुणाः, एतेन तु ये द्रव्यमेवेच्छन्ति न तद्व्यतिरिक्तान् रूपादींस्तन्मतमपमतं । लक्षणं पर्यवाणां तु पुनः उभयोर्द्वयोः प्रक्रमाद्द्रव्यगुणयोराश्रिताः 'भवेत्ति' भवेयुः ॥ ६ ॥ गुणानामाश्रयो द्रव्यमित्युक्तं तत्र द्रव्यं कतिभेदमित्याह—

मूलम्—धम्मो अहम्मो आगासं, कालो पोग्गल-जंतवो ।
एस लोगुत्ति पण्णत्तो, जिणेहिं वरदंसिहिं ॥ ७ ॥

व्याख्या—धर्मो धर्मास्तिकायः, अधर्मोऽधर्मास्तिकायः, आकाशमाकाशास्तिकायः, कालो अद्धा समयाद्यात्मकः, पुद्गलजन्तवः इति पुद्गलास्तिकायो जीवास्तिकायश्च, एतानि द्रव्याणि ज्ञेयानीत्यध्याहारः । अत्र प्रसङ्गाल्लोकस्वरूपमप्याह–एषोऽनन्तरोक्तद्रव्यसमूहो लोक इति प्रज्ञप्तो जिनैर्वरदर्शिभिः ॥ ७ ॥ धर्मादीन्येव द्रव्याणि भेदत आह—

मूलम्—धम्मो अहम्मो आगासं, दव्वं इक्किक्कमाहिअं । अणंताणि अ दव्वाणि, कालो पुग्गलजंतवो ॥ ८ ॥

व्याख्या—धर्मः अधर्म आकाशं द्रव्यमेकैकमाख्यातं जिनैरिति शेषः, अनन्तानि च पुनर्द्रव्याणि कालः पुद्गलजन्तवश्च । कालस्य चानन्त्यमतीतानागतापेक्षयेति ॥ ८ ॥ द्रव्याणां लक्षणान्याह—

मूलम्—गइलक्खणो उ धम्मो, अहम्मो ठाणलक्खणो । भायणं सव्वदव्वाणं, नहं ओगाहलक्खणं ॥ ९ ॥

व्याख्या—गतिर्देशान्तरप्राप्तिः सा लक्षणमस्येति गतिलक्षणः, तुः पूर्त्तौ, धर्मो धर्मास्तिकायः । अधर्मोऽधर्मास्तिकायः स्थानं स्थितिस्तल्लक्षणः । अयं भावः–स्वत एव गमनं प्रति प्रवृत्तानां जीवपुद्गलानां गत्युपष्टम्भकारी धर्मास्तिकायः, स्थितिपरिणतानां तु तेषां स्थितिक्रियोपकारी अधर्मास्तिकाय इति । भाजनमाधारः, सर्वद्रव्याणां नभः आकाशं, अवगाहोऽवकाशस्तल्लक्षणं । जीवादीनामवगाढुं प्रवृत्तानां अवकाशदमाकाशमिति भावः ॥ ९ ॥

मूलम्—वत्तणालक्खणो कालो, जीवो उवओगलक्खणो ।
नाणेणं दंसणेणं च, सुहेण य दुहेण य ॥ १० ॥

व्याख्या—वर्त्तन्ते भवन्ति भावास्तेन तेन रूपेण तान्प्रति प्रयोजकत्वं वर्त्तना, सा लक्षणमस्येति वर्त्तनालक्षणः कालो द्रुमादिपुष्पोद्भेदादिनैयत्यहेतुः । जीवो जन्तुरुपयोगो मतिज्ञानादिलक्षणमस्येत्युपयोगलक्षणः, अत एव ज्ञानेन विशेषग्राहिणा दर्शनेन च सामान्यविषयेण सुखेन दुःखेन च लक्ष्यत इति गम्यते ॥ १० ॥ अथ शिष्याणां दृढतरसंस्कारार्थमुक्तं लक्षणमनूद्य लक्षणान्तरमाह—

मूलम्—नाणं च दंसणं चेव, चरित्तं च तवो तहा । वीरिअं उवओगो अ, एअं जीवस्स लक्खणं ॥ ११ ॥

व्याख्या—'वीरिअंति' वीर्यं सामर्थ्यं, उपयोगो अवहितत्वं, एतत् जीवस्य लक्षणं । अनेन हि जीवोऽनन्यसाधारणतया लक्ष्यते ॥ ११ ॥ अथ पुद्गललक्षणमाह—

मूलम्—सद्दंधयार उज्जोओ, पहा छायाऽऽतवेइ वा। वण्ण–रस–गंध–फासा, पुग्गलाणं तु लक्खणं१२

व्याख्या—शब्दो ध्वनिः, अन्धकारो ध्वान्तं, उभयत्र सुपो लुप् । उद्योतो रत्नादिप्रकाशः, प्रभा चन्द्रादिरुचिः, छाया शैत्यगुणा, आतपस्तपनबिम्बजोष्णप्रकाशरूपः, 'इति' शब्द आद्यर्थस्ततश्च सम्बन्धभेदादीनां परिग्रहः, वा समुच्चये । तथा वर्णः कृष्णादिः, रसस्तिक्तादिः, गन्धः सुरभिप्रभृतिः, स्पर्शः शीतादिरेषां द्वन्द्वः । पुद्गलानां स्कन्धादीनां तु पुनर्लक्षणं, एभिरेव तेषां लक्ष्यत्वादिति ॥ १२ ॥ द्रव्यलक्षणमुक्त्वा पर्यायलक्षणमाह—

मूलम्—एगत्तं च पुहत्तं च, संखा संठाणमेव य। संजोगा य विभागा य, पज्जवाणं तु लक्खणं ॥१३॥

व्याख्या—एकत्वं भिन्नेष्वपि परमाण्वादिषु यदेकोयं घटादिरिति प्रतीतिहेतुः, पृथक्त्वं च अयमस्मात्पृथगिति प्रत्ययनिमित्तं, संख्या यत एको द्वौ त्रय इत्यादिका प्रतीतिर्जायते, संस्थानं परिमण्डलोयमित्यादि बुद्धिनिबन्धनं, एवः पूर्त्तौ, चः समुच्चये, संयोगा अयमङ्गुल्योः संयोग इत्यादिव्यपदेशहेतवः, विभागाश्चायमितो विभक्त इतिमतिहेतवः, उभयत्र व्यक्त्यपेक्षया बहुवचनं, उपलक्षणत्वान्नवपुराणत्वादीनि च, पर्यायाणां तुः पूर्त्तौ, लक्षणं । गुणानां तु रूपादीनामतिप्रतीतत्वाल्लक्षणं नोक्तमिति सूत्रनवकार्थः ॥ १३ ॥ इत्थं स्वरूपतो विषयतश्च ज्ञानमभिधाय दर्शनमाह—

मूलम्—जीवाऽजीवा य बंधो अ, पुण्णं पावासवो तहा। संवरो निज्जरा मोक्खो, संतेए तहिआ नव॥१४॥

व्याख्या—जीवाः प्रतीताः, अजीवा धर्मास्तिकायादयः, बन्धश्च जीवकर्मणोः संश्लेषः, पुण्यं शुभप्रकृतिरूपं सातादि, पापमशुभप्रकृतिरूपं मिथ्यात्वादि, आश्रवः कर्मोपादानहेतुर्हिंसादिः, पुण्यादीनां द्वन्द्वः । तथेति समुच्चये, संवरो महाव्रतादिभिराश्रवनिरोधः, निर्जरा विपाकात्तपसो वा कर्मपरिशाटः, मोक्षः सकलकर्मक्षयलक्षणः, सन्त्येते तथ्या नव भावा इति शेषः ॥ १४ ॥ यद्यमी तथ्यास्ततः किमित्याह—

मूलम्—तहिआणं तु भावाणं, सब्भावे उवएसणं । भावेण सद्दहंतस्स, संमत्तं ति विआहिअं ॥१५॥

व्याख्या—तथ्यानां तु भावानां जीवादीनां सद्भावे सद्भावविषयमवितथसत्ताभिधायकमित्यर्थः, उपदेशनं गुर्वादीनामुपदेशं भावेनान्तःकरणेन श्रद्धतस्तथेति प्रतिपद्यमानस्य जन्तोः सम्यक्त्वं सम्यक्त्वमोहनीयक्षयादिसमुत्थात्मपरिणामरूपं तदिति जीवादिभावश्रद्धानं व्याख्यातं विशेषेणाख्यातं, जिनैरिति गम्यत इति सूत्रार्थः ॥ १५ ॥ एवं सम्यक्त्वस्वरूपमुक्त्वा तद्भेदानाह—

मूलम्—निस्सग्गुवएसरुई, आणारुइ सुत्त–बीअरुइमेव ।
अभिगम–वित्थाररुइ, किरिआ–संखेव–धम्मरुई ॥ १६ ॥

व्याख्या—'निस्सग्गुवएसरुइत्ति' रुचिशब्दः प्रत्येकं योज्यते, ततो निसर्गः स्वभावस्तेन रुचिस्तत्त्वाभिलाषोऽस्येति निसर्गरुचिः १ । उपदेशो गुर्वादिकथनं तेन रुचिर्यस्येत्युपदेशरुचिः २ । आज्ञा सर्वज्ञवचनात्मिका तया रुचिर्यस्य स तथा ३ । 'सुत्तबीअरुइमेवत्ति' इहापि रुचिशब्दस्य प्रत्येकं योगात्सूत्रेणागमेन रुचिर्यस्य स सूत्ररुचिः ४ । बीजमिव बीजं यदेकमप्यनेकार्थप्रबोधोत्पादकं वचस्तेन रुचिर्यस्य स बीजरुचिः ५ । अनयोः समाहारः, एवेति समुच्चये। अभिगमो विज्ञानं, विस्तरो व्यासस्ताभ्यां प्रत्येकं रुचिशब्दो योज्यते ततोऽभिगमरुचिर्विस्ताररुचिश्चेति ६–७ तथा क्रिया अनुष्ठानं, संक्षेपः संग्रहो धर्मः श्रुतधर्मादिस्तेषु रुचिर्यस्येति प्रत्येकं रुचिशब्दयोगात्क्रियारुचिः संक्षेपरुचिर्धर्मरुचिश्च–८–९–१०–विज्ञेय इति शेषः । यच्चेह सम्यक्त्वस्य जीवानन्यत्वेनाभिधानं तद्गुणगुणिनोः कथञ्चिदभेद इति ख्यापनार्थमिति सूत्रसंक्षेपार्थः ॥ १६ ॥ व्यासार्थं तु स्वत एवाह सूत्रकृत्—

मूलम्—भूअत्थेणाहिगया, जीवाऽजीवा य पुण्ण-पावं च। सहसंमुइआ आसवसंवरे अ रोएइ उ निसग्गो

व्याख्या—'भूअत्थेणत्ति' भावप्रधानत्वान्निर्देशस्य भूतार्थत्वेन सद्भूता एते अर्था इत्येवंरूपेण निर्णयेनाधिगताः परिच्छिन्ना येनेति गम्यते, जीवा अजीवाश्च पुण्यपापं च, कथमधिगता इत्याह–'सहसंमुइअत्ति' सोपस्कारत्वात् सूत्रत्वाच्च सहात्मना या सङ्गता मतिः सा सहसंमतिस्तया, कोर्थः ? परोपदेशनिरपेक्षया जातिस्मरणादिरूपया बुद्ध्या 'आसवसंवरे अत्ति' आश्रवसंवरौ चशब्दोऽनुक्तबन्धादिसमुच्चये, ततो बन्धादयश्च येनाधिगता इतियोगः।

यश्च 'रोएइ उत्ति' रोचते एव श्रद्धालेव अन्यस्मादश्रुत्वापि जातिस्मरणादिनाधिगतान् जीवादीनिति गम्यते, 'निसग्गोत्ति' स निसर्गरुचिर्ज्ञेयः ॥ १७ ॥ अमुमेवार्थं स्पष्टतरमाह—

मूलम्—जो जिणदिट्ठे भावे, चउव्विहे सद्दहइ सयमेव ।
एमेव नन्नहत्ति अ, निस्सग्गरुइत्ति नायव्वो ॥ १८ ॥

व्याख्या—यो जिनदृष्टान् भावान् चतुर्विधान् द्रव्यक्षेत्रकालभावभेदैर्नामादिभेदैर्वा श्रद्दधाति स्वयमेव परोपदेशं विना, कथं श्रद्दधातीत्याह—एवमेवैतद्यथा जिनैर्दृष्टं जीवादि नान्यथेति भावः, चः समुच्चये, स निसर्गरुचिरिति ज्ञेयः ॥ १८ ॥ उपदेशरुचिमाह—

मूलम्—एए चेव उ भावे, उवइट्ठे जो परेण सद्दहई। छउमत्थेण जिणेण व, उवएसरुइत्ति नायव्वो १९

व्याख्या—एतांश्चैवानन्तरोक्तान् भावान् जीवादीन् तुः पूरणे उपदिष्टान् यः परेणान्येन श्रद्दधाति, कीदृशेन परेणेत्याह—छद्मस्थेनानुत्पन्नकेवलज्ञानेन जिनेन वा सञ्जातकेवलेन, स उपदेशरुचिरिति ज्ञातव्यः ॥ १९ ॥ अथ आज्ञारुचिमाह—

मूलम्—रागो दोसो मोहो, अण्णाणं जस्स अवगयं होइ। आणाए रोअंतो, सो खलु आणारुई नाम२०

व्याख्या—रागो द्वेषो मोहः शेषमोहनीयं अज्ञानं च यस्य गम्यत्वात् यस्यापगतं भवति, सर्वथा चास्य राग-द्वेषाद्यपगमासम्भवाद्देशत इति गम्यते, एतदपगमाच्च 'आणाएत्ति' आज्ञयैव आचार्यादिसम्बन्धिन्या रोचमानः क्वापि कुग्रहाभावाज्जीवादि तथेति प्रतिपद्यमानो माषतुषादिवत् स खलु निश्चितमाज्ञारुचिर्नामेत्यभ्युपगन्तव्यः॥२०॥ सूत्ररुचिमाह—

मूलम्—जो सुत्तमहिज्जंतो, सुएण ओगाहई उ सम्मत्तं। अंगेण बाहिरेण व, सो सुत्तरुइत्ति नायव्वो २१

व्याख्या—यः सूत्रमधीयानः पठन् श्रुतेनाधीयमानेनावगाहते प्राप्नोति तुः पूर्तौ सम्यक्त्वं, अङ्गेनाचारादिना बाह्येन वानङ्गप्रविष्टेनोत्तराध्ययनादिना स गोविन्दवाचकवत् सूत्ररुचिरिति ज्ञातव्यः ॥ २१ ॥ बीजरुचिमाह—

मूलम्—एगेण अणेगाइं, पयाइं जो पसरई उ सम्मत्तं। उदए व तिल्लबिंदू, सो बीअरुइत्ति नायव्वो॥२२॥

व्याख्या—एकेन प्रक्रमात्पदेन जीवादिना 'अणेगाइं पयाइंति' विभक्तिव्यत्ययादनेकेषु पदेषु अजीवादिषु यः प्रसरति 'सम्मत्तंति' सम्यक्त्ववानात्मा, इह सम्यक्त्वशब्देन तदभिन्नस्य सम्यक्त्ववतो जीवस्य ग्रहणात्, उदक इव तैलबिन्दुः, यथोदकैकदेशगतोऽपि तैलबिन्दुः समग्रमुदकमाक्रामति तथैकदेशोत्पन्नरुचिर्यो जीवस्तथाविधक्षयोपशमा-दशेषतत्वेषु रुचिमान् भवति, स एवंविधो बीजरुचिरिति ज्ञातव्यः ॥ २२ ॥ अभिगमरुचिमाह—

मूलम्—सो होई अभिगमरुई, सुअनाणं जेण अत्थओ दिट्ठं ।
एक्कारसअंगाइं, पइण्णगं दिट्ठिवाओ अ ॥ २३ ॥

व्याख्या—स भवत्यभिगमरुचिः श्रुतज्ञानं येनार्थतो दृष्टमुपलब्धं, किं तत् श्रुतज्ञानमित्याह—एकादशाङ्गानि, प्रकीर्णकमिति जातावेकवचनं ततः प्रकीर्णकान्युत्तराध्ययनादीनि, दृष्टिवादो द्वादशमङ्गं, च शब्दादुपाङ्गानि च उप-पातिकादीनि ॥ २३ ॥ विस्ताररुचिमाह—

मूलम्—दव्वाणं सव्वभावा, सव्वपमाणेहिं जस्स उवलद्धा। सव्वाहिं नयविहिहि अ, वित्थाररुइत्ति नायव्वो२४

व्याख्या—द्रव्याणां धर्मास्तिकायादीनां सर्वभावा एकत्वपृथक्त्वादयोऽशेषपर्यायाः सर्वप्रमाणैः प्रत्यक्षादिभिर्य-स्योपलब्धाः, प्रत्यक्षादीनां मध्ये यत्र यस्य व्यापारस्तेनैव प्रमाणेन ज्ञाता भवन्ति, 'सव्वाहिंति' सर्वैर्नयविधिभिर्नैगमा-दिनयभेदैः, चः समुच्चये, स विस्ताररुचिर्ज्ञातव्यः ॥ २४ ॥ क्रियारुचिमाह—

मूलम्—दंसणनाणचरित्ते, तवविणए सच्चसमिइगुत्तीसु ।
जो किरिआ भावरुई, सो खलु किरिआरुई नाम ॥ २५ ॥

व्याख्या—दर्शनज्ञानचरित्रे तपोविनये सत्याश्रताः समितिगुप्तयश्च सत्यसमितिगुप्तयस्तासु यः क्रियाभावरुचिः,

अयं भावः–दर्शनाद्याचारानुष्ठाने यस्य भावतो रुचिरस्ति स खलु क्रियारुचिर्नामेत्यभ्युपगन्तव्यः ॥ २५ ॥ संक्षेपरुचिमाह—

मूलम्—अणभिग्गहिअकुदिट्ठी, संखेवरुइत्ति होइ नायव्वो ।
अविसारओ पवयणे, अणभिग्गहिओ अ सेसेसु ॥ २६ ॥

व्याख्या—अनभिगृहीता अनङ्गीकृता कुदृष्टिः सौगतादिमतरूपा येन स तथा संक्षेपरुचिरिति भवति ज्ञातव्यः, अविशारदोऽकुशलः प्रवचने जिनमते, अनभिगृहीतोऽनभिज्ञः शेषेषु कपिलादिप्रणीतप्रवचनेषु, अयं भावो य उक्तविशेषणविशिष्टः संक्षेपेणैव चिलातिपुत्र इव पदत्रयेण तत्त्वं श्रद्दधाति स संक्षेपरुचिः ॥२६॥ धर्मरुचिमाह—

मूलम्—जो अत्थिकायधम्मं, सुअधम्मं खलु चरित्तधम्मं च ।
सद्दहइ जिणाभिहिअं, सो धम्मरुइत्ति नायव्वो ॥ २७ ॥

व्याख्या—योऽस्तिकायानां धर्मादीनां धर्मो गत्युपष्टम्भादिरस्तिकायधर्मस्तं, श्रुतधर्ममागमरूपं, चरित्रधर्मं च सामायिकादिभेदं श्रद्धाति जिनाभिहितं । धर्मेषु पर्यायेषु धर्मे वा श्रुतधर्मादौ रुचिरस्येति कृत्वा, स धर्मरुचिरिति ज्ञातव्यः । शिष्यव्युत्पादनार्थं चैवमुपाधिभेदतः सम्यक्त्वभेदाभिधानं, अन्यथा हि निसर्गोपदेशाधिगमादिषु कचित्केषाञ्चिदन्तर्भावे न ह्येतावन्तो भेदाः सम्भवन्तीति भावनीयमित्येकादशसूत्रार्थः ॥ २७ ॥ कैः पुनर्लिङ्गैः सम्यक्त्वमस्तीति श्रद्धेयमित्याह—

मूलम्—परमत्थसंथवो वा, सुदिट्ठपरमत्थसेवणा वावि । वावण्णकुदंसणवज्जणा य सम्मत्तसद्दहणा ॥२८॥

व्याख्या—परमास्तात्त्विकास्ते च ते अर्थाश्च जीवादयः परमार्थास्तेषु संस्तवस्तत्स्वरूपस्य पुनः पुनश्चिन्तनाकृतः परिचयः परमार्थसंस्तवः, 'वा' शब्दः समुच्चये, सुष्टु दृष्टाः उपलब्धाः परमार्था यैस्ते सुदृष्टपरमार्था आचार्यादयस्तत्सेवनं, चकारोऽनुक्तसंग्रहे, ततो यथाशक्ति तद्वैयावृत्त्यादिकरणं च, अपिः समुच्चये, 'वावण्णकुदंसणत्ति' दर्शनशब्दः प्रत्येकं सम्बध्यते, ततो व्यापन्नं विनष्टं दर्शनं येषां ते व्यापन्नदर्शना निह्नवादयः, तथा कुत्सितं दर्शनं येषां ते कुदर्शनाः शाक्यादयः, तेषां वर्जनं व्यापन्नकुदर्शनवर्जनं । सर्वत्र सूत्रत्वात्स्त्रीत्वं, चः समुच्चये, सम्यक्त्वं श्रद्धीयतेऽनेनेति सम्यक्त्वश्रद्धानमिदं, एभिर्लिङ्गैः सम्यक्त्वं श्रद्धीयते इति भाव इति सूत्रार्थः ॥ २८ ॥ इत्थं सम्यक्त्वलिङ्गान्यभिधाय तस्यैव महात्म्यमुपदर्शयन्नाह—

मूलम्—नत्थि चरित्तं सम्मत्त–विहूणं दंसणे उ भइअव्वं । सम्मत्तचरित्ताइं, जुगवं पुव्वं व सम्मत्तं ॥२९॥

व्याख्या—नास्ति उपलक्षणत्वान्नासीन्न भविष्यति च चारित्रं सम्यक्त्वविहीनं, अयं भावो न यावत्सम्यक्त्वप्राप्तिर्न तावद्भावचारित्रमिति, दर्शने तु सम्यक्त्वे पुनः सति भक्तव्यं, भवति वा न वा, प्रक्रमाच्चारित्रं । किमित्येवमत आह–सम्यक्त्वचरित्रे युगपत्समुत्पद्येते इति शेषः, पूर्वं वा चारित्रोत्पत्तेः सम्यक्त्वमुत्पद्यते । ततो यदा युगपदुत्पादस्तदा तयोः सहभावो, यदा तु पूर्वं सम्यक्त्वं तदा तत्र चारित्रं भाज्यम् ॥ २९ ॥ अन्यच्च—

मूलम्—नादंसणिस्स नाणं, नाणेण विणा न होन्ति चरणगुणा ।
अगुणिस्स नत्थि मोक्खो, नत्थि अमुक्कस्स निव्वाणं ॥ ३० ॥

व्याख्या—नादर्शनिनः सम्यक्त्वरहितस्य ज्ञानं सम्यग् ज्ञानं, ज्ञानेन विना ज्ञानरहिता न भवन्ति चरणगुणाः, तत्र चरणं व्रतादि, गुणाः पिण्डविशुद्ध्यादयः, अगुणिनोऽनन्तरोक्तगुणरहितस्य नास्ति मोक्षो निखिलकर्मक्षयात्मकः, नास्ति अमुक्तस्य कर्मणेति गम्यते निर्वाणं मुक्तिपदावाप्तिः । तदत्र पूर्वसूत्रेण मुक्त्यनन्तरहेतोरपि चरणस्य सम्यक्त्वभाव एव भवनं तन्महात्म्यमुक्तमनेन तु सूत्रेण सम्यक्त्वाभावे उत्तरोत्तरगुणव्यतिरेकदर्शनेनेति सूत्रद्वयार्थः ३० ॥ अस्य चाष्टविधाचारयुक्तस्यैवोत्तरोत्तरगुणावाप्तिहेतुत्वमिति तान् दर्शयितुमाह—

मूलम्—निस्संकिय निक्कंखिय, निव्वितिगिच्छा अमूढदिट्ठी अ ।
उववूह–थिरीकरणे, वच्छल्ल–पभावणे अट्ठ ॥ ३१ ॥

व्याख्या—शङ्कनं शङ्कितं देशसर्वशङ्कारूपं, तदभावो निःशङ्कितं। तथा कांक्षणं कांक्षितं अन्यान्यदर्शनाभिलाषात्मकं, तदभावो निःकांक्षितं। विचिकित्सा फलं प्रति सन्देहः, यद्वा विदो विज्ञास्ते च साधव एव तेषां जुगुप्सा निन्दा, तदभावो 'निर्विचिकित्सं' 'निर्विजुगुप्सं' वा, आर्षत्वाच्च सूत्रे एवं पाठः। 'अमूढा' ऋद्धिमत्कुतीर्थिकदर्शनेऽपि निन्ध्यमस्मद्दर्शनमिति मोहहीना सा चासौ दृष्टिश्च बुद्धिरूपा अमूढदृष्टिः, सा च। अयं चतुर्विधोऽप्यान्तर आचार उक्तो बाह्यमाह—उपबृंहा दर्शनादिगुणवतां प्रशंसया तत्तद्गुणपरिवर्द्धनं, स्थिरीकरणं स्वीकृतधर्मानुष्ठानं प्रति सीदतां स्थैर्योपादनं, तयोर्द्वन्द्वे उपबृंहास्थिरीकरणे। वात्सल्यं धार्मिकजनस्योचितप्रतिपत्तिकरणं, प्रभावना स्वतीर्थोन्नतिचेष्टासु प्रवर्त्तनं, अनयोर्द्वन्द्वे वात्सल्यप्रभावने। 'अट्ठत्ति' अष्टामी दर्शनाचारा भवन्तीति शेषः इति सूत्रार्थः ॥ ३१ ॥ इत्थं ज्ञानदर्शनरूपं मुक्तिमार्गमुक्त्वा चारित्ररूपं तमाह—

मूलम्—सामाइअ त्थ पढमं, छेओवट्ठावणं भवे बीअं। परिहारविसुद्धीअं, सुहुमं तह संपरायं च ॥ ३२ ॥
अकसायमहक्खायं, छउमत्थस्स जिणस्स वा। एअं चयरित्तकरं, चारित्तं होइ आहिअं ॥ ३३ ॥

व्याख्या—समो रागद्वेषरहितः, स चेहप्रक्रमाच्चित्तपरिणामस्तत्राऽऽयो गमनं समायः, स एव सामायिकं, सर्वसावद्ययोगत्यागः, 'त्थ' पूरणे, प्रथममाद्यं। इदं च द्विधा, 'इत्वरं' 'यावत्कथिकं' च। तत्रेत्वरं भरतैरावतयोः प्रथमचरमजिनतीर्थयोरुपस्थापनां यावत्, तत्र हि छेदोपस्थापनीयभावेन तद्व्यपदेशाभावात्। यावत्कथिकं च तयोरेव क्षेत्रयोर्मध्यमार्हत्तीर्थेषु विदेहेषु च, तत्र ह्युपस्थापनाया अभावेन सामायिकव्यपदेश एव यावज्जीवं स्यात्। तथा 'छेदः' सातिचारस्य साधोर्निरतिचारस्य वा शिष्यस्य तीर्थान्तरसम्बन्धिनो वा तीर्थान्तरं प्रतिपद्यमानस्य पूर्वपर्यायव्यवच्छेदः, तद्युक्ता उपस्थापना महाव्रतारोपणा यत्र तच्छेदोपस्थापनं भवेत् द्वितीयम्। तथा परिहरणं परिहारो विशिष्टतपोऽङ्गीकारेण गच्छस्य त्यागस्तेन विशुद्धिरस्मिन्निति परिहारविशुद्धिकं। तत्स्वरूपं चेदं—नव मुनयो गणान्निर्गत्य जिनाभ्यर्णे परिहारविशुद्धिकं प्रतिपन्नपूर्वस्य जिनस्य वा पार्श्वे इदं प्रतिपद्यन्ते। तेष्वेको गुरुर्भवति, चत्वारस्तपः कुर्वन्ति, चत्वारस्तु तद्वैयावृत्त्यं। तपश्च तेषां ग्रीष्मकाले जघन्यमध्यमोत्कृष्टं चतुर्थषष्टाष्टमरूपं, शीतकाले तु षष्टाष्टमदशमरूपं, वर्षाकाले चाष्टमदशमद्वादशलक्षणं भवति। ते च पारणकेषु गुरुर्वैयावृत्त्यकराश्च नित्यमाचाम्लं कुर्वन्ति। षण्मासातिक्रमे तु तपस्करा वैयावृत्त्यं, वैयावृत्त्यकराश्च तपः प्रतिपद्यन्ते। तेषामपि षण्मासात्यये तन्मध्यादेको गुरुत्वं, गुरुस्तपः, अन्ये तु सप्त वैयावृत्त्यं स्वीकुर्वन्ति। अतीते तु सार्द्धवर्षे ते पुनः तदेव तपो जिनकल्पं वा गच्छं वाऽभ्युपगच्छन्ति, तेषां यच्चारित्रं तत्परिहारविशुद्धिकमिति। इदं च भरतैरावतयोरेव प्रथमान्तिमतीर्थकृत्तीर्थे स्यान्नान्यत्रेति। 'सुहुमं तह संपरायं चत्ति' तथेत्यानन्तर्ये छन्दोभङ्गनिरासार्थं पदमध्येऽपि न्यस्तः, सूक्ष्मः किट्टीकरणात्सम्परायो लोभाख्यः कषायो यस्मिंस्तत् सूक्ष्मसम्परायं, इदं च क्षपकश्रेण्युपशमश्रेण्योर्लोभाणुवेदनसमये स्यात् ॥ ३२ ॥ अकषायं अनुदितकषायं क्षपितोपशमितकषायावस्थामावि 'यथाख्यातं' जिनोक्तस्वरूपमनतिक्रान्तं, छद्मस्थस्योपशान्तक्षीणमोहाख्यगुणस्थानद्वयवर्त्तिनो, जिनस्य वा केवलिनः सयोग्ययोगिगुणस्थानद्वयस्थायिनो भवतीति शेषः। 'एअंति' एतदनन्तरोक्तं सामायिकादिपञ्चभेदं चयस्य राशेः प्रक्रमात्कर्मणां रिक्तं विरेकोऽभाव इत्यर्थः, तत्करोतीति चयरिक्तकरं चारित्रं भवत्याख्यातं जिनादिभिरिति गम्यते इति सूत्रद्वयार्थः ॥ ३३ ॥ सम्प्रति तपोरूपं चतुर्थं कारणमाह—

मूलम्—तवो अ दुविहो वुत्तो, बाहिरब्भिंतरो तहा। बाहिरो छविहो वुत्तो, एवमब्भिंतरो तवो ॥ ३४ ॥

व्याख्या—अस्याक्षरार्थः स्पष्टो भावार्थस्तु तपोध्ययने वक्ष्यते ॥ ३४ ॥ अथैषां मुक्तिमार्गत्वे कस्य कतरो व्यापार इत्याह—

मूलम्—नाणेण जाणई भावे, दंसणेण य सद्दहे। चरित्तेण न गिण्हाइ, तवेण परिसुज्झइ ॥ ३५ ॥

व्याख्या—ज्ञानेन श्रुतादिना जानाति भावान् जीवादीन्, दर्शनेन च तानेव श्रद्धत्ते, चारित्रेण आश्रवद्वारनिरोधरूपेण न गृह्णाति नादत्ते कर्मेति गम्यते, तपसा परिशुध्यति पूर्वोपचितकर्मणः क्षपणात् शुद्धो भवति इति सूत्रार्थः ॥ ३५ ॥ अनेन मार्गस्य फलं मोक्ष उक्तः, सम्प्रति मोक्षफलभूतां गतिमाह—

मूलम्—खवित्ता पुव्वकम्माइं, संजमेण तवेण य। सव्वदुक्खप्पहीणट्ठा, पक्कमंति महेसिणोत्ति बेमि ३६

व्याख्या—'सव्वदुक्खप्पहीणट्ठत्ति' सर्वैः दुःखैः प्रहीणः सर्वदुःखप्रहीणो मोक्षस्तमर्थयन्ति ये ते सर्वदुःखप्रहीणार्थाः, यद्वा प्रक्षीणानि सर्वदुःखानि अर्थाश्च कार्याणि येषां ते तथा प्रक्रामन्ति गच्छन्ति मुक्तिमिति शेषः 'महेसिणोत्ति' महर्षय इति सूत्रार्थः ॥ ३६ ॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्यनसूत्रवृत्तौ अष्टाविंशमध्ययनं सम्पूर्णम् ॥ २८ ॥

## ॥ अथ एकोनत्रिंशमध्ययनम् ॥

अर्हं ॥ व्याख्यातमष्टाविंशमध्यनं, अथ सम्यक्त्वपराक्रमाख्यमेकोनत्रिंशमारभ्यते । अस्य चायं सम्बन्धोऽनन्तराध्ययने मोक्षमार्गगतिरुक्ता, सा च वीतरागत्वपूर्विकेति यथा तद्भवति तथाऽनेनाभिधीयते । इति सम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—सुअं मे आउसं ! तेणं भगवया एवमक्खायं, इह खलु सम्मत्तपरक्कमे नामज्झयणे समणेणं भगवया महावीरेणं कासवेणं पवेइए। जं सम्मं सद्दहित्ता पत्तिआइत्ता रोअइत्ता फासित्ता पालइत्ता तीरइत्ता किट्टइत्ता सोहइत्ता आराहइत्ता आणाए अणुपालइत्ता वहवे जीवा सिज्झंति बुज्झंति मुच्चंति परिनिवायंति सव्वदुःक्खाणमंतं करेंति ॥ १ ॥

व्याख्या—श्रुतं मे मया आयुष्मन्निति शिष्यामंत्रणं, एतच्च सुधर्मस्वामी जम्बूस्वामिनमाह, तेन जगत्त्रयप्रतीतेन भगवता अक्रमात् श्रीमहावीरेण 'एवमिति' वक्ष्यमाणप्रकारेणाख्यातं, तमेव प्रकारमाह—इहास्मिन् प्रवचने खलु निश्चितं सम्यक्त्वे सति पराक्रम उत्तरोत्तरगुणप्रतिपत्त्या कर्मारिजयसामर्थ्यरूपोऽर्थाज्जीवस्य वर्ण्यतेऽस्मिन्निति सम्यक्त्वपराक्रमं नामाध्ययनमस्तीति शेषः । तच्च केन प्रणीतमित्याह—श्रमणेन भगवता महावीरेण काश्यपेन श्रीवर्द्धमानस्वामिनैव प्रवेदितं, स्वतोविदितमेव भगवता ममेदमाख्यातमिति भावः । अस्यैव माहात्म्यमाह—'जंति' यत्प्रस्तुताध्ययनं सम्यक् अवैपरीत्येन 'श्रद्धाय' शब्दार्थोभयरूपं सामान्येन प्रतिपद्य, 'प्रतीत्य' विशेषत इदमित्थमेवेति निश्चित्य, 'रोचयित्वा' तत्पठनादिविषयमभिलाषमात्मन उत्पाद्य, 'स्पृष्ट्वा' योगत्रिकेण तत्र मनसा सूत्रार्थयोश्चिन्तनेन वचसा वाचनादिना कायेन भङ्गकरचनादिना, 'पालयित्वा' परावर्त्तनादिनाऽभिरक्ष्य, 'तीरयित्वा' अध्ययनादिना परिसमाप्य, 'कीर्त्तयित्वा' गुरोर्विनयपूर्वकमिदमित्थं मयाधीतमिति निवेद्य, 'शोधयित्वा' गुरुवदनुभाषणादिना शुद्धं विधाय, 'आराध्य' उत्सूत्रप्ररूपणा परिहारेण उत्सर्गापवादकुशलतया वा यावज्जीवं तदर्थासेवनेन वा । न चेदं स्वबुध्या शुभावहमित्याह—आज्ञया गुरुनियोगरूपयाऽनुपाल्य सततमासेव्य वहवो जीवाः 'सिध्यन्ति इहैवागमसिद्धत्वादिना 'बुध्यन्ते' घातिकर्मक्षयेण 'मुच्यन्ते भवोपग्राहिकर्मचतुष्कक्षयेण ततश्च 'परिनिर्वान्ति' सकलकर्मजनितानलोपशमेन अत एव सर्वदुःखानां शारीरमानसानां अन्तं पर्यन्तं कुर्वन्ति मुक्तिपदप्राप्त्येति सूत्रार्थः ॥ १ ॥

अथ शिष्यानुग्रहार्थं सम्बन्धाभिधानपूर्वकं प्रस्तुताध्ययनार्थमाह—

मूलम्—तस्स णं अयमट्ठे एवमाहिज्जइ, तंजहा—संवेगे १, निव्वेए २, धम्मसद्धा ३, गुरुसाहम्मियसुस्सूसणया ४, आलोअणया ५, निंदणया ६, गरिहणया ७, सामाइए ८, चउवीस-

त्थए ९, वंदणे १०, पडिक्कमणे ११, काउस्सग्गे १२, पच्चक्खाणे १३, थयथुइमंगले १४, कालपडिलेहणया १५, पायच्छित्तकरणे १६, खमावणया १७, सज्झाए १८, वायणया १९, पडिपुच्छणया २०, परिअट्टणया २१, अणुप्पेहा २२, धम्मकहा २३, सुअस्स आराहणया २४, एगग्गमणसन्निवेसणया २५, संजमे २६, तवे २७, वोदाणे २८, सुहसाए २९, अप्पडिबद्धया ३०, विवित्तसयणासणसेवणया ३१, विणिअट्टणया ३२, संभोगपच्चक्खाणे ३३, उवहिपच्चक्खाणे ३४, आहारपच्चक्खाणे ३५, कसायपच्चक्खाणे ३६, जोगपच्चक्खाणे ३७, सरीरपच्चक्खाणे ३८, सहायपच्चक्खाणे ३९, भत्तपच्चक्खाणे ४०, सब्भावपच्चक्खाणे ४१, पडिरूवया ४२, वेआवच्चे ४३, सव्वगुणसंपन्नया ४४, वीअरागया ४५, खंती ४६, मुत्ती ४७, मद्दवे ४८, अज्जवे ४९, भावसच्चे ५०, करणसच्चे ५१, जोगसच्चे ५२, मणगुत्तया ५३, वयगुत्तया ५४, कायगुत्तया ५५, मणसमाधारणया ५६, वयसमाधारणया ५७, कायसमाधारणया ५८, नाणसंपन्नया ५९, दंसणसंपन्नया ६०, चरित्तसंपन्नया ६१, सोइंदिअनिग्गहे ६२, चक्खिंदिअनिग्गहे ६३, घाणिंदिअनिग्गहे ६४, जिब्भिंदिअनिग्गहे ६५, फासिंदिअनिग्गहे ६६, कोहविजए ६७, माणविजए ६८, मायाविजए ६९, लोभविजए ७०, पिज्जदोसमिच्छादंसणविजए ७१, सेलेसी ७२, अकम्मया ७३ ॥ २ ॥

व्याख्या—तस्य सम्यक्त्वपराक्रमाध्ययनस्य 'णमिति' सर्वत्रवाक्यालङ्कारे अयमित्यनन्तरमेव वक्ष्यमाणोर्थ एवमनुना वक्ष्यमाणप्रकारेणाख्यायते कथ्यते श्रीमहावीरेणेति गम्यते, तद्यथेति वक्ष्यमाणतदर्थोपन्यासार्थः । संवेगो १ निर्वेदो २ धर्मश्रद्धा ३ गुरुसाधर्मिकशुश्रूषणं, आर्षत्वादिहोत्तरत्र च सूत्रेष्वन्यथा पाठः ४ आलोचना ५ निन्दा ६ गर्हा ७ सामायिकं ८ चतुर्विंशतिस्तवो ९ वन्दनं १० प्रतिक्रमणं ११ कायोत्सर्गः १२ प्रत्याख्यानं १३ स्तवस्तुतिमङ्गलं १४ कालप्रत्युपेक्षणा १५ प्रायश्चित्तकरणं १६ क्षामणा १७ स्वाध्यायो १८ वाचना १९ प्रतिप्रच्छना २० परावर्त्तना २१ अनुप्रेक्षा २२ धर्मकथा २३ श्रुतस्याराधना २४ एकाग्रमनःसंनिवेशना २५ संयमः २६ तपः २७ व्यवदानं २८ सुखशायः २९ अप्रतिबद्धता ३० विविक्तशयनासनसेवना ३१ विनिवर्त्तना ३२ सम्भोगप्रत्याख्यानं ३३ उपधिप्रत्याख्यानं ३४ आहारप्रत्याख्यानं ३५ कषायप्रत्याख्यानं ३६ योगप्रत्याख्यानं ३७ शरीरप्रत्याख्यानं ३८ सहायप्रत्याख्यानं ३९ भक्तप्रत्याख्यानं ४० सद्भावप्रत्याख्यानं ४१ प्रतिरूपता ४२ वैयावृत्त्यं ४३ सर्वगुणसम्पन्नता ४४ वीतरागता ४५ क्षान्तिः ४६ मुक्तिः ४७ मार्दवं ४८ आर्जवं ४९ भावसत्यं ५० करणसत्यं ५१ योगसत्यं ५२ मनोगुप्तता ५३ वाग्गुप्तता ५४ कायगुप्तता ५५ मनःसमाधारणा ५६ वाक्समाधारणा ५७ कायसमाधारणा ५८ ज्ञानसम्पन्नता ५९ दर्शनसम्पन्नता ६० चारित्रसम्पन्नता ६१ श्रोत्रेन्द्रियनिग्रहः ६२ चक्षुरिन्द्रियनिग्रहः ६३ घ्राणेन्द्रियनिग्रहः ६४ जिह्वेन्द्रियनिग्रहः ६५ स्पर्शनेन्द्रियनिग्रहः ६६ क्रोधविजयो ६७ मानविजयो ६८ मायाविजयो ६९ लोभविजयः ७० प्रेमद्वेषमिथ्यादर्शनविजयः ७१ शैलेशी ७२ अकर्मता ७३ इत्यक्षरसंस्कारः ॥ २ ॥ साम्प्रतमिदमेव प्रतिपदं फलोपदर्शनद्वारेण व्याचिख्यासुराह सूत्रकारः 'संवेगेणमित्यादि' त्रिसप्ततिः सूत्राणि—

मूलम्—संवेगेणं भंते ! जीवे किं जणयइ ? संवेगेणं अणुत्तरं धम्मसद्धं जणयइ, अणुत्तराए धम्मसद्धाए संवेगं हव्वमागच्छइ, अणंताणुबंधिकोहमाणमायालोहे खवेइ, नवं च कम्मं न बंधइ, तप्पच्चइअं च णं मिच्छत्तविसोहिं काऊण दंसणाराहए भवइ, दंसणविसोहीएणं विसुद्धाए अत्थेगतिए तेणेव भवग्गहणेणं सिज्झइ, सोहीए अ णं विसुद्धाए तच्चं पुणो भवग्गहणं नाइक्कमइ ॥ १ ॥ ३ ॥

व्याख्या—संवेगेन मोक्षाभिलाषेण भदन्तेति पूज्यामंत्रणं, जीवः किं जनयति ? कतरं गुणमुत्पादयतीत्यर्थः । इति शिष्यप्रश्ने प्रज्ञापक उत्तरमाह—संवेगेनानुत्तरां धर्मश्रद्धां जनयति, अनुत्तरधर्मश्रद्धया च संवेगं तमेवाथौद्विशि-

प्रतरं 'हव्वंति' शीघ्रं आगच्छति, ततोऽनन्तानुबन्धिक्रोधमानमायालोभान् क्षपयति, तथा च नवं कर्म प्रक्रमादशुभं न बध्नाति, तत्प्रत्ययिकां च कषायक्षयहेतुकां च मिथ्यात्वविशुद्धिं सर्वथा मिथ्यात्वक्षयं कृत्वा दर्शनस्य प्रस्तावात्क्षायिक-सम्यक्त्वस्याराधको दर्शनाराधको भवति, दर्शनविशुद्ध्या च विशुद्धया निर्मलया अस्त्येककः कश्चित्तेनैव भवग्रहणेन सिद्ध्यति मरुदेवीवत्, यस्तु तेनैव भवेन न सिध्यति स किमित्याह—'सोहीएत्ति' शुद्धया प्रक्रमाद्दर्शनस्य विशुद्धया तृतीयं पुनर्भवग्रहणं नातिक्रामति, उत्कृष्टदर्शनाराधनापेक्षमेतत्, यदुक्तं—"उक्कोसदंसणेणं भंते ! जीवे कइहिं भव-ग्गहणेहिं सिज्झइ ? गोअमा ! उक्कोसेणं तेणेव, तइअं पुण नाइक्कमइत्ति" इतः परं सर्वसूत्रेषु सुगमानि पदानि न व्याख्यास्यन्ते ॥ १ ॥ ३ ॥ संवेगादवश्यं निर्वेदः स्यादिति तमाह—

मूलम्—निव्वेएणं भंते ! जीवे किं जणयइ ? निव्वेएणं दिव्वमाणुस्सतेरिच्छिएसु कामभोगेसु निव्वेअं हव्वमागच्छइ, सव्वविसएसु विरज्जइ, सव्वविसएसु विरज्जमाणे आरंभपरिच्चायं करेइ, आरंभपरिच्चायं करेमाणे संसारमग्गं वुच्छिंदइ, सिद्धिमग्गपडिवण्णे अ भवइ ॥ २ ॥ ४ ॥

व्याख्या—निर्वेदेन सामान्यतः संसारविरागेण कदाऽसौ त्याज्य इति धिया दिव्यमानुषतैरश्चेषु कामभोगेषु 'निर्वेदं' यथाऽलमेभिरनर्थहेतुभिरिति भावं 'हव्वमागच्छति' तूर्णमाप्नोति, तथा च सर्वविषयेषु समस्तसांसारिकव-स्तुषु विरज्यते, विरज्यमानश्चारम्भपरित्यागं करोति, विषयार्थत्वात्सर्वारम्भाणां, तत्परित्यागं च कुर्वन् संसारमार्गं मिथ्यात्वाविरत्यादिकं व्यवच्छिनत्ति, तत्त्याग एव तत्त्वत आरम्भपरिहारसम्भवात्, तद्व्यवच्छित्तौ च सुप्राप एव मुक्ति-मार्गः सम्यग्दर्शनादिरिति सिद्धिमार्गप्रतिपन्नश्च भवति ॥ २ ॥ ४ ॥ निर्वेदोऽपि धर्मश्रद्धावतामेव स्यादिति तामाह—

मूलम्—धम्मसद्धाएणं भंते ! जीवे किं जणयइ ? धम्मसद्धाएणं सायासोक्खेसु रज्जमाणे विरज्जइ, अगारधम्मं च णं चयइ, अणगारे णं जीवे सारीरमाणसाणं दुक्खाणं छेयण—भेयण—संजो-गाईणं वुच्छेअं करेइ, अव्वाबाहं च सुहं निव्वत्तेइ ॥ ३ ॥ ५ ॥

व्याख्या—धर्मश्रद्धया सातं सातवेदनीयं तज्जनितानि सौख्यानि विषयसुखानीत्यर्थः तेषु रज्यमानः पूर्वं रागं कुर्वन् विरज्यते विरागं याति, अगारधर्मं च गृहाचारं गार्हस्थ्यमित्यर्थः त्यजति जहाति, ततश्चाऽनगारो यतिः सन् जीवः शारीरमानसानां दुःखानां 'छेअणेत्यादि' 'छेदनं'खड्गादिना 'भेदनं' कुन्तादिना आदिशब्दस्येहापि सम्बन्धा-च्छेदनभेदनादीनां शारीराणां संयोगः प्रस्तावादनिष्टानां आदिशब्दादिष्टवियोगादिग्रहस्ततोऽनिष्टसंयोगादीनां च मानसदुःखानां व्यवच्छेदं करोति, अत एव अव्याबाधं च सुखं निर्वर्त्तयति जनयति ॥ ३ ॥ ५ ॥ धर्मश्रद्धावता च गुर्वादेः शुश्रूषाऽवश्यं कार्येति तामाह—

मूलम्—गुरुसाहम्मियसुस्सूसणयाए णं भंते ! जीवे किं जणयइ ? गुरुसाहम्मियसुस्सूसणयाए णं विण-यपडिवत्तिं जणयइ, विणयपडिवण्णे अ णं जीवे अणच्चासायणासीले नेरइअ—तिरिक्खजो-णिअ—मणुस्स—देवदुग्गइओ निरुंभइ, वण्णसंजलणभत्तिबहुमाणयाए मणुस्सदेवसुग्गईओ निबंधइ, सिद्धिसोग्गइं च विसोहेइ, पसत्थाइं च णं विणयमूलाइं सव्वकज्जाइं, साहेइ, अन्ने अ बहवे जीवे विणइत्ता भवइ ॥ ४ ॥ ६ ॥

व्याख्या—गुरुसाधर्मिकशुश्रूषणेन तदुपासनरूपेण विनयप्रतिपत्तिमुचितकृत्यकरणाङ्गीकाररूपां जनयति, 'विणय-पडिवण्णे अत्ति' सूत्रत्वात् प्रतिपन्नविनयश्च जीवो अनत्याशातनाशीलः, कोऽर्थः ? गुरुपरिवादादिपरिहारादत्याशा-तनात्यागी सन् 'नेरइअइत्यादि' नैरयिकाश्च तिर्यञ्चश्च नैरयिकतिर्यञ्चस्तेषां योनी नैरयिकतिर्यग्योनी स्वार्थिकेके नैर-यिकतीर्यग्योनिके ते च मनुष्यदेवदुर्गती च म्लेच्छकिल्बिषत्वादिके निरुणद्धि, तथा वर्णः श्लाघा तेन संज्वलनं गुणो-द्भासनं वर्णसंज्वलनं, भक्तिरभ्युत्थानादिका, बहुमान आन्तरा प्रीतिरेषां द्वन्द्वे भावप्रत्यये च वर्णसंज्वलनभक्तिबहुमा ननां तया प्रक्रमाद्गुरूणां मनुष्यदेवसुगती सुकुलैश्वर्यादियुक्ते निबध्नाति तत्प्रायोग्यकर्मबन्धनादिति भावः, सिद्धि-सुगतिं च विशोधयति तन्मार्गभूतसम्यग्दर्शनादिविशोधनेन प्रशस्तानि प्रशंसास्पदानि विनयमूलानि विनयहेतुकानि

सर्वकार्याणि इह श्रुताभ्ययनादीनि परत्र मोक्षादीनि साधयति, अन्यांश्च बहून् जीवान् 'विणइत्तत्ति' विनेता विनयं ग्राहयिता भवति, स्वयं सुस्थितस्योपादेयवचनत्वादिति भावः ॥ ४ ॥ ६ ॥ गुरुशुश्रूषां कुर्वतापि दोषसम्भवे आलोचना कार्येति तामाह—

मूलम्—आलोयणयाएणं भंते ! जीवे किं जणयइ ? आलोयणयाएणं माया-नियाण-मिच्छादंसणसल्लाणं मोक्खमग्गविग्घाणं अणंतसंसारवद्धणाणं उद्धरणं करेइ, उज्जुभावं च णं जणयइ, उज्जुभावपडिवन्ने अ णं जीवे अमाई इत्थिवेयं नपुंसगवेयं च न बंधइ, पुव्वबद्धं च णं निज्जरेइ ॥ ५ ॥ ७ ॥

व्याख्या—आलोचनया स्वदोषाणां गुरोः पुरः प्रकाशनरूपया मायानिदानमिथ्यादर्शनशल्यानां मोक्षमार्गविघ्नानामनन्तसंसारवर्द्धनानां उद्धरणं अपनयनं करोति, ऋजुभावं च जनयति, ऋजुभावं प्रतिपन्नश्च जीवो अमायी सन् स्त्रीवेदं नपुंसकवेदं च न बध्नाति, पुंस्त्वहेतुत्वादमायित्वस्य, पूर्वबद्धं च तदेव द्वयं सकलकर्म वा निर्जरयति क्षपयति ॥ ५ ॥ ७ ॥ आलोचना च स्वदोषनिन्दावत एव सफलेति तामाह—

मूलम्—निंदणयाए णं भंते ! जीवे किं जणयइ ? निंदणयाए णं पच्छाणुतावं जणयइ पच्छाणुतावेणं विरज्जमाणे करणगुणसेढिं पडिवज्जइ, करणगुणसेढिं पडिवन्ने अ अणगारे मोहणिज्जं कम्मं उग्घाएइ ॥ ६ ॥ ८ ॥

व्याख्या—निन्दनेन स्वयमेव स्वदोषचिन्तनेन पश्चादनुतापं हा ! दुष्टु मया कृतमेतदित्यादिरूपं जनयति, पश्चादनुतापेन च विरज्यमानो वैराग्यं गच्छन् करणेनाऽपूर्वकरणेन गुणश्रेणिः करणगुणश्रेणिः सा च सर्वोपरितनस्थितेर्मोहनीयादिकर्मदलिकान्युपादाय उदयसमयात्प्रभृतिद्वितीयादिसमयेष्वऽसंख्यातगुणासंख्यातगुणपुद्गलप्रक्षेपरूपा तां, उपलक्षणत्वात् स्थितिघातरसघातगुणसंक्रमस्थितिवन्धांश्च विशिष्टान् प्रतिपद्यते । अथवा करणगुणेनापूर्वकरणादिमाहात्म्येन श्रेणिः करणगुणश्रेणिः प्रस्तावात्क्षपकश्रेणिरेव तां प्रतिपद्यते, तां प्रतिपन्नश्चानगारो मोहनीयं कर्म उद्घातयति क्षपयति ॥ ६ ॥ ८ ॥ बहुदोषसद्भावे निन्दानन्तरं गर्हापि कार्येति तामाह—

मूलम्—गरहणयाए णं भंते ! जीवे किं जणयइ ? गरहणयाएणं अपुरक्कारं जणयइ, अपुरक्कारगए अ णं जीवे अप्पसत्थेहिंतो जोगेहिंतो निअत्तइ, पसत्थे अ पवत्तइ, पसत्थजोगपडिवण्णे अ णं अणगारे अणंतघाई पज्जवे खवेइ ॥ ७ ॥ ९ ॥

व्याख्या—गर्हणेन परसमक्षमात्मनो दोषोद्भावनेन पुरस्कारो गुणवानयमिति प्रसिद्धिस्तदभावं अवज्ञास्पदत्वमित्यर्थः जनयत्यात्मन इति गम्यं, अपुरस्कारगतश्च जीवः कदाचिदशुभाध्यवसायोत्पत्तावपि तद्भीत्यैव अप्रशस्तेभ्यो योगेभ्यो निवर्त्तते, प्रशस्तयोगेषु च प्रवर्त्तते, प्रशस्तयोगप्रतिपन्नश्च जीवः अनन्तविषयतयाऽनन्ते ज्ञानदर्शने घ्नन्तीत्यनन्तघातिनस्तान् पर्यवान् ज्ञानावरणादिकर्मपरिणतिविशेषान् क्षपयति, उपलक्षणं चैतन्मुक्तिप्राप्तेः तदर्थत्वात्सर्वप्रयासस्य । एवमनुक्तापि सर्वत्र मुक्तिप्राप्तिरेव फलत्वेन द्रष्टव्या ॥ ७ ॥ ९ ॥ आलोचनादिकं च सामायिकवतामेव तत्त्वतः स्यादिति तदाह—

मूलम्—सामाइएणं भंते ! जीवे किं जणयइ ? सामाइएणं सव्वसावज्जजोगविरइं जणयई ॥ ८ ॥ १० ॥

व्याख्या—सामायिकेन सर्वसावद्ययोगविरतिं सकलसपापव्यापारोपरमं जनयति ॥ ८ ॥ १० ॥ सामायिकप्रतिपत्ता च तत्प्रणेतारोऽर्हन्तः स्तुत्या इति तत्स्तवमाह—

मूलम्—चउवीसत्थएणं भंते ! जीवे किं जणयइ ? चउवीसत्थएणं दंसणविसोहिं जणयइ ॥ ९ ॥ ११ ॥

व्याख्या—स्पष्टम् ॥ ९ ॥ ११ ॥ स्तुत्वापि जिनान् गुरुवन्दनपूर्विकैव सामायिकस्वीकृतिरिति तदाह—

मूलम्—वंदणएणं भंते ! जीवे किं जणयइ ? वंदणएणं नीआगोअं कम्मं खवेइ, उच्चागोअं निबंधइ, सोहग्गं च णं अप्पडिहयं आणाफलं निवत्तेई, दाहिणभावं च णं जणयइ ॥ १० ॥ १२ ॥

व्याख्या—'सोहग्गं चत्ति' सौभाग्यं च सर्वजनस्पृहणीयतारूपं अप्रतिहतमस्खलितमाज्ञाफलं आज्ञासारं निर्वर्त-

यति, दक्षिणभावं चानुकूलभावं जनयति लोकस्येति गम्यते ॥ १० ॥ १२ ॥ सामायिकादिगुणवता च प्रथमान्तिमार्हतोस्तीर्थे सर्वदा, मध्यमार्हतां चापराधसम्भवे प्रतिक्रमणं कार्यमिति तदाह—

**मूलम्—पडिक्कमणेणं भंते ! जीवे किं जणयइ ? पडिक्कमणेणं वयछिद्दाइं पिहेइ, पिहियवयछिद्दे पुण जीवे निरुद्धासवे असबलचरित्ते अट्ठसु पवयणमायासु उवउत्ते अपुहत्ते सुप्पणिहए विहरइ ॥ ११ ॥ १३ ॥**

व्याख्या—प्रतिक्रमणेनाऽपराधेभ्यः प्रतीपनिवर्त्तनेन व्रतछिद्राणि अतिचारान् पिदधाति स्थगयति, पिहितव्रतछिद्रः पुनर्जीवो निरुद्धाश्रवोऽत एवाऽशबलं शबलस्थानैरकर्बुरं चरित्रं यस्य स तथा, 'अपुहत्तेत्ति' न विद्यते पृथक्त्वं प्रस्तावात् संयमयोगवियोगरूपं यस्यासावपृथक्त्वः, 'सुप्रणिहितः' सुष्ठुसंयमप्रणिधिमान् विहरति संयमाध्वनि याति ॥ ११ ॥ १३ ॥ प्रतिक्रमणे चातिचारशुद्धये कायोत्सर्गः कार्य इति तमाह—

**मूलम्—काउस्सग्गेणं भंते ! जीवे किं जणयइ ? काउस्सग्गेणं तीअपडुपन्नं पायच्छित्तं विसोहेइ, विसुद्धपायच्छित्ते अ जीवे नियहिअए ओहरियभरुव्व भारवहे पसत्थज्झाणोवगए सुहंसुहेणं विहरइ ॥**

१ दोपरहितम् ॥

व्याख्या—कायोत्सर्गेणातीतं चेह चिरकालभावि, प्रत्युत्पन्नमिव प्रत्युत्पन्नं चासन्नकालभावि, अतीतप्रत्युत्पन्नं प्रायश्चित्तं प्रायश्चित्तार्हमपराधं विशोधयति, विशुद्धप्रायश्चित्तश्च जीवो निर्वृत्तं स्वस्थीभूतं हृदयमस्येति निर्वृत्तहृदयः, क इव ? अपहृतभरोऽपसारितभारो भारवह इव, यथा ह्यपहृतभारो भारवहो निर्वृतहृदयः स्यात् तथाऽयमपि विशोधितातिचार इति भावः । स च प्रशस्तध्यानोपगतः सुखंसुखेन सुखपरम्परयास्या विहरति ॥ १२ ॥ १४ ॥ कायोत्सर्गेणाप्यशुद्धः प्रत्याख्यानं कुर्यादिति तदाह—

**मूलम्—पच्चक्खाणेणं भंते ! जीवे किं जणयइ ? पच्चक्खाणेणं आसवदाराइं निरुंभइ ॥ १३ ॥ १५ ॥**

व्याख्या—प्रत्याख्यानेन मूलगुणोत्तरगुणप्रत्याख्यानरूपेण आश्रवद्वाराणि निरुणद्धि, उपलक्षणत्वाच्च पूर्वोपचितं कर्म क्षपयति । नमस्कारसहितादिकं प्रत्याख्यानं चेहोत्तरगुणप्रत्याख्यानेऽन्तर्भवति इति ॥ १३ ॥ १५ ॥ प्रत्याख्यानं च कृत्वा चैत्यसद्भावे तद्वन्दनं कार्यं, तच्च स्तुतिस्तवमङ्गलं विना नेति तदाह—

**मूलम्—थयथुइमंगलेणं भंते ! जीवे किं जणयइ ? थयथुइमंगलेणं नाणदंसणचरित्तबोहिलाभं जणयइ, नाणदंसणचरित्तबोहिलाभसंपण्णे अ णं जीवे अंतकिरिअं कप्पविमाणोववत्तिअं आराहणं आराहेइ ॥ १४ ॥ १६ ॥**

व्याख्या—स्तवा देवेन्द्रस्तवाद्याः, स्तुतय एकादिसप्तश्लोकान्ताः, ततश्च स्तुतयश्च स्तवाश्च स्तुतिस्तवाः, स्तुतिशब्दस्य इदन्तत्वात्पूर्वनिपातः, सूत्रे तु व्यत्ययः प्राकृतत्वात्, ते एव मङ्गलं स्तुतिस्तवमङ्गलं तेन ज्ञानदर्शनचारित्ररूपो यो बोधिः स ज्ञानदर्शनचारित्रबोधिस्तल्लाभं जनयति, ज्ञानदर्शनचारित्रबोधिलाभसम्पन्नश्च जीवोऽन्तो भवस्य कर्मणां वा पर्यन्तस्तस्य क्रिया निर्वर्त्तनमन्तक्रिया मुक्तिः ततश्चान्तक्रियाहेतुत्वादन्तक्रिया तां आराधनामितियोगः, तथा कल्पा देवलोका विमानानि ग्रैवेयकानुत्तरविमानरूपाणि तेषूपपत्तिरुत्पादो यस्याः सा तथा तां, अयं भावोऽनन्तरजन्मनि विशिष्टदेवत्वफलां परम्परया तु मुक्तिप्रापिकामाराधनां ज्ञानाद्याराधनारूपामाराधयति साधयति ॥ ॥ १४ ॥ १६ ॥ अर्हन्नमनादनु स्वाध्यायः कार्यः, स च काले एव, तज्ज्ञानं च कालप्रत्युपेक्षणया स्यादिति तामाह—

**मूलम्—कालपडिलेहणयाएणं भंते ! जीवे किं जणयइ ? कालपडिलेहणयाएणं नाणावरणिज्जं कम्मं खवेइ ॥ १५ ॥ १७ ॥**

व्याख्या—कालः प्रादोषिकादिस्तस्य प्रत्युपेक्षणा ग्रहणप्रतिजागरणरूपा कालप्रत्युपेक्षणा तया ॥ १५ ॥ १७ ॥ कदाचिदकालपाठे प्रायश्चित्तं कार्यमिति तदाह—

१ ज्ञानदर्शनचारित्ररूपामाराधयति साधयतीति "घ" पुस्तकपाठः ॥

मूलम्—पायच्छित्तकरणेणं भंते ! जीवे किं जणयइ ? पायच्छित्तकरणेणं पावकम्मविसोहिं जणयइ, निरइआरे आवि भवइ, सम्मं च णं पायच्छित्तं पडिवज्जमाणे मग्गं च मग्गफलं च विसोहेइ, आयारं आयारफलं च आराहेइ ॥ १६ ॥ १८ ॥

व्याख्या—प्रायश्चित्तकरणेनालोचनादिविधानरूपेण पापकर्मविशुद्धिं निष्पापतां जनयति, निरतिचारश्चापि भवति, तेनैव ज्ञानाचाराद्यतीचारविशोधनात्, मार्गं इह ज्ञानावाप्तिहेतुः सम्यक्त्वं तं च तत्फलं च ज्ञानं विशोधयति, अनयोर्हि युगपदुत्पत्तावपि सम्यक्त्वस्य ज्ञानं प्रति हेतुत्वं प्रदीपस्येव प्रकाशं प्रति विद्यत एव। तथा आचर्यते सेव्यते इत्याचारश्चारित्रं तत्फलं च मुक्तिरूपमाराधयति ॥१६॥१८॥ प्रायश्चित्तकरणं च क्षमणातः स्यादिति तामाह—

मूलम्—खमावणयाएणं भंते ! जीवे किं जणयइ ? खमावणयाएणं पल्हायणभावं जणयइ, पल्हायणभावमुवगए अ जीवे सव्वपाण-भूअ-जीव-सत्तेसु मित्तीभावं उप्पाएइ, मित्तीभावमुवगए आवि जीवे भावविसोहिं काऊण निब्भए भवइ ॥ १७ ॥ १९ ॥

व्याख्या—क्षमणया दुष्कृतानन्तरं क्षमितव्यमिदं ममेत्यादिरूपया प्रह्लादनभावं चित्तप्रसादं जनयति, प्रह्लादनभावमुपगतश्च जीवः सर्वे प्राणा द्वित्रिचतुरिन्द्रिया भूताश्च तरवो जीवाश्च पञ्चेन्द्रियाः सत्वाश्च शेषजीवास्तेषु मैत्रीभावं परहितचिन्तारूपमुत्पादयति, तं चोपगतो जीवो भावविशुद्धिं रागद्वेषापगमरूपां कृत्वा निर्भयो भवत्यशेषभयहेत्वभावात् ॥ १७ ॥ १८ ॥ एवंविधगुणवता च स्वाध्यायः कार्य इति तमाह—

मूलम्—सज्झाएणं भंते ! जीवे किं जणयइ ? सज्झाएणं नाणावरणिज्जं कम्मं खवेइ ॥ १८ ॥ २० ॥

व्याख्या—स्वाध्यायेन ज्ञानावरणीयमुपलक्षणत्वात् शेषकर्म च क्षपयति । उक्तं च—"कम्ममसंखिज्जभवं, खवेइ अणुसमयमेव उवउत्तो ॥ अण्णयरम्मिवि जोए, सज्झायम्मी विसेसेणं" ॥ १८ ॥ २० ॥ तत्रादौ वाचना कार्येति तामाह—

मूलम्—वायणाएणं भंते ! जीवे किं जणयइ ? वायणाएणं निज्जरं जणयइ, सुअस्स अणासायणाए वट्टति, सुअस्स अणासायणाए वट्टमाणे तित्थधम्मं अवलंबइ, तित्थधम्मं अवलंबमाणे महानिज्जरे महापज्जवसाणे भवइ ॥ १९ ॥ २१ ॥

व्याख्या—वाचनया पाठनेन निर्जरां कर्मपरिशाटं जनयति, तथा श्रुतस्यानाशातनायां च वर्त्तते, तदकरणे हि अवज्ञातः श्रुतमाशातितं भवेत् । पाठान्तरे [ "सुअस्स अणुसज्जणाए वट्टति" तत्र श्रुतस्यानुषजने अनुवर्त्तने वर्त्तते, कोऽर्थः ? श्रुतस्याव्यवच्छेदं करोति ] ततः श्रुतस्यानाशातनायामनुषजने वा वर्त्तमानः तीर्थमिह गणधरस्तस्य धर्मः आचारः श्रुतप्रदानरूपस्तीर्थधर्मस्तमवलम्बते, तं चावलम्बमान आश्रयन् महानिर्जरस्तथा महत्प्रशस्यं पर्यवसानं अन्तः प्रक्रमात्कर्मणां यस्य स महापर्यवसानश्च मोक्षावाप्तेर्भवति ॥ १९ ॥ २१ ॥ कृतवाचनः संशये पुनः पृच्छतीति प्रच्छनामाह—

मूलम्—पडिपुच्छणयाएणं भंते ! जीवे किं जणयइ ? पडिपुच्छणयाएणं सुत्तत्थतदुभयाइं विसोहेइ, कंखामोहणिज्जं कम्मं वोच्छिन्दइ ॥ २० ॥ २२ ॥

व्याख्या—पूर्वकथितसूत्रादेः पुनः प्रच्छनं प्रतिप्रच्छनं तेन सूत्रार्थतदुभयानि विशोधयति, 'कांक्षा' इदमित्थमित्थं वा ममाध्येतुमुचितमित्यादिका वाञ्छा सैव मोहनीयं कर्माऽनाभिग्रहिकमिथ्यात्वरूपं व्युच्छिनत्ति ॥ २० ॥ २२ ॥ इत्थं स्थिरीकृतस्य श्रुतस्य विस्मृतिर्माभूत् इति परावर्त्तना कार्येति तामाह—

मूलम्—परिअट्टणयाएणं भंते ! जीवे किं जणयइ ?
परिअट्टणयाएणं वंजणाइं जणयइ, वंजणलद्धिं च उप्पाएइ ॥ २१ ॥ २३ ॥

व्याख्या—परावर्त्तनया गुणनेन व्यञ्जनान्यक्षराणि जनयति, तानि हि विस्मृतान्यपि गुणयतो झगित्युत्पद्यन्त इति उत्पादितान्युच्यन्ते, तथा तथाविधक्षयोपशमवशाद्व्यञ्जनलब्धिं च शब्दात् पदलब्धिं च पदानुसारितारूपामुत्पादयति ॥ २१ ॥ २३ ॥ सूत्रवदर्थस्याप्यविस्मरणाद्यर्थमनुप्रेक्षा कार्येति तामाह—

मूलम्—अणुप्पेहाएणं भंते! जीवे किं जणयइ? अणुप्पेहाएणं आउअवज्जाओ सत्त कम्मप्पगडिओ धणिअबंधणबद्धाओ सिढिलबंधणबद्धाओ पकरेइ, दीहकालट्ठिइआओ हस्सकालट्ठिइआओ पकरेइ, तिव्वाणुभावाओ मंदाणुभावाओ पकरेइ, बहुप्पएसग्गाओ अप्पपएसग्गाओ पकरेइ, आउअं च णं कम्मं सिअ बंधइ सिअ नो बंधइ, असायावेअणिज्जं च णं कम्मं नो भुज्जो भुज्जो उवचिणाइ, अणाइअं च णं अणवदग्गं दीहमद्धं चाउरंतसंसारकंतारं खिप्पामेव वीईवयइ ॥

व्याख्या—अनुप्रेक्षयाऽर्थचिन्तनिकया आयुर्वर्जाः सप्त कर्मप्रकृतयः 'धणिअबंधणबद्धाओत्ति' गाढबन्धनबद्धा निकाचिता इत्यर्थः शिथिलबन्धनबद्धाः कोऽर्थोऽपवर्त्तनादिकरणयोग्याः प्रकरोति, तपोभेदत्वादस्यास्तपसश्च निकाचितकर्मक्षपणेऽपि क्षमत्वात्, उक्तं च—"तवसा उ निकाइयाणं चत्ति"। दीर्घकालस्थितिकाश्च ता ह्रस्वकालस्थितिकाः प्रकरोति, शुभाशयवशात् स्थितिकण्डकापहारेणेति भावः। इह नरतिर्यग्देवायुर्वर्जानां सर्वकर्मणां स्थितयो प्राणास्तासामेव दीर्घत्वस्याशुभत्वात्। उक्तं च—"सव्वाणवि जिट्ठट्ठिई, असुहा जं साइसंकिलेसेण ॥ इअरावि मोहिओ पुण, मुत्तुं नरअमरतिरिआउं ॥ १ ॥" तीव्रानुभावाश्चतुःस्थानिकादिरसा मन्दानुभावाः त्रिस्थानिकत्वादिमात्ररसाः प्रकरोति, इह चाऽशुभप्रकृतय एव गृह्यन्ते, शुभभावस्य शुभासु तीव्रानुभावहेतुत्वात्। बहुप्रदेशाग्रा बहुकर्मदलिका अल्पप्रदेशाग्राः प्रकरोति। आयुःकर्म च स्यात् कदाचिद्बध्नाति स्यान्न बध्नाति, तस्य त्रिभागादिशेषायुष्कतायामेव बन्धसम्भवात्, यदि बध्नाति तदा सुरायुरेव, मुनेस्तद्बन्धस्यैव सम्भवात्। असातवेदनीयं च कर्म चशब्दादन्याश्चाशुभप्रकृतीर्नो भूयो भूय उपचिनोति, भूयो भूयो ग्रहणं तु केनापि प्रमादेन प्रमत्तमुनेस्तद्बन्धस्यापि सम्भवात्। अनादिकं आदिरहितं, अनवदग्रं अनन्तं, 'दीहमद्धंति' मकारोऽलाक्षणिकस्ततो दीर्घाद्धं दीर्घकालं, चत्वारश्चतुर्गतिलक्षणा अन्ता अवयवा यस्मिंस्तच्चतुरन्तं संसारकान्तारं क्षिप्रमेव व्यतिव्रजति विशेषेणातिक्रामति ॥ २२ ॥ २४ ॥ अभ्यस्तश्रुतेन धर्मकथापि कार्येति तामाह—

मूलम्—धम्मकहाएणं भंते! जीवे किं जणयइ? धम्मकहाएणं पवयणं पभावेइ, पवयणपभावए णं जीवे आगमे सस्सभद्दत्ताए कम्मं निबंधइ ॥ २३ ॥ २५ ॥

व्याख्या—धर्मकथया व्याख्यानरूपया प्रवचनं शासनं प्रभावयति, उक्तं हि—"पावयणी १ धम्मकही २ वाइ ३ नेमित्तिओ ४ तवस्सी ५ अ ॥ विज्जा ६ सिद्धो अ ७ कई ८ अट्ठेव पहावगा भणिआ" पाठान्तरे निर्जरां जनयति, 'आगमे सस्सभद्दत्ताएत्ति' आगमिष्यतीति आगम आगामी कालस्तस्मिन् शश्वद्भद्रतया निरन्तरकल्याणतयोपलक्षितं कर्म निबध्नाति, शुभानुबन्धि शुभमुपार्जयति इति भावः ॥ २३ ॥ २५ ॥ एवं पञ्चविधस्वाध्यायरतेः श्रुताराधना स्यादिति तामाह—

मूलम्—सुअस्स आराहणयाए णं भंते! जीवे किं जणयइ?
सुअस्स आराहणयाएणं अण्णाणं खवेइ न य संकिलिस्सइ ॥ २४ ॥ २६ ॥

व्याख्या—श्रुतस्याराधनया सम्यगासेवनया अज्ञानं क्षपयति, विशिष्टज्ञानावाप्तेः। न च संक्लिश्यते, नैव रागादिजनितसंक्लेशभाग् भवति, तद्वशतो नवनवसंवेगावाप्तेः ॥ २४ ॥ २६ ॥ श्रुताराधना चैकाग्रमनःसंनिवेशनादेव स्यादिति तामाह—

मूलम्—एगग्गमनसंनिवेसणयाए णं भंते! जीवे किं जणयइ?
एगग्गमणसंनिवेसणयाए णं चित्तनिरोधं करेइ ॥ २५ ॥ २७ ॥

व्याख्या—एकं च तदग्रं च प्रस्तावाच्छुभमालम्बनं एकाग्रं तस्मिन्मनसः संनिवेशना स्थापना एकाग्रमनःसंनिवेशना तया चित्तस्य कथञ्चिदुन्मार्गप्रस्थितस्य निरोधं नियंत्रणं चित्तनिरोधं करोति ॥ २५ ॥ २७ ॥ इदं सर्वं संयमवतः सफलमिति तमाह—

मूलम्—संजमेणं भंते! जीवे किं जणयइ? संजमेणं अणण्हयत्तं जणयइ ॥ २६ ॥ २८ ॥

व्याख्या—संयमेनाश्रवविरमणादिना 'अणण्हयत्तंति' अनंहस्कत्वं अविद्यमानपापकर्मत्वम् ॥ २६ ॥ २८ ॥ सत्यपि संयमे तपो विना न कर्मक्षपणेति तदाह—

मूलम्—तवेणं भंते किं जणयइ ? तवेणं वोदाणं जणयइ ॥ २७ ॥ २९ ॥

व्याख्या—'वोदाणंति' व्यवदानं पूर्वबद्धकर्ममलापगमाद्विशिष्टां शुद्धिं जनयति ॥ २७ ॥ २९ ॥ व्यवदानस्यैव फलमाह—

मूलम्—वोदाणेणं भंते ! जीवे किं जणयइ ? वोदाणेणं अकिरिअं जणयइ, अकिरिआए भवित्ता तओ पच्छा सिज्झइ, बुज्झइ, मुच्चइ, परिनिव्वाइ, सव्वदुक्खाणमंतं करेइ ॥ २८ ॥ ३० ॥

व्याख्या—व्यवदानेन अक्रियं व्युपरतक्रियाख्यं शुक्लध्यानचतुर्थभेदं जनयति, ततश्च अक्रियाको व्युपरतक्रियाख्यशुक्लध्यानवर्त्ती भूत्वा सिध्यति निष्ठितार्थो भवति, बुध्यते ज्ञानदर्शनोपयोगाभ्यां वस्तुतत्वमवगच्छति, मुच्यते संसारादत एव परिनिर्वातीत्यादि प्राग्वत् ॥ २८ ॥ ३० ॥ व्यवदानं च सुखशातेनैव स्यादिति तमाह—

मूलम्—सुहसाएणं भंते ! जीवे किं जणयइ ? सुहसाएणं अणुस्सुअत्तं जणयइ, अणुस्सुए अ णं जीवे अणुकंपए अणुब्भडे विगयसोए चरित्तमोहणिज्जं कम्मं खवेइ ॥ २९ ॥ ३१ ॥

व्याख्या—सुखस्य वैषयिकरूपस्य शातस्तद्गतस्पृहापोहेनापनयनं सुखशातस्तेन अनुत्सुकत्वं विषयसुखं प्रति निःस्पृहत्वं जनयति, अनुत्सुकश्च जीवोऽनुकम्पको दुःखितानुकम्पी, सुखोत्सुको हि म्रियमाणमपि प्राणिनं पश्यन् स्वसुखरसिक एव स्यात् न त्वनुकम्पते, तथाऽनुद्भटोऽनुल्वणः, विगतशोको नैहिकार्थभ्रंशेपि शोचति मुक्तिपदबद्धस्पृहत्वात्, एवंविधश्च प्रकृष्टशुभभाववशाच्चारित्रमोहनीयं कर्म क्षपयति ॥ २९ ॥ ३१ ॥ सुखशातश्चाप्रतिबद्धतया स्यादिति तामाह—

मूलम्—अप्पडिबद्धयाए णं भंते ! जीवे किं जणयइ ? अप्पडिबद्धयाए णं निस्संगत्तं जणयइ, निस्संगत्तगए अ णं जीवे एगे एगग्गचित्ते दिआ य राओ अ असज्जमाणे अप्पडिबद्धे आवि विहरइ ॥ ३० ॥ ३२ ॥

व्याख्या—अप्रतिबद्धतया मनसो निरभिष्वङ्गतया निःसङ्गत्वं बहिः सङ्गाभावं जनयति, निस्सङ्गत्वगतश्च जीव एको रागादिविकलः, एकाग्रचित्तो धर्मैकतानचेतास्ततश्च दिवा च रात्रौ चाऽसजन्, कोऽर्थः ? सदा बहिःसङ्गं त्यजन् अप्रतिबद्धश्चापि विहरति, मासकल्पादिना उद्यतविहारेण पर्यटति ॥ ३० ॥ ३२ ॥ अप्रतिबद्धतायाश्च विविक्तशयनासनताहेतुरिति तामाह—

मूलम्—विवित्तसयणासणयाए णं भंते ! जीवे किं जणयइ ? विवित्तसयणासणयाए णं चरित्तगुत्तिं जणयइ, चरित्तगुत्ते अ णं जीवे विवित्ताहारे दढचरित्ते एगंतरए मोक्खभावपडिवण्णे अट्ठविहं कम्मगंठिं निज्जरेइ ॥ ३१ ॥ ३३ ॥

व्याख्या—विविक्तानि स्त्र्यादिरहितानि शयनासनानि उपलक्षणत्वादुपाश्रयश्च यस्यासौ विविक्तशयनासनः तद्भावस्तत्ता तया चरित्रगुप्तिं चरणरक्षां जनयति, 'चरित्तगुत्ते अत्ति' गुप्तचरित्रश्च जीवो विकृत्यादिबृंहकवस्तुरहित आहारो यस्य स तथा दृढचरित्रः, एकान्तेन निश्चयेन रत एकान्तरतः संयम इति गम्यते, मोक्षभावप्रतिपन्नो मोक्ष एव मया साधनीय इत्यभिप्रायवान्, अष्टविधकर्मग्रन्थिं निर्जरयति, क्षपकश्रेणिप्रतिपत्त्या क्षपयति ॥ ३१ ॥ ३३ ॥ विविक्तशयनासनतायां सत्यां विनिवर्त्तना स्यादिति तामाह—

मूलम्—विणिवट्टणयाए णं भंते ! जीवे किं जणयइ ? विणिवट्टणयाए णं पावकम्माणं अकरणयाए अब्भुट्ठेइ, पुव्वबद्धाण य निज्जरणयाए तं निअत्तेइ, तओ पच्छा चाउरंतसंसारकंतारं विईवयइ ॥ ३२ ॥ ३४ ॥

व्याख्या—विनिवर्त्तनया विषयेभ्य आत्मनः पराङ्मुखीकरणरूपया पापकर्मणां ज्ञानावरणादीनां 'अकरणयाएत्ति' आर्षत्वादकरणेन अपूर्वानुपार्जनेनाऽभ्युत्तिष्ठते मोक्षायेति शेषः, पूर्वबद्धानां निर्जरणया तदिति पापकर्म निवर्त्तयति विनाशयति ॥ ३२ ॥ ३४ ॥ विषयनिवृत्तश्च कश्चित् सम्भोगप्रत्याख्यानवानपि स्यादिति तदाह—

मूलम्—संभोगपच्चक्खाणेणं भंते ! जीवे किं जणयइ ? संभोगपच्चक्खाणेणं आलंबणाइं खवेइ, निरा-

लंबणस्स य आययट्ठिआ जोगा भवंति, सएणं लाभेणं तुस्सइ, परस्स लाभं नो आसाएइ, नो तक्केइ, नो पीहेई, नो पत्थेइ, नो अभिलसइ। परस्स लाभं अणासाएमाणे अतक्केमाणे अपीहेमाणे अपत्थेमाणे अणभिलसेमाणे दोच्चं सुहसिज्जं उपसंपज्जित्ताणं विहरइ ॥

व्याख्या—सम्भोग एकमण्डलीभोक्तृत्वं, अन्यमुनिदत्ताहारादिग्रहणमित्यर्थः, तस्य प्रत्याख्यानं गीतार्थत्वे जिनकल्पाद्यभ्युद्यतविहारप्रतिपत्त्या परिहारः सम्भोगप्रत्याख्यानं तेन आलम्बनानि ग्लानत्वादीनि क्षपयति तिरस्कुरुते, अन्यो हि मान्द्यादिकारणेष्वन्यदत्तमाहारादिकं गृह्णाति असौ तु कारणेऽपि न तथेत्येवमुच्यते, सदोद्यतत्वेन वीर्याचारं चावलम्बते। निरालम्बनस्य चाऽऽयतो मोक्षः स एवार्थः प्रयोजनं विद्यते येषामित्यायतार्थिका योगा व्यापारा भवन्ति, सालम्बनस्य हि योगाः केचन तादृशा न भवन्त्यपीति। तथा स्वकेन स्वकीयेन लाभेन सन्तुष्यति, परस्य लाभं नो आस्वादयति न भुंक्ते, नो तर्कयति, नो स्पृहयति, नो प्रार्थयते, नो अभिलषति। तत्र तर्कणं यदीदं मह्यमसौ ददाति तदा शुभमिति विकल्पनं, स्पृहणं तत्श्रद्धालुतयाऽऽत्मन आविष्करणं, प्रार्थनं याचा मह्यमिदं देहीति याचनं, अभिलषणं तल्लालसतया वाञ्छनं। एकार्थिकानि वा एतानि नानादेशोत्पन्नविनेयानुग्रहाय गृहीतानि। परस्य लाभमनास्वादयन्नऽभुञ्जानोऽतर्कयन्नऽस्पृहयन्नऽप्रार्थयमानोऽनभिलषन् 'दोच्चंति' द्वितीयां सुखशय्यामुपसम्पद्य विहरति, एवंविधरूपत्वात् तस्याः। यदुक्तं स्थानाङ्गे—"अहावरा दोच्चा सुहसेज्जा, से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए सएणं लाभेणं संतुस्सइ, परस्स लाभं न आसाएइ" इत्यादि ॥ ३३ ॥ ॥ ३५ ॥ प्रत्याख्यातसम्भोगस्योपधिप्रत्याख्यानमपि स्यादिति तदाह—

मूलम्—उवहिपच्चक्खाणेणं भंते! जीवे किं जणयइ? उवहिपच्चक्खाणेणं अपलिमंथं जणयइ, निरुवहिए णं जीवे निक्कंखे उवहिमंतरेण य न संकिलिस्सइ ॥ ३४ ॥ ३६ ॥

व्याख्या—उपधेरुपकरणस्य रजोहरणमुखवस्त्रिकाव्यतिरिक्तस्य प्रत्याख्यानमुपधिप्रत्याख्यानं तेन परिमन्थः स्वाध्यायादिक्षतिस्तदभावोऽपरिमन्थस्तं जनयति, तथा निरुपधिको निष्कांक्षो वस्त्राद्यभिलाषरहित उपधिमन्तरेण च न संक्लिश्यते, शारीरं मानसं वा संक्लेशं नानुभवति। उक्तं हि—"तस्स णं भिक्खुस्स णो एवं भवइ, परिजुण्णे मे वत्थे सूईं जाइस्सामि, संधिस्सामि" इत्यादि ॥ ३४ ॥ ३६ ॥ उपधिप्रत्याख्यातुर्जिनकल्पिकादेर्योग्याहाराद्यलाभे उपवासा अपि स्युस्ते चाहारप्रत्याख्यानरूपा इति तदाह—

मूलम्—आहारपच्चक्खाणेणं भंते! जीवे किं जणयइ? आहारपच्चक्खाणेणं जीविआसंसप्पओगं वोच्छिंदइ, जीविआसंसप्पओगं वोच्छिंदित्ता जीवे आहारमंतरेण न संकिलिस्सइ ३५॥३७

व्याख्या—आहारप्रत्याख्यानेन जीविते आशंसा अभिलाषो जीविताशंसा तस्याः प्रयोगः करणं जीविताशंसाप्रयोगस्तं व्यवच्छिनत्ति, आहाराधीनत्वाज्जीवितस्याहारप्रत्याख्याने तदाशंसाव्यवच्छेदो भवत्येवेति। तं च व्यवच्छिद्य जीव आहारमन्तरेण न संक्लिश्यते, कोऽर्थः? विकृष्टतपोनुष्ठानेऽपि न बाधामनुभवति ॥ ३५ ॥ ३७ ॥ एतत्प्रत्याख्यानत्रयं कषायाभाव एव सफलमिति तत्प्रत्याख्यानमाह—

मूलम्—कसायपच्चक्खाणेणं भंते! जीवे किं जणयइ? कसायपच्चक्खाणेणं वीयरागभावं जणयइ, वीअरागभावं पडिवण्णे अ णं जीवे समसुहदुक्खे भवइ ॥ ३६ ॥ ३८ ॥

व्याख्या—कषायप्रत्याख्यानेन क्रोधादिनिवारणेन वीतरागभावमुपलक्षणत्वाद्वीतद्वेषभावं च जनयति, तं च प्रतिपन्नो जीवः समे रागद्वेषाभावात्तुल्ये सुखदुःखे यस्य स समसुखदुःखो भवति ॥ ३६ ॥ ३८ ॥ निष्कषायोऽपि योगप्रत्याख्यानादेव मुक्तः स्यादिति तदाह—

मूलम्—जोगपच्चक्खाणेणं भंते! जीवे किं जणयइ? जोगपच्चक्खाणेणं अजोगित्तं जणयइ, अजोगी णं जीवे नवं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ३७ ॥ ३९ ॥

व्याख्या—योगा मनोवाक्कायव्यापारास्तत्प्रत्याख्यानेन तन्निरोधेन अयोगित्वं जनयति, अयोगी च नवं कर्म्म न

बभाति, सकलबन्धहेतूनामुच्छेदात् । पूर्वबद्धं च भवोपग्राहिकर्मचतुष्कमन्यस्य तदाऽसम्भवात् ॥ ३७ ॥ ३९ ॥ योगप्रत्याख्यातुः शरीरप्रत्याख्यानमपि स्यादिति तदाह—

मूलम्—सरीरपच्चक्खाणेणं भंते ! जीवे किं जणयइ ? सरीरपच्चक्खाणेणं सिद्धाइसयगुणत्तं निव्वत्तेइ, सिद्धाइसयगुणसंपन्ने अ णं जीवे लोगग्गमुवगए परमसुही भवइ ॥ ३८ ॥ ४० ॥

व्याख्या—शरीरमौदारिकादि तत्प्रत्याख्यानेन सिद्धानामतिशयगुणाः "न कृष्णो न नीलः" इत्यादयो यस्य स सिद्धातिशयगुणस्तद्भावस्तत्त्वं जनयति, सिद्धातिशयगुणसम्पन्नश्च जीवो लोकाग्रभवत्वाल्लोकाग्रं मुक्तिपदमुपगतः परमसुखी भवति ॥ ३८ ॥ ४० ॥ सम्भोगादिप्रत्याख्यानानि प्रायः सहायप्रत्याख्याने सुकराणीति तदाह—

मूलम्—सहायपच्चक्खाणेणं भंते ! जीवे किं जणयइ ? सहायपच्चक्खाणेणं एगीभावं जणयइ, एगीभावभूए अ जीवे एगग्गं भावेमाणे अप्पझंझे अप्पकसाए अप्पकलहे अप्पतुमंतुमे संजमबहुले संवरबहुले समाहिए आवि भवइ ॥ ३९ ॥ ४१ ॥

व्याख्या—सहायाः साहाय्यकारिणो यतयस्तत्प्रत्याख्यानेन तथाविधयोग्यताभाविनाऽभिग्रहविशेषेण एकीभावमेकत्वं जनयति, एकीभावं एकत्वं भूतः प्राप्तश्च जीव ऐकाग्र्यं एकालम्बनत्वं भावयन्नभ्यस्यन् अल्पझंझोऽवाक्कलहः, अल्पकषायोऽकषायः, 'अप्पतुमंतुमेत्ति' अल्पमविद्यमानं त्वं त्वमिति—स्वल्पापराधवत्यपि त्वमेवेदं कृतवान् त्वमेवेदं करोषीत्यादि पुनः पुनः प्रलपनं यस्य सोऽल्पत्वंत्वः, संयमबहुलः संवरबहुलः प्राग्वत् । अत एव समाहितो ज्ञानादिसमाधिमांश्चापि भवति ॥ ३९ ॥ ४१ ॥ ईदृशश्चान्ते भक्तं प्रत्याख्यातीति तत्प्रत्याख्यानमाह—

मूलम्—भत्तपच्चक्खाणेणं भंते ! जीवे किं जणयइ भत्तपच्चक्खाणेणं अणेगाइं भवसयाइं निरुंभइ ४०

व्याख्या—भक्तप्रत्याख्यानेन भक्तपरिज्ञादिना अनेकानि भवशतानि निरुणद्धि, दृढशुभाध्यवसायेन संसाराल्पत्वापादनात् ॥ ४० ॥ ४२ ॥ साम्प्रतं सर्वप्रत्याख्यानोत्तमं सद्भावप्रत्याख्यानमाह—

मूलम्—सब्भावपच्चक्खाणेणं भंते ! जीवे किं जणयइ ? सब्भावपच्चक्खाणेणं अनिअट्टिं जणयइ, अनिअट्टिं पडिवन्ने अ अणगारे चत्तारि केवलिकम्मंसे खवेइ । तंजहा—वेअणिज्जं, आउअं, नामं, गोत्तं । तओ पच्छा सिज्झइ, बुज्झइ, मुच्चइ, परिनिव्वाइ, सव्वदुःक्खाणमंतं करेइ ॥ ४१ ॥ ४३ ॥

व्याख्या—सद्भावेन सर्वथा पुनःकरणासम्भवात् परमार्थेन प्रत्याख्यानं सद्भावप्रत्याख्यानं सर्वसंवररूपं शैलेशीत्यर्थः तेन—न विद्यते निवृत्तिर्निर्वृत्तिमप्राप्य निवर्त्तनं यस्य सोऽनिवृत्तिः शुक्लध्यानतुर्यभेदस्तं जनयति, तं प्रतिपन्नश्चानगारश्चत्वारि केवलिनः 'कम्मंसेत्ति' सत्कर्माणि केवलिसत्कर्माणि भवोपग्राहीणीत्यर्थः, क्षपयति ॥ ४१ ॥ ॥ ४३ ॥ सद्भावप्रत्याख्यानं च प्रायः प्रतिरूपतायां स्यादिति तामाह—

मूलम्—पडिरूवयाए णं भंते ! जीवे किं जणयइ ? पडिरूवयाए णं लाघविअं जणयइ, लहुब्भुए अ णं जीवे अप्पमत्ते पागडलिंगे पसत्थलिंगे विसुद्धसम्मत्ते सत्तसमिइसम्मत्ते सव्वपाणभूअजीवसत्तेसु वीससणिज्जरूवे अप्पडिलेहे जिइंदिए विउलतवसमिइसमन्नागए आवि भवइ ॥ ४२ ॥ ४४ ॥

व्याख्या—प्रतिः सादृश्ये, ततः प्रतीति—स्थविरकल्पिकादिसदृशं रूपं वेषो यस्य स प्रतिरूपस्तस्य भावः प्रतिरूपता तयाऽधिकोपकरणत्यागरूपया लाघवमस्यास्तीति लाघविकस्तद्भावो लाघविकता तां, द्रव्यतः स्वल्पोपकरणत्वेन भावतस्त्वप्रतिबद्धतया जनयति । लघुभूतश्च जीवोऽप्रमत्तस्तथा प्रकटलिङ्गः स्थविरकल्पिकादिरूपेण विज्ञायमानत्वात्, प्रशस्तलिङ्गो जीवरक्षाहेतुरजोहरणादिधारकत्वात्, विशुद्धसम्यक्त्वः क्रियया सम्यक्त्वविशोधनात्, 'सत्तसमिइसम्मत्तेत्ति' सत्यं च समितयश्च समासाः परिपूर्णा यस्य स समाससत्यसमितिः, सूत्रे क्तान्तस्यान्ते निपातः प्राकृतत्वात् । अत एव सर्वप्राण-भूत-जीव-सत्त्वेषु विश्वसनीयरूपस्तत्पीडापरिहारित्वात्, अल्पप्रत्युपेक्षोऽल्पोपधित्वात्, जितेन्द्रियो विपुलेनानेकभेदतया विस्तीर्णेन तपसा समितिभिश्च सर्वविषयव्यापितया विपुलाभिरेव सम-

न्वागतो युक्तो विपुलतपस्समितिसमन्वागतश्चापि भवति । पूर्वत्र समितीनां पूर्णत्वाभिधानेन सामस्त्यमुक्तमिह तु सर्वविषयव्यापित्वमिति न पौनरुक्त्यम् ॥ ४२ ॥ ४४ ॥ प्रतिरूपतायां वैयावृत्त्यादेवेष्टसिद्धिरिति तदाह—

मूलम्—वेआवच्चेणं भंते ! जीवे किं जणयइ ? वेयावच्चेणं तित्थयरनामगोअं कम्मं निबंधइ ॥ ४३ ॥ ४५ ॥

व्याख्या—स्पष्टम् ॥ ४३ ॥ ४५ ॥ वैयावृत्त्येनार्हन्त्यप्राप्तिरुक्ता अर्हंश्च सर्वगुणसम्पन्नः स्यादिति तत्तामाह—

मूलम्—सव्वगुणसंपन्नयाए णं भंते ! जीवे किं जणयइ ? सव्वगुणसंपन्नयाए णं अपुणरावत्तिं जणयइ, अपुणरावत्तिपत्तए अ णं जीवे सारीरमाणसाणं दुक्खाणं नो भागी भवइ ॥ ४४ ॥ ४६ ॥

व्याख्या—सर्वे गुणा ज्ञानादयस्तैः सम्पन्नः सर्वगुणसम्पन्नस्तद्भावः सर्वगुणसम्पन्नता तया अपुनरावृत्तिं मुक्तिं जनयति, तां च प्राप्त एव प्राप्तको जीवः शारीरमानसानां दुःखानां नो भागी भवति, तत्कारणवपुर्मनसोरभावात् ॥ ४४ ॥ ४६ ॥ सर्वगुणवत्ता च वीतरागतायां स्यादिति तामाह—

मूलम्—वीअरागयाए णं भंते ! जीवे किं जणयइ ? वीअरागयाए णं णेहाणुबंधणाणि तण्हाणुबंधणाणि अ वोच्छिंदइ मणुण्णामणुण्णेसु सद्द–फरिस–रूव–रस–गंधेसु विरज्जइ ॥४५॥४७॥

व्याख्या—वीतरागतया रागद्वेषापगमरूपतया स्नेहः पुत्रादिविषयस्तद्रूपाण्यनुबन्धनानि अनुकूलबन्धनानि स्नेहानुबन्धनानि, तृष्णालोभस्तद्रूपाण्यनुबन्धनानि तृष्णानुबन्धनानि च व्यवच्छिनत्ति । ततश्च मनोज्ञामनोज्ञेषु शब्दादिषु विरज्यते, कषायप्रत्याख्यानेनैव गतत्वेऽपि वीतरागतायाः पृथगुपादानं रागस्यैव सकलानर्थमूलत्वख्यापनार्थम् ॥ ४५ ॥ ४७ ॥ वीतरागत्वस्य च क्षान्तिर्मूलमिति तामाह—

मूलम्—खंतीए णं भंते ! जीवे किं जणयइ ? खंतीए णं परीसहे जिणइ ॥ ४६ ॥ ४८ ॥

व्याख्या—क्षान्तिः क्रोधजयस्तया परीषहानर्थाद्वधादीन् जयति॥४६॥४८॥क्षान्तिश्च मुक्त्या दृढा स्यादिति तामाह—

मूलम्—मुत्तीए णं भंते ! जीवे किं जणयइ ? मुत्तीए णं अकिंचणं जणयइ, अकिंचणे अ जीवे अत्थलोलाणं पुरिसाणं अपत्थणिज्जे हवइ ॥ ४७ ॥ ४९ ॥

व्याख्या—मुक्त्या निर्लोभतया 'अकिंचणंति' आकिञ्चन्यं निःपरिग्रहत्वं जनयति, अकिञ्चनश्च जीवोऽर्थलोलानां पुरुषाणां चौरादीनामप्रार्थनीयः पीडयितुमनभिलषणीयो भवति ॥ ४७ ॥ ४९ ॥ लोभाभावे च मायाकरणकारणाभावात्तदभावोऽपि स्यादित्यार्जवमाह—

मूलम्—अज्जवयाए णं भंते ! जीवे किं जणयइ ? अज्जवयाए णं काउज्जुअयं भावुज्जुअयं भासुज्जुअयं अविसंवायणं जणयइ, अविसंवायणसंपन्नयाए अ णं जीवे धम्मस्स आराहए भवइ ॥ ४८ ॥ ५० ॥

व्याख्या—'अज्जवयाएत्ति' आर्जवेन मायाभावेन कायर्जुकतां कुब्जादिवेषभ्रूविकाराद्यकरणाद्वपुःप्राञ्जलतां, भावर्जुकतां यदन्यच्चिचिन्तयन् लोकभक्त्यादिनिमित्तमन्यद्भाषते करोति वा तत्परिहाररूपां, भाषर्जुकतां यदुपहासादिहेतोरन्यदेशभाषया भाषणं तत्परित्यागात्मिकां, तथा अविसंवादनं पराविप्रतारणं जनयति । अविसंवादनसम्पन्नतया उपलक्षणत्वात्कायर्जुकतादिसम्पन्नतया च जीवो धर्मस्याराधको भवति, भवान्तरेऽपि तदवाप्तेः ॥ ४९ ॥ ॥ ५० ॥ ईदृशगुणस्यापि विनयादेवेष्टसिद्धिः, स च मार्दवादेवेति तदाह—

मूलम्—मद्दवयाए णं भंते! जीवे किं जणयइ ? मद्दवयाए णं मिउमद्दवसंपन्ने अट्ठमयट्ठाणाइं निट्ठवेइ ॥ ४९ ॥ ५१ ॥

व्याख्या—मार्दवेन गम्यमानत्वादभ्यस्यमानेन मृदुर्द्रव्यतो भावतश्चावनमनशीलस्तस्य यन्मार्दवं सदा सौकुमार्यं तेन सम्पन्नो मृदुमार्दवसम्पन्नोऽष्टमदस्थानानि क्षपयति ॥ ४९ ॥ ५१ ॥ मार्दवं च तत्त्वतः सत्यस्थितस्यैव स्यात् तत्रापि भावसत्यं प्रधानमिति तदाह—

मूलम्—भावसच्चेणं भंते ! जीवे किं जणयइ ? भावसच्चेणं भावविसोहिं जणयइ, भावविसोहिए अ वट्टमाणे जीवे अरहंतपण्णत्तस्स धम्मस्स आराहणयाए अब्भुट्ठेइ, अरहंतपण्णत्तस्स धम्मस्स आराहणयाए अब्भुट्ठित्ता परलोअधम्मस्स आराहए भवइ ॥ ५० ॥ ५२ ॥

व्याख्या—भावसत्येन शुद्धान्तरात्मतारूपेण पारमार्थिकावितथत्वेनेत्यर्थः, भावविशुद्धिं अध्यवसायविशुद्धतां जनयति । भावविशुद्धौ च वर्त्तमानोऽर्हत्प्रज्ञप्तस्य धर्मस्याराधनायै आवर्जनाय अभ्युत्तिष्ठते उत्सहते, तस्यै चाभ्युत्थाय परलोके भवान्तरे धर्मः परलोकधर्म्मस्तस्याराधको भवति, प्रेत्य जिनधर्मावाप्त्या विशिष्टभवान्तरप्राप्त्या चेति भावः ॥ ५० ॥ ५२ ॥ भावसत्ये च सति करणसत्यं स्यादिति तदाह—

मूलम्—करणसच्चेणं भंते ! जीवे किं जणयइ ? करणसच्चेणं करणसत्तिं जणयइ, करणसच्चे अ वट्टमाणे जीवे जहावाई तहाकारी आवि भवइ ॥ ५१ ॥ ५३ ॥

व्याख्या—करणे सत्यं करणसत्यं यत्प्रतिलेखनादिक्रियामुपयुक्तः कुरुते तेन करणशक्तिं अपूर्वापूर्वशुभक्रियां करणसामर्थ्यरूपां जनयति, करणसत्ये च वर्तमानो यथावादी तथाकारी चापि भवति, स हि सूत्रं पठन् यथा क्रियाकलापवदनशीलः स्यात्तथैव करणशीलोपीति ॥ ५१ ॥ ५३ ॥ तस्य च मुनेर्योगसत्यमपि स्यादिति तदाह—

मूलम्—जोगसच्चेणं भंते ! जीवे किं जणयइ ? जोगसच्चेणं जोगे विसोहेइ ॥ ५२ ॥ ५४ ॥

व्याख्या—योगसत्येन मनोवाक्कायसत्येन योगान् विशोधयति, क्लिष्टकर्मबन्धाभावान्निर्दोषान् करोति ॥ ५२ ॥ ॥ ५४ ॥ योगसत्यं च गुप्तिमतः स्यादिति ता आह—

मूलम्—मणगुत्तयाए णं भंते ! जीवे किं जणयइ ? मणगुत्तयाए णं जीवे एगग्गं जणयइ, एगग्गचित्ते णं जीवे मणगुत्ते संजमाराहए भवइ ॥ ५३ ॥ ५५ ॥

व्याख्या—मनोगुप्ततया मनोगुप्तिरूपया ऐकाग्र्यं प्रस्तावाद्धर्मैकतानचित्तत्वं जनयति, तथा चैकाग्रचित्तो जीवो मनो गुप्तमशुभाध्यवसायेषु गच्छद्रक्षितं येनासौ मनोगुप्तः, क्तान्तस्य परनिपातः सूत्रत्वात्, संयमाराधको भवति ॥ ५३ ॥ ५५ ॥

मूलम्—वइगुत्तयाए णं भंते ! जीवे किं जणयइ ? वइगुत्तयाए णं निव्विआरत्तं जणयइ, निव्विकारे णं जीवे वइगुत्ते अज्झप्पजोगसाहणजुत्ते आवि भवइ ॥ ५४ ॥ ५६ ॥

व्याख्या—वाग्गुप्ततया कुशलवागुदीरणरूपया निर्विकारत्वं विकथाद्यात्मकवाग्विकाराभावं जनयति, ततश्च निर्विकारो जीवो वाग्गुप्तः सर्वथा वाग्निरोधलक्षणवाग्गुप्तिमान् अध्यात्मं मनस्तस्य योगा व्यापारा धर्मध्यानादयस्तेषां साधनानि एकाग्रतादीनि तैर्युक्तोऽध्यात्मयोगसाधनयुक्तश्चापि भवति, विशिष्टवाग्गुप्तिरहितो हि न चित्तैकाग्रतादिमाग् भवति ॥ ५४ ॥ ५६ ॥

मूलम्—कायगुत्तयाए णं भंते ! जीवे किं जणयइ ? कायगुत्तयाए णं संवरं जणयइ, संवरेणं कायगुत्ते पुणो पावासवनिरोहं करेइ ॥ ५५ ॥ ५७ ॥

व्याख्या—कायगुप्ततया शुभयोगप्रवृत्त्यात्मककायगुप्तिरूपया संवरमशुभयोगनिरोधरूपं जनयति, संवरेण गम्यत्वादभ्यस्यमानेन कायगुप्तः पुनः सर्वथा निरुद्धकायिकव्यापारः पापाश्रवः पापकर्मोपादानं तन्निरोधं करोति ॥ ५५ ॥ ॥ ५७ ॥ गुप्तिभिश्च यथाक्रमं मनःसमाधारणादिसम्भव इति ता आह—

मूलम्—मणसमाहारणयाए णं भंते ! जीवे किं जणयइ ? मणसमाहारणयाए णं एगग्गं जणयइ, एगग्गं जणइत्ता नाणपज्जवे जणयइ, नाणपज्जवे जणइत्ता सम्मत्तं विसोहेइ, मिच्छत्तं विनिज्जरेइ ॥ ५६ ॥ ५८ ॥

व्याख्या—मनसः समिति सम्यक् आङिति आगमोक्तभावाभिव्याप्त्या या धारणा व्यवस्थापना सा मनःसमा-

धारणा तया ऐकाग्र्यं जनयति, ऐकाग्र्यं जनयित्वा ज्ञानपर्यवान् विशिष्टविशिष्टतरश्रुततत्त्वावबोधरूपान् जनयति, तांश्च जनयित्वा सम्यक्त्वं विशोधयति, तत्त्वज्ञानस्य शुद्धत्वे तत्त्वविषयश्रद्धाया अपि शुद्धत्वभवनात्, अत एव मिथ्यात्वं निर्जरयति ॥ ५६ ॥ ५८ ॥

मूलम्—वइसमाहारणयाए णं भंते ! जीवे किं जणयइ ? वइसमाहारणयाए णं वइसाहारणदंसणपज्जवे विसोहेइ, वइसाहारणदंसणपज्जवे विसोहित्ता सुलहबोहित्तं निव्वत्तेइ, दुल्लहबोहित्तं निज्जरेइ ॥ ५७ ॥ ५९ ॥

व्याख्या—वाक्समाधारणया स्वाध्याय एव वाग्विनिवेशात्मिकया वाचां साधारणा वाक्साधारणा वाग्विषयाः प्रज्ञापनीया इत्यर्थः, ते चेह पदार्था एव, तद्विषयाश्च दर्शनपर्यवा अप्युपचारात्तथोक्ताः, ततश्च वाक्साधारणाश्च ते दर्शनपर्यवाश्च वाक्साधारणदर्शनपर्यवाः, प्रज्ञापनीयपदार्थविषयसम्यक्त्वविशेषा इत्यर्थः, तान् विशोधयति । द्रव्यानुयोगाभ्यासात्तद्विषयशङ्कादिमालिन्यापनयनेन विशुद्धान् करोति, शेषं स्पष्टम् ॥ ५७ ॥ ५९ ॥

मूलम्—कायसमाहारणयाए णं भंते ! जीवे किं जणयइ ? कायसमाधारणयाए णं चरित्तपज्जवे विसोहेइ, चरित्तपज्जवे विसोहित्ता अहक्खायचरित्तं विसोहेइ, अहक्खायचरित्तं विसोहित्ता चत्तारिकेवलीकम्मंसे खवेइ, तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंतं करेइ ॥ ५८ ॥ ६० ॥

व्याख्या—कायसमाधारणया संयमयोगेषु शरीरस्य सम्यग्व्यापारणरूपया चरित्रपर्यवान् चरित्रभेदान् क्षायोपशमिकानिति गम्यते विशोधयति, तांश्च विशोध्य यथाख्यातचारित्रं विशोधयति, सर्वथा ह्यसत उत्पत्त्यसम्भव इति पूर्वमपि कथञ्चित्सदेव तच्चारित्रमोहोदयमलिनं तन्निर्जरणेन निर्मलीकुरुते, शेषं प्राग्वत् ॥ ५८ ॥ ६० ॥ इत्थं समाधारणात्रयात् ज्ञानादित्रयस्य विशुद्धिरुक्ता, अथ तस्यैव फलमाह—

मूलम्—नाणसंपन्नयाए णं भंते ! जीवे किं जणयइ ? नाणसंपन्नयाए णं सव्वभावाहिगमं जणयइ, नाणसंपन्ने अ णं जीवे चाउरंते संसारकंतारे न विणस्सइ, जहा सूई ससुत्ता पडिआवि न विणस्सइ तहा जीवे ससुत्ते संसारे न विणस्सइ, नाणविणयतवचरित्तजोगे संपाउणइ, ससमयपरसमयसंघायणिज्जे भवइ ॥ ५९ ॥ ६१ ॥

व्याख्या—ज्ञानमिह श्रुतज्ञानं तत्सम्पन्नतया सर्वभावाभिगमं सर्वपदार्थावबोधं जनयति, ज्ञानसम्पन्नश्च जीवश्चतुरन्ते संसारकान्तारे न विनश्यति न मुक्तिमार्गाद्विशेषेण दूरीभवति, अमुमेवार्थं दृष्टान्तद्वारा स्पष्टतरमाह—यथा सूची ससूत्रा दवरकयुक्ता पतितापि कचवरादौ न विनश्यति न दूरीभवति, तथा जीवः सह सूत्रेण श्रुतेन वर्त्तते यः स ससूत्रः संसारे न विनश्यति । अत एव ज्ञानं चावध्यादि विनयश्च तपश्च चारित्रयोगाश्च चारित्रव्यापाराः ज्ञानविनयतपश्चारित्रयोगास्तान् सम्प्राप्नोति, तथा स्वसमयपरसमययोः सङ्घातनीयः प्रधानपुरुषतया मीलनीयः स्वसमयपरसमयसङ्घातनीयो भवति, स्वसमयपरसमयशब्दाभ्यां चेह तद्वेदिनो ग्राह्यास्तेष्वेव मीलनसम्भवात् ॥ ५९ ॥ ६१ ॥

मूलम्—दंसणसंपन्नयाए णं भंते ! जीवे किं जणयइ ? दंसणसंपन्नयाए णं भवमिच्छत्तच्छेअणं करेइ, परं न विज्झाइ, अणुत्तरेणं णाणेणं दंसणेणं अप्पाणं संजोएमाणे सम्मं भावेमाणे विहरइ ॥ ६० ॥ ६२ ॥

व्याख्या—दर्शनसम्पन्नतया क्षायोपशमिकसम्यक्त्वयुक्ततया भवहेतुभूतं मिथ्यात्वं भवमिथ्यात्वं तस्य च्छेदनं क्षपणं भवमिथ्यात्वच्छेदनं करोति, कोऽर्थः ? क्षायिकसम्यक्त्वमवाप्नोति । ततश्च परमित्युत्तरकालं उत्कृष्टतस्तस्मिन्नेव भवे मध्यमजघन्यापेक्षया तु तृतीये तुर्ये वा जन्मनि केवलज्ञानावाप्तौ न विध्यायति ज्ञानदर्शनप्रकाशाभावरूपं विध्यानं न प्राप्नोति, किन्त्वनुत्तरेण क्षायिकत्वात्सर्वोत्तमेन ज्ञानदर्शनेन प्रतिसमयमपरापरोपयोगरूपतयोत्पद्यमानेन

आत्मानं संयोजयन् संघट्टयन्, संयोजनं च भेदेपि स्यादित्याह—सम्यग्भावयंस्तेनात्मानं तन्मयतां नयन् विहरति भवस्थकेवलितया ॥ ६० ॥ ६२ ॥

मूलम्—चरित्तसंपन्नयाए णं भंते ! जीवे किं जणयइ ? चरित्तसंपन्नयाए णं सेलेसीभावं जणयइ, सेलेसीपडिवन्ने अ अणगारे चत्तारि केवलिकम्मंसे खवेइ, तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंतं करेइ ॥ ६१ ॥ ६३ ॥

व्याख्या—चरित्रसम्पन्नतया शैलानामीशः शैलेशो मेरुः, स इव निरुद्धयोगत्वादत्यन्तस्थैर्येण मुनिरपि शैलेशः, तस्येयमवस्था शैलेशी, तस्या भवनं शैलेशीभावस्तं वक्ष्यमाणस्वरूपं जनयति, शेषं स्पष्टम् ॥ ६१ ॥ ६३ ॥ चारित्रं चेन्द्रियनिग्रहादेव स्यादिति प्रत्येकं तमाह—

मूलम्—सोइंदिय निग्गहेणं भंते ! जीवे किं जणयइ ? सोइंदिअनिग्गहेणं मणुण्णामणुण्णेसु सद्देसु रागद्दोसनिग्गहं जणयइ, तप्पच्चइअं च नवं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ६२ ॥ ६४ ॥

व्याख्या—श्रोत्रेन्द्रियस्य निग्रहो विषयाभिमुखमनुधावतो नियमनं श्रोत्रेन्द्रियनिग्रहस्तेन मनोज्ञामनोज्ञेषु शब्देषु यथाक्रमं रागद्वेषनिग्रहं जनयति, तथा च तत्प्रत्ययिकमित्यादिकं व्यक्तम् ॥ ६२ ॥ ६४ ॥

मूलम्—चक्खिदिअनिग्गहेणं भंते ! जीवे किं जणयइ ? चक्खिदियनिग्गहेणं मणुण्णामणुण्णेसु रूवेसु रागद्दोसनिग्गहं जणयइ, तप्पच्चइअं नवं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥६३॥ ॥ ६५ ॥ घाणिंदिएणं एवं चेव ॥ ६४ ॥ ६६ ॥ जिब्भिंदिएवि ॥ ६५ ॥ ६७ ॥ फासिंदिएवि ॥ ६६ ॥ ६८ ॥ नवरं गंधेसु रसेसु फासेसु वत्तव्वं ॥

व्याख्या—[ सूत्रचतुष्टयं प्राग्वत् व्याख्येयम् ] ॥ ६३ ॥ ६५ ॥ ६४ ॥ ६६ ॥ ६५ ॥ ६७ ॥ ६६ ॥ ६८ ॥ एतन्निग्रहोपि कषायविजयेनेति तमाह—

मूलम्—कोहविजएणं भंते ! जीवे किं जणयइ ? कोहविजएणं खंतिं जणयइ, कोहवेअणिज्जं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ ॥ ६७ ॥ ६९ ॥

व्याख्या—क्रोधस्य विजयो दुरन्तत्वादिचिन्तनेन उदयनिरोधस्तेन 'कोहवेअणिज्जंति' क्रोधेन क्रोधाध्यवसायेन वेद्यते इति क्रोधवेदनीयं क्रोधहेतुभूतपुद्गलरूपं कर्म न बध्नाति "जं वेअइ तं बंधइ" इति वचनात् । पूर्वबद्धं च तदेव निर्जरयति ॥ ६७ ॥ ६९ ॥

मूलम्—एवं माणेणं ६८ ॥ ७० ॥ मायाए ६९ ॥ ७१ ॥ लोहेणं ७० ॥ ७२ ॥ नवरं मद्दवं उज्जुभावं संतोसं च जणयइत्ति वत्तव्वं ॥

व्याख्या—[ सूत्रत्रयं प्राग्वत् ] ६८ ॥ ७० ॥ ६९ ॥ ७१ ॥ ७० ॥ ७२ ॥ एतज्जयश्च न प्रेमद्वेषमिथ्यादर्शनविजयं विनेति तमाह—

मूलम्—पेज्जदोसमिच्छादंसणविजएणं भंते ! जीवे किं जणयइ ? पेज्जदोसमिच्छादंसणविजएण नाण-दंसणचरित्ताराहणयाए अब्भुट्ठेइ, अट्ठविहस्स कम्मगंठिविमोअणयाए, तप्पढमयाए जहाणुपुव्वीए अट्ठावीसइविहं मोहणिज्जं कम्मं उग्घाएइ, पंचविहं नाणावरणिज्जं नवविहं दंसणावरणिज्जं पंचविहं अंतराइअं एए तिण्णिवि कम्मंसे जुगवं खवेइ, तओ पच्छा अणुत्तरं अणंतं कसिणं पडिपुण्णं निरावरणं वितिमिरं विसुद्धं लोगालोगप्पभावगं केवलवरनाणदंसणं समुप्पाडेइ, जाव सजोगी भवइ ताव य इरिआवहिअं कम्मं बंधइ, सुहफरिसं दुसमयट्ठितिअं, तं पढमसमए बद्धं बिइअसमए वेइअं तइअसमए निज्जिण्णं तं बद्धं पुट्ठं उईरिअं वेइअं निज्जिण्णं सेअकाले अकम्मं चावि भवइ ॥ ७१ ॥ ७३ ॥

व्याख्या—प्रेम च रागरूपं द्वेषश्चाप्रीतिरूपो मिथ्यादर्शनं च मिथ्यात्वं प्रेमद्वेषमिथ्यादर्शनानि, तद्विजयेन ज्ञानदर्शनचारित्राराधनायामभ्युत्तिष्ठते उद्यच्छते, प्रेमादिनिमित्तत्वात्तद्विराधनायास्ततश्चाष्टविधस्य कर्मणो मध्ये इति शेषः यः कर्मग्रन्थिरतिदुर्भेदत्वात् घातिकर्मरूपस्तस्य विमोचना क्षपणा कर्मग्रन्थिविमोचना तस्यै, चस्य गम्यत्वात्तदर्थं चाभ्युत्तिष्ठते। अभ्युत्थाय च किं करोतीत्याह—तत्प्रथमतया तत्पूर्वतया न हि पुरा तत्क्षपितमासीदिति, यथानुपूर्वि आनुपूर्व्या अनतिक्रमेण अष्टाविंशतिविधं मोहनीयं कर्म उद्घातयति क्षपयति, तत्क्षपणाक्रमश्चायम्—पूर्वमनन्तानुबन्धिनः क्रोधादीन् युगपत् क्षपयति, तदनु क्रमान्मिथ्यात्वं मिश्रं सम्यक्त्वदलिकं च, तदनु प्रत्याख्यानाप्रत्याख्यानकषायाष्टकं क्षपयितुमारभते, तस्मिंश्चार्द्धक्षपिते नरकगत्यानुपूर्वी २ तिर्यग्गत्यानुपूर्वी ४ एकेन्द्रियादिजातिनामचतुष्का ८ ऽऽतपो ९ द्योत १० स्थावर ११ सूक्ष्म १२ साधारण १३ निद्रानिद्रा १४ प्रचलाप्रचला १५ स्त्यानर्द्धि १६ लक्षणाः षोडश प्रकृतीः क्षपयति, ततः कषायाष्टकावशिष्टं क्षपयित्वा क्रमात् नपुंसकवेदं स्त्रीवेदं हास्यादिषट्कं पुरुषवेदं च क्षपयति, यदि पुरुषः प्रतिपत्ता, अथ स्त्री पण्ढो वा तदा स्वस्ववेदं प्रान्ते क्षपयति। तदनु क्रमात् संज्वलनक्रोधमानमायालोभान्, क्षपणाकालश्च प्रत्येकं सर्वेषां वा अन्तर्मुहूर्त्तमेव। इत्थं चैतदन्तर्मुहूर्त्तस्यासंख्यभेदत्वात्। इत्थं मोहनीयं क्षपयित्वान्तर्मुहूर्त्तं यथाख्यातचारित्रं प्राप्तः क्षीणमोहद्विचरमसमययोः प्रथमसमये निद्राप्रचले क्षपयित्वा चरमसमये यत्क्षपयति तत्सूत्रकृदेवाह—पंचेत्यादि—पञ्चविधं ज्ञानावरणीयं, नवविधं दर्शनावरणीयं, पञ्चविधमन्तरायं 'एएत्ति' एतानि त्रीण्यपि 'कम्मंसेत्ति' सत्कर्माणि युगपत्क्षपयति, तत इति क्षपणातः पश्चात् न विद्यते उत्तरं प्रधानं ज्ञानमस्मादित्यनुत्तरं, अनन्तं अविनाशित्वात्, कृत्स्नं कृत्स्नार्थग्राहकत्वात्, प्रतिपूर्णं सकलस्वपरपर्यायप्रतिपूर्णं वस्तु प्रकाशकत्वात्, निरावरणमशेषावरणविगमात्, वितिमिरं तस्मिन् सति क्वचिदप्यज्ञानतिमिराभावात्, विशुद्धं सर्वदोषाभावात्, लोकालोकप्रभावकं तत्स्वरूपप्रकाशकत्वात्, केवलवरज्ञानदर्शनं समुत्पादयति। स च यावत्सयोगी मनोवाक्कायव्यापारवान् भवति तावत् 'इरिआवहिअंति' ईर्या गतिस्तस्याः पन्थाः ईर्यापथस्तस्मिन् भवमैर्यापथिकं, उपलक्षणं च पथिग्रहणं, तिष्ठतोऽपि सयोगस्येर्यासम्भवात्, कर्म बध्नाति। तत्कीदृशमित्याह—सुखयतीति सुखः स्पर्श आत्मप्रदेशैः सह संश्लेषो यस्य तत् सुखस्पर्शं, द्विसमयस्थितिकं, तदधिकस्थितेः कषायप्रत्ययत्वात्। यदुक्तं—"जोगा पयडिपएसं, ठिइ अणुभागं कसायओ कुणइत्ति"। तत्प्रथमसमये बद्धं द्वितीयसमये वेदितं तृतीयसमये निर्जीर्णं परिशटितं ततश्च तद्बद्धं जीवप्रदेशैः श्लिष्टमाकाशेन घटवत्, तथा स्पृष्टं मसृणमणिकुड्यापतितशुष्कस्थूलचूर्णवत्। अनेन विशेषणद्वयेन तस्य निधत्तनिकाचितावस्थयोरभावमाह। उदीरितमुदयप्राप्तं उदीरणायास्तत्रासम्भवात्, वेदितं तत्फलसुखानुभवनेन निर्जीर्णं क्षयमुपगतं, 'सेअकालेत्ति' सूत्रत्वादेष्यत्काले चतुर्थसमयादावकर्म चापि भवति, तज्जीवापेक्षया पुनस्तस्य तथाविधपरिणामासम्भवात्, एतच्च एवंविधविशेषणान्वितं सातकर्मासौ बध्नाति, तस्य तदन्यबन्धासम्भवात् ७१ ॥ ७३ ॥ स चायुषः प्रान्ते शैलेशीं गत्वाऽकर्मा स्यादिति शैलेश्यकर्मताद्वारे अर्थतो व्याख्यातुमाह—

मूलम्—अहाउअं पालइत्ता अंतोमुहुत्तावसेसाउए जोगनिरोहं करेमाणे सुहुमकिरिअं अप्पडिवाइ सुक्कज्झाणं झिआयमाणे तप्पढमयाए मणजोगं निरुंभइ निरुंभइत्ता वइजोगं निरुंभइ निरुंभइत्ता आणापाणनिरोहं करेइ करित्ता ईसिं पंचहस्सक्खरुच्चारद्धाए अ णं अणगारे समुच्छिन्नकिरिअं अनिअट्टि सुक्कज्झाणं झियायमाणे वेअणिज्जं आउअं नामं गोत्तं च एए चत्तारिवि कम्मंसे जुगवं खवेइ ॥७२॥७४॥ तओ ओरालिअकम्माइं च सव्वाहिं विप्पजहणाहिं विप्पजहित्ता उज्जुसेढिपत्ते अफुसमाणगई उड्ढं एगसमएणं अविग्गहेणं तत्थ गंता सागारोवउत्ते सिज्झइ जाव अंतं करेइ ॥ ७३ ॥ ७५ ॥

व्याख्या—अथेति केवलित्वानन्तरं आयुष्कं जीवितमन्तर्मुहूर्त्तादिकं देशोनपूर्वकोटीपर्यन्तं पालयित्वा अन्तर्मुहूर्त्तावशेषायुष्को योगनिरोधं 'करेमाणेत्ति' करिष्यमाणः सूक्ष्मा क्रिया यत्र तत्सूक्ष्मक्रियं अप्रतिपाति शुक्लध्यानतृतीयभेदं ध्यायंस्तत्प्रथमतया मनोयोगं मनोद्रव्यसाचिव्यजनितं जीवव्यापारं निरुणद्धि, तं निरुध्य वाग्योगं भाषा-

द्रव्यसांनिध्यनिर्मितं जीवव्यापारं निरुणद्धि, तं च निरुध्य 'आणापाणनिरोहंति' आनापानौ उच्छ्वासनिःश्वासौ तन्निरोधं करोति, सकलकाययोगनिरोधोपलक्षणं चैतत्, योगत्रयनिरोधं चैवं प्रत्येकमसंख्येयसमयैः कृत्वा ईषदिति स्वल्पप्रयत्नेन पञ्चानां ह्रस्वाक्षराणां अ–इ–उ–ऋ–लृ–इत्येवंरूपाणां उच्चारो भणनं तस्याद्धा कालो यावता ते उच्चार्यन्ते सा ईषत्पञ्चह्रस्वाक्षरोच्चारणाद्धा तस्यां च णं प्राग्वत् । अनगारः समुच्छिन्नक्रियं अनिवृत्ति शुक्लध्यानतुर्यभेदं ध्यायन् शैलेश्यवस्थामनुभवन्निति भावः। ह्रस्वाक्षरोच्चारणं च न विलम्बितं द्रुतं वा किन्तु मध्यमप्रतिपत्त्यैवात्र गृह्यते । तादृशश्च सन् किं करोतीत्याह–वेदनीयमायुर्नाम गोत्रं चैतानि चत्वार्यपि 'कम्मंसेत्ति' सत्कर्माणि युगपत्क्षपयति ।' ततो वेदनीयादिक्षपणानन्तरं 'ओरालिअकम्माइं चत्ति' औदारिककार्मणे शरीरे चशब्दात्तैजसं च सर्वाभिः 'विप्पजहणाहिंति' विशेषेण प्रकर्षतो हानयस्त्यजनानि विप्रहाणयस्ताभिः सर्वथा शाटेनेति भावः, बहुवचनं चात्र व्यक्त्यपेक्षं, विप्रहाय परिशाट्य ऋजुरवक्रा श्रेणिराकाशप्रदेशपङ्क्तिस्तां प्राप्तः ऋजुश्रेणिप्राप्तः, अस्पृशद्गतिरिति कोऽर्थः ? स्वावगाहातिरिक्तनभःप्रदेशानस्पृशन् यावत्सु तेषु जीवोऽवगाढस्तावत एव समश्रेण्या स्पृशन्नित्यर्थः, ऊर्द्ध्वमुपरि एकसमयेन द्वितीयादिसमयास्पर्शेन अविग्रहेण वक्रगतिलक्षणविग्रहाभावेन, अन्वयव्यतिरेकाभ्यामुक्तोर्थः स्पष्टतरो भवतीति ऋजुश्रेणिप्राप्त इत्यनेन गतार्थत्वेऽपि पुनरस्याभिधानं, तत्रेति विवक्षिते मुक्तिपदे गत्वा साकारोपयुक्तो ज्ञानोपयोगवान् सिध्यतीत्यादि प्राग्वत् इति त्रिसप्ततिसूत्रार्थः ॥ ७२ ॥ ७४ ॥ ७३ ॥ ७५ ॥ उपसंहर्तुमाह—

मूलम्—एस खलु सम्मत्तपरक्कमस्स अज्झयणस्स अट्ठे समणेणं भगवया महावीरेणं आघविए पण्णविए परूविए निदंसिए उवदंसिएत्ति बेमि ॥ ७६ ॥

व्याख्या—एषोऽनन्तरोक्तः खलु निश्चये सम्यक्त्वपराक्रमस्याध्ययनस्यार्थः श्रमणेन भगवता महावीरेण 'आघविएत्ति' आर्षत्वादाख्यातः सामान्यविशेषैः पर्यायाभिव्याख्या कथनेन, प्रज्ञापितो हेतुफलादिप्रज्ञापनेन, प्ररूपितः स्वरूपनिरूपणेन, निदर्शितो दृष्टान्तोपदर्शनेन, उपदर्शित उपसंहारद्वारेणेति ब्रवीमि इति प्राग्वत् ॥ ७६ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ एकोनत्रिंशमध्ययनं सम्पूर्णम् ॥ २९ ॥

## ॥ अथ त्रिंशत्तममध्ययनम् ॥

॥ॐ॥ उक्तमेकोनत्रिंशमथ त्रिंशत्तमं तपोमार्गगतिनामाध्ययनमारभ्यते, तत्र तप एव मार्गो भावमार्गस्तत्फलभूता च गतिः सिद्धिगतिरूपा वाच्याऽस्मिन्निति तपोमार्गगतिः इत्यस्य नामार्थः । सम्बन्धश्चायमनन्तराध्ययने अकर्मता प्रोक्ता सा च तपसः साध्येति तत्स्वरूपमत्रोच्यते, इतिसम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—जहा उ पावगं कम्मं, रागदोससमज्जियं । खवेइ तवसा भिक्खू, तमेगग्गमणो सुण ॥ १ ॥

व्याख्या—यथा येन प्रकारेण तुः पूर्त्तौ पापकं कर्म ज्ञानावरणादि रागद्वेषसमर्जितं क्षपयति तपसा भिक्षुस्तत्तपः एकाग्रमनाः शृणु शिष्येति सूत्रार्थः ॥ १ ॥ इह चानाश्रवेणैव जीवेन कर्म क्षप्यते ततो यथायमनाश्रवः स्यात्तथाह—

मूलम्—पाणिवहमुसावाए, अदत्तमेहुणपरिग्गहा विरओ । राईभोअणविरओ, जीवो होइ अणासवो ॥ २ ॥ पंचसमिओ तिगुत्तो, अकसाओ जिइंदिओ । अगारवो अ निस्सल्लो, जीवो होइ अणासवो ॥ ३ ॥

व्याख्या—स्पष्टे ॥ २ ॥ ३ ॥ ईदृशश्च सन् यादृशं कर्म यथा क्षपयति तथा दृष्टान्तद्वारेणादराधानाय पुनः शिष्याभिमुखीकरणपूर्वकमाह—

मूलम्—एएसिं तु विवच्चासे, रागद्दोससमज्जिअं। खवेइ उ जहा भिक्खू, तं मे एगमणो सुण ॥ ४ ॥

व्याख्या—एतेषां प्राणिवधविरत्यादीनां समित्यादीनां चानाश्रवहेतूनां विपर्यासे सति यद्रागद्वेषाभ्यां समार्जितं कर्मेति शेषः, क्षपयति तु यथा भिक्षुस्तन्मे कथयत इति शेषः, एकमनाः शृणु ॥ ४ ॥

मूलम्—जहा महातलागस्स, सन्निरुद्धे जलागमे। उस्सिंचणाए तवणाए, कमेणं सोसणा भवे ॥५॥

व्याख्या—यथा महातटाकस्य सन्निरुद्धे पाल्यादिना निरुद्धे जलागमे 'उस्सिंचणाएत्ति' उत्सिञ्चनेनारघट्टघट्या-दिभिरुदञ्चनेन तपनेनार्ककरतापेन क्रमेण शोषणा जलाभावरूपा भवेत् ॥ ५ ॥

मूलम्—एवं तु संजयस्सावि, पावकम्मनिरासवे। भवकोडिसंचिअं कम्मं, तवसा निज्जरिज्जइ ॥ ६ ॥

व्याख्या—'एवं तुत्ति' एवमेव संयतस्यापि पापकर्मणां निराश्रवे आश्रवाभावे पापकर्मनिराश्रवे सति भवकोटि-सञ्चितं कर्म्म, अतिबहुत्वोपलक्षणमेतत्, तपसा निर्जीर्यते इति सूत्रत्रयार्थः ॥ ६ ॥ तपसा कर्म निर्जीर्यते इत्युक्त-मतस्तद्भेदानाह—

मूलम्—सो तवो दुविहो वुत्तो, बाहिरब्भिंतरो तहा। बाहिरो छव्विहो वुत्तो, एवमब्भिंतरो तवो ॥ ७ ॥

व्याख्या—'सो तवोत्ति' तत्तपो द्विविधं प्रोक्तं, लिङ्गव्यत्ययः सर्वत्र सूत्रत्वात्, बाह्यमाभ्यन्तरं तथा। तत्र बाह्यं बाह्यद्रव्यापेक्षत्वाल्लोकप्रतीतत्वात्कुतीर्थिकैरपि स्वाभिप्रायेण सेव्यमानत्वात्, बहिः शरीरस्य वा तापकारित्वात्, मुक्तिप्राप्तौ प्रायो बाह्याङ्गत्वाद्वा। तद्विपरीतं त्वाभ्यन्तरमिति सूत्रार्थः ॥ ७ ॥ तत्र यथा बाह्यं षड्विधं तथाह—

मूलम्—अणसणमूणोअरिआ, भिक्खायरिया य रसपरिच्चाओ।
कायकिलेसो संलीणया य बज्झो तवो होइ ॥ ८ ॥

व्याख्या—अक्षरार्थः स्पष्टो भावार्थं तु सूत्रकृदेव वक्ष्यति ॥ ८ ॥ तत्रानशनस्वरूपं तावदाह—

मूलम्—इत्तरिअ मरणकाला य, दुविहा अणसणा भवे। इत्तरिआ सावकंखा, निरवकंखा उ बिइज्जिआ ९

व्याख्या—इत्वरमेव इत्वरकं स्वल्पकालावधीत्यर्थः, मरणपर्यन्तः कालो यस्य तन्मरणकालं यावज्जीवमित्यर्थः, चः समुच्चये, इत्येवमनशनं द्विविधं भवेत्। तत्र इत्वरं सहावकांक्षया घटिकाद्वयाद्युत्तरकालं भोजनाभिलापरूपया वर्त्तते इति सावकांक्षं, निरवकांक्षं तत्र भवे भोजनाशंसाभावेन, तुः पुनरर्थो भिन्नक्रमश्च, ततो द्वितीयं पुनर्मरणकाला-ख्यम् ॥ ९ ॥ तत्रेत्वरानशनभेदानाह—

मूलम्—जो सो इत्तरिअतवो, सो समासेण छव्विहो।
सेढितवो १ पयरतवो २, घणो अ ३ तह होइ वग्गो अ ४ ॥ १० ॥

व्याख्या—यत्तदित्वरकतप इत्वरानशनरूपं तत्समासेन षड्विधं, षड्विधत्वमेवाह–'सेढितवो' इत्यादि–श्रेणिः

बाह्यद्रव्यापेक्षत्वाल्लोकप्रतीतत्वात्कुतीर्थिकैरपि स्वाभिप्रायेण सेव्यमानत्वात्, बहिः शरीरस्य वा तापकारित्वात्, मुक्तिप्राप्तौ प्रायो बाह्याङ्गत्वाद्वा। तद्विपरीतं त्वाभ्यन्तरमिति सूत्रार्थः ॥ ७ ॥ तत्र यथा बाह्यं षड्विधं तथाह—

मूलम्—अणसणमूणोअरिआ, भिक्खायरिया य रसपरिच्चाओ।
कायकिलेसो संलीणया य बज्झो तवो होइ ॥ ८ ॥

व्याख्या—अक्षरार्थः स्पष्टो भावार्थं तु सूत्रकृदेव वक्ष्यति ॥ ८ ॥ तत्रानशनस्वरूपं तावदाह—

मूलम्—इत्तरिअ मरणकाला य, दुविहा अणसणा भवे। इत्तरिआ सावकंखा, निरवकंखा उ बिइज्जिआ ९

व्याख्या—इत्वरमेव इत्वरकं स्वल्पकालावधीत्यर्थः, मरणपर्यन्तः कालो यस्य तन्मरणकालं यावज्जीवमित्यर्थः, चः समुच्चये, इत्येवमनशनं द्विविधं भवेत्। तत्र इत्वरं सहावकांक्षया घटिकाद्वयाद्युत्तरकालं भोजनाभिलापरूपया वर्त्तते इति सावकांक्षं, निरवकांक्षं तत्र भवे भोजनाशंसाभावेन, तुः पुनरर्थो भिन्नक्रमश्च, ततो द्वितीयं पुनर्मरणकाला-ख्यम् ॥ ९ ॥ तत्रेत्वरानशनभेदानाह—

मूलम्—जो सो इत्तरिअतवो, सो समासेण छव्विहो।
सेढितवो १ पयरतवो २, घणो अ ३ तह होइ वग्गो अ ४ ॥ १० ॥

व्याख्या—यत्तदित्वरकतप इत्वरानशनरूपं तत्समासेन षड्विधं, षड्विधत्वमेवाह–'सेढितवो' इत्यादि–श्रेणिः

मूलम्—तत्तो अ वग्गवग्गो उ, पंचमओ छट्ठओ पइण्णतवो ।
मणइच्छिअचित्तत्थो, नायव्वो होइ इत्तरिओ ॥ ११ ॥

व्याख्या—ततश्च वर्गतपसोऽनन्तरं वर्गवर्ग इति वर्गवर्गतपः पञ्चमस्तत्र वर्ग एव यदा वर्गेण गुण्यते तदा वर्गवर्गो भवति, यथा चत्वारि सहस्राणि षण्णवत्यधिकानि तावतैव गुणितानि जाता एका कोटिः सप्तषष्टिर्लक्षाः सप्तसप्ततिः सहस्राणि द्वे शते षोडशाधिके [ १६७७७२१६ ] एतावद्भिस्तपःपदैरुपलक्षितं तपो वर्गवर्गतप इत्युच्यते । एवं चतुर्थादीनि चत्वारि पदान्याश्रित्य श्रेण्यादितपो दर्शितं, एतदनुसारेण पञ्चादिपदेष्वपि एतद्भावना कार्या । षष्ठकं प्रकीर्णतपो यत् श्रेण्यादिनियतरचनाविरहितं स्वशक्त्या यथाकथञ्चिद्विधीयते, तच्च नमस्कारसहितादि पूर्वपुरुषाचरितं यवमध्यवज्रमध्यचन्द्रप्रतिमादि च । इत्थं भेदानुक्त्वा उपसंहारमाह—मणेत्यादि—मनसः ईप्सित इष्टश्चित्रोऽनेकप्रकारोऽर्थः स्वर्गापवर्गादिस्तेजोलेश्यादिर्वा यस्मात्तन्मनईप्सितचित्रार्थं ज्ञातव्यं भवति 'इत्वरकं' प्रक्रमादनशनाख्यं तपः ॥ ११ ॥ सम्प्रति मरणकालमनशनमाह—

मूलम्—जा सा अणसणा मरणे, दुविहा सा विआहिया ।
सवियारमवियारा, कायचिट्ठं पई भवे ॥ १२ ॥

व्याख्या—'जा सा अणसणत्ति' यत्तदनशनं मरणे मरणावसरे द्विविधं तद्व्याख्यातं कथितं, तद्द्वैविध्यमेवाह—सह विचारेण चेष्टालक्षणेन वर्त्तते यत्तत्सविचारं, तद्विपरीतं त्वविचारं, कायचेष्टामुद्वर्त्तनादिकां प्रतीति प्रतीत्याश्रित्य भवेत् । तत्र सविचारं भक्तप्रत्याख्यानमिङ्गिनीमरणं च, तत्र भक्तप्रत्याख्याने गच्छमध्यवर्त्ती गुरुदत्तालोचनो विधिना संलेखनां विधाय त्रिविधं चतुर्विधं वाऽऽहारं प्रत्याचष्टे, स च समास्तृतमृदुसंस्तारकस्त्यक्तभक्तकरणोपकरणादिममत्वः स्वयमुच्चरितनमस्कारः पार्श्ववर्त्तिमुनिदत्तनमस्कारो वा सत्यां शक्तौ स्वयमुद्वर्त्तनादि कुरुते, शक्तेरभावेऽपरैरपि किञ्चित्कारयतीति ॥ १ ॥ इङ्गिनीमरणे त्वालोचनासंलेखनादिपूर्वं शुद्धस्थण्डिलस्थित एकाक्येव कृतचतुर्विधाहारप्रत्याख्यानो नियमितस्थण्डिलस्यैवान्तश्छायात उष्णमुष्णाच्च छायां स्वयमेव संक्रामति न त्वन्येन किञ्चित्कारयतीति ॥ २ ॥ अविचारं तु पादपोपगमनं, तत्र हि देवगुरुवन्दनादिविधिना चतुर्विधाहारप्रत्याख्यानं कृत्वा गिरिकन्दरादौ गत्वा पादप इव यावज्जीवं निश्चेष्ट एवावतिष्ठते ॥ ३ ॥ १२ ॥ पुनर्द्वैविध्यमेव प्रकारान्तरेणाह—

मूलम्—अहवा सपरिकम्मा, अपरिकम्मा य आहिआ । नीहारिमनीहारि, आहारच्छेओ दोसुवि १३

व्याख्या—अथवेति प्रकारान्तरसूचने, सपरिकर्म स्थानोपवेशनत्वग्वर्त्तनोद्वर्त्तनादिलक्षणपरिकर्मयुक्तं, अपरिकर्म च तद्विपरीतमाख्यातं, तत्र सपरिकर्म भक्तप्रत्याख्यानमिङ्गिनीमरणं च, आद्ये स्वपरकृतस्य द्वितीये तु स्वयंकृतस्योद्वर्त्तनादिपरिकर्मणः सद्भावात्, अपरिकर्म तु पादपोपगमनं, तत्र सर्वथा परिकर्माभावात् । उक्तञ्च—"समविसमंमि य पडिओ, अच्छइ सो पायवोव्व निकंपो ॥ चलणं परप्पओगा, नवरि दुम्मस्सेव तस्स भवे ॥ १ ॥" यद्वा परिकर्म संलेखना सा यत्रास्ति तत्सपरिकर्म, तद्विपरीतं त्वपरिकर्म, तत्र च व्याघाताभावे भक्तपरिज्ञादित्रयमप्येतत्सूत्रार्थोभयनिष्ठो निष्पादितशिष्यः संलेखनापूर्वकमेव करोति, अन्यथाऽऽर्त्तध्यानसम्भवात्, यदुक्तं—"देहम्मि असंलिहिए, सहसा धाऊहिं खिज्जमाणेहिं । जायइ अट्टज्झाणं, सरीरिणो चरिमकालम्मि ॥ १ ॥" इति सपरिकर्मोच्यते । यत्पुनर्व्याघाते विद्युद्गिरिभित्तिपतनाद्यभिघातरूपे सद्योघातिरोगादिरूपे वा संलेखनामकृत्वैव भक्तपरिज्ञादि क्रियते तदपरिकर्मेति । तथा निर्हरणं निर्हारो गिरिकन्दरादौ गमनेन ग्रामादेर्बहिर्गमनं तद्विद्यते यत्र तन्निर्हारि, यत् पुनरुत्थातुक्रामे व्रजिकादौ क्रियते तदनिर्हारि, तत्र क्वापि गमनाभावात् । एतच्च भेदद्वयमपि पादपोपगमनविषयं तत्प्रस्ताव एवागमेऽस्याभिधानात् । यदुक्तं—"पाओवगमणं दुविहं, नीहारिं चेव तह अनीहारिं । वहिआ गामाईणं, गिरिकंदरमाइ नीहारिं ॥ १ ॥ वइआसु जं अंतो, उट्ठाउमणाण ठाइ अणिहारिं । तम्हा पाओवगमणं, जं उवमा पायवेणेत्थ ॥ २ ॥" आहारच्छेदोऽशनादित्यागो द्वयोरपि सविचाराविचारयोः सपरिकर्मापरिकर्मणोर्निर्हार्यनिर्हारिणोश्च सम इति शेष इति सूत्रपञ्चकार्थः ॥ १३ ॥ उक्तमनशनं —

मूलम्—ओमोअरणं पंचहा, समासेण विआहिअं । [illegible] , भावेणं पज्जवेहि अ ॥ १४ ॥

व्याख्या—अवमं न्यूनमुदरं यस्यासाववमोदरस्तस्य भावोऽवमौदर्यं न्यूनोदरता पञ्चधा समासेन व्याख्यातं, द्रव्यतो द्रव्याद्धेतौ पञ्चमी, क्षेत्रं च कालश्च क्षेत्रकालं तेन, भावेन पर्यायैश्चोपाधिभूतैः ॥ १४ ॥ तत्र द्रव्यत आह—

मूलम्—जो जस्स उ आहारो, तत्तो ओमं तु जो करे।
जहण्णेणेगसित्थाइ, एवं दव्वेण ऊ भवे ॥ १५ ॥

व्याख्या—यो यस्य तुः पूर्त्तौ आहारो द्वात्रिंशत्कवलादिमानः, ततः स्वाहारादवममूनं तुः पूर्त्तौ यः कुर्यात् भुञ्जानः इति शेषः, अयं भावः—पुरुषस्य हि द्वात्रिंशत्कवलमान आहारः, स्त्रियाश्चाष्टाविंशतिकवलमानः। कवलश्चेह यस्मिन् क्षिप्ते मुखस्य नातिविकृतत्वं स्यात्तावन्मानो ज्ञेयः। ततश्चैतन्मानादूनं यो भुङ्क्ते यत्तदोर्नित्याभिसम्बन्धात् तस्य एवममुना प्रकारेण द्रव्येणोपाधिभूतेन भवेदिति सण्टङ्कः, अवमौदर्यमिति प्रक्रमः, एतच्च जघन्येनैकसिक्थं यत्रैकमेव सिक्थं भुज्यते तदादि, आदिशब्दात्सिक्थद्वयादारभ्य यावदेककवलभोजनम्। इत्थं चाल्पाहाराद्यवमौदर्यमाश्रित्योच्यते, यत उपार्द्धादिषु तद्भेदेषु कवलनवकादिमानमेव जघन्यं स्यात्तथा च सम्प्रदायः—"अप्पाहारोमोअरिआ जहण्णेणेगकवला, उक्कोसेणं अट्ठ कवला, सेसा अजहन्नमणुक्कोसा। उवड्ढाहारोमोअरिआ जहन्नेणं नव कवला, उक्कोसेणं वारस कवला, सेसा अजहन्नमणुक्कोसा" इत्यादि—एतद्भेदाश्चामी "अप्पाहार १ उवड्ढा २, दुभाग ३ पत्ता ४ तहेव किंचूणा ५ ॥ अट्ठ १ दुवालस २ सोलस ३, चउवीस ४ तहेक्कतीसा ५ य ॥ १ ॥" अत्राष्टादिभिः संख्याशब्दैरल्पाहारादीनामूनोदरताभेदानां उत्कर्षतः कवलमानमुक्तम् ॥ १५ ॥ क्षेत्रावमौदर्यमाह—

मूलम्—गामे नगरे तह रायहाणि निगमे अ आगरे पल्ली।
खेडे कव्वड—दोणमुह—पट्टण—मडंब—संबाहे ॥ १६ ॥

व्याख्या—ग्रामे नगरे च प्रतीते, राजधानी च राजाश्रयस्थानस्थानं निगमश्च प्रभूततरवणिजां निवासोऽनयोः समाहारः राजधानीनिगमं तस्मिन्, आकरे स्वर्णाद्युत्पत्तिस्थाने, पल्ल्यां वृक्षगहनाद्याश्रितप्रान्तजननिवासरूपायां, खेटे पांशुवप्रपरिक्षिप्ते, कर्वटं कुनगरं, द्रोणमुखं जलस्थलपथनिर्गमप्रवेशं यथा भृगुकच्छं, पत्तनं द्विधा जलपत्तनं स्थलपत्तनं च, तत्राद्यं जलमध्यवर्त्ति इतरन्निर्जलभूभागभावि, मडम्बं सर्वदिक्षु अर्द्धतृतीययोजनान्तर्ग्रामान्तररहितं, सम्बाधः प्रभूतचातुर्वर्ण्यनिवासः, कर्वटादीनां समाहारद्वन्द्वस्तस्मिन् ॥ १६ ॥

मूलम्—आसमपए विहारे, सन्निवेसे समाय—घोसे अ। थलि—सेणा—खंधारे, सत्थे संवट्ट—कोट्टे अ

व्याख्या—आश्रमपदे तापसावसथोपलक्षितस्थाने, विहारो देवगृहं भिक्षुनिवासो वा तत्प्रधानो ग्रामादिरपि विहारस्तस्मिन्, संनिवेशे यात्रादिसमायातजनावासे, समाजः पथिकसमूहो घोषो गोकुलमनयोः समाहारस्तस्मिन्, चः समुच्चये स्थली प्रोच्चभूभागः सेना चतुरङ्गबलसमूहः स्कन्धावारः स एव वणिजादिसर्वजनयुक्तः एषां समाहारस्तस्मिन्, सार्थे गणिमधरिमादिभृतशकटादिमज्ञाते, संवर्तो भयत्रस्तजनस्थानं कोट्टः प्राकारोऽनयोः समाहारस्तस्मिन्, चः समुच्चये ॥ १७ ॥

मूलम्—वाडेसु वा रत्थासु व, घरेसु वा एवमेत्तिअं खेत्तं।
कप्पइ उ एवमाई, एवं खेत्तेण ऊ भवे ॥ १८ ॥

व्याख्या—वाटेषु पाटेषु वा वृत्तिवरण्डकादिवेष्टितगृहसमूहात्मकेषु, रथ्यासु सेरिकासु, गृहेषु, वा सर्वत्र विकल्पार्थः, एवमनेन प्रकारेण 'एत्तिअंति' एतावद्विवक्षातो नियतपरिमाणं क्षेत्रं कल्पते मम भिक्षायै पर्यटितुमिति शेषः, तुः पूर्त्तौ, एवमादि आदिशब्दाद्गृहशालादिपरिग्रहः, एवममुना प्रकारेण क्षेत्रेणेति क्षेत्रहेतुकं तुः पूर्त्तौ भवेदवमौदर्यमिति प्रक्रमः ॥ १८ ॥ पुनरन्यथा क्षेत्रावमौदर्यमाह—

मूलम्—पेडा य अद्धपेडा, गोमुत्ति पयंगवीहिआ चेव। संबुक्कावट्टायय—गंतुंपच्चागया छट्ठा ॥ १९ ॥

व्याख्या—तत्र पेटा मञ्जूषा तद्वत्संलग्नसर्वदिक्स्थगृहाटने पेटा ॥ १ ॥ अर्द्धपेटा तदर्द्धभ्रमणे ॥ २ ॥ गोमूत्रिका तदाकारेण वामदक्षिणतो भ्रमणे ॥ ३ ॥ पतङ्गवीथिका तिड्डवदन्तरा बहुगृहाणि मुक्त्वा मुक्त्वा भ्रमणे ॥ ४ ॥

शम्बूकः शङ्खस्तद्वदावर्त्तो यस्यां सा शम्बूकावर्त्ता, सा द्विविधा, अभ्यन्तरशम्बूकावर्त्ता बहिश्शम्बूकावर्त्ता च, तत्राद्या शङ्खनाभिसदृशाकारे क्षेत्रे मध्यादारभ्य बाह्यगृहं यावदटने, अन्या तु तद्विपर्यये ॥ ५ ॥ 'आययगंतुंपच्चागयत्ति' आयतं दीर्घं प्राञ्जलमित्यर्थः, गत्वा प्रत्यागता षष्ठी, इयं ऋजुतयाऽग्रतो गत्वा वलमानस्याटने ॥ ६ ॥ नन्वत्र गोचररूपत्वात् भिक्षाचर्यात्वमेवासां तत्कथमिह क्षेत्रावमौदर्यरूपत्वमुच्यते ? उच्यते—अवमौदर्यं ममास्त्वित्याशयेन क्रियमाणत्वादवमौदर्यव्यपदेशोऽप्यत्रादुष्ट एव, दृश्यन्ते हि निमित्तभेदादेकत्रापि देवदत्तादौ पितृपुत्रादयोऽनेके व्यपदेशाः। एवं पूर्वत्र ग्रामादिविषयस्योत्तरत्र कालादिविषयस्य च नैयत्यस्याभिग्रहत्वेन भिक्षाचर्यात्वप्रसङ्गे इदमेवोत्तरं वाच्यम् ॥ १९ ॥ कालावमौदर्यमाह—

मूलम्—दिवसस्स पोरिसीणं, चउण्हंपि उ जत्तिओ भवे कालो।
एवं चरमाणो खलु, कालोमाणं मुणेअव्वं ॥ २० ॥

व्याख्या—दिवसस्य पौरुषीणां चतसृणामपि तुः पूर्त्तौ यावान् भवेत्कालोऽभिग्रहविषय इति शेषः, एवमिति एवंप्रकारेण प्रक्रमात्कालेन 'चरमाणोत्ति' सुव्यत्ययाच्चरतो भिक्षार्थं भ्रमतः चतसृणां पौरुषीणां मध्येऽमुकस्मिन् काले भिक्षाचर्यां करिष्यामीत्येवमभिगृह्य पर्यटतः खलु निश्चितं 'कालोमाणंति' कालेन हेतुनाऽवमत्वं प्रस्तावादुदरस्य कालावमत्वं, कोऽर्थः ? कालावमौदर्यं मुणितव्यं ज्ञातव्यम् ॥ २० ॥ एतदेवप्रकारान्तरेणाह—

मूलम्—अहवा तइआए पोरिसीए ऊणाए घासमेसंतो। चउभागूणाए वा, एवं कालेण ऊ भवे ॥२१॥

व्याख्या—अथवा तृतीयपौरुष्यामूनायां ग्रासमाहारं 'एसन्तोत्ति' एषयतः, कियता भागेन न्यूनायामित्याह—चतुर्भागोनायां, 'वा' शब्दात् पञ्चादिभागोनायां वा, एवममुना कालविषयाभिग्रहलक्षणेन प्रकारेण चरत इत्यनुवर्त्तते, कालेन तु भवेदवमौदर्यम्। औत्सर्गिकविधिविषयं चैतत्, उत्सर्गतो हि तृतीयपौरुष्यामेव भिक्षाटनमुक्तम् ॥ २१ ॥ भावावमौदर्यमाह—

मूलम्—इत्थी वा पुरिसो वा, अलंकिओ वाऽणलंकिओ वावि।
अन्नयरवयत्थो वा, अन्नयरेणं वा वत्थेणं ॥ २२ ॥

मूलम्—अन्नेण विसेसेणं, वण्णेणं भावमणुमुअंते उ। एवं चरमाणो खलु, भावोमाणं मुणेअव्वं २३॥

व्याख्या—स्त्री वा पुरुषो वा, अलङ्कृतो वा अनलङ्कृतो वा, अपिः पूर्त्तौ, अन्यतरस्मिन् वयसि तारुण्यादौ तिष्ठतीत्यन्यतरवयःस्थो वा, अन्यतरेण पट्टसूत्रमयादिना वस्त्रेणोपलक्षितः ॥ २२ ॥ 'अन्नेणेत्यादि'—अन्येन विशेषेण कुपितहसितादिनाऽवस्थाभेदेन, वर्णेन कृष्णादिनोपलक्षितो भावमुक्तरूपमेवालङ्कृतत्वादिकं 'अणुमुअंते उत्ति' अमुञ्चन्नेव यदि दाता दास्यति तदाहं ग्रहीष्ये नान्यथेत्युपस्कारः एवं 'चरमाणोत्ति' चरतः खलु 'भावोमाणंति' भावावमौदर्यं मुणितव्यम् ॥ २३ ॥ पर्यवावमौदर्यमाह—

मूलम्—दव्वे खित्ते काले, भावंमि अ आहिआ उ जे भावा।
एएहिं ओमचरओ, पज्जवचरओ भवे भिक्खू ॥ २४ ॥

व्याख्या—द्रव्येऽशनादौ, क्षेत्रे ग्रामादौ, काले पौरुष्यादौ, भावे च स्त्रीत्वादौ आख्याताः कथिताः तुः पूर्त्तौ ये भावाः पर्याया एकसिक्थोनत्वादयः एतैः सर्वैरपि अवममुपलक्षणत्वादवमौदर्यं चरतीत्यवमचरकः पर्यवचरको भवेद्भिक्षुः। इह पर्यवग्रहणेन पर्यवप्राधान्यविवक्षया पर्यवावमौदर्यमुक्तं, एवं क्षेत्रावमौदर्यादीन्यपि क्षेत्रादिप्राधान्यविवक्षया ज्ञेयानि, तत्त्वतो हि तेष्वपि द्रव्यावमौदर्यस्य सम्भवात्। यत्रापि च द्रव्यतो न्यूनत्वमुदरस्य नास्ति तत्रापि क्षेत्रादिन्यूनतामपेक्ष्यावमौदर्याणि भण्यन्त इति सूत्रैकादशकार्थः ॥ २४ ॥ भिक्षाचर्यामाह—

मूलम्—अट्ठविहगोअरग्गं तु, तहा सत्तेव एसणा। अभिग्गहा य जे अन्ने, भिक्खायरिअमाहिआ ॥२५॥

व्याख्या—'अट्ठविहगोअरग्गंति' प्राकृतत्वादष्टविधः अग्रः प्रधानोऽकल्पपरिहारेण स चासौ गोचरश्च उच्चावचकुलेष्वविशेषेण भ्रमणमष्टविधाग्रगोचरः, तुः पूर्त्तौ। तथा सप्तैव एषणा अभिग्रहाश्च येऽन्ये तदतिरिक्तास्ते किमित्याह—'भिक्खायरिअमाहिअत्ति' भिक्षाचर्या वृत्तिसंक्षेपापरनामिका आख्याता कथिता। अत्राष्टौ अग्रगोचरभेदाः पेटादय एव, तेषु शम्बूकावर्त्तायां द्वैविध्यस्य पार्थक्याश्रयणात्, आयतायाश्च गमनेऽपि वलमानत्वे इव पृथग्ग्रहणात् तेषामष्टविधत्वं ज्ञेयं। सप्तैषणाश्चेमाः—"संसट्ठमसंसट्ठा २, उद्धड ३ तह अप्पलेविआ चेव ४। उग्गहिआ ५ पग्ग-

हिआ ६, उज्झिअधम्मा य ७ सत्तमिआ ॥ १ ॥ " संसृष्टाभ्यां हस्तपात्राभ्यां भिक्षां गृह्णतः प्रथमा ॥ १ ॥ असंसृष्टाभ्यां तु ताभ्यां गृह्णतो द्वितीया ॥ २ ॥ पाकस्थानात् यत् स्थाल्यादौ स्वार्थं भोजनायोद्धृतं ततो गृह्णतः उद्धृताख्या तृतीया ॥ ३ ॥ निर्लेपं पृथुकादिगृह्णतोऽल्पलेपा चतुर्थी ४ । उद्गृहीता नाम भोजनकाले भोक्तुकामस्य परिवेषयितुं दर्वीशरावादिना यदुपहृतं भोजनजातं तत एवाददानस्य पञ्चमी ॥ ५ ॥ प्रगृहीता नाम भोजनकाले भोक्तुकामाय दातुमुद्यतेन भोक्त्रा वा यत्करादिना गृहीतं तत एव गृह्णतः षष्ठी ॥ ६ ॥ उज्झितधर्मा तु यत्परिहारार्हं भोजनजातं यदन्ये द्विपदादयो नावकांक्षन्ति तदर्द्धत्यक्तं वा गृह्णतः सप्तमी ॥ ७ ॥ अभिग्रहाश्च द्रव्य १ क्षेत्र २ काल ३ भाव ४ विषयाः । तत्र द्रव्याभिग्रहाः कुन्ताग्रादिसंस्थितं मण्डकादि ग्रहीष्यामीत्यादयः ॥ १ ॥ क्षेत्राभिग्रहा देहली जङ्घयोर्मध्ये कृत्वा यदि दास्यति तदा ग्राह्यमित्याद्याः ॥ २ ॥ कालाभिग्रहाः सकलभिक्षुकोपरमकाले मया भ्रमितव्यमितिमुख्याः ॥ ३ ॥ भावाभिग्रहास्तु हसन्नाक्रन्दन् बद्धो वा यदि दाता दास्यति ततोऽहमादास्ये न त्वन्यथेत्येवमादयः ॥ ४ ॥ इति सूत्रार्थः ॥ २५ ॥ रसत्यागमाह—

मूलम्—खीरदहिसप्पिमाई, पणीअं पाणभोअणं । परिवज्जणं रसाणं तु, भणिअं रसविवज्जणं ॥ २६ ॥

---

१ संसृष्टाभ्यां तरखरण्टिताभ्यां हस्तपात्राभ्यामिति "घ" पुस्तके ॥

व्याख्या—क्षीरदधिसर्पिरादि, आदिशब्दाद्गुडपक्वान्नादिग्रहणं, प्रणीतमतिबृंहकं पानं च खर्जूररसादि भोजनं च गलत्स्नेहबिन्दुकमोदनादि पानभोजनं, सूत्रस्य सोपस्कारत्वादेषां परिवर्जनं रसानां तुः पूर्त्तौ भणितं रसविवर्जनमिति सूत्रार्थः ॥ २६ ॥ कायक्लेशमाह—

मूलम्—ठाणा वीरासणाईआ, जीवस्स उ सुहावहा । उग्गा जहा धरिज्जंति, कायकिलेसं तमाहिअं २७

व्याख्या—स्थानानि देहावस्थानभेदाः, वीरासनं यत्र वामोऽङ्घ्रिर्दक्षिणोरूर्द्ध्वे दक्षिणश्च वामोरूर्द्ध्वे क्रियते तदादीनि, आदिशब्दाद्गोदोहिकादिग्रहणं, लोचाद्युपलक्षणं चैतत्, जीवस्य तुरवधारणे भिन्नक्रमश्च ततः सुखावहान्येव मुक्तिहेतुत्वात् शुभावहान्येव उग्राणि दुष्करतयोत्कटानि यथा येन प्रकारेण धार्यन्ते सेव्यन्ते कायक्लेशः स आख्यातः कथितस्तथैवेति शेष इति सूत्रार्थः ॥ २७ ॥ संलीनतामाह—

मूलम्—एगंतमणावाए, इत्थीपसुविवज्जिए । सयणासणसेवणया, विवित्तसयणासणं ॥ २८ ॥

व्याख्या—'एगंतत्ति' सुब्व्यत्ययादेकान्ते जनानाकुले, अनापाते स्त्र्याद्यापातरहिते, स्त्रीपशुविवर्जिते तत्रैवावस्थितस्त्र्यादिवियुक्ते शून्यागारादावित्यर्थः, 'सयणासणसेवणयत्ति' शयनासनसेवनं विविक्तशयनासनं नाम बाह्यं तप उच्यते, उपलक्षणं चैतदेषणीयफलकादिग्रहणस्य, अनेन च विविक्तचर्याख्या संलीनतोक्ता, शेषसंलीनतोपलक्षणमेषा, यतश्चतुर्विधेयमुक्ता, तथा हि–"इंदिअ १ कसाय २ जोगे ३, पडुच्च संलीणया मुणेअव्वा । तह जा विवित्तचरिआ ४, पणत्ता वीअरागेहिं ॥ १ ॥ " तत्रेन्द्रियसंलीनता मनोज्ञामनोज्ञेषु शब्दादिषु रागद्वेषाकरणात् ॥१॥ कषायसंलीनता तदुदयनिरोधादेः ॥ २ ॥ योगसंलीनता मनोवाक्कायानां शुभेषु प्रवृत्तेरशुभान्निवृत्तेश्च । ३ । इति सूत्रार्थः ॥ २८ ॥ उक्तमेवार्थमुपसंहरन्नुत्तरग्रन्थसम्बन्धमाह—

मूलम्—एसो बाहिरगतवो, समासेण विआहिओ । अब्भिंतरं तवं एत्तो, वोच्छामि अणुपुव्वसो ॥२९॥

व्याख्या—स्पष्टम् ॥ २९ ॥ प्रतिज्ञातमेवाह—

मूलम्—पायछित्तं विणओ, वेआवच्चं तहेव सज्झाओ । झाणं च विउस्सग्गो, एसो अब्भिंतरो तवो ३०

व्याख्या—अक्षरार्थः सुगमो भावार्थं तु सूत्रकृदेवाह—

मूलम्—आलोअणारिहाईअं, पायच्छित्तं तु दसविहं । जे भिक्खू वहई सम्मं, पायछित्तं तमाहिअं ॥३१॥

व्याख्या—आलोचनार्हं यत्पापमालोचनात एव शुध्यति तदादिकं, आदिशब्दात् प्रतिक्रमणार्हादिग्रहणं, इह च विषयविषयिणोरभेदोपचारादेवंविधपापविशुद्ध्युपायभूतानि आलोचनादीन्येव आलोचनार्हादिशब्दैरुक्तानि । प्रायश्चित्तं तुरेवकारार्थो भिन्नक्रमश्च, ततो दशविधमेव । दशविधत्वं चैवं–"आलोअण १ पडिकमणे २, मीस ३ विवेगे ४ तहा विउसग्गे ५ । तव ६ छेअ ७ मूल ८ अणवट्ठाय ९ पारंचिए १० चेव ॥ १ ॥" तत्र आलोचना

गुरोः पुरो वचसा प्रकाशनं, तन्मात्रेणैव यत्पातकं शुध्यति तदालोचनार्हम् ॥ १ ॥ प्रायश्चित्तं त्विहालोचनैव, एवमग्रेपि । प्रतिक्रमणं दोषान्निवृत्तिर्मिथ्यादुष्कृतदानमित्यर्थः, तन्मात्रेणैव यत्सहसात्कारजातं सावद्यवचनादिपापं शुध्यति न तु गुरुसमक्षमालोच्यते तत्प्रतिक्रमणार्हम् ॥ २ ॥ तथा यत्र गुरुसमक्षमालोच्य तदाज्ञया मिथ्यादुष्कृतं दत्ते तदालोचनाप्रतिक्रमणार्हत्वान्मिश्रम् ॥ ३ ॥ तथा विवेकः पृथक्करणं, तन्मात्रेणैव यस्य शुद्धिस्तद्विवेकार्हम् । जायते हि कथञ्चिदशुद्धाहारादिग्रहणे तत्त्यागमात्रेणैव शुद्धिरिति ॥ ४ ॥ व्युत्सर्गः कायोत्सर्गस्तेनैव यस्य शुद्धिस्तत्तदर्हम् ।५। तथा यत्र प्रतिसेविते निर्विकृतिकादि षण्मासान्तं तपो दीयते तत्तपोर्हम् ॥ ६ ॥ यत्र चासेविते पर्यायच्छेदः क्रियते तच्छेदार्हम् ॥ ७ ॥ यत्र चापतिते सर्वं पर्यायमुच्छेद्य मूलतो व्रतारोपः स्यात्तन्मूलार्हम् ॥ ८ ॥ येन पुनः सेवितेन उपस्थापनाया अप्ययोग्यः सन् यावद्गुरूक्तं तपो न कुर्यात्तावद् व्रतेषु न स्थाप्यते, आचीर्णतपास्तु दोषोपरतो व्रतेषु स्थाप्यते तदनवस्थाप्यम् ॥ ९ ॥ यस्मिन् सेविते लिङ्ग–क्षेत्र–काल–तपसा पारमञ्चति तत्पाराञ्चितं, यद्वा पारमन्तं प्रायश्चित्तानां तत उत्कृष्टप्रायश्चिताभावात्, अपराधानां वा पारमञ्चतीति पाराञ्चितम् ॥ १० ॥ इत्येतद्दशविधं यो भिक्षुर्वहत्यासेवते सम्यगवैपरीत्येन प्रायश्चित्तं तदाख्यातम् ॥ ३१ ॥ विनयमाह—

मूलम्—अब्भुट्ठाणं अंजलिकरणं तहेवासणदायणं। गुरुभत्तिभावसुस्सूसा विणओ एस विआहिओ ३२

व्याख्या—अभ्युत्थानमञ्जलिकरणं तथेति समुच्चये, एवः पूर्त्तौ, 'आसणदायणंति' आसनदानं, गुरुभक्तिः, भावः अन्तःकरणं तेन शुश्रूषा तदादेशम्प्रति श्रोतुमिच्छा, पर्युपासना वा, भावशुश्रूषा । विनय एष व्याख्यातः ॥ ३२ ॥ वैयावृत्त्यमाह—

मूलम्—आयरिअमाइअंमि, वेआवच्चंमि दसविहे । आसेवणं जहाथामं, वेआवच्चं तमाहिअं ॥ ३३ ॥

व्याख्या—'आयरिअमाइअंमित्ति' मकारोऽलाक्षणिकस्तत आचार्यादिके आचार्यादिविषये व्यावृत्तभावो वैयावृत्त्यमुचितविधिना आहारादिसम्पादनं, उक्तं च–"वेआवच्चं वावडभावो तह धम्मसाहणनिमित्तं । अन्नाइआण विहिणा, संपाडणमेस भावत्थो ॥ १ ॥" तस्मिन्, दशविधे विषयविभागाद्दशप्रकारे, यदुक्तं–"आयरिअ १ उवज्झाए २, थेर ३ तवस्सी ४ गिलाण ५ सेहाणं ६ । साहम्मिअ ७ कुल ८ गण ९ संघ १० संगयं तमिह कायव्वं ॥ १ ॥" आसेवनमेतद्विषयमनुष्ठानं यथास्थाम यथाशक्ति वैयावृत्त्यं तदाख्यातम् ॥ ३३ ॥ स्वाध्यायमाह—

मूलम्—वायणा १ पुच्छणा २ चेव, तहेव परिअट्टणा ३। अणुप्पेहा ४ धम्मकहा ५,सज्झाओ पंचहा भवे॥

व्याख्या—वाचनादिभेदाः प्राग्व्याख्याताः ॥ ३४ ॥ ध्यानमाह—

मूलम्—अट्टरुद्दाणि वज्जित्ता, झाएज्जा सुसमाहिओ। धम्मसुक्काइं झाणाइं, झाणं तं तु बुहा वए ॥३५॥

व्याख्या—ऋतं दुःखं तत्र भवमार्त्तं, रुद्रस्य प्राणिवधादिपरिणतस्येदं कर्म रौद्रं आर्त्तं च रौद्रं च आर्त्तरौद्रे वर्जयित्वा ध्यायेत्सुसमाहितः। किमित्याह–धर्मात् क्षमादिदशभेदादनपेतं धर्म्यं, शुचं शोकं क्लमयति निरस्यतीति शुक्लं, अनयोर्द्वन्द्वस्ततो धर्म्यशुक्ले ध्याने स्थिराध्यवसायरूपे, ध्यानं ध्यानाख्यं तपः तत्तु तदेव बुधा वदन्ति ॥३५॥ व्युत्सर्गमाह–

मूलम्—सयणासण ठाणे वा, जे उ भिक्खू न वावरे। कायस्स विउस्सग्गो, छट्ठो सो परिकित्तिओ ॥३६॥

व्याख्या—शयने त्वग्वर्त्तने, आसने उपवेशने, स्थाने वीरासनादौ, वा विकल्पे, प्रत्येकं योज्यः, स्वसामर्थ्यापेक्षया स्थित इति गम्यते, यस्तु भिक्षुर्न 'वावरेत्ति' व्याप्रीयते न चलनादिक्रियां विधत्ते यत्तदोर्नित्याभिसम्बन्धात् तस्य भिक्षोः कायस्य देहस्य व्युत्सर्गश्चेष्टां प्रति त्यागरूपो यः षष्ठं तत्प्रक्रमादभ्यन्तरतपः परिकीर्त्तितं । शेषव्युत्सर्गोपलक्षणं चैतदनेकविधत्वात्तस्य । यदुक्तं–"दव्वे भावे अ तहा दुविहुस्सग्गो चउविहो दव्वे । गणदेहोवहिभत्ते, भावे कोहाइचाओत्ति ॥" इति सूत्रषट्कार्थः ॥३६॥ अथाध्ययनार्थमुपसंहरंस्तपस एव फलमाह—

मूलम्—एअं तवं तु दुविहं, जे सम्मं आयरे मुणी। से खिप्पं सव्वसंसारा, विप्पमुच्चइ पंडिएत्ति बेमि ३७

व्याख्या—स्पष्टम् ॥ ३७ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्यायश्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ त्रिंशत्तममध्ययनं सम्पूर्णम् ॥ ३० ॥

## ॥ अथैकत्रिंशमध्ययनम् ॥

॥ अर्हम् ॥ उक्तं त्रिंशत्तममध्ययनं अथैकत्रिंशं चरणविधिसंज्ञं व्याख्यायते, अस्य चायं सम्बन्धोऽनन्तराध्ययने तप उक्तं तच्चरणवत एव सफलमिति चरणमिहोच्यते, इतिसम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—चरणविहिं पवक्खामि, जीवस्स उ सुहावहं। जं चरित्ता बहू जीवा, तिण्णा संसारसागरं ॥१॥

व्याख्या—चरणस्य विधिरागमोक्तन्यायश्चरणविधिस्तं प्रवक्ष्यामि जीवस्य तुरवधारणे भिन्नक्रमस्ततः सुखावहं तु सुखावहमेव, कथमित्याह—जमित्यादि स्पष्टमिति सूत्रार्थः ॥ १ ॥ प्रतिज्ञातमाह एकोनविंशत्या सूत्रैः

मूलम्—एगओ विरइं कुज्जा, एगओ अ पवत्तणं । असंजमे निअत्तिं च, संजमे अ पवत्तणं ॥ २ ॥

व्याख्या—एकत एकस्माद्विरतिं कुर्यात्, एकतश्च एकस्मिन् प्रवर्त्तनं कुर्यादिति योगः । एतदेवाह—असंयमात् हिंसादिरूपात्, पञ्चम्यर्थे सूत्रे सप्तमी, निवृत्तिं च, संयमे च प्रवर्त्तनं कुर्यादित्यनुवर्त्तते, चकारौ समुच्चये ॥ २ ॥

मूलम्—रागद्दोसे अ दो पावे, पावकम्मपवत्तणे । जे भिक्खू रुंभई निच्चं, से न अच्छइ मंडले ॥ ३ ॥

व्याख्या—रागद्वेषौ च द्वौ पापौ पापप्रकृतिरूपत्वात्पापकर्मणां ज्ञानावरणादीनां प्रवर्त्तकौ यो भिक्षुः रुणद्धि तिरस्कुरुते नित्यं स नास्ते न तिष्ठति मण्डले संसारे । एवमुत्तरसूत्रेष्वपि नित्यमित्यादि व्याख्येयम् ॥ ३ ॥

मूलम्—दंडाणं गारवाणं च, सल्लाणं च तियं तियं । जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥४॥

व्याख्या—दण्डानां चारित्रसर्वस्वापहारिणां त्रिकं मनोवाक्कायदण्डरूपं, गौरवाणां च त्रिकं ऋद्धिरससातगौरवरूपं, शल्यानां त्रिकं मायानिदानमिथ्यात्वशल्यलक्षणं, यो भिक्षुस्त्यजति ॥ ४ ॥

मूलम्—दिव्वे अ जे उवसग्गे, तहा तेरिच्छमाणुसे। जे भिक्खू सहई निच्चं, से न अच्छइ मंडले ॥५॥

व्याख्या—दिव्यांश्च हास १ प्रद्वेष २ परीक्षा ३ पृथग्विमात्राभि ४ र्देवैः कृतानुपसर्गाननुकूलप्रतिकूलक्षोभहेतून्, अत्र पृथग्विमात्राशब्देन हास्यादीनां द्विकसंयोगादय उच्यन्ते, ततो यदि कोपि हास्यद्वेषाभ्यां समुदिताभ्यां, हास्यपरीक्षाभ्यां वा, द्वेषपरीक्षाभ्यां वा, हास्यद्वेषपरीक्षाभिर्वा समुदिताभिरुपसर्गान् करोति तदा पृथग्विमात्रयेत्युच्यते । तथा 'तेरिच्छत्ति' तिरश्चामेते भय १ प्रद्वेषा २ ऽऽहारहेतव ३ पत्यलयनरक्षा ४ हेतोस्तैः क्रियमाणत्वात्तैरश्चाः, तथा 'माणुसेत्ति' मानुषाणामेते हास १ प्रद्वेष २ परीक्षा ३ कुशीलप्रतिसेवनाहेतो ४ स्तैर्विधीयमानत्वान्मानुषकाः, द्वन्द्वे तैरश्चमानुषकास्तानुपलक्षणत्वात् आत्मसंवेदनीयांश्च घट्टन १ प्रपतन २ स्तम्भन ३ संश्लेषणो ४ द्भवान्, वात १ पित्त २ श्लेष्म ३ सन्निपातो ४ द्भवान् वा यो भिक्षुः सहते सम्यगध्यास्ते ॥ ५ ॥

मूलम्—विगहाकसायसण्णाणं, झाणाणं च दुअं तहा। जे भिक्खू वज्जई निच्चं, से न अच्छइ मंडले ६

व्याख्या—विकथाकषायसंज्ञानां प्रतीतानां प्रत्येकं चतुष्कं, 'झाणाणं चत्ति' ध्यानयोश्च द्विकं आर्त्तरौद्ररूपं तथा यो भिक्षुर्वर्जयति । ध्यानस्य चेह प्रस्तावेऽभिधानं चतुर्विधत्वात् ॥ ६ ॥

मूलम्—वएसु इंदियत्थेसु, समिईसु किरियासु अ। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥७॥

व्याख्या—व्रतेषु प्राणातिपातविरमणादिषु, इंद्रियार्थेषु शब्दादिविषयेषु, समितिषु ईर्यादिषु, क्रियासु च कायिक्याधिकरणिकी–प्राद्वेषिकी–पारितापनिकी–प्राणातिपातिकीरूपासु यो भिक्षुर्यतते। व्रतसमितिषु सम्यक्पालनेन, माध्यस्थ्यविधानेन चेन्द्रियार्थेषु, परिहाराच्च क्रियासु यत्नं कुरुते ॥ ७ ॥

मूलम्—लेसासु छसु काएसु, छक्के आहारकारणे ।
जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ८ ॥

व्याख्या—लेश्यासु कृष्णादिषु षट्सु, षट्सु कायेषु पृथिव्यादिषु, षट्के षट्परिमाणे आहारकारणे पूर्वोक्ते यो भिक्षुर्यतते, यथायोगं निरोधोत्पादनरक्षानुरोधविधानेन यत्नं कुरुते ॥ ८ ॥

मूलम्—पिंडुग्गहपडिमासु, भयठाणेसु सत्तसु । जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥९॥

व्याख्या—पिण्डावग्रहप्रतिमासु आहारग्रहणविषयाभिग्रहरूपासु संसृष्टाद्यासु पूर्वोक्तासु सप्तस्विति योगः, तथा भयस्थानेषु इहलोकादिषु सप्तसु, उक्तं च—"इह १ परलोआ २ दाण ३ मकम्हा ४ ऽऽजीय ५ मरण ६ मसिलोए ७ त्ति" यो भिक्षुर्यतते पालनाऽकरणाभ्याम् ॥ ९ ॥

**मूलम्—मएसु बंभगुत्तीसु, भिक्खुधम्मंमि दसविहे। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले १०**

व्याख्या—मदेषु जातिमदादिषु अष्टसु "जाई १ कुल २ बल ३ रूवे ४ तव ५ इस्सरिए ६ सुए ७ लाभे ८ इत्येवंरूपेषु, प्रतीतत्वाच्चेहान्यत्र च सूत्रे संख्यानभिधानम्। ब्रह्म ब्रह्मचर्यं तस्य गुप्तिषु नवसु वसत्यादिषु, यदाहुः—"वसहि १ कह २ निसिज्जि ३ दिअ ४ कुड्डंतर ५ पुव्वकीलिय ६ पणीए ७। अइमायाहार ८ विभूसणा य ९, नव बंभचेरगुत्तीओ ॥ १ ॥" भिक्षुधर्मे दशविधे क्षान्त्यादिके, उक्तं च—"खंती १ मद्दव २ अज्जव ३ मुत्ती ४ तव ५ संजमे ६ अ बोधव्वे। सच्चं ७ सोअं ८ अकिंचणं ९ च बंभं १० च जइधम्मो ॥१॥त्ति" यो भिक्षुर्यतते परिहारादिना ॥१०॥

**मूलम्—उवासगाणं पडिमासु, भिक्खूणं पडिमासु अ। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले११॥**

व्याख्या—उपासकानां श्रावकाणां प्रतिमास्वभिग्रहविशेषरूपासु दर्शनादिषु एकादशसु, यदुक्तं—"दंसण १ वय २ सामाइय ३ पोसह ४ पडिमा ५ अबंभ ६ सचित्ते ७। आरंभ ८ पेस ९ उद्दिट्ठ १० वज्जए समणुभूए ११ य ॥१॥" इह या प्रतिमा यावत्संख्या स्यात्सा उत्कर्षतस्तावन्माससमाना यावदेकादशी एकादशमासप्रमाणा, जघन्यतस्तु सर्वा अप्येकाहादिमानाः स्युस्तत्प्रतिपत्तेरनन्तरमेकादिभिर्दिनैः संयमप्रतिपत्त्या जीवितक्षयाद्वा। प्रथमोक्तं चानुष्ठानमग्रेतनायां सर्वं कार्यं यावदेकादश्यां पूर्वप्रतिमादशकोक्तमपि। तत्राद्यायां निर्दोषं प्रशमादिगुणालङ्कृतं कुग्रहाग्रहविनाकृतं सम्यक्त्वं धर्त्तव्यम् ॥ १ ॥ द्वितीयायां निरतिचाराणि अणुव्रतादीनि सर्वव्रतानि पालनीयानि ॥ २ ॥ तृतीयायामवश्यमुभयसन्ध्यं सामायिकं कार्यम् ॥ ३ ॥ चतुर्थ्यां चतुर्दश्यष्टम्यादिपर्वसु प्रतिपूर्णः पौषधो निरतिचारः कार्यः ॥ ४ ॥ पञ्चम्यामष्टम्यादितिथिषु पौषधमध्ये रात्रौ कायोत्सर्गः कार्यः, शेषदिनेषु च दिन एव भोक्तव्यं न रात्रौ, दिवापि प्रकाशे एव भोक्तव्यं, अबद्धकच्छत्वं, दिवा ब्रह्मचर्यं च धार्यं, रात्रौ स्त्रीणां तद्भोगानां च प्रमाणं कार्यं, कायोत्सर्गे च जिनगुणाः कामादिदोषपरिहारोपायाश्च ध्येयाः ॥ ५ ॥ षष्ठ्यामब्रह्मचर्यं शृङ्गारकामकथादि च सर्वथा त्याज्यम् ॥ ६ ॥ सप्तम्यां सचित्ताहारस्त्याज्यः ॥ ७ ॥ अष्टम्यां स्वयमारम्भोऽपि न कार्यः ॥८॥ नवम्यामन्येनाप्यारम्भो न कारणीयः ॥ ९ ॥ दशम्यां स्वार्थमुद्दिश्य कृतं भक्तादि त्याज्यं, तदा च क्षुरमुण्डेन शिखाधारिणा वा भाव्यम् ॥ १० ॥ एकादश्यां प्रतिग्रहादिसाधूपकरणं धृत्वा लोचं क्षुरमुण्डं वा कारयित्वा श्रमणवत्सर्वमनुष्ठानं कुर्वता 'प्रतिमाप्रतिपन्नाय श्रमणोपासकाय भिक्षां दत्त' इतिभाषमाणेन ग्रामादिषु मासकल्पादिविधिना विहर्त्तव्यम् ॥ ११ ॥ तथा भिक्षूणां प्रतिमासु मासिक्यादिषु द्वादशसु, आह च—"मासाई सत्तंता ७ पढमा ८ बिअ ९ तइअ १० सत्तराइदिणा। अहराइ ११ एगराई १२ भिक्खुपडिमाण बारसगं" अत्र प्रथमा एकमासिकी यावत्सप्तमी सप्तमासिकी, तदनु तिस्रः सप्तरात्रिक्यः १०, अहोरात्रिकी ११, एकरात्रिकी १२, च ॥ १ ॥ "पडिवज्जइ एआओ, संघयणी धिइजुओ महासत्तो। पडिमाओ भाविअप्पा, सम्मं गुरुणा अणुण्णाओ ॥" संहननं वज्रऋषभनाराचादेरन्यतरत्, धृतिर्मनःस्वास्थ्यं तद्युक्तः, महासत्त्व उपसर्गादौ, भावितात्मा, प्रतिमायोग्यानुष्ठानेन गुरुणाऽनुज्ञातः, अथ चेद्गुरुरेव प्रतिपत्ता तदा स्थानाचार्येण गच्छेन वाऽनुज्ञायते ॥ २ ॥ "गच्छेच्चिअ निम्माओ, जा पुव्वा दस भवे असंपुण्णा। नवमस्स तइअवत्थु, होइ जहन्नो सुआभिगमो" प्रतिपत्ता गच्छे एव तिष्ठन् निर्मातः आहारादिविषये प्रतिमायोग्यपरिकर्मणि निष्ठितः, सप्तसु यावत्परिमाणा तस्यास्तत्परिमाणमेव परिकर्म। तथा न वर्षास्वेताः प्रतिपद्यते, न च परिकर्म करोति। आसु चादिमं द्वयं एकत्रैव वर्षे, द्वितीयमेकैकवर्षे, अन्यास्तिस्रः अन्यान्यवर्षे, अन्यत्र वर्षे परिकर्मान्यत्र च प्रतिपत्तिः, तदेवं नवभिर्वर्षैराद्याः सप्त समाप्यन्ते। अस्य च श्रुतं जघन्यतो नवमपूर्वतृतीयवस्तुयावत्, उत्कर्षतस्तु किञ्चिदूनानि दश पूर्वाणि। सम्पूर्णदशपूर्वधरो हि अमोघवचनत्वात् धर्मोपदेशेन भव्योपकारित्वेन तीर्थवृद्धिकारित्वात् प्रतिमा न प्रतिपद्यते। न च पूर्वगतश्रुतं विना एताः प्रतिपद्यते, निरतिशयित्वात्कालादि न जानातीति ॥ ३ ॥ "वोसट्ठ चत्तदेहो, उवसग्गसहो जहेव जिणकप्पी। एसणअभिग्गहीआ, भत्तं च अलेवडं तस्स" व्युत्सृष्टः परिकर्माभावेन त्यक्तश्च ममत्वाभावे देहो येन स तथा, यथैव जिनकल्पी

तथैवोपसर्गसहः स्यात्, एषणा पिण्डग्रहणप्रकारः संसृष्टादिः सप्तधा सा अभिगृहीता अभीग्रहवती स्यात्, तद्यथा–सप्तसु भक्तपानैषणासु अन्त्याश्चतस्र एव ग्राह्याः, तत्रापि आद्ययोरग्रहणं। पुनरपि विवक्षितदिवसेऽन्त्यानां पञ्चानां मध्ये द्वयोरभिग्रहः। एका भक्ते एका च पानके इति। भक्तं पुनरलेपकृत्तस्य इत्यादि परिकर्म कृत्वा ॥ ४ ॥ "गच्छाविणिक्खमित्ता, पडिवज्जे मासिअं महापडिमं। दत्तेगभोअणस्सा, पाणस्सवि एग जा मासं" यद्याचार्यः प्रतिपत्ता तदा स्वल्पकालं साध्वन्तरे स्वपदं न्यस्य शरत्काले स्वगणं क्षमयति, प्रतिमाप्रतिपन्नश्चैवं प्रवर्त्तते ॥ ५ ॥ "जत्थत्थमेइ सूरो, न तओ ठाणा पयंऽपि संचलइ। नाएगराइवासी, एगं व दुगं व अण्णाए।" ज्ञाते उपलक्षिते एकरात्रं वसति, एकं वा द्वे वा दिने अज्ञाते ॥ ६ ॥ "दुट्ठाण हत्थिमाईण, नो भएणं पयंपि ओसरई। एमाइ नियमसेवी, विहरइ जाऽखंडिओ मासो ॥ ७ ॥ पच्छा गच्छमुवेई, एवं दुमासी तिमासि जा सत्त। नवरं दत्ती वड्ढइ, जा सत्त उ सत्तमासीए ॥ ८ ॥ तत्तो अ अट्ठमीआ, हवइह पडिमा उ सत्तराइदिणा। तीइ चउत्थचउत्थे ण, पाणएणं इह विसेसो"। अष्टम्यामयं विशेषो यच्चतुर्विधाहारांश्चतुर्थान् करोति, इहापि च पारणकेऽप्याचाम्लं कार्यं, दत्तिनियमस्तु नास्ति ॥ ९ ॥ तथा "उत्ताणग–पासल्ली, नेसज्जी आवि ठाण ठाइत्ता। सहइ उवसग्गे घोरे, दिव्वाई तत्थ अविकंपो"। उत्तानक ऊर्ध्वमुखशयितः, पासल्ली पार्श्वमुखशयितः, निषद्यावान् समपुततयोपविष्टः, स्थानमुक्तरूपं स्थित्वा ग्रामादिभ्यो बहिरिति शेषः ॥ १० ॥ "दुचावि एरिसच्चिअ, बहिआ गामाइआण नवरं तु। उक्कडु लगंडसाई, दंडायअओ व ठाएज्जा"। उत्कटुको भूमावन्यस्तपुततयोपविष्टः,'लगंडं' दुःस्थितं काष्ठं तद्वच्छेते यः स लगण्डशायी शीर्षपार्ष्णिभिरेव स्पृष्टभूभागो न पृष्ठेन, दण्डवदायतो दीर्घो दण्डायतः, वा विकल्पार्थः, स्थित्वा दिव्याद्युपसर्गान् सहते इति शेषः ॥ ११ ॥ "तच्चावि एरिसच्चिअ, नवरं ठाणं तु तस्स गोदोही। वीरासणमहवावी, ठाइज्जा अंबखुज्जो वा"। तिष्ठेदाम्रकुब्जो वा आम्रफलवद्वक्राकारेणावस्थित इत्यर्थः ॥ १२ ॥ एमेव अहोराई, छट्ठंभत्तं अपाणगं नवरं। गामनगराण बहिआ, वग्घारिअपाणिए ठाणं।" एवं पूर्वोक्तनीत्या 'वग्घारिअपाणिएत्ति' प्रलम्बितभुजस्य स्थानं भवति, अहोरात्रिकी प्रतिमा दिनत्रयेण याति, अहोरात्रान्ते षष्ठभक्तकरणात् ॥ १३ ॥ "एमेव एगराई, अट्ठमभत्तेण ठाण वाहिरओ। ईसिंपब्भारगए, अणिमिसनयणेगदिट्ठीए"। अहोरात्रिकीवदेकरात्रिकी अपानाष्टमभक्तेन यत्स्थानं कायोत्सर्गस्तत्कर्त्तुं बहिर्ग्रामादेस्तिष्ठतीति योगः, ईषत्प्राग्भारगत ईषदवनतो नद्यादिदुस्तटीस्थितो वाऽसौ स्यात्, अनिमीषनेत्र एकपुद्गलन्यस्तदृष्टिः ॥ १४ ॥ "साहट्टु दोवि पाए, वग्घारियपाणि ठायए ठाणं। वग्घारियलंबिभुओ, सेस दसासु जहा भणिअं"। संहृत्य चतुरङ्गुलान्तरं कृत्वेत्यर्थः वाघारितपाणिः प्रलम्बितभुजस्तिष्ठति स्थानं कायावस्थानविशेषं, इयं प्रतिमाऽहोरात्रानन्तरमष्टमकरणाच्चतूरात्रिंदिवमाना स्यात्, अस्याश्च सम्यक् पारङ्गतोऽवधिमनःपर्यायकेवलज्ञानानामन्यतमां लब्धिं प्राप्नोति इति, शेषं दशाश्रुतस्कन्धानुसारेण ज्ञेयं। यो भिक्षुर्यतते यथावत्परिज्ञानोपदेशादिभिः ॥ ११ ॥

मूलम्—किरिआसु भूअग्गामेसु, परमाहम्मिएसु य।
जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १२ ॥

व्याख्या—क्रियासु कर्मबन्धनिबन्धनभूतचेष्टासु अर्थानर्थादिभेदैस्त्रयोदशसु, यदुक्तं–"अट्ठा १ ऽणट्ठा २ हिंसा ३ कम्हा ४ दिट्ठीय ५ मोस ६ अदिण्णे ७। अज्झत्थ ८ माण ९ मित्ते १० माया ११ लोभे १२ रियावहिया ॥ १३॥ तत्र अर्थेन स्वपरप्रयोजनेन क्रिया पृथिव्यादिप्राणिवधोऽर्थक्रिया ॥ १ ॥ तद्विपरीता विनापि प्रयोजनं या प्रयुज्यते सा अनर्थक्रिया ॥ २ ॥ अमां मां हतवान् हन्ति हनिष्यति वा तदेनं हन्मीति यद्दण्डारम्भणं सा हिंसाक्रिया ॥ ३ ॥ यत्रान्यार्थं बाणादि मुञ्चन्नन्यं हिनस्ति सा अकस्मात् क्रिया ॥ ४ ॥ यत्राऽशत्रुमपि शत्रुरसौ ममेति बुद्ध्या हिनस्ति सा 'दिट्ठीत्ति' दृष्टिविपर्यासक्रिया ॥ ५ ॥ 'मोसत्ति' स्वस्य स्वजनानां वा हेतोर्यन्मृषा वक्ति सा मृषाभाषाक्रिया ॥ ६ ॥ 'अदिण्णेत्ति' स्वपरादिकृते यददत्तस्य ग्रहणं साऽदत्तग्रहणक्रिया ॥ ७ ॥ यत्र वाह्यहेतुं विनापि दौर्मनस्यं साऽध्यात्मक्रिया ॥ ८ ॥ यत्तु जातिमदादिना मत्तः परं हीलयति सा मानक्रिया ॥ ९ ॥ 'मित्तत्ति' मित्राणामुपलक्षणत्वान्मातापित्रादिस्वजनानां स्वल्पेऽप्यपराधे यद्वधबन्धादितीव्रदण्डकरणं सा मित्रद्वेषप्रवृत्तिक्रिया ॥ १० ॥ माय्या दम्भेन यदन्येषां वधादिकरणं सा मायाक्रिया ॥ ११ ॥ लोभेन तु तत्करणं लोभक्रिया ॥ १२ ॥ या पुनः

सततमप्रमत्तस्य भगवतो योगीन्द्रस्य योगाद्ध्वनि सा ऐर्यापथिकी क्रिया ॥ १३ ॥ तथा भूतग्रामा जीवसङ्घाताश्चतुर्दश ते चामी—"एगिंदिय सुहुमि १ यरा २, सन्नि ३ अर—पणिंदिआ ४ य सबि—ति-चऊ ७ । अपज्जत्ता पज्जत्ता, भेएणं चउदस १४ ग्गामा ॥ १ ॥" तेषु । तथा परमाश्च ते अधार्मिकाश्च परमाधार्मिकास्तेषु पञ्चदशसु असुरविशेषेषु, यदुक्तं—"अंबे १ अंबरिसी २ चेव, सामे ३ सबले ४ त्ति आवरे । रुद्दो ५ वरुद्द ६ काले अ ७, महाकालेत्ति ८ आवरे ॥ १ ॥ असिपत्ते ९ धणू १० कुंभे ११, वालू १२ वेअरणी १३ इय । खरस्सरे १४ महाघोसे १५, एए पणरसाहिया ॥ २ ॥" तेषु यो भिक्षुर्यतते, यथायोगपरिहाररक्षणज्ञानैः ॥ १२ ॥

मूलम्—गाहासोलसएहिं, तहा अस्संजमम्मि य ।
जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १३ ॥

व्याख्या—गाथा गाथाभिधानमध्ययनं षोडशं येषां तानि गाथाषोडशकानि सूत्रकृताङ्गप्रथमश्रुतस्कन्धाध्ययनानि तेषु, "समओ १ वेआलिअं २, उवसग्गपरिण्ण ३ थीपरिण्णा य ४ । निरयविभत्ती ५ वीरत्थओ ६ य कुसीलाण परिभासा ७ ॥ १ ॥ वीरिय ८ धम्म ९ समाही १०, मग्ग ११ समोसरण १२ अहतहं १३ गंथो १४ । जमतीतं १५ तह गाथा १६, सोलसमं होइ अज्झयणं ॥ २ ॥" तथा असंयमे च सप्तदशभेदे पृथिव्यादिविषये. सप्तदशसंख्यात्वं चास्य तद्विपक्षस्य संयमस्य सप्तदशभेदत्वात्, यदाहुः—"पुढवि १ दग २ अगणि ३ मारुय ४, वणस्सइ ५ बि ६ ति ७ चउ ८ पणिंदि ९ अज्जीवे १० । पेहु ११ प्पेह १२ पमज्जण १३, परिट्ठवण १४ मणो १५ वई १६ काए १७ ॥ १ ॥" पृथिव्यादीनां संघट्टादिपरिहारेण नवधा संयमः ९, अजीवसंयमस्तु अजीवानां सत्त्वोपमर्दहेतूनां पुस्तकपञ्चक—तृणपञ्चकादीनामुत्सर्गेणाऽग्रहणरूपः, अपवादतस्तु ग्रहणेऽप्येषां यतनया व्यापारणरूपः ॥ ॥ १० ॥ प्रेक्षासंयमश्चक्षुषा वीक्ष्य यत्कार्यकरणं ॥ ११ ॥ उपेक्षासंयमो द्विधा साधुगृहिविषये नोदनाऽनोदनात्मकः ॥ १२ ॥ प्रमार्जनासंयमः सागारिकसमक्षं पादौ न प्रमार्ष्टि, तदभावे तु प्रमार्जयतीत्यादिकः ॥ १३ ॥ परिष्ठापनासंयमो विधिना दोषदुष्टाहारनिष्ठमूत्रादिपरिष्ठापनं कुर्वतः ॥ १४ ॥ मनःसंयमोऽकुशलस्य मनसो निरोधः कुशलस्य तस्योदीरणम् ॥ १५ ॥ एवं वाक्संयमोऽपि ॥ १६ ॥ कायसंयमः सति कार्ये उपयोगवता गमनागमनादिकार्यं, तदभावे संलीनकरचरणेन स्थेयम् ॥ १७ ॥ यो भिक्षुर्यतते एकत्र तदुक्तानुष्ठानादन्यत्र तु परित्यागात् ॥ १३ ॥

मूलम्—बंभंमि नायज्झयणेसु, ठाणेसु असमाहिए ।
जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १४ ॥

व्याख्या—ब्रह्मणि ब्रह्मचर्येऽष्टादशप्रकारे, उक्तञ्च—"दिव्यौदारिककामानां, कृतानुमतिकारितैः । मनोवाक्कायतस्त्यागो, ब्रह्माष्टादशधा मतम् ॥ १ ॥" तथा ज्ञाताध्ययनेषु उत्क्षिप्तज्ञातादिष्वेकोनविंशतौ, यदाहुः—"उक्खित्तणाए १ संघाडे २, अंडे ३ कुम्मे अ १३ सेलए ५ । तुंबे ६ अ रोहिणी ७ मल्ली ८, मायंदी ९ चंदिमा १० इअ ॥ १ ॥ दावद्दवे ११ उदगनाए १२, मंडुके १३ तेअली १४ इय । नंदिफले १५ अवरकंका १६, आइण्णे १७ सुंसु १८ पुंडरीए १९ ॥ २ ॥ त्ति" तथा स्थानेषु आश्रयेषु कारणेष्वित्यर्थः, कस्येत्याह—असमाधेः । तत्र समाधिर्ज्ञानादिषु चित्तैकाग्र्यं, न समाधिरसमाधिस्तस्य, तानि च विंशतिस्तथा हि—द्रुतद्रुतचारित्वं, द्रुतचारित्वे हि पतनादिना आत्मानमसमाधौ योजयेत्, जीववधे सत्यन्यानपि, परलोके वात्मनः सत्त्ववधनिर्मितकर्मणा असमाधिः स्यात् । एवमन्येष्वप्यसमाधिस्थानत्वं भावनीयम् ॥ १ ॥ अप्रमार्जितेऽवस्थानादि ॥ २ ॥ दुष्प्रमार्जितेऽवस्थानादि, अनयोः सर्पादिनाऽऽत्मनोऽसमाधिः ॥ ३ ॥ अतिरिक्तशय्यासनत्वं अतिविस्तीर्णशालादौ अन्यैरधिकरणादिना आत्मपरासमाधिः, एकाधिकपीठाद्यासेवनेऽपि तथैव ॥ ४ ॥ रत्नाधिकपराभवनम् ॥ ५ ॥ स्थविरपरिभवनम् ॥ ६ ॥ भूतोपघातः प्रमादादेकेन्द्रियादिहननम् ॥ ७ ॥ संज्वलनं क्षणे २ रोषः ॥ ८ ॥ क्रोधनं दीर्घकोपकरणम् ॥ ९ ॥ पृष्ठमांसिकं परोक्षे परापवादः ॥ १० ॥ अभीक्ष्णं अवधारिणीभाषया भाषणम् ॥ ११ ॥ नवाधिकरणकरणं, अन्यान्यकलहसन्तानयोजनम् ॥ १२ ॥ उदीरणमुपशान्तकलहानामुदीरणम् ॥ १३ ॥ अकाले स्वाध्यायकरणं, अनेन हि प्रान्तदेवता असमाधौ योजयन्ति ॥ १४ ॥ सचित्तपृथ्वीरजःस्पृष्टपाणिना भिक्षाग्रहणं, एवं सरजःपादेनास्थण्डिलगमने

पादाप्रमार्जनम् ॥ १५ ॥ विकालेपि महच्छब्दकरणम् ॥ १६ ॥ कलहकरणम् ॥ १७ ॥ झंझो गणभेदस्तत्करणम् ॥ १८ ॥ सूर्योदयादारभ्यास्तंयावद्भोजनम् ॥ १९ ॥ एषणासमितेरपालनम् ॥ २० ॥ एषु यो भिक्षुर्यतते पालनज्ञानत्यागैः ॥ १४ ॥

**मूलम्—इक्कवीसाए सबलेसु, बावीसाए परीसहे। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले १५**

व्याख्या—एकविंशतौ शबलयन्ति कर्बुरीकुर्वन्ति चारित्रमिति शबलाः क्रियाविशेषास्तेषु, ते चामी-हस्तकर्म कुर्वन् शबलः, अत्र क्रियाक्रियावतोः कथञ्चिदभेदाभ्युपगमादेवमुच्यते, एवं सर्वत्र ॥ १ ॥ अतिक्रमव्यतिक्रमातिचारैर्मैथुनं सेवमानः ॥ २ ॥ रात्रौ भुञ्जानः ॥ ३ ॥ आधाकर्म ४ राजपिण्ड ५ क्रीत ६ प्रामित्या ७ भ्याहृता ८ च्छेद्यानि ९ भुञ्जानः, तत्र प्रामित्यमुद्धारकगृहीतं, अभ्याहृतं स्वपरग्रामादेरानीतं, आच्छेद्यमुद्दाल्य गृहीतम्। प्रत्याख्यातभिक्षां भुञ्जानः ॥ १० ॥ षण्मासान्तर्गणाद्गणं संक्रामन् ॥ ११ ॥ मासान्तस्त्रीन् दकलेपान् कुर्वाणः, तत्रार्द्धजङ्घादघ्ने पयस्यवगाह्यमाने संघट्टः, नाभिदघ्ने पयसि तु लेपः, नाभेरुपरि तु जले प्राप्ते लेपोपरि कथ्यते। तथा मासान्तस्त्रीण्यपराधप्रच्छादनरूपाणि मायास्थानानि कुर्वन् ॥ १२ ॥ उपेत्य प्राणातिपातं कुर्वन् ॥ १३ ॥ उपेत्य मृषा वदन् ॥ १४ ॥ उपेत्यादत्तमाददानः ॥ १५ ॥ अव्यवधानायां सचित्तपृथ्व्यां ऊर्ध्वस्थानशयनोपवेशनानि कुर्वन् ॥ १६ ॥ एवं-संस्निग्धायां सचित्तरजोव्याप्तायां च भुवि सचित्तशिलादौ घुणादिजीवावासे काष्ठादौ वा स्थानादि कुर्वन् ॥ १७ ॥ साण्डे त्रसजीवान्विते बीजहरितावश्यायोत्तिङ्गपनकाम्बुमृत्तिकामर्कटसन्तानसहिते विष्टरादौ स्थानादि कुर्वाणः ॥ १८ ॥ उपेत्य कन्दमूलपुष्पफलबीजहरितानि भुञ्जानः ॥ १९ ॥ वर्षमध्ये दश दकलेपान् मातृस्थानानि च कुर्वन् ॥ २० ॥ उपेत्य सचित्तजलार्द्रहस्तदर्वीभाजनादिनाशनादि गृहीत्वा भुञ्जानः ॥ २१ ॥ द्वाविंशतौ परीषहेषु पूर्वोक्तेषु यो भिक्षुर्यतते परिहारसहनादिभिः ॥ १५ ॥

**मूलम्—तेवीसइ सूअगडे, रूवाहिएसु सुरेसु य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥१६॥**

व्याख्या—त्रयोविंशत्यध्ययनयोगात् त्रयोविंशति तच्च तत्सूत्रकृतं च त्रयोविंशतिसूत्रकृतं, त्रयोविंशतिः सूत्रकृताध्ययनानि चाम्नि—"पुंडरीय १ किरिअठाणं २, आहारपरिण्ण ३ अपच्चक्खाणकिरिआ ४ य। अणगार ५ अद्द ६ नालंद ७, सोलसाइं च तेवीसं ॥ १ ॥" अत्र 'सोलसाइंति' षोडश च समयादीनि पूर्वोक्तानीति त्रयोविंशतिः। तथा रूपमेकस्तदधिकेषु प्रक्रमात् सूत्रकृताध्ययनेभ्यः सुरेषु च भवनपतिव्यन्तरज्योतिष्कवैमानिकरूपेषु यथाक्रमं दशाष्टपञ्चैकविधेषु यो भिक्षुर्यतते यथावत्प्ररूपणादिना ॥ १६ ॥

**मूलम्—पणवीसभावणाहिं, उद्देसेसु दसाइणं। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥१७॥**

व्याख्या—पंचविंशतौ 'भावणाहिंति' भावनासु महाव्रतविषयासु, उक्तं हि—"पणवीसं भावणाओ पण्णत्ताओ तंजहा—पढमव्वए, इरिआसमिई १ मणगुत्ती २ वयगुत्ती ३ आलोइऊण पाणभोअणं ४ आयाणभंडमत्तनिक्खेवणासमिई ॥ ५ ॥ बीअव्वए, अणुवीअभासणया १ कोहविवेगे २ लोहविवेगे ३ भयविवेगे ४ हासविवेगे ॥ ५ ॥ तइअव्वए, उग्गहअणुण्णवणया १ उग्गहसीमजाणणया २ सयमेव उग्गहअणुगिण्हणया ३ साहम्मिअउग्गहं अणुण्णविअ भुंजणया ४ साहारणभत्तपाणं अणुण्णविअ परिभुंजणया ॥ ५॥ चउत्थव्वए, इत्थिपसुपंडगसंसत्तसयणासणवज्जणया १ इत्थीकहविवज्जणया २ इत्थीइंदिआण आलोयणवज्जणया ३ पुव्वरयपुव्वकीलिआणं विसयाणं असरणया ४ पणीयाहारविवज्जणया ॥ ५ ॥ पंचमव्वए, सोइंदियरागोवरमे १ एवं पंचवि इंदिआ ॥ ५ ॥ एवं ॥ २५ ॥ 'उद्देसेसुत्ति' उद्देशेषु उद्देशनकालेषु दशादीनां दशाकल्पव्यवहाराणां षड्विंशतौ इति शेषः, उक्तं हि—"दस उद्देसणकाला, दसाण कप्पस्स होंति छच्चेव। दस चेव य ववहारस्स, होंति सव्वेवि छव्वीसं ॥ १ ॥ यो भिक्षुर्यतते परिभावनाप्ररूपणादिभिः ॥ १७ ॥

**मूलम्—अणगारगुणेहिं च, पकप्पंमि तहेव य। जो भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥१८॥**

व्याख्या—अनगारगुणा व्रतादयः सप्तविंशतिः, "वयछक्क ६ मिंदिआणं च निग्गहो ११ भाव १२ करणसच्चं च १३। खमया १४ विरागया १५ विय, मणमाईणं निरोहो अ १८ ॥ १ ॥ कायाण छक्क २४ जोगंमि जुत्तया

२५ वेयणाहिआसणया २६ । तह मारणंतिअहिआसणा य २७ एएऽणगारगुणा ॥ २ ॥ " प्रकृष्टः कल्पो यतिव्यवहारो यत्र स प्रकल्पः, स चेहाचाराङ्गमेव शस्त्रपरिज्ञाद्यष्टाविंशत्यध्ययनात्मकं तस्मिन्, उक्तं च—"सत्थपरिण्णा १ लोगविजओ २ सीओसणिज्ज ३ मम्मत्तं ४ । आवंति ५ धुव ६ विमोहो ७ उवहाणसुअं ८ महपरिण्णा ९ ॥ १ ॥ पिंडेसण १० सेज्जि ११ रिआ १२, भासा १३ वत्थेसणा य १४ पाएसा १५ । उग्गहपडिमा १६ सत्तिक्कसत्तया २३ भावण २४ विमुत्ती २५ ॥ २ ॥ उग्घाय २६ मणुग्घायं २७, आरोवण २८ तिविहमो णिसीहं तु । इअ अट्ठावीसविहो, आयारपकप्पनामो उ ॥ ३ तथैव तेनैव यथावदासेवनादिप्रकारेण तुः पूर्तौ यो भिक्षुर्यतते॥१८॥

मूलम्—पावसुयपसंगेसु, मोहट्ठाणेसु चेव य । जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥१९॥

व्याख्या—पापश्रुतेषु प्रसङ्गास्तथाविधासक्तिरूपाः पापश्रुतप्रसङ्गाः तेषु एकोनत्रिंशद्भेदेषु, उक्तं च—"अट्ठंगनिमित्ताइं, दिव्वु १ प्पायं २ तलिक्ख ३ भोमं च ४ । अंग ५ स्सर ६ लक्खण ७ वंजणं च ८ तिविहं पुणेक्केक्कं ॥ १ ॥ त्रैविध्यमेवाह—सुत्तं १ वित्ती २ तह वत्तिअं ३ च २४ पावसुअमउणतीसविहं । गंधव्व २५ नट्ट २६ वत्थुं २७ आउं २८ धणुवेअसंजुत्तं २९ ॥ २ ॥ तत्र दिव्यं व्यन्तराट्टहासादि ॥ १ ॥ उत्पातं सहजरुधिरवृष्ट्यादि ॥ २ ॥ आन्तरिक्षं ग्रहभेदादि ॥ ३ ॥ भौमं भूकम्पादि ॥ ४ ॥ आङ्गमङ्गस्फुरणादि ॥ ५ ॥ स्वरं षड्जादिकं ॥ ६ ॥ लक्षणं पुरुषादीनां ॥ ७ ॥ व्यञ्जनं मषादि ॥ ८ ॥ 'वत्थुंति' वास्तुविद्या 'आउंत्ति' वैद्यकं । 'मोहट्ठाणेसुत्ति' मोहो मोहनीयं तस्य स्थानेषु त्रिंशत्संख्येषु, तथा हि—नद्यादिजलमध्ये प्रविश्य रौद्राध्यवसायेन त्रसप्राणिहननम् ॥ १ ॥ हस्तेन मुखादीनि पिधाय हृदये सदुःखनादं रटतश्छागादिजन्तोर्मारणम् ॥ २ ॥ शीर्षावेष्टेनार्द्रचर्मादिना शिरो वेष्टयित्वा जन्तोर्हननम् ॥ ३ ॥ मुद्गरादिना शीर्षे आहत्य दुःखमारेण प्राणिघातः ॥ ४ ॥ बहुजनस्य नेता त्राता यो भवति तद्व्यापादनम् ॥ ५ ॥ सर्वसाधारणस्यापि ग्लानादेः सत्यपि सामर्थ्ये कृत्याकरणम् ॥ ६ ॥ निर्द्धर्मतया भिक्षाद्यर्थमुपस्थितस्य मुनेर्घातः ॥ ७ ॥ मुक्तिसाधकमार्गात्स्वस्यान्यस्य वा कुयुक्तिभिर्व्यामोहापादनेन परिभ्रंशः ॥ ८ ॥ जिनानामवर्णवादः ॥ ९ ॥ आचार्यादीनां जात्यादिना निन्दनम् ॥ १० ॥ तेषामेव वैयावृत्त्याद्यकरणम् ॥ ११ ॥ पुनः पुनरधिकरणमुत्पाद्य तीर्थभेदः ॥ १२ ॥ जानतोऽपि तद्दोषं वशीकरणादीनां प्रयोगः ॥ १३ ॥ वान्तकामस्याप्यैहिकामुष्मिकविषयाणां प्रार्थनम् ॥ १४ ॥ अबहुश्रुतस्यापि स्वस्य बहुश्रुतोऽहमिति भाषणम् ॥ १५ ॥ तथा अतपस्विनोऽपि तपस्वी अहमिति भाषणम् ॥ १६ ॥ गृहादिमध्ये लोकं क्षिप्त्वा सधूमाग्निप्रदीपनम् ॥ १७ ॥ स्वयमकार्यं कृत्वाऽन्येन कृतमिति कथनम् ॥ १८ ॥ अशुभमनोयोगयुक्तत्वेन प्रचुरमायाप्रयोगात्सकललोकवञ्चनम् ॥ १९ ॥ सत्यं वदन्तमन्यं मृषा ब्रवीति कथनम् ॥ २० ॥ अक्षीणकलहत्वम् ॥ २१ ॥ मार्गे लोकान्प्रवेश्य तद्वित्तहरणम् ॥ २२ ॥ विश्वास्य जनं तत्कलत्राणामुपभोगः ॥ २३ ॥ अकुमारस्यापि कुमारोऽहमिति भाषणम् ॥ २४ ॥ एवमब्रह्मचारिणोऽपि ब्रह्मचार्यहमिति भणनम् ॥ २५ ॥ येनैवैश्वर्यं नीतस्तस्यैव वित्तहरणम् ॥ २६ ॥ यत्प्रभावादभ्युदितस्तस्यैव भोगाद्यन्तरायकरणम् ॥ २७ ॥ सेनापतिपाठकनृपश्रेष्ठिव्यापादनम् ॥ २८ ॥ अपश्यतोऽपि पश्यामि देवानिति कथनम् ॥ २९ ॥ किं काम-गर्द्दभैर्देवैरित्यादिको देवानामवर्णवादः ॥ ३० ॥ इति रूपेषु यो भिक्षुर्यतते त्यागादिना ॥ १९ ॥

मूलम्—सिद्धाइगुणजोएसु, तित्तीसासायणासु य । जे भिक्खू जयई निच्चं, से न अच्छइ मंडले २०

व्याख्या—सिद्धानामतिशायिनो गुणाः सिद्धातिगुणा एकत्रिंशत्, ते च संस्थान ५ वर्ण ५ गन्ध २ रस ५ स्पर्श ८ वेदाभावा २८ कायत्वा २९ ऽसङ्गत्वा ३० ऽजन्मत्व ३१ रूपाः, नवविधदर्शनावरणचतुर्विधायुष्कपञ्चविधज्ञानावरणपञ्चविधान्तरायद्विद्विभेदवेदनीयगोत्रमोहनामकर्मणामभावरूपा वा । 'जोगेसुत्ति' सूचकत्वात् सूत्रस्य योगसंग्रहा यैर्योगाः शुभमनोवाक्कायव्यापाराः संगृह्यन्ते, ते च द्वात्रिंशदमी—शिष्येण प्रशस्तयोगसंग्रहाय आचार्यायालोचना दातव्या ॥१॥ आचार्येणापि प्रशस्तयोगसंग्रहार्थमेव दत्तायामालोचनायां निरपलापेनैव भाव्यं नान्यस्मै वाच्यम् ॥२॥ सर्वसाधुभिरापत्सु दृढधर्मता कार्या ॥ ३ ॥ ऐहिकामुष्मिकफलानपेक्षं तपः कार्यम् ॥ ४ ॥ ग्रहणासेवने शिक्षे आसेवितव्ये ॥ ५ ॥ निष्प्रतिकर्मशरीरत्वं कार्यम् ॥ ६ ॥ यथा नान्यो वेत्ति तथा तपः कार्यम् ॥ ७ ॥ अलोभता ॥ ८ ॥ परिषहादिजयः ॥ ९ ॥ आर्जवम् ॥ १० ॥ संयमविषये शुचित्वम् ॥ ११ ॥ सम्यक्त्वशुद्धिः ॥ १२ ॥ चित्तसमाधिः ॥ १३ ॥ आचारपरिपालने मायाया अकरणम् ॥ १४ ॥ विनयोपगतत्वेन मानाकरणम् ॥ १५ ॥ धृतिप्रधाना मतिर्धृ-

तिमतिर्धार्या ॥ १६ ॥ संवेगपरता ॥ १७ ॥ स्वदोषप्रच्छादनार्थं या माया सा प्रणिधिरुच्यते सा त्याज्या ॥ १८॥ सुविधिकारिता ॥ १९ ॥ संवरः ॥ २० ॥ आत्मदोषोपसंहारः ॥ २१ ॥ सर्वकामविरक्तत्वभावना ॥ २२ ॥ मूलगुणप्रत्याख्यानम् ॥ २३ ॥ उत्तरगुणप्रत्याख्यानं ॥ २४ ॥ द्रव्यभावविषयो व्युत्सर्गः ॥ २५ ॥ अप्रमत्तता ॥२६॥ क्षणे २ सामाचार्यनुष्ठानम् ॥ २७ ॥ ध्यानसम्भृतता ॥ २८ ॥ मारणान्तिकवेदनोदयेप्यक्षोभता ॥ २९ ॥ सङ्गानां प्रत्याख्यानम् ॥ ३० ॥ प्रायश्चित्तकारिता ॥ ३१ ॥ मरणान्ताराधना ॥ ३२ ॥ ततो द्वन्द्वे सिद्धातिगुणयोगास्तेषु। त्रयस्त्रिंशदाशातनासु च अर्हदादिविषयासु प्रतिक्रमणसूत्रोक्तासु, पुरतः शिष्यगमनादिषु वा समवायाङ्गोक्तासु ताश्चेमाः शिष्यो राजन्यस्याचार्यादेः पुरतः १ पार्श्वतो वा २ पृष्टतो ३ वा अत्यासन्नं गच्छति ॥ ३ ॥ एवं तिष्ठति ॥ ६ ॥ एवमेव च निषीदति ॥ ९ ॥ वहिर्भूमौ गतो गुरोः पूर्वमुभयसाधारणाम्भसा शौचं करोति ॥ १० ॥ गुरोः पूर्वं गमनागमनमालोचयति ॥ ११ ॥ रात्रौ शब्दं कुर्वतो गुरोर्जाग्रदपि प्रतिशब्दं न दत्ते ॥ १२ ॥ श्रावकादिकमालापनीयं गुरोः पूर्वमालापयति ॥ १३ ॥ अशनाद्यानीय पूर्वमन्येषामालोच्य पश्चाद्गुरोरालोचयति ॥ १४ ॥ एवमन्येषां तत्पूर्वमुपदर्शयति ॥ १५ ॥ एवं गुरोः प्रागशनादिनाऽपरान्निमन्त्रयति ॥ १६ ॥ गुरुननापृच्छ्य यो यदिच्छति तत्तस्मै प्रचुरं २ दत्ते ॥ १७ ॥ मनोज्ञं मनोज्ञं स्वयं भुङ्क्ते ॥ १८ ॥ दिनेऽपि गुरोः शब्दयतो न प्रतिवचो दत्ते ॥ १९ ॥ गुरुं प्रति निष्ठुरं मुहुर्वक्ति ॥ २० ॥ गुरुणा शब्दितो यत्र स्थितो गुरुवचः शृणोति तत्र स्थितः एव प्रतिवचो दत्ते ॥ २१ ॥ किं भणसीति गुरुं वक्ति ॥ २२ ॥ त्वमिति वक्ति ॥ २३ ॥ यादृशं गुरुर्वक्ति तादृगमेव प्रतिवक्ति, यथार्य ! किं ग्लानादेर्वैयावृत्त्यादि न करोपीत्यादि गुरुणोक्तस्त्वमेव किं न करोपीत्यादि प्रतिवक्ति ॥ २४ ॥ गुरौ कथां कथयति नो सुमनाः स्यात् ॥ २५ ॥ त्वमेतमर्थं न स्मरसीति वक्ति ॥ २६ ॥ गुरौ कथां कथयति स्वयं कथां वक्तुमारभते ॥ २७ ॥ भिक्षाकालो जात इत्यादिवाक्येनाकालेऽपि पर्षदं भिनत्ति ॥ २८ ॥ अनुत्थितायामेव पर्षदि गुरूक्तमेवार्थं स्वकौशलज्ञापनार्थं सविशेषं वक्ति ॥ २९ ॥ गुरोः संस्तारकं पद्भ्यां घट्टयति ॥३०॥ गुरोः संस्तारके निषीदति शेते वा ॥ ३१ ॥ उच्चासने निषीदति ॥ ३२ ॥ समासने वा ॥ ३३ ॥ यो भिक्षुर्यतते श्रद्धानसेवनवर्जनादिना स न तिष्ठति मण्डले संसारे। इत्येकोनविंशतिसूत्रार्थः ॥२०॥ अध्ययनार्थं निगमयितुमाह—

मूलम्—इइ एएसु ठाणेसु, जो भिक्खू जयई सया। से खिप्पं सव्वसंसारा, विप्पमुच्चइ पंडिए त्ति बेमि ॥

व्याख्या—इत्यनेन प्रकारेण एतेष्वनन्तरोक्तेषु स्थानेषु शेषं स्पष्टमिति सूत्रार्थः ॥२१॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ एकत्रिंशमध्ययनं सम्पूर्णम् ॥ ३१ ॥

## ॥ अथ द्वात्रिंशमध्ययनम् ॥

॥ॐ॥ उक्तमेकत्रिंशमध्ययनं अथ प्रमादस्थानाख्यं द्वात्रिंशमारभ्यते, अस्य चायं सम्बन्धोऽनन्तराध्ययने चरणमुक्तं, तच्च प्रमादस्थानत्यागादेवासेव्यते, तत्त्यागश्च तत्परिज्ञानपूर्वक इति तदर्थमिदमारभ्यते, इतिसम्बन्धस्यास्येदमादिसूत्रम्।

मूलम्—अच्चंतकालस्स समूलयस्स, सव्वस्स दुक्खस्स उ जो पमोक्खो।
तं भासओ मे पडिपुण्णचित्ता, सुणेह एगंतहियं हियत्थं ॥ १ ॥

व्याख्या—अन्तमतिक्रान्तोऽत्यन्तो वस्तुनश्च द्वावन्तौ आरम्भक्षणो निष्टाक्षणश्च, तत्रेहारम्भक्षणलक्षणोऽन्तः परिगृह्यते, तथा चात्यन्तोऽनादिः कालो यस्य सोऽत्यन्तकालस्तस्य, सह मूलेन कषायाविरतिरूपेण वर्त्तते इति समूलकस्तस्य, सर्वस्य दुःखयतीति दुःखः संसारस्तस्य, तुः पूर्त्तौ, यः प्रकर्षेण मोक्षोऽपगमः प्रमोक्षः तं भाषमाणस्य मे, प्रतिपूर्णं प्रस्तुतार्थश्रवणव्यतिरिक्तविषयान्तरागमनेनाखण्डितं चित्तं येषां ते प्रतिपूर्णचित्ताः सन्तो यूयं शृणुत, एकान्तेन निश्चयेन हितं एकान्तहितं, हितस्तत्त्वतो मोक्ष एव तदर्थमिति सूत्रार्थः ॥ १ ॥ प्रतिज्ञातमाह—

मूलम्—नाणस्स सव्वस्स पगासणाए, अण्णाणमोहस्स विवज्जणाए।
रागस्स दोसस्स य संखएणं, एगंतसोक्खं समुवेइ मोक्खं ॥ २ ॥

व्याख्या—ज्ञानस्य मतिज्ञानादेः सर्वस्य पाठान्तरे 'सच्चस्स' सत्यस्य वा प्रकाशनया निर्मलीकरणेन, अनेन ज्ञानात्मको मोक्षहेतुरुक्तः। तथा अज्ञानं मत्यज्ञानादि, मोहो दर्शनमोहनीयं, अनयोः समाहारस्तस्य विवर्जना मिथ्याश्रुतश्रवण-कुदृष्टिसङ्गत्यागादिना परिहाणिस्तया, अनेन सम्यग्दर्शनरूपो मोक्षहेतुरेवोक्तः। रागस्य द्वेषस्य च संक्षयेण विनाशेन, अनेन चारित्रात्मकः स एवोक्तः, रागद्वेषयोरेव तदुपघातकत्वात्। ततश्चायमर्थः—सम्यग्ज्ञानदर्शनचारित्रैरेकान्तसौख्यं समुपैति मोक्षम् अयं च दुःखप्रमोक्षं विना न स्यादित्यनेन स एवोपलक्षित इति सूत्रार्थः ॥ २ ॥ नन्वस्तु ज्ञानादिभ्यो दुःखप्रमोक्षो ज्ञानादीनां तु कः प्राप्तिहेतुरुच्यते ?

मूलम्—तस्सेस मग्गो गुरुविद्धसेवा, विवज्जणा बालजणस्स दूरा।
सज्झायएगंतनिसेवणा य, सुत्तत्थसंचिंतणया धिई य ॥ ३ ॥

व्याख्या—तस्यैषोऽनन्तरोक्तस्य ज्ञानादेर्मोक्षोपायस्य एष मार्गः पन्था उपाय इत्यर्थः, क इत्याह—गुरवो यथास्थितशास्त्राभिधायकाः, वृद्धाश्च श्रुतपर्यायादिना स्थविरास्तेषां सेवा गुरुवृद्धसेवा। विवर्जना बालजनस्य पार्श्वस्थादेर्दूरात् दूरेण, स्वल्पस्यापि तत्सङ्गस्य महादोषत्वात्। स्वाध्यायस्य एकान्तेन व्यामङ्गत्यागेन निषेवणा अनुष्ठानं एकान्तनिषेवणा। चः समुच्चये, सूत्रार्थसञ्चिन्तना, धृतिश्च मनःस्वास्थ्यं, न हि धृतिं विना ज्ञानादिलाभ इति सूत्रार्थः ॥ ३ ॥ यद्येवंविधो ज्ञानादेरुपायस्तर्हि तानि वाञ्छता प्राक् किं कर्त्तव्यमित्याह—

मूलम्—आहारमिच्छे मिअमेसणिज्जं, सहायमिच्छे निउणट्ठबुद्धिं।
निकेअमिच्छेज्ज विवेगजोगं, समाहिकामे समणे तवस्सी ॥ ४ ॥

व्याख्या—अहारमिच्छेन्मितमेषणीयं, न तु तदन्यं। सहायमिच्छेत् निपुणा अर्थेषु जीवादिषु बुद्धिर्यस्य स तथा तं। निकेतमाश्रयमिच्छेद्विवेकः स्त्र्याद्यसंसर्गस्तद्योग्यं तदुचितं। समाधिकामः श्रमणः तपस्वीति सूत्रार्थः ॥ ४ ॥ तादृशसहायालाभे यत्कार्यं तदाह—

मूलम्—ण वा लभिज्जा निउणं सहायं, गुणाहिअं वा गुणओ समं वा।
एक्कोऽवि पावाइं विवज्जयंतो, विहरिज्ज कामेसु असज्जमाणो ॥ ५ ॥

व्याख्या—न निषेधे, वा शब्दश्चेदर्थे, ततश्च न चेल्लभेत निपुणं सहायं गुणैर्ज्ञानादिभिरधिकं गुणाधिकं गुणतो गुणानाश्रित्य समं वा, उभयत्राप्यात्मन इति गम्यते, तदा एकोऽपि पापानि पापहेतुभूतानुष्ठानानि विवर्जयन् विहरेत् कामेषु असजन् प्रतिबन्धमकुर्वन्। तथाविधगीतार्थविषयं चैतदन्यथा एकाकिविहारस्यागमे निषिद्धत्वात्। एतदुक्तौ च मध्यग्रहणे आद्यन्तग्रहणमिति न्यायादाहारवसत्योरप्यपवादोऽवादीति मन्तव्यमिति सूत्रार्थः ॥ ५ ॥ इत्थं सप्रसङ्गं ज्ञानादीनां दुःखप्रमोक्षोपायत्वमुक्तं, इदानीं तु ज्ञानादिप्रतिबन्धकानां दुःखहेतूनां च मोहादीनां यथोत्पादो यथा दुःखहेतुत्वं यथा च क्षयस्तत्क्षये च यथा दुःखक्षयस्तथाभिधातुमाह—

मूलम्—जहा य अंडप्पभवा बलागा, अंडं बलागप्पभवं जहा य।
एमेव मोहाययणं खु तण्हा, मोहं च तण्हाययणं वयंति ॥ ६ ॥

व्याख्या—यथा च येनैव प्रकारेण अण्डप्रभवा बलाका, अण्डं बलाकाप्रभवं च यथा। एवमेवानेनैव प्रकारेण मोहोऽज्ञानं मिथ्यादर्शनं च स आयतनमुत्पत्तिस्थानं यस्याः सा मोहायतना तां खुरवधारणे 'तण्हत्ति' तृष्णां वदन्तीति सम्बन्धः, यथोक्तमोहाभावे ह्यवश्यं तृष्णाक्षयः स्यादिति। मोहं च तृष्णायतनं वदन्ति, तृष्णा नाम सत्यसति वा वस्तुनि मूर्च्छा, सा च रागप्रधाना ततस्तया राग उपलक्ष्यते, सति च तत्र द्वेषोऽपि सम्भवतीति सोप्यनेनैवाक्षिप्यते, ततस्तृष्णाग्रहणेन रागद्वेषावुक्तौ, तदुत्कटत्वे चोपशान्तमोहस्यापि मिथ्यात्वगमनसम्भवात्सिद्ध एवाऽज्ञानादिरूपो मोहः, तृष्णातः। अनेन चान्योन्यं हेतुहेतुमद्भावाभिधानेन यथा मोहादीनामुत्पादस्तथोक्तम् ॥ ६ ॥ अथ यथैषां दुःखहेतुत्वं तथा वक्तुमाह—

मूलम्—रागो य दोसोवि य कम्मबीयं, कम्मं च मोहप्पभवं वयंति ।
कम्मं च जाईमरणस्स मूलं, दुक्खं च जाईमरणं वयंति ॥ ७ ॥

व्याख्या—रागश्च द्वेषोपि च कर्मणो ज्ञानावरणादेर्बीजं कारणं, अत एव कर्म च मोहप्रभवं मोहोपादानकारणं वदन्ति । कर्म च जातिमरणस्य मूलं कारणं, दुःखं च दुःखहेतुः पुनर्जातिमरणं वदन्ति ॥ ७ ॥ यतश्चैवमतः किं स्थितमित्याह—

मूलम्—दुक्खं हयं जस्स न होइ मोहो, मोहो हओ जस्स न होइ तण्हा ।
तण्हा हया जस्स न होइ लोहो, लोहो हओ जस्स न किंचणाइं ॥ ८ ॥

व्याख्या—दुःखमुक्तरूपं हतमिव हतं, केनेत्याह—यस्य न भवति मोहो मोहस्यैव तन्मूलहेतुत्वात् । मोहो हतो यस्य न भवति तृष्णा, मोहायतनत्वात् तस्याः । तृष्णा हता यस्य न भवति लोभः, तृष्णाशब्देनोक्तनीत्या रागद्वेषयोरुक्तत्वात्, तयोश्च लोभक्षये सर्वथैवाभावात्, अत एव प्राधान्यात् रागान्तर्गतत्वेपि लोभस्य पृथग्ग्रहणं । लोभो हतो यस्य न किञ्चनानि द्रव्याणि सन्तीति शेषः, सत्सु हि तेषु प्रायः स्यादेवाभिकांक्षेति सूत्रत्रयार्थः ॥ ८ ॥ ननु सन्तु दुःखस्य मोहाद्या हेतवो हननोपायस्तेषां पूर्वोक्त एव उतान्येपि सन्तीत्याशंक्य सविस्तरं तदुन्मूलनोपायान् विवक्षुः प्रस्तावनामाह—

मूलम्—रागं च दोसं च तहेव मोहं, उद्धत्तुकामेण समूलजालं ।
जे जे उवाया पडिवज्जियव्वा, ते कित्तइस्सामि अहाणुपुव्विं ॥ ९ ॥

व्याख्या—रागं च द्वेषं च तथैव मोहं उद्धर्त्तुकामेन उन्मूलयितुमिच्छता सह मूलानां तीव्रकषायादीनां विषयादीनां च जालेन वर्त्तते योऽसौ समूलजालस्तं, ये ये उपायाः प्रतिपत्तव्याः स्वीकार्यास्तान् कीर्तयिष्यामि यथानुपूर्वीति सूत्रार्थः ॥ ९ ॥ प्रतिज्ञातमाह—

मूलम्—रसापगामं न निसेविअव्वा, पायं रसा दित्तिकरा नराणं ।
दित्तं च कामा समभिद्दवंति, दुमं जहा सादुफलं व पक्खी ॥ १० ॥

व्याख्या—रसाः क्षीरादिविकृतयः प्रकामं बाढं न निषेवितव्या न भोक्तव्याः, प्रकामग्रहणं तु वातादिक्षोभनिवारणाय रसा अपि जातु ग्राह्या इति सूचनार्थम् । कुत एवमुच्यत इत्याह—प्रायो बाहुल्येन रसा दृप्तिकरा धातूद्रेककारिणो नराणामुपलक्षणत्वात् स्त्र्यादीनां च भवन्ति, दृप्तं च नरं बहुवचनप्रक्रमेप्येकवचनं जातित्वात् कामा विषयाः

१ नोपभोक्तव्याः—इति "घ" पुस्तके ।

समभिद्रवन्ति । कमिव के इव ? इत्याह—द्रुमं यथा स्वादुफलं, वेति भिन्नक्रम उपमार्थश्च ततः पक्षिण इव । इह द्रुमोपमः पुमान्, स्वादुफलकल्पं दृप्तत्वं, पक्षितुल्याः कामाः ॥ १० ॥ किञ्च—

मूलम्—जहा दवग्गी पउरिंधणे वणे, समारुओ नोवसमं उवेइ ।
एविंदिअग्गीवि पगामभोइणो, न बंभयारिस्स हिआय कस्सइ ॥ ११ ॥

व्याख्या—यथा दवाग्निः प्रचुरेन्धने वने समारुतः सवायुर्नोपशमं उपैति, एवं दवाग्निवत् 'इंदियग्गित्ति' इहेन्द्रियशब्देन इन्द्रियजनितो राग एव गृह्यते स एव धर्मद्रुमदाहकत्वादग्निरिन्द्रियाग्निः, सोऽपि प्रकामभोजिनोऽतिमात्राहारस्य न ब्रह्मचारिणो हिताय कस्यचित्सुस्थितस्यापि स्यात् ॥ ११ ॥ अन्यच—

मूलम्—विवित्तसेज्जासणजंतिआणं, ओमासणाणं दमिइंदिआणं ।
न रागसत्तू धरिसेइ चित्तं, पराइओ वाहिरिवोसहेहिं ॥ १२ ॥

व्याख्या—विविक्ता स्त्र्यादिवियुक्ता शय्या वसतिस्तस्यामासनमवस्थानं तेन यंत्रिता नियंत्रिता विविक्तशय्यासनयंत्रितास्तेषां अवमाशनानां न्यूनभोजनानां दमितेन्द्रियाणां न रागशत्रुर्धर्षयति पराभवति चित्तं, क इव ? पराजितः पराभूतो व्याधिः कुष्ठादिरिवौषधैर्गडूच्यादिभिर्देहमिति गम्यते ॥ १२ ॥ विविक्तवसत्यभावे दोषमाह—

मूलम्—जहा विरालावसहस्स मूले, न मूसगाणं वसही पसत्था ।
एमेव इत्थीनिलयस्स मज्झे, न बंभयारिस्स खमो निवासो ॥ १३ ॥

व्याख्या—यथा विडालावसथस्य मार्जारगृहस्य मूले समीपे न मूषकानां वसतिः स्थितिः प्रशस्ता, अवश्यं तत्र तदपायसम्भवात्, एवमेव स्त्रीणामुपलक्षणात्पण्डकादीनां च निलयो निवासः स्त्रीनिलयः तस्य मध्ये न ब्रह्मचारिणः क्षमो युक्तो निवासः, तत्र ब्रह्मचर्यबाधासम्भवादिति भावः ॥ १३ ॥ विविक्तवसतावपि कदाचित्स्त्रीसम्पाते यत्कर्तव्यं तदाह—

मूलम्—न रूवलावण्णविलासहासं, न जंपिअं इंगिअ पेहिअं वा ।
इत्थीण चित्तंसि निवेसइत्ता, दट्ठुं ववस्से समणे तवस्सी ॥ १४ ॥

व्याख्या—न नैव रूपं सुसंस्थानत्वं, लावण्यं नयनमनसामाह्लादको गुणः, विलासा विशिष्टनेपथ्यरचनादयः हासः प्रतीतः, एषां समाहारः, न जल्पितमुल्लपितं, 'इंगिअत्ति' इङ्गितं अङ्गभङ्गादि प्रेक्षितं कटाक्षवीक्षितादि, वा समुच्चये स्त्रीणां सम्बन्धि चित्ते निवेश्य, अहो! सुन्दरमिदमिति विकल्पतो मनसि स्थापयित्वा द्रष्टुं इन्द्रियविषयतां नेतुं व्यवस्येदध्यवसेत् श्रमणः तपस्वी ॥ १४ ॥ कुत एवमुपदिश्यते? इत्याह—

मूलम्—अदंसणं चेव अपत्थणं च, अचिंतणं चेव अकित्तणं च ।
इत्थीजणस्सारियझाणजुग्गं, हिअं सया बंभचेरे रयाणं ॥ १५ ॥

व्याख्या—अदर्शनं च, एवोऽवधारणे, ततः अदर्शनमेव, अप्रार्थनं चाऽनभिलषणं, अचिन्तनं चैव रूपाद्यपरिभावनं, अकीर्त्तनं च नामतो गुणतो वा स्त्रीजनस्य, आर्यध्यानं धर्मादि तद्योग्यं तद्धेतुत्वेनोचितं आर्यध्यानयोग्यं, हितं पथ्यं, सदा ब्रह्मचर्ये रतानां । ततो न स्त्रीणां रूपादि सरागं द्रष्टुं व्यवसेदिति स्थितम् ॥ १५ ॥ ननु विकारहेतौ सति ये निर्विकाराः स्युस्त एव धीरास्तत्किं विविक्तशयनासनत्वमिष्यते? इत्याशंक्याह—

मूलम्—कामं तु देवीहिं विभूसिआहिं, न चाइआ खोभइउं तिगुत्ता ।
तहावि एगंतहिअंति नच्चा, विवित्तभावो मुणिणं पसत्थो ॥ १६ ॥

व्याख्या—'कामं तुत्ति' अनुमतमेवैतत् यद्देवीभिरपि आस्तां मानुषीभिर्भूषिताभिरलङ्कृताभिः न नैव 'चाइअत्ति' शकिताः क्षोभयितुं चलयितुं त्रिगुप्ताः मुनयः, तथापि एकान्तं हितमिति ज्ञात्वा विविक्तभावो मुनीनां प्रशस्तोऽन्तर्भावितणिगर्थतया प्रशंसितो जिनाद्यैः । अयं भावः—स्त्र्यादिसङ्गे प्रायो योगिनोऽपि क्षुभ्यन्ति येपि न क्षुभ्यन्ति तेऽप्यवर्णादिदोषभाजो भवन्तीति विविक्तत्वमेव श्रेयः ॥ १६ ॥ इदमेव समर्थयितुं स्त्रीणां दुरतिक्रमत्वमाह—

मूलम्—मोक्खाभिकंखिस्सऽवि माणवस्स, संसारभीरुस्स ठियस्स धम्मे ।
नेयारिसं दुत्तरमत्थि लोए, जहित्थिओ बालमणोहराओ ॥ १७ ॥

व्याख्या—मोक्षाभिकांक्षिणोऽपि मानवस्य संसारभीरोरपि स्थितस्यापि धर्मे श्रुतधर्मे अपिशब्दश्चैकोऽपि सर्वत्र सम्बध्यते, न नैव एतादृशं दुस्तरं दुरतिक्रममस्ति लोके यथा स्त्रियो बालानां निर्विवेकानां मनोहरा बालमनोहरा दुस्तराः ॥ १७ ॥ स्त्रीसङ्गातिक्रमे गुणमाह—

मूलम्—एए अ संगे समइक्कमित्ता, सुहुत्तरा चेव हवंति सेसा ।
जहा महासागरमुत्तरित्ता, नई भवे अवि गंगासमाणा ॥ १८ ॥

व्याख्या—एतांश्च स्त्रीविषयान् सङ्गान् सम्बन्धान् समतिक्रम्य सुखोत्तराश्चैव भवन्ति शेषा द्रव्यादिसङ्गाः, सर्वसङ्गानां रागरूपत्वे तुल्येऽपि स्त्रीसङ्गानामेवैतेषु प्राधान्यात् दृष्टान्तमाह—यथा महासागरं स्वयम्भूरमणमुत्तीर्य नदी भवेत्सुखोत्तरैव 'अवि गंगासमाणत्ति' गङ्गासमानापि आस्तां क्षुद्रनदीत्यपिशब्दार्थः ॥ १८ ॥ किञ्च—

मूलम्—कामाणुगिद्धिप्पभवं खु दुक्खं, सव्वस्स लोगस्स सदेवगस्स ।
जं काइअं माणसिअं च किंचि, तस्संतगं गच्छइ वीअरागो ॥ १९ ॥

व्याख्या—कामेषु अनुगृद्धिः सततातिभिकांक्षा कामानुगृद्धिस्तत्प्रभवमेव, खुशब्दस्यात्रवधारणार्थत्वात्, दुःखं सर्वस्य लोकस्य सदेवकस्य, यत्कायिकं मानसिकं च किञ्चिदल्पमपि, तस्यान्तमेवान्तकं गच्छति वीतरागो विगतकामानुगृद्धिः ॥ १९ ॥ ननु कामाः सुखरूपास्तत्कथं तत्प्रभवमेव दुःखमुच्यते ? उच्यते—

मूलम्—जहा य किंपागफला मणोरमा, रसेण वण्णेण य भुज्जमाणा ।
ते खुद्दए जीविअ पच्चमाणा, एओवमा कामगुणा विवागे ॥ २० ॥

व्याख्या—यथा च यथैव किम्पाकफलानि 'मणोरमत्ति' अपेर्गम्यत्वान्मनोरमाण्यपि रसेन वर्णेन च शब्दाद्गन्धादिना च भुज्यमानानि, तानि लोकप्रतीतानि 'खुद्दएत्ति' आर्षत्वात्क्षोदयन्ति विनाशयन्ति जीवितं पच्यमानानि विपाकावस्थाप्राप्तानि, एतदुपमाः कामगुणा विपाके, विपाकदारुणतासाम्येन तत्तुल्या इति भावः ॥ २० ॥ एवं केवलस्य रागस्योद्धरणोपायमभिधाय तस्यैव द्वेषान्वितस्य तमाह—

मूलम्—जे इंदिआणं विसया मणुण्णा, न तेसु भावं निसिरे कयाई ।
न यामणुण्णेसु मणंऽपि कुज्जा, समाहिकामे समणे तवस्सी ॥ २१ ॥

व्याख्या—ये इन्द्रियाणां विषया मनोज्ञाः न तेषु भावं अभिप्रायं अपेर्गम्यत्वात् भावमपि प्रक्रमादिन्द्रियाणि प्रवर्त्तयितुं, किं पुनस्तत्प्रवर्त्तनमित्यपिशब्दार्थः, निसृजेत्कुर्यात्कदाचित् । न च नैवामनोज्ञेषु मनोऽपि कुर्यादिन्द्रियाणि प्रवर्त्तयितुमितीहापि गम्यं, अपेरर्थः प्राग्वत्, समाधिरिह रागद्वेषाभावरूपस्तं कामयते इति समाधिकामः श्रमणः तपस्वीति सूत्रद्वादशकार्थः ॥ २१ ॥ इत्थं रागद्वेषोद्धरणैषिणो विषयेभ्य इन्द्रियाणां निवर्त्तनमुपदिष्टं, अथ विषयेषु तत्प्रवर्त्तने रागद्वेषानुद्धरणे च यो दोषस्तं प्रत्येकमिन्द्रियाणि मनश्चाश्रित्य दर्शयितुमष्टसप्ततिं सूत्राण्याह । तत्रापि चक्षुराश्रित्य त्रयोदशसूत्राणि—

मूलम्—चक्खुस्स रूवं गहणं वयंति, तं रागहेउं तु मणुण्णमाहु ।
तं दोसहेउं अमणुण्णमाहु, समो उ जो तेसु स वीअरागो ॥ २२ ॥

व्याख्या—चक्षुषो रूपं गृह्यतेऽनेनेति ग्रहणमाक्षेपकं वदन्ति, ततः किमित्याह—तद्रूपं रागहेतुं तुः पूर्त्तौ मनोज्ञमाहुः, तथा तद्रूपमेव द्वेषहेतुममनोज्ञमाहुः, ततस्तयोश्चक्षुः प्रवर्त्तनं रागद्वेषसम्भवात्तदुद्धरणाशक्तिलक्षणो दोषः स्यादिति भावः । आहैवं न कोऽपि सति रूपे वीतरागः स्यादत आह—समस्त्वरक्तद्विष्टतया तुल्यः पुनर्यस्तयोर्मनोज्ञेतररूपयोः स वीतराग इव वीतरागः, उपलक्षणत्वाद्वीतद्वेषश्च । अयं भावः—न तावत्तयोश्चक्षुः प्रवर्त्तयेत्, कथञ्चित्प्रवृत्तौ तु समतामेवावलम्बेतेति ॥ २२ ॥ ननु यद्येवं तर्हि रूपमेव रागद्वेषजनकं, न तु चक्षुस्तत्किं चक्षुर्निग्रहेणेति शङ्कापोहायाह—

मूलम्—रूवस्स चक्खुं गहणं वयंति, चक्खुस्स रूवं गहणं वयंति ।
रागस्स हेउं समणुण्णमाहु, दोसस्सहेउं अमणुण्णमाहु ॥ २३ ॥

व्याख्या—रूपस्य चक्षुर्गृह्णातीति ग्रहणं ग्राहकमित्यर्थः वदन्ति, तथा चक्षुषो रूपं गृह्यते इति ग्रहणं ग्राह्यं वदन्ति अनेन रूपचक्षुषोरन्योन्यं ग्राह्यग्राहकभावलक्षणः सम्बन्धो दर्शितस्ततो यथा रूपं रागद्वेषकारणं तथा चक्षुरपीत्युक्तं भवति अत एवाह—रागस्सेत्यादि—रागस्य हेतुं प्रक्रमाच्चक्षुः सह मनोज्ञेन ग्राह्येण रूपेण वर्त्तते इति समनोज्ञमाहुः, द्वेषस्य हेतुं अमनोज्ञं मनोज्ञरूपरहितमाहुस्ततो युक्त एव चक्षुषो निग्रह इति भावः ॥ २३ ॥ इत्थं रागद्वेषोद्धरणोपायमुक्त्वा तदनुद्धरणे दोषमाह—

मूलम्—रूवेसु जो गिद्धिमुवेइ तिव्वं, अकालिअं पावइ से विणासं ।
रागाउरे से जह वा पयंगे, आलोअलोले समुवेइ मच्चुं ॥ २४

व्याख्या—रूपेषु यो गृद्धिं रागमुपैति तीव्रां अकाले भवमाकालिकं प्राप्नोति स विनाशं, रागातुरः सन् स इति लोकप्रतीतः, यथा वेति वाशब्दस्यैवकारार्थत्वात् यथैव पतङ्गः आलोकलोलोऽतिस्निग्धदीपशिखादर्शनलम्पटः समुपैति मृत्युम् ॥ २४ ॥

मूलम्—जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू, न किंचि रूवं अवरज्झई से ॥ २५ ॥

व्याख्या—यश्च यस्तु अपिर्भिन्नक्रमोऽन्यत्र योक्ष्यते, द्वेषं समुपैति तीव्रं रूपेष्विति प्रक्रमः, स किमित्याह—'तंसित्ति' प्राच्यस्यापिशब्दस्येह योगात्तस्मिन्नपि क्षणे स तुः पूर्त्तौ उपैति दुःखं मनःसन्तापादिकं, यद्येवं तर्हि रूपस्यैव दुःखहेतुत्वं, तत एव द्वेषसम्भवादित्याशंक्याह—दुष्टं दान्तं दमनं दुर्दान्तं दुर्दमत्वमित्यर्थः, तच्च प्रक्रमाच्चक्षुपस्तदेव दोपो दुर्दान्तदोपस्तेन स्वकेनात्मीयेन जन्तुर्देही. न किञ्चिदल्पमपि रूपमपराध्यति तस्य जन्तोः । यदि हि रूपमेव दुःखहेतुः स्यात्तदा वीतरागद्वेषस्यापि दुष्टरूपनिरूपणे दुःखं स्यान्नचैतदस्ति, ततः स्वस्यैव दोपेण दुःखमाप्नोति प्राणीति भावः ॥ २५ ॥ इत्थं रागद्वेषयोरनर्थहेतुत्वमुक्तं, इदानीं तु द्वेषस्यापि रागहेतुकत्वात् स एव महानर्थमूलमिति दर्शयन् तस्य विशेपात्परित्याज्यतां ख्यापयितुमाह—

मूलम्—एगंतरत्तो रुइरंसि रूवे, अतालिसे से कुणई पओसं ।
दुक्खस्स संपीलमुवेइ बाले, न लिप्पइ तेण मुणी विरागो ॥ २६ ॥

व्याख्या—एकान्तरक्तो रुचिरे मनोरमे रूपे यः स्यादिति शेषः, अतादृशेऽनीदृशे प्रक्रमाद्रूपे स करोति प्रद्वेषं, तथा च दुःखस्य सम्पीडं संघातं उपैति बालो मूढः, न लिप्यते तेन द्वेषकृतदुःखेन मुनिर्विरागो रागरहितः ॥ २६ ॥ अथ रागस्यैव हिंसाद्याश्रवहेतुत्वमिहैव तद्द्वारा दुःखजनकत्वं च सूत्रषट्केनाह—

मूलम्—रूवाणुगासाणुगए अ जीवे, चराचरे हिंसइ णेगरूवे ।
चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठगुरू किलिट्ठे ॥ २७ ॥

व्याख्या—रूपं प्रस्तावान्मनोज्ञमनुगच्छतीति रूपानुगा सा चासौ आशाच रूपानुगाशा रूपविषयोऽभिलापस्तदनुगतश्च, पाठान्तरे [रूवाणुवायाणुगएत्ति] रूपाणां प्रशस्तानां उपायैरुपार्जनहेतुभिरनुगतः उपायानुगतश्च प्राणी 'जीवेत्ति' जीवांश्चराचरान् त्रसस्थावरान् हिनस्ति अनेकरूपान् जात्यादिभेदादनेकविधान् कांश्चित् चित्रैर्नानाविधैरुपायैरिति गम्यते, तान् चराचरजीवान् परितापयति दुःखयति बालोऽपरांश्च पीडयत्येकदेशदुःखोत्पादनेन, आत्मार्थगुरुः स्वप्रयोजननिष्ठः क्लिष्टो रागबाधितः ॥ २७ ॥ तथा—

मूलम्—रूवाणुवाए ण परिग्गहेण, उप्पायणे रक्खणसन्निओगे ।
वए विओगे अ कहिं सुहं से, संभोगकाले अ अतित्तिलाभे ॥ २८ ॥

व्याख्या—रूपे अनुपातोऽनुगमनं अनुराग इत्यर्थः रूपानुपातस्तस्मिन् सति, णः पूर्त्तौ, परिग्रहेण मूर्च्छात्मकेन हेतुभूतेन उत्पादने उपार्जने रक्षणं च अपायेभ्यः सन्नियोगश्च स्वपरप्रयोजनेषु सम्यग्व्यापारणं रक्षणसन्नियोगं तस्मिन् 'वएत्ति' व्यये विनाशे वियोगे विरहे सर्वत्र सुरूपवस्तुन इति गम्यते, क्व सुखं ? न क्वापीति भावः, से तस्य रूपानुरागिणः । अयं भावः—सुरूपकलत्र—करि—तुरग—वस्त्रादीनामुत्पादनाद्यर्थं तेषु तेषु क्लेशहेतुषूपायेषु प्रवर्त्तमानो दुःखमेवानुभवति रूपानुरागी । पाठान्तरे वा [ "रूवाणुरागेण" इति दृश्यते, तत्र रूपानुरागेण हेतुना यः परिग्रहस्तेन शेषं प्राग्वत् ] ननु रूपवतामुत्पादनादिषु सुखं मा भूत्, सम्भोगकाले तु भावीत्याशंक्याह—सम्भोगकाले चोपभोगप्रस्तावेऽपि अतृप्तिलाभे तृप्तिप्राप्त्यभावे क्व सुखमिति सम्बन्धः । बहुविधरूपदर्शनेऽपि नहि रागिणां तृप्तिरस्ति । यदुक्तं—"न जातु कामः कामाना—मुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव, भूय एवाभिवर्द्धते ॥ १ ॥"- ततोऽधिकाधिकेच्छया खिद्यत एव रागी, न तु सुखी स्यादिति भावः ॥ २७ ॥ ततस्तस्यापरापरदोपपरम्परावाप्तिमाह—

मूलम्—रूवे अतित्ते अ परिग्गहे अ, सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ २९ ॥

व्याख्या—रूपे अतृप्तः चस्य भिन्नक्रमत्वात् परिग्रहे च विषयमूर्च्छालक्षणे सक्तः सामान्येनैवासक्तिमान्, उपसक्तश्च गाढमासक्तः, ततः सक्तश्च पूर्वमुपसक्तश्च पश्चात् सक्तोपसक्तो नोपैति तुष्टिं, तथा च अतुष्टिरेव दोपोऽतुष्टिदोपः

तेन दुःखी यदि ममेदमिदं च रूपवद्वस्तु स्यात्तदा वरमित्याकांक्षातोऽतीवदुःखवान् सन्, परस्य सम्बन्धि रूपवद्वस्त्विति गम्यते, लोभाविलो लोभकलुष आदत्ते अदत्तं ॥ २९ ॥ ततश्च—

मूलम्—तण्हाभिभूअस्स अदत्तहारिणो, रूवे अतित्तस्स परिग्गहे अ।
मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ३० ॥

व्याख्या—तृष्णाभिभूतस्य लोभपराजितस्य तत एवादत्तहारिणो रूपे रूपविषये यः परिग्रहो मूर्च्छारूपस्तस्मिन्निति योगः, चस्य भिन्नक्रमत्वादतृप्तस्य च, मायाप्रधानं 'मोसंति' मृषाऽलीकभाषणं मायामृषा वर्द्धते, कुतः ? इत्याह–लोभदोषात्, लुब्धो हि परस्वमादत्ते, आदाय च तद्गोपनाय मायया मृषां वदति। तदनेन लोभ एव सर्वाश्रवाणामपि मूलहेतुरिति सूचितम्। रागप्रक्रमेपि च यदिह लोभाभिधानं तद्रागेपि लोभांशस्यैवातिदुष्टताख्यापनार्थम्। तत्रापि को दोषः ? इत्याह–तत्रापि मृषाभाषणेपि दुःखान्न विमुच्यते सः, किन्तु दुःखभाजनमेवस्यादिति भावः ॥ ३० ॥ दुःखाविमोक्षमेव भावयति—

मूलम्—मोसस्स पच्छा य पुरत्थओ अ, पओगकाले अ दुही दुरंते।
एवं अदत्ताणि समाययंतो, रूवे अतित्तो दुहिओ अणिस्सो ॥ ३१ ॥

व्याख्या—'मोसस्सत्ति' मृषाभाषणस्य पश्चाच्च पुरस्ताच्च प्रयोगकाले च दुःखी सन्, तत्र पश्चान्नहीदं मया सुसंस्थापितमुक्तमिति पश्चात्तापात्, पुरस्ताच्च कथमयं सुरूपस्त्र्यादिवस्तुस्वामी मया वञ्चनीय इति चिन्तया, प्रयोगकाले च किमसौ ममालीकभाषितां लक्षयिष्यति न वेति क्षोभतः। तथा 'दुरंतेति' दुष्टोऽन्तः पर्यन्तः इह जन्मन्यनेकविडम्बनातोऽन्यभवे च नरकादिप्राप्त्या यस्य स दुरन्तो भवति जन्तुरिति शेषः। अथवा 'मोसस्सत्ति' मोषस्य स्तेयस्य इति व्याख्येयम्। एवममुना प्रकारेणादत्तानि समाददानो रूपेऽतृप्तः सन् दुःखितः स्यादितिशेषः। कीदृशः सन् ? इत्याह–अनिश्रो दोषवत्तया कस्याप्यवष्टम्भेन रहितः, मैथुनाश्रवोपलक्षणं चैतत् ॥ ३१ ॥ उक्तमेवार्थं निगमयितुमाह—

मूलम्—रूवाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि।
तत्थोवभोगेवि किलेसदुक्खं, निव्वत्तई जस्स कए ण दुक्खं ॥ ३२ ॥

व्याख्या—रूपानुरक्तस्य नरस्य एवमनन्तरोक्तनीत्या कुतः सुखं भवेत् ? कदाचित्किञ्चिदल्पमपि, कुतः ? इत्याह–यतस्तत्र रूपानुरागे उपभोगेपि क्लेशदुःखं अतृप्तिलाभलक्षणबाधाजनितमसातं भवति। उपभोगमेव विशिनष्टि, निर्वर्त्तयति उत्पादयति यस्योपभोगस्य कृते, 'ण' वाक्यालङ्कारे, दुःखं कृच्छ्रमात्मन इति गम्यते। उपभोगार्थं हि जन्तुः क्लिश्यते तदा सुखं स्यादिति, यदि च तदापि दुःखमेव तदा कुतोऽन्यदा सुखं स्यादिति भावः ॥ ३२ ॥ एवं रागस्यानर्थहेतुतामुक्त्वा द्वेषस्यापि तामतिदेष्टुमाह—

मूलम्—एमेव रूवम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ।
पदुट्ठचित्तो अ चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ३३ ॥

व्याख्या—एवमेव यथानुरक्तस्तथैव रूपे प्रक्रमाद्दुष्टे गतः प्रद्वेषं उपैति दुःखौघपरम्परा उत्तरोत्तरदुःखसमूहरूपाः। तथा प्रद्विष्टचित्तः चस्य भिन्नक्रमत्वात् चिनोति च कर्म, यत् 'से' तस्य पुनर्भवेत् दुःखं दुःखहेतुर्विपाकेऽनुभवकाले अत्रामुत्र चेति भावः। पुनर्दुःखग्रहणमैहिकदुःखापेक्षमशुभकर्मोपचयश्च हिंसाद्याश्रवान् विना न स्यादित्यनेन द्वेषस्याप्याश्रवहेतुत्वमाक्षिप्यते ॥ ३३ ॥ एवं रागद्वेषानुद्धरणे दोषमुक्त्वा तदुद्धरणे गुणमाह—

मूलम्—रूवे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण।
न लिप्पई भवमज्झेवि संतो, जलेण वा पुक्खरिणीपलासं ॥ ३४ ॥ १ ॥

व्याख्या—रूपे विरक्त उपलक्षणत्वादद्विष्टश्च मनुजो विशोकः शोकमुक्तस्तन्निबन्धनयो रागद्वेषयोरभावादेतेनानन्तरोक्तेन 'दुक्खोहपरंपरेणत्ति' दुःखानामोघाः सङ्घातास्तेषां परम्परा तया न लिप्यते न स्पृश्यते भवमध्येपि संति-

ष्टन् । दृष्टान्तमाह–'जलेण वत्ति' जलेनेव वाशब्दस्येवार्थत्वात्, पुष्करिणीपलासं पद्मिनीपत्रं, जलमध्येपि सदिति शेषः ॥ ३४ ॥ इत्थं चक्षुराश्रित्य त्रयोदश सूत्राणि व्याख्यातानि, एतदनुसारेणैव शेषेन्द्रियाणां मनसश्च त्रयोदश सूत्राणि स्वस्वविषयाख्यानपूर्वं व्याख्येयानि, विशेषस्तु वक्ष्यते—

मूलम्—सोअस्स सद्दं गहणं वयंति, तं रागहेउं तु मणुण्णमाहु ।
तं दोसहेउं अमणुण्णमाहु, समो अ जो तेसु स वीअरागो ॥ ३५ ॥

व्याख्या—'सोअस्सत्ति' श्रोत्रेन्द्रियस्य ॥ ३५ ॥

मूलम्—सद्दस्स सोअं गहणं वयंति, सोअस्स सद्दं गहणं वयंति ।
रागस्स हेउं समणुण्णमाहु, दोसस्स हेउं अमणुण्णमाहु ॥ ३६ ॥

मूलम्—सद्देसु जो गिद्धिमुवेइ तिव्वं, अकालिअं पावइ से विणासं ।
रागाउरे हरिणमिएव्व मुद्धे, सद्दे अतित्ते समुवेइ मच्चुं ॥ ३७ ॥

व्याख्या—'हरिणमिएव्व मुद्धेत्ति' मृगशब्देन सर्वोपि पशुरुच्यते ततो हरिणशब्देन विशेष्यते, हरिणश्चासौ मृगश्च हरिणमृगो हरिणपशुरित्यर्थः । मुग्धो हिताहितानभिज्ञः, शब्दे लुब्धकगीताद्यात्मके तदाकृष्टचित्ततया अतृप्तः सन् ३७

मूलम्—जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं । दुद्दंतदोसेण सएण जंतू, न किंचि सद्दं अवरज्झई से ॥ ३८ ॥ एगंतरत्तो रुइरंसि सद्दे, अतालिसे से कुणई पओसं । दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥ ३९ ॥ सद्दाणुगासाणुगए अ जीवे, चराचरे हिंसइऽणेगरूवे । चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठगुरू किलिट्ठे ॥ ४० ॥

व्याख्या—अत्र 'चराचरे हिंसइत्ति' वाद्योपयोगित्वायुचर्माद्यर्थं चरान्, वंशमृदङ्गकाष्ठाद्यर्थमचरांश्च हिनस्ति ॥ ४० ॥

मूलम्—सद्दाणुवाए ण परिग्गहेण, उप्पायणे रक्खणसन्निओगे । वए विओगे अ कहिं सुहं से, संभोगकाले अ अतित्तिलाभे ॥ ४१ ॥ सद्दे अतित्ते अ परिग्गहे अ, सत्तोवसत्तो न उवेइ तुट्ठिं । अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ४२ ॥

व्याख्या—'अदत्तं' गीतगायकदास्यादि वीणावंशादिकं वा शोभनशब्दोत्पादकं वस्तु आदत्ते ॥ ४२ ॥

मूलम्—तण्हाभिभूअस्स अदत्तहारिणो, सद्दे अतित्तस्स परिग्गहे अ । मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ४३ ॥ मोसस्स पच्छा य पुरत्थओ अ, पओगकाले अ दुही दुरंते । एवं अदत्ताणि समाययंतो, सद्दे अतित्तो दुहिओ अणिस्सो ॥ ४४ ॥ सद्दाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि । तत्थोवभोगेवि किलेसदुक्खं, निव्वत्तई जस्स कए ण दुक्खं ॥ ४५ ॥ एमेव सद्दंमि गओ पओसं, उवेइ दुक्खोहपरंपराओ । पदुट्ठचित्तो अ चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ४६ ॥ सद्दे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण । न लिप्पई भवमज्झेवि संतो, जलेण वा पुक्खरिणीपलासं ॥ ४७ ॥ २ ॥

घाणस्स गंधं गहणं वयंति, तं रागहेउं तु मणुण्णमाहु । तं दोसहेउं अमणुण्णमाहु, समो अ जो तेसु स वीअरागो ॥ ४८ ॥ गंधस्स घाणं गहणं वयंति, घाणस्स गंधं गहणं वयंति । तं रागहेउं तु मणुण्णमाहु, दोसस्स हेउं अमणुण्णमाहु ॥ ४९ ॥ गंधेसु जो गिद्धिमुवेइ तिव्वं, अकालिअं पावइ से विणासं । रागाउरे ओसहिगंधगिद्धे, सप्पे विलाओ विव निक्खमंते ॥ ५० ॥

व्याख्या—'ओसहि' इत्यादि–औषधयो नागदमन्याद्यास्तासां गन्धे गृद्धः औषधिगन्धगृद्धः सन् 'सप्पे बिलाओ विग्गत्ति' इहेवशब्दस्य भिन्नक्रमत्वात् सर्प इव विलान्निष्क्रामन्, स ह्यत्यन्तप्रियं तद्गन्धमुपेक्षितुमशक्तो बिलान्निष्क्रामति, ततो गारुडिकादिपरवशो दुःखमनुभवतीति ॥ ५० ॥

मूलम्—जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं । दुद्दंतदोसेण सएण जंतू, न किंचि गंधं अवरज्झई से ॥ ५१ ॥ एगंतरत्तो रुइरंसि गंधे, अतालिसे से कुणई पओसं । दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥ ५२ ॥ गंधाणुगासाणुगए अ जीवे, चराचरे हिंसइऽणेगरूवे । चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठगुरू किलिट्ठे।५३।

व्याख्या—अत्र मूषकमुष्कमृगनाभिप्रभृतिहेतवे पुष्पादिहेतवे च चराचरान् हिनस्तीति ॥ ५३ ॥

मूलम्—गंधाणुवाए ण परिग्गहेण, उप्पायणे रक्खणसन्निओगे । वए विओगे अ कहिं सुहं से, संभोगकाले अ अतित्तिलाभे ॥ ५४ ॥ गंधे अतित्तो अ परिग्गहे अ, सत्तोवसत्तो न उवेइ तुट्ठिं । अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ५५ ॥

व्याख्या—इहादत्तं सुगन्धितैल-कस्तूरिका-कुसुमादि ॥ ५५ ॥

मूलम्—तण्हाभिभूअस्स अदत्तहारिणो, गंधे अतित्तस्स परिग्गहे अ । मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ५६ ॥ मोसस्स पच्छा य पुरत्थओ अ, पओगकाले अ दुही दुरंते । एवं अदत्ताणि समाययंतो, गंधे अतित्तो दुहिओ अणिस्सो ॥ ५७ ॥ गंधाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि । तत्थोवभोगेवि किलेसदुक्खं, निव्वत्तई जस्स कए ण दुक्खं ॥ ५८ ॥ एमेव गंधम्मि गओ पओसं, उवेइ दुक्खोहपरंपराओ। पदुट्ठचित्तो अ चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ५९ ॥ गंधे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण । न लिप्पई भवमज्झेवि संतो, जलेण वा पुक्खरिणीपलासं ॥ ६० ॥ ३ ॥

मूलम्—जीहाए रसं गहणं वयंति, तं रागहेउं तु मणुण्णमाहु । तं दोसहेउं अमणुण्णमाहु, समो अ जो तेसु स वीअरागो ॥ ६१ ॥ रसस्स जिब्भं गहणं वयंति, जिब्भाए रसं गहणं वयंति। रागस्स हेउं समणुण्णमाहु, दोसस्स हेउं अमणुण्णमाहु॥६२॥ रसेसु जो गिद्धिमुवेइ तिव्वं, अकालिअं पावइ से विणासं। रागाउरे बडिसविभिन्नकाए, मच्छे जहा आमिसभोगगिद्धे॥६३॥

व्याख्या—'बडिसविभिन्नकाएत्ति' बडिशं प्रान्तन्यस्तामिषो लोहकीलकस्तेन विभिन्नो विदारितः कायो यस्य स बडिशविभिन्नकायः मत्स्यो यथा आमिषस्य मांसस्य भोगे खादने गृद्ध आमिषभोगगृद्धः ॥ ६३ ॥

मूलम्—जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं । दुद्दंतदोसेण सएण जंतू, न किंचि रस्सं अवरज्झई से ॥ ६४ ॥ एगंतरत्तो रुइरे रसंसि, अतालिसे से कुणई पओसं । दुक्खस्स संपीलमुवेइ वाले, न लिप्पई तेण मुणी विरागो ॥ ६५ ॥ रसाणुगासाणुगए अ जीवे, चराचरे हिंसइऽणेगरूवे। चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठगुरू किलिट्ठे॥६६॥

व्याख्या—अत्र चराचरान् भक्षणोपयोगिनो मृगपशुमीनपक्षिप्रभृतीन् कन्दमूलफलादींश्च हिनस्ति ॥ ६६ ॥

मूलम्—रसाणुवाए ण परिग्गहेण, उप्पायणे रक्खणसन्निओगे । वए विओगे अ कहिं सुहं से, संभोग

काले अ अतित्तिलाभे ॥ ६७ ॥ रसे अतित्ते अ परिग्गहे अ, सत्तोवसत्तो न उवेइ तुट्ठिं। अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ६८ ॥

व्याख्या—इहादत्तं खण्डखाद्यफलादिकं रसवद्वस्तु ॥ ६८ ॥

मूलम्—तण्हाभिभूअस्स अदत्तहारिणो, रसे अतित्तस्स परिग्गहे अ। मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ६९ ॥ मोसस्स पच्छा य पुरत्थओ अ, पओगकाले अ दुही दुरंते। एवं अदत्ताणि समाययंतो, रसे अतित्तो दुहिओ अणिस्सो ॥ ७० ॥ रसाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि। तत्थोवभोगेवि किलेसदुक्खं, निव्वत्तई जस्स कए ण दुक्खं ॥ ७१ ॥ एमेव रसंमि गओ पओसं, उवेइ दुक्खोहपरंपराओ। पदुट्ठचित्तो अ चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ७२ ॥ रसे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण। न लिप्पई भवमज्झेवि संतो, जलेण वा पुक्खरिणीपलासं ॥ ७३ ॥ ४ ॥

मूलम्—कायस्स फासं गहणं वयंति, तं रागहेउं तु मणुण्णमाहु। तं दोसहेउं अमणुण्णमाहु, समो अ जो तेसु जो वीअरागो ॥ ७४ ॥ फासस्स कायं गहणं वयंति, कायस्स फासं गहणं वयंति। रागस्स हेउं समणुण्णमाहु, दोसस्स हेउं अमणुण्णमाहु ॥ ७५ ॥ फासस्स जो गिद्धिमुवेइ तिव्वं, अकालिअं पावइ से विणासं। रागाउरे सीअजलावसन्ने, गाहग्गहीए महिसे व रण्णे ॥ ७६ ॥

व्याख्या—'सीअजलावसन्नेत्ति' शीतजलेऽवसन्नो निमग्नः शीतजलावसन्नो ग्राहैर्जलचरविशेषैर्गृहीतो महिष इवारण्ये, वसतौ हि कदाचित्केनचिन्मोच्येतापीत्यरण्यग्रहणम् ॥ ७६ ॥

मूलम्—जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं। दुद्दंतदोसेण सएण जंतू, न किंचि फासं अवरज्झई से ॥ ७७ ॥ एगंतरत्तो रुइरंसि फासे, अतालिसे से कुणई पओसं। दुक्खस्स संपीलमुवेइ वाले, न लिप्पई तेण मुणी विरागो ॥ ७८ ॥ फासाणुगासाणुगए अ जीवे, चराचरे हिंसइऽणेगरूवे। चित्तेहिं ते परितावेइ वाले, पीलेइ अत्तट्ठगुरू किलिट्ठे ॥ ७९ ॥

व्याख्या—अत्र शुभस्पर्शाणां मृगादिचर्मपुष्पवस्त्रादीनां संग्रहे स्त्रीसेवादौ च प्रवर्त्तमानश्चराचरान् हन्ति ॥ ७९ ॥

मूलम्—फासाणुवाए ण परिग्गहेण, उप्पायणे रक्खणसन्निओगे। वए विओगे अ कहं सुहं से, संभोगकाले अ अतित्तिलाभे ॥ ८० ॥ फासे अतित्ते अ परिग्गहे अ, सत्तोवसत्तो न उवेइ तुट्ठिं। अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ८१ ॥

व्याख्या—इहादत्तं शुभस्पर्शं वस्त्रतूलिकादि ॥ ८१ ॥

मूलम्—तण्हाभिभूअस्स अदत्तहारिणो, फासे अतित्तस्स परिग्गहे अ। मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ८२ ॥ मोसस्स पच्छा य पुरत्थओ अ, पओगकाले अ-दुही दुरंते। एवं अदत्ताणि समाययंतो, फासे अतित्तो दुहिओ अणिस्सो ॥ ८३ ॥ फासाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि। तत्थोवभोगे वि किलेसदुक्खं, निव्वत्तए जस्स कए ण दुक्खं ॥८४॥ एमेव फासंमि गओ पओसं, उवेइ दुक्खोहपरंपराओ। पदुट्ठचित्तो अ चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ८५ ॥ फासे विरत्तो मणुओ

त्रिसोगो, एएण दुक्खोहपरंपरेण । न लिप्पई भवमज्झे वि संतो, जलेण वा पुक्खरिणीपलासं ॥ ८६ ॥ ५ ॥

मणस्स भावं गहणं वयंति, तं रागहेउं तु मणुण्णमाहु ।
तं दोस हेउं अमणुण्णमाहु, समो अ जो तेसु स वीअरागो ॥ ८७ ॥

व्याख्या—मनसश्चेतसो भावोऽभिप्रायः स्मरणादिगोचरस्तं ग्रहणं ग्राह्यं वदन्ति, चक्षुरादीन्द्रियाविषयत्वात्तस्य, तं भावं मनोज्ञं मनोज्ञरूपादिविषयं रागहेतुमाहुः, तं अमनोज्ञं अमनोज्ञरूपादिविषयं द्वेषहेतुमाहुः, समश्च यस्तयोर्मनोज्ञामनोज्ञरूपादिविषयाभिप्राययोः स वीतरागः । एवमुत्तरग्रन्थोपि भावविषयरूपाद्यपेक्षया व्याख्येयः । यद्वा स्वप्नकामदशादिषु भावोपनीतो रूपादिविषयोपि भाव उक्तः स मनसो ग्राह्यः, स्वप्नकामदशादिषु हि मनसः एव केवलस्य व्यापार इति । यदि वाऽभीष्टानामारोग्यधनस्वजनपरिजननन्दनराज्यादीनामनिष्टानां च रोगरिपुतस्करदारिद्रयादीनां संयोगवियोगोपायचिन्तनरूपो भाव इह ग्राह्यः, स चाभीष्टवस्तुविषयो मनोज्ञस्तदितरगोचरः पुनरमनोज्ञ इति ॥ ८७ ॥

मूलम्—भावस्स मणं गहणं वयंति, मणस्स भावं गहणं वयंति। रागस्स हेउं समणुण्णमाहु, दोसस्स हेउं अमणुण्णमाहु ॥ ८८ ॥ भावेसु जो गिद्धिमुवेइ तिव्वं, अकालिअं पावइ से विणासं। रागाउरे कामगुणेसु गिद्धे, करेणुमग्गावहिएव्व नागे ॥ ८९ ॥

व्याख्या—'करेणु' इत्यादि–करेण्वा करिण्या मार्गेण निजपथेनापहृत आकृष्टः करेणुमार्गापहृतो नाग इव हस्तीव, स हि मदोन्मत्तोपि सन्निकृष्टां करिणीं दृष्ट्वा तत्सङ्गमोत्सुकस्तन्मार्गानुगामितया नृपाद्यैर्गृह्यते, ततो युद्धादौ विनाशमाप्नोतीति । ननु चक्षुरादीन्द्रियवशादेव गजस्य प्रवृत्तिरिति कथमस्येह दृष्टान्तत्वं ? उच्यते—सत्यमेतत् परं मनःप्राधान्यविवक्षयात्वेतदपि ज्ञेयम् । यदिवा तथाविधकामदशायां चक्षुरादीन्द्रियव्यापाराभावेपि मनसः प्रवृत्तिरिति न दोषः ॥ ८९ ॥

मूलम्—जे आवि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं । दुद्दंतदोसेण सएण जंतू, न किंचि भावं अवरज्झई से ॥ ९० ॥ एगंतरत्तो रुइरंसि भावे, अतालिसे से कुणई पओसं । दुक्खस्स संपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागो ॥ ९१ ॥

व्याख्या—'अतालिसेत्ति' अतादृशेऽनीदृशे भावे भावविषये वस्तुनि स करोति प्रद्वेषं, क्वायं ममाधुना स्तुतिपथमागत इत्यादिकम् ॥ ९१ ॥

मूलम्—भावाणुगासाणुगए अ जीवे, चराचरे हिंसइणेगरूवे ।
चित्तेहिं ते परितावेइ बाले, पीलेइ अत्तट्ठगुरू किलिट्ठे ॥ ९२ ॥

व्याख्या—भावानुगाशानुगतो रूपादिगोचराभिप्रायानुकूलाभिकांक्षाविवशोऽभीष्टानिष्टार्जनविध्वंसविषयभावानुकूलेच्छापरवशो वा, यद्वा ममोद्वेगादिर्भाव उपशाम्यतु प्रमोदादिश्चोत्पद्यतामिति भावानुगाशानुगतो होमादिकं कुर्वन् जीवांश्चराचरान् हिनस्ति अनेकरूपान् । दृश्यन्ते हि स्वाभिप्रायसिद्धये चराचरहिंसायां प्रवर्त्तमाना अनेके जीवाः ॥ ९२ ॥

मूलम्—भावाणुवाए ण परिग्गहेण, उप्पायणे रक्खणसन्निओगे । वए विओगे अ कहं सुहं से, संभोगकाले अ अतित्तिलाभे ॥ ९३ ॥ भावे अतित्ते अ परिग्गहे अ, सत्तोवसत्तो न उवेइ तुट्ठिं । अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्तं ॥ ९४ ॥

व्याख्या—अदत्तमपि प्रायः स्वाभिप्रायसिद्धये गृह्णातीत्येवमुक्तम् ॥ ९४ ॥

मूलम्—तण्हाभिभूअस्स अदत्तहारिणो, भावे अतित्तस्स परिग्गहे अ । मायामुसं वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ९५ ॥ मोसस्स पच्छा य पुरत्थओ अ, पओगकाले अ

दुही दुरंते । एवं अदत्ताणि समाययंतो, भावे अतित्तो दुहिओ अणिस्सो ॥ ९६ ॥ भावाणुरत्तस्स नरस्स एवं, कत्तो सुहं होज्ज कयाइ किंचि । तत्थोवभोगेवि किलेसदुक्खं, निव्वत्तए जस्स कए ण दुक्खं ॥ ९७ ॥ एमेव भावंमि गओ पओसं, उवेइ दुक्खोहपरंपराओ। पदुट्ठचित्तो अ चिणाइ कम्मं, जं से पुणो होइ दुहं विवागे ॥ ९८ ॥

व्याख्या—भावेऽनभीष्टस्मरणाद्यात्मकेऽनिष्टवस्तुगोचरे वा गतः प्रद्वेषं, विस्तरतु गमास्य नामापीत्यादिकम् ॥९९॥

मूलम्—भावे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झेवि संतो, जलेण वा पुक्खरिणीपलासं ॥ ९९ ॥ ६ ॥

व्याख्या—भावे इष्टानिष्टस्मरणात्मके रम्यारम्यवस्तुगोचरे वा अरक्तोऽद्विष्टश्चेति अष्टसप्तति सूत्रान्वयवार्थः ॥९९॥ उक्तमेवार्थं संक्षेपेणाह—

मूलम्—एविंदियत्था य मणस्स अत्था, दुक्खस्स हेऊ मणुअस्स रागिणो ।
ते चेव थोवंपि कयाइ दुक्खं, न वीअरागस्स करिंति किंचि ॥ १०० ॥

व्याख्या—एवमुक्तप्रकारेण इन्द्रियार्था रूपादयः, चस्य भिन्नक्रमत्वात् मनसोऽर्थाश्च स्मरणादयः, उपलक्षणत्वात् इन्द्रियमनांसि च दुःखस्य हेतवो भवन्तीति गम्यते, मनुजस्य रागिणः उपलक्षणत्वात् द्वेषिणश्च । ते चैवेन्द्रियमनोर्थाः स्तोकमपि कदाचित् दुःखं न वीतरागस्य वीतरागद्वेषस्य कुर्वन्ति किञ्चिन्मानसं शारीरं वेति सूत्रार्थः ॥१००॥ ननु न कश्चित् कामभोगेषु सत्सु वीतरागः सम्भवति तत्कथमस्य दुःखाभावः ? उच्यते—

मूलम्—न कामभोगा समयं उविंति, न यावि भोगा विगइं उविंति ।
जे तप्पओसी अ परिग्गही अ, सो तेसु मोहा विगइं उवेइ ॥ १०१ ॥

व्याख्या—न कामभोगाः समतां रागद्वेषाभावरूपां प्रति हेतुत्वमिति शेषः उपयान्ति गच्छन्ति, तेषां समताहेतुत्वे हि न कोपि रागद्वेषवान् स्यात् । न चापि भोगाः कामभोगा विकृतिं क्रोधादिरूपां प्रति हेतुत्वमुपयान्ति, तेषामेव हि केवलानां विकृतिहेतुत्वे न कोपि रागद्वेषहीनः स्यात् । कोऽनयोस्तर्हि हेतुरित्याह—यस्तत्प्रद्वेषी च तेषु विषयेषु प्रद्वेषवान् परिग्रही च परिग्रहबुद्धिमांस्तेष्वेव रागीत्यर्थः, स तेषु मोहाद्रागद्वेषरूपमोहनीयाद्विकृतिमुपैति रागद्वेषरहितस्तु समतामिति भावः ॥ १०१ ॥ किं रूपां विकृतिमुपैतीत्याह—

मूलम्—कोहं च माणं च तहेव मायं, लोभं दुगुंछं अरइं रइं च । हासं भयं सोग पुमित्थिवेअं नपुंसवेअं विविहे अ भावे ॥ १०२ ॥ आवज्जई एवमणेगरूवे, एवंविहे कामगुणेसु सत्तो । अन्ने अ एअप्पभवे विसेसे, कारुण्णदीणे हिरिमे वइस्से ॥ १०३ ॥

व्याख्या—क्रोधं च मानं च तथैव मायां लोभं जुगुप्सां अरतिं अस्वास्थ्यं रतिं विषयासक्तिं हासं भयं शोकं पुंस्त्रीवेदमिति समाहारनिर्देशः तत्र पुंवेदं स्त्रीवाञ्छारूपं स्त्रीवेदं पुरुषाभिलाषलक्षणं नपुंसकवेदमुभयेच्छात्मकं विविधांश्च भावान् हर्षविषादादीन् । 'आवज्जई' इत्यादि—आपद्यते प्राप्नोति एवममुना रागद्वेषवत्तारूपेण प्रकारेण अनेकरूपान् बहुभेदान् अनन्तानुबन्ध्यादिभेदेन तारतम्यभेदेन च एवंविधानुक्तरूपान् विकारानिति शेषः, कामगुणेषु शब्दादिषु सक्तो रक्तः उपलक्षणत्वात् द्विष्टश्च । अन्यांश्च एतत्प्रभवान् क्रोधादिजनितान् विशेषान् परितापदुर्गतिपातादीन् आपद्यते इति योगः । कीदृशः सन्नित्याह—'कारुण्णदीणेत्ति' कारुण्यास्पदीभूतो दीनः कारुण्यदीनः अत्यन्तदीन इत्यर्थः, ह्रीमान् लज्जावान् कोपाद्यापन्नो हि प्रीतिविनाशादिकं दोषमिहैवानुभवन् परत्र च तद्विपाकमतिकटुकं चिन्तयन् प्रयाति दैन्यं लज्जां च भजते । तथा 'वइस्सेत्ति' द्वेष्यस्तत्तद्दोषदुष्टत्वात् सर्वस्याप्यप्रीतिभाजनमिति ॥ १०२ ॥ १०३ ॥ भूयोपि रागस्य प्रकारान्तरेणोद्धरणोपायं तद्विपर्यये दोषं चाह—

मूलम्—कप्पं न इच्छेज्ज सहायलिच्छू, पच्छाणुतावेण तवप्पभावं ।
एवं विआरे अमिअप्पयारे, आवज्जई इंदियचोरवस्से ॥ १०४ ॥

व्याख्या—कल्पते वैयावृत्त्यादिकार्याय समर्थो भवतीति कल्पो योग्यस्तमपेर्गम्यत्वात् कल्पमपि किं पुनरकल्पं शिष्यादिकं नेच्छेत्सहायलिप्सुर्ममायं विश्रामणादिसाहाय्यं करिष्यतीत्यभिलाषुकः सन्, तथा पश्चादिति प्रताङ्गीकारादुत्तरकालं अनुतापः किमेतावत्कष्टं मयाङ्गीकृतमिति चिन्तारूपः पश्चादनुतापस्तेन हेतुना उपलक्षणत्वात् अन्यथा वा । तपः प्रभावमिहैवामर्षौषध्यादिलब्धिप्रार्थनेन परत्र भोगादि निदानविधा नेच्छेदिति प्रक्रमः । किमेवं निवार्यते ? इत्याह—एवममुना प्रकारेण विकारान् दोषानमितप्रकारान् आपद्यते, इन्द्रियाणि चौरा इव धर्मधनापहरणादिन्द्रियचौरास्तद्वश्यः । उक्तविशेषणविशिष्टस्य हि कल्पतपःप्रभाववाञ्छादिनावश्यमिन्द्रियवशता स्यादिति, एवं च ब्रुवतोऽयमाशयः—तदनुग्रहबुद्ध्या शिष्यं संघादिकार्याय तपःप्रभावं च वाञ्छतो पि न दोषः । एतेन च रागस्य हेतुद्वयत्यागरूप उद्धरणोपाय उक्तः, एवमन्येपि रागहेतवो हेयाः । ततः सिद्धं रागस्योद्धरणोपायानां तद्विपर्यये च दोषाणां कथनमिति ॥ १०४ ॥ उक्तमेवार्थं समर्थयितुं विकारेभ्यो दोषान्तरोत्पत्तिमाह—

मूलम्—तओ से जायंति पओअणाइं, निम्मज्जिउं मोहमहण्णवंमि ।
सुहेसिणो दुक्खविणोअणट्ठा, तप्पच्चयं उज्जमए अ रागी ॥ १०५ ॥

व्याख्या—ततो विकारापत्तेः पश्चात् 'से' तस्य जायन्ते प्रयोजनानि विषयसेवाहिंसादीनि 'निम्मज्जिउंति' निमज्जयितुं प्रक्रमात् तमेव जन्तुं मोहमहार्णवे, यैः प्रयोजनैर्मोहाब्धौ निमग्न इव जन्तुः क्रियते तादृशानीत्यर्थः, स ह्युत्पन्नविकारतया मूढ एव स्यात्, विषयसेवाद्यैश्च प्रयोजनैरत्यर्थं मुह्यतीति भावः । कीदृशस्य सतोऽस्य किमर्थं तानि प्रयोजनानि स्युरित्याह—सुखैषिणः शर्माभिलाषिणो दुःखविनोदनार्थं सुखैषी सन् दुःखक्षयार्थमेव हि विषयसेवादौ प्रवर्त्तते इत्येवमुक्तं । कदाचित् कार्योत्पत्तावपि तत्रायमुदासीनोपि स्यादित्याह—तत्प्रत्ययमुक्तप्रयोजननिमित्तं उद्यच्छत्येव, कोऽर्थः ? तत्प्रवृत्तावुत्सहते एव रागी उपलक्षणत्वात् द्वेषी च सन्, रागद्वेषयोरेव सकलानर्थहेतुत्वात् ॥ १०५ ॥ कुतो रागद्वेषयोरेवानर्थहेतुत्वमित्याह—

मूलम्—विरज्जमाणस्स य इंदिअत्था, सद्दाइया तावइअप्पयारा ।
न तस्स सव्वेवि मणुण्णयं वा, निव्वत्तयंती अमणुण्णयं वा ॥ १०६ ॥

व्याख्या—विरज्यमानस्य उपलक्षणत्वात् अद्विषतश्च चः पुनरर्थे ततो विरज्यमानस्याद्विषतश्च पुनरिन्द्रियार्थाः, तावन्त इति यावन्तो लोके प्रतीतास्तावन्तः प्रकाराः खरमधुराद्या भेदा येषां ते तावत्प्रकारा बहुभेदा इत्यर्थः, न तस्य मर्त्यस्य सर्वेपि मनोज्ञतां वा निर्वर्त्तयन्ति जनयन्ति अमनोज्ञतां वा किन्तु रागद्वेषवत एव, स्वरूपेण हि रूपादयो नात्मनो मनोज्ञताममनोज्ञतां वा कर्त्तुं क्षमाः किन्तु रक्तेतरप्रतिपत्तॄणामाशयवशादेव । यदुक्तमन्यैरपि—"परिव्राट्कामुकशुना—मेकस्यां प्रमदातनौ । कुणपं कामिनी भक्ष्य—मिति तिस्रो विकल्पनाः ॥ १ ॥" ततो वीतरागद्वेषस्य नैवामी मनोज्ञताममनोज्ञतां वा कुर्युरिति, तदभावे च विषयसेवाक्रोशदानादिप्रयोजनानुत्पत्तेर्नैवानर्थोत्पत्तिः स्यादिति सूत्रषट्कार्थः ॥ १०६ ॥ तदेवं रागद्वेषयोस्तदुपादानहेतोर्मोहस्य चोद्धरणोपायानुक्त्वोपसंहारमाह—

मूलम्—एवं ससंकप्पविकप्पणासु, संजायए समयमुवट्ठिअस्स ।
अत्थे अ संकप्पयओ तओ से, पहीअए कामगुणेसु तण्हा ॥ १०७ ॥

व्याख्या—एवमुक्तनीत्या स्वस्यात्मनः सङ्कल्पा रागद्वेषमोहरूपा अध्यवसायास्तेषां विकल्पनाः सकलदोषमूलत्वादिपरिभावनाः स्वसङ्कल्पविकल्पनास्तासु उपस्थितस्योद्यतस्य सञ्जायते समता माध्यस्थ्यमितियोगः । अर्थांश्चेन्द्रियार्थान् रूपादीन् सङ्कल्पयतश्चिन्तयतो यथा नैते कर्मबन्धहेतवः किन्तु रागादय एवेति । यद्वा अर्थान् जीवादीन् चस्य भिन्नक्रमत्वात् सङ्कल्पयतश्च शुभध्यानविषयतयाध्यवस्यतः, ततः इति समतायाः 'से' तस्य साधोः प्रहीयते कामगुणेषु तृष्णाभिलाषः ॥ १०७ ॥ ततः स किं करोतीत्याह—

मूलम्—स वीअरागो कयसव्वकिच्चो, खवेइ नाणावरणं खणेणं ।
तहेव जं दंसणमावरेइ, जं चंतरायं पकरेइ कम्मं ॥ १०८ ॥

व्याख्या—स प्रहीणतृष्णो वीतरागो भवति, तृष्णा हि लोभस्तत्क्षये च क्षीणमोहत्वावाप्तिरिति, तथा कृतसर्वकृत्य इव कृतसर्वकृत्यः प्राप्तप्रायत्वादनेन मुक्तेः क्षपयति ज्ञानावरणं क्षणेन, तथैव यत् दर्शनमावृणोति तत् दर्शनावरणमित्यर्थः, यच्चान्तरायं दानादिविषयं विघ्नं प्रकरोति कर्मान्तरायाख्यमित्यर्थः ॥ १०८ ॥ यत्क्षया च कं गुणमवाप्नोतीत्याह—

मूलम्—सव्वं तओ जाणइ पासई अ, अमोहणे होइ निरंतराए ।
अणासवे झाणसमाहिजुत्ते, आउक्खए मोक्खमुवेइ सुद्धे ॥ १०९ ॥

व्याख्या—सर्वं ततो ज्ञानावरणीयादिक्षयाज्जानाति विशेषरूपत्वेनावगच्छति, पश्यति च सामान्यरूपतया, तथाऽमोहनो मोहरहितो भवति, तथा निरन्तरायः, अनाश्रवः कर्मबन्धहेतुरहितः, ध्यानं शुक्लध्यानं तेन समाधिः परमस्वास्थ्यं ध्यानसमाधिस्तेन युक्तो ध्यानसमाधियुक्तः, आयुषः उपलक्षणत्वात् नामगोत्रवेद्यानां च क्षयः आयुःक्षयस्तस्मिन् सति मोक्षमुपैति शुद्धो विगतकर्ममल इति सूत्रत्रयार्थः ॥ १०९ ॥ मोक्षगतश्च यादृशः स्यात्तदाह—

मूलम्—सो तस्स सव्वस्स दुहस्स मुक्को, जं बाहई सययं जंतुमेअं ।
दीहामयविप्पमुक्को पसत्थो, तो होइ अच्चंतसुही कयत्थी ॥ ११० ॥

व्याख्या—स मोक्षं प्राप्तः तस्माज्जातिजरामरणादिरूपत्वेन प्रोक्तात् सर्वस्मात् दुःखात्—सर्वत्र सुब्व्यत्ययेन षष्ठी, मुक्तः पृथग्भूतो यत्कीदृशमित्याह—यद्दुःखं बाधते सततं जन्तुमेनं प्रत्यक्षं, दीर्घाणि स्थितितः प्रक्रमात् कर्माणि तान्यामया इव विविधबाधाविधायितया दीर्घामयास्तेभ्यो विप्रमुक्तो दीर्घामयविप्रमुक्तः, अत एव प्रशस्तः प्रशंसार्हः 'तो' इति—ततो दीर्घामयविप्रमोक्षात् भवत्यत्यन्तसुखी तत एव च कृतार्थ इति सूत्रार्थः ॥ ११० ॥ अध्ययनार्थोपसंहारमाह—

मूलम्—अणाइकालप्पभवस्स एसो, सव्वस्स दुक्खस्स पमोक्खमग्गो ।
विआहिओ जं समुवेच्च सत्ता, कमेण अच्चंतसुही हवंतित्ति बेमि ॥ १११ ॥

व्याख्या—अनादिकालप्रभवस्य एषोऽनन्तरोक्तः सर्वस्य दुःखस्य प्रमोक्षमार्गः प्रमोक्षोपायो व्याख्यातोऽयं समुपेत्य सम्यक् प्रतिपद्य सत्त्वाः क्रमेणोत्तरोत्तरगुणावाप्तिरूपेण अत्यन्तसुखिनो भवन्तीति सूत्रार्थः॥१११॥ इति ब्रवीमीति प्राग्वत्

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय-
श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ द्वात्रिंशत्तममध्ययनं सम्पूर्णम् ॥ ३२ ॥

## ॥ अथ त्रयस्त्रिंशमध्ययनम् ॥

॥ ॐ ॥ उक्तं द्वात्रिंशमध्ययनं, अथ कर्मप्रकृतिसंज्ञं त्रयस्त्रिंशमारभ्यते । अस्य चायमभिसम्बन्धोऽनन्तराध्ययने प्रमादस्थानान्युक्तानि, तैश्च कर्म बध्यते इति सम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—अट्ठ कम्माइं वोच्छामि, आणुपुव्विं जहक्कमं । जेहिं बद्धो अयं जीवो, संसारे परिअत्तइ ॥ १ ॥

व्याख्या—अष्ट क्रियन्ते मिथ्यात्वाविरत्यादिहेतुभिर्जीवेनेति कर्माणि वक्ष्यामि, आनुपूर्व्या परिपाट्या । इयं च पश्चानुपूर्व्यादिरपि स्यादित्याह—यथाक्रमं क्रमानतिक्रमेण । यैर्बद्धः श्लिष्टोऽयं प्रतिप्राणिस्वसंवेदनप्रत्यक्षो जीवः संसारे परिवर्त्तते, अपरापरपर्यायाननुभवन् भ्राम्यतीति सूत्रार्थः ॥ १ ॥ प्रतिज्ञातमाह—

मूलम्—नाणस्सावरणिज्जं, दंसणावरणं तहा । वेअणिज्जं तहा मोहं, आउकम्मं तहेव य ॥ २ ॥

व्याख्या—ज्ञानस्य विशेषावबोधरूप आव्रियते सदप्याच्छाद्यतेऽनेन घनेनार्क इवेत्यावरणीयम् । दर्शनं सामान्यावबोधस्तदाव्रियतेऽनेन प्रतीहारेण नृपदर्शनमिवेति दर्शनावरणम् । तथा वेद्यते सुखदुःखतयाऽनुभूयते लिह्यमानमधुलिप्तासिधारावदिति वेदनीयम् । तथा मोहयति जानानमपि मद्यवद्विचित्तताजननेनेति मोहस्तम् । आयाति

दुर्गतेर्निष्क्रमितुकामस्यापि जन्तोर्निगडवत् प्रतिबन्धकतामित्यायुस्तदेव कर्म आयुष्कर्म तथैव च ॥ २ ॥

मूलम्—नामकम्मं च गोत्तं च, अंतरायं तहेव य । एवमेआइं कम्माइं, अट्ठेव उ समासओ ॥ ३ ॥

व्याख्या—नमयति गत्यादिविविधभावानुभवं प्रति जीवं प्रवणयति चित्रकर इव गजाश्वादिभावं प्रति रेखाकारमिति नामकर्म । गीयते शब्द्यते उच्चावचैः शब्दैः कुलालान् मृद्द्रव्यमिव जीवो यस्मादिति गोत्रम् । अन्तरा दातृग्राहकयोर्मध्ये भाण्डारिकवद्विघ्नहेतुत्वेनायते गच्छतीत्यन्तरायम् । कर्मेति सर्वत्र सम्बध्यते, एवममुना प्रकारेण एतानि कर्माण्यष्टैव, तुः पूर्त्तौ, समासतः संक्षेपतो विस्तरतस्तु यावन्तो जीवास्तान्यपि तावन्तीत्यनन्तान्येवेति भावः ॥ ३ ॥ एवं कर्मणो मूलप्रकृतीः प्रोच्योत्तरप्रकृतीराह—

मूलम्—नाणावरणं पंचविहं, सुअं आभिणिबोहिअं । ओहिनाणं तइयं, मणनाणं च केवलं ॥ ४ ॥

व्याख्या—ज्ञानावरणं पञ्चविधं, तच्च कथं पञ्चविधमित्याशङ्कायामावार्यभेदादेवात्र आवरणस्य भेद इत्याशयेनावार्यस्य ज्ञानस्यैव भेदानाह–'सुअं' इत्यादि—॥ ४ ॥

मूलम्—निद्दा तहेव पयला, निद्दानिद्दा य पयलपयला य । तत्तो अ थीणगिद्धी उ, पंचमा होइ नायव्वा ॥ ५ ॥ चक्खुमचक्खुओहिस्स, दंसणे केवले अ आवरणे । एवं तु नवविगप्पं नायव्वं दंसणावरणं ॥ ६ ॥

व्याख्या—निद्रादीनां स्वरूपं त्वेवम्–"सुहपडिबोहा निद्दा १ निद्दानिद्दा य दुक्खपडिबोहा २ । पयला ठिओवविट्ठस्स ३ पयलपयला उ चंकमओ ४ ॥ १ ॥ दिणचिंतिअत्थकरणी, थीणद्धी अद्धचक्किअद्धबलत्ति ५ ॥" इदं निद्रापञ्चकम् ॥ ५ ॥ 'चक्खुमचक्खुओहिस्सत्ति' मकारोऽलाक्षणिकः, चक्षुश्चाचक्षुश्चावधिश्च चक्षुरचक्षुरवधीति समाहारस्तस्य, दर्शने इति दर्शनशब्दः प्रत्येकं योज्यः, ततश्चक्षुर्दर्शने चक्षुषा रूपसामान्यग्रहणे । अचक्षुंषीति नञः पर्युदासत्वाच्चक्षुःसदृशानि शेषेन्द्रियमनांसि तद्दर्शने तेषां स्वस्वविषयसामान्यावबोधे । अवधिदर्शने अवधिना रूपिद्रव्याणां सामान्यग्रहणे । 'केवले अत्ति' केवलदर्शने च सर्वद्रव्यपर्यायाणां सामान्यज्ञाने आवरणं । एतच्च चक्षुर्दर्शनादिविषयत्वाच्चतुर्विधमन एवाह–एवमित्यनेन निद्रापञ्चविधत्वचक्षुर्दर्शनावरणादिचतुर्विधत्वलक्षणेन प्रकारेण तुः पूर्त्तौ नवविकल्पं नवभेदं ज्ञातव्यं दर्शनावरणम् ॥ ६ ॥

मूलम्—वेअणिअं पि अ दुविहं, सायमसायं च आहिअं । सायस्स उ बहू भेआ, एमेवासायस्सवि॥७॥

व्याख्या—वेदनीयमपि द्विविधं, सातं सुखं शारीरं मानसं च. इहोपचारात्तन्निमित्तं कर्माप्येवमुक्तं, असातं च तद्विपरीतं । 'सायस्स उत्ति' सातस्यापि बहवो भेदाः, न केवलं ज्ञानदर्शनावरणयोरित्यपिशब्दार्थः, बहुभेदत्वं चास्य तद्धेतूनामनुकम्पादीनां बहुत्वात् । एवमेवेति–बहव एव भेदा असातस्यापि, दुःखशोकादीनां तद्धेतूनामपि बहुत्वादेवेति भावः ॥ ७ ॥

मूलम्—मोहणिज्जंपि दुविहं, दंसणे चरणे तहा । दंसणे तिविहं वुत्तं, चरणे दुविहं भवे ॥ ८ ॥

व्याख्या—मोहनीयमपि द्विविधं वेदनीयवत्, द्वैविध्यमेवाह–दर्शने तत्त्वरुचिरूपे, चरणे चारित्रे, ततो दर्शनमोहनीयं चारित्रमोहनीयं चेत्यर्थः । तत्र दर्शने दर्शनविषयं मोहनीयं त्रिविधं उक्तं, चरणे चरणविषयं द्विविधं भवेत् ॥ ८ ॥ दर्शनमोहनीयत्रैविध्यमाह—

मूलम्—सम्मत्तं चेव मिच्छत्तं, सम्मामिच्छत्तमेव य । एआओ तिण्णि पयडीओ, मोहणिज्जस्स दंसणे

व्याख्या—सम्यक्त्वं शुद्धदलिकरूपं यदुदयेपि तत्त्वरुचिः स्यात् १ । 'चेव' पूर्त्तौ, मिथ्याभावो मिथ्यात्वमशुद्धदलिकरूपं यतोऽतत्त्वेषु तत्त्वबुद्धिर्जायते २ । सम्यग्मिथ्यात्वं शुद्धाशुद्धदलिकरूपं यतो जन्तोरुभयस्वभावत्वं स्यात् ३ । इह सम्यक्त्वाद्या जीवधर्मास्तद्धेतुत्वाच्च दलिकानामपि तद्व्यपदेशः । एतास्तिस्रः प्रकृतयो मोहनीयस्य दर्शने दर्शनविषयस्य ॥ ९ ॥

मूलम्—चरित्तमोहणं कम्मं, दुविहं तु विआहिअं । कसायवेअणिज्जं तु, नोकसायं तहेव य ॥ १० ॥

व्याख्या—चरित्रे मुह्यत्यनेनेति चरित्रमोहनं कर्म, येन जानन्नपि चारित्रफलादि न तत् प्रतिपद्यते, तच्च द्विविधं व्याख्यातं । द्वैविध्यमेवाह–कषायाः क्रोधाद्यास्तद्रूपेण वेद्यतेऽनुभूयते यत्तत्कषायवेदनीयं, चः समुच्चये, नोकषाय-

मिति प्रक्रमान्नोकषायवेदनीयं। तत्र नोकषायाः कषायसहचारिणो हास्यादयस्तद्रूपेण यद्वेद्यते। तश्चैव चेति समुच्चये ॥ १० ॥ अनयोर्भेदानाह—

मूलम्—सोलसविह भेएणं, कम्मं तु कसायजं। सत्तविह नवविहं वा, कम्मं नोकसायजं ॥ ११ ॥

व्याख्या—'सोलसविहत्ति' षोडशविधं भेदेन कर्म तु पुनः कषायजं "जं वेअइ तं बंधइत्ति" वचनात् कषायवेदनीयमित्यर्थः, षोडशभेदत्वं चास्य क्रोधादीनां चतुर्णामपि प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यान [प्रत्याख्यानावरण] संज्वलनभेदाच्चतुर्विधत्वात्। 'सत्तविहत्ति' सप्तविधं नवविधं वा कर्म नोकषायजं नोकषायवेदनीयमित्यर्थः, तत्र सप्तविधं हास्यादिषट्कं हास्यरत्यरतिभयशोकजुगुप्सारूपं वेदश्च सामान्यविवक्षया एक एवेति। नवविधं तु तदेव षट्कं वेदत्रयसहितमिति ॥ ११ ॥

मूलम्—नेरइयतिरिक्खाउं, मणुस्साउं तहेव य। देवाउअं चउत्थं तु, आउकम्मं चउव्विहं ॥ १२ ॥

व्याख्या—'नेरइअतिरिक्खाउंति' आयुःशब्दस्य प्रत्येकं योगान्नैरयिकायुस्तिर्यगायुः, शेषं व्यक्तम् ॥ १२ ॥

मूलम्—नामकम्मं तु दुविहं, सुहं असुहं च आहिअं। सुहस्स य बहू भेया, एमेव असुहस्सवि ॥१३॥

व्याख्या—नामकर्म द्विविधं, कथमित्याह—शुभमशुभं च आख्यातं, शुभस्य बहवो भेदा एवमेवाशुभस्यापि। तत्रोत्तरभेदैः शुभनाम्नोऽनन्तभेदत्वेपि मध्यमविवक्षया सप्तत्रिंशद्भेदा यथा—नर १ देवगती २ पञ्चेन्द्रियजातिः ३ शरीरपञ्चकं ८ आद्यशरीरत्रयस्याङ्गोपाङ्गत्रयं ११ प्रशस्तं वर्णादिचतुष्कं १५ प्रथमं संस्थानं १६ संहननं च १७ मनुष्य १८ देवानुपूर्व्यौ १९ अगुरुलघु २० पराघातं २१ उच्छ्वासं २२ आतपो २३ द्युद्योतौ २४ प्रशस्तविहायोगतिः २५ त्रस २६ बादर २७ पर्याप्त २८ प्रत्येक २९ स्थिर ३० शुभ ३१ सुभग ३२ सुस्वरा ३३ देय ३४ यशांसि ३५ निर्माणं ३६ तीर्थकरनाम ३७ चेति। एताश्च शुभानुभावत्वाच्छुभाः। तथा अशुभनाम्नोपि मध्यमविवक्षया चतुस्त्रिंशद्भेदास्तथाहि—नरक १ तिर्यग्गती २ एकेन्द्रियादिजातिचतुष्कं ६ प्रथमवर्जानि संहननानि पञ्च ११ संस्थानान्यपि प्रथमवर्जानि पञ्चैव १६ अप्रशस्तं वर्णादिचतुष्कं २० नरक २१ तिर्यगानुपूर्व्यौ २२ उपघातः २३ अप्रशस्तविहायोगतिः २४ त्रसदशकविपर्यस्तं स्थावरदशकं ३४। एतानि चाशुभानां नारकत्वादीनां हेतुत्वादशुभानि। अत्र बन्धनसंघातनानि शरीरेभ्यो वर्णाद्यवान्तरभेदाश्च वर्णादिभ्यः पृथग् न विवक्ष्यन्ते इति नोक्तसंख्याविरोधः ॥

मूलम्—गोअकम्मं दुविहं, उच्चं नीअं च आहिअं। उच्चं अट्ठविहं होइ, एवं नीअंपि आहिअं ॥ १४ ॥

व्याख्या—गोत्रकर्म द्विविधं, उच्चमिक्ष्वाकुवंशादिव्यपदेशहेतु, नीचं तद्विपरीतमाख्यातं। तत्रोच्चमुच्चैर्गोत्रमष्टविधं भवति, एवमष्टविधं नीचमप्याख्यातं। अष्टविधत्वं चानयोर्बन्धहेतूनामष्टविधत्वात्। अष्टौ हि जातिमदाभावादय उच्चैर्गोत्रस्य बन्धहेतवः, तावन्त एव च जातिमदादयो नीचैर्गोत्रस्येति ॥ १४ ॥

मूलम्—दाणे लाभे अ भोगे अ, उवभोगे वीरिए तहा। पंचविहमंतरायं, समासेण विआहिअं ॥१५॥

व्याख्या—दाने देयवस्तुवितरणरूपे, लाभे च प्रार्थितवस्तुप्राप्तिरूपे, भोगे च सकृदुपभोग्यपुष्पादिविषये, उपभोगे पुनः पुनरुपभोग्यगृहस्त्र्यादिविषये, वीर्ये पराक्रमे तथा। अन्तरायमिति प्रक्रमः, ततश्च विषयभेदात् पञ्चविधमन्तरायं समासेन व्याख्यातं। तत्र दानान्तरायं समासेन येन सति पात्रे देये च वस्तुनि जानन्तोपि दानफलं तत्र प्रवृत्तिर्न स्यात् १। लाभान्तरायं तु येन भव्येपि दातरि याञ्चादक्षेपि याचके लाभो न स्यात् २। भोगान्तरायं तु येन सम्पद्यमानेप्याहारमाल्यादौ भोक्तुं न शक्नोति ३। उपभोगान्तरायं तु येन सदपि वस्त्राङ्गनादि नोपभोक्तुं प्रभवति ४। वीर्यान्तरायं तु यतो नीरोगो वयःस्थोपि तृणकुब्जीकरणेपि न क्षमते ५। इति सूत्रचतुर्दशकार्थः ॥ १५ ॥ एवं प्रकृतयोऽभिहिताः, सम्प्रत्येतन्निगमनायोत्तरग्रन्थसम्बन्धाय चाह—

मूलम्—एआओ मूलप्पयडीओ, उत्तराओ अ आहिआ। पएसग्गं खेत्तकाले अ, भावं चादुत्तरं सुण१६

व्याख्या—एता मूलप्रकृतय उत्तराश्चेति उत्तरप्रकृतयश्च आख्याताः। प्रदेशाः परमाणवस्तेषामग्रं परिमाणं प्रदेशाग्रं, 'खेत्तकाले अत्ति' क्षेत्रकालौ च, भावं चानुभागलक्षणं कर्मणः पर्यायं चतुःस्थानिकादिरसमित्यर्थः, अत उत्तरमिति अतः प्रकृत्यभिधानादूर्ध्वं शृणु कथयतो ममेति शेषः ॥ १६ ॥ तत्रादौ प्रदेशाग्रमाह—

मूलम्—सव्वेसिं चेव कम्माणं, पएसग्गमणंतगं। गंठिअसत्ताईअं, अंतो सिद्धाण आहिअं ॥ १७ ॥

व्याख्या—सर्वेषां चः पूर्त्तौ एवोऽपिशब्दार्थः, ततः सर्वेषामपि कर्मणां प्रदेशाग्रं परमाणुपरिमाणं अनन्तमेवानन्तकं। तच्चानन्तकं ग्रन्थिकसत्त्वा ये ग्रन्थिदेशं गत्वापि तं भित्त्वा न कदाचिदुपरि गन्तारस्ते चाभव्या एवात्र गृह्यन्ते, तानतीतं तेभ्योऽनन्तगुणत्वेनातिक्रान्तं ग्रन्थिकसत्त्वातीतं। तथा अन्तर्मध्ये सिद्धानामाख्यातं, सिद्धेभ्यो हि कर्मपरमाणवोऽनन्तभागे एव स्युः। एकस्य जीवस्य एकसमयग्राह्यकर्मपरमाण्वपेक्षं चैतत्, अन्यथा हि सर्वजीवेभ्योप्यनन्तानन्तगुणत्वात्सर्वकर्मपरमाणूनां कथमिदमुपपद्येतेति ॥ १७ ॥ क्षेत्रमाह—

मूलम्—सव्वजीवाण कम्मं तु, संगहे छद्दिसागयं। सव्वेसुवि पएसेसु, सव्वं सव्वेण वज्झगं ॥ १८ ॥

व्याख्या—सर्वजीवानां कर्म ज्ञानावरणादि, तुः पूर्त्तौ, संग्रहे संग्रहक्रियायां योग्यं स्यादिति शेषः, यद्वा सर्वे जीवाः 'ण' इति वाक्यालङ्कारे, कर्म 'संगहंति' संगृह्णन्ति। कीदृशं सदित्याह—'छद्दिसागयंति' षण्णां दिशां समाहारः षड्दिशं तत्र गतं स्थितं षड्दिशगतं, एतच्च द्वीन्द्रियादीनाश्रित्य नियमेन व्याख्येयं, एकेन्द्रियाणामन्यथापि सम्भवात्। यदागमः—"एगेंदिए णं भंते! तेआकम्मपोग्गलाणं गहणं करेमाणे किं तिदिसिं जाव छद्दिसिं करेइ? गोयमा! सिअ तिदिसिं सिअ चउदिसि सिअ पंचदिसिं सिअ छद्दिसिं करेइ। वेइंदिअ—तेइंदिअ—चउरिंदिअ—पंचिंदिआ निअमा छद्दिसिंति।" तच्च संगृहीतं सत् केन सह कियत् कथं वा बद्धं स्यादित्याह—'सव्वेसुवि पएसेसुत्ति' सर्वैरपि प्रदेशैरात्मसम्बन्धिभिः सर्वं ज्ञानावरणादि, नत्वन्यतरदेकमेव, सर्वेणेति गम्यत्वात् प्रकृतिस्थित्यादिना प्रकारेण। बद्धं क्षीरेणोदकवदात्मप्रदेशैः श्लिष्टं तदेव बद्धकम् ॥ १८ ॥ कालमाह—

मूलम्—उदहिसरिसनामाणं, तीसई कोडिकोडिओ। उक्कोसिआ ठिई होई, अंतोमुहुत्तं जहण्णिआ १९

आवरणिज्जाण दुण्हंपि, वेअणिज्जे तहेव य। अंतराए अ कम्मंमि, ठिई एसा विआहिआ २०

व्याख्या—उदधिना सदृशं नाम येषां तानि उदधिसदृशनामानि सागरोपमाणीत्यर्थः, तेषां त्रिंशत्कोटाकोट्यः 'उक्कोसिअत्ति' उत्कृष्टा भवति स्थितिः, अन्तर्मुहूर्त्तं जघन्यैव जघन्यका ॥ १९ ॥ केषामित्याह—'आवरणिज्जाणत्ति' आवरणयोर्ज्ञानदर्शनविषययोर्द्वयोरपि, वेदनीये तथैव च, अन्तराये च कर्मणि स्थितिरेषा व्याख्याता। किंचेह वेदनीयस्यापि जघन्या स्थितिरन्तर्मुहूर्त्तमानैवोक्ताऽन्यत्र तु द्वादशमुहूर्त्तमाना सा सकषायस्योच्यते। यदुक्तं—"मोत्तुं अकसायठिइं, बारमुहुत्ता जहन्न वेअणिएत्ति"। अकषायस्य तु समयद्वयरूपा सातवेद्यस्य स्थितिरिहैवोक्ता, तदत्र तत्त्वं तत्त्वविदो विदन्तीति ॥ २० ॥

मूलम्—उदहिसरिसनामाणं, सत्तरि कोडिकोडिओ। मोहणिज्जस्स उक्कोसा, अंतोमुहुत्तं जहण्णिआ २१

तेत्तीससागरोवम, उक्कोसेण विआहिआ। ठिई उ आउकम्मस्स, अंतोमुहुत्तं जहण्णिआ २२

उदहिसरिसनामाणं, वीसई कोडिकोडिओ। नामगोत्ताण उक्कोसा, अट्ठमुहुत्ता जहण्णिआ २३

व्याख्या—स्पष्टानि ॥ २१ ॥ २२ ॥ २३ ॥ अथ भावमाह—

मूलम्—सिद्धाणऽणंतभागो अ, अणुभागा भवंति उ। सव्वेसुवि पएसग्गं, सव्वजीवेसऽइच्छिअं ॥२४॥

व्याख्या—सिद्धानामनन्तभागेऽनुभागा रसविशेषा भवन्ति, तुः पूर्त्तौ, अयञ्चानन्तभागोऽनन्तसंख्य एवेति। तथा सर्वेष्वपि प्रक्रमादनुभागेषु प्रदिश्यन्त इति प्रदेशा बुद्ध्या विभज्यमानास्तदविभागैकदेशास्तेषामग्रं परिमाणं प्रदेशाग्रं 'सव्वजीवेसइच्छिअंति' सर्वजीवेभ्योऽतिक्रान्तं, ततोपि तेषामनन्तगुणत्वादिति सूत्रनवकार्थः ॥ २४ ॥ अध्ययनार्थोपसंहारपूर्वमुपदेशमाह—

मूलम्—तम्हा एएसि कम्माणं, अणुभागे विआणिआ।
एएसिं संवरे चेव, खवणे अ जए बुहेत्ति बेमि ॥ २५ ॥

व्याख्या—यस्मादेवंविधाः प्रकृतिबन्धादयस्तस्मादेतेषां कर्मणामनुभागानुपलक्षणत्वात् प्रकृतिबन्धादींश्च विज्ञाय

विशेषेण कटुविपाकत्वलक्षणेन भवहेतुत्वलक्षणेन च ज्ञात्वा एतेषां कर्मणामनुपात्तानां संवरे निरोधे, च समुच्चये एवोऽवधारणे भिन्नक्रमः सोऽग्रतो योक्ष्यते, क्षपणे च पूर्वोपात्तानां निर्जरणे 'जएज्ज' यतेतैव यत्नं कुर्यादेव बुधो धीमानिति सूत्रार्थः ॥ २५ ॥ इति ब्रवीमीति प्राग्वत् ॥ ३३ ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमार्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ त्रयस्त्रिंशमध्ययनं सम्पूर्णम् ॥ ३३ ॥

## ॥ अथ चतुस्त्रिंशमध्ययनम् ॥

॥ ॐ ॥ उक्तं त्रयस्त्रिंशमध्ययनमथ चतुस्त्रिंशं लेश्याध्ययनमारभ्यते, अस्य चायं सम्बन्धोऽनन्तराध्ययने कर्मप्रकृतय उक्तास्तत्स्थितिश्च लेश्यावशात् स्यादितीह ता उच्यन्ते, इति सम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—लेसज्झयणं पवक्खामि, आणुपुव्वि जहक्कमं । छण्हंपि कम्मलेसाणं, अणुभावे सुणेह मे ॥ १ ॥

व्याख्या—लेश्यावाचकमध्ययनं लेश्याध्ययनं प्रवक्ष्यामि, आनुपूर्व्येत्यादि प्राग्वत् । तत्र षण्णामपि कर्मलेश्यानां कर्मस्थितिविधातृतत्तद्विशिष्टपुद्गलरूपाणामनुभावान् रसविशेषान् शृणुत मे कथयत इति शेषः ॥ १ ॥ एतदनुभावाश्च नामादिप्ररूपणे कथिता एव भवन्तीति तत्प्ररूपणाय द्वारसूत्रमाह—

मूलम्—णामाइं वण्णरसगंधफासपरिणामलक्खणं ठाणं । ठिइं गइं च आउं, लेसाणं तु सुणेह मे ॥ २ ॥

व्याख्या—नामानि वर्ण–रस–गन्ध–स्पर्श–परिणाम–लक्षणमिति षण्णां समाहारः, परिणामश्चात्र जघन्यादिः, लक्षणं पञ्चाश्रवसेवादि, स्थानमुत्कर्षापकर्षरूपं, स्थितिमवस्थानकालं, गतिं च नरकादिकां यतो याऽवाप्यते, आयुर्जीवितं यावति तत्रावशिष्यमाणे आगामिभवलेश्यापरिणामस्तदिह गृह्यते, लेश्यानां तु शृणुत मे वदत इति सूत्रार्थः ॥ २ ॥ यथोद्देशं निर्देश इत्यादौ नामान्याह—

मूलम्—किण्हा १ नीला २ य काऊ ३ य, तेऊ ४ पम्हा ५ तहेव य ।
सुक्कलेसा य ६ छट्ठा उ, नामाइं तु जहक्कमं ॥ ३ ॥

व्याख्या—स्पष्टा ॥ ३ ॥ वर्णानाह—

मूलम्—जीमूतनिद्धसंकासा, गवलरिट्ठगसन्निभा । खंजंजणनयणनिभा, किण्हलेसा उ वण्णओ ॥४॥

व्याख्या—'जीमूतनिद्धसंकासत्ति' प्राकृतत्वात् स्निग्धजीमूतसंकाशा, गवलं महिषशृङ्ग–रिष्टकः काकः–फलविशेषो वा तत्सन्निभा, 'खंजत्ति' खञ्जनं स्नेहाभ्यक्तशकटाक्षघर्षणोद्भवं–अञ्जनं कज्जलं–नयनमित्युपचारान्नयनमध्यवर्त्तिनी कृष्णतारा–तन्निभा, कृष्णलेश्या तु वर्णतो वर्णमाश्रित्य परमकृष्णेत्यर्थः ॥ ४ ॥

मूलम्—नीलासोगसंकासा, चासपिच्छसमप्पभा । वेरुलियनिद्धसंकासा, नीललेसा उ वण्णओ ॥ ५ ॥

व्याख्या—नीलाशोकसंकाशा रक्ताशोकापोहार्थमिह नीलग्रहणं, 'वेरुलियनिद्धसंकासत्ति' स्निग्धवैडूर्यसङ्काशा अतिनीलेत्यर्थः ॥ ५ ॥

मूलम्—अयसीपुप्फसंकासा, कोइलच्छदसन्निभा । पारेवयगीवनिभा, काउलेसा उ वण्णओ ॥ ६ ॥

व्याख्या—अतसी धान्यविशेषस्तत्पुष्पसङ्काशा, कोकिलच्छदस्तैलकण्टकस्तत्सन्निभा, पाठान्तरे कोकिलछविसन्निभा, पारापतग्रीवानिभा, कापोतलेश्या तु वर्णतः, किञ्चित्कृष्णा किञ्चिद्रक्तेति भावः ॥ ६ ॥

मूलम्—हिंगुलधाउसंकासा, तरुणाइच्चसन्निभा। सुअतुंडपईवनिभा, तेउलेसा उ वण्णओ ॥ ७ ॥

व्याख्या—इह धातुर्गैरिकादिः, 'सुअतुंड' इत्यादि–शुकस्य तुण्डं मुखं तच्च प्रदीपश्च तन्निभा रक्तेत्यर्थः ॥ ७ ॥

मूलम्—हरियालभेयसंकासा, हलिद्दाभेयसन्निभा। सणासणकुसुमनिभा, पम्हलेसा उ वण्णओ ॥८॥

व्याख्या—हरितालस्य यो भेदो द्विधाभावस्तत्सङ्काशा, भिन्नस्य हि तस्य वर्णः प्रकृष्टः स्यादिति भेदग्रहणम्, हरिद्राभेदसन्निभा, सणो धान्यविशेषः–असनो वीयकस्तयोः कुसुमं तन्निभा पीतेत्यर्थः ॥ ८ ॥

मूलम्—संखंककुंदसंकासा, खीरधारासमप्पभा। रययहारसंकासा, सुक्कलेसा उ वण्णओ ॥ ९ ॥

व्याख्या—शङ्खः प्रतीतः, अङ्को मणिविशेषः, कुन्दं कुन्दपुष्पं, तत्सङ्काशा, क्षीरधारासमप्रभा, पात्रस्थस्य हि तस्य तद्वशादन्यथात्वमपि स्यादितीह धाराग्रहणम्। शेषं व्यक्तमिति सूत्रपट्कार्थः ॥ ९ ॥ रसानाह—

मूलम्—जह कडुअतुंबगरसो, निंबरसो कडुअरोहिणिरसो वा।
एत्तोवि अणंतगुणो, रसो उ किण्हाइ नायव्वो ॥ १० ॥

व्याख्या—यथा कटुकतुम्बकरसो निम्बरसः कटुकरोहिणी त्वग्विशेषः तद्रसो वा यथेति सर्वत्र योज्यम्। इतोऽप्यनन्तगुणोऽनन्तसंख्येन राशिना गुणितो रसस्तु कृष्णाया ज्ञातव्यः ॥ १० ॥

मूलम्—जह तिकडुअस्स य रसो, तिक्खो जह हत्थिपिप्पलीए वा।
एत्तोवि अणंतगुणो, रसो उ नीलाइ नायव्वो ॥ ११ ॥

व्याख्या—त्रिकटुकस्य शुण्ठीपिप्पलीमरिचरूपस्य, हस्तिपिप्पल्या गजपिप्पल्याः ॥ ११ ॥

मूलम्—जह तरुणअंबगरसो, तुवरकविट्ठस्स वावि जारिसओ।
एत्तोवि अणंतगुणो, रसो उ काऊइ नायव्वो ॥ १२ ॥

व्याख्या—तरुणमपक्वं आम्रकमाम्रफलं तद्रसः, तुवरं सकषायं यत् कपित्थं कपित्थफलं तस्य वापि यादृशको रस इति प्रक्रमः ॥ १२ ॥

मूलम्—जह परिणयंबगरसो, पक्ककविट्ठस्स वावि जारिसओ। एत्तोवि अणंतगुणो, रसो उ तेऊइ नायव्वो

व्याख्या—यथा परिणताम्रकरसः किञ्चिदम्लो मधुरश्चेति भावः ॥ १३ ॥

मूलम्—वरवारुणीइ व रसो, विविहाण व आसवाण जारिसओ।
महुमेरगस्स व रसो, एत्तो पम्हाए परएणं ॥ १४ ॥

व्याख्या—वरवारुणी प्रधानमदिरा तस्या वा यादृशक इति सम्बन्धः, विविधानां वा आसवानां पुष्पोत्पन्नमद्यानां यादृशको रस इति योगः, मधु मद्यविशेषो मैरेयं सरकस्तयोः समाहारे मधुमैरेयं तस्य वा रसो यादृशकः, अतो वरवारुण्यादिरसात् पद्माया रस परकेण, अनन्तगुणत्वात्तदतिक्रमेण वर्त्तते इति शेषः, अयं च किञ्चिदम्लः कषायो मधुरश्चेति भावनीयम् ॥ १४ ॥

मूलम्—खज्जूरमुद्दियरसो,खीररसो खंडसक्कररसो वा। एत्तोवि अणंतगुणो, रसो उ सुक्काइ नायव्वो ॥१५॥

व्याख्या—अत्र मृद्वीका द्राक्षा, शेषं व्यक्तमिति सूत्रपट्कार्थः ॥ १५ ॥ गन्धमाह—

मूलम्—जह गोमडस्स गंधो, सुणगमडस्स व जहा अहिमडस्स।
एत्तो वि अणंतगुणो, लेसाणं अप्पसत्थाणं ॥ १६ ॥

व्याख्या—'अप्पसत्थाणंति' अप्रशस्तानां कृष्ण–नील–कापोतानाम् ॥ १६ ॥

मूलम्—जह सुरहिकुसुमगंधो, गंधवासाण पिस्समाणाणं। एत्तो वि अणंतगुणो, पसत्थलेसाण तिण्हंपि

व्याख्या—'गंधवासाणंति' गन्धाश्च कोष्टपुटपाकनिष्पन्ना वासाश्चेतरे गन्धवासाः, इह च गन्धवासाङ्गान्येवोपचारादेवमुक्तानि, तेषां पिष्यमाणानां चूर्ण्यमानानां यथा गन्ध इति प्रक्रमः। 'पसत्थलेसाणंति' प्रशस्तलेश्यानां तेजः–पद्म–शुक्लानाम्। इह चानुक्तोपि गन्धविशेषो लेश्यानां तारतम्येनावसेय इति सूत्रद्वयार्थः ॥ १७ ॥ स्पर्शमाह—

मूलम्—जह करगयस्स फासो, गोजिब्भाए व सागपत्ताणं।
एत्तोवि अणंतगुणो, लेसाणं अप्पसत्थाणं ॥ १८ ॥

व्याख्या—यथा 'करगयस्सत्ति' क्रकचस्य स्पर्शो गोजिह्वायाः शाको वृक्षविशेषस्तत्पत्राणां च स्पर्श इति प्रक्रमः। इतोऽप्यनन्तगुणः कर्कशः लेश्यानां अप्रशस्तानां यथा क्रममित्यर्थः ॥ १८ ॥

मूलम्—जह बूरस्स व फासो, नवणीअस्स व सिरीसकुसुमाणं।
एत्तोवि अणंतगुणो, पसत्थलेसाण तिण्हंपि ॥ १९ ॥

व्याख्या—यथा बूरस्य वनस्पतिविशेषस्य स्पर्शो नवनीतस्य वा शिरीषकुसुमानां एतस्मादप्यनन्तगुणः सुकुमारो यथाक्रमं प्रशस्तलेश्यानां तिसृणामपीति सूत्रद्वयार्थः ॥ १९ ॥ परिणामद्वारमाह—

मूलम्—तिविहो व नवविहो वा, सत्तावीसइविहिक्कसीओ वा।
दुसओ तेआलो वा, लेसाणं होइ परिणामो ॥ २० ॥

व्याख्या—त्रिविधो वा नवविधो वा सप्तविंशतिविध एकाशीतिविधो वा 'दुसओ तेआलो वत्ति' त्रिचत्वारिंशदधिकद्विशतविधो वा लेश्यानां भवति परिणामस्तत्तद्रूपगमनात्मकः। तत्र त्रिविधो जघन्यमध्यमोत्कृष्टभेदेन, नवविधो यदा एषामपि स्वस्थानतारतम्यचिन्तायां प्रत्येकं जघन्यादित्रयेण गुणना। एवं पुनः पुनस्त्रिभिर्गुणने सप्तविंशतिविधत्वादिभावनीयम्। उपलक्षणं चैतत्, एवं तारतम्यचिन्तायां हि संख्यानियमस्याभावात्। तथा च प्रज्ञापना—"कण्हलेसाणं भंते! कइविहं परिणामं परिणमइ? गोयमा! तिविहं वा नवविहं वा सत्तावीसइविहं वा एक्कासीइविहं वा तेआलादुसयविहं वा बहुं वा बहुविहं वा परिणामं परिणमइ। एवं जाव सुक्कलेसा" इति सूत्रार्थः ॥ २० ॥ लक्षणद्वारमाह—

मूलम्—पंचासवप्पवत्तो, तीहिं अगुत्तो छसु अविरओ अ। तिव्वारंभपरिणओ, खुद्दो साहस्सिओ नरो ॥ २१ ॥ निद्धंधसपरिणामो, निस्संसो अजिइंदिओ। एअजोगसमाउत्तो, कण्हलेसं तु परिणमे ॥ २२ ॥

व्याख्या—पञ्चाश्रवप्रवृत्तः, त्रिभिः प्रक्रमान्मनोवाक्कायैरगुप्तः, षट्सु जीवनिकायेषु अविरतस्तदुपमर्दकत्वादिनेति शेषः, तीव्राः उत्कटाः स्वरूपतोऽध्यवसायतो वा आरम्भाः सावद्यव्यापारास्तत्परिणतस्तदासक्तः, क्षुद्रः सर्वस्याप्यहितैषी, सहसाऽनालोच्य प्रवर्त्तते इति साहसिकश्चौर्यादिदुष्कर्मकारीत्यर्थः, नरः उपलक्षणत्वात् स्त्र्यादिर्वा ॥ २१ ॥ 'निद्धंधसत्ति' ऐहिकामुष्मिकापायशङ्काविकलः परिणामो यस्य स तथा, 'निस्संसोत्ति' निस्त्रिंशो जीवान् निघ्नन् मनागपि न शङ्कते, अजितेन्द्रियः, एतेऽनन्तरोक्तास्ते च ते योगाश्च व्यापारा एतद्योगास्तैः समायुक्तोऽन्वित एतद्योगसमायुक्तः कृष्णलेश्यां तुरेवकारार्थस्ततः कृष्णलेश्यामेव परिणमेत्। तद्द्रव्यसाचिव्येन तथाविधद्रव्यसम्पर्कात् स्फटिकमिव तद्रूपतां भजेत्। उक्तं हि—"कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥" इति ॥ २२ ॥ तथा—

मूलम्—इस्सा-अमरिस-अतवो, अविज्ज माया अहीरिया। गेही पओसे य सढे, पमत्ते रसलोलुए॥२३॥

मूलम्—सायगवेसए अ आरंभाविरओ खुद्दो साहस्सिओ नरो।
एअजोगसमाउत्तो, नीललेसं तु परिणमे ॥ २४ ॥

व्याख्या—ईर्षा च परगुणासहनं, अमर्षश्च रोषात्यन्ताभिनिवेशः, अतपश्च तपो विपर्ययोऽमीषां समाहारः। अविद्या कुशास्त्ररूपा, माया प्रतीता, अह्रीकता असदाचारगोचरो लज्जाभावः, गृद्धिर्विषयलाम्पट्यं, प्रदोषश्च प्रद्वेषः, अभेदोपचाराच्चेह सर्वत्र तद्वान् जन्तुरेवमुच्यते। शठो धृष्टः, प्रमत्तः प्रकर्षेण जातिमदाद्यासेवनेन मत्तः प्रमत्तो रसेषु लोलुपः लम्पटो रसलोलुपः ॥ २३ ॥ सातं सुखं तद्गवेशकश्च कथं मे सुखं स्यादिति बुद्धिमान्, आरम्भात् प्राण्युपमर्दादविरतः, शेषं प्राग्वत् ॥ २४ ॥

मूलम्—वंके वंकसमायारे, निअडिल्ले अणुज्जुए। पलिउंचग ओवहिए, मिच्छदिट्ठी अणारिए ॥ २५ ॥
उप्फालगदुट्ठवाई अ, तेणे आवि अ मच्छरी। एयजोगसमाउत्ते, काउलेसं तु परिणमे ॥२६॥

व्याख्या—वक्रो वचसा, वक्रसमाचारः क्रियया, निकृतिमान् मनसा, अनृजुकः कथमपि ऋजूकर्तुमशक्यः, परिकुञ्चकः स्वदोषप्रच्छादकः, उपधिश्छद्म तेन चरत्यौपधिकः सर्वत्र व्याजतः प्रवृत्तिः, एकार्थिकानि वैतानि, मिथ्यादृष्टिरनार्यश्च ॥ २५ ॥ 'उप्फालगत्ति' येन पर उत्प्रासते तदुत्प्रासकं, दुष्टं च रागादिदोषवशया मवसेयं वदनशील उत्प्रासकदुष्टवादी, चः समुच्चये । स्तेनश्चौरः चापि समुच्चये । मत्सरी परसम्पदोऽसहिष्णुः शेषं प्राग्वत् ॥ २६ ॥

मूलम्—नीआवित्ती अचवले, अमाई अकुतूहले। विणीयविणए दंते, जोगवं उवहाणवं ॥ २७ ॥
पियधम्मे दढधम्मे, वज्जभीरू हिएसए। एयजोगसमाउत्ते, तेउलेसं तु परिणमे ॥ २८ ॥

व्याख्या—नीचैर्वृत्तिर्मनोवाक्कायैरनुत्सिक्तोऽचपलः, अमायी, अकुतूहलः, विनीतविनयः सम्यस्तगुर्वाद्युचित-प्रवृत्तिः, अत एव दान्तः, योगः स्वाध्यायादिव्यापारस्तद्वान्, उपधानवान् विहितशास्त्रोपचारः ॥ २७ ॥ 'पिय' इत्यादि–तत्र 'वज्जभीरुत्ति' अवद्यभीरुर्हितैषको मुक्तिगवेषकः, शेषं प्राग्वत् ॥ २८ ॥

मूलम्—पयणुक्कोहमाणे अ, मायालोभे अ पयणुए। पसंतचित्ते दंतप्पा, जोगवं उवहाणवं ॥ २९ ॥
तहा पयणुवाई य, उवसंते जिइंदिए। एयजोगसमाउत्ते, पम्हलेसं तु परिणमे ॥ ३० ॥

व्याख्या—प्रतनुक्रोधमानः चः पूर्तौ माया लोभश्च प्रतनुको यस्येति शेषः, अत एव प्रशान्तचित्तो दान्तात्मा 'तहा पयणु'इत्यादि–तथा प्रतनुवादी स्वल्पभाषकः उपशान्तोऽनुद्भटत्वेनोपशान्ताकारः, शेषं प्राग्वत् ॥ ३० ॥

मूलम्—अट्टरुद्दाणि वज्जित्ता, धम्मसुक्काणि झायए। पसंतचित्ते दंतप्पा, समिए गुत्ते य गुत्तिसु ॥ ३१॥
सरागे वीअरागे वा, उवसंते जिइंदिए। एअजोगसमाउत्ते, सुक्कलेसं तु परिणमे ॥ ३२ ॥

व्याख्या—आर्तरौद्रे वर्जयित्वा धर्मशुक्ले ध्यायति यः, कीदृशः सन्नित्याह–प्रशान्तचित्त इत्यादि, समितः समितिमान्, गुप्तो निरुद्धाशुभयोगः 'गुत्तिसुत्ति' गुप्तिभिः, सरागे स च सरागोऽक्षीणानुपशान्तकषायो वीतरागस्तद्विपरितो वा उपशान्तो जितेन्द्रियः एतद्योगसमायुक्तः शुक्ललेश्यां तु परिणमेत्, विशिष्टलेश्यापेक्षं चैतल्लक्षणाभिधानं तेन न देवादिभिर्व्यभिचार इति सूत्रद्वादशकार्थः ॥ ३१ ॥ ३२ ॥ स्थानद्वारमाह—

मूलम्—अस्संखेज्जाणोसप्पिणीण उसप्पिणीण जे समया। संखाईआ लोगा, लेसाणं हुंति ठाणाइं ३३

व्याख्या—असंख्येयानामवसर्पिणीनां तथोत्सर्पिणीना ये समयाः कियन्त इत्याह–संख्यातीता लोकाः कोऽर्थः ? असंख्येयलोकाकाशप्रदेशपरिमाणाः तावन्तीति शेषो लेश्यानां भवन्ति स्थानानि प्रकर्षापकर्षकृतानि अशुभानां संक्लेशरूपाणि शुभानां च विशुद्धिरूपाणीति सूत्रार्थः ॥ ३३ ॥ स्थितिमाह—

मूलम्—मुहुत्तद्धं तु जहन्ना, तेत्तीसं सागरा मुहुत्तहिआ। उक्कोसा होइ ठिई, नायव्वा किण्हलेसाए ॥३४॥

व्याख्या—मुहूर्त्तार्द्धं तु कोऽर्थोऽन्तर्मुहूर्त्तमेव जघन्या, त्रयस्त्रिंशत्सागरोपमाणि 'मुहुत्तहिअत्ति' इहोत्तरत्र च मुहूर्त्तशब्देनोपचारान्मुहूर्त्तदेश एवोक्तः ततश्चान्तर्मुहूर्त्ताधिकानि उत्कृष्टा भवति स्थितिर्ज्ञातव्या कृष्णलेश्यायाः, इयं चास्याः स्थितिः सप्तमपृथ्व्यां ज्ञेया । इहान्तर्मुहूर्त्तशब्देन पूर्वोत्तरभवसम्बन्ध्यन्तर्मुहूर्त्तद्वयमुक्तं द्रष्टव्यं, एवमुत्तरत्रापि । जघन्या स्थितिस्तु सर्वासामासां तिर्यग्मनुष्येष्वेवावसेया ॥ ३४ ॥

मूलम्—मुहुत्तद्धं तु जहन्ना, दसउदही पलिअमसंखभागमब्भहिआ।
उक्कोसा होइ ठिई, नायव्वा नीललेसाए ॥ ३५ ॥

व्याख्या—मुहूर्त्तार्द्धोऽन्तर्मुहूर्त्तं जघन्या, दश उदधयः सागरोपमाणि 'पलिअत्ति' पल्योपमं तस्यासंख्यभागेनाधिकानि उत्कृष्टा भवति स्थितिर्नीललेश्यायाः । नन्वस्या धूमप्रभोपरितनप्रस्तटं यावत्सम्भवस्तत्र च पूर्वोत्तरभवान्तर्मुहूर्त्तद्वयेनाधिकास्याः स्थितिः किं नोक्ता ? उक्तैव पल्योपमासंख्येयभागे एव तस्याप्यन्तर्मुहूर्त्तद्वयस्यान्तर्भावात्, पल्यासंख्येयभागानां चाऽसंख्यभेदत्वादिहैतावन्मानस्यैवास्य विवक्षितत्वान्न विरोधः । एवमग्रेऽपि ॥ ३५ ॥

मूलम्—मुहुत्तद्धं तु जहन्ना, तिण्णुदही पलिअमसंखभागमब्भहिआ ।
उक्कोसा होइ ठिई, नायव्वा काउलेसाए ॥ ३६ ॥

व्याख्या—इयं स्थितिर्वालुकाप्रभोपरितनप्रस्तटे तावदायुष्केषु नारकेषु द्रष्टव्या ॥ ३६ ॥

मूलम्—मुहुत्तद्धं तु जहन्ना, दुण्णुदही पलिअमसंखभागमब्भहिआ ।
उक्कोसा होइ ठिई, नायव्वा तेउलेसाए ॥ ३७ ॥

व्याख्या—इयमीशानकल्पे ज्ञेया ॥ ३७ ॥

मूलम्—मुहुत्तद्धं तु जहन्ना, दस होंती सागरा मुहुत्तहिआ। उक्कोसा होइ ठिई, नायव्वा पम्हलेसाए ३८

व्याख्या—इयं ब्रह्मलोकस्वर्गे च बोध्या ॥ ३८ ॥

मूलम्—मुहुत्तद्धं तु जहन्ना, तेत्तीसं सागरा मुहुत्तहिआ। उक्कोसा होइ ठिई, नायव्वा सुक्कलेसाए ॥३९॥

व्याख्या—एषा अनुत्तरविमानेषु मन्तव्येति सूत्रपट्कार्थः ॥ ३९ ॥ प्रकृतमुपसंहरन्नुत्तरग्रन्थसम्बन्धमाह—

मूलम्—एसा खलु लेसाणं, ओहेण ठिई उ वण्णिआ होई ।
चउसुऽवि गईसु एत्तो, लेसाण ठिइं तु वोच्छामि ॥ ४० ॥

व्याख्या—'ओहेणंति' ओघेन सामान्येन ॥ ४० ॥ प्रतिज्ञातमाह—

मूलम्—दसवाससहस्साइं, काऊए ठिई जहन्निआ होई ।
तिण्णुदही पलिओवम-असंखभागं च उक्कोसा ॥ ४१ ॥

व्याख्या—दशवर्षसहस्राणि कापोतायाः स्थितिर्जघन्यका भवति, त्रय उदधयः सागरोपमाणि 'पलियमसंखभागं चत्ति' पल्योपमासंख्येयभागश्चोत्कृष्टा । इयं च जघन्या रत्नप्रभायामुपरितनप्रस्तटनारकाणामेतावत्स्थितीनां, उत्कृष्टा च वालुकाप्रभायामेतावत्स्थितिकनारकाणां प्रथमप्रस्तट एवेति भावनीयम् ॥ ४१ ॥

मूलम्—तिण्णुदही पलिअमसंखभागो उ जहण्ण नीलठिई ।
दस उदही पलिओवम-असंखभागं च उक्कोसा ॥ ४२ ॥

व्याख्या—नीलाया जघन्या स्थितिर्वालुकाप्रभायां, उत्कृष्टा धूमप्रभायां प्रथमप्रस्तटे ॥ ४२ ॥

मूलम्—दस उदही पलिअमसंख-भागं जहन्निआ होई। तेत्तीससागराइं, उक्कोसा होई किण्हाए॥४३॥

व्याख्या—कृष्णाया जघन्या धूमप्रभायामितरा तु तमस्तमायां, किञ्चेह नारकाणामुत्तरत्र च देवादीनां द्रव्यलेश्यास्थितिरेव चिन्त्यते, तद्भावलेश्यानां तु परिवर्त्तमानत्वेनान्यथापि स्थितेः सम्भवात् । यदुक्तं—"देवाण नारयाण य, दव्वलेसा भवंति एआओ । भावपरावत्तीए, सुरणेरइआण छल्लेसा" ॥ ४३ ॥

मूलम्—एसा नेरइआणं, लेसाण ठिई उ वण्णिआ होई। तेण परं वोच्छामि, तिरिअमणुस्साण देवाणं॥

व्याख्या—'तेण परंति' ततः परम् ॥ ४४ ॥

मूलम्—अंतोमुहुत्तमद्धं, लेसाण ठिई जहिं जहिं जा उ। तिरिआण नराणं वा, वज्जित्ता केवलं लेसं ॥४५॥

व्याख्या—'अंतोमुहुत्तमद्धंति' अन्तर्मुहूर्त्ताद्धां अन्तर्मुहूर्त्तकालं लेश्यानां स्थितिर्जघन्योत्कृष्टा चेति शेषः, कासामित्याह—'जहिं जहित्ति' यत्र यत्र पृथिव्यादौ संमूर्च्छिममनुष्यादौ वा याः कृष्णाद्याः तुः पूर्त्तौ, तिरश्चां नराणां वा मध्ये सम्भवन्ति तासामित्यध्याहारः । लेश्याश्च पृथिव्यप्वनस्पतिष्वाद्याश्चतस्रः, तेजोवायुविकलसंमूर्च्छिमेष्वाद्यास्तिस्रः, शेषेषु षट् । ततश्च सर्वासामप्यासां तिर्यग्मनुष्येषु अन्तर्मुहूर्त्तमानैव स्थितिः प्राप्तेत्याह—वर्जयित्वा केवलां शुद्धां लेश्यां शुक्ललेश्यामित्यर्थः ॥ ४५ ॥ अस्या एव स्थितिमाह—

मूलम्—मुहुत्तद्धं तु जहन्ना, उक्कोसा होइ पुव्वकोडी उ ।
नवहिं वरिसेहिं ऊणा, नायव्वा सुक्कलेसाए ॥ ४६ ॥

व्याख्या—इह यद्यपि कश्चिदष्टवार्षिकः पूर्वकोट्यायुर्व्रतपरिणाममाप्नोति तथापि नैतावद्वयःस्थस्य वर्षपर्यायादर्वाक् शुक्ललेश्यायाः सम्भव इति नवभिर्वर्षैरूना पूर्वकोटिरुच्यते ॥ ४६ ॥

मूलम्—एसा तिरिअनराणं, लेसाण ठिई उ वण्णिआ होई। तेण परं वोच्छामि, लेसाण ठिई उ देवाणं॥

व्याख्या—स्पष्टम् ॥ ४७ ॥

मूलम्—दसवाससहस्साइं, किण्हाए ठिई जहण्णिआ होई।
पलिअमसंखिज्जइमो, उक्कोसो होइ किण्हाए ॥ ४८ ॥

व्याख्या—'पलिअमसंखिज्जइमोत्ति' पल्योपमासंख्येयतमः प्रस्तावाद्भागः, इयं च द्विधापि कृष्णायाः स्थितिरेतावदायुषां भवनपतिव्यन्तराणामेव द्रष्टव्या। इत्थं नीलकापोतयोरपि ॥ ४८ ॥

मूलम्—जा किण्हाइ ठिई खलु, उक्कोसा सा उ समयमब्भहिआ।
जहन्नेणं नीलाए, पलिअमसंखेज्ज उक्कोसा ॥ ४९ ॥

व्याख्या—या कृष्णायाः स्थितिः खलुर्वाक्यालङ्कारे उत्कृष्टा पल्यासंख्येयभागरूपा 'सा उत्ति' सैव समयाभ्यधिका जघन्येन नीलायाः, 'पलिअमसंखेज्जत्ति' पल्योपमासंख्येयभाग उत्कृष्टा, बृहत्तरश्चायं भागः पूर्वस्मादवसेयः४९

मूलम्—जा नीलाए ठिई खलु, उक्कोसा उ समयमब्भहिआ।
जहन्नेणं काऊए, पलिअमसंखं च उक्कोसा ॥ ५० ॥

व्याख्या—इहापि पूर्वस्मात्पल्योपमासंख्यभागाद् बृहत्तमो भागो ज्ञेयः, शेषं प्राग्वत् ॥ ५० ॥ एवं निकायद्वयभाविनीमाद्यलेश्यात्रयस्थितिं दर्शयित्वा समस्तनिकायभाविनीं तेजोलेश्यास्थितिमभिधातुमाह—

मूलम्—तेण परं वोच्छामि, तेऊलेसा जहा सुरगणाणं। भवणवइवाणमंतर–जोइसवेमाणिआणं च५१

व्याख्या—'तेणत्ति' ततः परं प्रवक्ष्यामि तेजोलेश्यां यथेति येन प्रकारेण सुरगणानां स्यात्तथेति शेषः, केषामित्याह–भवनपतिवानमन्तरज्योतिष्कवैमानिकानां, चः पूर्त्तौ ॥ ५१ ॥ प्रतिज्ञातमाह—

मूलम्—पलिओवमं जहन्ना, उक्कोसा सागरा उ दुण्णहिआ। पलिअमसंखिज्जेणं, होइ तिभागेण तेऊए

व्याख्या—पल्योपमं जघन्या, उत्कृष्टा द्वे सागरोपमे अधिके, केनेत्याह–पल्योपमासंख्येयेन भागेन भवति तैजस्याः स्थितिः, इयं चास्याः स्थितिर्वैमानिकानेवाश्रित्यावसेया, तत्र जघन्या सौधर्मे उत्कृष्टा चेशाने। उपलक्षणं चैतत् शेषनिकायतेजोलेश्यास्थितेः, तत्र भवनपतिव्यन्तराणां दशवर्षसहस्राणि जघन्या, उत्कृष्टा तु व्यन्तराणां पल्यं, भवनपतीनां साधिकं सागरं, ज्योतिषां जघन्या पल्याष्टभागः, उत्कृष्टा वर्षलक्षाधिकं पल्यमिति ॥ ५२ ॥

मूलम्—दसवाससहस्साइं, तेऊइ ठिई जहन्निआ होइ। दुण्णुदही पलिओवम–असंखभागं च उक्कोसा

व्याख्या—अत्र सूत्रे देवसम्बन्धितैजस्याः स्थितिः सामान्येनोक्ता, इह च दशवर्षसहस्राणि जघन्याऽस्याः स्थितिरुच्यते, प्रक्रमानुरूप्येण तु योत्कृष्टा कापोतायाः स्थितिः सैवास्याः समयाधिका जघन्या प्राप्नोति, तदत्र तत्त्वं तद्विदो वदन्तीति ॥ ५३ ॥ पद्मायाः स्थितिमाह—

मूलम्—जा तेऊए ठिई खलु, उक्कोसा सा उ समयमब्भहिआ।
जहण्णेणं पम्हाए, दस उ मुहुत्ताहिआइं उक्कोसा ॥ ५४ ॥

व्याख्या—अत्र'सा उत्ति' सैव 'दस उत्ति' दशैव देवप्रस्तावात्सागरोपमाणि 'मुहुत्ताहिआइंति' पूर्वोत्तरभवसत्कान्तर्मुहूर्त्ताधिकानि, इयं च जघन्या सनत्कुमारे, उत्कृष्टा ब्रह्मलोके। आह–यदीहान्तर्मुहूर्त्तमधिकमुच्यते तदा पूर्वत्रापि किं न तदधिकमुक्तं? उच्यते–देवभवलेश्याया एव तत्र विवक्षितत्वात्, प्रतिज्ञातं हि 'तेण परं वोच्छामि, लेसाण ठिई उ देवाणंति' एवं सतीहान्तर्मुहूर्त्ताधिकत्वं विरुध्यते, नैवं, अत्र हि पूर्वोत्तरभवलेश्याऽपि "अंतोमुहुत्तंमि गए, अंतमुहुत्तंमि सेसए चेवत्ति" वचनाद्देवभवसम्बन्धिन्येवेति प्रदर्शनार्थमित्थमुक्तमिति न विरोध इति भावनीयम् ॥ ५४ ॥ शुक्लायाः स्थितिमाह—

मूलम्—जा पम्हाई ठिई खलु, उक्कोसा सा उ समयमब्भहिआ।
जहण्णेण सुक्काए, तित्तीसमुहुत्तमब्भहिआ ॥ ५५ ॥

व्याख्या—'तित्तीससमुहुत्तमब्भहिअत्ति' त्रयस्त्रिंशन्मुहूर्त्ताभ्यधिकानि सागरोपमाण्युत्कृष्टेति गम्यते, अस्या जघन्या लान्तकेऽपरा त्वनुत्तरेष्विति द्वाविंशतिसूत्रार्थः ॥ ५५ ॥ उक्तं स्थितिद्वारं गतिद्वारमाह—

मूलम्—किण्हा नीला काऊ, तिण्णिऽवि एआ उ अहमलेसाओ ।
एआहिं तिहिंऽवि जीवो, दुग्गइं उववज्जइ ॥ ५६ ॥

व्याख्या—अत्र 'तिण्णिवित्ति' तिस्रोऽपि अधमलेश्या अप्रशस्तलेश्याः, दुर्गतिं नरकतिर्यग्गतिरूपां उपपद्यते प्राप्नोति ॥ ५६ ॥

मूलम्—तेऊ पम्हा सुक्का, तिण्णिऽवि एआ उ धम्मलेसाओ । एआहिं तिहिंऽवि जीवो, सुग्गइं उववज्जइ

व्याख्या—'धम्मलेसाओत्ति' धर्मलेश्या विशुद्धत्वेनासां धर्महेतुत्वात्, सुगतिं नरगत्यादिकामिति सूत्रद्वयार्थः ॥ ५७ ॥ संप्रत्यायुर्द्वारावसरस्तत्र चावश्यं जीवो यल्लेश्येषूत्पत्यते तल्लेश्य एव म्रियते, तत्र च जन्मान्तरभाविलेश्यायाः प्रथमसमये परभवायुष उदय आहोस्विच्चरमसमयेऽन्यथा वा ? इति संशयापोहार्थमाह—

मूलम्—लेसाहिं सव्वाहिं, पढमे समयंमि परिणयाहिं तु ।
न हु कस्सवि उववाओ, परे भवे होइ जीवस्स ॥ ५८ ॥

व्याख्या—लेश्याभिः सर्वाभिः प्रथमसमये प्रतिपत्तिकालापेक्षया परिणताभिरात्मरूपतयोत्पन्नाभिरुपलक्षितस्येति शेषः तुः पूरणे 'न हु' नैव कस्यापि उपपाद उत्पत्तिः परे भवे भवति जीवस्य ॥ ५८ ॥ तथा—

मूलम्—लेसाहिं सव्वाहिं, चरमे समयंमि परिणयाहिं तु ।
न हु कस्सवि उववाओ, परे भवे होइ जीवस्स ॥ ५९ ॥

व्याख्या—लेश्याभिः सर्वाभिश्चरमसमयेऽन्त्यसमये परिणताभिस्तु नैव कस्याप्युपपादः परे भवे भवति जीवस्य ॥ ५९ ॥ कदा तर्हीत्याह—

मूलम्—अंतमुहुत्तंमि गए, अंतमुहुत्तंमि सेसए चेव । लेसाहिं परिणयाहिं, जीवा गच्छंति परलोगं ६०

व्याख्या—अन्तर्मुहूर्त्ते गते एव तथान्तर्मुहूर्त्ते शेषके चैव अवशिष्यमाण एव लेश्याभिः परिणताभिरुपलक्षिता जीवा गच्छन्ति परलोकं, अनेनान्तर्मुहूर्त्तावशेषे आयुषि परभवलेश्यापरिणाम इत्युक्तम्भवति । अत्र च तिर्यग्मनुष्या आगामिभवलेश्याया अन्तर्मुहूर्त्ते गते, देवनारकाश्च स्वभवलेश्याया अन्तर्मुहूर्त्ते शेषे परलोकं यान्तीति विशेषः । उक्तं च—"तिरिनर आगामिभव–लेसाए अइगए सुरा निरया । पुव्वभवलेससेसे, अंतमुहुत्ते मरणमिंति" त्ति सूत्रत्रयार्थः ॥ ६० ॥ सम्प्रत्यध्ययनार्थमुपसंहरन्नुपदेष्टुमाह—

मूलम्—तम्हा एआण लेसाणं, अणुभागे विआणिआ ।
अप्पसत्था उ वज्जित्ता, पसत्था उ अहिट्ठिज्जासित्ति बेमि ॥ ६१ ॥

व्याख्या—यस्मादेता अप्रशस्ता दुर्गतिहेतवः प्रशस्ताश्च सुगतिहेतवः तस्मादेतासां लेश्यानामनुभावं उक्तरूपं विज्ञाय अप्रशस्ता वर्जयित्वा प्रशस्ता अधितिष्ठेद्भावप्रतिपत्त्याश्रयेन्मुनिरिति शेषः, उभयत्रापि तुः पूर्त्तौ इति सूत्रार्थः ॥ ६१ ॥ इति ब्रवीमीति प्राग्वत् ॥

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय-श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ चतुस्त्रिंशत्तममध्ययनं सम्पूर्णम् ॥ ३४ ॥

## ॥ अथ पञ्चत्रिंशमध्ययनम् ॥

अर्हम् ॥ उक्तं चतुस्त्रिंशमध्ययनमथानगारमार्गगत्याख्यं पञ्चत्रिंशमारभ्यते, अस्य चायं सम्बन्धः—इहानन्तराध्ययनेऽप्रशस्ता लेश्यास्त्यक्त्वा प्रशस्ता एवाश्रयणीया इत्युक्तं, तच्च गुणवता भिक्षुणा सम्यक्कर्तुं शक्यमिति इह तद्गुणा उच्यन्त इति सम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—सुणेह मेगग्गमणा, मग्गं बुद्धेहिं देसिअं। जमायरंतो भिक्खू, दुक्खाणंतकरो भवे ॥ १ ॥

व्याख्या—शृणुत मे वदत इति शेषः, हे शिष्याः! यूयं एकाग्रमनसोऽनन्यचित्ताः, किं तदित्याह—मार्गं मुक्तेरिति प्रक्रमः, बुद्धैरर्हदाद्यैर्देशितं, यमाचरन्नासेवमानो भिक्षुः दुःखानामन्तकरो भवेत्सकलकर्मनिर्मूलनादिति भावः ॥ १ ॥ प्रतिज्ञातमेवाह—

मूलम्—गिहवासं परिच्चज्ज, पव्वज्जं अस्सिए मुणी। इमे संगे विआणेज्जा, जेहिं सज्जंति माणवा ॥२॥

व्याख्या—गृहवासं परित्यज्य प्रव्रज्यामाश्रितो मुनिः इमान् प्रतिप्राणिप्रतीतत्वेन प्रत्यक्षान् सङ्गान् पुत्रकलत्रादीन् विजानीयात्, भवहेतवोऽमी इति विशेषेणाववुध्येत, ज्ञानस्य च विरतिफलत्वात् प्रत्याचक्षीतेति भावः। सङ्गशब्दव्युत्पत्तिमाह—यैः सज्यन्ते प्रतिबन्धं भजन्ति मानवा उपलक्षणत्वादन्येऽपि जन्तवः ॥ २ ॥

मूलम्—तहेव हिंसं अलिअं, चोज्जं अव्वंभसेवणं। इच्छा कामं च लोभं च, संजओ परिवज्जए॥ ३ ॥

व्याख्या—तथेति समुच्चये, एवेति पूरणे, हिंसामलीकं चौर्यमब्रह्मसेवनं इच्छारूपः काम इच्छाकामस्तं च अप्राप्तवस्तुवाञ्छारूपं लोभं च लब्धवस्तुविषयगृद्धिरूपं अनेनोभयेनापि परिग्रह उक्तस्ततः परिग्रहं च संयतः परिवर्जयेत् ॥ ३ ॥ तथा—

मूलम्—मणोहरं चित्तघरं, मल्लधूवेण वासिअं। सकवाडं पंडरुल्लोअं, मणसावि न पत्थए ॥ ४ ॥

व्याख्या—मनोहरं मनोज्ञं चित्रप्रधानं गृहं चित्रगृहं माल्यधूपेन वासितं सकपाटं पाण्डुरोल्लोचं मनसाप्यास्तां वचसा न प्रार्थयेत्, किं पुनः तत्र तिष्ठेदिति भावः ॥ ४ ॥ किं पुनरेवमुपदिश्यते? इत्याह—

मूलम्—इंदिआणि उ भिक्खुस्स, तारिसम्मि उवस्सए। दुक्कराइं निवारेउं, कामरागविवड्ढणे ॥५॥

व्याख्या—इन्द्रियाणि तुरिति यस्माद्भिक्षोस्तादृशे उपाश्रये दुष्कराणि करोतेः सर्वधात्वर्थव्याप्तत्वात् दुःशकानि निवारयितुं स्वस्वविषयेभ्य इति गम्यते, कामरागविवर्द्धने विषयाभिष्वङ्गपोषके इत्युपाश्रयविशेषणम् ॥ ५ ॥ तर्हि क्व स्थेयमित्याह—

मूलम्—सुसाणे सुन्नगारे वा, रुक्खमूले वा एगगो। पइरिक्के परकडे वा, वासं तत्थाभिरोअए ॥ ६ ॥

व्याख्या—श्मशाने शून्यागारे वा वृक्षमूले वा एकको रागादिवियुक्तोऽसहायो वा प्रतिरिक्ते स्त्र्याद्यसङ्कुले परकृते परैर्निष्पादिते स्वार्थमिति शेषः, वा समुच्चये, वासमवस्थानं तत्र श्मशानादौ अभिरोचयेद्भिक्षुरिति योगः ॥ ६ ॥

मूलम्—फासुअंमि अणाबाहे, इत्थीहिं अणभिद्दुए। तत्थ संकप्पए वासं, भिक्खू परमसंजए ॥ ७ ॥

व्याख्या—प्रासुके अचित्तीभूतभूभागे अनाबाधे कस्याप्यावाधारहिते स्त्रीभिरुपलक्षणत्वात् पण्डकादिभिश्च अनभिद्रुतेऽदूषिते, तत्र प्रागुक्तविशेषणे श्मशानादौ सङ्कल्पयेत्कुर्याद्वासं भिक्षुः, परमो मोक्षस्तदर्थं संयतः परमसंयतः। प्राग् वासं तत्राभिरोचयेदित्युक्ते रुचिमात्रेणैव कश्चित्तुष्येदिति तत्र सङ्कल्पयेद्वासमित्युक्तम् ॥ ७ ॥ ननु! किमिह परकृत इति विशेषणमुक्तमित्याशंक्याह—

मूलम्—न सयं गिहाइं कुव्विज्जा, नेव अन्नेहिं कारवे। गिहकम्मसमारंभे, भूआणं दिस्सए वहो ॥८॥

व्याख्या—न स्वयं गृहाणि कुर्वीत नैवान्यैः कारयेदुपलक्षणत्वान्नापि कुर्वन्तमन्यमनुमन्येत, किमिति यतो गृहकर्म इष्टकामृदानयनादि तस्य समारम्भः प्रवर्त्तनं गृहकर्मसमारम्भः तस्मिन् भूतानां प्राणिनां दृश्यते वधः ॥ ८ ॥ कतरेषामित्याह—

मूलम्—तसाणं थावराणं च, सुहुमाणं बायराण य । गिहकम्मसमारंभं, संजओ परिवज्जए ॥ ९ ॥

व्याख्या—त्रसाणां स्थावराणां सूक्ष्माणां शरीरापेक्षया बादराणां च तथैव तस्माद्गृहकर्मसमारम्भं संयतः परिवर्जयेत् ॥ ९ ॥ अन्यच्च—

मूलम्—तहेव भत्तपाणेसु, पयणपयावणेसु अ । पाणभूयदयट्ठाए, न पए न पयावए ॥ १० ॥

व्याख्या—तथैवेति प्राग्वदेव भक्तपानेषु पचनपाचनेषु च वधो दृश्यते इति प्रागुक्तेन सम्बन्धः, ततः किमित्याह–प्राणास्त्रसा भूतानि पृथिव्यादीनि तद्दयार्थं न पचेत् न पाचयेत् ॥ १० ॥ अमुमेवार्थं स्पष्टतरमाह—

मूलम्—जलधन्ननिस्सिआ पाणा, पुढविकट्ठनिस्सिआ । हम्मंति भत्तपाणेसु, तम्हा भिक्खू न पयावए ॥

व्याख्या—जले धान्ये च निश्रिता ये तत्रान्यत्र वा उत्पद्य तन्निश्रया स्थितास्ते जलधान्यनिश्रिताः पूतरकेलिकापिपीलिकादयो जीवा एवं पृथ्वीकाष्ठनिश्रिताः, हन्यन्ते भक्तपानेषु प्रक्रमात्पच्यमानेषु, यत एवं तस्मात् भिक्षुर्न पाचयेत्, अपेर्गम्यत्वान्न पाचयेदपि कथं पुनः स्वयं पचेत् ? अनुमतिनिषेधोपलक्षणं चैतत् ॥११॥ तथा—

मूलम्—विसप्पे सव्वओ धारे, बहुपाणिविणासणे । नत्थि जोइसमे सत्थे, तम्हा जोइं न दीवए ॥ १२

व्याख्या—विसर्प्पति स्वल्पमपि बहु व्याप्नोतीति विसर्पं, सर्वतो धारं सर्वदिक्स्थितजीवोपघातकत्वात्, अत एव बहुप्राणिविनाशनं नास्ति ज्योतिःसमं वह्नितुल्यं शस्त्रं, यस्मादेवं तस्मात् ज्योतिर्न दीपयेत् ॥ १२ ॥ ननु ? पचनादौ जीववधः स्यान्न तु क्रयविक्रययोस्ततो युक्त एवाभ्यां निर्वाह इति कस्यचिदाशङ्का स्यादिति तदपोहार्थमाह—

मूलम्—हिरण्णं जायरूवं च, मणसावि न पत्थए । समलेट्ठुकंचणे भिक्खू, विरए कयविक्कए ॥ १३ ॥

व्याख्या—हिरण्यं कनकं, जातरूपं च रूप्यं, चकारोऽनुक्ताशेषधनधान्यादिसमुच्चये, मनसापि न प्रार्थयेद्भिक्षुरिति योगः, कीदृश' सन् ? समे प्रतिबन्धाभावात्तुल्ये लेष्टुकाञ्चने यस्य स समलेष्टुकाञ्चनो भिक्षुः विरतो निवृत्तः क्रयविक्रये क्रयविक्रयविषये ॥ १३ ॥ कुत एवमित्याह—

मूलम्—किणंतो कइओ होइ, विकिणंतो अ वाणिओ । कयविक्कयंमि वट्टंतो, भिक्खू न हवइ तारिसो

व्याख्या—क्रीणन् परकीयं वस्तु मूल्येनाददानः क्रायको भवति, तथाविधेतरलोकसदृश एव स्यात्, विक्रीणानश्च स्वकीयं च वस्तु परस्य ददद्वणिग् भवति, वाणिज्यप्रवृत्तत्वादिति भावः । अत एव क्रयविक्रये वर्तमानः प्रवर्त्तमानो भिक्षुर्न भवति तादृशो यादृशः समयेऽभिहितः ॥ १४ ॥ ततः किं कार्यमित्याह—

मूलम्—भिक्खिअव्व न केअव्वं, भिक्खुणा भिक्खवत्तिणा । कयविक्कओ महादोसो, भिक्खावित्ती सुहावहा

व्याख्या—भिक्षितव्यं याचितव्यं तथाविधवस्त्विति गम्यते, न क्रेतव्यं उपलक्षणत्वाच्च नापि विक्रेतव्यं भिक्षुणा भिक्षावृत्तिना, अत्रैवादरख्यापनार्थमाह–क्रयश्च विक्रयश्च क्रयविक्रयं महादोषं, लिङ्गव्यत्ययः सूत्रत्वात्, भिक्षावृत्तिः सुखावहा ॥ १५ ॥ भिक्षितव्यमित्युक्तं तच्चैककुलेऽपि स्यादत आह—

मूलम्—समुआणं उंछमेसिज्जा, जहासुत्तमणिंदिअं । लाभालाभंमि संतुट्ठे, पिंडवायं चरे मुणी ॥१६॥

व्याख्या—समुदानं भैक्ष्यं तच्च उञ्छमिव उञ्छं अन्यान्यगृहेभ्यः स्तोकस्तोकमीलनात् एषयेद्गवेषयेत् यथासूत्रं आगमार्थानतिक्रमेण उद्गमोत्पादनैषणाद्यबाधात् इति भावस्तत एवानिन्दितं जात्यादिजुगुप्सितजनसम्बन्धि यन्न भवति, तथा लाभालाभे सन्तुष्टः पिण्डस्य पातः पतनं प्रक्रमात् पात्रेऽस्मिन्निति पिण्डपातं चरेदासेवेत मुनिर्व्याख्यान्तरविषयत्वाच्च न पौनरुक्त्यम् ॥ १६ ॥ इत्थं पिण्डमवाप्य यथा भुञ्जीत तथाह—

मूलम्—अलोले न रसे गिद्धे, जिब्भादंते अमुच्छिए । न रसट्ठाए भुंजिज्जा, जवणट्ठाए महामुणी ॥१७॥

व्याख्या—अलोलो न सरसान्ने प्राप्ते लाम्पट्यवान्, न रसे मधुरादौ गृद्धोऽप्राप्तेऽभिकांक्षावान्, कुतश्चैवंविधः ? यतः 'जिब्भादंतेत्ति' दान्तजिह्वोऽत एवामूर्च्छितः सन्निधेरकरणेन भोजनकालेऽभिष्वङ्गाभावेन वा । एवंविधश्च न नैव 'रसट्ठाएत्ति' रसो धातुविशेषः स चाशेषधातूपलक्षणं ततस्तदुपचयः स्यादिति रसार्थं धातु-

पचयार्थमित्यर्थः न भुञ्जीत, किमर्थं तर्हीत्याह—यापना निर्वाहः स चार्थात् संयमस्य तदर्थं महामुनिर्भुञ्जीतेति-योगः ॥ १७ ॥ तथा—

मूलम्—अच्चणं रयणं चेव, वंदणं पूअणं तहा । इड्डीसक्कारसम्माणं, मणसावि न पत्थए ॥ १८ ॥

व्याख्या—अर्चनां पुष्पादिभिः पूजां, रचनां निषद्यादिविषयां स्वस्तिकादिरूपां वा, चः समुच्चये एवोऽवधारणे नेत्यनेन योज्यः, वन्दनं प्रतीतं, पूजनं वस्त्रादिभिः प्रतिलाभनं, तथेति समुच्चये, ऋद्धिश्च श्रावकोपकरणादिसम्पत्सत्कारश्चार्घदानादिः, सम्मानं चाभ्युत्थानादि ऋद्धिसत्कारसम्मानं मनसाप्यास्तां वाचा नैव प्रार्थयेत् ॥ १८ ॥ किं पुनः कुर्यादित्याह—

मूलम्—सुक्कं झाणं झिआएज्जा, अनिआणे अकिंचणे । वोसट्ठकाए विहरेज्जा, जाव कालस्स पज्जओ ॥

व्याख्या—'सुक्कं झाणंति' सोपस्कारत्वात् सूत्रस्य शुक्लं ध्यानं यथा भवति तथा ध्यायेत्, अनिदानोऽकिञ्चनः व्युत्सृष्टकायो निष्प्रतिकर्मशरीरो विहरेदप्रतिबद्धविहारितयेति भावः । कियन्तं कालमित्याह—यावत् कालस्य मृत्योः पर्यायः प्रस्तावो यावज्जीवमित्यर्थः ॥ १९ ॥ प्रान्तकाले चायं यत्कृत्वा यत्फलं प्राप्नोति तदाह—

मूलम्—निज्जूहिऊण आहारं, कालधम्मे उवट्ठिए । जहिऊण माणुसं बोंदिं, पभु दुक्खे विमुच्चइ ॥२०॥

व्याख्या—'निज्जूहिऊणत्ति' परित्यज्य आहारं संलेखनादिक्रमेण कालधर्म्मे आयुःक्षयरूपे उपस्थिते, तथा त्यक्त्वा मानुषीं बोन्दिं तनुं प्रभुर्वीर्यान्तरायापगमाद्विशिष्टसामर्थ्यवान् 'दुःखेत्ति' दुःखैः शारीरमानसैर्विमुच्यते॥२० कीदृशः सन् दुःखैर्विमुच्यते इत्याह—

मूलम्—निम्ममे निरहंकारे, वीअरागे अणासवे । संपत्ते केवलं नाणं, सासयं परिनिव्वुडेत्ति बेमि।२१।

व्याख्या—निर्ममो निरहङ्कारः कुतोऽयमीदृग् यतो वीतराग उपलक्षणत्वाद्वीतद्वेषश्च, तथा अनाश्रवः कर्म्माश्रवरहितः, संप्राप्तः केवलं ज्ञानं शाश्वतं कदापि विच्छेदाभावात्, परिनिर्वृतोऽस्वास्थ्यहेतुकर्माभावात् सर्वथा स्वस्थीभूत इत्येकविंशतिसूत्रार्थः ॥ २१ ॥ इति ब्रवीमीति प्राग्वत्—

इति श्रीतपागच्छीयमहोपाध्यायश्रीविमलहर्षगणिमहोपाध्यायश्रीमुनिविमलगणिशिष्योपाध्याय श्रीभावविजयगणिसमर्थितायां श्रीउत्तराध्ययनसूत्रवृत्तौ पञ्चत्रिंशमध्ययनं सम्पूर्णम् ॥ ३५ ॥

## ॥ अथ षट्त्रिंशमध्ययनम् ॥

॥ अर्हम् ॥ उक्तं पञ्चत्रिंशमध्ययनमथ जीवाजीवविभक्तिसंज्ञं षट्त्रिंशमारभ्यते, अस्य चायमभिसम्बन्धोऽनन्तराध्ययने भिक्षुगुणाः उक्तास्ते च जीवाजीवस्वरूपपरिज्ञानादेवासेवितुं शक्या इति तज्ज्ञापनार्थमिदमारभ्यते इति सम्बन्धस्यास्येदमादिसूत्रम्—

मूलम्—जीवाजीवविभत्तिं, सुणेह मे एगमणा इओ । जं जाणिऊण भिक्खू, सम्मं जयइ संजमे ॥१॥

व्याख्या—जीवाजीवानां विभक्तिस्तद्भेदादिदर्शनेन विभागेनावस्थापनं जीवाजीवविभक्तिस्तां शृणुत मे कथयतः इति शेषः, एकमनसः सन्तः, अतोऽनन्तराध्ययनादनन्तरं, यां जीवाजीवविभक्तिं प्ररूपणाद्वारेणैव ज्ञात्वा भिक्षुः सम्यग् यतते प्रयत्नं कुरुते संयमे इति सूत्रार्थः ॥ १ ॥ जीवाजीवविभक्तिप्रसङ्गादेव लोकालोकविभक्तिमाह—

मूलम्—जीवा चेव अजीवा य, एस लोए विआहिए । अजीवदेसे आगासे, अलोए से विआहिए ॥२॥

व्याख्या—जीवाश्चैव अजीवाश्च एष सर्वप्रसिद्धो लोको व्याख्यातोऽर्हदाद्यैः, अजीवदेश आकाशमलोकः स व्याख्यातो धर्मास्तिकायादिरहितस्याकाशस्यैवालोकत्वात् ॥ २ ॥ इह च जीवाजीवानां विभक्तिः प्ररूपणाद्वारेणैव स्यादिति तामाह—

मूलम्—दव्वओ खेत्तओ चेव, कालओ भावओ तहा। परूवणा तेसि भवे, जीवाणं अजीवाण य ॥३॥

व्याख्या—द्रव्यत इदमियद्धेदं द्रव्यमिति, क्षेत्रतश्चैव इदमियति क्षेत्रे स्यादिति, कालत इदमियत्कालस्थितिकमिति, भावत इमेऽस्य पर्यायास्तथेति समुच्चये इति प्ररूपणा तेषां विभजनीयत्वेन प्रक्रान्तानां भवेज्जीवानामजीवानां चेति सूत्रद्वयार्थः ॥ ३ ॥ तत्राल्पवक्तव्यत्वाद्रव्यतोऽजीवप्ररूपणामाह—

मूलम्—रूविणो चेवऽरूवी अ, अजीवा दुविहा भवे। अरूवी दसहा वुत्ता, रूविणोऽवि चउविहा ॥४॥

व्याख्या—रूपिणश्चैव समुच्चये अरूपिणश्च अजीवा द्विविधा भवेयुः, तत्रारूपिणो दशधा उक्ताः, 'रूविणोविन्ति' अपिः पुनरर्थस्ततो रूपिणः पुनश्चतुर्विधाः । अत्राप्यल्पवक्तव्यत्वादेवारूपिणां प्राक् प्ररूपणेति ध्येयम् ॥ ४ ॥ तत्रारूपिणो दशविधानाह—

मूलम्—धम्मत्थिकाए तद्देसे, तप्पएसे अ आहिए। अधम्मे तस्स देसे अ, तप्पएसे अ आहिए ॥५॥

व्याख्या—धारयत्यनुगृह्णाति गतिपरिणतान् जीवपुद्गलांस्तत्स्वभावतयेति धर्म्मः, अस्तयः प्रदेशास्तेषां कायः समूहोऽस्तिकायः, धर्मश्चासावस्तिकायश्च धर्मास्तिकायः ॥ १ ॥ तस्य धर्मास्तिकायस्य देशस्त्रिभागश्चतुर्भागादिः तद्देशः ॥ २ ॥ तस्य प्रदेशो निर्विभागो भागस्तत्प्रदेशश्च आख्यातः ॥ ३ ॥ न धारयति जीवाणून् गतिपरिणतौ स्थित्यवष्टम्भकत्वादित्यधर्मः स एवास्तिकायोऽधर्मास्तिकायः ॥ १ ॥ तस्य देशः २ तत्प्रदेश ३ श्चाख्यातः ॥ ५ ॥

मूलम्—आगासे तस्स देसे अ, तप्पएसे अ आहिए। अद्धासमये चेव, अरूवी दसहा भवे ॥ ६ ॥

व्याख्या—आङिति मर्यादया स्वरूपात्यागरूपया काशन्ते भासन्तेऽस्मिन् पदार्था इत्याकाशं तदेवास्तिकायः आकाशास्तिकायः ॥ १ ॥ तस्य देशश्च ॥ २ ॥ तत्प्रदेशश्चाख्यातः ॥ ३ ॥ एवं ॥ ९ ॥ अद्धा कालस्तद्रूपः समयोऽद्धासमयोऽनिर्विभागत्वाचास्य न देशप्रदेशसम्भवः, आवलिकाद्यास्तु कालभेदा व्यवहारत एवोच्यन्त इति नेह विवक्षिताः, एवमरूपिणो दशधा भवेयुरिति सूत्रत्रयार्थः ॥ ६ ॥ सम्प्रत्येतानेव क्षेत्रत आह—

मूलम्—धम्माधम्मे अ दोवेए, लोगमेत्ता विआहिआ।
लोआलोए अ आगासे, समए समयखेत्तिए ॥ ७ ॥

व्याख्या—धर्माधर्मौ च धर्मास्तिकायाधर्मास्तिकायौ लोकमात्रौ व्याख्यातौ, लोकेऽलोके चाकाशं सर्वगतत्वात्तस्य, समयोऽद्धासमयः समयक्षेत्रमर्द्धतृतीयद्वीपवार्द्धिद्वयरूपं विषयभूतमस्यास्तीति समयक्षेत्रिकस्तत्परतस्तस्याभावादिति सूत्रार्थः ॥ ७ ॥ अथामूनेव कालत आह—

मूलम्—धम्माधम्मागासा, तिण्णिऽवि एए अणाइआ। अपज्जवसिआ चेव, सव्वद्धं तु विआहिआ ८

व्याख्या—धर्माधर्माकाशानि त्रीण्यप्येतानि अनादिकानि अपर्यवसितानि चैव अनन्तानीत्यर्थः, 'सव्वद्धं तुत्ति' सर्वाद्धामेव सर्वदा स्वस्वरूपात्यागता नित्यानीति यावत् व्याख्यातानि ॥ ८ ॥

मूलम्—समएवि संतइं पप्प, एवमेव विआहिए। आएसं पप्प साइए, सपज्जवसिएवि अ ॥ ९ ॥

व्याख्या—समयोऽपि सन्ततिं अपरापरोत्पत्तिरूपप्रवाहात्मिकां प्राप्य आश्रित्य एवमेव अनाद्यनन्तलक्षणेनैव प्रकारेण व्याख्यातः, आदेशं विशेषं प्रति नियतव्यक्तिरूपं घट्यादिकं प्राप्य सादिकः सपर्यवसितोऽपि चेति सूत्रद्वयार्थः ॥ ९ ॥ अथामूर्त्ततयाऽमीषां पर्यायाः प्ररूप्यमाणा अप्यवबोद्धुं दुःशका इति भावतस्तत्प्ररूपणामनादृत्य द्रव्यतो रूपिणः प्ररूपयितुमाह—

मूलम्—खंधा य १ खंधदेसा य २ तप्पएसा ३ तहेव य।
परमाणुणो अ बोधव्वा, रूविणो य चउव्विहा ॥ १० ॥

व्याख्या—स्कन्धाश्च पुद्गलोपचयापचयलक्षणाः स्तम्भादयः, स्कन्धदेशाश्च स्तम्भादिद्वितीयादिभागरूपाः, तेषां प्रदेशास्तत्प्रदेशाः स्तम्भादिसम्पृक्तनिरंशांशरूपास्तथैव चेति समुच्चये, परमाणवश्च निरंशद्रव्यरूपा बोद्धव्याः, रूपिणश्च रूपिणः पुनश्चतुर्विधाः ॥ १० ॥ इह च देशप्रदेशानां स्कन्धेष्वेवान्तर्भावात् स्कन्धाश्च परमाणवश्चेति समासतो द्वावेव रूपिद्रव्यभेदौ, तयोश्च किं लक्षणमित्याह—

मूलम्—एगत्तेण पुहत्तेणं, खंधा य परमाणुणो। लोएगदेसे लोए अ, भइअव्वा ते उ खेत्तओ।
इत्तो कालविभागं तु, तेसिं वोच्छं चउव्विहं ॥ ११ ॥

व्याख्या—एकत्वेन पृथग्भूतद्व्यादिपरमाणुसङ्घाततो द्विप्रदेशिकादिलक्षणसमानपरिणतिस्वरूपेण, पृथक्त्वेन परमाण्वन्तरैः महासंघातरूपेण बृहत्स्कन्धेभ्यो विघटनात्मकेन वा स्कन्धाश्च परमाणवश्च लक्ष्यन्त इति शेषः। एतानेव क्षेत्रत आह—'लोएगदेसे' इत्यादि—लोकस्यैकदेशे लोके च भक्तव्या भजनया विज्ञेयाः ते इति स्कन्धाः परमाणवश्च, तुः पूरणे, क्षेत्रतः। अत्र चाविशेषोक्तावपि परमाणूनामेकप्रदेश एवावस्थानात् स्कन्धविषयैव भजना द्रष्टव्या। ते हि विचित्रपरिणामत्वेन बहुतरप्रदेशोपचिता अपि केचिदेकप्रदेशे अवतिष्ठन्ते, अन्ये तु संख्येयेष्वेव प्रदेशेषु यावत्कोऽपि सकललोकेपि तथाविधाचित्तमहास्कन्धवत्ततो भजनीया इत्युच्यन्ते। 'इत्तोत्ति' इत इति क्षेत्रप्ररूपणातोऽनन्तरं कालविभागं तु कालभेदं पुनस्तेषां स्कन्धादीनां वक्ष्ये चतुर्विधं साद्यनादिसपर्यवसितापर्यवसितभेदेनेति सूत्रार्थः। इदं च सूत्रं षट्पादं, प्रत्यन्तरेषु चान्त्यपादद्वयं न दृश्यतेऽपि ॥ ११ ॥ प्रतिज्ञातमाह—

मूलम्—संतइं पप्प तेऽणाई, अपज्जवसिआवि अ। ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥१२॥

व्याख्या—सन्ततिमपरापरोत्पत्तिरूपां प्राप्य आश्रित्य ते इति स्कन्धाः परमाणवश्च अनादयः अपर्यवसिता अपि च, न हि प्रवाहतस्तद्वियुक्तं जगत् कदाप्यासीत् अस्ति भविष्यति वा। स्थितिं प्रतिनियतक्षेत्रावस्थानरूपां प्रतीत्य सादिकाः सपर्यवसिता अपि च, व्रजन्ति हि कालान्तरे नवनवं क्षेत्रं परमाणवः स्कन्धाश्चेति ॥ १२ ॥ सादिसपर्यवसितत्वेप्येषां कियत्कालं स्थितिरित्याह—

मूलम्—असंखकालमुक्कोसं, एगं समयं जहन्नयं। अजीवाण य रूविणं, ठिई एसा विआहिआ ॥१३

व्याख्या—असंख्यकालमुत्कृष्टा, एकं समयं जघन्यका, अजीवानां रूपिणां स्थितिरेकक्षेत्रावस्थानरूपा एषा व्याख्याता। ते हि जघन्यत एकसमयादुत्कृष्टतोऽसंख्यकालादप्यूर्ध्वं ततः क्षेत्रात्क्षेत्रान्तरमवश्यं यान्तीति ॥ १३ ॥ इत्थं कालद्वारमाश्रित्य स्थितिरुक्ता, सम्प्रत्येतदन्तर्गतमेवान्तरमाह—

मूलम्—अणंतकालमुक्कोसं, एगं समयं जहन्नयं। अजीवाण य रूवीणं, अंतरेअं विआहिअं ॥ १४॥

व्याख्या—स्पष्टं, नवरं—'अंतरेअंति' अन्तरं विवक्षितक्षेत्रात् प्रच्युतानां पुनस्तत्प्राप्तिव्यवधानं एतत्पूर्वोक्तमिति सूत्रत्रयार्थः ॥ १४ ॥ एतान्येव भावतोऽभिधातुमाह—

मूलम्—वण्णओ गंधओ चेव, रसओ फासओ तहा। संठाणओ अ विण्णेओ, परिणामो तेसि पंचहा

व्याख्या—वर्णतो गन्धतश्चैव रसतः स्पर्शतस्तथा संस्थानतश्च विज्ञेयः परिणामः स्वरूपावस्थितानामेव वर्णाद्यन्यथाभावस्तेषामणूनां स्कन्धानां च पञ्चधा ॥ १५ ॥ प्रत्येकमेषामेवोत्तरभेदानाह—

मूलम्—वण्णओ परिणया जे उ, पंचहा ते पकित्तिआ।
किण्हा नीला य लोहिआ, हालिद्दा सुकिला तहा ॥ १६ ॥

व्याख्या—अत्र कृष्णाः कज्जलादिवत्, नीला हरितादिवत्, लोहिता हिङ्गुलकादिवत्, हारिद्राः पीता हरिद्रादिवत्, शुक्लाः शङ्खादिवत् ॥ १६ ॥

मूलम्—गंधओ परिणया जे उ, दुविहा ते विआहिआ। सुब्भिगंधपरिणामा, दुब्भिगंधा तहेव य ।१७।

व्याख्या—सुरभिगन्धपरिणामाः श्रीखण्डादिवत्, दुरभिगन्धा दुर्गन्धा लशुनादिवत् ॥ १७ ॥

मूलम्—रसओ परिणया जे उ, पंचहा ते पकित्तिआ। तित्त-कडुअ-कसाया, अंबिला महुरा तहा।१८।

व्याख्या—अत्र तिक्ता निम्बादिवत्, कटुकाः शुण्ठ्यादिवत्, कषाया बुब्बूलादिवत्, अम्ला अम्लिकावत्, मधुराः शर्करादिवत् ॥ १८ ॥

मूलम्—फासओ परिणया जे उ, अट्ठहा ते पकित्तिआ। कक्खडा मउआ चेव, गरुआ लहुआ तहा।१९।
सीआ उण्हा य निद्धा य, तहा लुक्खा य आहिआ। इति फासपरिणया, एए पुग्गला समुदाआ२०

व्याख्या—कर्कशाः पाषाणादिवत्, मृदवो म्रक्षणादिवत्, गुरवो हीरकादिवत्, लघवोऽर्कतूलादिवत् ॥ १९ ॥ शीता जलादिवत्, उष्णा दहनादिवत्, स्निग्धा घृतादिवत्, रूक्षा रक्षादिवत् ॥ २० ॥

मूलम्—संठाणपरिणया जे उ, पंचहा ते पकित्तिआ। परिमंडला य वट्टा, तंसा चउरंसमायया ॥२१॥

व्याख्या—संस्थानानि आकारास्तैः परिणताः संस्थानपरिणताः परिमण्डलं मध्यशुपिरं वृत्तं वलयवत्, वृत्तं मध्ये पूर्णं झल्लरीवत्, त्र्यस्रं त्रिकोणं शृङ्गाटकवत्, चतुरस्रं चतुष्कोणं वर्यपट्टादिवत्, आयतं दीर्घं दण्डादिवत् ॥ २१॥ अथैषामेवान्योन्यं संवेधमाह—

**मूलम्**—वण्णओ जे भवे किण्हे, भइए से उ गंधओ। रसओ फासओ चेव, भइए संठाणओवि अ २२

व्याख्या—वर्णतो यः स्कन्धादिर्भवेत्कृष्णो भाज्यः 'से उत्ति' स पुनर्गन्धतः सुरभिर्दुर्गन्धो वा स्यान्न तु नियतगन्ध एवेति भावः। एवं रसतः स्पर्शतश्चैव भाज्यः, संस्थानतोऽपि च। अन्यतररसादियोगादिति तत्त्वम् ॥ २२ ॥

**मूलम्**—वण्णओ जे भवे नीले, भइए से उ गंधओ। रसओ फासओ चेव, भइए संठाणओवि अ ॥ २३ ॥ वण्णओ लोहिए जे उ, भइए से उ गंधओ। रसओ फासओ चेव, भइए संठाणओवि य ॥ २४ ॥ वण्णओ पीअए जे उ, भइए से उ गंधओ। रसओ फासओ चेव, भइए संठाणओवि अ ॥ २५ ॥ वण्णओ सुक्किले जे उ, भइए से उ गंधओ। रसओ फासओ चेव, भइए संठाणओवि अ ॥ २६ ॥ गंधओ जे भवे सुब्भी, भइए से उ वण्णओ। रसओ फासओ चेव, भइए संठाणओवि अ ॥ २७ ॥ गंधओ जे भवे दुब्भी, भइए से उ वण्णओ। रसओ फासओ चेव भइए संठाणओवि अ ॥ २८ ॥ रसओ तित्तए जे उ, भइए से उ वण्णओ। गंधओ फासओ चेव, भइए संठाणओवि अ ॥२९॥ रसओ कडुए जे उ, भइए से उ वण्णओ। गंधओ फासओ चेव, भइए संठाणओवि अ ॥ ३० ॥ रसओ कसाए जे उ, भइए से उ वण्णओ। गंधओ फासओ चेव, भइए संठाणओवि अ ॥ ३१ ॥ रसओ अंबिले जे उ, भइए से उ वण्णओ। गंधओ फासओ चेव, भइए संठाणओवि अ ॥ ३२ ॥ रसओ महुरे जे उ, भइए से उ वण्णओ। गंधओ फासओ चेव, भइए संठाणओवि अ ॥ ३३ ॥ फासओ कक्खडे जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३४ ॥ फासओ मउए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३५ ॥ फासओ गरुए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३६ ॥ फासओ लहुए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३७ ॥ फासओ सीअए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३८ ॥ फासओ उण्हए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३९ ॥ फासओ निद्धए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ४० ॥ फासओ लुक्खए जे उ, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ४१ ॥ परिमंडलसंठाणे, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए फासओवि अ ॥ ४२ ॥ संठाणओ भवे वट्टे, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए फासओवि अ ॥ ४३ ॥ संठाणओ भवे तंसे, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए फासओवि अ ॥ ४४ ॥ संठाणओ अ चउरंसे, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए फासओवि अ ॥४५॥ जे आययसंठाणे, भइए से उ वण्णओ। गंधओ रसओ चेव, भइए फासओवि अ ॥ ४६ ॥

व्याख्या—इमानि सर्वाण्यपि प्राग्व्याख्येयानि समुदायार्थस्त्वयमेषां, तथाहि—अत्र द्वौ गन्धौ, पञ्च रसाः, अष्टौ स्पर्शाः, पञ्च संस्थानानि, तेषु वर्णपञ्चकं विनाऽन्येऽमी मीलिता विंशतिः, एते चैकेन कृष्णवर्णेन लब्धाः, एवं विंशतिभङ्गान् प्रत्येकं पञ्चापि वर्णा लभन्ते, एवं लब्धं शतं १००। तथा द्वौ गन्धौ, तौ विनाऽन्ये पूर्वोक्ता अष्टादश १८, पञ्चभिर्वर्णैर्मीलितास्त्रयोविंशतिः २३, ततो गन्धद्वयेन लब्धाः ४६। एवं रसपञ्चके वर्णगन्धस्पर्शसंस्थानभेदैर्विंशत्या लब्धं शतं १००। इत्थं स्पर्शाष्टके वर्ण ५ गन्ध २ रस ५ संस्थान ५ भेदैः सप्तदशभिर्लब्धं षट्त्रिंशं शतं १३६। एवं संस्थानपञ्चके वर्णादिभेदैर्विंशत्या लब्धं शतं १००। वर्णादिसर्वभङ्गकमीलने जातानि चत्वारि शतानि द्व्यशीत्यधिकानि ४८२ ॥ इति द्वात्रिंशत्सूत्रार्थः ॥ ४६ ॥ अथोपसंहारद्वारेणोत्तरग्रन्थसम्बन्धमाह—

मूलम्—एसा अजीवपविभत्ती, समासेण विआहिआ। एत्तो जीवविभत्तिं, वुच्छामि अणुपुव्वसो ॥४७॥

व्याख्या—स्पष्टम् ॥ ४७ ॥ प्रतिज्ञातमेवाह—

मूलम्—संसारत्था य सिद्धा य, दुविहा जीवा विआहिआ।
सिद्धाऽणेगविहा वुत्ता, तं मे कित्तयओ सुण ॥ ४८ ॥

---

१ १५ सूत्रादारभ्य ४६ सूत्रपर्यन्तमवसेयम् ॥

व्याख्या—संसारस्थाश्च सिद्धाश्च द्विविधा जीवा व्याख्याताः, तत्राल्पवक्तव्यत्वादादौ सिद्धानाह—सिद्धाः अनेकविधाः प्रोक्ताः 'तं मेत्ति' तान्मे कीर्त्तयतः शृणु हे शिष्येति सूत्रार्थः ॥ ४८ ॥ सिद्धानामनेकविधत्वमेवोपाधिभेदेनाह—

मूलम्—इत्थी पुरिस सिद्धा य, तहेव य नपुंसगा। सलिंगे अन्नलिंगे अ, गिहिलिंगे तहेव य ॥ ४९॥

व्याख्या—सिद्धशब्दः प्रत्येकं योज्यः, स्त्रियश्च ते पूर्वभावापेक्षया सिद्धाश्च स्त्रीसिद्धाः, एवं पुरुषसिद्धाः, तथैव च नपुंसकसिद्धाः, स्वलिङ्गे साधुवेषे, अन्यलिङ्गे च शाक्यादिवेषे, गृहिलिङ्गे गृहस्थवेषे सिद्धास्तथैवेत्युक्तसमुच्चये, चकारोऽनुक्तसिद्धभेदसंसूचक इति सूत्रार्थः ॥ ४९ ॥ अथ सिद्धानेवावगाहनातः क्षेत्रतश्चाह—

मूलम्—उक्कोसोगाहणाए अ, जहन्नमज्झिमाइ अ। उड्ढं अहे अ तिरिअं च, समुद्दंमि जलंमि अ।५०।

व्याख्या—उत्कृष्टावगाहनायां पञ्चशतधनुर्मानायां सिद्धाः 'जहन्नमज्झिमाइ अत्ति' जघन्यावगाहनायां द्विहस्तमानायां, मध्यमावगाहनायां चोक्तरूपोत्कृष्टजघन्यावगाहनान्तरालवर्त्तिन्यां सिद्धाः, ऊर्ध्वमूर्ध्वलोके मेरुचूलिकादौ, अधोऽधस्तादधोलोकेऽधोलौकिकग्रामरूपे, तिर्यक् च तिर्यग्लोके अर्द्धतृतीयद्वीपसमुद्रद्वयरूपे। तत्रापि केचित्समुद्रे सिद्धाः, जले च नद्यादिसम्बन्धिनीति सूत्रार्थः ॥ ५० ॥ इत्थं स्त्रीसिद्धादीनभिदधता स्त्र्यादिषु सिद्धसम्भव उक्तः, सम्प्रति तत्रापि क्व कियन्तः सिध्यन्तीत्याह—

मूलम्—दस चेव नपुंसेसु, वीसई इत्थिआसु अ। पुरिसेसु अ अट्ठसयं, समएणेगेण सिज्झई ॥५१॥

व्याख्या—अत्र नपुंसकेषु कृत्रिमेष्वेव नान्येषु तेषां प्रव्रज्यापरिणामस्याप्यभावात्, 'अट्ठसयंति' अष्टोत्तरशतम् ।५१।

मूलम्—चत्तारि अ गिहिलिंगे, अन्नलिंगे दसेव य। सलिंगेण य अट्ठसयं, समएणेगेण सिज्झइ ॥५२॥

व्याख्या—स्पष्टम् ॥ ५२ ॥

मूलम्—उक्कोसोगाहणाए उ, सिज्झंते जुगवं दुवे। चत्तारि जहण्णाए, जवमज्झट्ठुत्तरं सयं ॥ ५३ ॥

व्याख्या—'जवमज्झत्ति' यवमध्यमिव यवमध्यं मध्यमावगाहना तस्यामष्टोत्तरं शतं, यवमध्यत्वं चोत्कृष्टजघन्यावगाहनापेक्षया अस्या बहुतरसंख्यात्वेन पृथुलतयैवावभासमानत्वात् ॥ ५३ ॥

मूलम्—चउरुड्ढलोए अ दुवे समुद्दे, तओ जले वीसमहे तहेव य।
सयं च अट्ठुत्तर तिरिअलोए, समएण एगेण उ सिज्झई धुवं ॥ ५४ ॥

व्याख्या—चत्वार ऊर्ध्वलोके, शेषं स्पष्टमिति सूत्रचतुष्कार्थः ॥५४॥ अथ तेषामेव प्रतिघातादि प्रतिपादनायाह—

मूलम्—कहिं पडिहया सिद्धा, कहिं सिद्धा पइट्ठिआ। कहिं बोंदिं चइत्ता णं, कत्थ गंतूण सिज्झइ।५५।

व्याख्या—क्व प्रतिहताः स्खलिताः सिद्धाः ? क्व सिद्धाः प्रतिष्ठिताः साद्यनन्तं कालं स्थिताः ? क्व बोन्दिं शरीरं त्यक्त्वा ? क्व गत्वा 'सिज्झइत्ति' सिध्यन्ति निष्ठितार्था भवन्ति ? ॥ ५५ ॥ अत्रोत्तरमाह—

मूलम्—अलोए पडिहया सिद्धा, लोअग्गे अ पइट्ठिआ। इहं बोंदिं चइत्ता णं, तत्थ गंतूण सिज्झइ ।५६।

व्याख्या—अलोके केवलाकाशरूपे प्रतिहताः सिद्धाः, तत्र धर्मास्तिकायाभावेन तेषां गतेरभावात्, लोकाग्रे च प्रतिष्ठिताः सदावस्थिताः, ननु तिर्यगधो वा तेषां गतिर्भाविनी तत्कथं लोकाग्रे तदवस्थानं ? उच्यते—अधस्तिर्यग्गत्योः कर्माधीनत्वात् तेषां च क्षीणकर्मत्वान्न तत्सम्भवो यदुक्तं—"अधस्तिर्यगथोर्द्धं च, जीवानां कर्मजा गतिः। ऊर्द्धमेव तु ताद्धर्म्या—द्भवति क्षीणकर्मणाम् ॥ १ ॥" इह तिर्यग्लोकादौ बोन्दिं वपुस्त्यक्त्वा तत्र लोकाग्रे गत्वा सिध्यन्ति। इह च यस्मिन्समये देहत्यागस्तस्मिन्नेव मोक्षो लोकाग्रे गतिः सिद्धत्वं च "मुखं व्यादाय स्वपिति" इत्यादिवदिहापि क्त्वाप्रत्ययस्य समानकाल एव प्रयोगादिति सूत्रत्रयार्थः ॥ ५६ ॥ लोकाग्रे गत्वा सिध्यन्ति इत्युक्तं, लोकाग्रं चेषत्प्राग्भाराया उपरीति तत्स्वरूपं सिद्धस्वरूपं चाह—

मूलम्—बारसहिं जोअणेहिं, सव्वट्ठस्सुवरिं भवे। इसीपब्भारनामा उ, पुढवी छत्तसंठिआ ॥ ५७ ॥

व्याख्या—द्वादशभिर्योजनैः सर्वार्थस्यानुत्तरविमानस्योपरि भवेत्, ईषत्प्राग्भारेति नाम यस्याः सा ईषत्प्राग्भारनामा, तुः पूर्त्तौ, पृथिवी। छत्रसंस्थिता छत्राकारा ॥ ५७ ॥

मूलम्—पणयालसयसहस्सा, जोअणाणं तु आयया। तावइअं चेव विच्छिण्णा, तिगुणो तस्सेव परिरओ

व्याख्या—पञ्चचत्वारिंशत् शतसहस्राणि लक्षाणि योजनानां तुः पूर्त्तौ आयता दीर्घा, 'तावइअं चेवत्ति' तावतश्चैव शतसहस्रान् विस्तीर्णा, त्रिगुणः 'तस्सेवत्ति' तस्मादायामात्परिरयः परिधिः। इह च त्रिगुण इत्युक्तेऽपि विशेषाधिक्यं द्रष्टव्यम्। परिरयमानं चैवं—"एगा जोअणकोडि, बायालीसं भवे सयसहस्सा। तीसं चेव सहस्सा, दो चेव सया अउणपण्णत्ति ॥ १ ॥ ५८ ॥

मूलम्—अट्ठजोअणबाहल्ला, सा मज्झंमि विआहिआ। परिहायंती चरिमंते, मच्छिपत्ताओ तणुअतरी५९

व्याख्या—अष्टयोजनबाहल्या सा मध्ये मध्यप्रदेशे व्याख्याता, ततः परि समन्तात् हीयमाना 'चरिमंतेत्ति' चरमान्तेषु सकलदिग्वर्त्तिपर्यन्तप्रदेशेषु मक्षिकापत्रादपि तनुकतरा। हानिश्चात्र प्रतियोजनमङ्गुलपृथक्त्वस्य ज्ञेया ॥ ५९ ॥

मूलम्—अज्जुणसुवण्णगमई, सा पुढवी निम्मला सहावेणं। उत्ताणगछत्तसंठिआ य, भणिआ जिणवरेहिं

व्याख्या—अर्जुनसुवर्णकमयी शुक्लकनकमयी सा पृथ्वी निर्मला स्वभावेन नोपाधितः, उत्तानकच्छत्रसंस्थिता। पूर्वं छत्रसंस्थितेति सामान्येनोक्तं, इह तु उत्तानत्वं तद्विशेष इति न पौनरुक्त्यम् ॥ ६० ॥

मूलम्—संखंककुंदसंकासा, पंडुरा निम्मला सुभा। सीआए जोअणे तत्तो, लोअंतो उ विआहिओ॥६१॥

व्याख्या—पूर्वार्द्धं स्पष्टं, 'सीआएत्ति' शीतायाः शीताभिधायाः पृथ्व्या उपरीति शेषः, योजने उत्सेधाङ्गुलनिष्पन्ने इति गम्यं, तत इति तस्या लोकान्तस्तुः पूर्त्तौ व्याख्यातः ॥ ६१ ॥ ननु यदि योजने लोकान्तस्तर्हि किं तत्र योजने सर्वत्र सिद्धाः सन्ति उत नेत्याह—

मूलम्—जोअणस्स उ जो तस्स, कोसो उवरिमो भवे। तस्स कोसस्स छब्भाए, सिद्धाणोगाहणा भवे ॥

व्याख्या—योजनस्य तु यस्तस्य क्रोश 'उवरिमोत्ति' उपरिवर्त्ती भवेत् तस्य क्रोशस्य षड्भागे द्वात्रिंशदङ्गुलत्रयस्त्रिंशद्धनुरधिकधनुःशतत्रयरूपे सिद्धानामवगाहना भवेत् ॥ ६२ ॥ अवगाहना च चलनसम्भवेऽपि स्यादित्याह—

मूलम्—तत्थ सिद्धा महाभागा, लोगग्गंमि पइट्ठिआ। भवप्पवंचउम्मुक्का, सिद्धिं वरगइं गया ॥ ६३ ॥

व्याख्या—तत्र योजनषड्भागे सिद्धा महाभागा अतिशयाचिन्त्यशक्तयो लोकाग्रे प्रतिष्ठिताः, एतच्च कुतः ? इत्याह—भवा नारकादिभवास्तेषां प्रपञ्चो विस्तारस्तेनोन्मुक्ताः सिद्धिं वरगतिं गताः। अयं भावो भवप्रपञ्च एव चलने हेतुः स च सिद्धानां नास्तीति कुतः तेषां चलनमिति ॥ ६३ ॥ सिद्धानामवगाहनामाह—

मूलम्—उस्सेहो जस्स जो होइ, भवम्मि चरिमम्मि अ। तिभागहीणा तत्तो अ, सिद्धाणोगाहणा भवे६४

व्याख्या—उत्सेध उच्छ्रयः प्रक्रमाद्देहस्य 'जस्सत्ति' येषां सिद्धानां य इति यत्परिमाणो भवति भवे चरमे पर्य-

न्तवर्त्तिनि तुः पूर्त्तौ ततश्चरमभवोत्सेधात्त्रिभागहीना सिद्धानां यत्तदोर्नित्याभिसम्बन्धात् तेषामवगाहना भवेत् त्रिभागस्य शरीरान्तर्विवरपूरणेन कृतार्थत्वात् ॥ ६४ ॥ एतानेव कालतो निरूपयितुमाह—

मूलम्—एगत्तेणं साईआ, अपज्जवसिआवि अ । पुहत्तेण अणाईआ, अपज्जवसिआवि अ ॥ ६५ ॥

व्याख्या—एकत्वेन सादिकाः अपर्यवसिता अपि च, यत्र काले ते सिध्यन्ति तत्र तेषामादिः न च कदाचिन्मुक्तेर्भ्रश्यन्तीति न पर्यवसानं । पृथक्त्वेन बहुत्वेन सामस्त्यापेक्षयेत्यर्थः अनादिका अपर्यवसिता अपि च, न हि ते कदाचिन्नाभूवन्न भवन्ति न भविष्यन्ति चेति भावः ॥ ६५ ॥ एषामेव स्वरूपमाह—

मूलम्—अरूविणो जीवघणा, नाणदंसणसन्निआ। अउलं सुहसंपत्ता, उवमा जस्स नत्थि उ ॥ ६६ ॥

व्याख्या—अरूपिणो रूपरसादिरहिताः, जीवाश्च ते सततोपयुक्ततया घनाश्च शुषिरपूरणनिचितप्रदेशतया जीवघनाः, ज्ञानदर्शने एव संज्ञा जाता येषां ते ज्ञानदर्शनसंज्ञिताः, ज्ञानदर्शनोपयोगानन्यस्वरूपा इत्यर्थः । अतुलं असमं सुखं संप्राप्ताः, उपमा यस्य सुखस्य नास्ति तुः पूर्त्तौ ॥ ६६ ॥ उक्तग्रन्थे ज्ञातमपि विप्रतिपत्तिनिरासाय क्षेत्रं स्वरूपं च तेषामाह—

मूलम्—लोएगदेसे ते सव्वे, नाणदंसणसन्निआ। संसारपारनित्थिण्णा, सिद्धिं वरगइं गया ॥ ६७ ॥

व्याख्या—लोकैकदेशे ते सर्वे इत्येनन सर्वत्र मुक्तास्तिष्ठन्तीति मतमपास्तं, ज्ञानदर्शनसंज्ञिता इत्यनेन ज्ञानोच्छेदे मुक्तिरिति मतं निरस्तं, संसारपारं निस्तीर्णाः पुनरागमनाभावलक्षणेनाधिक्येन अतिक्रान्ताः, अनेन तु "ज्ञानिनो धर्मतीर्थस्य, कर्त्तारः परमं पदम् । गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ १ ॥" इति मतमपाकृतं, सिद्धिं वरगतिं गता अनेन क्षीणकर्मणोऽपि स्वभावेनैवोत्पत्तिसमये लोकाग्रगमनं यावत्सक्रियत्वमप्यस्तीति ख्याप्यते, इत्येकादशसूत्रार्थः ॥ ६७ ॥ इत्थं सिद्धानुक्त्वा संसारस्थानाह—

मूलम्—संसारत्था उ जे जीवा, दुविहा ते विआहिआ। तसा य थावरा चेव, थावरा तिविहा तहिं॥६८॥

व्याख्या—स्पष्टं ॥ ६८ ॥ त्रैविध्यमेवाह—

मूलम्—पुढवी आउ जीवा य, तहेव य वणस्सई । इच्चेते थावरा तिविहा, तेसिं भेए सुणेह मे ॥६९॥

व्याख्या—स्पष्टम्, नवरं इह तेजोवाय्वोर्गतित्रसत्वेन स्थावरमध्येऽनभिधानम् ॥ ६९ ॥ पृथिवीकायिकानाह—

मूलम्—दुविहा पुढवीजीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ ७० ॥

व्याख्या—द्विविधाः पृथिवीजीवास्तु सूक्ष्माः सूक्ष्मनामकर्मोदयात्, बादरा बादरनामकर्मोदयात्, 'पज्जत्तमपज्जत्ति' आहारशरीरेन्द्रियोच्छ्वासवाग्मनोनिष्पत्तिहेतुदलिकं पर्याप्तिस्तद्वन्तः पर्याप्ताः, तद्विपरीता अपर्याप्ताः, एवमेते सूक्ष्मा बादराश्च प्रत्येकं द्विधा पुनः ॥ ७० ॥ पुनरेषामेवोत्तरभेदानाह—

मूलम्—बायरा जे उ पज्जत्ता, दुविहा ते विआहिआ। सण्हा खरा य बोधव्वा, सण्हा सत्तविहा तहिं ।७१।

व्याख्या—'सण्हत्ति' श्लक्ष्णा चूर्णितलोष्टुकल्पा मृदु पृथिवी तदात्मका जीवा अप्युपचारतः श्लक्ष्णा एवमुत्तरत्रापि, खरा कठिना ॥ ७१ ॥ सप्तविधत्वमेवाह—

मूलम्—किण्हा १ नीला २ य रुहिरा ३ य, हालिद्दा ४ सुक्किला ५ तहा ।
पंडू ६ पणगमट्टीआ ७, खरा छत्तीसईविहा ॥ ७२ ॥

व्याख्या—कृष्णा नीला 'रुहिरत्ति' रक्ता हारिद्रा शुक्ला 'पंडुत्ति' पाण्डुः पाण्डुरा ईषच्छुक्लत्ववतीत्यर्थः, इत्थं वर्णभेदेन षड्विधत्वमुक्तं, इह च पाण्डुग्रहणं कृष्णादिभेदानामपि स्वस्थाने भेदान्तरसम्भवसूचकम् । पनकोऽत्यन्तसूक्ष्मरजोरूपः स एव मृत्तिका पनकमृत्तिका, पनकस्य च नभसि विवर्त्तमानस्य लोके पृथिवित्वेनारूढत्वाद्भेदेनोपादानम् । खरा पृथ्वी षट्त्रिंशद्विधा षट्त्रिंशद्भेदा ॥ ७२ ॥ तानेवाह—

मूलम्—पुढवी अ सक्करा वालुगा य उवले सिला य लोणूसे ।
अय–तंब–तउव–सीसग–रुप्प–सुवण्णे अ वइरे अ ॥ ७३ ॥

व्याख्या—पृथिवी शुद्धपृथिवी १ शर्करा लघूपलशकलरूपा २ वालुका प्रतीता ३ उपलो गण्डशैलादिः ४ शिला

च वट्टा दृपत् ५ लवणं समुद्रलवणादि ६ ऊपः क्षारमृत्तिका ७ अयस्ताम्रत्रपुकसीसकरूप्यसुवर्णानि प्रतीतानि, वज्रं हीरकः १४ ॥ ७३ ॥

मूलम्—हरिआले हिंगुलए, मनोसिला सासगंजणपवाले। अब्भपडलब्भवालुअ, बायरकाए मणिविहाणा।

व्याख्या—हरितालादयः प्रतीताः, सासको धातुविशेषः, अञ्जनं, प्रवालं विद्रुमं, अभ्रपटलमभ्रकं, अभ्रवालुका अभ्रपटलमिश्रा वालुका । बादरकाये बादरपृथ्वीकायेऽमी भेदाः । 'मणिविहाणत्ति' चस्य गम्यत्वान्मणिविधानानि च मणिभेदाः ॥ ७४ ॥ मणिभेदानाह—

मूलम्—गोमेज्जए अ रुअगे, अंके फलिहे अ लोहिअक्खे अ । मरगय-मसारगल्ले, भुअमोअग इंदनीले अ ॥ ७५ ॥ चंदणं गेरुय हंसगब्भ पुलए सोगंधिए अ बोधव्वे । चंदप्पभ-वेरुलिए, जलकंते सूरकंते अ ॥ ७६ ॥

व्याख्या—इह च पृथिव्यादयश्चतुर्दश हरितालादयोऽष्टौ गोमेदकादयश्च क्वचित्कथञ्चित्कस्यचिदन्तर्भावाच्चतुर्दशेत्यमी मीलिताः षट्त्रिंशद्भवन्तीति सूत्रत्रयकार्थः ॥ ७६ ॥ प्रकृतोपसंहारपूर्वकं सूक्ष्मपृथ्वीकायिकानाह—

मूलम्—एते खरपुढवीए, भेआ छत्तीसमाहिआ। एगविहमनाणत्ता, सुहुमा तत्थ विआहिआ ॥७७॥

व्याख्या—'एगविहंति' सूत्रत्वादेकविधाः, किमित्येवंविधाः? यतोऽनानात्वा अभेदाः सूक्ष्माः तत्र पृथ्वीजीवेषु व्याख्याताः ॥ ७७ ॥ पृथ्वीकायानेव क्षेत्रत आह—

मूलम्—सुहुमा य सव्वलोगंमि, लोगदेसे अ बायरा। एत्तो कालविभागं तु, तेसिं वोच्छं चउव्विहं ॥७८॥

व्याख्या—सूक्ष्माः सर्वलोके, लोकदेशे च रत्नप्रभापृथिव्यादौ बादराः । शेषं स्पष्टम् ॥ ७८ ॥

मूलम्—संतइं पप्पऽणाईआ, अपज्जवसिआवि अ। ठिइं पडुच्च साईआ, सपज्जवसिआ वि अ ॥७९॥

व्याख्या—सन्ततिं प्रवाहं प्राप्य आश्रित्य अनादिका अपर्यवसिता अपि च पृथ्वीकायिकानां प्रवाहतः कदाप्यसम्भवाभावात्, स्थितिं भवस्थितिकायस्थितिरूपां प्रतीत्य सादिकाः सपर्यवसिता अपि च ॥ ७९ ॥

मूलम्—बावीस सहस्साइं, वासाणुक्कोसिआ भवे । आउठिई पुढवीणं, अंतोमुहुत्तं जहन्नगं ॥ ८० ॥ असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्नगा । कायठिई पुढवीणं, तं कायं तु अमुंचओ ॥८१॥

व्याख्या—असंख्यकालमसंख्येयलोकाकाशप्रदेशप्रमाणोत्सर्पिण्यवसर्पिणीरूपं 'उक्कोसंति' उत्कृष्टा, अन्तर्मुहूर्त्तं जघन्यका कायस्थितिः पृथिवीनां पृथिवीकायजीवानां, तं पृथ्वीरूपं कायं 'अमुंचओत्ति' अमुञ्चतां मृत्वा मृत्वा तत्रैवोत्पद्यमानानाम् ॥ ८० ॥ ८१ ॥ कालान्तर्गतमेवान्तरमाह—

मूलम्—अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं। विजढम्मि सए काए, पुढवीजीवाण अंतरं ॥ ८२॥

व्याख्या—अनन्तकालमसंख्येयपुद्गलपरावर्त्तरूपं उत्कृष्टं, अन्तर्मुहूर्त्तं जघन्यकं 'विजढंमित्ति' त्यक्ते स्वके स्वकीये काये पृथिवीकाये जीवानां अन्तरं । कोऽर्थो जघन्यत उत्कर्षतश्च यथोक्तं कालं पृथ्वीजीवोऽन्यकायेषु भ्रान्त्वा पुनः पृथ्विकाये उत्पद्यते इति ॥ ८२ ॥ एतानेव भावत आह—

मूलम्—एएसिं वण्णओ चेव, गंधओ रसफासओ। संठाणादेसओ वावि, विहाणाइं सहस्ससो ८३

व्याख्या—स्पष्टं, नवरं-विधानानि भेदाः सहस्रश इति अतिबहुतरत्वख्यापनार्थमिति सूत्रसप्तकार्थः ॥ ८३ ॥ अप्कायिकानाह—

मूलम्—दुविहा आउजीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ ८४ ॥ बायरा जे उ पज्जत्ता, पंचहा ते पकित्तिआ। सुद्धोदए अ उस्से, हरतणू महिआवि अ ८५

व्याख्या—शुद्धोदकं जलदजलं 'उस्सेत्ति' अवश्यायः शरदादिषु प्राभातिकः सूक्ष्मवर्षो हरतनुः प्रातः स्निग्धपृथ्वीभवस्तृणाग्रजलबिन्दुः, महिका गर्भमासेषु सूक्ष्मवर्षो 'धूमर' इति प्रतीता, हिमं प्रसिद्धम् ॥ ८४ ॥ ८५ ॥

मूलम्—एगविहमनाणत्ता, सुहुमा तत्थ विआहिआ । सुहुमा सव्वलोगम्मि, लोगदेसे अ बायरा ॥८६॥

संतइं पप्पऽणाईआ, अपज्जवसिआवि अ । ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥८७॥
सत्तेव सहस्साइं, वासाणुक्कोसिआ भवे । आउठिई आऊणं, अंतोमुहुत्तंजहन्निआ ॥ ८८ ॥
असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्निया। कायठिई आऊणं, तं कायं तु अमुंचओ॥ ८९ ॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । विजढम्मि सए काए, आऊजीवाण अंतरं ॥९०॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्ससो॥९१॥

व्याख्या—अमूनि प्राग्वत् व्याख्येयानि ॥८६॥८७॥८८॥८९॥९०॥९१॥ अथ वनस्पतिकायिकानाह—

मूलम्—दुविहा वणप्फईजीवा, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ ९२ ॥
बायरा जे उ पज्जत्ता, दुविहा ते विआहिआ। साहारणसरीरा य, पत्तेगा य तहेव य ॥ ९३ ॥

व्याख्या—अत्र 'साहारणसरीरा यत्ति' साधारणमनन्तजीवानामप्येकं शरीरं येषां ते साधारणशरीराः, 'पत्तेगा यत्ति' प्रत्येकशरीराश्च प्रत्येकं भिन्नभिन्नशरीरवन्तः ॥ ९२ ॥ ९३ ॥

मूलम्—पत्तेअसरीरा उ, णेगहा ते पकित्तिआ । रुक्खा गुच्छा य गुम्मा य, लया वल्ली तणा तहा॥९४॥

संतइं पप्पऽणाईआ, अपज्जवसिआवि अ । ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥८७॥
सत्तेव सहस्साइं, वासाणुक्कोसिआ भवे । आउठिई आऊणं, अंतोमुहुत्तंजहन्निआ ॥ ८८ ॥
असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्निया। कायठिई आऊणं, तं कायं तु अमुंचओ॥ ८९ ॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । विजढम्मि सए काए, आऊजीवाण अंतरं ॥९०॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्ससो॥९१॥

व्याख्या—अमूनि प्राग्वत् व्याख्येयानि ॥८६॥८७॥८८॥८९॥९०॥९१॥ अथ वनस्पतिकायिकानाह—

मूलम्—दुविहा वणप्फईजीवा, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ ९२ ॥
बायरा जे उ पज्जत्ता, दुविहा ते विआहिआ। साहारणसरीरा य, पत्तेगा य तहेव य ॥ ९३ ॥

व्याख्या—अत्र 'साहारणसरीरा यत्ति' साधारणमनन्तजीवानामप्येकं शरीरं येषां ते साधारणशरीराः, 'पत्तेगा यत्ति' प्रत्येकशरीराश्च प्रत्येकं भिन्नभिन्नशरीरवन्तः ॥ ९२ ॥ ९३ ॥

मूलम्—पत्तेअसरीरा उ, णेगहा ते पकित्तिआ । रुक्खा गुच्छा य गुम्मा य, लया वल्ली तणा तहा॥९४॥

अस्सकण्णी अ बोधव्वा, सीहकण्णी तहेव य। मुसुंढी अ हलिद्दा य, णेगहा एवमायओ॥ ९९ ॥

व्याख्या—एते आलुकाद्या हरिद्रापर्यन्ताः प्रायः कन्दविशेषास्तत्तद्देशप्रसिद्धाः ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥

मूलम्—एगविहमनाणत्ता, सुहुमा तत्थ विआहिआ। सुहुमा सव्वलोगंमि, लोगदेसे अ बायरा॥१००॥

व्याख्या—सूक्ष्माणां सर्वेषामेकविधत्वं साधारणशरीरत्वात् ॥ १०० ॥

मूलम्—संतइं पप्पऽणाईआ, अपज्जवसिआवि अ । ठिइं पडुच्च साईआ, सपज्जवसिआ वि अ ॥१०१॥
दस चेव सहस्साइं, वासाणुक्कोसिअं भवे। वणस्सईण आउं तु, अंतोमुहुत्तं जहन्नगं ।१०२।

व्याख्या—अत्र ज्येष्ठं आयुः प्रत्येकशरीरपर्याप्तबादरवनस्पतीनामेव, तदितरेषां तु तेषां सर्वेषामपि जघन्यमेव, एवं पूर्वोक्तयोः पृथ्वीकायापूकाययोः वक्ष्यमाणयोश्च तेजोवाय्वोः पर्याप्तबादराणामेव ज्येष्ठस्थितिर्भवतीति ध्येयम्।१०१।१०२।

मूलम्—अणंतकालमुक्कोसा, अंतोमुहुत्तं जहण्णगा । कायठिई पणगाणं, तं कायं तु अमुंचओ।१०३।

व्याख्या— अत्र 'पणगाणंति' पनकानां पनकोपलक्षितानां वनस्पतीनां, इह च सामान्येन वनस्पतिजीवान्निगोदान् चाश्रित्यानन्तकालमुच्यते, विशेषविवक्षायां तु प्रत्येकतरुबादरनिगोदयोरुत्कृष्टा कायस्थितिः सप्ततिकोटाकोटिसागरमाना, सूक्ष्मनिगोदानां च स्पष्टव्यवहारराशीनामसंख्येयकालमानेति ॥ १०३ ॥

मूलम्—असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । विजढम्मि सए काए, पणगजीवाण अंतरं ॥१०४॥

व्याख्या—इह हि कश्चिद्वनस्पतिभ्यो निर्गत्य पृथ्व्यादिषु भ्रान्त्वा भूयस्तत्रासंख्यकालादेवोत्पद्यते, वनस्पतिं विना सर्वेषामपि कायस्थितेरसंख्येयत्वादत एवोत्कृष्टमप्यन्तरमसंख्यकालमानमेवोक्तम् ॥ १०४ ॥

'एएसिं वण्णओ चेव' इत्यादि प्राग्वत् ॥ १०५ ॥ प्रकृतमुपसंहरन्नुत्तरग्रन्थसम्बन्धमाह ॥

मूलम्—इच्चेते थावरा तिविहा, समासेण विआहिआ । एत्तो उ तसे तिविहे, वोच्छामि अणुपुव्वसो

व्याख्या—इत्येतेऽनन्तरोक्ताः स्थावरास्त्रिविधाः समासेन संक्षेपेण व्याख्याताः, अतः स्थावरविभक्तेरनन्तरं तु पुनस्त्रसांस्त्रिविधान् वक्ष्यामि आनुपूर्व्येति सूत्रपञ्चदशकार्थः ॥ १०६ ॥

मूलम्—तेउ वाऊ अ बोधव्वा, उराला य तसा तहा। इच्चेते तसा तिविहा, तेसिं भेए सुणेह मे१०७

व्याख्या—तेजोयोगात्तेजांसि अग्नयो वायवश्च बोधव्याः, उदारा एकेन्द्रियापेक्षया प्रायः स्थूला द्वीन्द्रियाद्या इत्यर्थः, चः समुच्चये, त्रसास्तथा तेनागमोक्तप्रकारेण इत्येते त्रसन्तीति चलन्तीति त्रसास्त्रिविधाः । तत्र तेजोवायूनां स्थावरनामकर्मोदयेऽपि गत्यपेक्षया त्रसत्वं, द्वीन्द्रियादीनां च त्रसनामकर्मोदयवतां लब्धितोऽपि त्रसत्वं, तेषां भेदान् शृणुत मे कुर्वत इति शेषः ॥ १०७ ॥ तत्र तेजोजीवानाह—

---

१ एएसिं वण्णओ चेव, गधओ रसफासओ । सठाणादेसओ वावि, विहाणाइ सहस्ससो ॥ १०५ ॥

मूलम्—दुविहा तेउ जीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ १०८ ॥

बायरा जे उ पज्जत्ता, णेगहा ते पकित्तिआ । अंगारे मुम्मुरे अगणी, अच्ची जाला तहेव य ॥१०९॥

व्याख्या—अत्राङ्गारो धूमज्वालाहीनो दह्यमानेन्धनात्मको भास्वरस्वरूपः, मुर्मुरो भस्ममिश्राग्निकणरूपः, अग्निरुक्तभेदातिरिक्तो वह्निः, अर्चिर्मूलप्रतिबद्धाग्निशिखा, ज्वाला छिन्नमूला सैव ॥ १०८ ॥ १०९ ॥

मूलम्—उक्का विज्जुअ बोधव्वा, णेगहा एवमाइओ । एगविहमनाणत्ता, सुहुमा ते विआहिआ ।११०।

व्याख्या—अत्रोल्का विद्युच्च नभसि समुत्पन्नोऽग्निः ॥ ११० ॥

मूलम्—सुहुमा सव्वलोगम्मि, लोगदेसे अ बायरा। एत्तो कालविभागं तु, तेसिं वोच्छं चउव्विहं ॥१११॥

संतइं पप्पऽणाईआ, अपज्जवसिआवि अ। ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥११२॥

तिण्णेव अहोरत्ता, उक्कोसेण विआहिआ । आउठिई तेऊणं, अंतोमुहुत्तं जहन्निआ ॥११३॥

असंखकालमुक्कोसा, अंतोमुहुत्तं जहन्नगा । कायठिई तेऊणं, तं कायं तु अमुंचओ ॥११४॥

अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । विजढंमि सए काए, तेऊजीवाण अंतरं ॥ ११५॥

एएसिं वण्णओ चेव, गंधओ रसफासओ। संठाणादेसओ वावि, विहाणाइं सहस्ससो॥११६॥

वायुजीवानाह—

मूलम्—दुविहा वाउजीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ ११७ ॥

बायरा जे उ पज्जत्ता, पंचहा ते पकित्तिआ। उक्कलिआ मंडलिआ, घण गुंजा सुद्धवाया य ११८

व्याख्या—'पंचहत्ति' पञ्चधेत्युपलक्षणं, अत्रैवास्याऽनेकधेत्यभिधानात् । उत्कलिका वाता ये स्थित्वा २ वान्ति, मण्डलिका वाता वातोलीरूपाः, घनवाता रत्नप्रभाद्याधाराः, गुञ्जावाता ये गुञ्जन्तो वान्ति, शुद्धवाताः सहजवाता मन्दानिलादयः ॥ ११८ ॥

मूलम्—संवट्टगवाए अ, णेगहा एवमायओ । एगविहमनाणत्ता, सुहुमा ते विआहिआ ॥ ११९ ॥

व्याख्या—संवर्त्तकवाता ये बहिः स्थितमपि तृणादि विवक्षितक्षेत्रान्तः क्षिपन्ति ॥ ११९ ॥

मूलम्—सुहुमा सव्वलोगंमि, लोगदेसे अ बायरा। एत्तो कालविभागं तु, तेसिं वोच्छं चउव्विहं॥१२०॥

संतइं पप्पऽणाईआ, अपज्जवसिआवि अ । ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥१२१॥

तिण्णेव सहस्साइं, वासाणुक्कोसिआ भवे । आऊठिई वाऊणं, अंतोमुहुत्तं जहन्निआ॥१२२॥

असंखकालमुक्कोसा, अंतोमुहुत्तं जहन्निया। कायठिई वाऊणं, तं कायं तु अमुंचओ॥१२३॥

अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए, वाउजीवाण अंतरं ॥ १२४ ॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्ससो १२५

उदारत्रसानाह—

मूलम्—उराला य तसा जे उ, चउहा ते पकित्तिआ । बेइंदिअ तेइंदिअ, चउरो पंचिंदिआ चेव ॥१२६॥

व्याख्या—अत्र 'चउरोत्ति' चतुरिन्द्रियाः ॥ १२६ ॥ द्वीन्द्रियानाह—

मूलम्—बेइंदिआ उ जे जीवा, दुविहा ते पकित्तिआ । पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥१२७॥
किमिणो मंगला चेव, अलसा माइवाहया । वासीमुआ सीप्पिआ, संखा संखणया तहा ॥१२८॥
पलोगाणुलयाचेव, तहेव य वराडगा । जलूगा जालगा चेव, चंदणा य तहेव य ॥ १२९ ॥

व्याख्या—अत्र कृमयोऽशुच्यादिजाताः, मातृवाहका ये काष्ठशकलानि समोभयाग्रतया सम्बध्नन्ति, वासीका रमुखा वासीमुखाः, 'सिप्पीअत्ति' शुक्तयः, शङ्खनका लघुशङ्खाः, चन्दनका अक्षाः, शेषास्तु केचित्प्रसिद्धाः केचित्तु यथासम्प्रदायं वाच्या' इति ॥ १२७ ॥ १२८ ॥ १२९ ॥

---

१ "सोमगला" इति पाठो 'घ' सञ्ज्ञकपुस्तके ।

मूलम्—बेइंदिआ एएऽणेगहा एवमायओ । लोएगदेसे ते सव्वे, न सव्वत्थ विआहिआ ॥ १३० ॥
संतइं पप्पऽणाईआ, अपज्जवसिआ वि अ । ठिइं पडुच्च साईआ, सपज्जवसिआ वि अ ॥१३१॥
वासाइं बारसेव उ, उक्कोसेण विआहिआ । बेइंदिअआउठिई, अंतोमुहुत्तं जहन्निआ ॥१३२॥
संखेज्जकालमुक्कोसा, अंतोमुहुत्तं जहन्निआ । बेइंदिअकायठिई, तं कायं तु अमुंचओ ॥१३३॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहण्णयं । बेइंदिआण जीवाणं, अंतरेअं विआहिअं ॥१३४॥

'एएसिं'—इत्यादि प्राग्वत् ॥ १३५ ॥ त्रीन्द्रियानाह—

मूलम्—तेइंदिआ उ जे जीवा, दुविहा ते पकित्तिआ । पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥ १३६ ॥
कुंथू पिपीलि उद्दंसा, उक्कलुद्देहिआ तहा । तणहारकट्ठहारा, मालुगा पत्तहारगा ॥ १३७ ॥
कप्पासट्ठिमिंजा य, तिंदुगा तउसमिंजगा । सदावरी अ गुम्मी अ, बोधवा इंदकाइआ ॥१३८॥
इंदगोवगमाइआऽणेगहा एवमायओ । लोएगदेसे ते सव्वे, न सव्वत्थ विआहिआ ॥ १३९ ॥

व्याख्या—इह कुन्थुप्रमुखाः केचित्प्रतीताः, गुल्मी शतपदी, केचित्तु यथासम्प्रदायं ज्ञेयाः ॥ १३९ ॥

मूलम्—संतइं पप्पऽणाईआ, अपज्जवसिआवि अ । ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥१४०॥
एगूणपण्णहोरत्ता, उक्कोसेण विआहिआ । तेइंदिअआउठिई, अंतोमुहुत्तं जहण्णिआ ॥१४१॥
संखेज्जकालमुक्कोसा, अंतोमुहुत्तं जहन्निआ । तेइंदिअकायठिई, तं कायं तु अमुंचओ ॥१४२॥
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं । तेइंदिअजीवाणं, अंतरेअं विआहिअं ॥ १४३ ॥
'एएसिं' इत्यादिप्राग्वत्— ॥ १४४ ॥

चतुरिन्द्रियानाह—

मूलम्—चउरिंदिआ उ जे जीवा, दुविहा ते पकित्तिआ । पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥१४५॥
अंधिआ पोत्तिआ चेव, मच्छिआ मसगा तहा । भमरे कीडपयंगे अ, ढिंकुणे कुंकुणे तहा ॥१४६॥
कुक्कुडे सिंगिरीडी अ, नंदावत्ते अ विच्छिए । डोले भिंगिरीडी अ, विरिली अच्छिवेधए ॥१४७॥
अच्छिले माहए अच्छिरोडए विचित्ते चित्तपत्तए । ओहिंजलिआ जलकारि अ नीआ तंबगावि अ॥

व्याख्या—एतेष्वपि केपि प्रतीताः केचित्तु यथासम्प्रदायं तत्तद्देशप्रसिद्ध्या वा वाच्याः॥१४५, १४६, १४७, १४८॥

मूलम्—चतुरिंदिआ एएऽणेगहा एवमायओ। लोगस्स एगदेसंमि, ते सव्वे परिकित्तिआ ॥ १४९ ॥
संतइं पप्पऽणाईआ, अपज्जवसिआवि अ। ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥१५०॥
छच्चेव य मासाऊ, उक्कोसेण विआहिआ। चउरिंदिअआऊठिई, अंतोमुहुत्तं जहण्णिआ ।१५१।
संखेज्जकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं। चउरिंदियकायठिई, तं कायं तु अमुंचओ ।१५२।
अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं। चउरिंदिआण जीवाणं, अंतरेअं विआहिअं ।१५३।
एएसिं वण्णओ चेव, गंधओ रसफासओ। संठाणादेसओ वावि, विहाणाइं सहस्ससो ।१५४।

पञ्चेन्द्रियानाह—

मूलम्—पंचिंदिआ उ जे जीवा, चउविहा ते विआहिआ। नेरइआ तिरिक्खा य, मणुआ देवा य आहिआ॥

नैरयिकानाह—

मूलम्—नेरईआ सत्तविहा, पुढवीसु सत्तसु भवे। रयणाभसक्कराभा, वालुआभा य आहिआ ॥१५६॥
पंकाभा धूमाभा, तमा तमतमा तहा। इति नेरइआ एते, सत्तहा परिकित्तिआ ॥ १५७ ॥

व्याख्या—नैरयिकाः सप्तविधाः किमिति ? यतस्ते पृथ्वीषु सप्तसु भवेयुः ततस्तद्भेदास्तेषां सप्तविधत्वमिति भावः। काः पुनस्ता इत्याह–'रयणाभत्ति' रत्नानां रत्नकाण्डस्थितानां भवनपतिभवनस्थानां च आभा प्रभा यत्र सा रत्नाभा १ एवं सर्वत्र शर्करा लघुपाषाणखण्डरूपा तदाभा २ वालुकाभा ३ पङ्काभा ४ धूमाभा तत्र धूमाभावेऽपि तत्तुल्यपुद्गलपरिणामसम्भवात् ५ 'तमत्ति' तमःप्रभा तमोरूपा ६ तमस्तमःप्रभा महातमोरूपा ७ ॥ १५७ ॥

मूलम्—लोगस्स एगदेसम्मि, ते सव्वे उ विआहिआ। इत्तो कालविभागं तु, तेसिं वोच्छं चउविहं १५८

व्याख्या—लोकैकदेशे अधोलोकरूपे ॥ १५८ ॥

मूलम्—संतइं पप्पऽणाइआ, अपज्जवसिआवि अ। ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥१५९॥
सागरोवममेगं तु, उक्कोसेण विआहिआ। पढमाए जहण्णेणं, दसवाससहस्सिआ ॥ १६० ॥

व्याख्या—अत्र सर्वत्रापि स्थितिरिति शेषः ॥ १६० ॥

मूलम्—तिण्णेव सागराऊ, उक्कोसेण विआहिआ। दोच्चाए जहण्णेणं, एगं तु सागरोवमं ॥ १६१ ॥
सत्तेव सागराऊ, उक्कोसेण विआहिआ। तइआए जहन्नेणं, तिण्णेव उ सागरोवमा ॥१६२॥
दस सागरोवमाऊ, उक्कोसेण विआहिआ। चउत्थीए जहन्नेणं, सत्तेव उ सागरोवमा ।१६३।
सत्तरस सागराऊ, उक्कोसेण विआहिआ। पंचमाए जहन्नेणं, दस चेव उ सागरोवमा ।१६४।
बावीस सागराऊ, उक्कोसेण विआहिआ। छट्ठीए जहन्नेणं, सत्तरस सागरोवमा ॥ १६५ ॥
तेत्तीस सागराऊ, उक्कोसेण विआहिआ। सत्तमाए जहन्नेणं, बावीसं सागरोवमा ॥ १६६ ॥
जा चेव उ आऊठिई, नेरईआणं विआहिआ। सा तेसिं कायठिई, जहण्णुकोसिआ भवे ॥१६७॥

व्याख्या—या चैव आयुःस्थितिर्नैरयिकाणां व्याख्याता सा तेषां कायस्थितिर्जघन्योत्कृष्टा च भवेत्, तेषां हि तत उद्वृत्तानां गर्भजतिर्यग्मनुष्येष्वेवोत्पाद इति ॥ १६१, १६२, १६३, १६४, १६५, १६६, १६७ ॥

मूलम्—अणंतकालमुक्कोसं, अंतोमुहुत्तं जहण्णगं। विजढंमि सए काए, नेरइआणं तु अंतरं ॥१६८॥

व्याख्या—अत्रान्तर्मुहूर्त्तं जघन्यान्तरं, यदा कोऽपि नरकादुद्वृत्य गर्भजपर्याप्तमत्स्येषूत्पद्यान्तर्मुहूर्त्तायुः प्रपूर्य क्लिष्टाध्यवसायवशात् पुनर्नरके एवोत्पद्यते तदा लभ्यत इति भावनीयम् ॥ १६८ ॥

मूलम्—एएसिं वण्णओ चेव, गंधओ रसफासओ। संठाणादेसओ वावि, विहाणाइं सहस्ससो ॥१६९॥

तिरश्च आह—

मूलम्—पंचिंदिअतिरिक्खा उ, दुविहा ते विआहिआ। समुच्छिमतिरिक्खा य, गब्भवक्कंतिआ तहा १७०

व्याख्या—अत्र संमूर्च्छिमतिर्यञ्चो मनोहीनाः संमूर्च्छनजन्मानः, गर्भे व्युत्क्रान्तिरुत्पत्तिर्येषां ते गर्भव्युत्क्रान्तिका गर्भजा इत्यर्थः ॥ १७० ॥

मूलम्—दुविहावि ते भवे तिविहा,जलयरा थलयरा तहा। खहयरा य बोधव्वा,तेसिं भेए सुणेह मे ।१७१।

व्याख्या—द्विविधा अपि ते संमूर्च्छिमा गर्भजाश्चेत्यर्थः भवेयुस्त्रिविधाः, जलचराः स्थलचराः खचराश्च ॥१७१॥

जलचरानाह—

मूलम्—मच्छा य कच्छभा य, गाहा य मगरा तहा। सुंसुमारा य बोधव्वा, पंचहा जलचराहिआ ॥१७२॥

व्याख्या—'गाहत्ति' ग्राहाः जलचरविशेषास्तन्तव इति प्रसिद्धाः, सुंसुमारा मकरविशेषा एव ॥ १७२ ॥

मूलम्—लोएगदेसे ते सव्वे, न सव्वत्थ विआहिआ। एत्तो कालविभागं तु, तेसिं वोच्छं चउव्विहं ।१७३।

संतइं पप्पऽणाईआ, अपज्जवसिआवि अ। ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥१७४॥

एगा य पुव्वकोडी उ,उक्कोसेण विआहिआ। आउठिई जलयराणं,अंतोमुहुत्तं जहण्णिआ।१७५।

व्याख्या—इह स्थितिः संमूर्च्छिमानां गर्भजानां च तुल्यैव ॥ १७५ ॥

मूलम्—पुव्वकोडिपुहुत्तं तु, उक्कोसेण विआहिआ। कायठिई जलयराणं. अंतोमुहुत्तं जहन्नयं ॥१७६॥

व्याख्या—पूर्वकोटीपृथक्त्वं द्विप्रभृत्यानवभ्यः, तत इहाष्ट पूर्वकोटयः कायस्थितिर्जलचराणां, इयती चैषां कायस्थितिरित्थं स्यात्, पञ्चेन्द्रियतिर्यग्नृणां उत्कृष्टतोऽप्यष्टैव निरन्तरा भवा भवन्ति तदायुर्मीलने च एतावत्य एव पूर्वकोट्यः स्युर्न चैतेषु युगलिनः स्युर्येनोक्तनिरोधः स्यादिति ॥ १७६ ॥

मूलम्—अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नगं। विजढंमि सए काए, जलयराणं तु अंतरं ॥१७७॥

स्थलचरानाह—

मूलम्—चउप्पया य परिसप्पा, दुविहा थलयरा भवे। चउप्पया चउविहा, ते मे कित्तयओ सुण ॥ १७८॥

एगखुरा दुखुरा चेव, गंडीपय सणप्पया। हयमाई गोणमाई, गयमाई सीहमाइणो ॥१७९॥

व्याख्या—एकखुरा हयादयः, द्विखुरा गवादयः, गण्डी पद्मकर्णिका तद्वद्वृत्ततया पदा येषां ते गण्डीपदा गजादयः, 'सणप्पयत्ति' सनखपदाः सिंहादयः, हयमाई–इत्यादि व्याख्यातमेव ॥ १७९ ॥ परिसर्पानाह—

मूलम्—भुओरपरिसप्पा उ, परिसप्पा दुविहा भवे। गोहाई अहिमाई अ, एक्केक्काऽणेगहा भवे ॥१८०॥

व्याख्या—'भुओरपरिसप्पत्ति' परिसर्पशब्दस्योभयत्र योगात् भुजाभ्यां परिसर्पन्तीति भुजपरिसर्पाः गोधादयः। उरसा परिसर्पन्तीति उरःपरिसर्पाः सर्पादयः। ते च एकैकाः प्रत्येकमनेकविधा भवेयुः गोधेरकनकुलादिभेदैर्गोनसादिभेदैश्च ॥ १८० ॥

मूलम्—लोएगदेसे ते सव्वे, न सव्वत्थ विआहिआ। एत्तो कालविभागं तु,तेसिं वोच्छं चउव्विहं।१८१

संतइं पप्पणाईआ, अपज्जवसिआवि अ। ठिइं पडुच्च साईआ, सपज्जवसिआवि अ॥ १८२॥

पलिओवमा उ तिण्णि उ, उक्कोसेण विआहिआ। आउठिई थलयराणं, अंतोमुहुत्तं जहण्णिआ

व्याख्या—अत्र चायं विशेषो गर्भजभुजोरःपरिसर्पयोरुत्कृष्टमायुः पूर्वकोटिः, संमूर्च्छिमयोस्तु तयोः क्रमात् द्वाचत्वारिंशत्त्रयःपञ्चाशच्च वर्षसहस्राः। संमूर्च्छजस्थलचराणां तु चतुरशीतिर्वर्षसहस्रा इति ॥ १८३ ॥

मूलम्—पलिओवमाइं तिण्णि उ, उक्कोसेण विआहिआ। पुव्वकोडीपुहुत्तेणं,अंतोमुहुत्तं जहन्निआ ।१८४।

व्याख्या—अत्र पल्योपमत्रयमायुर्युगलिचतुष्पदतिरश्चां तद्भवानन्तरं च न पुनस्तेष्वेवोत्पादः, ततः पूर्वं तु उत्कर्षतोऽपि तेषु पूर्वकोटिमानायुषः सप्त भवा भवन्तीति पूर्वकोटिपृथक्त्वाधिकपल्यत्रयमाना तेषां कायस्थितिः ॥१८४॥

मूलम्—कायठिई थलयराणं, अंतरं तेसिमं भवे। कालं अणंतमुक्कोसं, अंतोमुहुत्तं जहन्नगं ॥१८५॥

विजढंसि सए काए,थलयराणं तु अंतरं। चम्मे उ लोमपक्खी अ,तइआ समुग्गपक्खी अ।१८६।

विततपक्खी अ बोधव्वा,पक्खिणो उ चउविहा। लोएगदेसे ते सव्वे,न सव्वत्थ विआहिआ॥१८७

व्याख्या—अत्र पूर्वार्द्धेन स्थलचराणामन्तरद्वारं समाप्योत्तरार्द्धेन खचरानाह–'चम्मे उत्ति' प्रक्रमाच्चर्मपक्षिण-

श्चर्ममयपक्षाश्चर्मचटकादयः, रोमपक्षिणो रोमप्रधानपक्षा हंसादयः, समुद्गपक्षिणः समुद्गकाकारपक्षास्ते च मानुषोत्तराद्बहिर्भवन्ति ॥ १८६ ॥ विततपक्षिणो ये सर्वदा विस्तारिताभ्यामेव पक्षाभ्यामासते तेपि मानुषोत्तराद्बहिरेव इत्येवं पक्षिणश्चतुर्विधाः ॥ १८७ ॥

मूलम्—संतइं पप्पऽणाईआ, अपज्जवसिआवि अ। ठिइं पडुच साईआ, सपज्जवसिआवि अ ॥१८८॥
पलिओवमस्स भागो, असंखिज्जइमो भवे। आउठिई खहयराणं, अंतोमुहुत्तं जहण्णिआ १८९

व्याख्या—इह पल्योपमासंख्येयभागायुर्युगलिपक्षिणां ज्ञेयं, तदन्येषां तु गर्भजानां पक्षिणां पूर्वकोटिः। संमूर्च्छिमानां तु तेषां द्वासप्ततिवर्षसहस्राण्युत्कृष्टमायुरिति विशेषः ॥ १८८ ॥ १८९ ॥

मूलम्—असंखभागो पलिअस्स, उक्कोसेण उ साहिओ। पुव्वकोडिपुहुत्तेणं, अंतोमुहुत्तं जहण्णिआ ।१९०।
कायठिई खहयराणं, अंतरं तेसिमं भवे। कालं अणंतमुक्कोसं, अंतोमुहुत्तं जहण्णगं ॥ १९१ ॥
एएसिं वण्णओ चेव, गंधओ रसफासओ। संठाणादेसओ वावि, विहाणाइं सहस्ससो ।१९२।

मनुजानाह—

मूलम्—मणुआ दुविहभेआ उ, ते मे कित्तयओ सुण। संमुच्छिममणुस्सा य, गब्भवक्कंतिआ तहा ।१९३।

व्याख्या—इह संमूर्च्छिममनुष्या ये मनोरहिता गर्भजमनुष्यसम्बन्धिवान्तादिषूत्पत्तिभाजोऽन्तर्मुहूर्त्तायुषोऽपर्याप्ता एव म्रियन्ते ते ज्ञेयाः ॥ १९३ ॥

मूलम्—गब्भवक्कंतिआ जे उ, तिविहा ते विआहिआ। अकम्मकम्मभूमा य, अंतरदीवया तहा ।१९४।

व्याख्या—अकम्मेत्यादि-अत्र भूमशब्दस्य प्रत्येकं सम्बन्धादाकर्मभूमास्तत्र कर्माणि कृषिवाणिज्यादीनि न सन्ति यासु ता अकर्मभूमयो हैमवतादिक्षेत्राणि तत्र भवा आकर्मभूमा युगलिनः, एवं कार्मभूमा भरतादिक्षेत्रजाः, अन्तरमिह समुद्रमध्यं तत्र द्वीपा अन्तर्द्वीपाः तेषु जाता अन्तरद्वीपजाः ॥ १९४ ॥

मूलम्—पण्णरस तिसई विहा, भेआ य अट्ठवीसई। संखा उ कमसो तेसिं, इइ एसा विआहिआ ।१९५।

व्याख्या—'पण्णरस तीसई विहत्ति' विधशब्दस्य प्रत्येकं योगात् पञ्चदशविधाः कार्मभूमाः, कर्मभूमीनां भरतैरवतविदेहानां त्रयाणां प्रत्येकं पञ्चसंख्यत्वात्। त्रिंशद्विधा आकर्मभूमाः, हैमवत–हरिवर्ष–रम्यकवर्ष–हैरण्यवत–देवकुरूत्तरकुरूणां षण्णामकर्मभूमानां प्रत्येकं पञ्चसंख्यत्वात्। इह च क्रमत इत्युक्तेऽपि पश्चान्निर्दिष्टानामपि कार्मभूमानां मुक्तिसाधकत्वेन प्राधान्यात् पूर्वं भेदाभिधानम्। अन्ये तु 'तीसई पण्णरसविहत्ति' पठन्ति। भेदाश्चाष्टाविंशतिरन्तरद्वीपजानामिति विभक्तिपरिणामेन सम्बध्यते, अष्टाविंशतिसंख्यत्वं चैषामेतत्संख्यत्वादन्तरद्वीपानां, ते हि हिमवतः पूर्वापरप्रान्तयोश्चतसृषु विदिक्प्रसृतकोटिषु त्रीणि त्रीणि योजनशतान्यवगाह्य तावन्त्येव योजनशतान्यायामविस्ताराभ्यां प्रथमे चत्वारोऽन्तरद्वीपाः, ततोऽप्येकैकयोजनशतवृद्ध्यावगाहनया योजनशतचतुष्काद्यायामविस्तारा द्वितीयादयः षट्। एषां चैशान्यादिक्रमात् प्रादक्षिण्येन प्रथमचतुष्कस्य एकोरुक १ आभाषिको २ वैषाणिको३ लाङ्गुलिकः ४ इति नामानि। द्वितीयस्य हयकर्ण १ गजकर्ण २ गोकर्ण ३ शष्कुलीकर्णाः ४। तृतीयस्य आदर्शमुख १ मेषमुख २ हयमुख ३ गजमुखाः ४। चतुर्थस्याश्वमुख १ हस्तिमुख २ सिंहमुख ३ व्याघ्रमुखाः ४। पञ्चमस्याश्वकर्ण १ सिंहकर्ण २ गजकर्ण ३ कर्णप्रावरणाः ४। षष्ठस्य उल्कामुख १ विद्युन्मुख २ जिह्वामुख ३ मेघमुखाः ४। सप्तमस्य घनदन्त १ गूढदन्त २ श्रेष्ठदन्त ३ शुद्धदन्ताः ४ इति नामानि। एषु च द्वीपनामसदृशनामान एव युगलिनो वसन्ति। तद्देहमानादि चाभ्यां गाथाभ्यां ज्ञेयम्

"अंतरदीवेसु नरा, धणूअसयट्ठूसिआ सया मुइआ। पालंति मिहुणधम्मं, पलिअस्स असंखभागाऊ ॥ १ ॥
चउसट्ठी पिट्ठकरंडयाणं, मणुआण तेसिमाहारो। भत्तरस चउत्थस्स उ, गुणसीति दिणाण पालणया ॥ २ ॥"

एते च शिखरिणोऽपि पूर्वापरप्रान्तविदिक्प्रसृतकोटिषूक्तन्यायतोऽष्टाविंशतिः सन्ति, सर्वसाम्याच्चैषां भेदेनाविवक्षितत्वान्न सूत्रेऽष्टाविंशतिसंख्याविरोध इति ध्येयम् ॥ १९५ ॥

मूलम्—समुच्छिमाण एसेव, भेओ होइ आहिओ। लोगस्स एगदेसंमि, ते सव्वेवि विआहिआ ।१९६।

व्याख्या—संमूर्च्छिमानां एप एव भेदो यो गर्भजानां, ते हि तेपामेव वातपित्तादिषु सम्भवन्तीति ॥ १९६ ॥

मूलम्—संतइं पप्पऽणाईआ, अपज्जवसिआवि अ । ठिइं पडुच्च साईआ, सपज्जवसिआवि अ ॥१९७॥
पलिओवमाइं तिण्णि उ,उक्कोसेण विआहिआ।आऊठिई मणुआणं,अंतोमुहुत्तं जहण्णिआ१९८

व्याख्या—पल्यत्रयं स्थितिश्च युगलिनां ज्ञेया, संमूर्च्छिममनुष्याणां तु उत्कृष्टमप्यन्तर्मुहूर्त्तमेव ॥ १९८ ॥

मूलम्—पलिओवमाइं तिण्णि उ,उक्कोसेण विआहिआ । पुव्वकोडीपुहुत्तेणं,अंतोमुहुत्तं जहण्णगा॥१९९॥

व्याख्या—त्रीणि पल्योपमानि पूर्वकोटीपृथक्त्वेन पूर्वकोटिसमकात्मकेनाधिकानीति शेषः ॥ १९९ ॥

मूलम्—कायठिई मणुआणं, अंतरं तेसिमं भवे । अणंत कालमुक्कोसं, अंतोमुहुत्तं जहण्णगं ॥२००॥
एएसिं वण्णओ चेव,गंधओ रसफासओ । संठाणादेसओ वावि,विहाणाइं सहस्ससो ।२०१।

देवानाह—

मूलम्—देवा चउव्विहा वुत्ता, ते मे कित्तयओ सुण । भोमेज्जवाणमंतरजोइसवेमाणिआ तहा ॥२०२॥

व्याख्या—'भोमेज्जत्ति' भूमौ भवा भौमेया भवनपतयः ॥ २०२ ॥ एषामुत्तरभेदानाह—

मूलम्—दसहा भवणवासी,अट्ठहा वणचारिणो। पंचविहा जोइसिआ,दुविहा वेमाणिआ तहा ।२०३।

एतानेव नामत आह—

मूलम्—असुरा १ नाग २ सुवण्णा ३, विज्जू ४ अग्गी अ ५ आहिआ ।
दीवो ६ दहि ७ दिसा ८ वाया ९, थणिआ १० भवणवासिणो ॥ २०४ ॥

व्याख्या—अत्र असुराः असुरकुमाराः कुमारवत्क्रीडाप्रियत्वात् द्वेष-भाषा-शस्त्र-यान-वाहनादिभूषापरत्वाच्चामी कुमारा इत्युच्यन्ते । एवं नागादिष्वपि कुमारशब्दो योज्यः ॥ २०४ ॥

मूलम्—पिसाय १ भूआ २ जक्खा य ३, रक्खसा ४ किन्नरा य ५ किंपुरिसा ६ ।
महोरगा ७ य गंधव्वा ८, अट्ठविहा वाणमंतरा ॥ २०५ ॥

व्याख्या—अन्येऽप्यष्टौ व्यन्तरा 'अणपण्णी'प्रभृतय एष्वेवान्तर्भावनीयाः ॥ २०५ ॥

मूलम्—चंदा १ सूरा य २ नक्खत्ता ३, गहा ४ तारागणा ५ तहा ।
ठिआ विचारिणो चेव, पंचविहा जोइसालया ॥ २०६ ॥

व्याख्या—'विचारिणोत्ति' विशेषेण मेरुप्रादक्षिण्यलक्षणेन चरन्तीति विचारिणः, तत्रामी मनुष्यक्षेत्राद्बहिः स्थिता एव सन्ति, तन्मध्ये तु विचारिण एव ॥ २०६ ॥

मूलम्—वेमाणिआ उ जे देवा, दुविहा ते विआहिआ । कप्पोवगा य बोधव्वा,कप्पातीता तहेव य ।२०७।

व्याख्या—'कप्पोवगत्ति' कल्पान् सौधर्मादिदेवलोकानुपगच्छन्तीति कल्पोपगाः सौधर्मादिदेवलोकदेवाः, कल्पानतीतास्तदुपरिवर्त्तिस्थानोत्पन्नतयाऽतिक्रान्ताः कल्पातीता ग्रैवेयकानुत्तरविमानवासिसुराः ॥ २०७ ॥

मूलम्—कप्पोवगा बारसहा, सोहम्मीसाणगा तहा । सणंकुमारा माहिंदा,बंभलोगा य लंतगा ॥२०८॥
महासुक्का सहस्सारा, आणया पाणया तहा । आरणा अच्चुआ चेव, इति कप्पोवगा सुरा २०९

व्याख्या—अत्र सर्वत्र तात्स्थ्यात्तद्व्यपदेश इति न्यायात्स्वर्गनामभिरेव देवभेदा उक्ताः ॥ २०८, २०९ ॥

मूलम्—कप्पातीता उ जे देवा,दुविहा ते विआहिया । गेविज्जाणुत्तरा चेव, गेविज्जा नवविहा तहिं।२१०।

व्याख्या—'गेविज्जाणुत्तरत्ति' ग्रैवेयकेषु भवा ग्रैवेयकाः, अनुत्तरेषु प्रक्रमाद्विमानेषु भवा आनुत्तराः ॥ २१० ॥

मूलम्—हिट्ठिमाहिट्ठिमा चेव,हिट्ठिमा मज्झिमा तहा । हिट्ठिमा उवरिमा चेव, मज्झिमा हिट्ठिमा तहा ॥
मज्झिमा मज्झिमा चेव,मज्झिमा उवरिमा तहा। उवरिमा हिट्ठिमा चेव,उवरिमा मज्झिमा तहा
उवरिमा उवरिमा चेव, इइ गेविज्जगा सुरा । विजया वेजयंता य, जयंता अपराजिआ॥ २१३॥
सव्वट्ठसिद्धगा चेव, पंचहाऽणुत्तरा सुरा । इइ वेमाणिआ एएऽणेगहा एवमायओ ॥ २१४ ॥

व्याख्या—ग्रैवेयकेषु हि त्रीणि त्रिकानि, तत्र प्रथमत्रिकं अधस्तनत्वेन हिट्ठिममित्युच्यते, तत्रापि प्रथमं ग्रैवेयकमधस्तनाधस्तनत्वेन हिट्ठिमहिट्ठिममिति, तत्र भवा देवा हिट्ठिमाहिट्ठिमा इति। एवं सर्वत्रापि भावनीयम् २११, २१२, २१३ ॥ इहोत्तरार्द्धेनानुत्तरविमानानाह ॥ २१४ ॥

मूलम्—लोगस्स एगदेसम्मि, ते सव्वे परिकित्तिआ। इत्तो कालविभागं तु, तेसिं वोच्छं चउव्विहं ॥
संतइं पप्पऽणाईआ,अपज्जवसिआवि अ। ठिइं पडुच्च साईआ,सपज्जवसिआवि अ ॥ २१६ ॥
साहियं सागरं इक्कं, उक्कोसेण ठिई भवे। भोमेज्जाणं जहन्नेणं, दसवास सहस्सिआ॥ २१७ ॥
पलिओवममेगं तु, उक्कोसेण ठिई भवे । वंतराणं जहन्नेणं, दसवास सहस्सिआ ॥ २१८ ॥
पलिओवमं तु एगं, वासलक्खेण साहिअं। पलिओवमट्ठभागो, जोईसेसु जहन्निआ ॥२१९॥

व्याख्या—अत्र वर्षलक्षाधिकं पल्योपमं उत्कृष्टा स्थितिरिति गम्यं, इयं च चन्द्रविमानदेवानां, जघन्या तु ताराविमानदेवानाम् ॥ २१५, २१६, २१७, २१८, २१९ ॥

मूलम्—दो चेव सागराइं, उक्कोसेण विआहिआ। सोहम्मम्मि जहण्णेणं,एगंच पलिओवमं ॥ २२० ॥
सागरा साहिआ दुन्नि,उक्कोसेण विआहिआ। ईसाणंमि जहण्णेणं,साहिअं पलिओवमं ॥२२१॥
सागराणि अ सत्तेव, उक्कोसेण ठिई भवे। सणंकुमारे जहण्णेणं, दुण्णि उ सागरोवमा २२२
साहिआ सागरा सत्त, उक्कोसेण ठिई भवे। माहिंदम्मि जहन्नेणं, साहिआ दुण्णि सागरा२२३
दस चेव सागराइं, उक्कोसेण ठिई भवे। बंभलोए जहन्नेणं, सत्त उ सागरोवमा ॥ २२४ ॥
चउदस उ सागराइं, उक्कोसेण ठिई भवे। लंतगंमि जहन्नेणं, दस उ सागरोवमा ॥ २२५ ॥
सत्तरस सागराइं, उक्कोसेण ठिई भवे। महासुक्के जहण्णेणं, चउद्दस सागरोवमा॥ २२६ ॥
अट्ठारस सागराइं, उक्कोसेण ठिई भवे। सहस्सारे जहण्णेणं, सत्तरस सागरोवमा ॥२२७ ॥
सागरा अउणवीसं तु,उक्कोसेण ठिई भवे।आणयम्मि जहण्णेणं, अट्ठारस सागरोवमा ॥२२८॥
वीसं तु सागराइं, उक्कोसेण ठिई भवे।पाणयम्मि जहण्णेणं, सागरा अउणवीसई ॥२२९॥
सागरा इक्कवीसं तु, उक्कोसेण ठिई भवे। आरणम्मि जहण्णेणं, वीसई सागरोवमा ॥२३०॥
बावीस सागराइं, उक्कोसेण ठिई भवे। अच्चुअम्मि जहण्णेणं, सागरा इक्कवीसई ॥ २३१ ॥

व्याख्या—[स्पष्टाः] ॥ २२०, २२१. २२२, २२३, २२४, २२५, २२६, २२७, २२८, २२९, २३०, २३१॥

मूलम्—तेवीस सागराइं, उक्कोसेण ठिई भवे। पढमंमि जहण्णेणं, बावीसं सागरोवमा ॥ २३२ ॥
चउवीस सागराइं, उक्कोसेण ठिई भवे। बिईअंमि जहण्णेणं, तेवीसं सागरोवमा ॥२३३॥
पणवीस सागराइं, उक्कोसेण ठिई भवे। तइअंमि जहन्नेणं, चउवीसं सागरोवमा ॥२३४॥
छवीस सागराइं, उक्कोसेण ठिई भवे। चउत्थंमि जहण्णेणं, सागरा पणवीसई ॥ २३५ ॥
सागरा सत्तवीसं तु, उक्कोसेण ठिई भवे। पंचमम्मि जहण्णेणं, सागरा उ छवीसई ॥२३६॥
सागरा अट्ठवीसं तु, उक्कोसेण ठिई भवे । छट्ठंमि जहन्नेणं, सागरा सत्तवीसई ॥ २३७ ॥
सागरा अउणतीसं तु, उक्कोसेण ठिई भवे। सत्तमम्मि जहन्नेणं, सागरा अट्ठवीसई ॥२३८॥
तीसं तु सागराइं, उक्कोसेण ठिई भवे। अट्ठमम्मि जहण्णेणं, सागरा अउणतीसई॥२३९॥
सागरा इक्कतीसं तु, उक्कोसेण ठिई भवे। नवमम्मि जहण्णेणं, तीसई सागरोवमा ॥२४०॥

व्याख्या—अत्र सर्वत्र 'ग्रैवेयके' इति शेषः ॥ २३२, २३३, २३४, २३५, २३६, २३७, २३८, २३९, २४० ॥

मूलम्—तेत्तीस सागराइं, उक्कोसेण ठिई भवे। चउसुं पि विजयाईसु, जहन्ना इक्कतीसई ॥ २४१ ॥
अजहण्णमणुक्कोसं, तित्तीसं सागरोवमा। महाविमाणे सव्वट्ठे, ठिई एसा विआहिआ ॥२४२॥
जा चेव य आऊठिई, देवाणं तु विआहिआ। सा तेसिं कायठिई, जहण्णुक्कोसिआ भवे ॥२४३॥

व्याख्या—या तेषां देवानामायुःस्थितिः सैव कायस्थितिर्मृता पुनस्तत्रोत्पादाभावात् ॥ २४१, २४२, २४३ ॥

मूलम्—अणंतकालमुक्कोसं, अंतोमुहुत्तं जहण्णयं । विजढंमि सए काए, देवाणं हुज्ज अंतरं ॥२४४॥
एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्ससो ॥२४५॥

व्याख्या—प्राग्वदिति केषाञ्चिदवयवार्थः ॥ २४४, २४५ ॥ संप्रति निगमनमाह—

मूलम्—संसारत्था य सिद्धा य, इइजीवा विआहिआ । रूविणो चेवऽरूवी य,अजीवा दुविहावि अ २४६

व्याख्या—संसारस्थाश्च सिद्धाश्च इत्यनेन पूर्वोक्तन्यायेन जीवा व्याख्याताः, रूपिणोऽरूपिणश्चेति अजीवा अपि द्विविधा व्याख्याता इति योगः ॥ २४६ ॥ अथ कश्चिज्जीवाजीवविभक्तिश्रवणश्रद्धानमात्रादेव कृतार्थतां मन्येताऽतस्तदाशङ्कापनोदार्थमाह—

मूलम्—इइ जीवमजीवे अ, सुच्चा सद्दहिऊण य । सव्वनयाण अणुमए, रमिज्जा संजमे मुणी ॥२४७॥

व्याख्या—इति जीवानजीवांश्च श्रुत्वा श्रद्धाय च सर्वे च ते नयाश्च सर्वनया ज्ञानक्रियानयान्तर्गता नैगमादयस्तेषामनुमतेऽभिप्रेते रमेत संयमे मुनिरिति सूत्रार्थः ॥ २४७ ॥ संयमे रतिं कृत्वा यत्कार्यं तदाह—

मूलम्—तओ बहूणि वासाणि,सामण्णमणुपालिआ । इमेण कम्मजोगेणं, अप्पाणं संलिहे मुणी ॥२४८॥

व्याख्या—अत्र 'कम्मजोगेणंति' क्रमेण योगस्तपोऽनुष्ठानरूपो व्यापारः क्रमयोगस्तेन 'संलिहेत्ति' संलिखेत् द्रव्यतो भावतश्च कृशीकुर्यात् ॥ २४८ ॥ क्रमयोगमेवाह—

मूलम्—बारसेव उ वासाइं,संलेहुक्कोसिआ भवे । संवच्छरं मज्झिमिआ,छम्मासे अ जहण्णिआ ।२४९।

व्याख्या—द्वादशैव तुः पूर्त्तौ वर्षाणि संलेखना द्रव्यतो वपुषो भावतः कषायाणां कृशतापादनमुत्कृष्टा भवति, संवत्सरं मध्यमा, षण्मासांश्च जघन्यका ॥ २४९ ॥ उत्कृष्टायाः क्रमयोगमाह—

मूलम्—पढमे वासचउक्कंम्मि, विगई निज्जूहणं करे । बिइए वासचउक्कम्मि, विचित्तं तु तवं चरे ॥२५०॥

व्याख्या—प्रथमे वर्षचतुष्के विकृतिनिर्यूहनं विकृतित्यागं कुर्यात्, इदं च विचित्रतपसः पारणके । यदाह निशीथचूर्णिकारः—"अण्णे चत्तारि वरिसे विचित्तं तवं काउं आयंबिलेण निव्विइएण वा पारेइत्ति" केवलमनेन द्वितीये वर्षचतुष्के इदमुक्तं, अत्र तु प्रथमे दृश्यते ततोऽस्य प्रकारद्वयेनापि करणे न दोष इति ज्ञायते । द्वितीये वर्षचतुष्के 'विचित्तं तुत्ति' विचित्रमेव षष्ठाष्टमादिकं तपश्चरेदत्र च पारणके सर्वं कल्पनीयं पारयतीति संप्रदायः ॥ २५० ॥

मूलम्—एगंतरमायामं, कट्टू संवच्छरे दुवे । तओ संवच्छरद्धं तु, नाइविगिट्ठं तवं चरे ॥ २५१ ॥
तओ संवच्छरद्धं तु, विगिट्ठं तु तवं चरे । परिमिअं चेव आयामं, तंमि संवच्छरे करे ॥२५२॥
कोडीसहिअमायामं, कट्टू संवच्छरे मुणी । मासद्धमासिएणं तु, आहारेणं तवं चरे ॥ २५३ ॥

व्याख्या—एकेन चतुर्थलक्षणेन तपसा अन्तरं व्यवधानं यस्मिंस्तदेकान्तरं आयामं आचाम्लं कृत्वा संवत्सरौ द्वौ, ततः संवत्सरार्द्धं मासषट्कं तुः पूर्त्तौ न नैवातिविकृष्टमष्टमदशमादि तपश्चरेत् ॥ २५१ ॥ ततः संवत्सरार्द्धं तुः एवकारार्थे 'विगिट्ठं तुत्ति' विकृष्टमेव तपश्चरेत्, अत्रैव विशेषमाह—'परिमिअं चेवत्ति' परिमितमेव स्वल्पमेव आचाम्लं,द्वादशे हि वर्षे निरन्तरमाचाम्लमिह तु चतुर्थादिपारणक एवेति परिमितमित्युक्तं,तस्मिन् द्विधा विभज्योक्ते संवत्सरे कुर्यात्॥२५२॥कोट्यौ अग्रे प्रत्याख्यानाद्यन्तरूपे सहिते मीलिते यस्मिंस्तत्कोटीसहितं,अयं भावः-विवक्षितदिने आचाम्लं कृत्वा पुनर्द्वितीयेऽह्नि आचाम्लमेव प्रत्याख्याति ततः प्रथमस्य पर्यन्तकोटिर्द्वितीयस्य प्रारम्भकोटिरुभे अपि मीलिते भवतस्ततस्तत्कोटीसहितं स्यात्, इदृशं निरन्तरमित्यर्थः, आचाम्लं कृत्वा संवत्सरे प्रक्रमात् द्वादशे मुनिः 'मासत्ति' मासिकेन अर्द्धमासिकेन वा 'आहारेणंति' आहारप्रत्याख्यानेन तप इति प्रस्तावाद्भक्तपरिज्ञादिकमनशनं चरेत् । निशीथचूर्णावुक्तः संप्रदायश्चायमत्र—"दुवालसमं वरिसं निरंतरं हीअमाणं उसिणोदएणं आयंबिलं करेइ, तं कोडीसहिअं भण्णइ जेणायंबिलस्स कोडी कोडीए मिलइ, जहा पदीवस्स वत्ती तिल्लं च समं निट्ठवइ तहा बारसमे वरिसे आहारं परिहावेइ जहा आहारसंलेहणाए आउअं च समं निट्ठवइ । एत्थ बारसमस्स वासस्स पच्छिमा जे चत्तारि मासा तेसु तेल्लगंडूसे निसीट्ठं धरेउं खेलमल्लगे णिच्छुहइ, मा अइरुक्खत्तणओ मुहजंतविसंवाओ

मत्रिस्सइत्ति, तस्स य विसंवाए नो सम्मं नमुकारमाराहेइ" इति सूत्रपञ्चार्थः ॥ २५३ ॥ इत्थं प्रपन्नानशनसाध्य-शुभभावनानां मिथ्यात्वादीनां चानर्थहेतुत्वं तद्विपर्ययाणां च शुभहेतुतामाह—

मूलम्—कंदप्पमाभिओगं च, किब्बिसिअं मोहमासुरत्तं च ।
एयाओ दुग्गईओ, मरणम्मि विराहया हुंति ॥ २५४ ॥

व्याख्या—'कंदप्पंति' कन्दर्पभावनां एवमाभियोग्यभावनां किल्बिषभावनां मोहभावनां आसुरभावनां च, एता भावना दुर्गतिहेतुत्वात् दुर्गतय एतद्विधातृणां दुर्गतिरूपेषु तथाविधदेवनिकायेष्वेवोत्पादात्, मरणे मरणकाले विराधिका भवन्ति सम्यग्दर्शनादीनामिति गम्यते, इह च मरण इत्यभिधानं पूर्वमेतत्सत्तायामपि प्रान्तकाले शुभ-भावनाभावे सुगतिरपि स्यादिति सूचनार्थम् ॥ २५४ ॥

मूलम्—मिच्छादंसणरत्ता, सनिआणा हु हिंसगा । इइ जे मरंति जीवा, तेसिं पुण दुल्लहा बोही ॥२५५॥

व्याख्या—मिथ्यादर्शनगतत्त्वे तत्त्वाभिनिवेशस्तत्र रक्ता आसक्ता मिथ्यादर्शनरक्ताः सनिदानाः कृतभोगप्रार्थनाः हुः पूर्त्तौ हिंसका जीवोपमर्दकारिण इतीत्येवंरूपा ये म्रियन्ते जीवास्तेषां पुनर्दुर्लभा बोधिर्जिनधर्मावाप्तिः ॥ २५५ ॥

मूलम्—सम्मदंसणरत्ता, अनिआणा सुक्कलेसमोगाढा॥इइ जे मरंति जीवा, सुलभा तेसिं भवे बोही ॥

व्याख्या—"सुक्कलेसमोगाढत्ति" शुक्ललेश्यामवगाढाः प्रविष्टाः ॥ २५६ ॥

मूलम्—मिच्छादंसणरत्ता, सनिआणा कण्हलेसमोगाढा ।
इअ जे मरंति जीवा, तेसिं पुण दुल्लहा बोही ॥ २५७ ॥

व्याख्या—स्पष्टम्, ननु पुनरुक्तत्वादनर्थकमिदं सूत्रं, नैवं विशेषज्ञापकत्वादस्य, विशेषश्चायं—तादृशे संक्लेशे सत्येव दुर्लभबोधित्वं, सामान्येन तु पूर्वोक्तविशेषणविशिष्टानामपि तद्भवे भवान्तरे वा बोधिलाभो दृश्यतेऽपीति विशेष-सूचकत्वादस्य न पौनरुक्त्यम् । इह चाद्येन सूत्रेण कन्दर्पादिभावनानां दुर्गतिरूपानर्थस्य हेतुत्वमुक्तं, अर्थाच्छुभभा-वनानां च सुगतिरूपार्थस्य । द्वितीयेन मिथ्यात्वरक्तादीनां दुर्लभबोधित्वमनर्थ उक्तः, तृतीयेन सम्यक्त्वरक्तानां सुल-भबोधित्वं शुभार्थः, चतुर्थेन तूक्तरूपो विशेषः सूचित इति सूत्रचतुष्कार्थः ॥ २५७ ॥ जिनवचनाराधनमूलमेव संलेखनादि श्रेयस्ततोऽन्वयव्यतिरेकाभ्यां तन्माहात्म्यमाह—

मूलम्—जिणवयणे अणुरत्ता, जिणवयणं जे करिंति भावेणं ।
अमला असंकिलिट्ठा, ते होंति परित्तसंसारी ॥ २५८ ॥

व्याख्या—'अमलत्ति' श्रद्धामालिन्यहेतुमिथ्यात्वादिभावमलरहिताः, तथाऽसंक्लिष्टा रागादिसंक्लेशमुक्ताः 'परि-त्तसंसारित्ति' परित्तः परिमितः स चासौ संसारश्च परित्तसंसारः सोऽस्ति येषां ते परित्तसंसारिणः ॥ २५८ ॥

मूलम्—बालमरणाणि बहुसो, अकाममरणाणि चेव बहुआणि ।
मरिहिंति ते वराया, जिणवयणं जे न याणंति ॥ २५९ ॥

व्याख्या—बालमरणैरुद्बन्धनादिनिबन्धनैर्बहुशो बहुवारं अकाममरणैश्चैवानिच्छारूपमरणैर्बहुभिः सुब्व्यत्ययः प्राकृतत्वात् मरिष्यन्ति ते वराका जिनवचनं ये न जानन्ति, उपलक्षणत्वान्नानुतिष्ठन्ति चेति सूत्रद्वयार्थः ॥२५९॥ यतश्चैवमतो जिनवचनं भावतः कर्त्तव्यं, तत्र चातिचारसम्भवे आलोचना तच्छ्रवणयोग्यानां श्रावणीया, ते च यैर्हेतुभिर्भवन्ति तानाह—

मूलम्—बहु आगमविण्णाणा, समाहिउप्पायगा य गुणगाही।एएण कारणेणं, अरिहा आलोअणं सोउं॥

व्याख्या—बहुः सूत्रतोऽर्थतश्च स चासावागमश्च बह्वागमस्तत्र विशिष्टं ज्ञानं येषां ते बह्वागमविज्ञानाः, समाधे-रुत्पादका ये देशकालाभिप्रायादिविज्ञतया समाधिमेव मधुरवाक्यादिभिरालोचकानामुत्पादयन्ति, चशब्दो भिन्न-क्रमस्ततो गुणग्राहिणश्चोपबृंहणार्थं परेषां सद्भूतगुणग्रहणशीलाश्च, 'एएण कारणेणंति' एतैः कारणैः अर्हा भवन्त्या-चार्यादय आलोचनां श्रोतुमिति सूत्रार्थः ॥ २६० ॥ इत्थमनशनस्थेन यत्फलं तदुपदर्श्य सम्प्रति पूर्वोद्दिष्टकन्दर्पा-दिभावनानां स्वरूपमाह—

मूलम्—कंदप्पकुक्कुआइं, तह सीलसहावहासविगहाहिं। विम्हायंतो अ परं, कंदप्पं भावणं कुणइ ॥२६१॥

व्याख्या—कन्दर्पकौकुच्ये कुर्वन्निति शेषः, तत्र कन्दर्पः अट्टट्टहासहसनं अनिभृताश्चालापा गुर्वादिनापि सह निष्ठुरवक्रोक्त्यादिरूपाः कामकथोपदेशप्रशंसाश्च कन्दर्पः, उक्तं च—"कहकहकहस्स हसणं, कंदप्पो अणिहुआ य आलावा। कंदप्पकहाकहणं, कंदप्पुवएससंसा य ॥ १ ॥" कौकुच्यं द्विधा—कायेन वाचा च, तत्र कायकौकुच्यं यत्स्वयमहसन्नेव भ्रूनयनादिविकारांस्तथा करोति यथान्यो हसति, यदुक्तं—"भूनयणवयणदसणच्छएहिं करचरणकण्णमाईहिं। तं तं करेइ जह जह, हसइ परो अत्तणा अहसं ॥ १ ॥" तथा तज्जल्पति येनान्यो हसति नानाविधजीवरुतानि मुखातोद्यवादनं च यत्र कुरुते तद्वाक्कौकुच्यं, यदाह—"वायाए कुक्कुइओ, तं जंपइ जेण हस्सए अन्नो। नाणाविहजीवरुए, कुवइ मुहतूरए चेव ॥ १ ॥" 'तहत्ति' येन प्रकारेण परस्य विस्मय उत्पद्यते, तथा यच्छीलं फलनिरपेक्षा प्रवृत्तिः, स्वभावश्च परविस्मयोत्पादनाभिप्रायेणैव तत्तन्मुखविकाराधिकं स्वरूपं, हासश्च अट्टट्टहासादिः, विकथाश्च परविस्मापकविविधालापकलापरूपाः शीलस्वभावहास्यविकथास्ताभिः विस्मापयन् परमन्यं। 'कंदप्पंति' कन्दर्पयोगात् कन्दर्पास्ते च प्रस्तावाद्देवास्तेषामियं तेषूत्पत्तिहेतुतया कान्दर्प्पी तां भावनां तद्भावाभ्यासरूपां करोति॥

मूलम्—मंता जोगं काउं, भूई कम्मं च जे पउंजंति। सायरसइड्ढिहेउं, अभिओगं भावणं कुणइ ॥ २६२॥

व्याख्या—'मंताजोगंति' सूत्रत्वान्मंत्राश्च योगाश्च तथाविधद्रव्यसंयोगा मंत्रयोगं तत्कृत्वा भूत्या भस्मना उपलक्षणत्वात् मृदा सूत्रेण च कर्म रक्षार्थं क्रिया भूतिकर्म चशब्दात्कौतुकादि च 'जे पउंजंतित्ति' सूत्रत्वात् यः प्रयुङ्क्ते सातरसर्द्धिहेतोः साताद्यर्थमित्यर्थः, अनेन पुष्टालम्बने निःस्पृहस्यैतत्कुर्वतोऽपि न दोषः किन्तु जिनशासनप्रभावनालक्षणो गुण एवेति सूचितम्। स आभियोगीं भावनां करोति ॥ २६२ ॥

मूलम्—नाणस्स केवलीणं, धम्मायरिअस्स संघसाहूणं।
माई अवण्णवाई, किव्विसिअं भावणं कुणइ ॥ २६३ ॥

व्याख्या—ज्ञानस्य श्रुतादेरवर्णवादी यथा—"काया वया य तेच्चिअ, ते चेव पमायमप्पमाया य। मोक्खाहिगारिआणं, जोइसजोणीहिं किं कज्जं ॥ १ ॥" अत्र श्रुते त एव कायाः तान्येव च व्रतानि पुनः पुनर्निरूप्यन्ते, तावेव प्रमादाप्रमादौ च, ततः पुनरुक्तिदोषाघ्रातमिदम्। किञ्च श्रुतं मोक्षार्थं पठ्यते मोक्षाधिकारिणां च ज्योतिर्योन्यादिभिः किं कार्यं ? यदत्र तानि प्ररूप्यन्त इति। केवलिनां यथा—ज्ञानदर्शनयोः क्रमोपयोगे परस्परावरणता, युगपदुपयोगे चैक्यापत्तिस्ततः कथमिदं घटते ? इत्यादि। धर्माचार्यस्य यथा—"जच्चाईहिं अवण्णं, भासइ वट्टइ नयावि उववाए। अहिओ छिद्दप्पेही, पग्गासवाई अणणुकूलो ॥१॥" 'जच्चाहिंति' जात्यादिभिरवर्णं भाषते, वर्तते न चाप्युपपाते समीपावस्थानरूपे 'पगासवाईत्ति' गुर्वादेः समित्याद्यौ कथञ्चित्स्खलितं प्रकाशं प्रकटं वदतीति प्रकाशवादी। सङ्घस्य यथा—बहवः श्वशृगालादिसङ्घाः सन्ति तथायमपि तत्कोऽसौ सङ्घः ? इत्यादि। साधूनां यथा—"अविसहणा तुरिअगई, अणाणुवित्ती इमे गुरुणंपि। खणमेत्तपीइरोसा, गिहिवच्छलगा य संचइआ ॥ १ ॥" अविषहना मिथोऽसहना अत एव पृथक् २ तिष्ठन्ति यतयः, अत्वरितगतयो मन्दगतयस्ततो वक्रवृत्तिरियमेषामिति, गुरूणामपि अननुवर्त्तिनः गुरुभ्योऽपि पृथक् विहारित्वात्, क्षणमात्रप्रीतिरोषाः, अयं भावः—मुनयो हि यस्य गुणान् वीक्ष्य प्रियन्ते तस्याप्यतिचारादिकं दोषं न क्षमन्ते ततो दोषान्वेषी क्षणमात्रप्रीतिरोषा एते इति वक्ति, तथा गृहिवत्सलका विरक्ता अपि गृहिणां धर्मं प्रतिपादयन्तीति, सञ्चयिकाश्चोपधिधारित्वात्, इत्थं ज्ञानादीनामवर्णवादी। तथा मायी स्वस्वभावनिगूहनादिमान्, आह च—"गूहइ आयसहावं, घायइ अ गुणे परस्स संते वि। चोरोव सवसंकी, गूढायारो वितहभासी ॥ १ ॥" ईदृशः किल्बिषिकीं भावनां करोति ॥ २६३ ॥ इदानीं विचित्रत्वात्सूत्रकृतेर्मोहीप्रस्तावेऽप्यासुरीहेतूनाह—

मूलम्—अणुबद्धरोसपसरो, तह य निमित्तम्मि होइ पडिसेवी। एएहिं कारणेहिं, आसुरिअं भावणं कुणइ

व्याख्या—अनुबद्धोऽव्यवच्छिन्नो रोषप्रसरो यस्य स तथा, तत्स्वरूपं चैवं—"निच्चं वुग्गहसीलो, काऊणं नाणुतप्पए पच्छा। न य खामिओ पसीअई, अवराहीणं दुवेण्हंपि ॥ १ ॥" अत्र 'दुवेण्हंपित्ति' द्वयोः स्वपरयोरपरा-

धिनोरपि सतोः । तथा समुच्चये, चः पूरणे, निमित्तमतीतादि तद्विषये भवति प्रतिसेवी अपुष्टालम्बनेऽपि तद्भावणात्, एताभ्यां कारणाभ्यां आसुरीं भावनां करोति ॥ २६४ ॥ तथा—

मूलम्—सत्थग्गहणं विसभक्खणं च जलणं च जलप्पवेसो अ ।
अणायारभंडसेवा जम्मणमरणाणि बंधंति ॥ २६५ ॥

व्याख्या—शस्त्रस्य ग्रहणं वधार्थमात्मनि व्यापारणं शस्त्रग्रहणं, विषभक्षणं, चशब्द उक्तसमुच्चये, ज्वलनं च दीपनमात्मन इति शेषः, जलप्रवेशश्च चशब्दोऽनुक्तभृगुपातादिपरिग्रहार्थः । आचारः शास्त्रविहितो व्यवहारस्तेन भाण्डमुपकरणं आचारभाण्डं न तथा अनाचारभाण्डं तस्य सेवा हास्यमोहादिभिः परिभोगोऽनाचारभाण्डसेवा च, चस्य गम्यत्वादेतानि कुर्वन्तो जन्ममरणानि उपचारात्तन्निमित्तकर्माणि बध्नन्ति, संक्लेशहेतुतया शस्त्रग्रहणादीनामनन्तभवनिबन्धनत्वात् । अनेन चोन्मार्गप्रतिपत्त्या मार्गविप्रतिपत्तिराक्षिप्ता तथा चेहार्थतो मोही भावनोक्ता । यतस्तल्लक्षणमिदं—"उम्मग्गदेसओ मग्गनासओ मग्गविपडिवत्ती अ । मोहेण य मोहित्ता समोहणं भावणं कुणइ ॥ १ ॥" फलं चासामनन्तरं परम्परं चैवं—"एयाओ भावणाओ, भावित्ता देवदुग्गइं जंति । तत्तो अ चुआ संता, पडंति भवसागरमणंतं ॥ १ ॥" इहानन्तरं फलं देवदुर्गतिगमनं परम्परं तु भवाब्धिभ्रमणमिति सूत्रार्थः ॥ २६५ ॥ संप्रत्युपसंहारद्वारेण शास्त्रस्य माहात्म्यमाह—

मूलम्—इइ पाउकरे बुद्धे, नायए परिनिव्वुए । छत्तीसं उत्तरज्झाए, भवसिद्धियसंमएत्ति बेमि ॥ २६६ ॥

व्याख्या—इति एताननन्तरोक्तान् 'पाउकरेत्ति' प्रादुष्कृत्य कांश्चिदर्थतः कांश्चित्तु सूत्रतोऽपि प्रकाश्य बुद्धः केवलज्ञानावगतसकलवस्तुतत्त्वो ज्ञातजो ज्ञातकुलोद्भवः स चेह श्रीवर्द्धमानस्वामी परिनिर्वृतो निर्वाणं गतः, यद्वा 'पाउकरेत्ति' प्रादुरकार्षीत् प्रकाशितवान् शेषं प्राग्वन्नवरं परिनिर्वृतः कषायादितपोपशमात्स्वस्थीभूतः । कान् प्रादुरकार्षीदित्याह—षट्त्रिंशदुत्तराः प्रधाना अध्याया अध्ययनानि उत्तराध्यायास्तान्, भवसिद्धिकानां भव्यानां संमतानभिप्रेतान् । इति परिसमाप्तौ ब्रवीमीति प्राग्वदिति सूत्रार्थः ॥ २६६ ॥ इति षट्त्रिंशमध्ययनम् ॥ ३६ ॥

धर्मकल्पद्रुमस्कन्धस्यास्य श्रुतस्कन्धस्य निर्युक्तिकारोऽप्येवं माहात्म्यमाह—

मूलम्—जे किर भवसिद्धिआ, परित्तसंसारिआ य जे भव्वा । ते किर पढंति एए, छत्तीसं उत्तरज्झाए ॥१॥

व्याख्या—अत्र 'भवत्ति' भव्या आसन्नाक्षिप्तसिद्धयो रत्नत्रयाराधका भिन्नग्रन्थय इत्यर्थः, भवसिद्धिकशब्दस्तु सामान्येन भव्यत्वार्थः ॥ १ ॥

मूलम्—जे हुंति अभवसिद्धि, गंठिअसत्ता अणंतसंसारी । ते संकिलिट्ठकम्मा, अभविआ उत्तरज्झाए ।२।

व्याख्या—'गंठिअसत्तत्ति' ग्रन्थिकसत्त्वा अभिन्नग्रन्थय इत्यर्थः ॥ 'अभविअत्ति' अभव्या अयोग्या उत्तराध्याये उत्तराध्ययनपठने ॥ २ ॥ ततः किं कार्यमित्याह—

मूलम्—तम्हा जिणपण्णत्ते, अणंतगमपज्जवेहिं संजुत्ते । अज्झाए जहजोगं, गुरुप्पसाया अहिज्जिज्जा ॥३॥

व्याख्या—तस्माज्जिनप्रज्ञप्ताननन्तैर्गमैरर्थभेदैः पर्यवैः शब्दपर्यायैः संयुक्तान् अध्यायान् उत्तराध्ययनानि यथायोगं योग उपधानाद्युचितक्रिया तदनतिक्रमेण गुरुप्रसादादधीयेत पठेन्न तु प्रमादं कुर्यादित्यर्थः । गुरुप्रसादाभिधानं चेह श्रुताध्ययनार्थिना गुरवोऽवश्यं प्रसाद्या इति ख्यापनार्थमिति गाथात्रयार्थः ॥ ३ ॥

मूलम्—जस्साढत्ता एए, कहवि समप्पंति विग्घरहिअस्स । सो लखिज्जइ भव्वो, पुव्वरिसी एव भासंति ४

व्याख्या—स्पष्टा ॥ ४ ॥ इति सम्पूर्णा श्रीउत्तराध्ययनसूत्रवृत्तिः ॥

## ॥ अथ प्रशस्तिः ॥

अनन्तकल्याणनिकेतनं तं, नमामि शङ्खेश्वरपार्श्वनाथम् । यस्य प्रभावाद्वरसिद्धिसौध—मध्यास्त निर्विघ्नमसौ प्रयत्नः १
श्रिया जयन्ती द्युतिमैन्दवीं प्रा—ग्मुदाभिवन्दे श्रुतदेवतां ताम् । प्रसादमासाद्य यदीयमेषा वृत्तिर्मया मन्दधियापि तेने २
सत्कीर्त्तिलक्ष्मीपरिवर्द्धमानं, श्रीवर्द्धमानं जिनराजमीडे । पुनाति लोकं सुरसार्थशाली, यदागमो गाङ्ग इव प्रवाहः ॥३॥
तच्छिष्यमुख्यसकलर्द्धिपात्रं, श्रीगौतमो मे शिवतातिरस्तु । गणी सुधर्मा च सतां सुधर्मा—त्र्होस्तु वीरप्रभुदत्तपट्टः ४
जम्बूद्वीपे सुरगिरिरिव चन्द्रकुलं विभाति तद्वंशे । मेरौ नन्दनवनमिव तस्मिन्नन्दति तपागच्छः ॥ ५ ॥

तत्र मनोरमसुमनोराजिविराजी रराज मुनिराजः । श्रीआनन्दविमलगुरुरमरतरुर्नन्दन इवोर्व्याः ॥ ६ ॥

शुद्धां क्रियां दधौ यः सुधाव्रतनततिमिव मरुद्वृक्षः । कल्पतरोः सौरभमिव यस्य यशो व्यानशे विश्वम् ॥ ७ ॥

तत्पट्टगगनदिनमणिरजनिष्ट जनेष्टदानदेवमणिः । श्रीविजयदानमुनिमणिरनणुगुणाधरितरजनिमणिः ॥ ८ ॥

श्रीमान् जगद्गुरुरिति प्रथितस्तदीय–पट्टे स हीरविजयाह्वयसूरिरासीत् ।
योऽद्याऽपि सिद्धिललनाः सममालिलिङ्गः, तत्पदृध्येय दिगिभांश्च यदीयकीर्तिः ॥ ९ ॥

श्रीमानकव्वरनृपाम्बुधरोधिगम्य, श्रीसूरिनिर्जरपतेरिह यस्य वाचम् ।
जन्तुप्रजानभयदानजलैरनल्पै–रप्रीणयत्पटहवादनगर्जिपूर्वम् ॥ १० ॥

तत्पट्टभूषणमणिर्गणिलक्ष्मीकान्तः, सूरिर्बभौ विजयसेन इति प्रतीतः ।
योऽकव्वराधिपसभे द्विजपैर्यदीय–गोभिर्जितैर्गुरुरपि द्युतिमानमानि ॥ ११ ॥

विजयतिलकः सूरिः पट्टे तदीयमदीदिप–द्दिनकर इव व्योमस्तोमं हरंस्तमसां क्षणात् ।
प्रमृमरमहाः पद्मोल्लासावहो जडतापहो, विदलितमहादोषः कल्पोदयः सुदिनश्रियाम् ॥ १२ ॥

---

१ श्रीमानकव्वरनृपाम्बुधरोपि यस्य, श्रीसूरिनिर्जरपतेरधिगम्य वाचम् । "घ" पुस्तके ॥

धिषणधिषणादेश्या प्रेक्षा गिरः श्रवसोः सुधा, अधरितधरं धैर्यं यस्य क्षमानुकृतक्षमा ।
जगति महिमा हेमक्षोणीधरद्वयसो यशः, शशिजयकरं नाभूत्कस्याद्भुताय मुनिप्रभोः ॥ १३ ॥
तदीये पट्टे सद्गुणगणमणिश्रेणिनिधयः, क्षमापीयूषाम्भोनिधय उचिताचारविषयः ।
स्वभक्तेच्छापूर्त्तित्रिदशतरवो बुद्धिगुरवो, जयन्ति श्रीमन्तो विजयिविजयानन्दगुरवः ॥ १४ ॥
तेषां तपागणपयोनिधिशीनभासां, विश्वत्रयीजनमनोरमकीर्त्तिभासाम् ।
वाग्वैभवाधरितसाधुसुधासवानां, राज्ये चिरं विजयिनि प्रतिवासवानाम् ॥ १५ ॥

इतश्च—

शिष्याः श्रीविजयादिदानसुगुरोः सिद्धान्तवारांनिधि–श्रीकान्ताः परतीर्थिकव्रजरजःपुञ्जैकपाथोधराः ।
पूर्वं श्रीविमलादिहर्षगुरवः श्रीवाचका जज्ञिरे, यैर्वैराग्यरतिं वितीर्य विरतिं चक्रे ममोपक्रिया॥ १६ ॥

विनेयास्तेषां च प्रसृमरयशः पूरितदिशः, श्रुतं दत्त्वा मादृग्जडजनमहानुग्रहकृतः ।
महोपाध्यायश्रीमुनिविमलपादाः समभवन्, भवोदन्वन्मज्जज्जननिवहवोहित्थसदृशाः ॥ १७ ॥

वैरङ्किकाणामुपकारकाणां, वचस्विनां कीर्त्तिमतां कवीनाम् ।
अध्यापकानां सुधियां च मध्ये, दधुः सदा ये प्रथमत्वमेव ॥ १८ ॥

तेषां शिष्याणुरिमां भावविजयवाचकोऽलिखद्वृत्तिम् । स्वपरावबोधनिधये स्वल्पधियामपि सुखावगमाम् ॥ १९ ॥
निधिवसुरसवसुधा [१६८९] मितवर्षे श्रीरोहिणीमहापुर्याम् । सोऽस्याः प्रथमादर्शं स्वयमेव प्रापयत्सिद्धिम्॥२०॥
गुणगणसुरतरुसुरगिरिकल्पैस्त्स्याग्रजैः सतीर्थ्यैश्च । श्रीविजयहर्षकृतिभिर्विदधे साहाय्यमिह सम्यक् ॥ २१ ॥
अनुसृत्य पूर्ववृत्तीर्लिखितायामपि यदत्र दुष्टं स्यात् । तच्छोध्यं मयि कृत्वा कृपां कृतीन्द्रैः प्रकृतिसरलैः ॥ २२ ॥
श्रीशङ्खेश्वरपार्श्वप्रभुप्रभावात् प्रभूतशुभभावात् । आचन्द्रार्कं नन्दतु वृत्तिरसौ मोदयन्ती ज्ञान् ॥ २३ ॥
शान्तिं तुष्टिं पुष्टिं श्रेयः सन्तानसौख्यकमलाश्च । व्याख्यातृश्रोतॄणां वृत्तिरसौ दिशतु मङ्गलैकगृहम् ॥ २४ ॥
ससूत्रायामिह श्लोक–संख्या संख्याय निर्मिता । शते द्वे पञ्चपञ्चाशे, सहस्राणि च षोडश ॥ २५ ॥

"सूत्रग्रन्थाग्रं [ २००० ] वृत्तिग्रन्थाग्रं [ १४२५५ ] उभयं [ १६२५५ ]"

---

१ श्रीरोहिणीपुरि महर्द्धौ ॥ इति "घ" पुस्तके ॥ २ पञ्चपञ्चाशे शते द्वे, "घ" पुस्तके ।

---

# ॥ इति सवृत्तिकं उत्तराध्ययनसूत्रम् ॥

## श्रीउत्तराध्ययनसूत्रमूलगाथानां–अकारादिवर्णानुक्रमः।



ओ.



अं.



क.